गतिः परमसिद्धानां देवर्षीणां प्रकाशते ॥ २३
चापलादिह गच्छन्तं पार्थ यानमतः परम् ।
अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन ॥ २४
अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः ।
इह वैश्रवणस्तात पर्वसंधिषु दृश्यते ॥ २५
शिखरे तं समासीनमधिपं सर्वरक्षसाम् ।
प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम् ॥ २६
देवदानवसिद्धानां तथा वैश्रवणस्य च ।
गिरेः शिखरमुद्यानमिदं भरतसत्तम ॥ २७
उपासीनस्य धनदं तुम्बुरोः पर्वसंधिषु ।
गीतसामस्वनस्तात श्रूयते गन्धमादने ॥ २८
एतदेवंविधं चित्रमिह तात युधिष्ठिर ।
प्रेक्षन्ते सर्वभूतानि बहुशः पर्वसंधिषु ॥ २९
भुञ्जानाः सर्वभोज्यानि रसवन्ति फलानि च ।
वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनम् ॥ ३०
न तात चपलैर्भाव्यमिह प्राप्तैः कथंचन ।
उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च ।
ततः शस्त्रभृतां श्रेष्ठ पृथिवीं पालयिष्यसि ॥ ३१ C. 3. 11660 B. 3. 159. 32 K. 3. 160. 33

इति श्रीमहाभारते आरण्यकपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

---

(by corr.) G3 अस्याति° ; G1 अभ्यभि° ; G2. 4 अत्यभि° (for अभ्यति°). G1 शिरसं (for शिखरं). — b) B Dc1 Dn D4. 6 कैलासस्य (for शैल°). K4 महावने (for युधि°). K3 शैलस्य विषमाणि च. — cd) T1 महर्षीणां (for देव°). K3 तापस्ये वर्तमानानामियं तात परा गतिः.

**24** a) K4 B4 D5 G2 M1 चापल्याद् ; D2 3 T2 G3 चपलाद्. D5 अथ गंतव्यं ; S हि न गंतव्यं (for इह गच्छन्तं). — b) K1. 3. 4 B1. 2 Dc1 Dn2. n3 D3. 6 प्रार्थयानम् ; G4 M1 प्रार्थयानास् ; M2 प्रार्थयामि (for पार्थ यानम्). K3 B Dn1 D4. 6 T2 (after corr.) G3 इतः ; T2 (before corr.) G1. 2. 4 M ततः (for अतः). — c) Ś1 K1 D1-3 तीक्ष्णैर् (for घ्नन्ति). K2 D5 अयःशूलासिभिस्तीक्ष्णैर् ; K3. 4 T1 M अयः( K4 नूनं ; T1 अधः )शिलाभिर्निघ्नंति ; T2 G2-4 अयःशूलाभिर्निघ्नंति ; G1 अतः शूलैर्हि निघ्नंति. — d) K4 दुष्टचेतसः ; B1 तत्र पांडव (for शत्रु°). Ś1 K1. 2 D1-3. 5 घ्नंति रक्षांसि पांडव (Ś1 भारत ; D3 पांडवाः).

**26** For D5 cf. v.l. 15. — a) Ś1 K1. 2 शिखरं तं ; K4 शिखरेस्मिन् ; B2 Dn1. n3 D1-4. 6 G1 शिखरस्थं. B4 शिखरे चैवमासीनं. — b) K3 B2. 4 D (except Dc) यक्ष° (for सर्व°). — c) Some MSS. प्रेक्षंति.

**28** a) D5 S सततं (for धनदं). K4 उपासंतीह सततं. — b) K1. 2 D (except Dc2 D3) T2 G1. 3 तुंबरोः. K4 तुंबराद्याश्च गायनाः. — K4 om. 28cd ; D5 om. (hapl.) 28c-29d. — c) Ś1 गीतं सामस्वनस् ; K1. 2 गीते साम° ; T G गीत(T1 °तः)सामध्वनिस् ; M2 गीतः सामस्वनस्. T2 G तत्र (for तात). — d) T1 पर्वते (for श्रूयते).

**29** D5 om. 29 (cf. v.l. 28). — a) K4 तात ; D1 तत्र (for चित्रम्). — b) Ś1 K1-3 D1-3 [आ]श्चर्यं (for तात). K4 धनदं नरवाहनः. — c) K1. 2. 4 प्रेक्षंति ; T2 G3. 4 रक्षंते (for प्रेक्षन्ते).

**30** a) B D (except D1-3. 5) मुनि° (for सर्व°). — d) B1 Dn D4. 6 अर्जुनदर्शनात्.

**31** Ś1 K1. 2 D1-3. 5 read 31ab after 21, D1-3 *repeating* it here. — After 31ab, S ins. :

798b* चपलः सर्वभूतानां द्वेष्यो भवति मानवः ।

— c) K4 D5 S (by transp.) इहोषित्वा. — e) N (except K4) शस्त्रजितां. Ś1 K1-3 D1-3. 5 पार्थ ; B Dc Dn D4. 6 तात (for श्रेष्ठ).

Colophon. — *Major parvan :* Ś1 K1. 2 D6 T G2. 4 आरण्य. — *Sub-parvan :* K4 B1. 3 Dn D4 तीर्थयात्रा. K1. 2 B2 (all om. sub-parvan name) mention only गंधमादनवास ; K3 D1. 2, likewise, only लोमशतीर्थयात्रा (followed by गंधमादनप्रवेश in K3 D1) ; and D3. 5 T2 G3. 4, only गंधमादनप्रवेश. — *Adhy. name :* B4 Dc आर्ष्टिषेणा( B4 आर्ष्णिसेना )नुशासनं ; D1. 2 आर्ष्टिषेणवाक्यं ; G1 आर्ष्टिषेणसमागमः. — *Adhy. no.* (figures, words or both) : Dn 158 (Dn3 159) ; D1 164 ; S 160 (M2 *sup. lin.* 162). — *Śloka no. :* Dn1. n3 32 ; D1 33.

## 157

**1** After the ref., Ś1 K1-3 Dn D1-3. 5 ins. :

799* आर्ष्टिषेणाश्रमे तस्मिन्मम पूर्वपितामहाः ।

— K3 om. 1ab. — After 1, N (except K4) ins. :

800* किं चक्रुस्तत्र ते वीराः सर्वेऽतिबलपौरुषाः ।
[B2. 4 Dn D4. 6 किं च चक्रुर्महावीर्याः.]

**2** a) Ś1 K1. 2 कार्याणि चाम्यहार्याणि ; K3 कानि

# १५७

C. 3. 11661
B. 3. 160. 1
K. 3. 161. 1

जनमेजय उवाच ।

पाण्डोः पुत्रा महात्मानः सर्वे दिव्यपराक्रमाः ।
कियन्तं कालमवसन्पर्वते गन्धमादने ॥ १
कानि चाभ्यवहार्याणि तत्र तेषां महात्मनाम् ।
वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम ॥ २
विस्तरेण च मे शंस भीमसेनपराक्रमम् ।
यद्यच्चक्रे महाबाहुस्तस्मिन्हैमवते गिरौ ।
न खल्वासीत्पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम ॥ ३
कच्चित्समागमस्तेषामासीद्वैश्रवणेन च ।
तत्र ह्यायाति धनद आर्ष्टिषेणो यथाब्रवीत् ॥ ४
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् ॥ ५

वैशंपायन उवाच ।

एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः ।
शासनं सततं चक्रुस्तथैव भरतर्षभाः ॥ ६
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
शुद्धबाणहतानां च मृगाणां पिशितान्यपि ॥ ७
मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च ।
एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभाः ॥ ८
तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात् ।
शृण्वतां लोमशोक्तानि वाक्यानि विविधानि च ॥ ९
कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः ।
राक्षसैः सहितः सर्वैः पूर्वमेव गतः प्रभो ॥ १०
आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम् ।
अगच्छन्बहवो मासाः पश्यतां महदद्भुतम् ॥ ११
तैस्तत्र रममाणैश्च विहरद्भिश्च पाण्डवैः ।
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा ॥ १२
आजग्मुः पाण्डवान्द्रष्टुं सिद्धात्मानो यतव्रताः ।
तैस्तैः सह कथाश्चक्रुर्दिव्या भरतसत्तमाः ॥ १३
ततः कतिपयाहस्य महाह्रदनिवासिनम् ।

---

भोज्यानि चार्हाणि. — $^{cd}$) K$_{4}$ वसतां वीरलोकानां गतस्त्वं ब्रूहि स°.

**3** Ś$_{1}$ K$_{1.2}$ transp. 3 and 4. — $^{a}$) Ś$_{1}$ K$_{1.2.4}$ B$_{1}$ D$_{1-3.5}$ T$_{2}$ G$_{2.4}$ [ए]व; B$_{2}$ हि (for च). B$_{2}$ मां (for मे). B$_{4}$ पुनर्ब्रूहि (for च मे शंस). — $^{e}$) T G$_{2-4}$ क खल्वा° (G$_{1}$ तेषां चा°). — After 3, S (except T$_{1}$ G$_{1}$) ins.:

801* धनदाध्युषिते नित्यं वसतस्तस्य पर्वते ।

**4** T$_{1}$ om. $4^{a}$–$5^{b}$. Ś$_{1}$ K$_{1.2}$ transp. 3 and 4. — $^{a}$) K$_{1.2}$ कश्चित्; D$_{3.4.6}$ G$_{2}$ क्वचित् (for कच्चित्). — $^{b}$) D$_{1-3.5}$ वैश्रवणस्य. Ś$_{1}$ K$_{2.3}$ ह (for च). — $^{c}$) G$_{2.4}$ [अ]भि- (for हि). K$_{4}$ आयाति धनदस्तत्र. — $^{d}$) B आर्ष्णि- (B$_{1}$ °ष्टि)सेनो; D$_{5}$ ह्यार्ष्टिषेणो. K$_{1.2}$ यदा° (for यथा°).

**5** T$_{1}$ om. $5^{ab}$ (cf. v.l. 4). — $^{b}$) K$_{1.2}$ D$_{5}$ द्विजोत्तम (for तपो°). — $^{c}$) K$_{4}$ S [अ]स्ति (for हि). — $^{d}$) K$_{1-3}$ D$_{1-3.5}$ इह; K$_{4}$ S इति (for अस्ति).

**6** $^{a}$) K$_{4}$ एतच्च वचनं; D$_{1.2}$ ते तदात्महितं. — K$_{3}$ om. $6^{cd}$. — $^{c}$) M$_{2}$ ते ततश् (for सततं). T$_{1}$ वचनं चक्रुरव्यग्रास्. — $^{d}$) K$_{4}$ आर्ष्टिषेणस्य पांडवाः.

**7** $7^{ab}$ = (var.) 3. 156. $30^{ab}$.

**8** K$_{4}$ om. $8^{cd}$. — $^{cd}$) Ś$_{1}$ K$_{1.2}$ B$_{1.3.4}$ Dc D$_{1-3}$ पुरुष° (for भरत°). S रसायनसमर्था(T$_{1}$ °मुत्था-; G$_{1}$ °मृद्धा)नि तत्रोषुस्ते स्म भारताः.

**9** $^{d}$) Ś$_{1}$ K$_{2}$ काम्यानि; K$_{4}$ वचांसि (for वाक्यानि). K$_{1-3}$ B$_{1.2}$ Dn D$_{3-6}$ M [उ]त; Dc [अ]पि (for च).

**10** $^{a}$) Ś$_{1}$ कृतकाल; T$_{1}$ कृत्वा काल; T$_{2}$ G$_{2-4}$ कृतकार्य. — $^{c}$) B D (except D$_{1-3.5}$) राक्षसैः सह सर्वैश्च. — $^{d}$) Ś$_{1}$ K$_{1.2}$ D$_{5}$ प्रभुः (for प्रभो).

**12** $^{ab}$) T$_{2}$ G तत्रैव (for तैस्तत्र). B$_{1-3}$ Dc Dn D$_{4.6}$ transp. रममाणै° and विहरद्भि°. Ś$_{1}$ K$_{1.2}$ D$_{1-3.5}$ तथा च रममाणानां (D$_{1.2}$ वसमानानां) सुखं विहरतां तदा. — $^{d}$) Ś$_{1}$ K$_{1.2}$ ऋषयश् (for मुनयश्). K$_{4}$ चचार मुनयस्तथा (marg. चारणा मुनयस्तथा).

**13** $^{b}$) Ś$_{1}$ K$_{1.2}$ यतात्मानो; B D (except D$_{2.3}$) T$_{2}$ G$_{1.3}$ शुद्धात्मानो. — $^{c}$) K$_{3}$ B D (except D$_{1.2.5}$) T$_{2}$ G$_{3}$ M$_{2}$ ते तैः; T$_{1}$ एतैः (for तैस्तैः). K$_{4}$ सहितास्ते (for तैस्तैः सह). B D (except D$_{1.2.5}$) T$_{1}$ G$_{1.4}$ M कथां चक्रुर्. — $^{d}$) B D (except D$_{1.2.5}$) दिव्यां. Ś$_{1}$ K$_{1.2}$ श्रवणभूषणाः (for भरत°). K$_{4}$ पांडवैः सह भारत.

ऋद्धिमन्तं महानागं सुपर्णः सहसाहरत् ॥ १४
प्राकम्पत महाशैलः प्रामृद्यन्त महाद्रुमाः ।
ददृशुः सर्वभूतानि पाण्डवाश्च तदद्भुतम् ॥ १५
ततः शैलोत्तमस्याग्रात्पाण्डवान्प्रति मारुतः ।
अवहत्सर्वमाल्यानि गन्धवन्ति शुभानि च ॥ १६
तत्र पुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः ।
ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी ॥ १७
भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ।
विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम् ॥ १८
सुपर्णानिलवेगेन श्वसनेन महाबलात् ।
पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ ।
प्रत्यक्षं सर्वभूतानां नदीमश्वरथां प्रति ॥ १९

खाण्डवे सत्यसंधेन भ्रात्रा तव नरेश्वर ।
गन्धर्वोरगरक्षांसि वासवश्च निवारितः ।
हता मायाविनश्चोग्रा धनुः प्राप्तं च गाण्डिवम् ॥ २०
तवापि सुमहत्तेजो महद्बाहुबलं च ते ।
अविषह्यमनाधृष्यं शतक्रतुबलोपमम् ॥ २१
त्वद्बाहुबलवेगेन त्रासिताः सर्वराक्षसाः ।
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश ॥ २२
ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम् ।
व्यपेतभयसंमोहाः पश्यन्तु सुहृदस्तव ॥ २३
एवं प्रणिहितं भीम चिरात्प्रभृति मे मनः ।
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलमाश्रिता ॥ २४
ततः क्षिप्तमिवात्मानं द्रौपद्या स परंतपः । C. 3. 11687 B. 3. 160. 27 K. 3. 161. 34

---

**14** $^{a}$) T G कतिपयाहःसु. — $^{c}$) Ś1 K1. 2 महानादं.
**15** $^{b}$) K1. 2. 4 B1 M2 प्रमृद्यंत; Dc T1 प्रानृत्यंत; T2 G2–4 प्रादह्यंत; G1 प्रापतंत. — M2 om. (hapl.) $15^{d}$–$17^{c}$.
**16** M2 om. 16 (cf. v.l. 15). — $^{c}$) Ś1 K1–3 D1 आवहत्. — Dc om. (hapl.) $16^{d}$–$17^{a}$.
**17** M2 om. $17^{abc}$ (cf. v.l. 15); Dc om. $17^{a}$ (cf. v.l. 16). — $^{a}$) Ś1 K D1–3 M1 तानि; T2 G ततः (for तत्र). K4 transp. पुष्पाणि and दिव्यानि. D5 फुल्लानि (for पुष्पाणि). G1 माल्यानि (for दिव्यानि). — $^{b}$) D5 सुरभीण्येव पांडवाः. — $^{c}$) K4 बहुवर्णानि; G1 सर्वभूतानि.
**19** Before 19, B4 Dc D1. 2 ins. द्रौपद्युवाच. — $^{a}$) K3. 4 D1–3. 5 मनसस्तुल्य°; M2 सुवर्णानिल°. — $^{b}$) Ś1 महावने; K1. 2 °चले; K4 °भुज; D2 °चलात्; D5 T1 G2. 4 M °बल; T2 G3 °बलः. — $^{c}$) K4 कुतोप्यत्रैव पात्यंते. — $^{d}$) K4 S च फलानि च; D5 विविधानि च (for भरत°). — After $19^{cd}$, T G ins.:

802* दिव्यवर्णानि दिव्यानि दिव्यगन्धवहानि च ।
मदयन्तीव गन्धेन मनो मे भरतर्षभ ।
येषां तु दर्शनात्स्पर्शात्सौरभ्याच्च तथैव च ।
नश्यतीव मनोदुःखं ममेदं शत्रुतापन ।
ईदृशैः कुसुमैर्दिव्यैर्दिव्यगन्धवहैः शुभैः । [5]
देवतान्यर्चयित्वाहमिच्छेयं संगमं त्वया ।
इदं तु पुरुषव्याघ्र विशेषेणाम्बुजं शुभम् ।
गन्धसंस्थानसंपन्नं मम मानसवर्धनम् ।

— $^{e}$) S (except M2) सर्वलोकस्य. — $^{f}$) Ś1 K1. 2 अश्मसकां (in Ś1 the first three letters are lost); K3 B2 अश्वतरीं; K4 मंदाकिनीं; D1–3 अश्ववतीं; D5 (m as in text) वैस्तावकां; G1 अश्वनिकां; M1 अन्वश्मकीं; M2 अश्वसतां. T1 दीवश्वकारां (sic) प्रति; T2 G2–4 न ह्यदृश्यत मां प्रति. — After 19, T G ins.:

803* वासुदेवसहायेन वासुदेवप्रियेण च ।

**20** $^{ab}$) B1. 2. 4 Dc Dn D4. 6 महात्मना; B3 D1–3 M2 जनेश्वर (for नरे°). K4 पांडवेन तव भ्रात्रा सत्यसंधेन मानद. — $^{d}$) K4 पुरंदरः; B4 S पराजितः; Dn1 महारथः (for निवा°). — $^{e}$) K4 जित्वा; G1 हत्वा. G1. 2 M2 मायाविद°. D5 निहता मायिनश्चोग्राः.
**21** $^{a}$) Ś1 तथा हि; K3 तथापि; K4 तथा त्वं (for तवापि). G1 सुमहातेजो. — $^{b}$) Ś1 K1. 2 महाबाहु°. — $^{c}$) D5 अविषह्यतमं लोके. — $^{d}$) K1 B Dc Dn D4. 6 शक्रतुल्यबलोपमं (B3 Dc °पराक्रमं); D1. 2. 4 शतक्रतुबलोपम.
**22** $^{a}$) B4 T2 G2–4 °वीर्येण (for °वेगेन). — $^{b}$) K2 नाशिताः; K4 चकिताः; G4 ताडिताः (for त्रासिताः). Ś1 हताः सर्वे हि राक्षसाः.
**23** K1 om. (hapl.) $23^{b}$–$24^{e}$. — After 23, K3 ins.:

804* शासनं सततं कुर्युस्तथैव भरतर्षभ ।

**24** D5 om. 24; K1 om. $24^{abc}$ (cf. v.l. 23). — $^{d}$) B1. 2. 4 Dc Dn D4. 6 °बलपालिता. — After 24, T G ins.:

805* इच्छामि च नरव्याघ्र पुष्पं प्रत्यक्षमीदृशम् ।
आनीयमानं क्षिप्रं वै त्वया भरतसत्तम ।

**25** Before 25, B2. 4 Dc ins. वैशं° उ°. — $^{a}$) Ś1

C 3 11638 B 3.160.27 K.3.161.34 नामृष्यत महाबाहुः प्रहारमिव सद्गवः ॥ २५
सिंहर्षभगतिः श्रीमानुदारः कनकप्रभः ।
मनस्वी बलवान्दृप्तो मानी शूरश्च पाण्डवः ॥ २६
लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ।
सिंहदंष्ट्रो बृहत्स्कन्धः शालपोत इवोद्गतः ॥ २७
महात्मा चारुसर्वाङ्गः कम्बुग्रीवो महाभुजः ।
रुक्मपृष्ठं धनुः खड्गं तूणांश्चापि परामृशत् ॥ २८
केसरीव यथोत्सिक्तः प्रभिन्न इव वारणः ।
व्यपेतभयसंमोहः शैलमभ्यपतद्बली ॥ २९
तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणम् ।
ददृशुः सर्वभूतानि बाणखड्गधनुर्धरम् ॥ ३०
द्रौपद्या वर्धयन्हर्षं गदामादाय पाण्डवः ।
व्यपेतभयसंमोहः शैलराजं समाविशत् ॥ ३१
न ग्लानिर्न च कातर्यं न वैक्लव्यं न मत्सरः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ॥ ३२
तदेकायनमासाद्य विषमं भीमदर्शनम् ।
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः ॥ ३३
स किंनरमहानागमुनिगन्धर्वराक्षसान् ।
हर्षयन्पर्वतस्याग्रमाससाद महाबलः ॥ ३४
तत्र वैश्रवणावासं ददर्श भरतर्षभः ।
काञ्चनैः स्फाटिकाकारैर्वेश्मभिः समलंकृतम् ॥ ३५
मोदयन्सर्वभूतानि गन्धमादनसंभवः ।

---

ततः स्वंतप्तमात्मानं; $K_{1.2}$ ततश्चा($K_2$ °श्च)क्षिप्तमात्मानं. — $D_2$ om. $25^c$–$26^b$. — $^d$) $K_{1.2}$ सद्द्रुः; $B_1$ शात्रवः; $B_4$ संगरः; $D_3$ $T_2$ (before corr.) $G_{2.4}$ M सद्गजः; $T_1$ सद्गतिः; $T_2$ $G_3$ मद्गचः (for सद्गवः).

**26** $D_2$ om. $26^{ab}$ (cf v.l. 25); T $G_3$ om. 26–27; $K_4$ $D_1$ M om. 26. — $^b$) $Ś_1$ $K_{1.2}$ $B_{1-3}$ Dc $Dn_{1.n2}$ $D_{4.6}$ $G_{2.4}$ उदार· (for उदारः). — $G_4$ om. $26^c$–$27^b$.

**27** T $G_3$ om. 27; $G_4$ om. $27^{ab}$ (cf. v.l. 26). — $^a$) $Ś_1$ $K_{1.2}$ पृथुभुजो; $B_2$ पृथुग्रीवो; $D_5$ पृथुः प्रांशुर्. — $^c$) $K_{2-4}$ Dc $G_{2.4}$ M वृषस्कंधः; $B_4$ $D_5$ महास्कंधः. — $^d$) $Ś_1$ $K_{1.2}$ $G_{2.4}$ M सालपोत.

**28** $^b$) $Ś_1$ $K_{1-3}$ $B_4$ $D_{1-3}$ $T_1$ $G_1$ °हनुः (for °भुजः). — $^c$) $K_{3.4}$ $D_{2.5}$ गृह्य; $D_{1.2}$ बिभ्रत्; $D_{4.6}$ शंखं (for खड्गं). — $^d$) $Ś_1$ $K_{1.2}$ तूणं; $K_3$ $D_{1.2.5}$ खड्गं; $D_3$ $G_1$ तूणौ; T $G_{2-4}$ $M_2$ तूणी (for तूणान्). $Ś_1$ $K_{1.2}$ $D_{4.6}$ परामृषन्; $B_{1.3.4}$ °मृषत्; $T_1$ $G_{1.2}$ °मृशन्.

**29** $^a$) N (except $K_4$) $T_2$ $G_3$ स केसरी (for केसरीव). $Ś_1$ $K_2$ यथोत्सृष्टः; $K_{1.3}$ B D (except $D_{3.5}$) $T_2$ $G_3$ [इ]व चोत्सिक्तः; $T_1$ इवोत्सिक्तः; $G_1$ बलात्सिक्तः; $G_4$ वधोत्सिक्तः (for यथोत्सिक्तः). — $^b$) $B_2$ $G_1$ कुंजरः (for वारणः). — $M_2$ om. $29^c$–$30^d$. — $^c$) = $31^c$. $D_5$ प्रणम्य भयसंत्रासः; $G_1$ द्रौपदीवचसंमोहात्. — $^d$) $D_5$ गिरिम् (for शैलम्).

**30** $M_2$ om. 30 (cf. v.l. 29). — $^d$) B D (except $D_{1-3.5}$) बाणकार्मुकधारिणं; $T_2$ $G_{2.3}$ पार्थं खड्गधनुर्धरं.

**31** $K_4$ om. $31^{cd}$. — $^c$) = $29^c$. K ($K_4$ om.) $D_{1-3}$ °संत्रासः. — $^d$) $B_{1-3}$ D शैलराजं समाश्रितः ($D_5$ क्षिप्रमेवापतद्बली).

**32** $^a$) $Ś_1$ $K_{1-3}$ $D_{1-3}$ वैक्लव्यं; $D_5$ मात्सर्यं (for कातर्यं). — $^b$) $K_4$ च क्लमः; $D_5$ संभ्रमः (for मत्सरः). $Ś_1$ $K_{1-3}$ $D_{1-3}$ न भयं न च संभ्रमः. — $^c$) $Ś_1$ $K_{1.2}$ भजते (for जुषते).

**33** $^a$) $T_2$ $G_{2-4}$ मृगव्यालसमाकीर्णं; $G_1$ तदैकातिसमासाद्य. — $^d$) $Ś_1$ K $D_{1-3.5}$ महागिरेः ($K_4$ वृकोदरः) (for महा°).

**34** $^{ab}$) $K_4$ $D_2$ सकिंनरमहाभागमुनिगंधर्वराक्षसान्; $D_3$ °महानागगंधर्वमुनिराक्षसान्; $T_1$ $M_1$ °महाभागानृषिगंधर्व°; $M_2$ सकिंनरान्महाभागान्मुनीन्गंधर्व°. — $^c$) $K_{1-3}$ $D_{1-3.5}$ धर्ष° (for हर्ष°). — $^d$) $B_{1-3}$ Dc Dn $D_{4.6}$ आरुह्य स; $B_4$ $D_5$ $G_1$ आरुरोह (for आससाद). $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ परंतपः (for महा°).

**35** $^a$) $B_{1-3}$ D (except $D_{1-3.5}$) $T_2$ $G_{2-4}$ ततो (for तत्र). — $^b$) $K_4$ ददृशे पांडवस्तथा. — $^c$) K $T_2$ $G_3$ स्फटिकाकारैर्; B D (except $D_{1-3.5}$) स्फाटिकैश्चैव. $T_{1.2}$ (before corr.) $G_{1.2}$ M कांचनस्फ($M_1$ °स्फा)टिका°. — After 35, $K_3$ B D (except $D_{1-3.5}$) ins.:

806* प्राकारेण परिक्षिप्तं सौवर्णेन समन्ततः ।
सर्वरत्नद्युतिमता सर्वोद्यानवता तथा ।
शैलादभ्युच्छ्रयवता चयाट्टालकशोभिना ।
द्वारतोरणनिर्व्यूहध्वजसंवाहशोभिना ।
विलासिनीभिरत्यर्थं नृत्यन्तीभिः समन्ततः ।
वायुना धूयमानाभिः पताकाभिरलंकृतम् ।
धनुष्कोटिमवष्टभ्य वक्रभावेन बाहुना ।
पश्यमानः स खेदेन द्रविणाधिपतेः पुरम् ।

**36** $^a$) $K_3$ $D_3$ मादयन्; $B_4$ S ह्लाद($M_2$ मान)यन्. — $^d$) $Ś_1$ $K_{1.2}$ सुसुखं; $K_3$ $D_{1.3.6}$ स सुखो; Dc सुमुखो. $K_4$ S मारुतः सुखशीतलः; $B_4$ मारुतः प्रववौ सुखं; $D_5$ मारुतः सुसुखोचितः.

सर्वगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥ ३६
चित्रा विविधवर्णाभाश्चित्रमञ्जरिधारिणः ।
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभनाः ॥ ३७
रत्नजालपरिक्षिप्तं चित्रमाल्यधरं शिवम् ।
राक्षसाधिपतेः स्थानं ददर्श भरतर्षभः ॥ ३८
गदाखड्गधनुष्पाणिः समभित्यक्तजीवितः ।
भीमसेनो महाबाहुस्तस्थौ गिरिरिवाचलः ॥ ३९
ततः शङ्खमुपाध्मासीद्द्विषतां लोमहर्षणम् ।
ज्याघोषतलघोषं च कृत्वा भूतान्यमोहयत् ॥ ४०
ततः संहृष्टरोमाणः शब्दं तमभिदुद्रुवुः ।
यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः ॥ ४१
गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः ।
प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः ॥ ४२
ततः प्रववृते युद्धं तेषां तस्य च भारत ।
तैः प्रयुक्तान्महाकायैः शक्तिशूलपरश्वधान् ।
भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः ॥ ४३
अन्तरिक्षचराणां च भूमिष्ठानां च गर्जताम् ।
शरैर्विव्याध गात्राणि राक्षसानां महाबलः ॥ ४४
सा लोहितमहावृष्टिरभ्यवर्षन्महाबलम् ।
कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ॥ ४५
भीमबाहुबलोत्सृष्टैर्बहुधा यक्षरक्षसाम् ।
विनिकृत्तान्यदृश्यन्त शरीराणि शिरांसि च ॥ ४६
प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम् ।
ददृशुः सर्वभूतानि सूर्यमभ्रगणैरिव ॥ ४७ C. 3. 11715 B. 3. 160. 54 K. 3. 161. 62

**37** $^{a}$) $D_5$ चित्रान्विविधवर्णाभान्. — $^{b}$) Ś$_1$ $K_2$ फल- ($K_2$ फुल्ल)माल्यसमाचिताः; $D_3$ नानाफलसमाचिताः; $D_5$ फलमालासमाचितान्. — $^{d}$) B Dc Dn $D_{4.6}$ °शोभिनः (for °शोभनाः). Ś$_1$ $K_{1.2}$ $D_5$ मनसापि महाद्रुमाः ($D_5$ °मान्); $K_3$ $D_{1-3}$ मनसोपि महाद्रुमाः.

**38** $^{b}$) $B_{1m.2}$ D (except $D_{1-3.5}$) °माल्यविभूषितं. — $^{d}$) B D (except $D_{1-3.5}$) ददृशे (for ददर्श). $K_4$ पवनात्मजः; a few MSS. भरतर्षभ.

**39** $^{a}$) Ś$_1$ तदा; Dc महा- (for गदा-). — $^{b}$) $K_4$ सततं समरप्रियः; $T_1$ स भीमस्त्यक्तसाध्वसः; $G_4$ समभिद्रुत्य वेगतः. — $39^{d}$ = 1. 179. $14^{d}$; 181. $4^{d}$: 4. 54. $13^{d}$; etc. Cf. Hopkins, *Great Epic of India*, App. A (p. 414), No. 91.

**40** $^{a}$) $T_2$ G उपाध्माय. — $^{b}$) S रोमहर्षणं. — $^{c}$) Ś$_1$ $K_{1.2.4}$ Dc M ज्याघोषं तलघोषं च; B Dn $D_{4.6}$ $T_2$ G ज्याघोष($B_{1.4}$ $D_{4.6}$ °षं)तलशब्दं च; $D_{3.5}$ °घोषांश्च. — $^{d}$) [अ]कंपयत् (for [अ]मोह°). $D_5$ नादयामास पर्वतं.

**41** $Dn_2$ om. 41. — $^{a}$) $B_{1-3}$ D (except $D_{1-3.5}$; $Dn_2$ om.) $T_2$ $G_{1.3}$ प्र° (for सं°). — $^{b}$) $B_{2.3}$ Dc $Dn_1$. $n_3$ $D_{4.6}$ transp. शब्दं and तं. $K_2$ $D_5$ समभिदुद्रुवुः; $T_1$ तमनुशुश्रुवुः; $G_2$ तमभिशुश्रुवुः; $M_2$ तदभिदुद्रुवुः.

**42** $^{b}$) Cf. $43^{b}$. $B_{1-3}$ D (except $D_{1-3.5}$) $T_2$ $G_3$ -शूलशक्तिपरश्व(*or* °स्व)धाः. — $^{c}$) Dc $G_2$ व्यराजंत; $D_5$ व्यदृश्यंत; $T_1$ व्यशोभंत (for व्यरो°). — $^{d}$) $D_5$ °किंनरैः.

**43** After $43^{ab}$, S ins.:

807* संरब्धानां महाघोषं सिंहानामिव नर्दताम् ।

— $^{c}$) $K_{1.3}$ $Dc_1$ $D_{2.3}$ $T_1$ $M_1$ तैः प्रमुक्तान्; $K_4$ निर्मुक्तांस्तैः; $G_{1.2}$ तैर्विमुक्तान्. $B_{1.3.4}$ D (except $D_{1-3.5}$) महामायैः; $G_{1.2}$ M महाकायान्. — $^{d}$) Cf. $42^{b}$. $K_4$ B D (except $D_{1-3.5}$) शूलशक्तिपरश्व(*or* °स्व)धान्. — $^{e}$) $K_4$ सितैर्भल्लैश्च चिच्छेद. — $^{f}$) Ś$_1$ $K_2$ $B_4$ $D_{1-3.5}$ भीमवेगपराक्रमः; $K_4$ $M_2$ भीमो भीमतरैर्नृप ($M_2$ °रैस्ततः); Dc $T_1$ भीमवेगशरैस्तथा ($T_1$ °दा); $T_2$ G $M_1$ °तरै($G_1$ °जवै)स्तदा.

**44** $^{a}$) B D (except $D_{1-3.5}$) $T_1$ °गतानां च. — $^{b}$) $K_4$ $D_{1-3.5}$ $T_1$ M भूमिस्थानां. $K_4$ $B_4$ तर्जतां. — After 44, S ins.:

808* शोणितस्य ततः पेतुर्घनानामिव भारत ।

Thereafter, S reads $45^{cd}$, T G *repeating* the line in its proper place.

**45** $K_4$ om. $45^{ab}$. — $^{a}$) Ś$_1$ $K_{1.2}$ $D_{3.5}$ °मयी (for °महा-). — $^{b}$) $K_{1.2}$ महात्मनां; $D_5$ T G महाबलः; M महाचलं. — B D (except $D_{1-3.5}$) ins. after $45^{ab}$: T G ins. after 45:

809* गदापरिघपाणीनां रक्षसां कायसंभवाः ।

— S reads $45^{cd}$ after 808*, T G *repeating* it here. — $^{c}$) $K_4$ S (T G first time) गात्रे° (for काये°). Ś$_1$ $K_{1-3}$ $B_1$ Dc $D_{2.3}$ $T_2$ $G_3$ (the latter two second time) घोरा (for धारा). — After 45, T G ins. 809*.

**46** $^{b}$) Ś$_1$ विशिखैर्; B D (except $D_{1-3.5}$) आयुधैर्; M सायकैर् (for बहुधा). — $^{c}$) Dc $Dn_2$. $n_3$ $D_6$ विनिकृंतानि; $D_3$ शरैः कृंतानि. $K_{3.4}$ B D (except $D_{3.5}$) दृश्यंते.

**47** $^{d}$) $K_{3.4}$ S (except $G_3$; $T_2$ by corr.) °घनैर् (for °गणैर्).

C 3 11715
B 3 160.55
K 3 161 63

स रश्मिभिरिवादित्यः शरैररिनिघातिभिः ।
सर्वानार्छन्महाबाहुर्बलवान्सत्यविक्रमः ॥ ४८
अभितर्जयमानाश्च रुवन्तश्च महारवान् ।
न मोहं भीमसेनस्य ददृशुः सर्वराक्षसाः ॥ ४९
ते शरैः क्षतसर्वाङ्गा भीमसेनभयार्दिताः ।
भीममार्तस्वरं चक्रुर्विप्रकीर्णमहायुधाः ॥ ५०
उत्सृज्य ते गदाशूलानसिशक्तिपरश्वधान् ।
दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना ॥ ५१
तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः ।
सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः ॥ ५२
अदर्शयदधीकारं पौरुषं च महाबलः ।
स तान्दृष्ट्वा पराबृत्तान्स्मयमान इवाब्रवीत् ॥ ५३
एकेन बहवः संख्ये मानुषेण पराजिताः ।
प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरम् ॥ ५४
एवमाभाष्य तान्सर्वान्न्यवर्तत स राक्षसः ।
शक्तिशूलगदापाणिरभ्यधावच्च पाण्डवम् ॥ ५५
तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनः समर्पयत् ॥ ५६
मणिमानपि संक्रुद्धः प्रगृह्य महतीं गदाम् ।
प्राहिणोद्भीमसेनाय परिक्षिप्य महाबलः ॥ ५७
विद्युद्रूपां महाघोरामाकाशे महतीं गदाम् ।
शरैर्बहुभिरभ्यर्छद्भीमसेनः शिलाशितैः ॥ ५८
प्रत्यहन्यन्त ते सर्वे गदामासाद्य सायकाः ।
न वेगं धारयामासुर्गदावेगस्य वेगिताः ॥ ५९

**48** $^{a}$) $K_4$ $T_1$ $G_2$ स्व-; $D_{1.2}$ ते (for स). — $^{b}$) $Ś_1$ $K_{1.2}$ $D_{1-3}$ शरैर्बहुभिराचितः ($K_1$ °चितैः; $D_3$ °वृतः); $K_3$ $D_5$ (m as in text) °ररिभिराचितः; $K_4$ °रग्निशिखोपमैः; $B_1$ (m as in text) Dc °ररिनिपातितैः; T $G_{2-4}$ M °रिव ($T_1$ °रभि-; $G_2$ M °रव-) निपातिभिः; $G_1$ शरैर्मर्मविदारणैः. — $^{d}$) $K_4$ भीमम्सेनः प्रतापवान्.

**49** $^{a}$) $K_2$ अभिगर्जयमानाश्च; $K_3$ $D_{1.3}$ $T_2$ $G_{3.4}$ $M_1$ °तर्जयमानस्य ($K_3$ $D_{1.3}$ °श्च); $K_4$ ससर्जमानस्य तदा; $B_4$ अभितर्जयमानानां; $D_5$ °गर्जमानां बहवः (hypermetric); $T_1$ °संतर्जमानाश्च. — $^{b}$) $T_1$ $G_{1.2.4}$ $M_2$ रवंत°; $M_1$ रुवत°. $K_4$ रवतो भैरवान्रवान्; $D_5$ तत्र तत्र महा°. — $^{c}$) $D_{1.2}$ न भयं; $D_5$ न ग्लानिं; $T_2$ $G_{3.4}$ संनादं; $G_1$ अमोघं; $G_2$ संनाहं (for न मोहं). $K_4$ न सेहिरेथ तं नादं. — $^{d}$) $K_4$ भयार्ताश्च प्रदुद्रुवुः.

**50** $^{a}$) $K_{1.2.4}$ $D_3$ ते शरैः कृत्तसर्वांगाः; $B_{1-3}$ Dc Dn $D_{4.6}$ यक्षा विकृ(Dc °क्ष)तसर्वांगाः; S ते हि वि($T_1$ ते भीम-; $M_1$ ते तु वि-; $M_2$ तेभितः)क्षत°. — $^{b}$) $T_2$ $G_{2.3}$ °बलार्दिताः.

**51** $^{a}$) $Ś_1$ $K_{1.2}$ गदाशूलानि. — $^{b}$) $Ś_1$ $K_{1.2}$ Dc असिचक्र°; $D_5$ पाशशक्ति°. Some MSS. °स्वधान्. — $^{d}$) $K_4$ भीमधन्वना; $D_{1.2}$ $T_1$ $G_2$ दृढधन्विना; $D_5$ गिरिवासिनः; $T_2$ $G_{3.4}$ स्थिरधन्विना. — After 51, Dc reads an addl. colophon, followed by वैशं° उ°.

**52** $^{a}$) $B_1$ $T_1$ $G_{1.2}$ $M_1$ ततः (for तत्र). — $^{b}$) $B_2$ $D_{1.2.5}$ °बलः; Dc °हनुः (for °भुजः). — $^{d}$) $K_4$ यक्षराट् (for राक्षसः).

**53** $^{a}$) $K_4$ S दर्शयन्स ($G_2$ °यानः) प्रतीकारं. — $^{b}$) $K_4$ आददानं च पौरुषं. — $^{c}$) $T_1$ $M_1$ तान्स; $T_2$ G $M_2$ तांस्तु (for स तान्).

**54** Before 54, Dc reads मणिमानुवाच. — $^{a}$) $T_1$ M संखे; $G_{2.4}$ संघे. — $^{c}$) $Ś_1$ $K_{1.2}$ गत्वा (for प्राप्य). $B_2$ $D_{1.2}$ वैश्रवणाभ्यासं. — $^{d}$) $Ś_1$ K $D_{2.3}$ $M_2$ धनाधिपं; $D_1$ नराधिपं; $T_2$ (before corr.) $G_2$ नरेश्वरं.

**55** Before 55, $B_4$ Dc read वैशं° उ°. — $^{b}$) $B_{1.3.4}$ D (except $D_{1-3.5}$) $T_2$ $G_3$ अभ्यवर्तत; $B_2$ समवर्तत (for न्यवर्तत स). — $^{d}$) $B_{1.3.4}$ Dc Dn $D_{4.6}$ $G_4$ स पांडवं; $D_2$ वृकोदरं (for च पाण्डवम्). $Ś_1$ $K_{1-3}$ $D_{1.3.5}$ योधयिष्यन्वृ($D_1$ °द्वृ)कोदरं; $K_4$ $B_2$ अभ्यधावत पांडवं.

**56** $^{a}$) $Ś_1$ $K_{1-3}$ $D_{1-3}$ संप्रेक्ष्य (for वेगेन). — $56^{b}$ = $30^{b}$. — $^{c}$) $B_2$ $D_5$ पार्थो (for पार्श्वे). — $^{d}$) $Ś_1$ B Dc Dn $D_{2-4.6}$ समार्दयत्; $K_{1.2}$ $D_1$ समर्द°; $D_5$ [अ]भ्यताडयत्.

**57** $^{a}$) $Ś_1$ $K_{1-3}$ $D_{1-3}$ अथ (for अपि). — $^{b}$) $D_1$ प्राहिणोन् (for प्रगृह्य). — $D_1$ om. $57^{c}$–$58^{d}$. — $57^{c}$ = $65^{c}$. — $^{d}$) B Dc Dn $D_{4.6}$ परिगृह्य ($B_4$ समुत्क्षिप्य); $D_5$ परिक्षिप्त्वा; $T_2$ (before corr.) $G_2$ परिक्षिप्तान्.

**58** $D_1$ om. 58 (cf. v.l. 57). — $^{c}$) $Ś_1$ अध्यार्छद्; $K_{3.4}$ $B_4$ $D_2$ आनर्छद्; $D_5$ आजघ्ने; $T_1$ आच्छन्नो; $T_2$ G अभ्यघ्नन्; $M_1$ अभ्यार्छद्.

**59** $^{a}$) $K_{1-3}$ $D_{1.2}$ अभ्यहन्यंत. — $^{b}$) $Ś_1$ $K_2$ $B_{1-3}$ आदाय (for आसाद्य). $Ś_1$ $K_2$ राक्षसाः (for सायकाः). $D_5$ गदया भीमसायकाः; $G_1$ समासाद्य गदां शराः. — $K_3$ om. $59^{cd}$. — $^{d}$) $K_4$ S तस्य वै (for वेगिताः).

**60** Dc om. 60. — $^{a}$) $Ś_1$ T $G_{2.3}$ समाचाराद्; $K_4$

गदायुद्धसमाचारं बुध्यमानः स वीर्यवान् ।
व्यंसयामास तं तस्य प्रहारं भीमविक्रमः ॥ ६०
ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीम् ।
तस्मिन्नेवान्तरे धीमान्प्रजहाराथ राक्षसः ॥ ६१
सा भुजं भीमनिर्ह्रादा भित्त्वा भीमस्य दक्षिणम् ।
साग्निज्वाला महारौद्रा पपात सहसा भुवि ॥ ६२
सोऽतिविद्धो महेष्वासः शक्त्यामितपराक्रमः ।
गदां जग्राह कौरव्यो गदायुद्धविशारदः ॥ ६३
तां प्रगृह्योन्नदन्भीमः सर्वशैक्यायसीं गदाम् ।
तरसा सोऽभिदुद्राव मणिमन्तं महाबलम् ॥ ६४
दीप्यमानं महाशूलं प्रगृह्य मणिमानपि ।
प्राहिणोद्भीमसेनाय वेगेन महता नदन् ॥ ६५
भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः ।
अभिदुद्राव तं तूर्णं गरुत्मानिव पन्नगम् ॥ ६६
सोऽन्तरिक्षमभिप्लुत्य विधूय सहसा गदाम् ।
प्रचिक्षेप महाबाहुर्विनद्य रणमूर्धनि ॥ ६७
सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा ।
हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ॥ ६८
तं राक्षसं भीमबलं भीमसेनेन पातितम् ।
ददृशुः सर्वभूतानि सिंहेनेव गवां पतिम् ॥ ६९
तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः ।
भीममार्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति ॥ ७० C. 3. 11738 B. 3. 160. 77 K. 3. 161. 85

इति श्रीमहाभारते आरण्यकपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

$G_1$ M समाचारान्; $B_1$ (m as in text) समारब्धं. — $^b$) $K_1$ $B_1$ $M_2$ वध्यमानः; $K_{3.4}$ $B_{3.4}$ $Dn_3$ $D_5$ T G युध्य°; $D_1$ बुद्धिमांश्च (for बुध्य°). — $^c$) $K_{2.3}$ $T_1$ ध्वंसयामास; $B_4$ कल°; $G_2$ व्यथ°. $T_1$ तत्सर्वं; $T_2$ G तत्रस्थः; $M_2$ तत्तस्य. — $^d$) $Ś_1$ K $D_{1-3.5}$ $M_2$ लघु° (for भीम°).

**61** $^b$) $Ś_1$ $K_{1.2}$ $D_{1-3.5}$ $M_2$ अयोमयीं. — $^c$) $K_4$ S तस्मै ($T_1$ भीमं) (for धीमान्). — $^d$) $D_{1.2}$ प्रजहाद्; $D_3$ प्राहिणोद्; $T_2$ $G_{1.3.4}$ प्रचिक्षेप (for प्रजहार). $B_4$ T $G_{1.3.4}$ M स (for [अ]थ). $K_4$ प्राक्षिपद्राक्षसो बली; $G_2$ प्रचिक्षेप निशाचरः.

**62** $^a$) $K_4$ S भीमसंकाशं. — $^c$) $Ś_1$ $K_1$ अग्नि° (for साग्नि°).

**63** $^a$) $K_2$ $B_2$ सोभिन्निद्धो; S स निर्विद्धो. — $^c$) Dn $D_{4.6}$ कौंतेयो (for कौरव्यो). B Dc $D_5$ गदायुद्धेषु कुशलः. — $^d$) =$66^b$. B D (except $D_{1-3}$) क्रोधपर्याकुलेक्षणः. — After 63, $B_1$(marg.)$_{.2.3}$ Dc Dn $D_3$(marg)$_{.6}$ ins.:

810* रुक्मपट्टपिनद्धां तां शत्रूणां भयवर्धिनीम् ।

**64** $^a$) B D (except $D_{1-3}$) प्रगृह्याथ; $T_1$ स प्रगृह्य (for तां प्रगृह्य). $K_3$ Dn $D_{4-6}$ नदद्; B Dc नदन्; $D_{1-3}$ [अ]नदद् (for [उ]न्नदन्). — $^b$) A few MSS. -सैक्या° (for -शैक्या°). B Dc Dn $D_{3-6}$ शैक्यां ($D_3$ प्रेक्ष्य) सर्वायसीं गदां; $T_2$ $G_{1.3.4}$ सर्वशत्त्या($G_4$ °काल)यसीं गदां. — $^c$) $Ś_1$ K $D_{1-3}$ ततस्तं (for तरसा सः). B Dc Dn $D_{4.6}$ च (for सः).

**66** $^a$) $D_3$ (marg. *sec. m.*) भित्वा; $T_2$ G हत्वा. — $^b$) =$63^d$. S (except $G_1$) °विभागवित्. — $^c$) $B_{1.3}$ Dn $D_{4.6}$ तं हंतुं; $B_4$ वेगेन; $D_5$ तं भीमो (for तं तूर्णं).

**67** $^a$) $K_{3.4}$ B D (except $D_5$) $M_2$ अव° (for अभि°). — $^c$) T $G_{1-3}$ $M_1$ चिक्षेप च; $M_2$ प्रजग्राह (for प्रचिक्षेप). — $^d$) $T_2$ G विनदन्नग($G_1$ °न्रण)मूर्धनि. — After 67, $M_2$ ins.:

811* ततस्तं गदया भीमो मणिमन्तं निशाचरः ।
जघान सहसा मूर्ध्नि स पपात ममार च ।

**69** $M_2$ om. 69 (together with 68). — $^b$) Dc $D_{1.3.5}$ $M_1$ भीमसेन($Dc_2$ $D_3$ °ने)निपातितं; $T_2$ G भीमसेनबलाहतं. — $^d$) S ($M_2$ om.) महाद्विपं (for गवां पतिम्).

**70** $^a$) $Ś_1$ K $D_{2.3.5}$ $M_2$ पतितं (for निहतं). — For $70^c$ cf. $50^c$.

Colophon. $Dc_2$ reads it in marg. *sec. m.* — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan:* $K_{1.2}$ $B_2$ $T_2$ $G_{1.3.4}$ $M_1$ (all om. sub-parvan name) mention only गंधमादनवास ($T_2$ $G_3$ °निवास; $G_4$ $M_1$ °प्रवेश); Dc, likewise, only गंधमादन; and $D_{1.2}$, only लोमशतीर्थयात्रा. — *Adhy. name:* $K_1$ $B_{2-4}$ D $G_1$ मणिमद्वधः; $K_3$ मणिभद्रवधः; $K_4$ मणिमंतवधः; $B_1$ मणिमानवधः. — *Adhy. no.* (figures, words or both): Dn 159 ($Dn_3$ 160); $D_1$ 165; S ($M_2$ *sup. lin.*) 161 ($M_2$ orig. 163). — *Śloka no.:* Dn 77; $D_1$ 71.

# १५८

C 3 11739
B. 3. 161 1
K. 3 162. 1

वैशंपायन उवाच ।

श्रुत्वा बहुविधैः शब्दैर्नाद्यमाना गिरेर्गुहाः ।
अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि ॥ १
धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा ।
भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन् ॥ २
द्रौपदीमार्ष्टिषेणाय प्रदाय तु महारथाः ।
सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा ॥ ३
ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः ।
ददृशुस्ते महेष्वासा भीमसेनमरिंदमम् ॥ ४
स्फुरतश्च महाकायान्गतसत्त्वांश्च राक्षसान् ।
महाबलान्महाघोरान्भीमसेनेन पातितान् ॥ ५
शुशुभे स महाबाहुर्गदाखड्गधनुर्धरः ।
निहत्य समरे सर्वान्दानवान्मघवानिव ॥ ६
ततस्ते समतिक्रम्य परिष्वज्य वृकोदरम् ।
तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम् ॥ ७
तैश्चतुर्भिर्महेष्वासैर्गिरिश्शृङ्गमशोभत ।
लोकपालैर्महाभागैर्दिवं देववरैरिव ॥ ८
कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान् ।
भ्राता भ्रातरमासीनमभ्यभाषत पाण्डवम् ॥ ९
साहसाद्यदि वा मोहाद्भीम पापमिदं कृतम् ।
नैतत्ते सदृशं वीर मुनेरिव मृषावचः ॥ १०
राजद्विष्टं न कर्तव्यमिति धर्मविदो विदुः ।
त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतम् ॥ ११
अर्थधर्मावनादृत्य यः पापे कुरुते मनः ।

## 158

**1** a) $B_{1-3}$ वाक्यैर्; $D_{1.2}$ नादैर् (for शब्दैर्). — b) $Ś_1$ भ्राम्यमाना; $K_4$ B D (except $D_{1.3}$) नाद्य($B_1$ नद्यं)-मानां. $K_{3.4}$ B D (except $D_{1-3}$) गुहां. — d) $K_{1.2}$ उभौ माद्रीसुतावपि.

**2** b) $Ś_1$ $K_{1.2}$ ते (for च). — $K_1$ om. (hapl.) $2^c$–$3^b$. — d) $K_{1.3}$ $D_{1-3}$ भृशं (for सर्वे).

**3** $K_1$ om. $3^{ab}$ (cf. v.l. 2). — a) B (as usual) आर्ष्णिसेनाय. — b) $K_4$ प्रदाय च; B Dn $D_{4.6}$ संप्रधार्य ($B_4$ समावेश्य); Dc संप्रदाय; $D_{1-3}$ परिदाय (for प्रदाय तु). — c) $Ś_1$ $K_{1.2}$ $B_2$ $D_5$ वीराः (for शूराः).

**4** b) $Ś_1$ K $D_{1-3.5}$ महारथं ($K_4$ समंततः). — c) $K_3$ $D_3$ महात्मानं; $Dc_2$ $D_{1.2}$ $T_1$ $G_{1.4}$ महेष्वासं. — d) $K_4$ B D (except $D_{1-3.5}$) अरिंदमाः ($B_4$ अवस्थितं).

**5** a) $K_{1.2}$ परितश्च; $K_4$ समंताच्च; $Dn_1$ $D_{1.2.6}$ स्फुरंतश्च; T G $M_2$ पुरत° (for स्फुरत°). $M_1$ मणिमत्प्रमुखाञ्छूरान्. — c) $K_3$ महावर्णान्; $K_4$ $D_{1-3}$ $T_1$ $M_2$ °कायान्; $B_{1.3}$ Dn $D_{4.6}$ °सत्वान्; $B_4$ $D_5$ महोत्साहान्; Dc $T_2$ G महेष्वासान्; $M_1$ महावीर्यान् (for °घोरान्). — d) Cf. 3. 157. $69^b$. $B_4$ $D_{2.3.5}$ S भीमसेननिपाति($T_1$ °बलादि )तान्.

**6** $D_5$ om. (hapl.) $6^a$–$9^b$.

**7** $D_5$ om. 7 (cf. v.l. 6). — a) $K_3$ $T_1$ $G_1$ M सम-भिक्रम्य; $B_{1-3}$ Dc Dn $D_{4.6}$ भ्रातरं दृष्ट्वा. — b) $B_{1-3}$ Dc Dn $D_{4.6}$ महारथाः (for वृकोदरम्).

**8** $D_5$ om. 8 (cf. v.l. 6). — b) $T_1$ M गिरेः शृंगम्. $K_4$ गिरिश्शृंगैरिवोद्गतैः. — c) $T_2$ (before corr.) $G_4$ महावेगैर्; $G_2$ महेष्वासैर् (for महाभागैर्). — d) $Ś_1$ स्वर्गो; $K_4$ $T_2$ (before corr.) $G_{2.4}$ दिवि; $T_1$ दिव्यैर् (for दिवं). $B_2$ Dc देवगणैरिव. $B_1$ द्यौर्देवप्रवरैरिव.

**9** $D_5$ om. $9^{ab}$ (cf. v.l. 6). — a) $T_1$ $G_2$ कुबेरभवनं. — d) B D (except $D_{1-3}$) अब्रवीत्पृथिवीपतिः; S अथोवाच ($G_2$ उवाच स) युधिष्ठिरः.

**10** Before 10, N reads युधिष्ठिर उ°. — d) $K_3$ D ($Dn_3$ before corr.) वधः (for वचः).

**11** a) $T_1$ राज्ञानिष्टं (for राजद्विष्टं). — $T_1$ om. $11^c$–$12^d$. — c) $K_4$ यदिदं कृतवान्भीम. — d) $B_{1.3}$ $D_5$ S ($T_1$ om.) transp. त्वया and कृतं. $K_4$ विद्विष्टं तद्दिवौकसां; Dc भीम यद्विहितं त्वया.

**12** $T_1$ om. $12^{abcd}$ (cf. v.l. 11). — a) $D_{1.2}$ अर्थकामा°; S ($T_1$ om.) धर्माधर्मौ°. — c) $Ś_1$ K $D_{1.2.5}$ तात; $D_3$ कृत- (for पार्थ). $D_5$ दुष्टानां; $M_1$ सर्वेषां; $M_2$ सर्वस्मात् (for पापानां). — d) $Ś_1$ K $D_{1-3.5}$ लभते (for विन्दते). M पापाच्च परिमुच्यते. — After $12^{cd}$, $K_4$ ins.:

812* कर्मणां पार्थ सर्वेषां न पापात्परिमुच्यते ।;

while S (except $T_1$) ins.:

कर्मणां पार्थ पापानां स फलं विन्दते ध्रुवम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ १२
एवमुक्त्वा स धर्मात्मा भ्राता भ्रातरमच्युतम् ।
अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
विरराम महातेजास्तमेवार्थं विचिन्तयन् ॥ १३
ततस्तु हतशिष्टा ये भीमसेनेन राक्षसाः ।
सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति ॥ १४
ते जवेन महावेगाः प्राप्य वैश्रवणालयम् ।
भीममार्तस्वरं चक्रुर्भीमसेनभयार्दिताः ॥ १५
न्यस्तशस्त्रायुधाः श्रान्ताः शोणिताक्तपरिच्छदाः ।
प्रकीर्णमूर्धजा राजन्यक्षाधिपतिमब्रुवन् ॥ १६
गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः ।
राक्षसा निहताः सर्वे तव देव पुरःसराः ॥ १७
प्रमृद्य तरसा शैलं मानुषेण धनेश्वर ।
एकेन सहिताः संख्ये हताः क्रोधवशा गणाः ॥ १८
प्रवरा राक्षसेन्द्राणां यक्षाणां च धनाधिप ।
शेरते निहता देव गतसत्त्वाः परासवः ॥ १९
लब्धः शैलो वयं मुक्ता मणिमांस्ते सखा हतः ।
मानुषेण कृतं कर्म विधत्स्व यदनन्तरम् ॥ २०
स तच्छ्रुत्वा तु संक्रुद्धः सर्वयक्षगणाधिपः ।
कोपसंरक्तनयनः कथमित्यब्रवीद्वचः ॥ २१
द्वितीयमपराध्यन्तं भीमं श्रुत्वा धनेश्वरः ।
चुक्रोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत् ॥ २२
अथाभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम् ।
हयैः संयोजयामासुर्गान्धर्वैरुत्तमं रथम् ॥ २३
तस्य सर्वगुणोपेता विमलाक्षा हयोत्तमाः ।
तेजोबलजवोपेता नानारत्नविभूषिताः ॥ २४
शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः । C. 3. 11764 B. 3. 161. 25 K. 3. 162. 26

---

813* साहसं बत भद्रं ते देवानामपि चाप्रियम् ।

**13** $^{b}$) $K_{4}$ $T_{1}$ $M_{1}$ अग्रजः; $B_{2-4}$ $Dn_{3}$ अच्युतः; $T_{2}$ $G_{2-4}$ उत्तमं. — After $13^{ab}$, S ins.:

814* भीमसेनं महाबाहुमप्रधृष्यपराक्रमम् ।

— $^{c}$) Ś$_{1}$ K $D_{1-3}$ अर्थधर्मविधान( $K_{4}$ °भाग )ज्ञः; $B_{1.3}$ $D_{5}$ $G_{2}$ $M_{2}$ अर्थतत्वविभाव( $D_{5}$ $M_{2}$ °धान )ज्ञः.

**14** $^{a}$) B D (except $D_{1-3.5}$) ते (for तु). $K_{4}$ $G_{4}$ हतशेषा; $M_{2}$ हतचित्ता. — $^{d}$) $K_{1-3}$ $B_{4}$ $D_{1-3.5}$ $T_{1}$ कुबेर-भ( $D_{1}$ °भु )वनं.

**15** $^{a}$) Ś$_{1}$ K $B_{1.4}$ $D_{1-3}$ महाभागाः ( $K_{4}$ °राज). — $15^{c}$=3. 157. $50^{c}$. — $^{d}$) $T_{2}$ $G_{2-4}$ °गदार्दिताः.

**16** $^{a}$) $T_{1}$ न्यसन्छस्त्रायुधाः; $T_{2}$ G न्यस्तसर्वायुधाः. $K_{1}$ B Dn $D_{1.2.4.6}$ क्लांताः; $K_{3}$ Dc $D_{5}$ क्रांताः. — $^{b}$) Ś$_{1}$ $K_{1.2.4}$ $D_{3.5}$ शोणितौघ( $D_{5}$ °तेन )परिप्लुताः; $K_{3}$ B Dc Dn $D_{1.2.4.6}$ °ताक्ततनुच्छदाः; $T_{1}$ $G_{2}$ °तार्द्रपरिच्छदाः. — $^{d}$) Dc रक्षाधि°; $D_{5}$ $M_{1}$ धनाधि° (for यक्षाधि°). Ś$_{1}$ K $D_{1-3}$ धनाधिपमथाब्रुवन्.

**18** $^{a}$) Ś$_{1}$ K $D_{1-3.5}$ आक्रम्य; $T_{1}$ प्रविश्य; $G_{1.2.4}$ प्रभज्य (for प्रमृद्य). Ś$_{1}$ तु महा-; $K_{1.2}$ च महा-; $K_{3.4}$ $D_{1-3}$ सहसा (for तरसा). — $^{c}$) S (except $M_{1}$) निहताः (for सहिताः). Ś$_{1}$ $K_{4}$ $D_{5}$ $T_{1}$ M सर्वे; $G_{2.4}$ संघे (for संख्ये). — $^{d}$) B Dn $D_{1.4}$ रणे; Dc सर्वे; $T_{1}$ मृताः (for हताः).

**19** $^{b}$) Ś$_{1}$ Dn $D_{1.2.4.6}$ $M_{2}$ नराधिप; $B_{4}$ $T_{2}$ $G_{2-4}$ धनेश्वर. — $^{c}$) $T_{1}$ तत्र (for देव). — $^{d}$) $T_{1}$ पुरमासाद्य सर्वशः.

**20** $^{a}$) Ś$_{1}$ क्षुब्धः; $K_{4}$ रुद्धाः; $D_{5}$ दग्धः; $T_{2}$ G भग्नः (for लब्धः). $K_{1-3}$ $D_{1-3}$ लब्धशैला ( $K_{3}$ °लो ); $B_{3}$ Dn $D_{4.6}$ $T_{1}$ लब्धशेषा; $M_{1}$ हतशेषा. $K_{4}$ क्षिप्ता; $T_{2}$ G भग्ना (for मुक्ता). ❀ Cn: लब्धशैलः इति गौडपाठे तु लब्धो भीमेन जितः शैलः . . . । ❀ — $^{b}$) $T_{2}$ G त्वत्- (for ते).

**21** Before 21, Dc $G_{2}$ read वैशं°. — $^{a}$) Ś$_{1}$ K $D_{2.3.5}$ एतत् (for स तत्). $B_{2}$ $Dn_{1}$ $D_{6}$ M सु-; $D_{1.2}$ च (for तु). — $^{b}$) Ś$_{1}$ $K_{2-4}$ $D_{1-3.5}$ सर्वयक्षध( $D_{3}$ °ज )नाधिपः; $T_{1}$ यक्षरक्षोगणा°. — $^{c}$) Ś$_{1}$ K $B_{4}$ $D_{1-3.5}$ $T_{1}$ क्रोध°.

**22** $^{b}$) Ś$_{1}$ $T_{2}$ G धना( $G_{2}$ नरा )धिपः (for धने°). — $^{d}$) $K_{2}$ $D_{1-3}$ $G_{4}$ युध्यताम्. $G_{4}$ युज्यतां मे रथस्त्विति.

**23** $^{b}$) $K_{4}$ $B_{1-3}$ D (except $D_{1-3.5}$) $T_{1}$ $G_{1}$ M गिरिशृंगम्. — $^{c}$) B D (except $D_{1-3.5}$) रथं (for हयैः). $K_{2}$ $D_{1.2}$ संयोजयामास. — $^{d}$) $K_{2.3}$ B D (except $D_{3}$) S (except $T_{1}$ $M_{1}$) गंधर्वैर्. B D (except $D_{1-3.5}$) हेममालिभिः; $T_{1}$ $M_{1}$ रथमुत्तमं (by transp.). — $D_{3}$ reads 37 after 23, *repeating* it in its proper place.

**24** $M_{2}$ om. (hapl.) $24^{bc}$. — $^{b}$) Ś$_{1}$ K $D_{1-3.5}$ मल्लिकाक्षा (Ś$_{1}$ $K_{1.2}$ °ख्या). $D_{5}$ महाहयाः (for हयो°). — $^{c}$) Ś$_{1}$ $K_{1.2.4}$ तेजोजवसमायुक्ता; $K_{2}$ Dc $D_{1.2}$ °जवबलोपेता; B Dn $D_{4-6}$ °बलगुणोपेता. — $K_{4}$ om. (hapl.)

C 3. 11764 B. 3. 161. 26 K. 3. 162. 27 हर्षयामासुरन्योन्यमिङ्गितैर्विजयावहैः ॥ २५
स तमास्थाय भगवान्राजराजो महारथम् ।
प्रययौ देवगन्धर्वैः स्तूयमानो महाद्युतिः ॥ २६
तं प्रयान्तं महात्मानं सर्वयक्षधनाधिपम् ।
रक्ताक्षा हेमसंकाशा महाकाया महाबलाः ॥ २७
सायुधा बद्धनिस्त्रिंशा यक्षा दशशतायुताः ।
जवेन महता वीराः परिवार्योपतस्थिरे ॥ २८
तं महान्तमुपायान्तं धनेश्वरमुपान्तिके ।
ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनम् ॥ २९
कुबेरस्तु महासत्त्वान्पाण्डोः पुत्रान्महारथान् ।
आत्तकार्मुकनिस्त्रिंशान्दृष्ट्वा प्रीतोऽभवत्तदा ॥ ३०
ते पक्षिण इवोत्पत्य गिरेः शृङ्गं महाजवाः ।
तस्थुस्तेषां समभ्याशे धनेश्वरपुरःसराः ॥ ३१
ततस्तं हृष्टमनसं पाण्डवान्प्रति भारत ।
समीक्ष्य यक्षगन्धर्वा निर्विकारा व्यवस्थिताः ॥ ३२
पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम् ।
नकुलः सहदेवश्च धर्मपुत्रश्च धर्मवित् ॥ ३३
अपराद्धमिवात्मानं मन्यमाना महारथाः ।
तस्थुः प्राञ्जलयः सर्वे परिवार्य धनेश्वरम् ॥ ३४
शय्यासनवरं श्रीमत्पुष्पकं विश्वकर्मणा ।

---

$24^d$–$25^a$.

**25** $K_4$ om. $25^a$ (cf. v.l. 24). — $^a$) $K_{1.2}$ रणे (for रथे). — $^b$) $Ś_1$ K $D_{1-3.5}$ पतिष्यंत (for तरि°). $T_2$ $G_{2.3}$ [अ]वहन्; $G_4$ [अ]भवन् (for [आ]शुगाः). — After $25^{ab}$, $T_2$ G ins.:

815* ततस्ते तु महायक्षाः क्रुद्धं दृष्ट्वा धनेश्वरम् ।

— $^c$) $Ś_1$ $K_{1.2.4}$ $D_3$ शोभ°; $K_3$ B Dc Dn $D_{4.6}$ द्वेष° (for हर्ष°). — $^d$) $B_{1-3}$ D (except $D_{1-3.5}$) द्वेषितैर् (for इङ्गितैर्).

**26** $^b$) $K_2$ $G_1$ $M_1$ महारथः; $T_1$ रथोत्तमं. — $^d$) $Ś_1$ K $D_{1-3}$ महात्मभिः (for °द्युतिः).

**27** $^a$) A few MSS. प्रयातं. $Ś_1$ $K_{1-3}$ $B_4$ $D_{1-3}$ महाबाहुं. — $^b$) Cf. $21^b$ and v.l. B Dn $D_{4.6}$ $T_2$ $G_{2-4}$ सर्वे यक्षधनाधिपं; Dc $D_{3.5}$ $G_1$ सर्वयक्षगणा($D_3$ $G_1$ °जना)धिपं. — After $27^{ab}$, S ins.:

816* अनुजग्मुर्महात्मानं धनदं घोरदर्शनाः ।

[$M_1$ महात्मानो. $T_1$ $M_1$ यक्षरक्षोगणाधिपाः (for the posterior half).]

— $^c$) $T_1$ राक्षसा (for रक्ताक्षा). — $^d$) $Ś_1$ $K_{1-3}$ $D_{1-3}$ °जवाः (for °बलाः).

**28** $^a$) $Ś_1$ K $D_{1-3.5}$ समंताद् (for सायुधा). $K_{1.2}$ धृत° (for बद्ध°). — $^b$) $Ś_1$ यक्षास्तस्य महाबलाः; $K_{1.3.4}$ $D_{3.5}$ यक्षास्तस्य शतावराः; $K_2$ यक्षास्तस्य सतासताः; B Dc Dn $D_{1.2.4.6}$ यक्षा दशशतावराः. — $^c$) B D (except $D_{1-3.5}$) S ते जवेन महावे($B_1$m. $_4$ °भा)गाः. — $^d$) B D except $D_{1-3.5}$) S प्लवमाना विहायसा (S °सं). — After 28, $K_3$ (om. line 2) B D (except $D_{1-3.5}$) S ins.:

817* गन्धमादनमाजग्मुः प्रकर्षन्तमिवाम्बरम् ।
तत्केसरिमहाजालं धनाधिपतिपालितम् ।

S cont.:

818* रम्यं चैव गिरेः शृङ्गमासेदुर्यत्र पाण्डवाः ।

**29** $^{ab}$) $K_{1.2}$ ते (for तं). $K_{3.4}$ $D_{1-3}$ तं महात्मानमायांतं; $D_5$ तमायांतं महात्मानं. B Dc Dn $D_{4.6}$ S कुबेरं च महात्मानं यक्षरक्षोगणावृतं ($B_4$ $G_1$ °धिपं). — $^d$) $Ś_1$ $D_5$ प्रियदर्शनाः; $T_2$ G °वादिनः.

**30** $^a$) $D_5$ $T_2$ $G_{2-4}$ महासत्वः. — $^b$) $Ś_1$ $K_{1.2}$ Dc पांडु- (for पाण्डोः). $Ś_1$ $K_{3.4}$ $D_{1-3}$ महाबलान्. — After 30, S ins.:

819* सर्वे चेमे नरव्याघ्राः पुरंदरसमौजसः ।

[$T_1$ $M_2$ स मत्वेमे; $T_2$ (before corr.) $G_{3.4}$ समं त्विमे; $M_1$ स तु मेने.]

— S cont.: $K_3$ B D (except $D_{1-3.5}$) ins. after 30:

820* देवकार्यं चिकीर्षन्स हृदयेन तुतोष ह ।
[S करिष्यंति (for चिकीर्षन्स).]

**31** $^a$) $Ś_1$ $K_2$ इवाश्वस्य; $K_{1.3.4}$ $D_{1-3}$ इवागम्य; B Dc Dn $D_{4.6}$ $G_1$ इवापेतुर्; $D_5$ इवाकाशे; $T_2$ $G_{2-4}$ इवोत्लुत्य. — $^b$) $B_{2-4}$ Dn $D_{4.6}$ गिरिश्रृंगं; $M_2$ गिरेः श्रृंगान्. $T_2$ $G_{2-4}$ महाबलाः. $Ś_1$ K $D_{1-3.5}$ सर्वे संकल्परंहसः. — $M_2$ om. (hapl.) $31^c$–$36^b$. — $^c$) $K_{1.2.4}$ $B_1$ Dc $D_{1.2.5}$ समाभ्यासे; S ($M_2$ om.) सकाशे ($T_2$ $G_{3.4}$ °शं) वै; a few MSS. समभ्यासे.

**32** $M_2$ om. 32 (cf. v.l. 31). — $^a$) $K_{1.2}$ $B_4$ $D_{2.3}$ T $G_{2-4}$ $M_1$ ततः सं($T_1$ $M_1$ °तस्ते)हृष्टमनसः. — $^d$) $Ś_1$ $K_{1.2}$ निर्विशेषं; $K_3$ $D_{1.2}$ निर्विशंका. $B_{2-4}$ Dc Dn $D_{4.6}$ निर्विकारमवस्थिताः.

**33** $M_2$ om. 33 (cf. v.l. 31). — $^a$) $Ś_1$ पांडवास्तं; $K_4$ $D_5$ °वास्ते; $M_1$ °वापि. $Ś_1$ $K_1$ $D_{1.5}$ महात्मानं. — $Ś_1$ $K_2$ om. (hapl.) $33^b$–$34^a$. — $^d$) $D_5$ $T_2$ $G_{2-4}$ धर्मराजश्च.

विहितं चित्रपर्यन्तमातिष्ठत धनाधिपः ॥ ३५
तमासीनं महाकायाः शङ्कुकर्णा महाजवाः ।
उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः ॥ ३६
शतशश्चापि गन्धर्वास्तथैवाप्सरसां गणाः ।
परिवार्योपतिष्ठन्त यथा देवाः शतक्रतुम् ॥ ३७
काञ्चनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभाम् ।
बाणखड्गधनुष्पाणिरुदैक्षत धनाधिपम् ॥ ३८
न भीर्भीमस्य न ग्लानिर्विक्षतस्यापि राक्षसैः ।
आसीत्तस्यामवस्थायां कुबेरमपि पश्यतः ॥ ३९
आददानं शितान्बाणान्योद्धुकाममवस्थितम् ।
दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः ॥ ४०
विदुस्त्वां सर्वभूतानि पार्थ भूतहिते रतम् ।
निर्भयश्चापि शैलाग्रे वस त्वं सह बन्धुभिः ॥ ४१
न च मन्युस्त्वया कार्यो भीमसेनस्य पाण्डव ।
कालेनैते हताः पूर्वं निमित्तमनुजस्तव ॥ ४२
व्रीडा चात्र न कर्तव्या साहसं यदिदं कृतम् ।
दृष्टश्चापि सुरैः पूर्वं विनाशो यक्षरक्षसाम् ॥ ४३
न भीमसेने कोपो मे प्रीतोऽस्मि भरतर्षभ ।
कर्मणानेन भीमस्य मम तुष्टिरभूत्पुरा ॥ ४४
एवमुक्त्वा तु राजानं भीमसेनमभाषत ।
नैतन्मनसि मे तात वर्तते कुरुसत्तम ।
यदिदं साहसं भीम कृष्णार्थे कृतवानसि ॥ ४५
मामनादृत्य देवांश्च विनाशं यक्षरक्षसाम् ।
स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि ।
शापादस्मि विनिर्मुक्तो घोरादद्य वृकोदर ॥ ४६
अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा ।
शप्तोऽपराधे कस्मिंश्चित्तस्यैषा निष्कृतिः कृता ॥ ४७
दृष्टो हि मम संक्लेशः पुरा पाण्डवनन्दन । C. 3. 11789 B. 3. 161. 51 K. 3. 162. 54

---

**35** $M_2$ om. 35 (cf. v.l. 31). — [a]) B Dc Dn $D_{3.4.6}$ स ह्या($B_1$ °ज्या)सनवरं; $D_{1.2.5}$ शय्यासनधरं; T $G_{2-4}$ °युतं; $M_1$ °गतं. Ś$_1$ $K_{1.3}$ $B_1$ $Dc_2$ $D_6$ $G_4$ श्रीमान्. — [b]) $B_{1-3}$ $D_{4.6}$ पुष्पके.

**36** $M_2$ om. 36[ab] (cf. v.l. 31). — [b]) Ś$_1$ $K_{1.2}$ $M_1$ °बलाः (for °जवाः).

**37** [a]) Ś$_1$ K $D_{2.3.5}$ चैव (for चापि). — [c]) $K_3$ $D_{1-3.5}$ स्म तिष्ठंति; $D_4$ $B_{2.3}$ $T_2$ $G_{2-4}$ [उ]पतिष्ठंति. — [d]) K $B_2$ M देवं.

**38** [b]) $T_2$ G शिवां (for शुभाम्). — [c]) $B_{1.4}$ Dn $D_{4.6}$ पाश°; $B_{2.3}$ प्रास° (for बाण°). — [d]) Ś$_1$ $K_{1.2}$ नावैक्षत.

**39** [a]) $B_{1-3}$ Dn $D_{4.6}$ भीमसेनस्य न ग्लानिर्. — [b]) Ś$_1$ $K_{1.2}$ विक्षिप्तस्यापि; $K_4$ $D_{1.3}$ $G_1$ विक्षि°; $D_5$ ईक्षि°; $G_4$ M वीक्षि°.

**40** [b]) $T_1$ $G_{2.4}$ M इव (for अव-).

**41** Before 41, $B_4$ Dc read कुबेर उ°; also in the sequel frequently. — [a]) Ś$_1$ $K_3$ $M_2$ त्वा (for त्वां). — [c]) Ś$_1$ K $D_{2.3.5}$ चैव (for चापि). — [d]) $B_{1-3}$ D (except $D_{1-3.5}$) भ्रातृभिः सह; $B_4$ सह रक्षभिः.

**42** [a]) Ś$_1$ $K_{1.2}$ तु (for च). — [b]) S °सेनाय. — [c]) $K_4$ $D_3$ $G_2$ [ए]व (for [ए]ते). Ś$_1$ K $D_{1-3.5}$ सर्वे (for पूर्वं).

**43** [a]) Dc च ते; $T_2$ G चापि (for चात्र). — [b]) Ś$_1$ $K_{1.2}$ $D_5$ transp. साहसं and यदिदं. — [c]) $Dc_2$ $T_1$ दिष्टश्; $G_{1.4}$ दिष्टं.

**44** [b]) $D_5$ प्रीतोहं. K $D_3$ पुरुषर्षभ (for भरत°). $D_1$ प्रीतश्चास्मि नरर्षभ. — [c]) $B_{2-4}$ Dn $D_{4.6}$ $T_2$ $G_3$ कर्मणा भीमसेनस्य. — [d]) $B_{1.3.4}$ Dc $Dn_3$ $D_{1.2.4.6}$ $M_1$ परा (for पुरा). — After 44, $K_4$ reads an addl. colophon.

**45** Before 45, all MSS. except $K_3$ $G_1$ read वैशं° उ° (S MSS. om. उ°). — [a]) $B_4$ $D_3$ S (except $T_1$ $G_1$) स एवमुक्त्वा राजानं. — [e]) Ś$_1$ $K_{1.2}$ तात (for भीम); cf. 45[c]. — [f]) K $D_{1-3.5}$ कृष्णार्थं.

**46** [a]) $D_5$ देवानां (for देवांश्च). — [b]) $D_5$ त्रिनाशं कृतवानसि; $T_2$ G विनाशयसि राक्षसान्. — [c]) Ś$_1$ $K_{1.2}$ °बलवीर्येण. — [d]) Ś$_1$ K $D_{1-3.5}$ तव (for त्वयि). — [e]) B Dc Dn $D_{4.6}$ अद्य; $D_5$ अपि; S चाहं ($T_1$ अस्माद्) (for अस्मि). S विमुक्तोद्य (for विनिर्मुक्तो). — [f]) $B_{1-3}$ Dc Dn $D_{4-6}$ $T_2$ $G_3$ अस्मि; $D_{1.2}$ $G_{1.2.4}$ M अस्माद्; $T_1$ चाहं (for अद्य).

**47** [d]) Many MSS. निःकृतिः. $B_2$ $M_2$ परा; $D_5$ किल; $T_2$ $G_{2.3}$ ध्रुवं; $G_1$ पुरा; $G_4$ ध्रुवा (for कृता).

**48** [a]) Dc दिष्टो (for दृष्टो). $D_5$ S दृष्टोयं मे ($T_1$ $G_4$ °ष्टो धर्मे) परिक्लेशः. — [c]) $B_1$ तव नात्रा°; $D_5$ न ते वात्रा°; $T_1$ तत्तवात्रा°; $T_2$ $G_{1-3}$ तवात्र ना°. — [d]) $T_1$ $G_1$ न किंचिदपि (for कथं°). B D (except $D_{1-3.5}$) पांडव ($B_4$

C. 3. 11790 B. 3. 161. 51 K. 3. 162 54 न तवात्रापराधोऽस्ति कथंचिदपि शत्रुहन् ॥ ४८

युधिष्ठिर उवाच ।

कथं शप्तोऽसि भगवन्नगस्त्येन महात्मना ।
श्रोतुमिच्छाम्यहं देव तवैतच्छापकारणम् ॥ ४९
इदं चाश्चर्यभूतं मे यत्क्रोधात्तस्य धीमतः ।
तदैव त्वं न निर्दग्धः सबलः सपदानुगः ॥ ५०

वैश्रवण उवाच ।

देवतानामभून्मन्त्रः कुशवत्यां नरेश्वर ।
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः ।
यक्षाणां घोररूपाणां विविधायुधधारिणाम् ॥ ५१
अध्वन्यहमथापश्यमगस्त्यमृषिसत्तमम् ।
उग्रं तपस्तपस्यन्तं यमुनातीरमाश्रितम् ।
नानापक्षिगणाकीर्णं पुष्पितद्रुमशोभितम् ॥ ५२
तमूर्ध्वबाहुं दृष्ट्वा तु सूर्यस्याभिमुखं स्थितम् ।
तेजोराशिं दीप्यमानं हुताशनमिवैधितम् ॥ ५३
राक्षसाधिपतिः श्रीमान्मणिमान्नाम मे सखा ।
मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च भारत ।
न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि ॥ ५४
स कोपान्मामुवाचेदं दिशः सर्वा दहन्निव ।
मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव ॥ ५५
धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर ।
तस्मात्सहैभिः सैन्यैस्ते वधं प्राप्स्यति मानुषात् ॥ ५६
त्वं चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्स्यसि दुर्मते ।
तमेव मानुषं दृष्ट्वा किल्बिषाद्विप्रमोक्ष्यसे ॥ ५७

---

भारत) (for शत्रु°). — After 48, $B_4$ Dc ins. a colophon.

**49** $D_5$ transp. 49 and 50. — $^{ab}$) $Ś_1$ K $D_{1-3}$ transp. कथं and शप्तः; and read त्वं (for [अ]सि). $Ś_1$ महर्षिणा (for महा°). $D_5$ किमर्थं वाशपत्क्रुद्धस्त्वामगस्त्यस्तपोधनः. — $^c$) $K_4$ $D_{1.2}$ [अ]हं सर्वं; $D_5$ [अ]शेषेण; $T_2$ $G_{2-4}$ [अ]हं राजन् (for [अ]हं देव). — $^d$) $K_{1.2}$ $D_6$ तथै°; S (except $T_1$ $M_1$) यथै° (for तवै°). $K_4$ $D_{1.2}$ तत् (for [ए]तत्). $D_5$ तव शापस्य कारणं.

**50** $D_5$ transp. 49 and 50. — $^a$) $Ś_1$ K $D_{2.3}$ तु (for च). $D_5$ आश्चर्यमेतद्भगवन्. — $^c$) $D_5$ $M_2$ तस्मिन्क्षणे; $T_1$ $G_2$ तथैव त्वं. — $^d$) $D_{3.5}$ सभृत्यः; $T_2$ G सहयः ($G_1$ °सा) (for सबलः). $Ś_1$ च सवाहनः; $D_5$ बलवाहनः (for सपदा°).

**51** $K_3$ $B_{1.4}$ Dc Dn $D_{4.6}$ धनेश्वर उ°; $K_4$ $D_5$ धनद उ°; $B_{2.3}$ $G_1$ कुबेर उ° ($G_1$ om. उ°). — $^a$) $Ś_1$ K $D_{1-3}$ $G_4$ सत्रं; $G_{1.2}$ $M_2$ मंत्रं. — $^b$) $Ś_1$ $K_{2.4m}$ $D_{1.3}$ मेरुपृष्ठे; $B_4$ S कुशावत्यां. $Ś_1$ $K_{1.2}$ जनाधिप; $D_5$ नराधिप (for नरे°). — $^c$) $T_1$ $G_1$ $M_1$ तत्राहूतो°; $M_2$ वृतस्ताता° (for वृतस्तत्रा°). — $^d$) S वृतः (for त्रिभिः). — $^e$) $B_4$ कामरूपाणां; $M_1$ राक्षसानां च. — $^f$) $Ś_1$ $K_{1.2}$ °पाणिनां.

**52** After $52^{ab}$, $T_2$ $G_{3.4}$ read $53^{cd}$. — $^c$) B D (except $D_{1-3.5}$) तप्यमानं (for तपस्यन्तं). — $^d$) S नानाद्रुमविभूषितं. — $^e$) S यमुनातीरमाश्रित्य ($T_1$ °साद्य). — $^f$) $D_5$ S पुण्यं ब्रह्म($T_1$ देव)र्षिसंकुलं.

**53** $^a$) S अथो° (for तमू°). B Dc $Dn_{1.n2}$ $D_{4.6}$ [ए]व; $Dn_3$ च; S तं (for तु). — $^b$) B D (except $D_{1-3}$) [अ]भिमुखे. S अगस्त्यमृषिसत्तमं. — $T_2$ $G_{3.4}$ read $53^{cd}$ after $52^{ab}$. — $^d$) Dc $G_1$ इवेधितं; $D_5$ इवानलं.

**54** $^a$) $Ś_1$ $K_{1.2}$ $D_{3.5}$ तत्राधिपो राक्षसानां. — $^d$) $Ś_1$ K $D_{1-3}$ (by transp.) मोहाद्दर्पाच्च; T $G_{2-4}$ दर्पमोहा°. $B_{1-3}$ D (except $D_{1-3.5}$) पार्थिव (for भारत). — $^e$) $Ś_1$ K $B_{2.3}$ Dc $Dn_1$ $D_{1-3.5}$ अष्ठीवद् (for न्यष्ठी°). M ष्ठीवताकाशगस्तस्य. — $^f$) $B_4$ M परमर्षेः स मूर्धनि.

**55** $^{ab}$) $K_4$ $D_3$ transp. स and कोपात्. $D_5$ प्रदहन्निव तेजसा. S ततः क्रुद्धः स भगवानुवाचेदं तपोधनः. — $^d$) $Ś_1$ $K_{1.2}$ देव (for एष).

**56** $^a$) S (except $T_2$ $G_3$) धर्षणं. $K_4$ एनां; $D_{1.2}$ एवं; $T_1$ M एष; $T_2$ (before corr.) $G_{1.2.4}$ एतत् (for एतां). — $^c$) $Ś_1$ $K_1$ सैन्यं. $G_{1.4}$ $M_2$ तैर् (for ते). — $^d$) $T_1$ $M_1$ मानवात्.

**57** $K_4$ om. $57^{ab}$. — $^b$) B D (except $D_{1.2.5}$) $G_1$ $M_2$ प्राप्येह; $T_2$ $G_{2-4}$ प्राप्नुहि (for प्राप्स्यसि). B D (except $D_{1-3.5}$) दुर्मतिः.

**58** $^b$) $K_{1.2.4}$ $B_{2-4}$ $D_6$ $T_1$ $G_1$ $M_1$ पुत्रपौत्रं बलान्वितं ($T_1$ $M_1$ °नुगं). — $^c$) $Ś_1$ ते शापं; $K_2$ तं शापं; $G_2$ त्रिशापं; $M_2$ नानाशं (for न शापं). B $Dc_1$ $Dn_3$ $D_4$ प्राप्यते. — $^d$) N तत्तत्त्वा($D_5$ °तोव)ज्ञां (for गच्छतेऽऽज्ञां).

**59** $^b$) $T_2$ $G_3$ तत्तस्माद्; $G_1$ अगस्त्याद्; $G_2$ पुरास्माद् (for प्राक्तस्माद्). $Ś_1$ मुनि° (for ऋषि°). — $^c$) $Ś_1$ K $D_{1-3.5}$ महाबाहो.

सैन्यानां तु तवैतेषां पुत्रपौत्रबलान्वितम् । न शापं प्राप्स्यते घोरं गच्छ तेऽऽज्ञां करिष्यति ॥ ५८
एष शापो मया प्राप्तः प्राक्तस्मादपिसत्तमात् । स भीमेन महाराज भ्रात्रा तव विमोक्षितः ॥ ५९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

# १५९

वैश्रवण उवाच ।
युधिष्ठिर धृतिर्दाक्ष्यं देशकालौ पराक्रमः ।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः ॥ १
धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ।
पराक्रमविधानज्ञा नराः कृतयुगेऽभवन् ॥ २
धृतिमान्देशकालज्ञः सर्वधर्मविधानवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ पृथिवीमनुशास्ति वै ॥ ३
य एवं वर्तते पार्थ पुरुषः सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥ ४
देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम् ।
संप्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह ॥ ५
पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते ।
कर्मणामविभागज्ञः प्रेत्य चेह च नश्यति ॥ ६
अकालज्ञः सुदुर्मेधाः कार्याणामविशेषवित् ।
वृथाचारसमारम्भः प्रेत्य चेह च नश्यति ॥ ७
साहसे वर्तमानानां निकृतीनां दुरात्मनाम् ।
सर्वसामर्थ्यलिप्सूनां पापो भवति निश्चयः ॥ ८
अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः । C. 3. 11811 B. 3. 162. 9 K. 3. 163. 9

---

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T1 G2. 4 आरण्य (T1 आरण्यकांड !). — *Sub-parvan:* K3 D1-3 (all om. sub-parvan name) mention only लोमशतीर्थयात्रा; B1. 2. 4 Dn D4-6 T2 G3. 4, likewise, only गंधमादनप्रवेश (B2 °नवास; D5 °दर्शन); and finally B3, only गंधमादन. — *Adhy. name :* K D3 धनेश्वरसमागमः; Dc कुबेरसंवादः; D1. 2 G2 कुबेरसमागमः; G1 कुबेरपांडवसंवादः. — *Adhy. no.* (figures, words or both): Dn 160 (Dn3 161); D1 166; S (M2 *sup. lin.*) 162 (M2 orig. 164). — *Śloka no :* Dn1. n2 D1 63; Dn3 64.

## 159

**1** B1-3 Dn D1. 2. 4-6 धनद उ°; B4 Dc कुबेर उ°. — $^{b}$) K2 °कालं पराक्रमं; B D (except D1-3. 5) °कालपराक्रमाः. — $^{c}$) Ś1 K D1-3. 5 लोकतंत्रविधानं च (K4 D3. 5 वा); B4 S °विभागानाम्. — $^{d}$) Ś1 K D2. 3. 5 [अ]प्येष (for एष). K3. 4 D1-3. 5 नयः (for विधिः).

**2** $^{c}$) S (except G1) °विभागज्ञा. — D5 om. (hapl.) $2^{d}$–$3^{a}$.

**3** D5 om. $3^{a}$ (cf. v.l. 2). — $^{b}$) Ś1 K Dc D1-3. 5 G1 M1 सर्वध(Ś1 °क)र्मविभागवित्. — $^{d}$) Ś1 K1. 2. 4 D1-3 हि; K3 D5 ह (for वै). B1-3 Dc Dn D4. 6 प्रशास्ति पृथिवीं चिरं; B4 पृथिवीमनुशासति.

**5** $^{ab}$) Ś1 K D1-3. 5 देशकालोत्तरं (K2 °त्तरः; D5 °चितं) शक्रः, and तात (for शक्रः). — $^{d}$) Dc बंधु°; T1 M बहु° (for वसु°). Ś1 K D1-3. 5 मरुद्भिः सह वृत्रहा. — After 5, N (except B1 D4. 6) ins.:

821* यस्तु केवलसंरम्भात्प्रपातं न निरीक्षते ।

**6** K3 D5 om. $6^{ab}$. — $^{a}$) Ś1 K (K3 om.) B4 D1-3 च (for यः). — $^{d}$) $=7^{d}$. Ś1 K1-3 D1-3. 5 स प्रेत्ये° (for प्रेत्य चे°). K4 B2 Dn D4-6 वि- (for the second च).

**7** Ś1 D5 T2 G3 om. (hapl.) 7. — $^{a}$) K1-3 D1-3 हि; M2 स (for सु-). — $^{b}$) B2 अविधानवित्; G4 अविभागवित्. — $^{c}$) K4 दुर्वृत्ताचारसंरंभी (m वृथाचारसमारंभात्). — $^{d}$) $=6^{d}$. K3. 4m D1. 2 स प्रेत्येह; K4 सोचिरेण (for प्रेत्य चेह). K4 (m as in text) B1. 2 Dn D3. 4. 6 G1 वि- (for च).

**8** $^{b}$) K4 D1. 2. 5 निकृतानां (K4m प्राकृतानां); D3 प्रवृत्तीनां. — $^{c}$) Ś1 K1. 2 सर्वसामर्थ्यलुब्धा(K1 °लिप्सा)नां; K4 (m as in text) सर्वेषामर्थलिप्सानां; T G सर्वेषामर्थलिप्सूनां; M2 स त्वसान्सत्त्वलिप्सूनां. — $^{d}$) K4m Dc पातो; D1. 2 T1 पापे (for पापो). K4 निश्रितः; T2 G2-4 नित्यशः.

C. 3 11812 B. 3.162.10 K. 3.163.9 निर्भयो भीमसेनोऽयं तं शाधि पुरुषर्षभ ॥ ९
आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमाश्रमम् ।
तामिस्रं प्रथमं पक्षं वीतशोकभयो वस ॥ १०
अलकाः सह गन्धर्वैर्यक्षैश्च सह राक्षसैः ।
मन्नियुक्ता मनुष्येन्द्र सर्वे च गिरिवासिनः ।
रक्षन्तु त्वा महाबाहो सहितं द्विजसत्तमैः ॥ ११
साहसेषु च संतिष्ठन्निह शैले वृकोदरः ।
वार्यतां साध्वयं राजंस्त्वया धर्मभृतां वर ॥ १२
इतः परं च राजेन्द्र द्रक्ष्यन्ति वनगोचराः ।
उपस्थास्यन्ति च सदा रक्षिष्यन्ति च सर्वशः ॥ १३
तथैव चान्नपानानि स्वादूनि च बहूनि च ।
उपस्थास्यन्ति वो गृह्य मत्प्रेष्याः पुरुषर्षभ ॥ १४
यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः ।
धर्मस्य त्वं यथा तात योगोत्पन्नो निजः सुतः ॥ १५
आत्मजावात्मसंपन्नौ यमौ चोभौ यथाश्विनोः ।
रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर ॥ १६
अर्थतत्त्वविभागज्ञः सर्वधर्मविशेषवित् ।
भीमसेनादवरजः फल्गुनः कुशली दिवि ॥ १७
याः काश्चन मता लोकेष्वग्र्याः परमसंपदः ।
जन्मप्रभृति ताः सर्वाः स्थितास्तात धनंजये ॥ १८
दमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
एतान्यपि महासत्त्वे स्थितान्यमिततेजसि ॥ १९

---

**9** $^{b}$) $D_{1.2.5}$ $T_1$ पाप° (for बाल°). — $^{d}$) $Ś_1$ पुरुषोत्तमं; $K_1$ $B_2$ $D_{1.2}$ पुरुषर्षभं. $K_4$ त्वं शाधितुमिहार्हसि. — After 9, $K_4$ ins.:

822* तच्छ्रुत्वा धनदो वाक्यं पाण्डवानां समागमम् ।
उत्थाय स ह तैः सार्धं चलितस्तत्क्षणाद्द्रुतम् ।
कुबेरः प्राप्य राजानं युधिष्ठिरमभाषत ।

**10** $^{a}$) B (as usual) आर्ष्णिसेनस्य. — $^{b}$) $Ś_1$ $K_{1.2}$ $D_3$ transp. प्राप्य and भूयः. $Ś_1$ $K_{1.2}$ तथा° (for त्वमा°). — $^{c}$) $K_{2-4}$ $B_{1.3.4}$ $Dc_2$ $D_{3.5.6}$ तामिश्रं; $G_{2.4}$ त्वरितं. $T_2$ $G_{2-4}$ प्राप्य (for पक्षं). $T_1$ $G_1$ M तमिस्त्रां प्रथमां प्राप्य ($T_1$ तत्र).

**11** $^{a}$) $Ś_1$ $K_3$ $B_2$ $D_{1.3}$ $M_1$ अलका; $K_{1.4}$ $G_{1.4}$ $M_2$ अलकां; $Dn_2$ $D_6$ आलकाः; $D_3$ अलंकां; $T_1$ अकालः; $G_2$ आलकैः. — $^{b}$) N (except $Ś_1$) $M_2$ यक्षाश्च. $B_{1-3}$ D (except $D_{1-3.5}$) किंनरैः (for राक्षसैः). — $^{d}$) $T_1$ $M_1$ सर्वैश्च गिरिवासिभिः. — $^{e}$) $Ś_1$ $K_{3.4}$ $D_{3.5}$ रक्षंति; $K_{1.2}$ रक्षंते; $D_2$ रक्षितुं. B Dc Dn $D_{4.6}$ रक्षिष्यंति (for रक्षन्तु त्वा). $K_{1.2.4}$ $D_{1.3.5}$ T G त्वां (for त्वा).

**12** $^{a}$) $G_1$ न (for च). $Ś_1$ $K_{1.2}$ साहसे चापि संतिष्ठन्; $K_4$ (marg. *sec. m.* as in text) साहसं स्वयमातिष्ठन्; B D (except $D_{1-3.5}$) साहसादनुसंप्राप्तः (Dc °प्ता); $T_2$ $G_{3.4}$ साहसेषु न कर्तव्यं. — $^{b}$) B Dn $D_{4.6}$ प्रतिबुध्य; $Dc_1$ प्रतिहर्षं; $Dc_2$ प्रतिबुद्धान्; $T_2$ $G_{2-4}$ त्वया शैले (for इह शैले). — $^{d}$) S स्वयं ($G_1$ भीमो) (for त्वया).

**13** $^{a}$) B D (except $D_{1-3.5}$) अतः (for इतः). $Ś_1$ $K_{1-3}$ $D_{1-3}$ वः सर्वान्; $K_4$ $D_5$ वः सर्वे; B Dn $D_{4.6}$ वो राजन् (for राजेन्द्र). — $^{b}$) $K_{1.2}$ प्रेक्ष्यंति; $K_3$ Dc रक्ष्यंति. — $^{c}$) $B_{1-3}$ Dc वः सर्वान्; $B_4$ Dn $D_{4.6}$ वो राजन्; $D_3$ M च तदा (for च सदा). — $^{d}$) Dn $D_{4.6}$ रक्षिष्यंते; $G_{1.2}$ संरक्ष्यंति. $B_{1.2.3m}$ D (except $D_{1-3.5}$) वः सदा (for सर्वशः). $K_4$ (marg. *sec. m.* as in text) रक्षांसि तव सर्वशः.

**14** $^{b}$) $K_3$ $D_{1.2.5}$ विविधानि; Dc च फलानि (for च बहूनि). — $^{c}$) $K_{1.2}$ वै गृह्य; $K_4$ च सदा; $K_4$ (marg. *sec. m.*) $D_{1-3.5}$ [उ]पादाय (for वो गृह्य). B Dc Dn $D_{4.6}$ आहरिष्यंति मत्प्रेष्याः. — $^{d}$) $D_3$ -भृत्याः (for -प्रेष्याः). $K_4$ भरतर्षभ. B Dc Dn $D_{4.6}$ सदा वः ($B_2$ Dc सदाराः) पुरुषर्षभाः.

**16** $^{b}$) $G_2$ धर्मौ (for यमौ). $K_{1.2}$ Dc $T_2$ G तथा (for यथा). $K_{1.2}$ $D_{1-3}$ [अ]श्विनौ. — $^{c}$) Dc ते तन्; $T_1$ तावन्; $T_2$ $G_{2-4}$ तथा (for तद्वन्). $K_4$ $B_2$ Dc $D_{1.6}$ T $G_{2.3}$ $M_1$ मया° (for ममा°). $K_{1.2}$ रक्ष्यास्तद्धर्ममप्येह. — $^{d}$) $B_1$ स्वयं (for यूयं).

**17** $^{a}$) B D (except $D_{1-3.5}$) °विधानज्ञः. — $^{b}$) $Ś_1$ $K_{1.2.4}$ $D_1$ °विभागवित्; $K_3$ B Dc Dn $D_{2-6}$ °विधानवित्. — $^{c}$) $K_4$ भीमादवरजः श्रीमान्; $G_1$ °सेनोदयं राजन्. — $^{d}$) N (except $Ś_1$ $K_{1.2}$) फाल्गुनः.

**18** $^{ab}$) $K_4$ B Dc Dn $D_{3.4.6}$ मता लोके; S महाबुद्धेर् ($T_1$ °द्ध्या) (for मता लोकेषु). $D_1$ काश्चित्सर्वमता लोके; $D_{2.5}$ याः काश्चित्संमता लोके. $K_4$ बुद्धेः; B D (except $D_5$) स्वर्ग्याः; $T_1$ वश्याः (for [अ]ग्र्याः).

**19** $^{a}$) $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ transp. दमो and दानं. — $^{b}$) $K_3$ $D_{1-3.5}$ $T_1$ धृतिस्तेजः पराक्रमः ($T_1$ °ज अनुत्तमं). — $^{c}$) $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ हि (for [अ]पि). $T_2$ (before corr.) $G_4$ महाबुद्धे. — $^{d}$) $T_1$ $M_1$ स्थितानि हि यथा त्वयि.

**20** $^{d}$) $Ś_1$ K ($K_4$ marg. *sec. m.*) $D_{1-3.5}$ नरा नृप; Dc

न मोहात्कुरुते जिष्णुः कर्म पाण्डव गर्हितम् ।
न पार्थस्य मृषोक्तानि कथयन्ति नरा नृषु ॥ २०
स देवपितृगन्धर्वैः कुरूणां कीर्तिवर्धनः ।
मानितः कुरुतेऽस्त्राणि शक्रसद्मनि भारत ॥ २१
योऽसौ सर्वान्महीपालान्धर्मेण वशमानयत् ।
स शंतनुर्महातेजाः पितुस्तव पितामहः ।
प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना ॥ २२
सम्यक्चासौ महावीर्यः कुलधुर्य इव स्थितः ।
पितॄन्देवांस्तथा विप्रान्पूजयित्वा महायशाः ।
सप्त मुख्यान्महामेधानाहरद्यमुनां प्रति ॥ २३
अधिराजः स राजंस्त्वां शंतनुः प्रपितामहः ।
स्वर्गजिच्छक्रलोकस्थः कुशलं परिपृच्छति ॥ २४

वैशंपायन उवाच ।

ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभ ।
प्राध्वं कृत्वा नमश्चक्रे कुबेराय वृकोदरः ॥ २५
ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतम् ।
मानहा भव शत्रूणां सुहृदां नन्दिवर्धनः ॥ २६
स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः ।
कामाननुपहरिष्यन्ति यक्षा वो भरतर्षभाः ॥ २७
शीघ्रमेव गुडाकेशः कृतास्त्रः पुरुषर्षभः ।
साक्षान्मघवता सृष्टः संप्राप्स्यति धनंजयः ॥ २८
एवमुत्तमकर्माणमनुशिष्य युधिष्ठिरम् । C. 3. 11834 B. 3. 162. 32 K. 3. 163. 34

---

नरोत्तम.

**21** $^{c}$) T$_2$ (before corr.) G$_4$ आनीतं; G$_{1.2}$ आनीतः (for मानितः). — $^{d}$) Ś$_1$ K$_{1-3}$ D$_{1-3.5}$ पांडवः; T$_1$ M$_1$ मानद (for भारत).

**22** $^{c}$) B D (except D$_{1-3.5}$) शांतनुर्. — $^{f}$) D$_{1.2}$ T G$_3$ °धन्विना.

**23** $^{a}$) T$_2$ G सम्यक्चापे (G$_1$ संत्यक्त्वासौ). Ś$_1$ K (K$_4$ marg. *sec. m.*) D$_{1-3.5}$ समागम्य महाकीर्तिः. — $^{b}$) K$_4$ यथा मेरुर् (for कुल°). T$_1$ M$_2$ [उ]त्थितः (for स्थितः). Ś$_1$ K (K$_4$ marg. *sec. m.*) Dc D$_{3.5}$ कुलधर्मेण पार्थिवः; B Dn D$_{1.2.4.6}$ कुलधु(Dn$_{2}$. n$_3$ °धै)र्येण पार्थिवः. — $^{c}$) B D (except D$_{1-3.5}$) ऋषीन्विप्रान्; T$_1$ पूजयित्वा (for तथा विप्रान्). — $^{d}$) T$_1$ यातः स्वर्गं (for पूजयित्वा). B D (except D$_{1-3.5}$) महातपाः. — $^{f}$) B$_4$ T$_1$ M$_1$ अनु (for प्रति).

**24** $^{a}$) K$_4$ D$_{1-3}$ अति राज्ञां (D$_{1.2}$ °ज्ञः) स; T$_1$ अथ आह च; T$_2$ G$_3$ अतिराजसु; G$_{1.4}$ अधिराजसु; G$_2$ M$_2$ अतिराजा स. K$_1$ M$_2$ राजंस्त्वा; T$_1$ M$_1$ राजेंद्रः. — $^{b}$) Some N MSS. शांतनुः. T$_1$ M$_1$ त्वां (for प्र-). — $^{c}$) T$_2$ G स्वर्गं° (for शक्र°).

**25** After the ref., B$_1$(marg.).$_4$ D (except D$_{1-3.5}$) ins.:

823* एतच्छ्रुत्वा तु वचनं धनदेन प्रभाषितम् ।
पाण्डवाश्च ततस्तेन बभूवुः संप्रहर्षिताः ।

— $^{b}$) Some MSS. भरतर्षभः. — D$_2$ om. 25$^{c}$–26$^{b}$. — $^{c}$) Ś$_1$ K$_{1.2.4}$ (m as in text) D$_5$ T (T$_2$ by corr.) G$_3$ प्रह्वं; G$_1$ प्रध्मं; G$_2$ पादौ; G$_4$ पादे; M$_1$ प्रांचं; Cnp प्राज्यं (= ज्यारहितं Nil.) (for प्राध्वं). — $^{d}$) T$_1$ पूजयित्वा (for कुबे°). K$_4$ (marg. *sec. m.* as in text) महात्मने (for वृको°).

**26** D$_2$ om. 26$^{ab}$ (cf. v.l. 25). — $^{a}$) Ś$_1$ K (K$_4$ marg. *sec. m.*) D$_{3.5}$ तमब्र° (for ततोऽब्र°). K$_4$ (marg. *sec. m.* as in text) राजराजा (for धना°). — $^{b}$) K$_4$ (marg. *sec. m.* as in text) T$_1$ M$_1$ शरणैषिणां; M$_2$ शरणं गतः. — $^{d}$) Ś$_1$ K$_{1-3}$ Dn$_2$ D$_{3.5}$ T$_1$ G$_2$ सुहृदानंद°; B$_4$ सुहृदां मान°. — After 26, T G ins.:

824* विभवस्तात शैलाग्रे वसानः सह बन्धुभिः ।
सुपर्णपितृदेवानां सततं मानकृद्भव ।
ऋजुं पश्यत मा वक्रं सत्यं वदत मानृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत मापरम् ।

[(L. 1) T$_1$ G$_1$ विभयः; G$_2$ विहरन् (for विभवः).]

**27** $^{a}$) S सर्वेषु (for रम्येषु). — $^{b}$) Ś$_1$ K$_{1-3}$ B$_4$ D$_{1-3.5}$ °कर्षणाः (for °तापनाः). — $^{c}$) B$_{1.3}$ Dn D$_{4.6}$ कामान्न परिहास्यंति; D$_5$ कामान्न प्रहरिष्यंति; S कामानभिहरिष्यंति. — $^{d}$) K$_4$ मम शासनात् (भर°).

**28** $^{a}$) Ś$_1$ K$_{1-3}$ D$_{1-3.5}$ चापि (for एव). — $^{b}$) B D (except D$_{1-3.5}$) पुनरेष्यति (for पुरु°). — $^{c}$) K$_4$ स्वयं (for साक्षान्). Ś$_1$ D$_2$ पृष्टः; K$_2$ दृष्टः; T$_1$ M$_1$ [उ]त्सृष्टः; M$_2$ सृष्टं.

**29** $^{a}$) Ś$_1$ K D$_{1-3.5}$ एवमुत्तमधर्माणम् (K$_4$ उक्त्वैवं शुभकर्माणम्); T$_1$ एवमुत्तमकुर्वाणम्. — $^{b}$) K$_4$ S अनुशास्य. — $^{c}$) D$_{1.2}$ श्वेतं; D$_5$ वस्तुं (for अस्तं). B$_2$ (m as in text) अस्तंगिरिगते सूर्ये; S अस्तं गिरिमिवादित्यः (M$_1$ °साद्य). — $^{d}$) D$_{1.2}$ प्रयातो.

C. 3. 11834 B. 3. 162. 32 K. 3. 163 34

अस्तं गिरिवरश्रेष्ठं प्रययौ गुह्यकाधिपः ॥ २९
तं परिस्तोमसंकीर्णैर्नानारत्नविभूषितैः ।
यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः ॥ ३०
पक्षिणामिव निर्घोषः कुबेरसदनं प्रति ।
बभूव परमाश्वानामैरावतपथे यताम् ॥ ३१
ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः ।
प्रकर्षन्त इवाभ्राणि पिबन्त इव मारुतम् ॥ ३२
ततस्तानि शरीराणि गतसत्त्वानि रक्षसाम् ।
अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात् ॥ ३३
तेषां हि शापकालोऽसौ कृतोऽगस्त्येन धीमता ।
समरे निहतास्तस्मात्सर्वे मणिमता सह ॥ ३४
पाण्डवास्तु महात्मानस्तेषु वेश्मसु तां क्षपाम् ।
सुखमूषुर्गतोद्वेगाः पूजिताः सर्वराक्षसैः ॥ ३५

इति श्रीमहाभारते आरण्यकपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## १६०

वैशंपायन उवाच ।
ततः सूर्योदये धौम्यः कृत्वाह्निकमरिंदम ।
आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्तत ॥ १
तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह ।
ततः प्राञ्जलयः सर्वे ब्राह्मणांस्तानपूजयन् ॥ २
ततो युधिष्ठिरं धौम्यो गृहीत्वा दक्षिणे करे ।
प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत् ॥ ३
असौ सागरपर्यन्तां भूमिमावृत्य तिष्ठति ।

---

**30** [a]) Ś$_{1}$ K$_{1–3.4}$ (marg. *sec. m.*) D$_{3.5}$ तं (Ś$_{1}$ K$_{2}$ ते) परिस्तोमसंस्तीर्णैर्; K$_{4}$ परिवृत्तोथ संकीर्णैर्; T$_{1}$ तं परिव्यो-मसं°. — [b]) Ś$_{1}$ K D$_{1–3.5}$ नानारजत(K$_{4}$ नानाकनक-; K$_{4}$ marg. *sec. m.* महारजत)भूषितैः.

**31** [c]) K$_{4}$ (marg. *sec. m.* as in text) °माश्चर्यम् (for °माश्वानाम्). — [d]) Ś$_{1}$ K D$_{3.5}$ ऐरावणपथे. K$_{2}$ B D (except D$_{1–3.5}$) T G$_{3.4}$ यथा (for यताम्).

**33** [c]) Ś$_{1}$ K$_{1.2}$ D$_{3}$ व्यपा°; K$_{3}$ अप°.

**34** Before 34, T$_{2}$ G$_{2–4}$ ins. वैशं°. — [a]) Ś$_{1}$ K D$_{3.5}$ स (for हि). K$_{3.4}$ D$_{3.5}$ नाश° (for शाप°). Ś$_{1}$ K$_{1.2}$ [अ]पि; K$_{3.4}$ D$_{5}$ हि; B Dc Dn D$_{4.6}$ स (B$_{1}$ तु); D$_{3}$ [अ]यं (for [अ]सौ). D$_{1.2}$ तेषामयं शापकालः. — [d]) B D (except D$_{1–3.5}$) शापस्यांतोभवत्तदा.

**35** [a]) K$_{4}$ पांडवापि; B D (except D$_{1–3.5}$) G$_{1}$ °वाश्च; T G$_{2–4}$ M °वाः सु-. — [b]) D$_{1.2.5}$ T$_{2}$ G$_{2–4}$ स्वेषु (for तेषु). N (except B$_{2.4}$) ताः क्षपाः. — [d]) K$_{4}$ S °ताः सह (K$_{4}$ T$_{1}$ M$_{1}$ °ता यक्ष-) राक्षसैः.

Colophon. — *Major parvan:* Ś$_{1}$ K$_{1.2}$ Dn$_{2}$ T$_{2}$ G$_{2–4}$ आरण्य. — *Sub-parvan:* K$_{3}$ D$_{1.2}$ (all om. sub-parvan name) mention only लोमशतीर्थयात्रा (followed by गंधमादनवास in K$_{3}$, and गंधमादनप्रवेश in D$_{1}$); B$_{1.4}$ Dn D$_{4–6}$ T$_{2}$ G$_{3}$, likewise, only गंधमादनप्रवेश (D$_{5}$ T$_{2}$ G$_{3}$ °निवास); and finally B$_{2.3}$ Dc, only गंधमादन-वास. — *Adhy. name:* K$_{4}$ कुबेरसमागमः; D$_{2}$ धनदागमनं; D$_{3}$ M$_{2}$ वैश्रवणसमागमः; G$_{1}$ वैश्रवणनिवर्तनं. — *Adhy. no.* (figures, words or both): Dn 161 (Dn$_{3}$ 162); D$_{1}$ 167; S 163 (M$_{2}$ *sup. lin.* 165). — *Śloka no.:* Dn 38; D$_{1}$ 37.

## 160

**1** [b]) K$_{4}$ पांचाली शुभदर्शना; K$_{4}$ (marg. *sec. m.*) D$_{1}$ T$_{1}$ M पांचाली सुहृदश्च ते (T$_{1}$ तान्); D$_{2}$ T$_{2}$ G पांचालीस-हितांश्च तान् (D$_{2}$ °तश्च ते; G$_{2}$ °तश्च तान्). — [c]) B आर्ष्णि-सेनेन. K$_{1.4}$ D$_{1.2}$ M सहिताः; D$_{5}$ °तं; T$_{1}$ °तान्.

**2** [b]) K$_{4}$ Dc D$_{1.2.5}$ T$_{1}$ G$_{1.2}$ हि (for ह). — After 2, K$_{4}$ Dc D$_{1–3}$ S (except G$_{1}$) ins.:

825* आर्ष्टिषेणः परिष्वज्य पुत्रवद्भरतर्षभान् ।
[T$_{2}$ G$_{2.3}$ M भरतर्षभ.]

**3** G$_{1}$ om. 3–4. — [ab]) K$_{4}$ D$_{1–3}$ S (G$_{1}$ om.) धर्म-राजं स्पृशन्पाणौ पाणिना स महातपाः. — [c]) Ś$_{1}$ K$_{1.2}$ अथो-दीक्ष्य (for अभिप्रेक्ष्य).

**4** G$_{1}$ om. 4 (cf. v.l. 3). — [c]) Ś$_{1}$ K$_{1.2}$ महावीर्यं

शैलराजो महाराज मन्दरोऽभिविराजते ॥ ४
इन्द्रवैश्रवणावेतां दिशं पाण्डव रक्षतः ।
पर्वतैश्च वनान्तैश्च काननैश्चोपशोभिताम् ॥ ५
एतदाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च ।
ऋषयः सर्वधर्मज्ञाः सद्म तात मनीषिणः ॥ ६
अतश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै प्रजाः ।
ऋषयश्चापि धर्मज्ञाः सिद्धाः साध्याश्च देवताः ॥ ७
यमस्तु राजा धर्मात्मा सर्वप्राणभृतां प्रभुः ।
प्रेतसत्त्वगतीमेतां दक्षिणामाश्रितो दिशम् ॥ ८
एतत्संयमनं पुण्यमतीवाद्भुतदर्शनम् ।
प्रेतराजस्य भवनमृद्ध्या परमया युतम् ॥ ९
यं प्राप्य सविता राजन्सत्येन प्रतितिष्ठति ।
अस्तं पर्वतराजानमेतमाहुर्मनीषिणः ॥ १०
एतं पर्वतराजानं समुद्रं च महोदधिम् ।
आवसन्वरुणो राजा भूतानि परिरक्षति ॥ ११
उदीचीं दीपयन्नेष दिशं तिष्ठति कीर्तिमान् ।
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः ॥ १२
यस्मिन्ब्रह्मसदश्चैव तिष्ठते च प्रजापतिः ।
भूतात्मा विसृजन्सर्वं यत्किंचिज्जङ्गमागमम् ॥ १३
यानाहुर्ब्रह्मणः पुत्रान्मानसान्दक्षसप्तमान् ।
तेषामपि महामेरुः स्थानं शिवमनामयम् ॥ १४
अत्रैव प्रतितिष्ठन्ति पुनरत्रोदयन्ति च ।
सप्त देवर्षयस्तात वसिष्ठप्रमुखाः सदा ॥ १५
देशं विरजसं पश्य मेरोः शिखरमुत्तमम् ।
यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः ॥ १६
यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम् । C. 3. 11857 B. 3. 163. 17 K. 3. 164. 16

(for °राज). — $^{d}$) Ś$_{1}$ B Dc Dn D$_{4.6}$ [ऽ]तिविराजते (B$_{2}$ °ति); K$_{3}$ हि विराजते; S (G$_{1}$ om.) [ऽ]भि(T$_{1}$ M$_{2}$ हि)विराजयन्.

**5** $^{a}$) K$_{1.2}$ D$_{2}$ इंद्रवैश्रवणावेतौ; T$_{1}$ G$_{1.2}$ M$_{1}$ °णोपेतां; T$_{2}$ G$_{3}$ इंद्रो वैश्रवणोपेतो. — $^{b}$) K$_{1}$ रक्षितः; Dc रक्षितां; D$_{1.4}$ T$_{1}$ रक्षत (D$_{1}$ °तं); T$_{2}$ G °ति. — $^{d}$) K$_{1-3}$ om. च. B$_{4}$ Dn D$_{4.6}$ [ए]व (for [उ]प-). Some MSS. °शोभितं.

**6** D$_{5}$ om. 6. — $^{a}$) Ś$_{1}$ K$_{1.2}$ T$_{1}$ M एताम्; T$_{2}$ G$_{2.3}$ एतम्; G$_{1}$ एवम् (for एतद्). — $^{c}$) Dc चापि; T$_{2}$ G$_{2-4}$ चैव (for सर्व-). — Ś$_{1}$ K$_{1.2}$ D$_{2}$ M$_{2}$ om. (hapl.) 6$^{d}$–7$^{c}$. — $^{d}$) K$_{4}$ (marg. *sec. m.* as in text) S सर्वे (for सद्म). Dn$_{2}$ D$_{1}$ (*sup. lin.* as in text) संयुक्ताश्च मनी°.

**7** Ś$_{1}$ K$_{1.2}$ D$_{2}$ M$_{2}$ om. 7$^{abc}$ (cf. v.l. 6). — $^{b}$) B$_{1}$ G$_{1}$ उपातिष्ठंत; T$_{1}$ उदतिष्ठंति. K$_{3.4}$ B$_{4}$ Dc D$_{1.3.5}$ M$_{2}$ द्विजाः (for प्रजाः). — $^{c}$) D$_{5}$ चाथ; T$_{2}$ G चैव (G$_{1}$ सर्व-) (for चापि).

**8** $^{a}$) K$_{3}$ D$_{5}$ च (for तु). K$_{4}$ G$_{4}$ राजन्. Ś$_{1}$ B$_{1-3}$ D (except D$_{1-3.5}$) धर्मज्ञः (for धर्मात्मा). — $^{b}$) Ś$_{1}$ K$_{1.2}$ B$_{4}$ D$_{5}$ G$_{1}$ वरः (for प्रभुः). — $^{c}$) Ś$_{1}$ K$_{3}$ D$_{1-3.5}$ प्रेतसत्वैर्गं(D$_{5}$ °र्यु)ताम्; K$_{1.2}$ प्रेतैः सत्वैर्गतैर् (K$_{2}$ °ताम्); K$_{4}$ अगस्तिसेवितताम्; B Dc Dn D$_{4.6}$ G$_{4}$ प्रेतसत्व(B$_{4}$ °सिद्ध)गतिम्; G$_{1}$ °गती. B Dc ह्येतां; Dn D$_{4.6}$ ह्येनां (for एतां). — $^{d}$) K$_{4}$ transp. दक्षिणां and आश्रितो; D$_{1.2}$ transp. आश्रितः and दिशं. D$_{3.5}$ आस्थितो.

**10** G$_{1}$ om. 10. — $^{a}$) Dc Dn D$_{4}$ तं; D$_{3}$ सं-; D$_{5}$ स (for यं). — $^{d}$) Ś$_{1}$ K$_{1.2}$ एतद् (for एतम्).

**11** $^{a}$) K$_{2}$ एवं; K$_{4}$ B$_{2.4}$ Dn$_{1}$. n$_{3}$ D$_{1.3.5}$ एनं; G$_{1}$ स तं (for एतं).

**12** $^{b}$) B Dc Dn D$_{4.6}$ वीर्यवान् (B$_{4}$ भानुमान्); D$_{5}$ मूर्तिमान्. — $^{c}$) Ś$_{1}$ K$_{1-3.4}$ (marg. *sec. m.*) D$_{1-3}$ गिरिवरः; T$_{1}$ महाराज; T$_{2}$ G$_{2.3}$ महाभागः.

**13** $^{a}$) K$_{1.2}$ B$_{3}$ अस्मिन्. K$_{4}$ (marg *sec. m.* as in text) T$_{1}$ M$_{1}$ ब्रह्मविदश्चैव. T$_{2}$ G यस्मिन्ब्राह्मणसंघश्च. — $^{b}$) K$_{3}$ D$_{5}$ तिष्ठति. K$_{3}$ D$_{5}$ [ए]व; K$_{4}$ [अ]थ; T$_{2}$ G वै (for च). B$_{1-3}$ Dc Dn D$_{4.6}$ भूतात्मा चावतिष्ठते (B$_{2.3}$ D$_{4.6}$ °ति). — $^{c}$) B$_{4}$ भूतानि. T$_{1}$ G$_{1}$ M$_{2}$ सर्गं; T$_{2}$ G$_{2-4}$ विश्वं; M$_{1}$ स्वर्गं (for सर्वं). B$_{1-3}$ D (except D$_{1-3.5}$) प्रजापतिः सृजन्सर्वं.

**14** $^{b}$) K$_{1.2}$ मानुषान्. K$_{4}$ D$_{3}$ (by corr.) ऋषिसत्तमान्; B$_{1.2}$ T$_{1}$ G$_{1.2}$ M$_{2}$ दक्षसत्तमान्. — $^{c}$) Ś$_{1}$ K$_{1.2}$ महद्ध्येतत्; K$_{3}$ महासेतुः; T$_{1}$ M महामेरोः (M$_{1}$ °रौ). — $^{d}$) K$_{4}$ स्थानमेतद्; B$_{1-3}$ D (except D$_{1-3.5}$) शिवं स्थानम् (by transp.). T$_{2}$ G$_{2-4}$ अनुत्तमम्.

**15** $^{b}$) K$_{3}$ D$_{5}$ अभ्यु°; B$_{2-4}$ Dc Dn D$_{1.2}$ एवो° (for अत्रो°). — $^{c}$) K$_{3}$ D$_{1-3}$ पार्थ (for तात). — $^{d}$) Ś$_{1}$ K$_{2}$ B$_{3}$ G$_{1}$ तथा; K$_{1}$ ततः; B$_{1}$ Dn D$_{1.4.6}$ T G$_{2-4}$ M तदा.

**16** $^{a}$) Ś$_{1}$ K$_{1.2}$ D$_{5}$ एतद्; K$_{3.4}$ (marg. *sec. m.*) D$_{3}$ एतं; K$_{4}$ देवं; D$_{1.2}$ एवं (for देशं). — $^{c}$) K$_{4}$ (marg. *sec. m.* as in text) यत्रास्ते भगवान्देवो; S आत्मतृप्तैर्य(T$_{1}$ °श्च)तैर्यत्र. — $^{d}$) T$_{1}$ M$_{1}$ नित्यमास्ते (for देवैः सह).

C 3.11857 B. 3 163 17 K 3.164 16 अनादिनिधनं देवं प्रभुं नारायणं परम् ।। १७
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते ।
देवाश्च यत्नात्पश्यन्ति दिव्यं तेजोमयं शिवम् ।। १८
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।
स्वयैव प्रभया राजन्दुष्प्रेक्ष्यं देवदानवैः ।। १९
तद्वै ज्योतींषि सर्वाणि प्राप्य भासन्ति नोऽपि च ।
स्वयं विभुरदीनात्मा तत्र ह्यभिविराजते ।। २०
यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ।
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ।। २१
योगसिद्धा महात्मानस्तमोमोहविवर्जिताः ।
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।। २२
स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम् ।

---

**17** $^{b}$) D4 G1. 2 M2 ध्रुवां. Ś1 K1. 2. 4 (marg. *sec. m.*) प्रवृत्तिं प्रकृतेः परां (K1. 2 °रं); K3 D1–3. 5 प्रकृतिं (K3 °तिः) प्रकृतेः परं; K4 (corrupt) प्रवृत्तिं प्रकृतेर्भुजं; T1 (by transp.) प्रकृतिं प्रकृतेर्ध्रुवं. — M om. 17$^{c}$–19$^{d}$, and ins. 826* after 17$^{ab}$. — $^{d}$) Ś1 K1. 2 G1 प्रभुं; K3. 4 D1–3 T1 हरिं (for परम्).

**18** K1 M om. 18 (for M, cf. v.l. 17). — $^{c}$) T2 G3. 4 यज्ञात्; G1 युक्तान् (for यत्नात्). Ś1 K2 अपि देवा न गच्छंति; K3. 4 D1. 2 देवा अपि न पश्यंति; B Dc Dn D4. 6 देवापि यं न पश्यंति; D3. 5 अपि देवा यं न यांति. — $^{d}$) B D (except D1–3. 5) सर्वं- (for दिव्यं). Ś1 K2 B Dn D4. 6 शुभं (for शिवम्). G1 तत्र मायामयं शिवं.

**19** M om. 19 (cf. v.l. 17). — K3 B Dc Dn D4. 6 T G ins. after 19: K4, after 22: D1–3, after 24: M (which om. 17$^{c}$–19$^{d}$) ins. after 17$^{ab}$:

826* प्राच्यां नारायणस्थानं मेरावतिविराजते ।

[K4 D1–3 M नारायणस्तात (for °स्थानं). K4 मेरोरथ; B1 मेरावत्र; D1–3 मेरावभि-; T1 मम राजन् (for मेरावति-).] — Thereafter T1 reads 21–22 and 828*. K3 B Dc Dn D4. 6 T2 G (G1 om. lines 3–4) M cont.: K4 ins. line 1 after 826* and lines 2–4 after 19: T1 ins. after 828*:

827* यत्र भूतेश्वरस्तात सर्वप्रकृतिरात्मभूः ।
भासयन्सर्वभूतानि सुश्रियाभिविराजते ।
नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः ।
प्राप्नुवन्ति गतिं ह्येतां यतीनां कुरुसत्तम ।

[(L. 2) K3 S (except T2 G3) भावयन्; K4 स चाग्रं (for भासयन्). K3. 4 B1. 2 S स्व- (for सु-). — (L. 3) K4 कुतो ब्रह्मर्षयस्तथा; T1 नात्र देवर्षयः कुतः; T2 G (G1 om.) M कुतो देवर्षयस्तथा. — (L. 4) T1 प्राप्स्यंति च (for प्राप्नु°). K4 M1 ह्येषां; T2 G (G1 om.) ह्येनां. T2 G (G1 om.) यतीनां भावितात्मनां.]

**20** G1 om. 20. — $^{a}$) B1 Dc न तज्; B2–4 Dn D4. 6 न तं; S (G1 om.) नात्र (for तद्वै). K4 (marg. *sec. m.*) नात्र ज्योतींषि शास्त्राणि. — $^{b}$) B Dc Dn D4. 6 पांडव; T1 G2. 4 M1 भारत (for नोऽपि च). K3. 4 D1–3. 5 प्राप्य ना-भांति तेजसा (K4 marg. *sec. m.* प्राप्य तिष्ठंति पांडव). — $^{c}$) Ś1 K1. 2 B1–3 Dc Dn D4–6 स्वयं प्रभु(Ś1 K1. 2 विष्णु)रचिंत्यात्मा; K4 (marg. *sec. m.*) अयं वीरः स भगवान्. — $^{d}$) K1. 2 B D (except D3. 4. 6) ह्यति-; T G (G1 om.) [ए]वाभि- (for ह्यभि-). K4 (marg. *sec. m.*) स्वयमत्र विराजते.

**21** M2 om. 21–22. For T1 cf. v.l. 19. — $^{b}$) Ś1 K1–3 D1. 2. 5 M1 भक्ता; T G देवं (for भक्त्या). Ś1 विभुं; D3 शुभं; D5 प्रभुं (for हरिम्). K4 भक्ता नारायणाश्रमं.

**22** M2 om. 22 (cf. v.l. 21). For T1 cf. v.l. 19. — $^{a}$) K3. 4 जिता°; D1–3. 5 यता° (for महा°). — $^{b}$) T2 G3. 4 ततो (for तमो-). — $^{cd}$) T2 G3. 4 अत्र (for तत्र). D1. 2 transp. नेमं and लोकं. — After 22, K3 B D (except D1–3. 5) S (except M2) ins.:

828* स्वयंभुवं महात्मानं देवदेवं सनातनम् ।

Thereafter T1 reads 827*.

**23** $^{a}$) K1. 2 महाभाव; T1 M1 महाराज. — $^{c}$) T1 सदाप्यत्र (for सदा ह्येतत्). — $^{d}$) Ś1 K1. 2. 4 (marg. *sec. m.*) D5 प्राणिकर्तुर्; K4 (orig.) G1. 4 प्राणमात्रं; K4 (also marg. *sec. m.*) Dc D1–3 प्रणम त्वं; T1 प्रणमाशु. — After 23, N ins.:

829* एनं त्वहरहर्मेरुं सूर्याचन्द्रमसौ ध्रुवम् ।
प्रदक्षिणमुपावृत्तौ कुरुतः कुरुसत्तम ।
ज्योतींषि चाप्यशेषेण सर्वाण्यनघ सर्वतः ।
परियान्ति महाराज गिरिराजं प्रदक्षिणम् ।

[(L. 2) B2–4 Dn D4. 6 उपावृत्य. B2 Dn D4. 6 कुरु-नंदन. — (L. 3) K4 (marg. *sec. m.* as above) ज्योतीं-ष्यनेन मार्गेण. D5 [अ]स्य च (for [अ]नघ). Ś1 K4 संघशः; D1 संशयः (for सर्वतः). K1. 2 सर्वाण्यनाम (sic) संघशः; K4 (marg. *sec. m.* as above) D3 सर्वाण्येनमसंशयः; B4 सर्वा-ण्येतानि नित्यतः. — K2 om. (hapl.) from the posterior half of line 4 up to 25$^{c}$.]

ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर ॥ २३
एतं ज्योतींषि सर्वाणि प्रकर्षन्भगवानपि ।
कुरुते वितमस्कर्मा आदित्योऽभिप्रदक्षिणम् ॥ २४
अस्तं प्राप्य ततः संध्यामतिक्रम्य दिवाकरः ।
उदीचीं भजते काष्ठां दिशमेष विभावसुः ॥ २५
स मेरुमनुवृत्तः सन्पुनर्गच्छति पाण्डव ।
प्राङ्मुखः सविता देवः सर्वभूतहिते रतः ॥ २६
स मासं विभजन्कालं बहुधा पर्वसंधिषु ।
तथैव भगवान्सोमो नक्षत्रैः सह गच्छति ॥ २७
एवमेष परिक्रम्य महामेरुमतन्द्रितः ।
भावयन्सर्वभूतानि पुनर्गच्छति मन्दरम् ॥ २८
तथा तमिस्रहा देवो मयूखैर्भावयञ्जगत् ।
मार्गमेतदसंबाधमादित्यः परिवर्तते ॥ २९
सिसृक्षुः शिशिराण्येष दक्षिणां भजते दिशम् ।
ततः सर्वाणि भूतानि कालः शिशिरमृच्छति ॥ ३०
स्थावराणां च भूतानां जङ्गमानां च तेजसा ।
तेजांसि समुपादत्ते निवृत्तः सन्विभावसुः ॥ ३१
ततः स्वेदः क्लमस्तन्द्री ग्लानिश्च भजते नरान् ।
प्राणिभिः सततं स्वप्नो ह्यभीक्ष्णं च निषेव्यते ॥ ३२
एवमेतदनिर्देश्यं मार्गमावृत्य भानुमान् । C. 3. 11878 B 3 163 38 K 3 164 37

**24** Ś1 K1. 2 D1–3. 5 om. 24 (for K2 cf. v.l. 23); T2 G3 om. 24–25. — $^{a}$) K4 Dn1 एनं; B1 M एतज्; B4 Dc2 Dn3 T1 एवं; G (G3 om.) एष (for एतं). — $^{c}$) K4 वितमः कर्ता; T1 °मस्करवं; G1 °मः कर्म; G2. 4 °मः कामं. — After 24, D1–3 read 826*.

**25** T2 G3 om. 25 (cf. v.l. 24); K2 om. 25$^{abc}$ (cf. v.l. 23). — $^{b}$) Ś1 K1 युधिष्ठिर (for दिवा°). — $^{c}$) Ś1 K1 D3 राजन्; K3 B3 D1. 2. 5 पूर्वे; K4 B1 Dc पूर्वां; M काले (for काष्ठां). — $^{d}$) K4 D1. 2 एव (for एष). B4 बहुधायं विभावसुः; S (T2 G3 om.) बहुधा पर्वसंधिषु.

**26** G1 M1 om. (hapl.) 26$^{a}$–27$^{b}$; M2 om. 26–27. — $^{a}$) Dn2 सुमेरु°. Dn स (for सन्). Ś1 K D1–3. 5 मेरुमेतमुपावृ(D3 °श्रि)त्य; T1 समेतामुपवृत्तः स. — $^{b}$) T G (G1 om.) उपा(T1 °प)गच्छति (for पुनर्गच्छति). — $^{c}$) B4 स तदा; T1 सहितं; T2 G (G1 om.) सततं (for सविता).

**27** M2 om. 27; G1 M1 om. 27$^{ab}$ (cf. v.l. 26). — $^{a}$) K4 (marg. *sec. m* as in text) समं सं-; Dn1 स मासान्; T1 सदा सं-; T2 G (G1 om.) स सम्यग् (for स मासं). K4 (marg. *sec. m.*) Dn2. n3 D5 काले; T2 G3. 4 कालान् (for कालं). — $^{b}$) Ś1 विभजन् (for बहुधा). Ś1 K1. 2 Dn2 सर्वे° (for पर्व°). — $^{c}$) K3. 4 D1. 2 तमेव विभजन् (for तथैव भगवान्). K4 (marg. *sec. m.*) S (M2 om.) देवो (for सोमो).

**28** G2 om. 28$^{ab}$. — $^{a}$) Ś1 K B2 एतं; D1–3 एनं; T2 G3. 4 एवं (for एष). Ś1 K3 D3 T2 G3. 4 अतिक्रम्य; B1–3 Dc Dn2. n3 D4. 6 त्वतिक्रम्य; Dn1 ह्यति°; T1 परिक्रामन्. — After 28$^{ab}$, S (except G2) ins.:

830* सोमश्च विभजन्कालं बहुधा पर्वसंधिषु ।

[Cf. 27$^{ab}$.]

— $^{c}$) K4 (marg. *sec. m.*) S भास° (for भाव°). — Ś1 K1. 2 om. (hapl.) 28$^{d}$–30$^{c}$. — $^{d}$) K4 D3 T1 मंदिरं; T2 G सागरं (for मन्दरम्).

**29** Ś1 K1. 2 om. 29 (cf. v.l. 28). — $^{a}$) K4 (marg. *sec. m.* as in text) तथा तस्मिन्प्रभा देवो. — $^{b}$) K4 B4 Dc D1. 2 S (except T2 G3) भास° (for भाव°). — $^{c}$) K3. 4 B1. 3 Dc D5 T1 M एतम्; B4 D1 एनम्; T2 G एवम् (for एतद्).

**30** K3 om. from st. 30 up to 4$^{a}$ of the next adhy.; Ś1 K1. 2 om. 30$^{abc}$ (cf. v.l. 28). — $^{a}$) T1 विसृजन् (for सिसृक्षुः). K4 S शिशिरं ह्येष (T1 G1 °षु); K4 (marg. *sec. m.*) B4 Dn D2. 4. 5 शिशिराण्येव; Dc °ण्येषु; D1 °यैव. — $^{b}$) K4 D3. 5 S transp. दक्षिणां and भजते. — $^{d}$) K1 काले; T2 G कालं. D1. 2 शैशिरम्. K1. 2 D1–3 अर्छति (for ऋच्छति). K4 कालमर्छति शैशिरं; B Dc Dn D4–6 कालोभ्यर्छति शैशिरः; T1 M1 कालः स्पृशति शैशिरः; M2 कालस्त्वृच्छति वै शिरः.

**31** K3 om. 31 (cf. v.l. 30). — $^{c}$) Ś1 K1. 2 D1–3 पुनराद(K1. 2 °ध)त्ते; Dc समुपादत्त. — $^{d}$) K4 B2–4 Dn D1. 2. 4–6 T2 G स (for सन्).

**32** K3 om. 32 (cf. v.l. 30). — $^{a}$) B Dc Dn D4–6 स्वेदक्लमौ; D1. 2 G1 M2 स्वेदक्लमस्. — $^{cd}$) K4 S (except G4) प्राणिनः (for °भिः). K4 स्वप्ने (for स्वप्नो). Ś1 स्वप्नेऽप्यभीष्टं; K1. 2 स्वप्ने स्वभीष्टं; B4 स्वप्नमभीक्ष्णं. S स्वप्नानभीक्ष्णं समु(T2 G2–4 पर्यु)पासते.

**33** K3 om. 33 (cf. v.l. 30). — $^{a}$) K4 एवम्; D1–3 T1 G1 M1 एतम् (for एतद्). — Dc D2 om. (hapl.) 33$^{d}$–35$^{c}$. — $^{d}$) Ś1 K1. 2 ह्राव°; T1 पाल° (for भाव°).

C. 3. 11878
B. 3. 163. 38
K. 3. 164 37

पुनः सृजति वर्षाणि भगवान्भावयन्प्रजाः ॥ ३३
वृष्टिमारुतसंतापैः सुखैः स्थावरजङ्गमान् ।
वर्धयन्सुमहातेजाः पुनः प्रतिनिवर्तते ॥ ३४
एवमेष चरन्पार्थ कालचक्रमतन्द्रितः ।
प्रकर्षन्सर्वभूतानि सविता परिवर्तते ॥ ३५
संतता गतिरेतस्य नैष तिष्ठति पाण्डव ।
आदायैव तु भूतानां तेजो विसृजते पुनः ॥ ३६
विभजन्सर्वभूतानामायुः कर्म च भारत ।
अहोरात्रान्कलाः काष्ठाः सृजत्येष सदा विभुः ॥ ३७

इति श्रीमहाभारते आरण्यकपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

# १६१

वैशंपायन उवाच ।
तस्मिन्नगेन्द्रे वसतां तु तेषां
महात्मनां सद्व्रतमास्थितानाम् ।
रतिः प्रमोदश्च बभूव तेषा-
माकाङ्क्षतां दर्शनमर्जुनस्य ॥ १
तान्वीर्ययुक्तान्सुविशुद्धसत्त्वां-
स्तेजस्विनः सत्यधृतिप्रधानान् ।
संप्रीयमाणा बहवोऽभिजग्मु-
र्गन्धर्वसंघाश्च महर्षयश्च ॥ २
तं पादपैः पुष्पधरैरुपेतं
नगोत्तमं प्राप्य महारथानाम् ।
मनःप्रसादः परमो बभूव
यथा दिवं प्राप्य मरुद्गणानाम् ॥ ३
मयूरहंसस्वननादितानि

**36** K$_3$ om. 36 (cf. v.l. 30). — D$_2$ om. 36$^c$–37$^b$. — $^c$) Ś$_1$ K$_{1.2}$ आदधत्स(K$_1$ °न्स)र्वभूतानां; K$_4$ G$_1$ M$_2$ आदावेव तु भू°; K$_4$ (marg. *sec. m.*) D$_{1.3.5}$ आददत्स- (D$_{1.3}$ °न्स)र्वभू°; Dn$_1$. n$_2$ D$_6$ आदायैवं तु भू°. — $^d$) Ś$_1$ K (K$_3$ om.) D$_{1.3.5}$ तेजांसि विसृजन्पुनः (D$_1$ °न्प्रभुः).

**37** K$_3$ om. 37; D$_2$ om. 37$^{ab}$ (cf. v.l. 30, 36). — $^a$) B$_{1.2.4}$ Dc विसृजन्; G$_1$ भगवन् (for विभजन्). — $^b$) K$_4$ S (except G$_1$) पांडव (for भारत). — $^c$) K (K$_3$ om.) B Dc Dn D$_{4.6}$ M$_1$ अहोरात्रं; D$_{1.2.5}$ M$_2$ अहोरात्राः. — $^d$) D$_{1.2}$ [ए]व (for [ए]ष). B$_2$ भवत्प्रभुः; D$_3$ विभावसुः (for सदा विभुः). K$_4$ D$_5$ S प्रभुः; Dc हरिः (for विभुः).

Colophon om. in K$_3$. — *Major parvan:* Ś$_1$ K$_{1.2}$ Dn$_2$ D$_6$ G$_{2.4}$ आरण्य. — *Sub-parvan:* B$_1$ Dn (both om. sub-parvan name) mention only गंधमादनप्रवेश; B$_{2.3}$ Dc D$_6$ M, likewise, only °मादनवास; B$_4$ D$_{3.5}$, only °मादननिवास; and finally D$_{1.2}$, only लोमशतीर्थयात्रा (followed by गंधमादनप्रवेश in D$_1$). — *Adhy. name:* K$_4$ पृथिवीदर्शनः; Dc धौम्यवाक्यं; D$_{1.2}$ आर्ष्टिषेणवाक्यं; G$_{1.2}$ कालचक्रवर्णनं. — *Adhy. no.* (figures, words or both): Dn 162 (Dn$_3$ 163); D$_1$ 168; S (M$_2$ *sup. lin.*) 164 (M$_2$ orig. 166). — *Śloka no.:* Dn 42; D$_1$ 39.

## 161

**1** K$_3$ om. 1$^a$–4$^a$ (cf. v.l. 3. 160. 30). — $^b$) Ś$_1$ K$_{1.4}$ D$_{1-3}$ M$_2$ धर्मा° (for महा°). K$_4$ (marg. *sec. m.* as in text) सत्यवतां कुरूणां; B$_4$ भारत पांडवानां; S सद्व्रतमाश्रितानां. — $^c$) K$_{1.2}$ B$_4$ D$_{3.5}$ S राजन् (for तेषाम्). — $^d$) Ś$_1$ अच्युतस्य (for अर्जुनस्य).

**2** K$_3$ om. 2 (cf. v.l. 1). — $^a$) T$_1$ M सत्यसंधान् (for वीर्ययुक्तान्). D$_{1.2}$ G$_4$ स- (for सु-). Dn D$_{4.6}$ G$_1$ °कामान् (for °सत्त्वान्). D$_5$ वीर्यान्वितांस्तांश्च विशुद्ध°. — $^b$) Ś$_1$ K$_{1.2}$ D$_3$ महौजसः पांडुसुतांस्तदानीं; D$_{1.2}$ तेजस्विनः साधुधृतिप्रधानान्; D$_5$ °नः सत्यविधिप्रमाणान्; S तेज(T$_1$ M तप)स्विनः शस्त्रभृतां वरिष्ठान्. — $^c$) Ś$_1$ K$_{1.2}$ D$_3$ T$_2$ G$_{1-3}$ संप्रीयमाणान्. D$_{1.3}$ S (except M$_1$) बहुधा (for बहवो). — $^d$) Ś$_1$ K$_{1.2}$ D$_{1-3.5}$ गंधर्वमुख्या°; T$_1$ससिद्धसंघा°.

**3** K$_3$ om. 3 (cf. v.l. 1). — $^a$) K$_1$ D$_3$ पुष्पवरैर्; B$_4$ S °फलैर्; Dc °वनैर्. — Ś$_1$ om. 3$^{cd}$. — $^c$) S प्रथमो (for परमो).

पुष्पोपकीर्णानि महाचलस्य ।
शृङ्गाणि सानूनि च पश्यमाना
गिरेः परं हर्षमवाप्य तस्थुः ॥ ४
साक्षात्कुबेरेण कृताश्च तस्मि-
न्नगोत्तमे संवृतकूलरोधसः ।
कादम्बकारण्डवहंससंजुष्टाः
पद्माकुलाः पुष्करिणीरपश्यन् ॥ ५
क्रीडाप्रदेशांश्च समृद्धरूपा-
न्सुचित्रमाल्यावृतजातशोभान् ।
मणिप्रवेकान्सुमनोहरांश्च
यथा भवेयुर्धनदस्य राज्ञः ॥ ६
अनेकवर्णैश्च सुगन्धिभिश्च
महाद्रुमैः संततमभ्रमालिभिः ।
तपःप्रधानाः सततं चरन्तः
शृङ्गं गिरेश्चिन्तयितुं न शेकुः ॥ ७
स्वतेजसा तस्य नगोत्तमस्य
महौषधीनां च तथा प्रभावात् ।
विभक्तभावो न बभूव कश्चि-
दहर्निशानां पुरुषप्रवीर ॥ ८
यमास्थितः स्थावरजङ्गमानि
विभावसुर्भावयतेऽमितौजाः ।
तस्योदयं चास्तमयं च वीरा-
स्तत्र स्थितास्ते ददृशुर्नृसिंहाः ॥ ९
रवेस्तमिस्रागमनिर्गमांस्ते
तथोदयं चास्तमयं च वीराः ।
समावृताः प्रेक्ष्य तमोनुदस्य
गभस्तिजालैः प्रदिशो दिशश्च ॥ १०
स्वाध्यायवन्तः सततक्रियाश्च
धर्मप्रधानाश्च शुचिव्रताश्च ।
सत्ये स्थितास्तस्य महारथस्य
सत्यव्रतस्यागमनप्रतीक्षाः ॥ ११
इहैव हर्षोऽस्तु समागतानां

C. 3. 11894
B. 3. 164. 12
K. 3 165. 12

**4** $K_3$ om. 4$^a$ (cf. v.l. 1). — $^a$) K ($K_3$ om.) $D_{1.3.5}$ $G_{1.2}$ °स्वरनादितानि; $B_4$ °स्वनवंति तानि; $T_1$ M °प्रतिनादितानि. — $^b$) $K_4$ पुष्पप्रकीर्णानि; Dc $D_5$ पुष्पोपकीर्णस्य; $G_1$ पुष्पावकीर्णानि. $B_4$ $T_1$ महाबलस्य; Dc °चलानि. — $^d$) T गिरेरपारं परमाप्य तस्थुः.

**5** $^a$) $Ś_1$ K $B_4$ $D_{1-3.5}$ स्वयं (for साक्षात्). $T_1$ च सत्कृताश्च (for कृताश्च तस्मिन्). $Ś_1$ $K_2$ कृतार्थां (for च तस्मिन्). — $^b$) $Ś_1$ $K_{1.2.4}$ (marg. *sec. m.*) $D_{3.5}$ °कूलरोधाः; $K_4$ °कूटगुप्ताः; $T_1$ M °गूढगुल्माः; $T_2$ G °गूढगुप्ताः ($G_1$ °कूटगुल्माः) (for °कूलरोधसः). — $^c$) $K_4$ $D_{1-3.5}$ कादंबकारंडवहंसयुक्ताः; $T_2$ $G_{2-4}$ कारंडकादंबकहंसजुष्टाः. — $^d$) $B_1$ पद्मान्विताः; $B_4$ समाकुलाः; $T_2$ $G_{2-4}$ पद्माकराः.

**6** $^a$) $D_4$ om. (hapl.) from समृद्ध° up to 7$^a$. — $^b$) $K_4$ (marg. *sec. m.* as in text) सदेविकांसोद्यतपत्रवेगान्; S सवेदिकांस्ते न्यवसन्सुवेशा($G_1$ $M_2$ °वेश्मा; $M_1$ °गुप्ता)न्. — $^c$) $Ś_1$ $K_{1-3.4}$ (marg. *sec. m.*) $D_{1-3}$ मणिप्रवेकप्रगृहीतजालान् ($Ś_1$ $K_1$ °ला); $K_4$ मणिप्रवेणान्सुमनोहरांश्च; B Dc Dn $D_6$ मणिप्रकीर्णांश्च मनोरमांश्च; $D_5$ मणिप्रकीर्णान्सुमनोहरांश्च.

**7** $D_4$ om. 7$^a$ (cf. v.l. 6). — $^b$) $Ś_1$ $K_3$ महाघनैः. $Ś_1$ K $D_{1-3}$ संवृतम्; $D_5$ संगतम् (for संततम्). $Ś_1$ अभ्रमालिहन्; $K_{1.2.4}$ अभ्रमालिनं; $K_3$ B Dc Dn $D_{4.6}$ $G_1$ अभ्रजालैः; $D_{1-3}$ अभ्रमालि ($D_2$ °ली); $D_5$ अभ्रवल्गु; $T_2$ $G_{2-4}$ अभ्रलेहिभिः. — $^c$) S °प्रभावात् ($T_1$ °वं) (for °प्रधानाः). — $^d$) $T_2$ $G_{3.4}$ सर्वे; $G_2$ शृंगान्.

**8** $^c$) $Ś_1$ $K_1$ विभिन्नभावो. $K_4$ $B_4$ S विभ($T_2$ $G_{2-4}$ विवि)क्तरूपः सविता बभूव. — $^d$) B Dn $D_{4.6}$ अहोनिशानां. $K_4$ S दिवानिशं प्राप्य नरर्षभाणां.

**9** $^a$) $Ś_1$ K $D_3$ यस्तेजसा; $D_5$ $T_2$ $G_{2-4}$ समास्थितः. $K_2$ $D_5$ S (except $G_1$) °जंगमानां. — $^b$) $Ś_1$ $K_{1-3}$ भावयन्नेव भा($K_{1.3}$ या)ति; $K_4$ भातिनिशा***; $B_4$ $D_{3.5}$ भावयते महौजाः ($D_3$ च यानि; $D_5$ महात्मा); $D_{1.2}$ भासयन्नेव याति; S भावयिता हरीशः. — $^c$) B D (except $D_{1-3}$) $G_{1.4}$ चास्तमनं; cf. v.l. 10. $Ś_1$ K $D_{1-3}$ पार्थास्; $D_5$ वीर (for वीरास्). — $^d$) $T_1$ M [आ]श्रिता°; $T_2$ $G_{2-4}$ [उ]षिता° (for स्थिता°).

**10** $^a$) $K_1$ °निर्गमानां; $D_{1.2.5}$ S °निर्गमं ते (for °निर्गमांस्ते). $Ś_1$ $K_{2.3}$ Dc $D_{1-3.5}$ $T_2$ G च (for ते). — $^b$) $Ś_1$ तस्योदयं. B D (except $D_{1-3}$) चास्तमनं; cf. v.l. 9. — $^c$) Dc $T_1$ समागताः.

**11** $^c$) S रता° (for स्थिता°).

**13** $^a$) $Ś_1$ K $D_{1-3.5}$ $T_2$ $G_{2-4}$ गिरेद् (for गिरौ).

C. 3. 11894
B. 3. 164. 12
K. 3. 165. 12

क्षिप्रं कृतास्त्रेण धनंजयेन ।
इति ब्रुवन्तः परमाशिषस्ते
पार्थास्तपोयोगपरा बभूवुः ॥ १२
दृष्ट्वा विचित्राणि गिरौ वनानि
किरीटिनं चिन्तयतामभीक्ष्णम् ।
बभूव रात्रिर्दिवसश्च तेषां
संवत्सरेणैव समानरूपः ॥ १३
यदैव धौम्यानुमते महात्मा
कृत्वा जटाः प्रव्रजितः स जिष्णुः ।
तदैव तेषां न बभूव हर्षः
कुतो रतिस्तद्गतमानसानाम् ॥ १४
भ्रातुर्नियोगात्तु युधिष्ठिरस्य
वनादसौ वारणमत्तगामी ।
यत्काम्यकात्प्रव्रजितः स जिष्णु-
स्तदैव ते शोकहता बभूवुः ॥ १५
तथा तु तं चिन्तयतां सिताश्व-
मस्त्रार्थिनं वासवमभ्युपेतम् ।
मासोऽथ कृच्छ्रेण तदा व्यतीत-
स्तस्मिन्नगे भारत भारतानाम् ॥ १६
ततः कदाचिद्धरिसंप्रयुक्तं
महेन्द्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां
हर्षोऽर्जुनं चिन्तयतां बभूव ॥ १७
स दीप्यमानः सहसान्तरिक्षं
प्रकाशयन्मातलिसंगृहीतः ।
बभौ महोल्केव घनान्तरस्था
शिखेव चाग्नेर्ज्वलिता विधूमा ॥ १८
तमास्थितः संददृशे किरीटी

— d) Ś1 K2. 3 T2 G3 M2 [इ]व (for [ए]व). Ś1 K2 B4 समानकल्पः.

**14** D5 om. 14. — a) T1. 2 (before corr.) G2 यथैव (for यदैव). Ś1 K2 धौम्यानुमतो. — b) B2–4 Dn D4. 6 G1 जटां.

**15** a) M निदेशात् (for नियोगात्). K3 G4 च; K4 G2 M1 स (for तु). — b) Ś1 जिष्णुर्वनाद्; K1. 2 वनाज्जिष्णुर्; K4 वनादगाद् (for वनादसौ). S यदा वनान्मत्तगजेंद्रगामी. — c) S (except T1) स (for यत्). Ś1 K2 D5 स पार्थः; K1. 3 D1. 2 T1. 2 (after corr.) G1 M तदैव; T2 (before corr.) G2–4 तथैव (for स जिष्णुस्). — d) K1. 3 D1. 2 पार्थाः सर्वे; K4 पार्थाश्च ते; S पार्थास्तदा (for तदैव ते). K1. 3. 4 D1. 2 S (except G1) शोकपरा. Ś1 K2 तदैव शोको महतां बभूव; K4 (marg. *sec. m.*) D3. 5 तदैव शोकोपहता बभूवुः. — After 15, T1 ins.:

831* संत्यज्य कामान्प्रव्रजितास्तदैव
पार्थास्तदा शोकपरा बभूवुः ।

**16** a) K3. 4 (marg. *sec. m.*) B4 D1–3. 5 एवं (for तथा). K4 (marg. *sec. m.* as in text) हि; B1–3 Dc Dn D4. 6 एव (for तु). B4 D5 अभीक्ष्णम् (for सिताश्वम्). — b) B4 अभ्युपैति. — c) Ś1 K1 व्यपेतस् (for व्यतीतस्). K4 S कालः स कृच्छ्रेण महानतीतः; D5 मासाश्च कृच्छ्रेण तथा व्यतीताः. — d) K3 Dc2 D2. 3 तस्मिन्वने; D5 नगोत्तमं. — After 16, N (except D4. 5) ins. (a passage composed in *ślokas !*):

832* उषित्वा पञ्च वर्षाणि सहस्राक्षनिवेशने ।
अवाप्य दिव्यान्यस्त्राणि सर्वाणि विबुधेश्वरात् ।
आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ।
ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः ।
यमस्य धातुः सवितुस्त्वष्टुर्वैश्रवणस्य च ।
तानि प्राप्य सहस्राक्षादभिवाद्य शतक्रतुम् ।
अनुज्ञातस्तदा तेन कृत्वा चापि प्रदक्षिणम् ।
आगच्छदर्जुनः प्रीतः प्रहृष्टो गन्धमादनम् ।

[(L. 1) K1. 2 वासवस्य (for सहस्राक्ष-). — (L. 2) D6 अधीत्य सर्वशास्त्राणि दृष्ट्वा च विबुधेश्वरात्. — (L. 3) Ś1 K1. 2 वायव्यम(Ś1 व्यं चा)स्त्रमायुधं. — (L. 7) Ś1 K2 चाभि- (for चापि). — (L. 8) Ś1 K Dc1 हृष्टो द्वैतवनं सरः (for the posterior half).]

— Thereafter, K1. 3. 4 B D ins. an addl. colophon (*adhy. no.:* Dn1 163; Dn3 164; D1 169).

**17** Before 17, N ins. वैशं° उ°. — c) K4 S नरर्षभाणां (for महा°).

**18** a) K4 D3 T1 G1 सं-; D1 प्र- (for स).

**19** a) K4 S (except M2) समा° (for तमा°). — b) Ś1 K1–3 B D नवान्या°; Dc समाल्या° (for वराण्या°). — d) Ś1 K1. 2 D5 पर्वतमाससाद; T1 G1 M2

स्रग्वी वराण्याभरणानि बिभ्रत् ।
धनंजयो वज्रधरप्रभावः
श्रिया ज्वलन्पर्वतमाजगाम ॥ १९
स शैलमासाद्य किरीटमाली
महेन्द्रवाहादवरुह्य तस्मात् ।
धौम्यस्य पादावभिवाद्य पूर्व-
मजातशत्रोस्तदनन्तरं च ॥ २०
वृकोदरस्यापि ववन्द पादौ
माद्रीसुताभ्यामभिवादितश्च ।
समेत्य कृष्णां परिसान्त्व्य चैनां
प्रह्वोऽभवद्भ्रातुरुपह्वरे सः ॥ २१
बभूव तेषां परमः प्रहर्ष-
स्तेनाप्रमेयेण समागतानाम् ।
स चापि तान्प्रेक्ष्य किरीटमाली
ननन्द राजानमभिप्रशंसन् ॥ २२
यमास्थितः सप्त जघान पूगा-
न्दितेः सुतानां नमुचेर्निहन्ता ।
तमिन्द्रवाहं समुपेत्य पार्थाः
प्रदक्षिणं चक्रुरदीनसत्त्वाः ॥ २३
ते मातलेश्चक्रुरतीव हृष्टाः
सत्कारमग्र्यं सुरराजतुल्यम् ।
सर्वं यथावच्च दिवौकसस्ता-
न्पप्रच्छुरेनं कुरुराजपुत्राः ॥ २४
तानप्यसौ मातलिरभ्यनन्द-
त्पितेव पुत्राननुशिष्य चैनान् ।
ययौ रथेनाप्रतिमप्रभेण
पुनः सकाशं त्रिदिवेश्वरस्य ॥ २५
गते तु तस्मिन्वरदेववाहे
शक्रात्मजः सर्वरिपुप्रमाथी ।
शक्रेण दत्तानि ददौ महात्मा
महाधनान्युत्तमरूपवन्ति ।
दिवाकराभाणि विभूषणानि
प्रीतः प्रियायै सुतसोममात्रे ॥ २६
ततः स तेषां कुरुपुंगवानां
तेषां च सूर्याग्निसमप्रभाणाम् ।
विप्रर्षभाणामुपविश्य मध्ये
सर्वं यथावत्कथयांबभूव ॥ २७
एवं मयास्त्राण्युपशिक्षितानि C. 3. 11914 B. 3. 165. 12 K. 3. 166. 13

---

मेरुमथाजगाम.

**20** [c]) $K_4$ (marg. *sec. m.* as in text) विप्रर्षभाणाम् (for धौम्यस्य पादाव्). Ś$_1$ $D_1$ अभिनंद्य; $K_1$ $D_2$ अभिवंद्य. Ś$_1$ $K_{1-3}$ B D धीमान्; $K_4$ पादान् (for पूर्वम्).

**21** [a]) Ś$_1$ $K_1$ [अ]भिननंद; $K_2$ $D_{1.2}$ [अ]भिववंद; $T_1$ [अ]थ ववंद (for [अ]पि ववन्द). $B_{2-4}$ Dn च वंद्य; $D_3$ [अ]भिवंद्य (for ववन्द). $T_2$ $G_{2-4}$ पादौ ववंदे (for ववन्द पादौ).

**22** [a]) Ś$_1$ परमः प्रमोदस्; $K_{1.4}$ Dc $T_1$ $G_{1.2}$ M परम-प्रहर्षस्. — [b]) Ś$_1$ K Dc $D_{2.3}$ $T_1$ $G_{1.4}$ $M_1$ °येन (for °येण). S समेत्य तत्र (for समा°). — [c]) $K_4$ S सं- (for तान्). — [d]) $K_4$ $T_1$ इति; Dc अति- (for अभि-).

**23** [a]) $B_2$ यमाश्रितः; $T_2$ $G_{2-4}$ यानास्थितः; $G_1$ $M_2$ समा°. Ś$_1$ सैन्यान् (for पूगान्). — [c]) $T_2$ $G_{2-4}$ तानिंद्र-वाहान्.

**24** [a]) $D_{1.2}$ अदीनसत्वाः (for अतीव हृष्टाः); cf. 23[d]. — [c]) Ś$_1$ $K_{3.4}$ $D_3$ सर्वैं; $B_{1-3}$ Dc Dn $D_{4-6}$ सर्वान् (for सर्वं). $K_4$ S दिवौकसंघं ($K_4$ °घां; $M_1$ °घाः); $D_{1-3}$ दिवौ-कसां ते (for दिवौकसस्तान्). B Dc Dn $D_{4.6}$ ते (for तान्).

**25** [b]) $K_{1.2}$ $B_4$ $D_1$ अनुशास्य. $B_1$ $D_{1-3}$ $T_2$ $G_{2.3}$ चैतान्; $B_{2-4}$ Dn $D_{4-6}$ पार्थान् (for चैनान्). — [d]) Dc $D_{2.5}$ $T_2$ $G_3$ त्रिदशेश्वरस्य.

**26** [a]) Ś$_1$ $K_{1-3}$ B D नरदेववर्यः (Ś$_1$ $K_2$ °र्यं); $K_4$ $T_1$ नरदेववाहे. — [b]) Ś$_1$ $K_{1-3}$ $B_{2-4}$ Dn $D_{1-3.5}$ शक्र-; Dc तस्य (for सर्व-). — After 26[ab], S ins.:

833* साक्षात्सहस्राक्ष इव प्रतीतः
श्रीमान्स्वदेहादवमुच्य जिष्णुः ।

— [e]) Dc $D_{1-4}$ $T_1$ $G_2$ $M_1$ °कराभानि. — [f]) $K_3$ $B_2$ Dn $D_{4.6}$ प्रियः (for प्रीतः). $K_4$ प्रीतो यमाभ्यामथ याज्ञसेन्याः; $B_4$ प्रीतः प्रियायै शतशः प्रहृष्टः.

**27** After 27, $B_{2-4}$ ins.:

834* देवैस्तु दत्ता हि यथास्त्रमुख्याः

C 3 11914
B. 3 165. 12
K. 3 166 13

शक्राच्च वाताच्च शिवाच्च साक्षात् ।
तथैव शीलेन समाधिना च
प्रीताः सुरा मे सहिताः सहेन्द्राः ॥ २८
संक्षेपतो वै स विशुद्धकर्मा
प्रख्यापयद्वल्कलचीरवासाः ।
तेभ्यः समाख्याय दिवि प्रवेशम् ।
माद्रीसुताभ्यां सहितः किरीटी
सुष्वाप तामावसतिं प्रतीतः ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

## १६२

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु सर्ववादित्रनिस्वनः ।
बभूव तुमुलः शब्दस्त्वन्तरिक्षे दिवौकसाम् ॥ १
रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ।
पृथग्व्यालमृगाणां च पक्षिणां चैव सर्वशः ॥ २
तं समन्तादनुययुर्गन्धर्वाप्सरसस्तथा ।
विमानैः सूर्यसंकाशैर्देवराजमरिंदमम् ॥ ३
ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ॥ ४
पार्थानभ्याजगामाशु देवराजः पुरंदरः ।

---

**28** a) D1. 2 च शक्रा° (for मयाक्रा°). — b) K3 D1–3 T2 G वायोश्च (for वाताच्च). — c) B2–4 Dc1 Dn D4. 6 [अ]थ (for च). — d) K1 मुदिताः (for सहिताः). Ś1 K D1. 3. 5 बभूवुः; Dn3 T2 G सुरेंद्राः (for सहेन्द्राः).

**29** Before 29, Dc ins. वैशं° उ°. — a) K1. 2 D3 सुविशुद्ध°; K3 D1. 2 स (K3 सु-) विशुद्धभावस्; T1 स विशुद्धधर्मा. — b) K4 T G2. 4 M1 दिवः (for दिवि). K4 B D (except D1–3. 5) प्रवासं (for प्रवेशम्). — c) B1. 3 Dc माद्र्याः सुताभ्यां. — d) K4 सुखेन; T2 G2–4 प्रतीत्य (for प्रतीतः). Ś1 K D1–3. 5 सुष्वाप तां वसतिं सु(D5 रजनीं सं)प्रतीतः.

Colophon om. in K3. — *Major parvan :* Ś1 K1. 2 Dn2 T2 G2–4 आरण्य. — *Sub-parvan :* B1 D3 (both om. sub-parvan name) mention only गंधमादनप्र(D3 °नि)-वेश; B3 Dc T2 G3. 4 likewise, only, गंधमादनवास (T2 G3. 4 °मादनप्रवास); and finally D1. 2, only लोमशतीर्थयात्रा (followed by गंधमादन in D1). — *Adhy. name :* K4 B2–4 Dc Dn1. n3 D4. 6 G2 अर्जुनसमागमः; D1 अर्जुनसमागमे इंद्रवाक्यं; D2. 5 अर्जुनागमनं; T2 G1. 3. 4 M धनंजयसमागमः (G4 °मं). — *Adhy. no.* (figures, words or both): Dn1. n2 164; Dn3 S (M2 *sup. lin.*) 165 (M2 orig. 167); D1 170. — *Śloka no.:* Dn D1 14.

### 162

**1** After the ref., N ins. :

835* ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवन्दत धनंजयः ।

[(L. 1) K1. 2. 4 D1. 3. 5 निशायां (for रजन्यां). — (L. 2) D5 अभ्यर्चत (for अवन्दत).]
— a) K4 ततः प्रभातसमये; G1 एतेनैव तु कालेन. — b) N (except B3. 4 D2) G4 °निःस्वनः. — c) K4 D2 तुमलः. B1. 3 Dc D3 भीमस् (for शब्दस्).

**2** D1 om. $2^{cd}$. — c) K4 तथा (for पृथग्). G1 भुजंगव्याघ्रसिंहानां. — d) Ś1 K1–3 D3. 5 चापि; B1. 3 Dn D4. 6 इव (for चैव). B3 नित्यशः; D2 भारत (for सर्वशः). — After 2, S ins. :

836* रवोन्मुखास्ते संप्रेक्ष्य प्रीयमाणाः कुरूद्वहाः ।
मरुद्भिरन्वितं शक्रमापतन्तं विहायसा ।

[(L. 1) G2 ददृशुः (for संप्रेक्ष्य).]

**3** a) Dn3 ते (for तं)! S (except G2 M2) अभि- (for अनु-). — b) B Dn D3–6 °प्सरसां (for °प्सरसस्). Ś1 K3 G1 तदा; B Dn D3–6 गणाः (for तथा). — G1 om. $3^{c}$–$5^{d}$. — c) K2 विमाने.

**4** In G2, the portion of the text from st. 4 up to st. 39 of the next adhy. is lost on a missing fol. — G1 om. 4 (cf. v.l. 3). — b) Some N MSS. °परिस्कृतम्. — c) K2 मेघस्यंदनम्; Dn3 मेघमारुतम्; D2 G4 मेघना-

आगत्य च सहस्राक्षो रथादवरुरोह वै ॥ ५
तं दृष्ट्वैव महात्मानं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्देवराजमुपागमत् ॥ ६
पूजयामास चैवाथ विधिवद्भूरिदक्षिणः ।
यथार्हममितात्मानं विधिदृष्टेन कर्मणा ॥ ७
धनंजयश्च तेजस्वी प्रणिपत्य पुरंदरम् ।
भृत्यवत्प्रणतस्तस्थौ देवराजसमीपतः ॥ ८
आप्यायत महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
धनंजयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ॥ ९
जटिलं देवराजस्य तपोयुक्तमकल्मषम् ।
हर्षेण महताविष्टः फल्गुनस्याथ दर्शनात् ॥ १०
तं तथादीनमनसं राजानं हर्षसंप्लुतम् ।
उवाच वचनं धीमान्देवराजः पुरंदरः ॥ ११
त्वमिमां पृथिवीं राजन्प्रशासिष्यसि पाण्डव ।
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमम् ॥ १२
अस्त्राणि लब्धानि च पाण्डवेन
सर्वाणि मत्तः प्रयतेन राजन् ।
कृतप्रियश्चास्मि धनंजयेन
जेतुं न शक्यस्त्रिभिरेष लोकैः ॥ १३
एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम् ।
जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः ॥ १४
धनेश्वरगृहस्थानां पाण्डवानां समागमम् ।
शक्रेण य इमं विद्वानधीयीत समाहितः ॥ १५
संवत्सरं ब्रह्मचारी नियतः संशितव्रतः ।
स जीवेत निराबाधः सुसुखी शरदां शतम् ॥ १६ C. 3. 11934 B. 3. 166. 17 K. 3. 167. 18

इति श्रीमहाभारते आरण्यकपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

---

दितम्.

**5** $G_1$ om. 5 (cf. v.l. 3). $G_2$ missing (cf. v.l. 4). — [a]) $B_{2-4}$ Dn $D_{1.4}$ [अ]थ (for [आ]शु). — [c]) Ś$_1$ $K_{2.4}$ $D_3$ T $G_{2.4}$ आगम्य; $D_5$ (m as in text) सुगंधाच् (for आगत्य). — [d]) $K_4$ स्यंदनादवरुह्य च.

**6** $G_2$ missing (cf. v.l. 4). — [a]) T $G_{3.4}$ च (for [ए]व). — [b]) $K_4$ $T_1$ $G_1$ धर्मपुत्रो; $G_4$ देवराजं (for धर्मराजो).

**9** $G_2$ missing (cf. v.l. 4). — [a]) $K_4$ B Dc Dn $D_{4.6}$ आघ्राय तं; $D_5$ °मूर्ध्न्याघ्रातो; $T_1$ आहूय तं; $T_2$ $G_3$ आज्ञाय तं; $G_1$ आस्थाय तं; $G_4$ अजायत (for आप्यायत).

**10** $G_2$ missing (cf. v.l. 4). — [d]) N (except Ś$_1$) फाल्गुनस्य. — After 10, B D (except $D_{1-3.5}$) ins.:

837* बभूव परमप्रीतो देवराजं च पूजयन्।

**11** $G_2$ missing (cf. v.l. 4). — [a]) $T_2$ $G_{3.4}$ °दीनवदनं. — [b]) $K_4$ हर्षगद्गदं; T $G_{1.3.4}$ °संयुतं. — [d]) $K_1$ देवराजं; $K_3$ प्रेक्ष्य राजा; $T_2$ $G_{1.3.4}$ धर्मराजं (for देव°).

**12** $G_2$ missing (cf. v.l. 4). — Before 12, $M_1$ ins. इंद्रः. — [b]) $K_4$ भोक्ष्यसे हतकंटकां. — [c]) Ś$_1$ $K_2$ $T_2$ $G_3$ चाप्नुहि (for प्राप्नुहि).

**13** $G_2$ missing (cf. v.l. 4). — [a]) Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ प्राप्तान्यथास्त्राणि; $B_4$ अस्त्राण्यवाप्तानि (for अस्त्राणि लब्धानि). $T_1$ धनंजयेन (for च पाण्डवेन). — [b]) $D_5$ प्रवरेण राजन्; $T_1$ $M_1$ गिरिशाच्च देवात् (for प्रयतेन राजन्). — [d]) $K_{3.4}$ $D_{1.5}$ एव (for एष).

**15** $G_2$ missing (cf. v.l. 4). — [a]) $K_4$ धनेश्वरालयस्थानां. — [c]) B Dn $D_{4.6}$ इदं (for इमं). Dc $D_{1-3}$ धीमान् (for विद्वान्).

**16** $G_2$ missing (cf. v.l. 4). — [b]) Ś$_1$ $K_{1-3}$ $D_{1-3}$ संयतेंद्रियः; $K_4$ $Dn_2$ शंसितव्रतः. — [c]) $K_{1.2}$ $D_5$ जीवते; $B_{1-3}$ Dc Dn $D_{4.6}$ जीवेद्धि; $B_4$ $D_3$ जीवति (for जीवेत). S ($G_2$ missing) स जीवेद्भरतश्रेष्ठ ($T_1$ $G_1$ °ष्ठः). — [d]) Ś$_1$ $K_{1.2}$ $B_2$ $D_{1.2}$ $T_2$ $G_{1.3}$ स सुखी; $D_3$ सुसुखं; $T_1$ स भूमौ (for सुसुखी).

Colophon. $G_2$ missing. — *Major parvan:* Ś$_1$ $K_{1.2}$ $Dn_2$ $T_2$ $G_{3.4}$ आरण्य. — *Sub-parvan:* Omitting sub-parvan name, $K_3$ Dc mention only गंधमादनवास; $B_1$ likewise, only °मादनपश्चाद्गमन; $D_{1.2}$, only लोमशतीर्थयात्रा (followed by गंधमादन in $D_1$); $D_3$ $T_2$ $G_3$, only गंधमादननिवास; and finally $D_5$, only गंधमादनप्रवेश (followed by समाप्त). — *Adhy. name:* $K_4$ $B_{2.3}$ $Dn_1$. $n_3$ $D_{4.6}$ इंद्रागमनं; $B_4$ Dc इंद्रसमागमः; $D_{1.2}$ अर्जुनसमागमे इंद्रवाक्यं. — *Adhy. no.* (figures, words or both): $Dn_1$. $n_2$ 165; $Dn_3$ S ($G_2$ missing; $M_2$ *sup. lin.*) 166 ($M_2$ orig. 168); $D_1$ 171. — *Śloka no.:* $Dn_1$. $n_2$ 17; $Dn_3$ 18; $D_1$ 16.

# १६३

C. 3. 11935 B 3 167. 1 K. 3 168. 1 वैशंपायन उवाच ।
यथागतं गते शक्रे भ्रातृभिः सह संगतः ।
कृष्णया चैव बीभत्सुर्धर्मपुत्रमपूजयत् ॥ १
अभिवाद्यमानं तु मूर्ध्न्युपाघ्राय पाण्डवम् ।
हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ २
कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ३
सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि भारत ।
कच्चित्सुराधिपः प्रीतो रुद्रश्चास्त्राण्यदात्तव ॥ ४
यथा दृष्टश्च ते शक्रो भगवान्वा पिनाकधृक् ।
यथा चास्त्राण्यवाप्तानि यथा चाराधितश्च ते ॥ ५
यथोक्तवांस्त्वां भगवाञ्शतक्रतुररिंदम ।
कृतप्रियस्त्वयास्मीति तच्च ते किं प्रियं कृतम् ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ॥ ६
यथा तुष्टो महादेवो देवराजश्च तेऽनघ ।
यच्चापि वज्रपाणेस्ते प्रियं कृतमरिंदम ।
एतदाख्याहि मे सर्वमखिलेन धनंजय ॥ ७

अर्जुन उवाच ।
शृणु हन्त महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवन्तं च शंकरम् ॥ ८
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन ।
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ॥ ९

---

## 163

**1** In G2, st. 1–39 are lost on a missing fol. (cf. v.l. 3. 162. 4). — $^{c}$) Ś1 K1. 2 T2 G3. 4 सह; G1 चापि (for चैव). — $^{d}$) K3 B2 Dc D1. 2. 5 G1 धर्मराजम्; K4 युधिष्ठिरम् (for धर्मपुत्रम्). T1 M उपागमत् (for अपूजयत्).

**2** G2 missing (cf. v.l. 1). — $^{a}$) K4 D G4 तं (for तु). — $^{b}$) K4 मूर्ध्न्योपघ्राय; G4 मूर्धन्याघ्राय. K3 B2 Dn2. n3 D1–3 पांडवः; K4 T2 G3 M2 भारत; G1 धर्मवित्; M1 पार्थिवः (for पाण्डवम्). — $^{cd}$) Ś1 आसने समुपावेश्य पर्यपृच्छत धर्मराट्.

**3** G2 missing (cf. v.l. 1). — $^{b}$) T1 ह्यति°; T2 G3 M2 [ऽ]ष्यति°; G1. 4 प्रति° (for व्यति°). Ś1 K1. 2 त्वया (for तव). — D3. 5 om. (hapl.) $3^{d}$–$5^{c}$.

**4** G2 missing (cf. v.l. 1). D3. 5 om. 4 (cf. v.l. 3). — $^{b}$) B D (except D1–3. 5) पांडव (for भारत). — $^{c}$) B4 श्रीमान् (for प्रीतो). — $^{d}$) T1 शक्रश्च (for रुद्रश्च). B1–3 D (except D1–3. 5) वा (for च). K4 B4 D1. 2 T1 G1 M1 दत्तवान् (for [अ]दात्तव).

**5** G2 missing (cf. v.l. 1). D3. 5 om. $5^{abc}$ (cf. v.l. 3). — $^{b}$) K3 (*sup. lin.* as in text) Dc2 च (for वा). Ś1 K1. 2 पिनाकभृत्; Dn1. n3 °धृत्. — T2 G3 om. $5^{c}$–$6^{d}$. — $^{c}$) B1–3 Dc Dn D4. 6 [ए]व; D2 वा (for च). K4 शस्त्राणि (for चास्त्राणि). K1. 2 वाप्तानि (for [अ]वाप्तानि). — $^{d}$) K3 D~-T1 वा; B Dc Dn D4–6 [ए]व (for the first च). Ś1 K1 D3 आराधितास्त्र. K4 हरः; T1 त्वया (for च ते).

**6** G2 missing (cf. v.l. 1). T2 G3 om. 6 (cf. v.l. 5). — $^{a}$) K3 Dc D1. 2 यच्चो° (for यथो°). M महाप्राज्ञ (for त्वां भगवान्). — $^{b}$) K2–4 M अरिंदमः. — G1 om. (hapl.) $6^{c}$–$7^{d}$. — $^{c}$) G4 °प्रीतस् (for °प्रियस्). T1 G4 M तथा (for त्वया). — $^{d}$) K4 B1–3 D (except D1–3) तस्य; M2 यच्च (for तच्च). T1 तेति (for ते किं). D1–3 transp. प्रियं and कृतम्. — $^{f}$) K4 D5 धनंजय; B2 महामते (for °द्युते).

**7** G2 missing (cf. v.l. 1). G1 om. $7^{abcd}$ (cf. v.l. 6). — $^{a}$) T G3 M1 दृष्टो (for तुष्टो). — $^{b}$) T2 G3. 4 सुर° (for देव°). B1–3 Dc Dn D4–6 तथा (for च ते). K4 तथा तव; D1. 2 च तोषितः (for च ते ऽनघ). — $^{c}$) T1 यथच्च; M यश्चापि. D5 transp. वज्रपाणेः and ते. B1. 2 Dc Dn D4. 6 तु; T2 G3 तत् (for ते). — $^{d}$) Ś1 K1. 2 M transp. प्रियं and कृतं. — $^{e}$) S आचक्ष्व (for आख्याहि).

**8** G2 missing (cf. v.l. 1). D5 धनंजय (for अर्जुन). — $^{a}$) K4 श्रूयतां मे; D1. 2 शृणु मत्तो; T1 शृणु सर्वं; T2 G3. 4 M शृणुष्व त्वं; G1 शृणु त्वं हि (for शृणु हन्त). D5 शृणुष्वावहितो राजन्. — $^{c}$) K4 सुरेशानं; D3 M1 महादेवं; D5 देवराजं (for अहं देवं).

**9** G2 missing (cf. v.l. 1). — $^{b}$) Ś1 K3 धौम्यो° (for त्वयो°). — T2 G3 om. $9^{cd}$. — $^{c}$) T1 तपसा (for भवता).

भृगुतुङ्गमथो गत्वा काम्यकादास्थितस्तपः ।
एकरात्रोषितः कंचिदपश्यं ब्राह्मणं पथि ॥ १०
स मामपृच्छत्कौन्तेय क्वासि गन्ता ब्रवीहि मे ।
तस्मा अवितथं सर्वमब्रुवं कुरुनन्दन ॥ ११
स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम ।
अपूजयत मां राजन्प्रीतिमांश्चाभवन्मयि ॥ १२
ततो मामब्रवीत्प्रीतस्तप आतिष्ठ भारत ।
तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिपम् ॥ १३
ततोऽहं वचनात्तस्य गिरिमारुह्य शैशिरम् ।
तपोऽतप्यं महाराज मासं मूलफलाशनः ॥ १४
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ।
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन ॥ १५
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ।
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ १६
चतुर्थे समभिक्रान्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपमुपागमत् ॥ १७
निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
संमार्जञ्जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ १८
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ।
धनुर्बाणासिमत्प्राप्तं स्त्रीगणानुगतं तदा ॥ १९
ततोऽहं धनुरादाय तथाक्षय्यौ महेषुधी ।
अताडयं शरेणाथ तद्भूतं लोमहर्षणम् ॥ २० C. 3 11955 B. 3. 167. 21 K. 3. 168. 21

**10** G$_2$ missing (cf. v.l. 1). — $^a$) T$_2$ G$_{3.4}$ M भृगुतुंदम्. K$_3$ D$_2$ अहं (for अथो). — $^b$) T G$_3$ transp. आस्थितः and तपः. Ś$_1$ K$_{2-4}$ D$_{1.2}$ काम्यकात्प्रस्थितस्ततः.

**11** G$_2$ missing (cf. v.l. 1). — $^b$) Ś$_1$ K$_{1.2}$ महीपते; K$_4$ D$_{1.2}$ T$_1$ M वदस्व मे (for ब्रवीहि मे). — $^c$) Ś$_1$ K$_1$ Dn$_3$ तस्मायवितथं; K$_2$ तन्मयेवि°; K$_3$ तस्माच्चावि°; K$_4$ तस्मै ह्यवि°; D$_{1.2}$ M$_1$ तस्मादवि°; D$_5$ तस्मै यथोचितं; T$_1$ तस्मै चाविगमं; T$_2$ (before corr.) G$_4$ तस्मै नावितथं; G$_1$ M$_2$ तस्मै चापि तथा (for तस्मा अवितथं). — $^d$) M$_1$ अब्रवं. Ś$_1$ K$_{1.2}$ कुरुसत्तम.

**12** G$_2$ missing (cf. v.l. 1). — $^b$) G$_4$ मुनिसत्तमः (for राज°). — $^c$) T$_1$ मा (for मां).

**13** G$_2$ missing (cf. v.l. 1). — $^a$) T$_2$ G$_{3.4}$ M स तु (for ततो). — $^b$) T$_2$ G$_{3.4}$ तप्यस्व; M$_2$ तप्यं हि (for आतिष्ठ). K$_4$ श्रृणु मत्तो कुलोद्वह; B$_{1.3}$ तपः कुरुकुलोद्वह; Dc D$_5$ T$_1$ M$_1$ ततः कुरुकुलोद्वह (T$_1$ °द्भव). — $^c$) T$_2$ [ए]व; G$_4$ [इ]व (for त्वं). K$_{3.4}$ B$_{1-3}$ Dc Dn D$_4$ M$_2$ तपस्य- (K$_4$ B$_1$ M$_2$ °स्वि)न्नचिरेण त्वं.

**14** G$_2$ missing (cf. v.l. 1). — $^c$) Ś$_1$ तपोतपं; K$_1$ तपोतपे; K$_2$ तपस्तपं; K$_4$ S (G$_2$ missing) तपस्तेपे (for तपोऽतप्यं). K$_4$ गिरौ तस्मिन्; T$_2$ G (G$_2$ missing) M$_2$ च कौरव्य (for महा°). — $^d$) K$_4$ T$_2$ G$_{3.4}$ मासमेकं ज(K$_4$ फ)लाशनः.

**15** G$_2$ missing (cf. v.l. 1). — $^c$) Ś$_1$ K$_1$ D$_5$ तृतीयं च; K$_2$ °ये च; K$_{3.4}$ D$_{1-3}$ T$_2$ G$_3$ °यं तु; Dc T$_{1.2}$ (before corr.) °योथ (for °येऽथ). — $^d$) Ś$_1$ K D$_{1-3.5}$ T$_2$ G$_3$ मासं; T$_1$ मासः (for मासे).

**16** G$_2$ missing (cf. v.l. 1). — $^a$) Ś$_1$ K$_{1.2}$ च (for तु). — $^c$) Ś$_1$ K$_{1.2}$ ह्रियते (for ही°).

**17** G$_2$ missing (cf. v.l. 1). — $^a$) B Dc Dn D$_{4.6}$ G$_3$ पंचमे. K$_2$ समतिक्रांते; K$_{3.4}$ D$_{2.3.5}$ G$_1$ M त्वभ्यति°; B Dc Dn D$_{4.6}$ G$_3$ त्वथ संप्राप्ते; D$_1$ त्वप्यतिक्रांते; T$_1$ मास्यति°; T$_2$ G$_4$ ह्यतिनिष्क्रांते. — $^c$) Ś$_1$ K$_2$ वाराहं संस्थितो; K$_1$ वाराहसंस्थितो; K$_4$ वाराहसंस्थितं. Ś$_1$ K$_{1.2}$ B$_4$ Dc रूपं; T$_1$ भीमं (for भूतं). D$_5$ वाराहं रूपमास्थाय. — D$_4$ om. (hapl.) 17$^d$–19$^a$. — $^d$) B T$_2$ G$_{3.4}$ M$_2$ अथा(B$_1$ इहा)गमत्; Dc इहागतः; Dn D$_6$ समागमत् (for उपा°).

**18** G$_2$ missing (cf. v.l. 1). D$_4$ om. 18 (cf. v.l. 17). — $^a$) Dc D$_{1-3}$ M$_1$ पोत्रेण; D$_5$ रोषेण; D$_6$ (marg. *sec. m.*) ओष्ठेन (for प्रोथेन). T$_2$ G (G$_2$ missing) चरणैर् (for पृथिवीं); see below. — $^b$) Ś$_1$ D$_{2.5}$ विकिरन्; K D$_3$ विकरन्; D$_1$ उत्किरन् (for विलिखन्). T$_2$ G (G$_2$ missing) विलिखन्नपि मेदिनीम्. — $^c$) G$_4$ संमार्ज्यं. Ś$_1$ K$_{1-3}$ D$_3$ [अ]पि (for [उ]र्वीं). D$_5$ समार्गमचिरेणापि. — $^d$) Ś$_1$ D$_6$ (marg. *sec. m.*) निवर्तंश्च; K$_1$ निवर्तं च; K$_2$ विवर्तं स; K$_4$ विवर्तयन् (for विवर्तंश्च).

**19** G$_2$ missing (cf. v.l. 1). D$_4$ om. 19$^a$ (cf v.l. 17). — $^b$) D$_{1.3}$ वपुः (for महत्). D$_{3.5}$ T$_1$ G$_1$ M कैरातमास्थितं; T$_2$ G$_3$ कैरातसंज्ञितं. — $^c$) S धनुष्पाण्यसि°. — $^d$) K$_4$ D$_{1.2}$ स्त्रिया चानु°.

**20** G$_2$ missing (cf. v.l. 1). — $^b$) =36$^b$. K$_4$ तच्च; G$_1$ तदा (for तथा). K$_2$ [अ]क्षय-; B$_{2-4}$ Dc$_1$ Dn D$_{4.6}$ [अ]क्षय्ये (for [अ]क्षय्यौ). — $^d$) B$_4$ T G$_3$ M रोमहर्षणं.

**21** G$_2$ missing (cf. v.l. 1). — $^a$) Ś$_1$ D$_5$ युगपत्तु; B Dc Dn$_1$ D$_{1.4.6}$ युगपत्तं. K$_2$ B$_3$ किरातस्य; Dn D$_{4.6}$

C 3. 11956 B 3. 167 22 K. 3. 163. 22 युगपत्तत्किरातश्च विकृष्य बलवद्धनुः ।
अभ्याजघ्ने दृढतरं कम्पयन्निव मे मनः ॥ २१
स तु मामब्रवीद्राजन्मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ॥ २२
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ।
स वर्ष्मवान्महाकायस्ततो मामभ्यधावत ॥ २३
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ २४
ततः शरैर्दीप्तमुखैः पत्रितैरनुमन्त्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ २५
तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम् ॥ २६
पुनस्तानि शरीराणि एकीभूतानि भारत ।
अदृश्यन्त महाराज तान्यहं व्यधमं पुनः ॥ २७
अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः ।
एकीभूतस्तदा राजन्सोऽभ्यवर्तत मां युधि ॥ २८
यदाभिभवितुं बाणैर्नैव शक्नोमि तं रणे ।
ततोऽहमस्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ २९
न चैनमशकं हन्तुं तदद्भुतमिवाभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ ३०
भूयश्चैव महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ ३१
स्थूणाकर्णमयोजालं शरवर्षं शरोल्बणम् ।
शैलास्त्रमश्मवर्षं च समास्थायाहमभ्ययाम् ।

---

किरातस्तु. — $^b$) G (G$_2$ missing) M सुमहद्धनुः. — $^c$) Ś$_1$ K B$_4$ D$_{1-3.5}$ अभ्याहनद्; T$_2$ G$_3$ अभ्याजघ्नद्; M$_1$ अभ्यजघ्ने; M$_2$ अभिजघ्ने. — $^d$) S (except T$_1$; G$_2$ missing) मेदिनीं (for मे मनः).

**23** G$_2$ missing (cf. v.l. 1). — $^c$) K$_3$ B (B$_1$ marg.) Dn D$_{3.4.6}$ धनुष्मान् (B$_1$ orig. धर्मवान्) (for वर्ष्मवान्). D$_5$ पार्वतीयो महामायस्. — $^d$) D$_5$ तथा माम्. Ś$_1$ K$_{1-3}$ Dn D$_{1.2.4.6}$ M$_1$ अभ्यभाषत; D$_5$ अभिभाष्य वै.

**24** G$_2$ missing (cf. v.l. 1). — $^a$) D$_5$ मेघैर् (for ततो). K$_3$ D$_{1.2.6}$ T$_2$ (before corr.) G$_1$ गिरिर् (for गिरिम्). — $^b$) Ś$_1$ K$_{1.2}$ स (for मां). — $^d$) K$_{1.2}$ सहसा (for महता).

**25** G$_2$ missing (cf. v.l. 1). — $^b$) Ś$_1$ K$_{1.2}$ सपत्रैर्; K$_{3.4}$ D$_{1-3}$ सुपत्रैर्; B Dn D$_{4.6}$ यंत्रितैर्; Dc प्रहितैर्; D$_5$ पातितैर्; T$_2$ G (G$_2$ missing) पतितैर्. T$_1$ M$_1$ नागैरिव विषोल्बणैः.

**26** G$_2$ missing (cf. v.l. 1). — $^c$) Ś$_1$ K$_{1.2}$ तस्य (for चास्य). — $^d$) Ś$_1$ K D$_{1-3.5}$ अपीडयं (for अताडयम्).

**27** G$_2$ missing (cf. v.l. 1). — $^a$) K$_4$ D$_{1.2}$ तत° (for पुन°). — $^b$) To avoid the hiatus, Ś$_1$ K$_{1.2}$ चैकीभूतानि; M त्वेकी°. — $^c$) K$_{1.2}$ अभ्यपश्यन् (for अदृश्यन्त). — $^d$) Ś$_1$ K D$_{1-3}$ शरैः (for पुनः).

**28** G$_2$ missing (cf. v.l. 1). — $^b$) S (G$_2$ missing) महान् (for बृहत्). B$_2$ तथा; T$_2$ G$_{3.4}$ ततः (for पुनः). — $^c$) K$_{1.2}$ B$_2$ एकीभूतं; K$_{3.4}$ D$_{1.2}$ एकीभूत्वा. Ś$_1$ K$_{1.2}$ महानेकः; K$_{3.4}$ Dc D$_{1-3}$ तथानेकः (for तदा राजन्).

**29** G$_2$ missing (cf. v.l. 1). — $^b$) K$_{3.4}$ D$_{1-3}$ न वै; Dn न च (for नैव). T$_2$ G$_{3.4}$ [अ]हं (for तं). — $^c$) B Dc Dn$_1$. n$_3$ D$_{4-6}$ महास्त्रम् (for ऽहमस्त्रम्). Dn$_2$ ततो ह्यस्त्रं समातिष्ठं.

**30** G$_2$ missing (cf. v.l. 1). — $^a$) Ś$_1$ K B$_4$ D$_{1-3}$ तेनापि ना° (for न चैनम°). B$_4$ जेतुं; T$_1$ योद्धुं; T$_2$ G (G$_2$ missing) M वोढुं (for हन्तुं). — $^b$) Epic tag! Cf. Hopkins, *Great Epic*, App. A (Parallel Phrases), No. 83. Ś$_1$ K D$_{1-3}$ तद्भूतमतिवीर्यवत् (K$_{1.4}$ °वान्).

**31** G$_2$ missing (cf. v.l. 1). — $^a$) K$_{3.4}$ D$_3$ भूयश्चैनं; B Dc Dn D$_{4.6}$ भूय एव; S (G$_2$ missing) तत्रापि च. — $^c$) B$_4$ अस्त्रजालेन; D$_5$ °योगेन; T$_1$ °पूतेन; T$_2$ G (G$_2$ missing) °वर्षेण.

**32** G$_2$ missing (cf. v.l. 1). — $^a$) Ś$_1$ K$_{3.4}$ D$_{1-3}$ स्थूणाकर्णं च जालं च; K$_1$ °भूतं चराजालं; K$_2$ °कले य राजा च; B Dc Dn D$_{4.6}$ °कर्णमथो जालं; D$_5$ °कर्णमथो बाणं; T$_1$ °कर्णमिवाजालं; T$_2$ (before corr.) °कारं महोजालं. — $^b$) Ś$_1$ शरवर्षं रणोत्कटं; K$_1$ °वर्षा रणोद्भवं; K$_2$ °वर्षरणोद्भवं; B Dc Dn D$_{4.6}$ °वर्षमथोल्बणं; D$_5$ M$_1$ °वर्षं महो°. — $^c$) M तु (for च). Ś$_1$ K$_{1.2}$ शलभास्त्रं चाश्मवर्षं; K$_{3.4}$ B D शलभास्त्रमश्मवर्षं; T$_1$ शैलास्त्रेणात्मवर्षं तु; G$_1$ शलभास्त्रमहावर्षं. — $^d$) T$_1$ [अ]हमर्दयं; T$_2$ G$_{3.4}$ [अ]हमभ्यगां (for [अ]हमभ्ययाम्). Ś$_1$ K$_{1.2}$ समादायाहमभ्ययां; D$_3$ समास्थायास्त्रमभ्ययां; D$_5$ वेगमास्थाय शस्त्रवित्. — $^e$) Ś$_1$ K$_{1.2}$ Dc D$_{1-3.5}$ T G$_{1.3.4}$ M$_1$ जग्राह; K$_3$ संयामे (for जग्रास);

जग्रास प्रहसंस्तानि सर्वाण्यस्त्राणि मेऽनघ ॥ ३२
तेषु सर्वेषु शान्तेषु ब्रह्मास्त्रमहमादिशम् ।
ततः प्रज्वलितैर्बाणैः सर्वतः सोपचीयत ।
उपचीयमानश्च मया महास्त्रेण व्यवर्धत ॥ ३३
ततः संतापितो लोको मत्प्रसृतेन तेजसा ।
क्षणेन हि दिशः खं च सर्वतोऽभिविदीपितम् ॥ ३४
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥ ३५
ततोऽहं धनुरादाय तथाक्षय्यौ महेषुधी ।
सहसाभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ॥ ३६
हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ ३७
व्यायामं मुष्टिभिः कृत्वा तलैरपि समाहतौ ।
अपातयच्च तद्भूतं निश्चेष्टो ह्यगमं महीम् ॥ ३८
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ ३९
एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमात्मनः ।
दिव्यमेव महाराज वसानोऽद्भुतमम्बरम् ॥ ४० C. 3. 11976 B. 3. 167. 42 K. 3. 168. 42

---

cf. 36$^d$, 37$^b$. $K_3$ प्राग्रसत्; B D (except $D_{1-3.5}$) $T_2$ $M_2$ प्रसभं; $G_4$ प्रथमं (for प्रहसन्). — $^f$) B D (except $D_{1-3}$) M मे नृप ($B_4$ शृणु); $T_1$ वै नृप; $T_2$ $G_{1.3.4}$ भारत (for मेऽनघ).

**33** $G_2$ missing (cf. v.l. 1). — $^a$) $Ś_1$ $K_{1-3}$ दग्धेषु; $K_4$ B Dc Dn $D_{4.6}$ जग्धे°; $D_5$ ग्रस्ते° (for शान्ते°). — $^b$) $Dn_{2}$. $n_3$ $T_2$ $G_3$ महद् (for अहम्). — $^d$) $Ś_1$ $K_{1.2}$ $D_5$ पर्वतः (for सर्वतः). $Ś_1$ K स्सोपचीयते; $K_{2.4}$ B $D_{1.2.4-6}$ सोपचीयते; $D_3$ $T_1$ $G_{1.4}$ चोपचीयते. $M_2$ सर्वस्तैरुपचीयत. — $^e$) Hypermetric! $Ś_1$ $K_{1.2}$ अपचीयमान°. $T_1$ $M_1$ तु (for च). $D_5$ T $G_{3.4}$ M तदा; $G_1$ तथा (for मया). — $^f$) S ($G_2$ missing) सहा($M_1$ मया)स्त्रेणाभ्यवर्तत.

**34** $G_2$ missing (cf. v.l. 1). — $^a$) $B_{1-3}$ Dc Dn $D_{4.6}$ ततः संतापिता लोका; $D_5$ ततः संदीपितं लोके. — $^b$) $Ś_1$ K $D_{1-3}$ मद्विसृष्टैः सुतेजनैः ($D_{1.2}$ °सैः); $D_5$ तत्प्रसूतैः सुतेजनैः. — $^c$) $T_2$ (before corr.) $G_4$ दिवं (for दिशः). — $^d$) $K_3$ सुविदी°; B Dn $D_{4-6}$ $G_3$ हि विदी°; Dc $M_2$ दिवि दी°; $T_1$ $G_1$ [अ]भिविराजितं; $G_4$ [अ]पि विदी°.

**35** $G_2$ missing (cf. v.l. 1). — After 35$^a$, $D_{1.2}$ ins.:

838* ततोऽहमपतं महीम् ।
ततः प्रहस्य तद्भूतं.

— $^b$) $Ś_1$ K $B_4$ $D_{1-3.5}$ व्यनाशयत्; $T_2$ $G_{1.3.4}$ व्यशाम°. — $K_{2.4}$ om. 35$^{cd}$; $K_3$ om. 35$^c$–48$^a$. — $^c$) $Ś_1$ $K_1$ $D_{2.3}$ च; $T_2$ $G_{1.3.4}$ नि- (for तु). $D_1$ ब्रह्मास्त्रेण च ते राजन्.

**36** $G_2$ missing (cf. v.l. 1). $K_3$ om. 36 (cf. v.l. 35). — $^b$) = 20$^b$. $B_{1.2.4}$ Dn $D_{4.6}$ तथाक्षय्ये; $D_1$ तावक्षय्यौ; $T_2$ $G_3$ तदाक्षय्यौ. — $^d$) $B_1$ transp. अपि and अस्त्राणि. $Ś_1$ $K_{1.2}$ $T_1$ तत्तानि; $G_1$ तानि च (for तान्यपि).

**37** $G_2$ missing (cf. v.l. 1). $K_3$ om. 37 (cf. v.l. 35). — $^a$) $D_5$ तेष्वस्त्रेषु च सर्वेषु; $T_2$ $G_{1.3.4}$ एतेष्वस्त्रेषु भूतेन ($G_1$ सर्वेषु). — $^b$) $G_1$ [अ]पि (for च). $M_2$ भक्षिते चायुधे तदा. — $B_2$ om. 37$^{cd}$. — $^c$) $T_1$ धर्मतस्तस्य भू°.

**38** $G_2$ missing (cf. v.l. 1). — $K_3$ om. 38 (cf. v.l. 35). — $^b$) $T_2$ $G_{3.4}$ अभि- (for अपि). $Ś_1$ $K_{1.2}$ $D_{1.3}$ समाहनत्; $K_4$ °हरत्; $B_1$ Dn °गतैः; $B_4$ $D_2$ °हनम्; $D_{4.6}$ °गतौ; $T_1$ °ततौ; $G_1$ °दितौ (for °हतौ). $D_5$ प्रहरंश्च तलैरपि. — $D_3$ om. 38$^c$–39$^d$. — $^c$) B Dc $D_{1.2.4-6}$ अपारयन्. $D_{1.2}$ तु (for च). $D_{1.2}$ तद्रूपं; $T_1$ तं भूतं; $G_1$ मां भूतं (for तद्भूतं). — $D_{1.2}$ om. 38$^d$–39$^a$. — $^d$) $K_4$ निश्चेष्टोऽभ्यगमन्; B Dc Dn $D_{4.6}$ निश्चेष्टमगमं ($B_4$ निश्चेष्टो न्यपतन्); $T_1$ निश्चेष्टश्चागमन्; $T_2$ $G_{3.4}$ अहं चापतयं; $G_1$ निश्चेष्टश्चापतं; M निश्चेष्टश्चागमं.

**39** $G_2$ missing (cf. v.l. 1). — $K_3$ $D_3$ om. 39 (cf. v.l. 35. 38); $D_{1.2}$ om. 39$^a$ (cf. v.l. 38). — After 39$^{ab}$, $T_2$ $G_{3.4}$ ins.:

839* ततश्चिन्तां समगमं पूजयिष्याम्यहं पुनः ।
इति पुष्पाणि संगृह्य सैकतं शंकरं प्रभुम् ।
पूजयिष्यंस्तमद्राक्षं किरातं पुष्पधारिणम् ।
ततश्चान्यानि पुष्पाणि पूजयिष्यन्पुनः पुनः ।
तानि सर्वाणि दृष्ट्वाहं किरातस्य च मूर्धनि ।
इति कृत्वा महादेवं प्रणतोऽस्मि पुनः पुनः ।
[Cf. 171*.]

— $^c$) $T_2$ $G_{3.4}$ $M_2$ ततः (for सह). — $^d$) $Ś_1$ $K_{1.2}$ पश्यतो मेऽद्भुतं महत्; $K_4$ $D_{1.2}$ तदद्भुतमिदं महत्; $D_5$ तदद्भुतमिवाभवत् (= 30$^b$).

**40** $K_3$ om. 40 (cf. v.l. 35). $G_2$ resumes. — $^a$) S मुख्यं (for एवं). — $^b$) B D (except $D_{1-3.5}$) आस्थितः (for आत्मनः). — $^c$) $Ś_1$ $K_{1.2}$ $D_{3.5}$ एकं; $T_2$ G M चैव

C. 3. 11977
B. 3. 167. 43
K. 3. 168. 43

हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ ४१
अदृश्यत ततः साक्षाद्भगवान्गोवृषध्वजः ।
उमासहायो हरिदृग्बहुरूपः पिनाकधृक् ॥ ४२
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोऽस्मीति परंतप ॥ ४३
ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ ।
प्रादान्ममैव भगवान्वरयस्वेति चाब्रवीत् ॥ ४४
तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते ।
यत्ते मनोगतं वीर तद्ब्रूहि वितराम्यहम् ।
अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ॥ ४५
ततः प्राञ्जलिरेवाहमस्त्रेषु गतमानसः ।
प्रणम्य शिरसा शर्वं ततो वचनमाददे ॥ ४६
भगवान्मे प्रसन्नश्चेदीप्सितोऽयं वरो मम ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ।
ददानीत्येव भगवानब्रवीत्त्र्यम्बकश्च माम् ॥ ४७
रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव ।
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं प्रभुः ॥ ४८
उवाच च महादेवो दत्त्वा मेऽस्त्रं सनातनम् ।
न प्रयोज्यं भवेदेतन्मानुषेषु कथंचन ॥ ४९
पीड्यमानेन बलवत्प्रयोज्यं ते धनंजय ।
अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेः ॥ ५०

---

(for एव). $T_1$ दिव्यमप्रतिमं चित्रं. — $^d$) $T_1$ वसानोंबरमुत्तमं.

**41** $K_3$ om. 41 (cf. v.l. 35). — $^a$) $K_4$ तद्रूपरूपं; S मृगतनुं ($G_{2.3}$ °युतां) तां (for किरातरूपं). Ś$_1$ $K_{1.2.4}$ तद्; $D_{1.2}$ स (for च). — $M_1$ om. 41$^{cd}$. — $^c$) Ś$_1$ $B_{1.3}$ Dc $D_{5.6}$ $G_2$ $M_2$ स्वं रूपं. — $^d$) $K_{1.2}$ transp. तस्थौ and तत्र.

**42** $K_3$ om. 42 (cf. v.l. 35); $K_2$ om. 42$^a$–44$^b$. — $^a$) S सोऽदृश्यत. — $^b$) Ś$_1$ $K_1$ $D_5$ भगवान्वै ($D_5$ °न्मे) वृषध्वजः; $T_1$ भगवान्वृषभध्वजः. — $^c$) $K_1$ वृषधृग्; B व्याडधृग्; $Dc_1$ $D_4$ व्यालधृद्; $Dc_2$ Dn $D_6$ व्यालधृग् (for हरिदृग्). S धनुर्गृह्य तथा पाणौ. — $^d$) Ś$_1$ पिनाकधृत्.

**43** $K_{2.3}$ om. 43 (cf. v.l. 35, 42). — $^a$) $T_1$ भगवान् (for समरे). — $^b$) $T_1$ च (for [ए]व). $K_4$ $D_1$ $T_1$ °मुखस्थितः; $B_4$ $D_3$ °मुखं स्थितः; $D_{2.5}$ °मुखः स्थितः.

**44** $K_3$ om. 44 (cf. v.l. 35); $K_2$ om. 44$^{ab}$ (cf. v.l. 42). — $^a$) $D_{1.2}$ तु; $D_5$ स्वं (for तद्). — $^b$) T $G_{1-3}$ तूणी (for तूणौ). Ś$_1$ तूणौ तौ चाक्षय्यौ तथा; $K_1$ $D_{1-3.5}$ तूणौ तौ चाक्षयौ शरैः ($K_1$ °रः); $K_4$ तूणौ तावेव चाक्षयौ. — $^c$) Ś$_1$ $K_{1.2}$ प्राणान् (for प्रादान्). — $^d$) Ś$_1$ $K_{1.2}$ $T_1$ $G_1$ धारय° (for वरय°).

**45** $K_3$ om. 45 (cf. v.l. 35). — $^c$) Ś$_1$ तात; $T_1$ वत्स (for वीर). $B_2$ Dn $D_{4.6}$ मनोगतं वीर यत्ते (by transp.). — $^d$) $T_1$ transp. तद् and ब्रूहि. — $K_1$ om. 45$^e$–46$^b$. — $^e$) Ś$_1$ $K_4$ $D_{1.2.5}$ °मपास्यैकं; $K_2$ °मपाशैकं; $B_4$ °मपास्याद्य; $G_1$ M °मपास्यान्यद्.

**46** $K_3$ om. 46 (cf. v.l. 35); $K_1$ om. 46$^{ab}$ (cf. v.l. 45). — $^b$) S कृतमानसः. — $^c$) Ś$_1$ $K_{1.2}$ सहसा; B Dn $D_{4.6}$ $T_2$ $G_3$ मनसा (for शिरसा). Ś$_1$ $K_4$ $B_{1.2}$ $D_{1.2.4}$ $T_1$ $G_2$ $M_2$ सर्वं; $K_2$ सर्वें; $Dc_1$ (? gloss) शंभुं; $G_1$ $M_1$ देवं (for शर्वं). $D_5$ मूर्ध्ना प्रसाद्य वरदं. — $^d$) Ś$_1$ Dc अब्रवीत् (corrupt); $K_{1.2}$ $D_{2.3}$ $T_1$ अब्रुवम्; $K_4$ $D_1$ अब्रुवन् (for आददे). $D_5$ अस्त्रार्थं समनोदयं.

**47** $K_3$ om. 47 (cf. v.l 35). — $^a$) $D_{3.5}$ $T_1$ $G_1$ भगवन् (for भगवान्). — $^d$) Ś$_1$ संति हि; $K_{1.2.4}$ $D_{1-3}$ संति वै (for कानिचित्). — $^e$) $K_4$ $Dn_2$ $D_{1-3}$ $T_1$ $G_1$ ददानी° (as in text); the rest ददामी°. — $^f$) Ś$_1$ $K_4$ $B_4$ $D_{1-3.5}$ तदा; $K_{1.2}$ तथा (for च मां).

**48** Before 48, $K_4$ $D_{1.2}$ ins. श्रीरुद्र उ°. — $K_3$ om. 48$^a$ (cf. v.l. 35). — $^c$) S (except $T_2$ $G_{3.4}$) [अ]पि मे (for मम). $B_1$ प्रददौ परमप्रीतः; $D_5$ अथ प्रादान्मम प्रीतः. — $^d$) $K_1$ (*sup. lin.* as in text) विभुः; $B_{1.3}$ Dc Dn $D_{4.6}$ महत्; $B_2$ च तत्; $D_5$ तदा (for प्रभुः).

**49** $^b$) $K_2$ Dn $D_5$ दत्वा चास्त्रं; S (by transp.) दत्वास्त्रं मे ($T_1$ रौद्रास्त्रं मे). — $^d$) Ś$_1$ $K_{1.3}$ $D_5$ $T_1$ मा($D_5$ $T_1$ म)नुष्येषु. — After 49, $K_3$ B Dc Dn $D_{4-6}$ ins.:

840* जगद्विनिर्दहेदेवमल्पतेजसि पातितम् ।

[$K_3$ $B_{1-3}$ एतद् (for एवम्).]

**50** $^a$) $K_2$ बलिना (for बलवत्). — $^b$) B Dc Dn $D_{4-6}$ प्रयोज्यं स्याद्; $T_2$ G प्रयोक्तव्यं (for प्रयोज्यं ते). M परंतप (for धनं°). — $^c$) Ś$_1$ K $D_{1-3}$ तु ($K_4$ ते) प्रतीघाते (for प्रतिघाते च). — $^d$) $B_{1.2}$ Dc Dn $D_{4-6}$ $M_2$ प्रयोजयेत्; $D_3$ $T_1$ $G_1$ $M_1$ °जय.

**51** $^a$) Ś$_1$ तमप्रतिहतं; $K_2$ $B_2$ $T_2$ $G_{2-4}$ ततो°; K

तदप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ ५१
उत्सादनममित्राणां परसेनानिकर्तनम् ।
दुरासदं दुष्प्रहसं सुरदानवराक्षसैः ॥ ५२
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ॥ ५३

इति श्रीमहाभारते आरण्यकपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

# १६४

अर्जुन उवाच ।
ततस्तामवसं प्रीतो रजनीं तत्र भारत ।
प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः ॥ १
व्युषितो रजनीं चाहं कृत्वा पूर्वाह्णिकक्रियाम् ।
अपश्यं तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ॥ २
तस्मै चाहं यथावृत्तं सर्वमेव न्यवेदयम् ।
भगवन्तं महादेवं समेतोऽस्मीति भारत ॥ ३
स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः ।
दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ॥ ४
समेत्य लोकपालैस्तु सर्वैर्वैवस्वतादिभिः ।
द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ॥ ५
एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः । C. 3. 11997 B. 3 168. 6 K. 3. 169. 6

B तदा° ; G1 ततः प्रीतियुतं. — b) Ś1 K D1. 2 °वारणं; D3 °बाधनं; M1 °षेधकं. — d) D3 G1. 2. 4 °न्ने वृषभध्वजे.

**52** b) Ś1 K D2. 3 °विकर्षणं; B2. 4 Dc T1 M °निकृंतनं; D5 °विनाशनं; T2 G °सैन्यविकर्तनं.

**53** D5 om. 53cd. — c) K3. 4 D1. 3 प्रेक्ष्य(K3 °क्ष)माणस्य; B4 T2 G2–4 M पश्यतश्चैव (for प्रेक्षतश्चैव). T1 पश्यतश्च स मे देवस्; G1 स पश्यतश्च मे देवस्.

Colophon. — *Major parvan:* Ś1 K1. 2 T G आरण्य (G1 श्रीमदारण्य). — *Sub-parvan:* Omitting sub-parvan name, K1 B Dc Dn2. n3 D6 T2 G3 mention only गंधमादनवास (followed by उत्तरकैरात in Dc); K3 D1 likewise, only लोमशतीर्थयात्रा (followed by गंधमादनवास in K3); K4 D5, only उत्तरकैरात; and finally Dn1 D3. 4, only गंधमादनप्रवेश (D4 °प्रवास). — *Adhy. name:* D1. 2 अर्जुनप्रवासकथनं; G1 अर्जुनास्त्रप्रदाने अर्जुनवाक्यं. — *Adhy. no.* (figures, words or both): Dn1. n2 166; Dn3 S 167 (M2 170 [*sup. lin.* 160]); D1 172. — *Śloka no.:* Dn D6 57; D1 56. — After the colophon, G1 cont.: श्रीभगवतो महापुरुषस्य विष्णोरंशावतारभृ(? read भू)तेन सत्यवतीनन्दनेन श्रीपराशरात्मजेन शुकतातेन वेदव्यासनाम्ना कृष्णद्वैपायनेनोक्तं अष्टादशपर्वाद्यलंकृतं श्रीमहाभारताख्यं पंचमो वेदः । श्रुतौ आरण्यके पर्वणि पूर्वारण्याख्यं सप्तषष्ट्यधिकशततमाध्यायैर्निर्मितं सप्तषष्ट्यधिकद्विशततमषट्साहस्रैः श्लोकैरलंकृतं पूर्वारण्याख्यं । समाप्त्यधिकशततमा (sic) ।

## 164

**1** a) T2 G3. 4 अथ सं- ; G2 अथ सु- (for अवसं). D5 रात्रिं (for प्रीतो). — b) D5 प्रीतोहं (for रजनीं). — c) Ś1 K D1–3 प्रसादं देवदेवाद्वै. — d) Ś1 K1. 2. 4 D1–3 तं प्राप्य विपुलं तदा.

**2** a) Ś1 K2 व्युष्य तां ; K1. 3 व्युषितां; K4 D1. 2 उष्य तां ; S (except T2 G3) उषित्वा (for व्युषितो). — b) Ś1 पूर्वान्हिकक्रियां; K1 पौर्वान्हिकीक्रियां; K2 Dc D5 G1. 2 पौर्वाह्णिकीं क्रियां; K3. 4 D2 पूर्वान्हिकी(D2 °कीं)क्रियां; B Dn D4. 6 M पौर्वाह्णि(D6 °न्हि)कीः क्रियाः; D1 पूर्वाह्णिकीं क्रियां; D3 पूर्वान्हिकक्रियः; T1 G4 पूर्वाह्णिकक्रियं. — c) Ś1 K1. 2 D3. 5 अथ तं विप्रं (for तं द्विजश्रेष्ठं). — d) Ś1 K D1–3 पथि (for पुरा).

**3** a) Ś1 K D1. 2 तस्याहं तद् ; M तस्मादहं (for तस्मै चाहं). T1 G1 पुरा° (for यथा°). — d) Ś1 K1 समीतो (for समेतो). Ś1 D1. 2 कौरव (for भारत).

**5** a) S समेतं (T1 °तैर्). Ś1 K B1. 3. 4 Dc D1–3. 5 त्वं (for तु). — c) K3. 4 D1–3 पश्चाद् (for [अ]नघ).

**6** a) Ś1 K1. 3 D5 तु; K4 D1 च (for स). K2 T1 महाराज (for स मां राजन्). — b) D1. 2 समाश्लिष्य (for

C. 3. 11997 B. 3. 168. 6 K. 3. 169 6 अगच्छत्स यथाकामं ब्राह्मणः सूर्यसंनिभः ॥ ६
अथापराह्णे तस्याह्नः प्रावात्पुण्यः समीरणः ।
पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन् ॥ ७
दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च ।
शैशिरस्य गिरेः पादे प्रादुरासन्समीपतः ॥ ८
वादित्राणि च दिव्यानि सुघोषाणि समन्ततः ।
स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः ॥ ९
गणाश्चाप्सरसां तत्र गन्धर्वाणां तथैव च ।
पुरस्तादेवदेवस्य जगुर्गीतानि सर्वशः ॥ १०
मरुतां च गणास्तत्र देवयानैरुपागमन् ।
महेन्द्रानुचरा ये च देवसद्मनिवासिनः ॥ ११
ततो मरुत्वान्हरिभिर्युक्तैर्वाहैः स्वलंकृतैः ।
शचीसहायस्तत्रायात्सह सर्वैस्तदामरैः ॥ १२

एतस्मिन्नेव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राजँल्लक्ष्म्या परमया युतः ॥ १३
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम् ॥ १४
ते मामूचुर्महाराज सान्त्वयित्वा सुरर्षभाः ।
सव्यसाचिन्समीक्षस्व लोकपालानवस्थितान् ॥ १५
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम् ।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः ॥ १६
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।
प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवत्प्रभो ॥ १७
गृहीतास्त्रस्ततो देवैरनुज्ञातोऽस्मि भारत ।
अथ देवा ययुः सर्वे यथागतमरिंदम ॥ १८
मघवानपि देवेशो रथमारुह्य सुप्रभम् ।

आश्लिष्य च ). — $^{c}$) Ś1 स गच्छत ; K1. 2 प्रत्यागच्छद् (for अगच्छत्स). T1 G1 च (for स). D5 महाकायो (for यथा°).

**7** $^{a}$) A few MSS. अथापराह्ने. — $^{b}$) Ś1 K1. 2 प्रवात् ; D3 T G1. 3. 4 M2 प्रायात्. A few MSS. पुण्य- (for पुण्यः). — $^{c}$) T2 G3. 4 कुर्वन् (for लोकं). — $^{d}$) Ś1 K1. 2 कुर्वन्वितिमिरा दिशः ; T2 G3. 4 पुण्यगंधान्समुद्वहन्.

**8** $^{b}$) Ś1 K D1. 2. 5 बहूनि ; Dc Dn2 D3 M2 वनानि (for नवानि). — $^{d}$) Ś1 K D1–3. 5 न(K4 सु)राधिप ; T1 G1 M1 समंततः (for समीपतः) ; cf. $9^{b}$.

**9** T1 om. $9^{ab}$. — $^{a}$) G1 M1 सर्वाणि (for दिव्यानि). — $^{b}$) K4 B4 Dn D4. 6 सुघोराणि. — $^{d}$) Ś1 K D1–3. 5 श्रूयंते स्म (for अश्रूयन्त).

**10** $^{a}$) Ś1 K1 गणै° (for गणा°). K2 गणैश्चाप्सरसस्तस्य. — Ś1 K1–3 D5 om. (? hapl.) $10^{b}$–$11^{a}$ ; K4 om. $10^{bcd}$. — $^{c}$) D1–3 S पुरःसरा (G4 परस्परं) देवपतेर्.

**11** Ś1 K1–3 D5 om. $11^{a}$ (cf. v.l. 10). — $^{b}$) Ś1 K D5 स्वलंकृतैः (for उपागमन्). — Ś1 K2 om. $11^{c}$–$12^{b}$ ; K1 om. $11^{cd}$. — $^{d}$) Dn D4. 6 ये च (for देव-).

**12** Ś1 K2 om. $12^{ab}$ (cf. v.l. 11). — $^{b}$) K1. 3. 4 D1–3 वातयुक्तैः ; Dc2 दिव्यैर्वाहैः ; T1 युक्तवाहे ; T2 G2–4 युक्तो वाहैः ; M1 युक्ते वाहे (for युक्तैर्वाहैः). K1 T2 G2–4 M2 अलंकृतैः ; T1 M1 स्वलंकृतः. — $^{c}$) Ś1 K D5 तत्रासीत् ; T2 G3. 4 M1 तत्रागात् (for तत्रायात्). — $^{d}$) Ś1 K D1–3. 5 दिवालयैः ; B4 S सुरैस्तदा (for तदामरैः).

**13** $^{c}$) D5 चात्मानं ; G4 तं कालं (for मां राजन्).

**14** $^{a}$) Ś1 K D1–3. 5 अपरं° (for दक्षिण°). — $^{b}$) D5 स्थितं यमं (for व्यव°). — $^{c}$) Ś1 K D1–3. 5 पावकं चैव ; Dc देवराजानं (for देवराजं च). — $^{d}$) Ś1 K D1–3. 5 अवस्थितौ ; B4 Dc G1 व्यवस्थितं (for अवस्थितम्).

**15** $^{b}$) B1–3 Dc Dn D4. 6 नरर्षभ (for सुर°). — $^{c}$) Ś1 K D1–3. 5 समीक्षास्मान् ; B Dc Dn D4. 6 निरीक्षास्मान् (for समीक्षस्व). — $^{d}$) Dn3 D5 T1 व्यवस्थितान्.

**16** $^{a}$) T1 °कार्यप्रवृत्त्यर्थं ; T2 G °कार्यप्रसिद्ध्यर्थं. — $^{c}$) Ś1 तदस्मत्तो (for अस्मत्तोऽपि).

**17** $^{a}$) A few MSS. प्रणतो (for प्रय°). — $^{c}$) Ś1 K1 तदस्त्राणि ; T1 महाराज ; T2 G महास्त्राणि (G1 अहं राजन्). — $^{d}$) T1 शस्त्राणि ; G1 अस्त्राणि (for महान्ति). B Dn D4–6 विधिवद्विभो ; B2m T G विविधानि च.

**18** $^{c}$) D5 देवाश्चापि (for अथ देवा). Ś1 K D1–3. 5 गताः (for ययुः). T1 M केचिद् (for सर्वे).

**19** $^{a}$) Dc D5 T2 G2–4 भगवान् (for मघवान्). Ś1 K D1–3. 5 G1 अथ (for अपि). S मां देवो (for देवेशो). — $^{b}$) S (except M2) आरोप्य (for आरुह्य). D5 शोभनं ; T1 सुप्रभः (for सुप्रभम्). — $^{c}$) B Dc Dn D4. 6 स्वर्गं ; D2. 3 स्वर्गे (for वाक्यं). T1 अवोचद्वाक्यं मधुरं ; T2 G M उवाच वाक्यं भगवान् (G1 मधुरं). — $^{d}$) S महायशाः (for सुरा°). B Dc Dn D2–4. 6 गंतव्यं फाल्गुन (D2. 3 पांडव) त्वया. — After 19, D2. 3 read 23 (for the first time), which in D2 is followed by a *repetition* of $19^{cd}$.

उवाच भगवान्वाक्यं स्मयन्निव सुरारिहा ॥ १९
पुरैवागमनादस्माद्वेदाहं त्वां धनंजय ।
अतः परं त्वहं वै त्वां दर्शये भरतर्षभ ॥ २०
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत् ।
तपश्चेदं पुरा तप्तं स्वर्गं गन्तासि पाण्डव ॥ २१
भूयश्चैव तु तप्तव्यं तपः परमदारुणम् ।
उवाच भगवान्सर्वं तपसश्चोपपादनम् ॥ २२
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ।
विदितस्त्वं हि देवानामृषीणां च महात्मनाम् ॥ २३
ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम ।
आचार्यं वरये त्वाहमस्त्रार्थं त्रिदशेश्वर ॥ २४

इन्द्र उवाच ।

क्रूरं कर्मास्त्रवित्तात करिष्यसि परंतप ।
यदर्थमस्त्राणीप्सुस्त्वं तं कामं पाण्डवाप्नुहि ॥ २५

अर्जुन उवाच ।

ततोऽहमब्रुवं नाहं दिव्यान्यस्त्राणि शत्रुहन् ।
मानुषेषु प्रयोक्ष्यामि विनास्त्रप्रतिघातनम् ॥ २६
तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप ।
लोकांश्चास्त्रजितान्पश्चाल्लभेयं सुरपुंगव ॥ २७

इन्द्र उवाच ।

परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनंजय ।
ममात्मजस्य वचनं सूपपन्नमिदं तव ॥ २८ C. 3. 12019 B. 3. 168 28 K. 3. 169 29

---

**20** a) T2 G2. 3 M2 गमनाद् (for [आ]गमनाद्). K4 D1 तात (for अस्माद्). — b) Ś1 K1. 2 त्वा (for त्वां). — c) K4 इतः; B2 G2 ततः (for अतः). Ś1 K3 च वेदाहं; K1. 2. 4 D1. 2 च वेत्तासि; B1 T1 G1 M2 वै नाहं त्वां; B4 चैवाहं त्वां (for त्वहं वै त्वां). — d) Ś1 K3 D5 दर्शने; K1. 2. 4 D1–3 °नं; Dc2 °येद् (for °ये).

**21** a) K4 D1. 2 त्वया तीर्थेषु सर्वेषु; T1 G1 त्वया हि पुण्य(G1 हिरण्य)तीर्थेषु; T2 G2–4 त्वया तीर्थानि च पुरा. — b) K4 D1. 2 कृतः पूर्वं समाप्लवः; D3 सकृदाप्लवनं कृतं; T1 G1 सदा(G1 °मा)क्रांतमिवासकृत्; T2 G2–4 समाक्रांतानि चासकृत्; M समाक्रांतमिहा(M2 °मतो)सकृत्. — c) T1 G1. 2 M2 [ए]वं (for [इ]दं). Ś1 पुनस्; B Dc Dn D4. 6 महत् (for पुरा). — d) S ततो (G1 तपो) (for स्वर्गं). B1 D5 भारत (for पाण्डव).

**22** a) B Dn D4. 6 च; D1. 2 T1 G4 हि; G1 [अ]भि- (for तु). M1 कर्तव्यं (for तप्तव्यं). — b) B Dc Dn D4. 6 S तपश्चरणमुत्तमं. — After $22^{ab}$, S ins.:

841* दुश्चरं घोरमस्त्राणां तपसश्चोपदर्शनम् ।

[T1 G1 M1 तपोबलकरं तव; M2 तपसश्चोपपादनं (for the posterior half).]

— S cont.: B Dc Dn D4. 6 ins. after $22^{ab}$ (B3, after 22):

842* स्वर्गस्त्ववश्यं गन्तव्यस्त्वया शत्रुनिषूदन ।

[G4 M स्वर्गं (for स्वर्गस्). G2 M गंतव्यं (for °व्यस्). B1. 3 M2 °निसूदन; B4 °निवर्हण.]

— B1. 2. 4 Dn D4. 6 S om. $22^{cd}$. — c) B3 शत्रुस् (for सर्वं). — d) B3 तपश्चरणमुत्तमं; D3 देवानां च पुरंदरः.

**23** a) K4 D1. 2. 5 च; M2 त्वा (for त्वां). — b) K4 D1. 2 दिवं त्वां; D5 स्वर्गं त्वां (for त्रिदिवं). — d) N मुनीनां (for ऋषीणां). D5 भावितात्मनां (for च महा°). — After 23, S ins.:

843* इहस्थः पाण्डवश्रेष्ठ तपः कुर्वन्सुदुष्करम् ।

**24** a) M अब्रवं! — c) K3. 4 B1 D2. 3. 6 T2 G2–4 M वरयेहं त्वाम्; B3. 4 Dc Dn D1. 4. 5 °यं त्वाम्. — d) K1–3 D1–3. 5 S (except T2 G3. 4) त्रिदिवे° (for त्रिदशे°).

**25** a) K3. 4 B D T1 G1. 4 क्रूर- (for क्रूरं). — b) K3. 4 B D T1 G1. 4 भवि° (for करि°). K3. 4 D1. 2 न संशयः (for परं°). — c) B2 G1 M1 यदस्त्रम् (for °र्थम्). Ś1 अस्त्रलिप्सुस्त्वं; K1. 2 अर्थलिप्सुस्त्वं; G1 अस्त्राणि परितः; G4 अस्त्राणीहंतं. — d) D5 तं कामं समवाप्स्यसि; T1 तत्कामं समवाप्नुहि; G1 त्वं तत्कामं समाप्नुहि.

**26** B D1. 2 S om. the ref. — a) M अब्रवं! T1 तमब्रुवं पुनरहं. — d) Ś1 K D3 विनास्त्र(Ś1 K2 °स्त्रं)प्रतिवारणं; B Dc Dn D4. 6 T1 °प्रतिघातनात्; D1 मुक्त्वास्त्रं प्रतिवारणं; D2 (catalectic) विनास्त्रं निवारणं; T2 G3. 4 °स्त्रप्रतिकृंतनं.

**27** a) D5 तेन (for तानि). K1. 2 T1 transp. दिव्यानि and मेऽस्त्राणि. — b) T1 ददस्व हि पुरंदर. — c) Ś1 शक्रजितान्; K D1. 2 शस्त्रजितान्; B1 अस्त्रजितान्; T1 G2 M1 चास्त्रविदां (for चास्त्रजितान्). K3. 4 D1. 2 सर्वान् (for पश्चात्). — d) Ś1 K B4 D1. 2 कामयेहं सुरर्षभ; D5 कर्मणा प्रतिपादये.

**28** b) T2 G3. 4 एवम् (for वाक्यम्). Ś1 परंतप (for धनं°). — d) D1. 2 T1 om. सु-.

**29** a) Ś1 K D1–3. 5 मद्- (for मे). — b) Ś1 K

C. 3 12020
B. 3. 168 29
K 3. 169 30

शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत ।
वायोरग्नेर्वसुभ्योऽथ वरुणात्समरुद्गणात् ॥ २९
साध्यं पैतामहं चैव गन्धर्वोरगरक्षसाम् ।
वैष्णवानि च सर्वाणि नैरृतानि तथैव च ।
मद्गतानि च यानीह सर्वास्त्राणि कुरूद्वह ॥ ३०

अर्जुन उवाच ।

एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत ।
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् ।
दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप ॥ ३१
लोकपालेषु यातेषु मामुवाचाथ मातलिः ।
द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ ३२
संसिद्धस्त्वं महाबाहो कुरु कार्यमनुत्तमम् ।
पश्य पुण्यकृतां लोकान्सशरीरो दिवं व्रज ॥ ३३
इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरम् ।
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ॥ ३४
चोदयामास स हयान्मनोमारुतरंहसः ।
मातलिर्हयशास्त्रज्ञो यथावद्भूरिदक्षिणः ॥ ३५
अवैक्षत च मे वक्त्रं स्थितस्याथ स सारथिः ।
तथा भ्रान्ते रथे राजन्विस्मितश्चेदमब्रवीत् ॥ ३६
अत्यद्भुतमिदं मेऽद्य विचित्रं प्रतिभाति माम् ।
यदास्थितो रथं दिव्यं पदा न चलितो भवान् ॥ ३७
देवराजोऽपि हि मया नित्यमत्रोपलक्षितः ।
विचलन्प्रथमोत्पाते हयानां भरतर्षभ ॥ ३८
त्वं पुनः स्थित एवात्र रथे भ्रान्ते कुरूद्वह ।
अतिशक्रमिदं सत्त्वं तवेति प्रतिभाति मे ॥ ३९
इत्युक्त्वाकाशमाविश्य मातलिर्विबुधालयान् ।

---

$D_{1-3}$ दिव्यान्य° (for सर्वाण्य°). — c) $B_{1.3}$ Dn $D_{4.6}$ [अ]पि; $D_5$ च (for [अ]थ). — d) $T_1$ $G_{2-4}$ मरुतां गणात् (for समरु°).

**30** a) $T_2$ $G_{2-4}$ साध्यात्. $T_2$ $G_{2.3}$ पैतामहाच्. Ś$_1$ $K_2$ दैवं; $K_{3.4}$ देवं (for चैव). — b) Ś$_1$ $K_1$ °राक्षसं; $K_{2.3}$ °राक्षसां; $T_1$ °राक्षसान्. — c) $D_5$ वैष्णवादीनि; $T_1$ °न्यथ (for °नि च). — d) $K_2$ नैऋत्यानि; $T_1$ दैतेयानि. $T_1$ $G_1$ [अ]पराणि; $M_1$ [आ]सुराणि (for तथैव). — e) $K_2$ मरुद्गतानि; $K_3$ मरुद्गणानि; $K_4$ $D_2$ मद्गणानीह; $T_1$ मदीयानि च (for मद्गतानि च). $K_4$ $B_4$ Dn $D_{1.3.4}$ जानीहि; $G_{1.2}$ याम्यानि (for यानीह). — f) Ś$_1$ सर्वाण्यपि; $K_{1.2}$ °णीह; $K_{3.4}$ $D_{1-3}$ °ण्येव (for °स्त्राणि). $T_1$ $G_1$ समाप्स्यसि (for कुरू°). $T_2$ $G_{2-4}$ M कौंतेयास्त्राण्यवाप्स्यसि.

**31** All MSS. om. the ref.! — b) Ś$_1$ $D_4$ तथै° (for तत्रै°). — c) $D_{1.2}$ हरियुतं. — d) $B_1$ उपागतं; T $G_{2-4}$ अवस्थितं (for उपस्थितम्). — e) T $G_{2.3}$ मह्यं (for दिव्यं), and दिव्यं (for पुण्यं). — f) $K_4$ $D_1$ यंत्रा; $D_3$ S युक्तं; $D_5$ युतं (for यत्तं). Ś$_1$ K $D_{1.2}$ तदा (for नृप).

**32** $T_1$ om. $32^{ab}$. — a) Ś$_1$ K $D_{1-3}$ गतेषु लोकपालेषु. — b) Ś$_1$ K $D_{1-3}$ स (for [अ]थ). — d) Ś$_1$ K $B_4$ $D_{1-3.5}$ पुरंदरः; $B_1$ S महाद्युतिः.

**33** a) Ś$_1$ संसिद्धस्त्वां; $K_{1.2}$ °द्धस्तु; $B_{1.3.4}$ Dc Dn $D_{4.6}$ °ध्यस्व; $D_5$ °द्धास्त्रं. — b) N $T_2$ (by corr.) $G_3$ अनंतरं (for अनुत्तमम्). — c) Most MSS. °कृताँल्लोकान्. — After 33, B Dc Dn $D_{4.6}$ ins.:

844* देवराजः सहस्राक्षस्त्वां दिदृक्षति भारत ।

**35** a) $K_4$ $D_{1.2.5}$ नोदयामास. Ś$_1$ $K_{1.2}$ $Dc_2$ $D_5$ $T_1$ सहसा (for स हयान्). — c) B Dc Dn $D_{4.6}$ हयतत्त्वज्ञो. — d) Ś$_1$ तत्र वाजिनः; $K_1$ $T_1$ भूरिदक्षिणं; Dc $D_{1.4.6}$ °दक्षिण.

**36** c) Ś$_1$ $K_2$ अत्रांतरे; $K_1$ तत्र भ्रांते; S तत्राभ्रांतं.

**37** a) Ś$_1$ $K_{1.2}$ $D_3$ मह्यं; B Dc Dn $D_{4.6}$ त्वद्य; T $G_{1.3}$ तेद्य; $M_1$ नोद्य (for मेऽद्य). — b) Ś$_1$ K $D_{1.2}$ च; B Dc Dn $D_{4-6}$ $T_2$ (before corr.) मे; $D_3$ वै; $T_2$ ते; $G_{2-4}$ मा (for माम्). — c) $B_1$ $Dn_2$. $n_3$ $D_5$ $T_1$ $G_{1.2}$ $M_2$ यथा°; $D_1$ तथा° (for यदा°). — d) $K_{1.4}$ B Dc Dn $T_2$ (before corr.) पदान्; $T_1$ तदा (for पदा). B Dc Dn $D_{4.6}$ पदं (for भवान्).

**38** a) $T_1$ हि (for ऽपि). $T_1$ मघवान्; $T_2$ $G_{2-4}$ भगवान् (for हि मया). — b) Ś$_1$ K $D_{1-3}$ एवो° (for अत्रो°).

**39** a) $T_1$ स्थिर (for स्थित). S [अ]द्य (for [अ]त्र). — b) Ś$_1$ $K_{1.2}$ न वै (K नैव) भ्रांतः (for रथे भ्रान्ते). — c) $B_{1.3.4}$ Dc Dn $D_{4-6}$ सर्वं (for सत्त्वं). $B_2$ अतिसर्वमिदं कर्म.

**40** a) Ś$_1$ $K_{1.2}$ आरुह्य (for आविश्य). — After 40, B Dc Dn $D_{2.4.6}$ ins.:

845* स रथो हरिभिर्युक्तो ह्यूर्ध्वमाचक्रमे ततः ।
ऋषयो देवताश्चैव पूजयन्ति नरोत्तम ।
ततः कामगमाँल्लोकानपश्यं वै सुरर्षिणाम् ।

दर्शयामास मे राजन्विमानानि च भारत ॥ ४०
नन्दनादीनि देवानां वनानि बहुलान्युत ।
दर्शयामास मे प्रीत्या मातलिः शक्रसारथिः ॥ ४१
ततः शक्रस्य भवनमपश्यममरावतीम् ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम् ॥ ४२
न तां भासयते सूर्यो न शीतोष्णे न च क्लमः ।
रजः पङ्को न च तमस्तत्रास्ति न जरा नृप ॥ ४३
न तत्र शोको दैन्यं वा वैवर्ण्यं चोपलक्ष्यते ।
दिवौकसां महाराज न च ग्लानिररिंदम ॥ ४४
न क्रोधलोभौ तत्रास्तामशुभं च विशां पते ।
नित्यतुष्टाश्च हृष्टाश्च प्राणिनः सुरवेश्मनि ॥ ४५
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ।
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः ॥ ४६
शीतस्तत्र ववौ वायुः सुगन्धो जीवनः शुचिः ।
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ॥ ४७
मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ।
विमानयायिनश्चात्र दृश्यन्ते बहवोऽमराः ॥ ४८
ततोऽपश्यं वसून्रुद्रान्साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥ ४९
ते मां वीर्येण यशसा तेजसा च बलेन च ।
अस्त्रैश्चाप्यन्वजानन्त संग्रामविजयेन च ॥ ५०
प्रविश्य तां पुरीं रम्यां देवगन्धर्वसेविताम् ।
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः ॥ ५१
ददावर्धासनं प्रीतः शक्रो मे ददतां वरः ।
बहुमानाच्च गात्राणि पस्पर्श मम वासवः ॥ ५२
तत्राहं देवगन्धर्वैः सहितो भूरिदक्षिण । C. 3. 12047 B. 3. 168. 56 K. 3. 169. 56

---

गन्धर्वाप्सरसां चैव प्रभावममितौजसाम् ।

**41** $^{a}$) $T_1$ $G_{1.2}$ दिव्यानि (for देवानां). — $^{b}$) Ś$_1$ $K_1$ $D_3$ विविधानि; $K_2$ विबुधानि; $B_{2-4}$ Dn $D_{4-6}$ [उ]पवनानि; $B_1$ Dc विपुलानि; $G_2$ सुबहूनि (for बहुलानि). Ś$_1$ B Dc Dn $D_{4-6}$ च (for [उ]त). — $^{c}$) Ś$_1$ राजन्; B Dc Dn $D_{4.6}$ शीघ्रं (for प्रीत्या). $D_5$ प्रेक्ष्यमाणान्समेत्याहं.

**42** $^{c}$) Ś$_1$ $K_{2.3}$ $D_{1.3}$ दिव्य-; $K_4$ सर्व- (for दिव्यैः). $T_1$ दिव्यैः कमलगंधैश्च; $T_2$ $G_{2-4}$ दिव्यैः कनकबद्धैश्च; $G_1$ M दिव्यैः कमलषंडैश्च. — $^{d}$) S वृक्षैरन्यैरलंकृतां.

**43** $^{a}$) B Dc Dn $D_{4-6}$ न तत्र सूर्यस्तपति. — $^{b}$) $K_1$ शीतोष्णी; $D_5$ °ष्णौ; S (except $T_2$ $G_3$ $M_2$) °ष्णो. — $^{c}$) Ś$_1$ $D_2$ -पंकौ; $G_1$ -पंके (for पङ्को). $B_{1-3}$ Dc Dn $D_{4.6}$ न बाधते तत्र रजः.

**44** $^{a}$) $D_{1.3}$ $G_1$ च (for वा). — $^{b}$) B Dc Dn $D_{4.6}$ दौर्बल्यं; $T_1$ वैत्रण्यंश् (for वैवर्ण्यं). Ś$_1$ वोप°; $D_{1.2}$ नोप°; $T_2$ (before corr.) $G_4$ चोपलक्षितं. — $^{d}$) $B_{2-4}$ Dc Dn $D_{4.6}$ न ग्लानिररिमर्दन.

**45** $^{b}$) Ś$_1$ गतानां वै; $K_{1.2}$ गताधीनां; $K_{3.4}$ B Dc $D_{3.5}$ शुभ(Dc °भा)धीनां; Dn $D_{4.6}$ सुरादीनां; $D_{1.2}$ सुबुद्धीनां; $T_1$ $G_4$ अशुभंश्च (for अशुभं च). — $^{c}$) Dc $D_{4.6}$ $T_1$ $G_1$ नित्यं (for नित्य-). Ś$_1$ K $B_4$ $D_{1-3}$ transp. तुष्टाः and हृष्टाः. $M_1$ प्र- (for the first च). Dc Dn $D_{4.6}$ ते राजन् (for हृष्टाश्च). — $^{d}$) $K_2$ सुरवेश्मिनः.

**46** $^{d}$) $B_3$ पद्मसौगंधिकप्रभाः; $D_{1.2}$ °कस्तथा; $D_5$ °कैर्युताः.

**47** $K_3$ om. 47. — $^{a}$) S सुखो (for ववौ). B Dc $D_{4.6}$ शीतलश्च ($B_4$ °स्तत्र) सुखो वायुः. — $^{b}$) $K_{1.2}$ $B_{3.4}$ Dc Dn $D_{4.6}$ सुगंधी. $K_{1.2}$ विरजाः (for जीवनः). $D_5$ सौगंधिजीवनः शुभः; S सुगंधो वीजते शुभः ($G_2$ सुखं; $G_4$ शुभं). — $^{d}$) $T_2$ $G_{2-4}$ पद्म° (for पुष्प°).

**48** $^{b}$) Ś$_1$ $K_{1.2}$ $T_1$ मधुरस्वनाः. — $B_2$ om. $48^{c}$–$51^{d}$. — $^{c}$) $B_{1.3.4}$ Dc Dn $D_{4.6}$ विमानगामिनश्च. — $^{d}$) Ś$_1$ $K_{1-3}$ $D_3$ च तथा (for बहवो). $B_{1-3}$ Dn $D_{4.6}$ [अं]बरे; Dc [अ]परे (for [अ]मराः).

**49** $B_2$ om. 49 (cf. v.l. 48). — $^{b}$) $T_1$ $G_1$ साध्यान्देवमरु°. — $^{c}$) Ś$_1$ $K_1$ तत्र (for चैव). — $^{d}$) $T_1$ corrupt.

**50** $B_2$ om. 50 (cf. v.l. 48). — $^{a}$) $T_1$ $G_{1.2}$ $M_2$ तेषां (for ते मां). — $^{b}$) $T_1$ [अ]मलेन (for बलेन). — $^{c}$) $K_2$ Dc $D_{4.6}$ [अ]नुजानंत; $D_5$ [अ]त्यजानंत; S [अ]न्व($T_1$ °नु)जानन्वै (for [अ]न्वजानन्त). — $^{d}$) $K_{2.3}$ $B_{1.3.4}$ D (except $D_5$) संग्रामे (for संग्राम-).

**51** $B_2$ om. 51 (cf. v.l. 48). — $^{a}$) $B_{1.3.4}$ Dc Dn $D_{4.6}$ दिव्यां (for रम्यां). — $^{b}$) $B_{1.3.4}$ D (except $D_{1.2}$) °पूजितां.

**52** $^{b}$) $D_{1.2}$ $T_1$ वदतां; $M_1$ गम° (for दद°). $K_3$ $D_{1.2.4}$ $G_4$ वर; $D_5$ °रं (for °रः).

**53** $^{b}$) Ś$_1$ K $D_{1-3.5}$ संस्तुतो (for सहितो). $K_{2.4}$ S (except $G_4$) भूरिदक्षिणः; $K_3$ B Dc Dn $D_{2.4-6}$ $G_4$ °दक्षिणैः. — $^{d}$) B Dc Dn $D_{4.6}$ शिक्षाणो (for कुर्वाणो).

**54** $^{a}$) $K_{3.4}$ $D_{1.2}$ transp. मे and पुत्रः. B $Dc_1$ Dn

C. 3. 12046 B. 3. 168. 57 K. 3. 169. 56

अस्त्रार्थमवसं स्वर्गे कुर्वाणोऽस्त्राणि भारत ॥ ५३
विश्वावसोश्च मे पुत्रश्चित्रसेनोऽभवत्सखा ।
स च गान्धर्वमखिलं ग्राहयामास मां नृप ॥ ५४
ततोऽहमवसं राजन्गृहीतास्त्रः सुपूजितः ।
सुखं शक्रस्य भवने सर्वकामसमन्वितः ॥ ५५
शृण्वन्वै गीतशब्दं च तूर्यशब्दं च पुष्कलम् ।
पश्यंश्चाप्सरसः श्रेष्ठा नृत्यमानाः परंतप ॥ ५६
तत्सर्वमनवज्ञाय तथ्यं विज्ञाय भारत ।
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः ॥ ५७
ततोऽतुष्यत्सहस्राक्षस्तेन कामेन मे विभुः ।
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि ॥ ५८

इति श्रीमहाभारते आरण्यकपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

# १६५

अर्जुन उवाच ।
कृतास्त्रमभिविश्वस्तमथ मां हरिवाहनः ।
संस्पृश्य मूर्ध्नि पाणिभ्यामिदं वचनमब्रवीत् ॥ १
न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि ।
किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः ।
अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा ॥ २
अथाब्रवीत्पुनर्देवः संप्रहृष्टतनूरुहः ।
अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ॥ ३
अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः ।
ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ॥ ४
अस्त्राणि समवाप्तानि त्वया दश च पञ्च च ।
पञ्चभिर्विधिभिः पार्थ न त्वया विद्यते समः ॥ ५
प्रयोगमुपसंहारमावृत्तिं च धनंजय ।
प्रायश्चित्तं च वेत्थ त्वं प्रतिघातं च सर्वशः ॥ ६

---

$D_{4.6}$ वै ; $Dc_2$ [ए]व (for मे ).

**55** $T_2$ $G_3$ om. 55[ab]. — [a]) $B_{2-4}$ D (except $D_{2.3.5}$) तत्रा॰ (for ततो॰ ).

**56** [a]) $B_4$ अश्रौषं (for शृण्वन्वै). $Ś_1$ K $D_{1-3.5}$ शृण्वन्गीतस्वनं पुण्यं. — [c]) S (except $G_{3.4}$) [अ]प्सरसां. — [d]) $B_{1-3}$ D (except $D_{1-3.5}$) नृत्यंतीर्भरतर्षभ.

**57** [c]) $Ś_1$ K $B_{1.3}$ $D_{1-3}$ परि॰ (for प्रति॰ ).

**58** [b]) Dc $T_1$ वै (for मे). $K_4$ $D_2$ $G_2$ प्रभुः; $B_1$ Dc विभो (for विभुः). — [c]) $Ś_1$ एव गतो (for मे वसतो). — [d]) $K_{1.3.4}$ [ऽ]भ्यगाद्; $D_5$ ह्यगाद् (for ऽत्यगाद्). Dc $D_1$ S इति (for दिवि).

Colophon om. in $Dn_2$. $n_3$ $D_{4.6}$. $B_1$ reads it in marg. — *Major parvan :* $Ś_1$ $K_{1.2}$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan :* $K_3$ $D_{1.2.5}$ (all om. sub-parvan name) mention only लोमशतीर्थयात्रा ( followed by गंधमादनवास in $K_3$ $D_5$, and अर्जुनोक्तमुत्तरकैरात in $D_{1.2}$ ); $K_4$ likewise, only उत्तरकैरात; $B_2$ Dc, only गंधमादनवास (followed by उत्तरकैरात in Dc ); and finally $B_{1.4}$ $D_3$, only गंधमादनप्रवेश ( $B_4$ ॰प्रवास ; $D_3$ ॰निवास ). — *Adhy. name :* $G_1$ अर्जुनस्वर्गप्रवेशकथनं. — *Adhy. no.* (figures, words or both ): $Dn_1$ 167 ; $D_1$ 173 ; S ( $M_2$ *sup. lin.* ) 168 ( $M_2$ orig. 170 ). — *Śloka no.:* $Dn_1$ $D_1$ 61.

## 165

**1** [a]) $Ś_1$ $K_{1.2}$ $D_5$ अभितिष्ठंतम्; B Dc Dn $D_{3.4.6}$ अतिविश्वस्तम्; S अथ विश्वस्तम्. — [b]) $T_2$ $G_3$ मघवान्; $G_1$ तदा मां (for अथ मां). — [c]) $Ś_1$ $K_{1.2.4}$ $Dc_1$ $D_{1.2}$ संस्पृशन्.

**2** After 2, S ins.:

846* अजेयस्त्वं हि संग्रामे सर्वैरपि सुरासुरैः ।

**4** [c]) $K_{1.2}$ $D_1$ शा( $D_1$ श )स्त्रविच्; $T_1$ मंत्रविच् (for चास्त्रविच्). $K_3$ $D_5$ $T_1$ $M_1$ चापि (for चासि). — [d]) $K_{2.3}$ $D_1$ $T_1$ $G_1$ चापि (for चासि). $K_{3.4}$ $D_{1.2.5}$ कुलोद्वह.

**5** [b]) $B_1$ तु दश; $T_1$ $G_4$ (by transp.) च दश. — [d]) $B_{2-4}$ Dn $D_{2.4.6}$ विद्यते न त्वया समः (by transp.).

**6** [a]) $T_1$ चापि (for उप-). — [b]) $T_1$ वृत्तिश्चापि (for आवृत्तिं च). — [d]) $B_{2-4}$ D (except $D_{3.5}$) प्रतीघातं.

तव गुर्वर्थकालोऽयमुपपन्नः परंतप ।
प्रतिजानीष्व तं कर्तुमतो वेत्स्याम्यहं परम् ॥ ७
ततोऽहमब्रुवं राजन्देवराजमिदं वचः ।
विषह्यं चेन्मया कर्तुं कृतमेव निबोध तत् ॥ ८
ततो मामब्रवीद्राजन्प्रहस्य बलवृत्रहा ।
नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किंचन ॥ ९
निवातकवचा नाम दानवा मम शत्रवः ।
समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत ॥ १०
तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः ।
तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति ॥ ११
ततो मातलिसंयुक्तं मयूरसमरोमभिः ।
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् ॥ १२
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ।
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् ॥ १३
अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम् ।
अजरां ज्यामिमां चापि गाण्डीवे समयोजयत् ॥ १४
ततः प्रायामहं तेन स्यन्दनेन विराजता ।
येनाजयद्देवपतिर्बलिं वैरोचनिं पुरा ॥ १५
ततो देवाः सर्व एव तेन घोषेण बोधिताः ।
मन्वाना देवराजं मां समाजग्मुर्विशां पते ।
दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फल्गुन ॥ १६
तानब्रुवं यथाभूतमिदं कर्तास्मि संयुगे ।
निवातकवचानां तु प्रस्थितं मां वधैषिणम् ।
निबोधत महाभागाः शिवं चाशास्त मेऽनघाः ॥ १७
तुष्टुवुर्मां प्रसन्नास्ते यथा देवं पुरंदरम् ।
रथेनानेन मघवा जितवाञ्शम्बरं युधि ।
नमुचिं बलवृत्रौ च प्रह्रादनरकावपि ॥ १८
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च । C. 3. 12073 B. 3. 168. 82 K. 3. 170. 22

**7** $^{a}$) $B_{2-4}$ D (except $D_{1-3.5}$) ततो (for तव). — $^{b}$) B D (except $D_{1-3.5}$) समुत्पन्नः (for उपपन्नः). — $^{c}$) Ś$_{1}$ K $D_{1-3}$ प्रतिजानीहि. Ś$_{1}$ K $G_{1}$ तत् (for तं). — $^{d}$) $G_{2}$ वक्ष्या° (for वेत्स्या°). Ś$_{1}$ K $D_{1-3.5}$ अथ वक्ष्याम्यहं परं.

**8** $^{a}$) M अब्रवं! — $^{c}$) $K_{4}$ ते; B D (except $D_{1-3.5}$) यन् (for चेन्).

**9** $^{a}$) $T_{1}$ देवः (for राजन्). — $^{b}$) B D (except $D_{3.5}$) प्रहसन्. $G_{1.2}$ $M_{1}$ वलवृत्रहा. — $^{c}$) Ś$_{1}$ K $D_{1-3.5}$ [अ]स्तीति; $Dn_{3}$ ह्यस्ति (for [अ]द्यास्ति).

**10** $^{b}$) Ś$_{1}$ K $D_{1-3.5}$ देव-; $B_{4}$ सुर- (for मम). — $^{c}$) Ś$_{1}$ $K_{1.2}$ आवृत्य; $D_{5}$ आगत्य; $T_{2}$ $G_{2-4}$ M आसाद्य (for आश्रित्य). $T_{1}$ समुद्रमासाद्य सदा. — $^{d}$) $G_{2.4}$ स्वर्गे (for दुर्गे).

**11** $^{c}$) Ś$_{1}$ $K_{1-3}$ ताः (for तान्). Ś$_{1}$ K $D_{1-3.5}$ पुत्र; $G_{1}$ तु त्वं (for तत्र). Ś$_{1}$ K $D_{1-3.5}$ पार्थैवं ($K_{4}$ पार्थ त्वं) (for कौन्तेय). — $^{d}$) M गुर्वर्थं ते.

**13** Ś$_{1}$ om. (hapl.) $13^{c}$–$14^{b}$. — $^{c}$) $T_{2}$ $G_{2-4}$ वीर (for चैव). — $^{d}$) S राजन् (for अङ्ग-).

**14** Ś$_{1}$ om. $14^{ab}$ (cf. v.l. 13). — $^{a}$) $T_{2}$ $G_{3}$ अभेद्य- (for अभेद्यं). Ś$_{1}$ $B_{2}$ $G_{1}$ चैव; $K_{1.2}$ $T_{2}$ $G_{2-4}$ दिव्यं (for चेदं). — $^{b}$) $K_{4}$ °रूपमनुत्तमं; $D_{3}$ °रूपं तदद्भुतं. — $^{c}$) Ś$_{1}$ K $D_{1-3.5}$ चैव (for चापि).

**15** $^{a}$) Ś$_{1}$ $K_{1.2}$ देव (for तेन). — $^{c}$) $K_{2}$ बलिं देव; $T_{1}$ देवराजो; $T_{2}$ $G_{2-4}$ स देवेंद्रो (for देवपतिर्). — $^{d}$) $K_{2}$ पतिर् (for बलिं).

**16** $^{a}$) S सगंधर्वाः (for सर्व एव). — $^{b}$) Ś$_{1}$ K $D_{1-3}$ शब्देन (for घोषेण). $K_{3}$ $D_{5}$ कोपिताः; $D_{3}$ मोहिताः (for बोधिताः). — $^{d}$) $K_{1.2}$ कुरूद्वह (for विशां पते). — $^{f}$) Ś$_{1}$ फल्गुण; $K_{1.3.4}$ $B_{1-3}$ Dc Dn $D_{4-6}$ फाल्गुन; $B_{4}$ $D_{1-3}$ पांडव; $T_{1}$ $G_{1}$ फल्गुनः.

**17** $^{a}$) M अब्रवं! $B_{1}$ Dc तथाभूतम्; S तथा भूतान् (for यथाभूतम्). — $^{d}$) Ś$_{1}$ K $D_{1-3.5}$ जयैषिणं (for वधै°). — After 17, S ins.:

847* ततो वाग्भिः प्रशस्ताभिस्त्रिदशाः पृथिवीपते ।

**18** $D_{6}$ om. (hapl.) $18^{c}$–$19^{b}$. — $^{c}$) $K_{1-3}$ $T_{1}$ $G_{1}$ मघवान्; $K_{4}$ $D_{3}$ भगवान्; $T_{2}$ $G_{2-4}$ जितवान् (for मघवा). — $^{d}$) Ś$_{1}$ $K_{1.2}$ हत°; $T_{2}$ $G_{2-4}$ मघ° (for जित°). $B_{4}$ असुरं; $D_{4}$ नमुचिं (for शम्बरं). — $K_{2}$ om. (hapl.) $18^{e}$–$19^{d}$. — $^{e}$) $D_{4}$ शंबरं (for नमुचिं). $G_{2}$ M वलवृत्रौ. — $^{f}$) $K_{3.4}$ B Dc $Dn_{2}$. $n_{3}$ $D_{4}$ प्रह्लाद°.

**19** $K_{2}$ om. 19; Ś$_{1}$ $D_{6}$ om. $19^{ab}$ (for $K_{2}$ $D_{6}$ cf. v.l. 18). — $^{b}$) $T_{1}$ [अ]युतानि (for [अ]र्बुदानि). $B_{1.4}$ $Dc_{1}$ Dn $D_{4}$ [अ]पि (for च). — $D_{2}$ om. $19^{c}$–$21^{b}$. — $^{c}$) $T_{1}$ वै दैत्यान् (for दैत्यानां). — $^{d}$) N (Ś$_{1}$ $K_{2}$ $D_{2}$ om.) मघवा; $T_{1}$ मखवान् (for मघवान्).

C. 3. 12074 B. 3 168. 82 K. 3. 170. 22 रथेनानेन दैत्यानां जितवान्मघवान्युधि ॥ १९
त्वमप्येतेन कौन्तेय निवातकवचान्रणे ।
विजेता युधि विक्रम्य पुरेव मघवान्वशी ॥ २०
अयं च शङ्खप्रवरो येन जेतासि दानवान् ।
अनेन विजिता लोकाः शक्रेणापि महात्मना ॥ २१
प्रदीयमानं देवैस्तु देवदत्तं जलोद्भवम् ।
प्रत्यगृह्णं जयायैनं स्तूयमानस्तदामरैः ॥ २२
स शङ्खी कवची बाणी प्रगृहीतशरासनः ।
दानवालयमत्युग्रं प्रयातोऽस्मि युयुत्सया ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

# १६६

अर्जुन उवाच ।
ततोऽहं स्तूयमानस्तु तत्र तत्र महर्षिभिः ।
अपश्यमुदधिं भीममपांपतिमथाव्ययम् ॥ १
फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः ।
ऊर्मयश्चात्र दृश्यन्ते चलन्त इव पर्वताः ।
नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः ॥ २
तिमिंगिलाः कच्छपाश्च तथा तिमितिमिंगिलाः ।
मकराश्चात्र दृश्यन्ते जले मग्ना इवाद्रयः ॥ ३
शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः ।
दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः ॥ ४
तथा सहस्रशस्तत्र रत्नसंघाः प्लवन्त्युत ।
वायुश्च घूर्णते भीमस्तदद्भुतमिवाभवत् ॥ ५

---

**20** D2 om. 20 (cf. v.l. 19). — a) K1. 4 B1–3 Dc Dn D4. 6 T2 G3. 4 [अ]नेन (for [ए]तेन). — b) T2 (before corr.) जितवान्मघवान् (for निवातकवचान्). Ś1 K1. 2 युधि (for रणे). Cf. 19d. — c) B1 विजितान् (for विजेता). — d) Ś1 K1. 2 B1 Dn D5 मघवा (for मघवान्). K1. 2 बली (for वशी). T1 पुरत्रयमिवेश्वरः.

**22** a) B Dc Dn D4. 6 G2 तं (B1 च) (for तु). — c) Ś1 K1. 2 B1 Dc1 T1 G1. 2 °गृह्णां; Dc2 M2 °गृह्णन् (for °गृह्णं). Ś1 K1. 2 [ए]व; K3. 4 D1–3 [इ]मं; T2 G3 [ए]तं (for [ए]नं). — d) K4 D1 तथामरैः; D5 यथासुरैः; G1 सदामरैः (for तदा°).

**23** a) Ś1 K3. 4 B D1–3. 5 T2 G3. 4 सशंखः (for स शङ्खी). K4 D1. 2. 5 T1 G1 खड्गी; G2 बाणैः (for बाणी).

Colophon om. in K3. 4 D5. — *Major parvan:* Ś1 K1. 2 Dn2 T G2–4 आरण्य. — *Sub-parvan:* Omitting sub-parvan name, B1–3 D (D5 om.) G1 M mention only निवातकवचवध (B1 om. वध) (preceded by लोमशतीर्थयात्रा). — *Adhy. no.* (figures, words or both): Dn 168 (Dn2 167); D1 174; S 169. — *Śloka no.:* Dn1 D1 25; Dn2. n3 .86.

## 166

**1** K3. 4 D5 om. the ref. — a) Ś1 K1. 2 B2. 3 च; K4 वै (for तु). — b) G1 सुर° (for मह°). — d) Ś1 K D2. 5 G3. 4 °निधिम् (for °पतिम्).

**2** a) Ś1 K D1–3. 5 °वंतः (for °वत्यः). — b) Ś1 चलंतश्च; K4 D1. 2 सहिता°; T1 सभीता°; T2 G2–4 M संगता°. B D (except D1–3) समुत्थिताः. — c) Ś1 K2–4 तत्र (for चात्र). S अदृश्यंतोर्मयस्तत्र. — d) B4 Dn1. n3 D1. 3. 4. 6 वल्गंत (for चलन्त). Dn2 जले मग्ना इवाद्रयः. — e) T2 (before corr.) G3. 4 समंतत° (for सहस्रश°). — M1 om. (hapl.) 2f–5a. — After 2, S (M1 om.) ins.:

848* नभसीव विमानानि विचरन्त्यो विरेजिरे ।

**3** M1 om. 3 (cf. v.l. 2). — b) Ś1 चाति°; D1 झति°; D5 [अ]प्यति° (for तिमि°). B4 तिमितिमिंगिलास्तथा; D3 तिमिंगिलगिलास्तथा. — c) Ś1 K D1. 2. 5 T1 चापि; D3 चानु- (for चात्र). — d) K4 D1. 2 तोय-; D3 जल- (for जले).

**4** M1 om. 4 (cf. v.l. 2). — b) D3 G1 सहस्रशः (for समन्ततः). — c) D5 च; T1 [ऽ]प्सु; T2 G3. 4 [ऽ]थ; G2 [ऽ]त्र (for स्म). — d) D2 T2 G2–4 °युताः (for °वृताः).

तमतीत्य महावेगं सर्वाम्भोनिधिमुत्तमम् ।
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात् ॥ ६
तत्रैव मातलिस्तूर्णं निपत्य पृथिवीतले ।
नादयन्रथघोषेण तत्पुरं समुपाद्रवत् ॥ ७
रथघोषं तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे ।
मन्वाना देवराजं मां संविग्ना दानवाभवन् ॥ ८
सर्वे संभ्रान्तमनसः शरचापधराः स्थिताः ।
तथा शूलासिपरशुगदामुसलपाणयः ॥ ९
ततो द्वाराणि पिदधुर्दानवास्त्रस्तचेतसः ।
संविधाय पुरे रक्षां न स्म कश्चन दृश्यते ॥ १०
ततः शङ्खमुपादाय देवदत्तं महास्वनम् ।
पुरमासुरमाश्लिष्य प्राधमं तं शनैरहम् ॥ ११
स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत् ।
वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि ॥ १२
ततो निवातकवचाः सर्व एव समन्ततः ।
दंशिता विविधैस्त्राणैर्विविधायुधपाणयः ॥ १३
आयसैश्च महाशूलैर्गदाभिर्मुसलैरपि ।
पट्टिशैः करवालैश्च रथचक्रैश्च भारत ॥ १४
शतघ्नीभिर्भुशुण्डीभिः खड्गैश्चित्रैः स्वलंकृतैः ।
प्रगृहीतैर्दितेः पुत्राः प्रादुरासन्सहस्रशः ॥ १५
ततो विचार्य बहुधा रथमार्गेषु तान्हयान् ।
प्राचोदयत्समे देशे मातलिर्भरतर्षभ ॥ १६

C. 3. 12095
B. 3. 169. 17
K. 3. 171. 17

---

**5** $M_1$ om. $5^a$ (cf. v.l. 2). — $^b$) $D_2$ रत्नपूर्णाः. T $G_{3.4}$ फलंस्युत. — $^c$) $K_{3.4}$ $D_1$ [आ]घूर्णंते (for घूर्णंते). S वीर (for भीमस्).

**6** $D_2$ om. (? hapl.) 6. — $^a$) Ś$_1$ $K_{1.2}$ $D_{1.3}$ समुदी- ($K_1$ °द्वी)क्ष्य; B Dc Dn $D_{4-6}$ तमुदीक्ष्य (for तमतीत्य). Ś$_1$ K $D_{1.3}$ महाभीमं; $B_4$ तथा भीमं (for महावेगं). — $^b$) Ś$_1$ अथांभो° (for सर्वाम्भो°).

**7** $T_1$ om. $7^{ab}$. — $^a$) $K_{3.4}$ $B_{1.3}$ Dc $D_{2-6}$ तत्र वै (for तत्रैव). — $^b$) Dc $T_2$ $G_{1-3}$ $M_1$ निपात्य. $B_2$ $M_2$ पृथिवीपते; $T_2$ G धरणीतले. $D_5$ निन्ये पृथ्वीतले रथं. — Ś$_1$ $K_{1.2}$ $B_4$ Dc Dn $D_{2.4-6}$ ins. after $7^{ab}$: $B_2$, after 7:

849* रथं तं तु समाश्लिष्य प्राद्रवद्रथयोगवित् ।

[Ś$_1$ $K_1$ तु तं; Dc तत्र (for तं तु). $B_4$ $Dn_1$ °लक्ष्य (for °श्लिष्य). Cnp आश्लिष्य. $D_5$ तां समाश्लिष्य पृथिवीं (for the prior half).]

— Dc om. $7^{cd}$. — $^c$) $B_4$ Dn $D_{2.4.6}$ त्रासयन्; $T_2$ $G_{2-4}$ दानवान् (for नादयन्). — $^d$) $D_5$ सहसा बली; $T_1$ समुपाद्रवं.

**8** $^a$) $K_{3.4}$ $D_{1.3}$ ते; $T_1$ तत् (for तं). — $^c$) $D_5$ मां देवराजं (by transp.). — $^d$) Ś$_1$ विविग्ना; K B D (except $D_3$) $T_2$ $G_3$ आविग्ना ($B_1$ उद्विग्ना) (for संविग्ना). $K_1$ $D_5$ स्थिताः (for [अ]भवन्).

**9** $^b$) $D_5$ खड्ग° (for शर°). Ś$_1$ $K_{1.2}$ तथा (for स्थिताः). — $^c$) $K_4$ शूलार्ष्टि°; B D (except $D_{1-3.5}$) [अ]सिशूल° (by transp.). — $^d$) Dc -परिघ- (for -मुसल-). Ś$_1$ K $B_4$ $D_{1-3.5}$ -प्रगृहीतशरासनाः.

**10** $^a$) $K_{3.4}$ $D_{2.3}$ $T_1$ $G_{2.4}$ M [अ]पिदधुः ($M_2$ °धन्). — $^c$) Ś$_1$ ते; $K_{1.2}$ तां (for सं-). — $^d$) Ś$_1$ $K_{1.2}$ किंचन; $D_1$ $M_1$ कश्चिन्न (for कश्चन). $T_1$ विद्यते (for दृश्यते).

**11** $^a$) $D_5$ $M_2$ उपाध्माय (for उपादाय). — $^b$) $B_2$ $D_5$ °रवं (for °स्वनम्). — $^c$) Ś$_1$ आविश्य; $B_3$ $M_1$ आश्रित्य; $G_1$ आसाद्य (for आश्लिष्य). Dn $D_{3.4.6}$ परमां मुदमाश्रित्य; $D_5$ पुरमाश्लिष्य राजेंद्र; $T_2$ $G_{2-4}$ आपूरयन्त($G_{2.4}$ °न्स)माश्लिष्य. — $^d$) $K_2$ प्रादाशं (sic) तं; Dc $D_4$ प्राधमत्तं; $T_1$ प्रदध्मं तं; $G_1$ प्रधमं तं; $G_2$ प्रभावंतं; $G_4$ प्रभवंतं (for प्राधमं तं). $D_5$ शनकैर् (for तं शनैर्). Ś$_1$ transp. शनैः and अहम्.

**12** $^a$) $D_{1-3}$ च (for तु). $K_4$ विद्धः; $D_3$ प्राप्य; $T_1$ गत्वा (for स्तब्ध्वा). — $^c$) $T_1$ $G_{2.4}$ निलीयु° (for निलिल्यु°). $K_3$ वित्रेसुर्यें च तत्रासन्. — $^d$) S च (for सु-).

**13** $^b$) $B_{1-3}$ D (except $D_{1-3.5}$) $T_1$ स्वलंकृताः (for समन्ततः). — $^c$) Some S MSS. दंसिता. $D_1$ अस्त्रैर्; $T_2$ $G_{3.4}$ बाणैर् (for त्राणैर्). — $^d$) B D (except $D_{1.2}$) S (except $T_1$ $G_1$) विचित्रायुध°.

**14** $^b$) $T_1$ $G_1$ M गदासि- (for गदाभिर्). Some MSS. मुशलैर्, मुषलैर्. — $^c$) S (except $T_2$ $G_3$) पट्टसैः. $K_3$ मुद्गरैश्चैव; $B_4$ $D_5$ च त्रिशूलैश्च (for कर°). — $^d$) $K_3$ करवालै°; $D_5$ $G_2$ तथा चक्रै° (for रथचक्रै°).

**15** $^a$) Ś$_1$ $K_1$ भुसुंडीभिः; $K_{2.4}$ $D_5$ भुशंडी°; $B_{1-3}$ भुषुंडी°; Dc भुशुंठी°; $D_1$ भृशंडी°; $D_2$ मुखंडी°; $D_3$ भुखंडी°; $T_1$ $G_{1.2.4}$ मुसंठी°; $T_2$ $G_3$ मुसुंठी°; M मुसृंठी°. — $^b$) $T_2$ $G_{2-4}$ अलं° (for स्वलं°). — $^{cd}$) $D_5$ transp. प्रगृहीतैः and प्रादुरासन्.

**16** $^a$) Ś$_1$ K $D_{1-3.5}$ विदार्यं वसुधां; B Dc Dn $D_{4.6}$ विचार्यं बहुशो. — $^b$) $G_1$ रथान् (for हयान्). $B_2$ रथमार्गेण तस्थिवान्. — $^c$) $K_{3.4}$ $D_{2.5}$ $T_1$ $G_{2.4}$ प्रचो($K_4$

C. 3 12096 B. 3.169.18 K. 3.171.18 तेन तेषां प्रणुन्नानामाशुत्वाच्छीघ्रगामिनाम् ।
नान्वपश्यं तदा किंचित्तन्मेऽद्भुतमिवाभवत् ॥ १७
ततस्ते दानवास्तत्र योधव्रातान्यनेकशः ।
विकृतस्वररूपाणि भृशं सर्वाण्यचोदयन् ॥ १८
तेन शब्देन महता समुद्रे पर्वतोपमाः ।
आप्लवन्त गतैः सत्त्वैर्मत्स्याः शतसहस्रशः ॥ १९
ततो वेगेन महता दानवा मामुपाद्रवन् ।
विमुञ्चन्तः शितान्बाणाञ्शतशोऽथ सहस्रशः ॥ २०
स संप्रहारस्तुमुलस्तेषां मम च भारत ।
अवर्तत महाघोरो निवातकवचान्तकः ॥ २१
ततो देवर्षयश्चैव दानवर्षिगणाश्च ये ।
ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महामृधे ॥ २२
ते वै मामनुरूपाभिर्मधुराभिर्जयैषिणः ।
अस्तुवन्मुनयो वाग्भिर्यथेन्द्रं तारकामये ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

## १६७

अर्जुन उवाच ।
ततो निवातकवचाः सर्वे वेगेन भारत ।
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे ॥ १
आच्छिद्य रथपन्थानमुत्क्रोशन्तो महारथाः ।

---

D2. 5 °नो)दयत् (for प्राचोदयत्).

**17** D5 om. 17–19. — a) T G प्र(T1 नै-; G1 न)-तेषां तत् (for तेन तेषां). — b) T1 मार्गमत्युग्रगामिनां; T2 G2–4 मार्गं चतुरगामिनां. — c) Ś1 नादृश्यत; K1 D1. 4 T2 G2–4 नान्वपश्यत्; K3 नानुपश्यन्; B3 (m as in text) पार्थ पश्यं; B4 न चापश्यं; T1 G1 अनपश्यन् (G1 °श्यत्). Ś1 ततो; G1 तथा (for तदा). K4 B4 किं तत्; T G कश्चित् (for किंचित्). — d) K3 B4 तदद्भुतम्; K4 D1. 2 तमोभूतम् (for तन्मेऽद्भुतम्). Ś1 K1. 2 D3 तमोभूतमभूज्जगत्.

**18** D5 om. 18 (cf. v.l. 17). — a) Dn2 तावद् (for तत्र). — b) N वादित्राणि सहस्रशः. — Ś1 K1. 2 read 20ab for 18cd, K1. 2 *repeating* it (20ab) in its proper place. — c) K3 विकृतस्वन°; T1 विकृतं घोर°. — d) K3. 4 B D (D5 om.) °वादयन् (for °चोदयन्).

**19** D5 om. 19 (cf. v.l. 17). — a) K1. 3. 4 B D (except D2. 5) सहसा (for महता). — b) S पर्वता इव (for °तोपमाः). — c) Ś1 Dn1 आप्लवंतो; K1. 2 °वंते; T2 G2–4 °वंति. Ś1 K1. 2 गताः; T G2–4 हताः (for गतैः).

**20** Ś1 K1. 2 read 20ab for 18cd; K1. 2 *repeat* it here. — a) K2 (second time) तेन (for ततो). D5 सहसा (for महता). — b) K1. 2 (first time) समुपा° (for मामुपा°). — Ś1 om. 20cd. — c) Dc2 विमुंचंति; D5 °चंतं; M2 °चंत. K1 शतान् (for शितान्).

**21** a) K4 Dc2 तुमलस्. — b) K1. 2 B2 Dn D6 च मम (by transp.); T1 अपि च. — c) K1–3 B1 D (except D4. 5) T2 G3. 4 आवर्तत; K4 प्राव°.

**22** b) Ś1 D3 तथा (for च ये). D1. 2 तथान्ये च महर्षयः. — c) B4 मह° (for ब्रह्म°). — d) D5 सहस्रशः (for महा°).

**23** a) S (except G1 M1) मानुष° (for मामनु°). — c) S (except T2 G3) ऋषयो (for मुनयो). — d) T1 °वधे; T2 G3. 4 °मृधे (for °मये).

Colophon. — *Major parvan:* Ś1 K1. 2 T2 G2–4 आरण्य. — *Sub-parvan:* Omitting sub-parvan name, K B1–3 Dc Dn1. n3 D1–6 G1 mention only निवातकवच-वध (B1 G1 om. वध) (preceded by लोमशतीर्थयात्रा in K3 D1). — *Adhy. no.* (figures, words or both): Dn 169 (Dn2 168); D1 175; S 170 (M2 172). — *Śloka no.:* Dn D1 24.

## 167

**1** b) B4 सर्वभावेन; Dc Dn3 D4 सर्वतेजेन. T1 G1 संगताः (for भारत). — c) K2 अभिद्रवन्. M मा (for मां). B2 वेगेन (for सहिताः).

**2** a) B2–4 D (except D1. 5) T2 G1. 3 आच्छाद्य. — b) S आक्रो° (for उत्क्रो°). Ś1 K B4 महारवान्. — c)

आवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् ॥ २
ततोऽपरे महावीर्याः शूलपट्टिशपाणयः ।
शूलानि च भुशुण्डीश्च मुमुचुर्दानवा मयि ॥ ३
तच्छूलवर्षं सुमहद्गदाशक्तिसमाकुलम् ।
अनिशं सृज्यमानं तैरपतन्मद्रथोपरि ॥ ४
अन्ये मामभ्यधावन्त निवातकवचा युधि ।
शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ॥ ५
तानहं विविधैर्बाणैर्वेगवद्भिरजिह्मगैः ।
गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे ।
ते कृता विमुखाः सर्वे मत्प्रयुक्तैः शिलाशितैः ॥ ६
ततो मातलिना तूर्णं हयास्ते संप्रचोदिताः ।
रथमार्गान्बहूंस्तत्र विचेरुर्वातरंहसः ।
सुसंयता मातलिना प्रामथ्नन्त दितेः सुतान् ॥ ७
शतं शतास्ते हरयस्तस्मिन्युक्ता महारथे ।
तदा मातलिना यत्ता व्यचरन्नल्पका इव ॥ ८
तेषां चरणपातेन रथनेमिस्वनेन च ।
मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ॥ ९
गतासवस्तथा चान्ये प्रगृहीतशरासनाः ।
हतसारथयस्तत्र व्यकृष्यन्त तुरंगमैः ॥ १०
ते दिशो विदिशः सर्वाः प्रतिरुध्य प्रहारिणः ।
निघ्नन्ति विविधैः शस्त्रैस्ततो मे व्यथितं मनः ॥ ११
ततोऽहं मातलेर्वीर्यमपश्यं परमाद्भुतम् । C. 3. 12115 B. 3. 170. 13 K. 3 172. 13

K Dc $D_{1.2.5}$ सर्वशस्. Ś$_1$ तेषां (for ते मां). — $^{d}$) Ś$_1$ $K_{1.2}$ °वर्षम् (for °वर्षैर्).

**3** $^{b}$) S °पट्टस° (for °पट्टिश°). — $^{c}$) $T_1$ $G_1$ गदाश्चैव (for शूलानि च). $K_1$ भुसुंडीश्च; $K_4$ मुशंडी°; $D_1$ भृशुंडी°; $D_2$ मुघंढी°; $T_1$ मुसंढ्य°; $T_2$ $G_{3.4}$ मुसुंठी°; $G_{1.2}$ मुसंठी°; M मुसृंढ्य°. Cf. v.l. 3. 166. 15$^{a}$. — $^{d}$) $M_2$ युधि (for मयि).

**4** $^{a}$) $K_{1.2}$ तं; $D_1$ ते (for तच्). S सुमहत्तुमुलं वर्षं. — $^{c}$) $K_2$ अभिसं- (for अनिशं). Ś$_1$ $K_{1.2}$ °मानं वै; $D_5$ °मानाश्च. — $^{d}$) Ś$_1$ $D_5$ न्यपतन्; $K_{1.2}$ त्वपतन् (for अपतन्). $G_4$ मे रथोपरि.

**5** $^{a}$) $K_3$ $D_3$ $G_1$ अन्योन्यम्; $T_1$ अथ माम् (for अन्ये माम्). $K_4$ $D_3$ अभि°; $D_5$ सम°; $G_1$ अप्य° (for अभ्य°). — $^{c}$) $B_{2.4}$ Dn $D_{4.6}$ जित- ($D_6$m धृत-) (for शित-). $B_2$ वीराः (for रौद्राः). $K_{3.4}$ $D_{1-3}$ श($K_4$ $D_3$ शि)तशस्त्रधरा रौद्राः.

**6** $^{a}$) $K_4$ $D_{1-3.5}$ $G_1$ निशितैर् (for विविधैर्). — $^{c}$) $K_4$ $D_{1.2}$ आविध्यम्; $G_1$ अहनम् (for अभ्यघ्नम्). — $^{d}$) Ś$_1$ $K_{1.2}$ $B_4$ शितैः; $K_4$ $D_{1-3.5}$ शरैः (for मृधे). — $^{e}$) $B_1$ त्रासिता; $B_4$ अथान्ये; $T_1$ निकृत्ता; $T_2$ $G_{2-4}$ ते कृत्ता; $M_2$ ते कृत्वा (for ते कृता). $D_5$ अथ तेभिमुखाः सर्वे. — $^{f}$) S (except $M_1$) मंत्रयुक्तैः (for मत्प्र°). $B_2$ शिलीमुखैः (for शिला°). $B_4$ $D_5$ वित्रस्तास्तत्र ($D_5$ सर्वे-) दानवाः.

**7** $^{b}$) $K_{3.4}$ $D_5$ संप्रनो($D_5$ °णो)दिताः; $Dn_2$ संप्रयोजिताः. — $^{c}$) $T_2$ $G_3$ अथ (for रथ-). B D (except $D_{1-3}$) मार्गान्बहुविधांस्तत्र. — $^{d}$) S व्यचरन् ($T_1$ व्यधमन्; $G_1$ ह्यचरन्) (for विचेरुर्). — $^{e}$) $K_3$ $D_3$ सुसंयुता; $T_1$ सुसंयुक्ता. — $^{f}$) $K_{1.2.4}$ प्रमश्नंत; $B_1$ Dc $D_{1.3}$ $G_4$ M प्रामथंत; $B_4$ प्रामथंस्ते; $Dn_2$. $n_3$ प्राभ्य($Dn_3$ °भ)घ्नंत; $D_5$ प्रामश्नंतो; $T_1$ प्रपद्यंत; $G_2$ प्रामृद्नंत.

**8** $^{a}$) $D_5$ च हयास् (for हरयस्). — $^{b}$) $K_{1.2}$ तस्मिन्युक्ते; $T_2$ $G_{2-4}$ ते नियुक्ता. — $^{c}$) Ś$_1$ K $D_{1-3}$ ततो; Dn शांता (!); $D_5$ $T_1$ M तथा (for तदा). $K_3$ $T_2$ $G_{1.3.4}$ यंत्रा (for यत्ता). — $^{d}$) $K_{2.4}$ विचरन्. Dc उल्मुका इव; $T_2$ $G_{3.4}$ अल्पवद्रथं; $G_1$ एकवद् दृढं; $G_2$ M एकवद्रथं (for अल्पका इव). $T_1$ चारयंतः प्रवं दृढं.

**9** $K_3$ om. 9. — $^{c}$) $D_5$ मम बाणाभि°. — $^{d}$) $T_1$ $G_{2.4}$ $M_2$ च (for ते). $D_{1.2}$ बहवो (for शतशो).

**10** $K_2$ om. (hapl.) 10$^{ab}$. — $^{a}$) Ś$_1$ $K_1$ [अ]न्ये च (by transp.). B D (except $D_{1-3.5}$) [ए]व (for च). — $^{b}$) Ś$_1$ हताश्च शतशोसुराः (cf. 9$^{d}$); $K_1$ $D_3$ S दानवाः पांडवर्षभ ($G_1$ °भाः). — $^{c}$) $T_2$ (before corr.) $G_4$ अथ; $G_1$ ततः; $G_3$ हताः (for हत-). — $^{d}$) $K_4$ $D_{2.3}$ विकृष्यंत; $B_2$ $G_1$ व्यकर्षंत; $B_3$ प्रादृश्यंत. $D_5$ विकृष्यंस्ते हयोत्तमैः.

**11** $^{a}$) B D (except $D_{1.3}$) $T_2$ (after corr.) सर्वे (for सर्वाः). — $^{b}$) Ś$_1$ $K_2$ प्रतिगृध्य; $B_4$ सर्वे युद्ध-; $T_2$ $G_{3.4}$ प्रत्यनीक-; $G_2$ प्रारुध्यंत (for प्रतिरुध्य). — $^{c}$) $K_{2-4}$ $B_4$ $D_{1-3}$ निघ्नंतो; $B_{1-3}$ Dn $D_{4.6}$ अभ्यघ्नन्; S घ्नंति स्म ($T_1$ व्यघ्नंति). $D_5$ निशितैः (for विविधैः). — $^{d}$) Ś$_1$ K $B_4$ $D_{1-3.5}$ ततो मां व्यथयंति च ($K_4$ °श्चिव; $B_4$ °ति ते).

**12** $^{b}$) S अद्भुतं समदर्शयं ($G_1$ अत्यद्भुतमदर्शयं). — $^{c}$) Ś$_1$ K $D_{1-3.5}$ तथा (Ś$_1$ $K_{1.2}$ ततो) वेगवतो वाहान् ($K_3$ वाजीन्). — $^{d}$) Ś$_1$ K $D_{1-3}$ अयत्नो य($K_4$ $D_{1-3}$ °त्नाद्य)दधारयत्; $D_5$ यद्यत्नादन्वधार°; $T_1$ $G_1$ यद्रथं ($G_1$ °थान्)

C. 3 12115
B. 3. 170. 13
K. 3. 172. 13

अश्वांस्तथा वेगवतो यदयत्नादधारयत् ॥ १२
ततोऽहं लघुभिश्चित्रैरस्त्रैस्तानसुरान्रणे ।
सायुधानच्छिनं राजञ्शतशोऽथ सहस्रशः ॥ १३
एवं मे चरतस्तत्र सर्वयत्नेन शत्रुहन् ।
प्रीतिमानभवद्वीरो मातलिः शक्रसारथिः ॥ १४
वध्यमानास्ततस्ते तु हयैस्तेन रथेन च ।
अगमन्प्रक्षयं केचिन्न्यवर्तन्त तथापरे ॥ १५
स्पर्धमाना इवास्माभिर्निवातकवचा रणे ।
शरवर्षैर्महद्भिर्मां समन्तात्प्रत्यवारयन् ॥ १६
ततोऽहं लघुभिश्चित्रैर्ब्रह्मास्त्रपरिमन्त्रितैः ।
व्यधमं सायकैराशु शतशोऽथ सहस्रशः ॥ १७
ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः ।
अपीडयन्मां सहिताः शरशूलासिवृष्टिभिः ॥ १८
ततोऽहमस्त्रमातिष्ठं परमं तिग्मतेजसम् ।
दयितं देवराजस्य माधवं नाम भारत ॥ १९
ततः खड्गांस्त्रिशूलांश्च तोमरांश्च सहस्रशः ।
अस्त्रवीर्येण शतधा तैर्मुक्तानहमच्छिनम् ॥ २०
छित्त्वा प्रहरणान्येषां ततस्तानपि सर्वशः ।
प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः ॥ २१
गाण्डीवाद्धि तदा संख्ये यथा भ्रमरपङ्क्तयः ।
निष्पतन्ति तथा बाणास्तन्मातलिरपूजयत् ॥ २२
तेषामपि तु बाणास्ते बहुत्वाच्छलभा इव ।

नावधार°; $T_2$ $G_{2-4}$ यथा यत्ना($G_2$ युक्ता-; $G_4$ -वर्ता)न्न्यवार°; M ह्ययत्नाद्यदधार°.

**13** $^a$) $B_1$ विविधैश्च् (for लघुभिश्च्). — $^c$) Cf. 20 and v.l. $K_3$ चिच्छिदं; $K_4$ $D_{2.3}$ $T_1$ अच्छिदं; $D_5$ $T_2$ G M चिच्छिदे (for अच्छिनं). B Dc Dn $D_{4.6}$ चिच्छेद सायुधान् ($B_4$ राक्षसांश्चिच्छेद) राजन्. — $13^d=17^d$.

**14** $^a$) $D_3$ वि-; $T_2$ $G_{2-4}$ आ- (for मे). — $^c$) $T_1$ $G_{1.2}$ राजन्; $T_2$ $G_{3.4}$ प्रीतो; M चापि (for वीरो).

**15** $^a$) $D_5$ हयैस् (for ततस्). $B_4$ Dn $D_{2.4-6}$ तैस् (for ते). — $^b$) $T_1$ शरैस् (for हयैस्). $D_5$ रथेन च महासुराः. — $^c$) $K_1$ प्राक्षयं; $K_2$ $M_2$ प्रेक्षयं; $T_1$ प्रत्ययं; $G_4$ वै क्षयं (for प्र°). $K_3$ यमक्षयं गताः केचित्. — $^d$) $K_{2.3}$ $D_{3.5}$ प्रवर्तंत; $K_4$ $G_4$ व्यवर्तंत; $D_1$ अवर्तंत.

**16** $K_3$ om. 16. — $^c$) $Ś_1$ $K_{1.4}$ $D_{1.3}$ शरानस्तान्; $K_2$ महानस्त्रान्; B Dc Dn $D_{2.4-6}$ शरार्तां ($B_{2.4}$ $Dn_2$ °र्तं) मां; $T_1$ समग्रैर्मां (for महद्भिर्मां). — $^d$) N ($K_3$ om.) महद्भिः ($K_2$ °द्भ्यः) (for समन्तात्). $T_2$ $G_{2-4}$ पर्य° (for प्रत्य°). — After 16, S ins.:

850* शरवेगैर्निहत्याहमस्त्रैः शरविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ।

[(L. 1) $T_1$ शस्त्रैः (for अस्त्रैः). — (L. 2) $T_1$ अवध्यं; $T_2$ $G_3$ अवीर्यान् (for अविध्यं).]

**17** $D_5$ om. $17^{ab}$; S om. 17. — $17^a=13^a$. — $^b$) $Ś_1$ $K_{2-4}$ $D_{1-3}$ °प्रति-; Dc °पर- (for °परि-). $K_1$ अस्त्रैस्तानसुरान्रणे. — $^c$) $K_3$ अवधं; $D_{1.5}$ व्यधमत् (for व्यधमं). $Ś_1$ K $D_{1.5}$ सायु($K_2$ °व)धानेव; Dc सायकेनाशु. — $17^d=13^d$.

**18** $^b$) $Dn_2$ °रथाः (for °सुराः). — $^c$) $B_2$ प्रापीड°; Dn (not adopted in old printed ed.!) $D_6$ आपीड° (for अपीड°). $K_1$ M मा (for मां). — $^d$) $B_{2.3}$ Dn $D_{4.6}$ $T_2$ $G_3$ शक्ति- (for शर-). $G_1$ -जालासि- (for -शूलासि-). $K_3$ -पट्टिशैः (for -वृष्टिभिः).

**19** $^a$) $D_{1.2}$ आविष्टं; S प्रायुंजं (for आतिष्ठं). — $^b$) $Ś_1$ $K_2$ तिग्मतेजनं; $B_4$ $Dn_2$ $D_{3.6}$ °तैजसं. S माधवं ($G_2$ गांधर्वं; $M_1$ वासवं) नाम भारत ($=19^d$). — $^c$) $G_1$ दधीचिं (for दयितं). — $^d$) $D_{1-3}$ गांधर्वं (for माधवं). S ब्रह्मदंडसमं रणे.

**20** $K_3$ om. from 20 up to 3. 168. 17. — $^a$) $Ś_1$ $K_{1.2}$ $B_{2-4}$ $D_{5.6}$ $T_1$ Cnp खड्गांश्च शूलांश्च; $B_1$ Dn खड्गत्रिशूलेन; $D_{1-3}$ खड्गांस्त्रिशूलानि; $D_4$ खड्गस्त्रिशूलश्च; $G_4$ खड्गासिशूलांश्च. — $^b$) $Ś_1$ K ($K_3$ om.) $D_{1-3.5}$ शरांश्चैव (for तोम°). — $^c$) $Ś_1$ K ($K_3$ om.) $D_{1-3.5}$ महता; $T_2$ $G_{2-4}$ सहसा (for शतधा). — $^d$) $Ś_1$ अस्तान्; Dc युक्तान् (for मुक्तान्). $Ś_1$ आच्छिनं; $B_1$ Dn $D_{3-6}$ T G अच्छिदं (for अच्छिनम्); cf. 13 and v.l. $B_4$ चिच्छिदेहं रणे तदा.

**21** $K_3$ om. 21 (cf. v.l. 20). — $^a$) S भित्त्वा ($G_1$ हित्वा) (for छित्त्वा). — $^b$) $Ś_1$ तैरस्तान्; $K_{1.2}$ ततस्तानि (for ततस्तान्). — $^c$) $Ś_1$ प्रति° (for प्रत्य°). — $^d$) S दृढमुष्टिकृतैः शरैः.

**22** $K_3$ om. 22 (cf. v.l. 20). — $^a$) $K_4$ $G_4$ विततान्; $D_{1-3}$ हि तताः; $T_1$ हि ततः; $T_2$ $G_{1-3}$ विततताः; M हि तथा (for हि तदा). $Ś_1$ $K_{1.2}$ गांडीवनिःसृताः संख्ये; $D_5$ गांडीवेनांकिताः सर्वे. — $^c$) $D_{1.2}$ $T_1$ निपतंति; $D_{4.6}$ निष्पतंत. B D (except $D_{1-3.5}$) महा- (for तथा). — $^d$)

अवाकिरन्मां बलवत्तानहं व्यधमं शरैः ॥ २३
वध्यमानास्ततस्ते तु निवातकवचाः पुनः ।
शरवर्षैर्महद्भिर्मां समन्तात्पर्यवारयन् ॥ २४
शरवेगान्निहत्याहमस्त्रैः शरविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥ २५
तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितम् ।
प्रावृषीवातिवृष्टानि शृङ्गाणीव धराभृताम् ॥ २६
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः ।
मद्बाणैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः ॥ २७
शतधा भिन्नदेहान्त्राः क्षीणप्रहरणौजसः ।
ततो निवातकवचा मामयुध्यन्त मायया ॥ २८

इति श्रीमहाभारते आरण्यकपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

# १६८

अर्जुन उवाच ।
ततोऽश्मवर्षं सुमहत्प्रादुरासीत्समन्ततः ।
नगमात्रैर्महाघोरैस्तन्मां दृढमपीडयत् ॥ १
तदहं वज्रसंकाशैः शरैरिन्द्रास्त्रचोदितैः । C. 3. 12133 B. 3. 171. 2 K. 3. 173. 2

---

K$_4$ D$_{1.3.4}$ G$_2$ तान् (for तन्).

**23** K$_3$ om. 23 (cf. v.l. 20). — $^a$) Ś$_1$ D$_5$ च (for तु). B$_{2.4}$ ते बाणा (by transp.); T$_1$ बाणास्तु. — $^b$) Dn D$_{4.6}$ तन्मातलिरपूजयत् (= 22$^d$)! — $^c$) G$_2$ M मा (for मां)! — $^d$) Ś$_1$ M$_2$ व्यधमत्; T$_1$ बलवत् (for व्यधमं).

**24** K$_3$ om. 24 (cf. v.l. 20). — $^a$) D$_5$ विध्य°; S (except T$_1$ G$_1$) युध्य° (for वध्य°). Dc तदा (for ततस्). — $^b$) Ś$_1$ K$_{1.2}$ ततः (for पुनः). — $^c$) M मा (for मां)!

**25** K$_3$ om. 25 (cf. v.l. 20). — $^a$) Ś$_1$ K$_1$ °वर्षान् (for °वेगान्). Ś$_1$ K$_{1.2}$ [आ]शु; D$_5$ [अ]स्त्रम् (for [अ]हम्). — $^b$) Ś$_1$ ह्यस्त्रैः; K$_2$ Dc$_2$ शस्त्रैः (for अस्त्रैः). K$_{1.2}$ अपि; B Dc Dn D$_{4.6}$ G$_4$ अस्त्र- (for शर-). D$_5$ शरैर्विद्याभिमंत्रितैः. — $^c$) Ś$_1$ K (K$_3$ om.) D$_{1.3}$ खगमैः; M$_1$ च शरैः (for परमैः). Ś$_1$ K$_{1.2}$ D$_{3.5}$ शस्त्रैस् (for शीघ्रैस्). — $^d$) D$_2$ सहस्रधा.

**26** K$_3$ om. 26 (cf. v.l. 20). — $^a$) T$_1$ छिन्नाग्र-; T$_2$ G$_{2-4}$ जीर्णानि (for छिन्नानि). — $^b$) B$_4$ विसृजन्नथ (for °न्ति स्म). — $^c$) N (K$_3$ om.) [अ]भिवृष्टानि; T$_2$ G$_{2-4}$ [अ]तिवृष्टया हि. — $^d$) Ś$_1$ K (K$_3$ om.) D$_{1.2.5}$ [उ]त; B$_{2.3}$ Dc Dn D$_{3.4.6}$ M$_2$ [अ]थ (for [इ]व). T$_2$ G$_{2-4}$ मही° (for धरा°).

**27** K$_3$ om. 27 (cf. v.l. 20). — $^a$) M$_2$ °युध° (for °शनि°). — $^c$) T$_1$ बाणैश्च (for मद्बाणैर्). Dc विध्य° (for वध्य°). — $^d$) Ś$_1$ K (K$_3$ om.) D$_{1.3}$ च; D$_5$ T$_2$ G$_{2-4}$ तु (for स्म). B$_4$ सुरद्विषः (for स्म दानवाः).

**28** K$_3$ om. 28 (cf. v.l. 20). — $^a$) B$_{2.4}$ T$_1$ G$_{2.4}$ M छिन्न- (for भिन्न-). Ś$_1$ K$_{1.2}$ D$_3$ -देहांताः; B Dn D$_{1.4-6}$ T$_1$ -देहास्ते; T$_2$ G M$_2$ -देहास्त्राः (for -देहान्त्राः). — $^b$) T$_2$ G$_{2-4}$ क्षिप्त- (for क्षीण-). Ś$_1$ -प्राणगतौ°; K$_1$ -प्राणा महौ°; K$_2$ -प्राणमहौ° (for -प्रहरणौ°).

Colophon om. in K$_{3.4}$. — *Major parvan :* Ś$_1$ K$_{1.2}$ Dn$_2$ T$_2$ G$_{2-4}$ आरण्य. — *Sub-parvan :* Omitting sub-parvan name, B$_{1-3}$ D G$_1$ mention only निवातकवचवध (D$_3$ om. वध) (preceded by लोमशतीर्थयात्रा in D$_1$). — *Adhy. no.* (figures, words or both): Dn 170 (Dn$_2$ 169); D$_1$ 176; S (M$_2$ *inf. lin.*) 171 (M$_2$ orig. 173). — *Śloka no. :* Dn D$_1$ 29.

## 168

**1** K$_3$ om. up to 3. 168. 17 (cf. v.l. 3. 167. 20). — $^c$) K$_4$ D$_1$ T$_1$ G$_{1.4}$ M नगमात्रं; D$_3$ नागमात्रैर्; T$_2$ G$_{2.3}$ ना(G$_2$ न)गमस्त्रं (for नगमात्रैर्); cf. 4$^c$. K$_4$ D$_{1.2}$ S महाघोरं; B Dc Dn D$_{4.6}$ शिलाखंडैस् (B$_2$ °ध्वस्तैस्) (for महाघोरैस्). — $^d$) Ś$_1$ K$_{1.2}$ D$_5$ ते (for तन्). K$_2$ D$_{3.5}$ G$_1$ (after corr.) अपीडयन्.

**2** K$_3$ om. 2 (cf. v.l. 1). — $^a$) D$_3$ तमहं; D$_5$ T$_1$ M$_2$ तानहं. — $^b$) Ś$_1$ K$_{1.2.4}$ D$_{1-3.5}$ दिव्यै(K$_4$ D$_5$ शरै)रिंद्रास्त्रमंत्रितैः; B$_{1-3}$ Dc Dn D$_{4.6}$ महेंद्रास्त्रप्रचोदितैः. — $^c$) D$_1$ आचूर्णयं; T$_2$ G$_{3.4}$ अघूर्णयं. — $^d$) N (K$_3$ om.) शरवर्षै(B$_{1.4}$ Dn D$_{4.6}$ शरजालै-; D$_5$ शितधारै)र्महाहवे

C 3.12133
B 3.171.2
K. 3.173.2

अच्चूर्णयं वेगवद्भिः शतधैकैकमाहवे ॥ २
चूर्ण्यमानेऽश्मवर्षे तु पावकः समजायत ।
तत्राश्मचूर्णमपतत्पावकप्रकरा इव ॥ ३
ततोऽश्मवर्षे निहते जलवर्षं महत्तरम् ।
धाराभिरक्षमात्राभिः प्रादुरासीन्ममान्तिके ॥ ४
नभसः प्रच्युता धारास्तिग्मवीर्याः सहस्रशः ।
आवृण्वन्सर्वतो व्योम दिशश्चोपदिशस्तथा ॥ ५
धाराणां च निपातेन वायोर्विस्फूर्जितेन च ।
गर्जितेन च दैत्यानां न प्राज्ञायत किंचन ॥ ६
धारा दिवि च संबद्धा वसुधायां च सर्वशः ।
व्यामोहयन्त मां तत्र निपतन्त्योऽनिशं भुवि ॥ ७
तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम् ।
दीप्तं प्राहिणवं घोरमशुष्यत्तेन तज्जलम् ॥ ८
हतेऽश्मवर्षे तु मया जलवर्षे च शोषिते ।
मुमुचुर्दानवा मायामग्निं वायुं च मानद ॥ ९
ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्वशः ।
शैलेन च महास्त्रेण वायोर्वेगमधारयम् ॥ १०
तस्यां प्रतिहतायां तु दानवा युद्धदुर्मदाः ।
प्राकुर्वन्विविधा माया यौगपद्येन भारत ॥ ११
ततो वर्षं प्रादुरभूत्सुमहल्लोमहर्षणम् ।
अस्त्राणां घोररूपाणामग्नेर्वायोस्तथाश्मनाम् ॥ १२
सा तु मायामयी वृष्टिः पीडयामास मां युधि ।
अथ घोरं तमस्तीव्रं प्रादुरासीत्समन्ततः ॥ १३
तमसा संवृते लोके घोरेण परुषेण च ।

---

(D1–3 °मृधे); T1 शतधैवैकमा°; T2 G2–4 शरैरेकैकमा°.

**3** K3 om. 3 (cf. v.l. 1). — a) Ś1 K1 D1 T1 चूर्णं°; T2 G2–4 घूर्णं° (for चूर्ण्यं°). — G1 om. (hapl.) 3bc. — b) B3 D4. 6 समपद्यत. — c) D5 ततो (for तत्र). T2 G3 °वर्षम् (for °चूर्णम्). B D (except D1–3. 5) तत्राश्म- (B2 °स्य)चूर्णान्यपतन्; T1 G2. 4 M तत्र (T1 G2 स च) तत्रापि तच्चूर्णं. — d) B4 °प्रवाहा इव; D3. 5 °प्रकरो यथा; T G3. 4 पावकः (T2 G3 °कं) प्रबलोज्वलत्; G2 प्रकुर्वन्सिकतानिव; M प्रा(M2 अ)कुर्वं सिकता इव. — G2 *repeats* 3cd as in T1 above! — After 3, K2 ins.:

851* ततोऽहं वारुणास्त्रेण अश्मवर्षं विशातवान् ।

**4** K3 om. 4 (cf. v.l. 1). — a) B1–3 Dc Dn1 D4–6 विहते; B4 D3 T G [ऽ]भिहते; Dn2 [ऽ]पहते; Dn3 D1 विहिते. — b) Ś1 K (K3 om.) D1–3. 5 अनंतरं (for मह°).

**5** K3 om. 5 (cf. v.l. 1). — b) Ś1 K (K3 om.) D1–3. 5 °वेगाः (for °वीर्याः). Ś1 T1 G1 समंततः (for सह°). — d) Ś1 K1. 2 प्र-; Dn3 D5 वि- (for [उ]प-). T1 [अ]पि च; T2 G2–4 [अ]पि वा (for तथा). M दिशः सोपदिशोपि च (M2 °शो नृप).

**6** K3 om. 6 (cf. v.l. 1). — a) D3 वि- (for च). — b) Some S MSS. विष्फूर्जितेन. — c) S मेघानां (for दैत्या°). — d) K1. 2 D1–3 G1. 2 M प्रज्ञायत; T1 प्रायतत.

**7** K3 om. 7 (cf. v.l. 1). — a) K4 धारा दिवीव; B2 धाराश्च दिवि; T1 धारा दिशि च; T2 G3. 4 धारादिभिश्च. Dn2. n3 संवृद्धा; D5 संबंधाद्; T G3. 4 संबाधा (for संबद्धा). — c) K4 विमोहयति; B1 व्यालोडयंत; S मोहयंति स्म (G2 च). T1 तास्; M2 मा (for मां). — d) Ś1 K1 D3 निष्पतंत्यो. T1 G1 युधि (for भुवि). B4 पतमाना दिवानिशं.

**8** K3 om. 8 (cf. v.l. 1). — a) K2 Dc2 G1. 4 ततो°; K4 D1 अथो° (for तत्रो°). Ś1 मित्रेण; K1. 2 मंत्रेण (for इन्द्रेण). — b) D2 om. 8b. Ś1 K1. 2 सुशोभनं (for विशो°). — c) D5 ज्वलन् (m दीप्तं as in text). B4 ज्वलितं प्रक्षिपं घोरम्. — d) Dc वै (for तज्).

**9** K3 om. 9 (cf. v.l. 1). — a) Ś1 B2 Dn T1 च (for तु). S तदा (for मया). — b) D2 om. 9b. K1. 2 B4 D1. 3 T2 G3. 4 M तु (for च). — d) Ś1 K1. 2 मेनघ; B D (except D1–3. 5) M1 भारत (for मानद).

**10** K3 om. 10 (cf. v.l. 1). — b) K1. 2 भारत (for सर्वशः). — c) D1. 2 महता° (for च महा°). — d) Ś1 K1. 2. 4 B2. 3 Dc D3 G4 अवारयं; D1 न्यवा°; D2 निवा° (for अधा°).

**11** K3 om. 11 (cf. v.l. 1). — a) B1. 3. 4 Dn D4. 6 ते (for तु). — c) K4 B D (except D3) T2 G3. 4 विविधां मायां.

**12** K3 om. 12 (cf. v.l. 1). — a) K1 वर्षां. D5 T2 G प्रादुरासीत्. — b) S (as usual) रोम° (for लोम°). — c) T1 G1 M1 शस्त्राणां (for अ°). — d) Ś1 K1. 2 महात्मनां; D3 यथाश्मनां; T1 G2 तदाश्मनां.

**13** K3 om. 13 (cf. v.l. 1). — a) Ś1 K1. 2 बाणमयी; D1 मायावती. — c) Ś1 तपस् (for तमस्).

**14** K3 om. 14 (cf. v.l. 1). — a) G4 संवृतो लोको. — b) Ś1 K1. 2. 4 D5 परमेण; T2 G2–4 [आ]वरणेन (for

तुरगा विमुखाश्चासन्प्रास्खलच्चापि मातलिः ॥ १४

हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि ।
असकृच्चाह मां भीतः क्वासीति भरतर्षभ ॥ १५

मां च भीराविशत्तीव्रा तस्मिन्विगतचेतसि ।
स च मां विगतज्ञानः संत्रस्त इदमब्रवीत् ॥ १६

सुराणामसुराणां च संग्रामः सुमहानभूत् ।
अमृतार्थे पुरा पार्थ स च दृष्टो मयानघ ॥ १७

शम्बरस्य वधे चापि संग्रामः सुमहानभूत् ।
सारथ्यं देवराजस्य तत्रापि कृतवानहम् ॥ १८

तथैव वृत्रस्य वधे संगृहीता हया मया ।
वैरोचनेर्मया युद्धं दृष्टं चापि सुदारुणम् ॥ १९

एते मया महाघोराः संग्रामाः पर्युपासिताः ।
न चापि विगतज्ञानो भूतपूर्वोऽस्मि पाण्डव ॥ २०

पितामहेन संहारः प्रजानां विहितो ध्रुवम् ।
न हि युद्धमिदं युक्तमन्यत्र जगतः क्षयात् ॥ २१

तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना ।
मोहयिष्यन्दानवानामहं मायामयं बलम् ॥ २२

अब्रुवं मातलिं भीतं पश्य मे भुजयोर्बलम् ।
अस्त्राणां च प्रभावं मे धनुषो गाण्डिवस्य च ॥ २३

अद्यास्त्रमाययैतेषां मायामेतां सुदारुणाम् ।
विनिहन्मि तमश्चोग्रं मा भैः सूत स्थिरो भव ॥ २४

एवमुक्त्वाहमसृजमस्त्रमायां नराधिप ।
मोहनीं सर्वशत्रूणां हिताय त्रिदिवौकसाम् ॥ २५

पीड्यमानासु मायासु तासु तास्वसुरेश्वराः । C. 3 12157 B. 3 171 26 K. 3. 173. 26

---

परु°). — c) B D (except D1–3) हरयो (for तुरगा). D5 विषमाश् (for विमुखाश्). Ś1 K1. 2 om. च. — d) D5 प्रास्त्रव° (for प्रास्खल°).

**15** K3 om. 15 (cf. v.l. 1). — a) D5 हि रश्मयश्; T1 हि रज्वायश् (sic) (for हिरण्मयश्). — b) K1. 2 T1 प्रपतद्; D5 न्यपतद्. — Ś1 K2 om. $15^{c}$–$16^{b}$; G1 om. $15^{cd}$. — c) T2 G2–4 M चापि (for चाह). M आह (for भीतः). — d) S (G1 om.) किं करिष्याव (T2 G3 °म) इत्यपि (M इत्युत).

**16** K3 om. 16 (cf. v.l. 1); Ś1 K2 om. $16^{ab}$ (cf. v.l. 15). — b) D5 विकल° (for विगत°). — c) Ś1 K1. 2 D5 तु (for च). K1 विगतज्ञानं; T2 (before corr.) G2. 4 संगत°. — d) Ś1 K1. 2 संतप्त; B D (except D1–3) संत्रस्तम् (for °स्त).

**17** K3 om. 17 (cf. v.l. 1). — c) B D (except D1. 3) अमृतार्थं. Ś1 K1. 2. 4 Dc D2. 3. 5 तात (for पार्थ). — d) Ś1 K1. 2. 4 D1. 3. 5 वै; S मे (M1 नो) (for च). S सुदारुणः (for मया°).

**18** K3 resumes! — a) B Dn D4. 6 घोरः; D1 चास्य; D5 घोरे (for चापि). — b) Dc संग्रामस्तारकामयः.

**19** a) K3 तत्रैव (for तथैव). — b) D3. 5 T2 G2–4 M मया हयाः (by transp.). T1 संगृह्णीयामहं हयान्. — c) B Dn D1. 4. 6 T1 G1. 2 महा- (B4 T1 महद्-) (for मया). — d) G1 चासीत् (for चापि). — After 19, B4 ins.:

852* बलप्रह्लादयश्चापि तथान्येषां च पाण्डव ।

**20** b) B4 G1 समु° (for पर्यु°). — c) K1. 2 चास्मि (for चापि). — d) T2 G3. 4 [ऽ]पि (for ऽस्मि). Ś1 K2 D3 भारत (for पाण्डव).

**21** b) K2. 3 विहतो; T2 (before corr.) G3. 4 आहितो. G1 ध्रुवः. — c) Ś1 K D1–3. 5 दृष्टम् (for युक्तम्). — d) T2 G2–4 जगतां (for °तः).

**22** b) = Gītā (Vulg.) 3. $43^{b}$. G1. 2 M संस्तंभ्या°. — c) Ś1 K1. 2 अमोहयं दान°; S मोहयन् (T1 मोहयं; G1 अमोघं) दानवेंद्राणाम्. — d) Dc अयं (for अहं). B D (except D1–3. 5) मायाबलं महत्; T2 G3. 4 मायां महद्(G4 महा)-बलां.

**23** a) M अब्रवं! K4 सूतं; D5 तत्र (for भीतं). — b) T1 विजयं (for भुजयोर्). — c) N वै (Ś1 D5 च) (for मे).

**24** a) D1 अथा°; T2 G2. 3 तथा° (for अद्या°). K4 T2 G3 तेषां (for [ए]तेषां). G1 अस्त्रमायां च वै तेषां. — b) B1 एनां; D2 एषां (for एतां). — c) T2 (before corr.) G1. 4 ततश्चोग्रां (for तम°).

**25** c) D2. 3. 5 T1 G1 मोहिनीं. Dn D4. 6 सर्वभूतानां.

**26** a) K4 पीड्यमानास्तु. K3. 4 मायाभिः. — b) K3. 4 ताभिस्तेपि (K4 °स्ते वै); B4 मया तासु (for तासु तासु). K1 B4 T1 सुरेश्वराः; K3. 4 सुरेतराः; B1 सुरोत्तमाः; B2. 3 D (except D1. 3. 5) [अ]सुरोत्तमाः (for [अ]सुरेश्वराः). — c) K4 बहुविधां मायां. — d) Ś1 K1. 2 D5 प्रकुर्वंति; K3. 4 B3 S (except G1) प्राकुर्वंत; B1 प्राकुर्वंस्ते (for प्राकुर्वन्). K3. 4 महौ° (for अमितौ°).

**27** a) K4 प्राकाश्यम् (for प्रकाशम्). S अगमत् (for अभवत्). — b) D5 तमसश्चास्यते; T1 तमसा गृह्यते. — c

C. 3 12157 B 3. 171. 26 K. 3. 173 26

पुनर्बहुविधा मायाः प्राकुर्वन्नमितौजसः ॥ २६
पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः ।
व्रजत्यदर्शनं लोकः पुनरप्सु निमज्जति ॥ २७
सुसंगृहीतैर्हरिभिः प्रकाशे सति मातलिः ।
व्यचरत्स्यन्दनाग्र्येण संग्रामे लोमहर्षणे ॥ २८
ततः पर्यपतन्नुग्रा निवातकवचा मयि ।
तानहं विवरं दृष्ट्वा प्राहिण्वं यमसादनम् ॥ २९
वर्तमाने तथा युद्धे निवातकवचान्तके ।
नापश्यं सहसा सर्वान्दानवान्माययावृतान् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

# १६९

अर्जुन उवाच ।
अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया ।
अदृश्यानस्त्रवीर्येण तानप्यहमयोधयम् ॥ १
गाण्डीवमुक्ता विशिखाः सम्यगस्त्रप्रचोदिताः ।
अच्छिन्दन्नुत्तमाङ्गानि यत्र यत्र स्म तेऽभवन् ॥ २
ततो निवातकवचा वध्यमाना मया युधि ।
संहृत्य मायां सहसा प्राविशन्पुरमात्मनः ॥ ३
व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने ।
अपश्यं दानवांस्तत्र हताञ्शतसहस्रशः ॥ ४
विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च ।

---

B D (except D1–3) भवत्यदर्शनो.

**28** a) Ś1 K1. 2 असं° (for सुसं°). — b) K1 °शेन स (for °शे सति). — c) Ś1 व्यरोचत्; D4. 6 प्रचरत्; T G3 व्यचरन्. Ś1 K Dn1. n2 D1–3. 5. 6 G1 M2 °ग्रेण; T2 G3. 4 °ग्रेषु (for °ग्र्येण). — d) S (as usual) रोम° (for लोम°).

**29** a) T1 °चरन्; M1 °तपन् (for °पतन्). B1 अग्रे (for उग्रा). T2 G2–4 ततः पतंत्युपर्युग्रा. — b) Ś1 K1. 2 युधि (for मयि). — c) K4 D1. 2 विवशान्; B2 विवरान्; Dc G2 विचरन्; D3 चरतो; T1 विविधं (for विवरं). — d) K4 प्रापयं (for प्राहिण्वं).

**30** a) D5 T2 G3 वर्धं° (for वर्तं°). D1. 2 T G2–4 M1 तदा (for तथा). — b) Ś1 K1. 2 °चान्युधि; K3 D5 M1 °चांतिके. — c) K4 मातलिं (for सहसा). — d) B4 मायया युतान्.

Colophon om. in K3. — *Major parvan:* Ś1 K1. 2 Dn2 T2 G2–4 आरण्य. — *Sub-parvan:* Omitting sub-parvan name, K4 B1–3 D G1 mention only निवातकवचवध (B1 om. वध) (preceded by गंधमादनवास in B2, and by लोमशतीर्थयात्रा in D1). — *Adhy. name:* G1 M मायायुद्धं. — *Adhy. no.* (figures, words or both): Dn 171 (Dn2 170); D1 177; S (M2 *sup. lin.*) 172 (M2 orig. 174). — *Śloka no.:* Dn D1 30.

## 169

**1** a) Ś1 K2. 4 D1–3 दैत्या मां; K1 दैत्यास्ते (by transp.). — b) D5 हि (for स्म). S मां युधि (for मायया). — c) B D (except D1. 2. 5) अदृश्येनास्त्र°.

**2** a) S °मुक्तैर्विशिखैः. — b) K3 D2 °नोदिताः; K4 D1 °योजिताः; S °चोदितैः. — c) K2 अवच्छिन्; Dn2 D2. 5. 6 अच्छिदन्; D3 आछिदं; T G1. 3 अच्छिदं; G2. 4 अच्छिदं; M अच्छिनं (for अच्छिन्दन्). M ह्युत्तमांगानि.

**3** b) T1 युध्य° (for वध्य°). Ś1 K1. 2 मया भुवि; T2 G2–4 महारणे (for मया युधि). — c) K3 D3 G1 मायाः (for मायां). S (except G1) तरसा (for सहसा).

**4** c) K4 अदृश्यं. — d) Ś1 तत्र (for शत-).

**5** a) K3. 4 विनिपिष्टानि; T2 G1. 3 विनिर्वि°. — b) K1. 2 [अ]पि; D1. 2 G3 [उ]त (for च). T1. 2 (before corr.) G1. 2. 4 M सहस्राभरणान्युत. — c) K1 D1–3 कोटिशः; B1–3 Dc Dn D4. 6 शतशः; T G2–4 कूटवत् (for कूटशः). K1 च प्र-; K2. 4 संप्र-; T G2–4 प्रति- (for स्म प्र-). — d) K3 शस्त्राणि (for गात्राणि). K3 G1 विविधानि; T2

कूटशः स्म प्रदृश्यन्ते गात्राणि कवचानि च ॥ ५
हयानां नान्तरं ह्यासीत्पदाद्विचलितुं पदम् ।
उत्पत्य सहसा तस्थुरन्तरिक्षगमास्ततः ॥ ६
ततो निवातकवचा व्योम संछाद्य केवलम् ।
अदृश्या ह्यभ्यवर्तन्त विसृजन्तः शिलोच्चयान् ॥ ७
अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथ ।
न्यगृह्णन्दानवा घोरा रथचक्रे च भारत ॥ ८
विनिगृह्य हरीनश्वान्रथं च मम युध्यतः ।
सर्वतो मामचिन्वन्त सरथं धरणीधरैः ॥ ९
पर्वतैरुपचीयद्भिः पतमानैस्तथापरैः ।
स देशो यत्र वर्ताम गुहेव समपद्यत ॥ १०
पर्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः ।
अगच्छं परमामार्तिं मातलिस्तदलक्षयत् ॥ ११

लक्षयित्वा तु मां भीतमिदं वचनमब्रवीत् ।
अर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय ॥ १२
ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम् ।
देवराजस्य दयितं वज्रमस्त्रं नराधिप ॥ १३
अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च ।
अमुञ्चं वज्रसंस्पर्शानायसान्निशिताञ्शरान् ॥ १४
ततो मायाश्च ताः सर्वा निवातकवचांश्च तान् ।
ते वज्रचोदिता बाणा वज्रभूताः समाविशन् ॥ १५
ते वज्रवेगाभिहता दानवाः पर्वतोपमाः ।
इतरेतरमाश्लिष्य न्यपतन्पृथिवीतले ॥ १६
अन्तर्भूमौ तु येऽगृह्णन्दानवा रथवाजिनः ।
अनुप्रविश्य तान्बाणाः प्राहिण्वन्यमसादनम् ॥ १७
हतैर्निवातकवचैर्निरस्तैः पर्वतोपमैः । C. 3. 12179 B. 3. 172. 18 K. 3. 174. 18

---

G2–4 च शिरांसि (for कव°).

**6** a) D1 T1 अंतरं (for नान्तरं). B2 D1 च (for हि). — b) = 3. 63. 6b. D1 प्रच°; M हि च° (for विच°). — c) D5 उत्पेतुः (for उत्पत्य). D6 सहसोत्तस्थुः; T1. 2 (before corr.) G1. 2. 4 M सममातस्थुः. — d) B1–3 अंतरीक्ष-. Ś1 K1. 2 B4 -चरास्; K3. 4 Dc2 D1–3. 5 S -गतास् (for -गमास्). D1 T2 G2–4 तदा; D5 तथा (for ततः).

**7** ab) T1 तथा (for ततो). D3 निवातकवचा व्योम ते समासाद्य केवलं. — c) Ś1 K1. 2 B1–3 Dn D4–6 ह्यत्यव°; T1 ह्यत्र व° (for ह्यभ्यव°). B4 अदृश्यं तेभ्यवर्तंत.

**8** a) Ś1 K1. 3. 4 D1–3 तु (for च). — b) K4 B2 Dn1 D2–4. 6 T2 G3 M चरणानथ; Dc2 G1 °णान्यथा. D5 [अ]पि (for [अ]थ). — c) Ś1 अगृ°; K1 B1–3 Dc Dn D1. 4. 6 न्य(Dn2 वि)गृ°; K2 D2 निगृ°; D5 निगृह्य. — d) B1 रथं; D5 तथा (for रथ-). K2. 3 -चक्रं च; B4 -चक्राणि; G1 -चक्रैश्च (for -चक्रे च). Dn3 रथं च मम भारत.

**9** a) D1 तान्निगृह्य. Ś1 रथान्; K1. 2 शरान्; K4 Dc D2 S हयान् (for हरीन्). K4 D2 अश्यान्; Dc चाथ; S चान्ये (for अश्वान्). — b) K1 शरान् (for रथं). — c) Ś1 K1. 2 अयुध्यंत; Dn D4. 6 अविध्यंत; Cnp अचिन्वन्त (as in text).

**10** a) K4 D2. 5 उपचिन्वद्भिः; Dc अपचीयद्भिः. — b) S पतद्भिश्च (for पतमानैस्). — c) K1–3 B1 D2. 3. 5 वर्तामो; B4 T2 G2–4 °मि (for °म). T1 M प्राप्ताः स्म संशयं तत्र. — d) K1 गुहैव; T1 इहैव (for गुहेव).

**11** a) T1 हि (for ऽहं). — c) K3 M2 अगच्छत्; K4 D2 अगच्छन्; Dc2 D3. 6 आगच्छं. B4 D5 परमार्ति समापन्नो. — d) T1 मातलिं तु न लक्षयं.

**12** K3 om. 12. — a) N (except D1–3; K3 om.) च (for तु). — c) D5 मा भैषीर्.

**13** a) S (except G4) अस्य (for तस्य). — b) Ś1 D3. 6 G3. 4 उदैरयं; K1 उदैरयन्; K2 D1 उदीरयन्. — d) K B D T2 G1. 3 भीम° (D5 दिव्य°) (for वज्र°).

**14** a) Ś1 K1. 2 अचल-. — b) D5 अभि° (for अनु°). — c) Ś1 K D1. 3 °संकाशान् (for °संस्पर्शान्). — d) Ś1 K D (except D1–3. 5) सायकान्; T2 G आयतान् (for आयसान्). D5 आयसान्न् (for निशितान्). Ś1 K Dc Dn D4. 6 बहून्; D5 शितान् (for शरान्).

**15** a) B4 शुभाः (for च ताः). — b) T2 G2–4 तथा (for च तान्). — c) Ś1 K4 D1. 5 °नोदिता; K2 °शादिता (for °चोदिता).

**16** a) B Dc Dn D4. 6 -वि-; D1. 5 -नि- (for -[अ]भि-). — c) T1 आश्लिष्यन्. — d) Ś1 धरणी° (for पृथिवी°).

**17** a) K4 B2–4 D (except D3) च (for तु). — c) Ś1 °प्रवेश्य तान्; K1 °प्रवेशितान्. Ś1 K1 D5 बाणान्. — d) K1. 2 प्राहिण्वं (for °ण्वन्).

**18** a) T1 तैस्तैर् (for हतैर्). — c) B1 समासाद्य दिशः सर्वा. — d) D5 पर्वतैरिव (by transp.); T1 पर्वतोपमैः (cf. b).

**19** a) D3 तैर् (for न). K1 D1–3 G1 क्षितिः; K2

C. 3 12179 B. 3 172 18 K. 3. 174 18 ममाच्छाद्यत देशः स विकीर्णैरिव पर्वतैः ॥ १८
न हयानां क्षतिः काचिन्न रथस्य न मातलेः ।
मम चादृश्यत तदा तदद्भुतमिवाभवत् ॥ १९
ततो मां प्रहसन्राजन्मातलिः प्रत्यभापत ।
नैतदर्जुन देवेषु त्वयि वीर्यं यदीक्ष्यते ॥ २०
हतेष्वसुरसंघेषु दारास्तेषां तु सर्वशः ।
प्राक्रोशन्नगरे तस्मिन्यथा शरदि लक्ष्मणाः ॥ २१
ततो मातलिना सार्धमहं तत्पुरमभ्ययाम् ।
त्रासयन्रथघोषेण निवातकवचस्त्रियः ॥ २२
तान्दृष्ट्वा दशसाहस्रान्मयूरसदृशान्हयान् ।
रथं च रविसंकाशं प्राद्रवन्गणशः स्त्रियः ॥ २३
ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः ।
शिलानामिव शैलेषु पतन्तीनामभूत्तदा ॥ २४
वित्रस्ता दैत्यनार्यस्ताः स्वानि वेश्मान्यथाविशन् ।
बहुरत्नविचित्राणि शातकुम्भमयानि च ॥ २५
तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् ।
विशिष्टं देवनगरादपृच्छं मातलिं ततः ॥ २६
इदमेवंविधं कस्माद्देवता नाविशन्त्युत ।
पुरंदरपुराद्धीदं विशिष्टमिति लक्षये ॥ २७

मातलिरुवाच ।

आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् ।
ततो निवातकवचैरितः प्रच्याविताः सुराः ॥ २८
तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम् ।
इदं वृतं निवासाय देवेभ्यश्चाभयं युधि ॥ २९
ततः शक्रेण भगवान्स्वयंभूरभिचोदितः ।
विधत्तां भगवानत्रेत्यात्मनो हितकाम्यया ॥ ३०

---

कृतिः; B$_{2-4}$ Dc गतिः; T$_1$ क्षताः (for क्षतिः). T$_1$ केचिन्. D$_5$ तस्मिन्देशे गतिस्तात. — $^b$) D$_5$ पर° (for रथ°). — $^c$) Ś$_1$ Dc D$_{1.5}$ G$_{1.2}$ M$_2$ वादृश्यत; K$_2$ वारुच्यत.

**20** $^a$) T$_1$ प्रहसद्. — $^b$) T$_2$ G$_{2-4}$ सम° (for प्रत्य°). — $^c$) Dc देवेशे (for °षु). — $^d$) Ś$_1$ K$_{1.2}$ D$_5$ अच्युत; K$_{3.4}$ D$_{1.3}$ T$_1$ M इष्यते (for ईक्ष्यते).

**21** D$_4$ om. 21$^b$–22$^c$. — $^b$) Dc T G च (for तु). D$_1$ संघशः (for सर्वशः). — $^c$) D$_3$ आक्रोशन्. B$_4$ तत्र (for तस्मिन्). — $^d$) B$_4$ सरसि (for शरदि). Ś$_1$ K$_{1.2}$ पक्षिणः; B (B$_{1.2m}$ as in text) Dn D$_6$ सारसाः; Cnp लक्ष्मणाः (as in text). K$_3$ कुरर्य इव भारत.

**22** D$_4$ om. 22$^{abc}$ (cf. v.l. 21). — $^a$) Ś$_1$ K$_1$ ततो मातलिमासाद्य. — $^b$) Ś$_1$ K$_1$ त्वहं (for अहं). S अभ्यगां (for अभ्ययाम्). — $^c$) K$_3$ वज्र° (for रथ°).

**23** $^a$) B$_1$ शत°; T$_1$ रथ° (for दश°). — $^d$) K$_3$ क्षणशः; S शतशः (for गणशः).

**24** $^a$) K$_4$ D$_{1.2}$ आकरुणः (for आभरणैः). K$_1$ शब्दैस्. — $^c$) Ś$_1$ K$_{1.2}$ शिलाभिर् (for शिलानाम्). Dc शैलेंद्रे (for शैलेषु). — $^d$) Ś$_1$ K$_{1.2}$ पतंतीभिर्; G$_1$ पतितानाम् (for पतन्तीनाम्).

**25** $^a$) Ś$_1$ K$_2$ D$_3$ विध्वस्ता (for वित्रस्ता). — $^b$) D$_5$ S तानि (for स्वानि). — D$_6$ om. 25$^c$–26$^b$. — $^d$) Ś$_1$ K$_{2-4}$ D$_{1-8}$ °कौंभ° (for °कुम्भ°).

**26** D$_5$ om. 26$^{ab}$ (cf. v.l. 25). — $^a$) Dc °ताकारमयं; T$_1$ °तागारमहं; T$_2$ G$_{3.4}$ °तं महारंभं; G$_1$ °ताकारतमं. — After 26$^{ab}$, the sequence in D$_3$ is 29$^{cd}$, 30, 28, 29$^{ab}$, 26$^{cd}$, 27, 31, etc. — $^d$) K$_{3.4}$ D$_1$ तदा (for ततः).

**27** D$_5$ om. 27$^{ab}$. — $^b$) Ś$_1$ K$_{1.2}$ देवानामिव संमतं; K$_3$ B D (D$_5$ om.) देवा ना(K$_3$ नो)वासयंत्युत. — $^c$) K$_4$ च (for हि). Dn$_1$ पुरंदरस्य माहात्म्याद्. — $^d$) Dn$_1$ आदिष्टम् (for विशिष्टम्). Ś$_1$ K$_{1.2.4}$ D$_5$ उप-; K$_3$ D$_{1.3}$ T G$_{2-4}$ इव (for इति). K$_2$ लक्ष्यते.

**28** T$_2$ G$_3$ om. the ref. For sequence in D$_3$ cf. v.l. 26. — $^a$) Ś$_1$ K$_{1.2}$ पुरं (for पुरा). — $^b$) D$_5$ T$_2$ G$_{2-4}$ वै (for नः). Ś$_1$ K$_{1.2}$ पुरा (for पुरम्). T$_1$ देवराजनिवेशनं. — $^d$) K B$_{2.3}$ D$_5$ प्राच्या(K$_3$ °द्रा)विताः. G$_2$ पुरात् (for सुराः).

**29** For sequence in D$_3$ cf. v.l. 26. — $^a$) Dn$_1$ दुःखं प्राप्य (for तपस्तप्त्वा). B$_2$ तपश्चात्र महत्तप्त्वा. — $^c$) K$_{1.3}$ वृत्तं; Dn$_1$ D$_{2.3}$ दत्तं (for वृतं.). — $^d$) K$_1$ चायुधं; T$_1$ चावृतं (for चाभयं). — After 29, D$_6$ (marg. *sec. m.*) ins. :

853* तथा देवैरवध्यत्वं पुरस्याभेद्यत्वमेव तु ।
मनुष्याणां दुर्बलत्वादुपेक्ष्यैव महासुरैः ।

**30** For sequence of D$_3$ cf. v.l. 26. — $^b$) B$_{1-3}$ D (except D$_{1-3.5}$) इति; T$_2$ G$_{2-4}$ अपि (for अभि-). K$_4$ D$_{1-3.5}$ -नोदितः (for -चोदितः). — $^{cd}$) Ś$_1$ विदत्तां; D$_3$ व्यधत्त; D$_5$ विधत्स्व; D$_6$ विधात्रा; T$_1$ विधत्त; T$_2$ G$_{2-4}$ दत्तवान् (for विधत्तां). Ś$_1$ K$_{1.2}$ B$_2$ Dn$_{2.}$ n$_3$ D$_{1-4.6}$ अंतम्; Dn$_1$ एतद्; D$_5$ अद्य; T$_2$ G$_{2-4}$ अस्त्रम् (for अत्र).

तत उक्तो भगवता दिष्टमत्रेति वासवः ।
भवितान्तस्त्वमेवैषां देहेनान्येन वृत्रहन् ॥ ३१
तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव ।
न हि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया ॥ ३२
कालस्य परिणामेन ततस्त्वमिह भारत ।
एषामन्तकरः प्राप्तस्त्वया च कृतं तथा ॥ ३३
दानवानां विनाशार्थं महास्त्राणां महद्बलम् ।
ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमम् ॥ ३४

अर्जुन उवाच ।

ततः प्रविश्य नगरं दानवांश्च निहत्य तान् ।
पुनर्मातलिना सार्धमगच्छं देवसद्म तत् ॥ ३५

इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

# १७०

अर्जुन उवाच ।

निवर्तमानेन मया महद्दृष्टं ततोऽपरम् ।
पुरं कामचरं दिव्यं पावकार्कसमप्रभम् ॥ १
द्रुमै रत्नमयैश्चित्रैर्भास्वरैश्च पतत्रिभिः ।
पौलोमैः कालकेयैश्च नित्यहृष्टैरधिष्ठितम् ॥ २
गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम् । C. 3. 12199 B. 3. 173. 3 K. 3 175. 3

---

Ś$_1$ K$_{1.2.4}$ D$_{1-3}$ अस्माकं; B$_{1.2}$ Dn D$_{4-6}$ T$_2$ G$_{2-4}$ आत्मनो; B$_{3.4}$ Dc चात्मनो (for [इ]त्यात्मनो). T$_2$ G$_{2-4}$ हितमुत्तमं (for °काम्यया).

**31** $^{b}$) K$_2$ D$_1$ M$_1$ °मात्रेति; T$_2$ G$_{2-4}$ °मास्तेति (for °मत्रेति). B D (except D$_{1-3.5}$) भारत (for वासवः). T$_1$ दिष्टमत्र पुरंदर. — $^{c}$) Dn D$_{4.6}$ अप्येषां; D$_3$ T$_2$ G$_{2-4}$ एतेषां (for एवैषां). Ś$_1$ K$_{1.2}$ त्वमेवैषां भवस्यंतो; B$_2$ भविता त्वंत एतेषां; B$_4$ त्वमप्येषां भवस्वांतो; D$_5$ त्वमेषां भवितास्यंतो; T$_1$ भवता तं तमेवैषां. — $^{d}$) N (except K$_4$ D$_{1-3}$) शत्रु° (for वृत्र°).

**32** $^{a}$) Ś$_1$ K$_{1.2}$ त्वेषां; K$_{3.4}$ B$_4$ D$_5$ तेषां (for एषां). — $^{d}$) T$_2$ G$_{2-4}$ यतस्ते (for य एते). Ś$_1$ K$_{1.2}$ [ऽ]त्र (for नि-).

**33** $^{b}$) G$_1$ गत° (for तत°). — $^{c}$) Ś$_1$ K$_{1.2}$ D$_{1.2}$ तेषाम् (for एषाम्). S पार्थ (for प्राप्तस्). — $^{d}$) K$_3$ यत् (for तत्). G$_1$ [अ]पि (for च). Ś$_1$ तथा तच्च कृतं त्वया; D$_5$ त्वया तच्च कृतं तथा; T$_2$ G$_{3.4}$ त्वयेत्युपकृतं तथा; G$_2$ संप्रत्युपकृतं तथा.

**34** $^{a}$) B$_{1-3}$ D (except D$_{1-3.5}$) विनाशाय. — $^{b}$) B D (except D$_{1-3.5}$) अस्त्राणां परमं बलं. — $^{c}$) Ś$_1$ K$_{1.2}$ प्रहितस्त्वं; T$_1$ आहित°; G$_1$ गृहीत°. G$_{2.4}$ सुरेंद्रेण. — $^{d}$) B$_1$ M$_1$ पुरुषेण (for °षेन्द्र). Ś$_1$ K$_{1.2.4}$ D$_1$ M [ए]तद्; T G [इ]दम् (for तद्). Ś$_1$ K$_{1.2}$ उच्यतां; D$_1$ अद्भुतं (for उत्तमम्). D$_5$ पुरुषेंद्रैरनुत्तमैः.

**35** S om. the ref.! — $^{a}$) B$_{1.2}$ D (except D$_{1-3.5}$) प्रशाम्य; B$_3$ °शास्य (for °विश्य). — $^{b}$) K$_2$ [अ]भिभाव्य; B$_1$ निहन्य (for निहत्य). — $^{d}$) K$_{3.4}$ D$_3$ आगच्छं; S (except G$_4$) अगमं. K$_3$ ह (for तत्).

Colophon. — *Major parvan:* Ś$_1$ K$_{1.2}$ Dn$_2$ D$_6$ T$_1$ G$_{2.4}$ आरण्य. — *Sub-parvan:* Omitting sub-parvan name, K$_{3.4}$ B$_{1-3}$ D G$_1$ M$_1$, mention only निवातकवच-वध (B$_1$ om. वध) (preceded by लोमशतीर्थयात्रा in K$_3$ D$_1$, and by गंधमादनवास in B$_2$). — *Adhy. no.* (figures, words or both): Dn 172 (Dn$_2$ 171); D$_1$ 178; S (M$_2$ *sup. lin.*) 173 (M$_2$ orig. 175). — *Śloka no.:* Dn D$_1$ 35.

## 170

**1** $^{ab}$) Ś$_1$ K$_{1.2}$ transp. मया and महत्. T$_2$ G तदा (for मया). D$_2$ सह; G$_4$ मया (for महद्). K$_2$ पुरं; M$_1$ परं (for [अ]परम्). — $^{c}$) K$_2$ परं (for पुरं). K$_{3.4}$ D$_{1.3.5}$ T$_2$ G M °गमं (for °चरं). T$_1$ तत्पुरं कामगं दिव्यं. — $^{d}$) D$_5$ पावकार्चि°.

**2** $^{a}$) B Dc Dn D$_{4.6}$ रत्नद्रुम(B$_4$ द्रुमरत्न)मयैश्. K$_3$ Dc D$_{3.5}$ T$_1$ G$_1$ M चित्रं (for चित्रैर्). — $^{b}$) Ś$_1$ K$_{1.2}$ Dc भासुरैश्च; B$_{2.3}$ Dn D$_{4.6}$ सुस्वरैश्च. — $^{c}$) Ś$_1$ K D$_{1-3.5}$ कालखंजै°; B$_{2-4}$ Dc Dn D$_{4.6}$ °कंजै°. — $^{d}$) Ś$_1$ K D$_{1-3.5}$ मुदा युतैः; S दुरासदं (for अधिष्ठितम्); cf. 3$^{b}$.

**3** $^{b}$) T$_1$ अनुत्तमं (for दुरा°). — K$_4$ om. 3$^{c}$–5$^{b}$; T$_1$

C. 3. 12199 B. 3. 173 3 K. 3. 175. 3 सर्वरत्नमयं दिव्यमद्भुतोपमदर्शनम् ।
द्रुमैः पुष्पफलोपेतैर्दिव्यरत्नमयैर्वृतम् ॥ ३
तथा पतत्रिभिर्दिव्यैरुपेतं सुमनोहरैः ।
असुरैर्नित्यमुदितैः शूलर्ष्टिमुसलायुधैः ।
चापमुद्गरहस्तैश्च स्रग्विभिः सर्वतो वृतम् ॥ ४
तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम् ।
अपृच्छं मातलिं राजन्किमिदं दृश्यतेति वै ॥ ५

मातलिरुवाच ।

पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः ।
तपसोऽन्ते ततस्ताभ्यां स्वयंभूरददाद्वरम् ॥ ६
अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् ।
अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः ॥ ७
रमणीयं पुरं चेदं खचरं सुकृतप्रभम् ।
सर्वरत्नैः समुदितं दुर्धर्षममरैरपि ।
सयक्षगन्धर्वगणैः पन्नगासुरराक्षसैः ॥ ८
सर्वकामगुणोपेतं वीतशोकमनामयम् ।
ब्रह्मणा भरतश्रेष्ठ कालकेयकृते कृतम् ॥ ९
तदेतत्खचरं दिव्यं चरत्यमरवर्जितम् ।
पौलोमाध्युषितं वीर कालकेयैश्च दानवैः ॥ १०
हिरण्यपुरमित्येतत्ख्यायते नगरं महत् ।
रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः ॥ ११
त एते मुदिता नित्यमवध्याः सर्वदैवतैः ।
निवसन्त्यत्र राजेन्द्र गतोद्वेगा निरुत्सुकाः ।
मानुषो मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा ॥ १२

अर्जुन उवाच ।

सुरासुरैरवध्यांस्तानहं ज्ञात्वा ततः प्रभो ।
अब्रुवं मातलिं हृष्टो याह्येतत्पुरमञ्जसा ॥ १३

---

$M_1$ om. $3^{e}$–$4^{b}$; $K_3$ om. $3^{f}$–$4^{c}$. — $^{f}$) B D (except $D_{1-3.5}$) सर्व° (for दिव्य°).

**4** $K_4$ om. 4; $K_3$ om. $4^{abc}$; $T_1$ $M_1$ om. $4^{ab}$ (cf. v.l. 3). — $^{b}$) Ś$_1$ $B_4$ °रसं; $K_{1.2}$ $D_5$ °हरं; $B_3$ °रसैः (for °हरैः). — $^{d}$) Ś$_1$ शूलांघू-; $D_{1.2}$ शूलासि-; $T_1$ $G_{1.2.4}$ शूलेष्टि- (for शूलर्ष्टि-). $K_3$ D (except $D_6$) -मुशलायुधैः; $B_{1.2}$ -मुषला°.

**5** $K_4$ om. $5^{ab}$ (cf. v.l. 3). — $^{b}$) Dc पुनर् (for पुरम्). — $^{d}$) Ś$_1$ $K_{1.2.4}$ $D_{1.2}$ [अ]त्र वै; $D_5$ $T_1$ पुरं (for [इ]ति वै). B Dc Dn $D_{4.6}$ किमिदं वर्ततेद्भुतं.

**6** $^{a}$) $D_2$ पौलोमी (for पुलोमा). $K_{1.2}$ दैत्येया; $K_3$ $G_1$ दैत्येयी (for दैतेयी). — $^{b}$) $K_{3.4}$ $Dc_2$ $D_{1-3}$ कालिका; $T_1$ तन्नामा; $T_2$ $G_{2-4}$ M काळका (for कालका). $D_{1.2}$ चापि दानवी (for च महासुरी). — $^{c}$) $K_{1-3}$ $D_6$ $T_1$ तु (for ते). $G_2$ °सहस्रांते. — $^{d}$) $K_2$ तप उत्तमं (for परमं तपः). — $^{f}$) B D (except $D_3$) अददद्वरं.

**7** $^{a}$) S (except $T_1$) वरौ (for वरं). Dn तं; $T_1$ तौ (for ते). — $^{b}$) Ś$_1$ $K_{1.2}$ $B_{1-3}$ Dc $D_{2.4.6}$ °दुःखितां. — $^{d}$) $D_5$ सुरदानवराक्षसैः.

**8** $^{a}$) B D (except $D_{1-3}$) पुरं सुरमणीयं च. — $^{b}$) Ś$_1$ K $B_1$ Dc $D_{1-3.5}$ खेचरं. $K_2$ सुकृतं प्रभो; B D (except $D_{1-3}$) सुमहाप्रभं; $M_2$ सुकृतप्रदं. — $^{c}$) $D_{1.2}$ सर्वकामैः. Ś$_1$ $K_{1.2}$ समुचितं; $K_3$ प्रमुदितं. — $^{d}$) $K_1$ दुर्धर्षैर्; $K_4$ दुर्दर्शम्. $M_1$ अपरैरपि. — $^{e}$) $B_{1-3}$ D (except $D_{1-3.5}$) महर्षियक्षगंधर्व-. — $^{f}$) $D_1$ $T_2$ $G_{2-4}$ पन्नगोरग°.

**9** $^{a}$) $D_5$ °कामफलो°; $G_4$ °कर्मगुणो°. — $^{c}$) $B_4$ $D_2$ S (except $M_1$) ब्रह्मणो. S भवनात् ($G_1$ $M_1$ °नं) श्रेष्ठ (for भरतश्रेष्ठ). — $^{d}$) $T_1$ $G_1$ $M_1$ °कृतं विभो; $G_{2.4}$ °कृतं प्रभो.

**10** $^{a}$) $B_1$ Dc इदं (for एतत्). $K_4$ $D_1$ खेचरं; $B_1$ Dc तु पुरं; $B_2$ खेचरे; $B_{3.4}$ Dn $D_{2.4.6}$ स्वपुरं; $T_2$ $G_{1-3}$ $M_2$ स्वचरं (for खचरं). — $^{c}$) $K_4$ पौलोम्याध्युषितं. $K_2$ वीरं; $B_4$ रम्यं. — $^{d}$) $K_{1.2}$ $D_{1.3}$ कालिकेयैश्च; $B_{2-4}$ Dc $Dn_1$. $n_2$ $D_{2.4-6}$ कालकं($D_{2.5}$ °खं)जै°.

**11** $^{a}$) B D (except $D_{1.3.5}$) [ए]वं ($B_1$ [ए]व) (for [ए]तत्). — $^{b}$) $D_5$ आख्यातं; $T_1$ श्रूयते (for ख्यायते). — $T_1$ om. $11^{cd}$. — $^{c}$) $B_2$ रहितं; $D_2$ रक्ष्यते. $K_2$ $D_{1-3}$ कालिकेयैश्च; $B_4$ कालकंजै°. — $^{d}$) $K_4$ $D_1$ पौलोम्यैश्च.

**12** $^{a}$) $T_2$ $G_{2-4}$ तदा ते (for त एते). $B_{1-3}$ D (except $D_{2.3.5}$) राजन् (for नित्यम्). — $^{b}$) Ś$_1$ $K_1$ T G सर्वदेवतैः. — $^{c}$) Ś$_1$ K कौंतेय (for राजेन्द्र). — $^{d}$) Ś$_1$ गतदोषाः (for गतोद्वेगा). Ś$_1$ K सदो°; $B_2$ निरामयाः (for निरु°). — After $12^{cd}$, S ins.:

854* सुरासुरैरवध्यानां दानवानां धनंजय ।

— $^{e}$) $K_4$ $B_4$ Dn $D_{1-4.6}$ मानुषान्; $T_2$ $G_{3.4}$ मानुष्यो. — $^{f}$) Ś$_1$ K $D_{1-3}$ निसृष्टो (for निर्दिष्टो). — After 12, B ($B_1$ marg.) D (except $D_{1..3.5}$) ins.:

855* एतानपि रणे पार्थ कालकञ्जान्दुरासदान् ।
वज्रास्त्रेण नयस्वाशु विनाशं सुमहाबलान् ।

त्रिदशेशद्विषो यावत्क्षयमस्त्रैर्नयाम्यहम् ।
न कथंचिद्धि मे पापा न वध्या ये सुरद्विपः ॥ १४
उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात् ।
रथेन तेन दिव्येन हरियुक्तेन मातलिः ॥ १५
ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः ।
समुत्पेतुर्महावेगा रथानास्थाय दंशिताः ॥ १६
ततो नालीकनाराचैर्भल्लशक्त्यृष्टितोमरैः ।
अभ्यघ्नन्दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः ॥ १७
तदहं चास्त्रवर्षेण महता प्रत्यवारयम् ।
शस्त्रवर्षं महद्राजन्विद्याबलमुपाश्रितः ॥ १८
व्यामोहयं च तान्सर्वान्रथमार्गैश्चरन्रणे ।
तेऽन्योन्यमभिसंमूढाः पातयन्ति स्म दानवाः ॥ १९
तेषामहं विमूढानामन्योन्यमभिधावताम् ।
शिरांसि विशिखैर्दीप्तैर्व्यहरं शतसंघशः ॥ २०
ते वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः ।
खमुत्पेतुः सनगरा मायामास्थाय दानवीम् ॥ २१
ततोऽहं शरवर्षेण महता प्रत्यवारयम् ।
मार्गमावृत्य दैत्यानां गतिं चैषामवारयम् ॥ २२
तत्पुरं खचरं दिव्यं कामगं दिव्यवर्चसम् ।
दैतेयैर्वरदानेन धार्यते स्म यथासुखम् ॥ २३
अन्तर्भूमौ निपतितं पुनरूर्ध्वं प्रतिष्ठते ।
पुनस्तिर्यक्प्रयात्याशु पुनरप्सु निमज्जति ॥ २४ C. 3. 12224 B. 3. 173. 27 K. 3. 175. 28

[ (L. 1) B1 सुदारुणान् (for दुरासदान्). — (L. 2) Dc [आ]नयति (for नयस्व). B1 विरामं (for विनाशं).]

**13** S om. the ref. — Dc om. $13^{a}$–$15^{b}$. — a) B Dn D4. 6 अवध्यं तद् (for अवध्यांस्तान्). G2. 4 सुरैरवध्यांस्तान्सर्वान्. — b) B Dn D4. 6 विशां पते; T1 G1 महासुरान् (for ततः प्रभो). — c) D2 M (as usual) अब्रवं. Ś1 K D1–3. 5 तत्र (for हृष्टो).

**14** Dc om. 14 (cf. v.l. 13). — c) K4 D2 T1 G1 इमे; D5 विशेत् (for हि मे). D5 पापं (for पापा). — d) T1 M1 अवध्या; T2 G ह्यवध्या (for न वध्या). Ś1 K1. 2 हि; K3 च (for ये).

**15** Dc om. $15^{ab}$ (cf. v.l. 13). — a) G1 तत्र (for ततः). M क्षिप्रं (for शीघ्रं). — b) T2 G2–4 अंतिकं (for अन्तिकात्).

**16** a) Ś1 मामलक्ष्य; K1 ममालक्ष्य; K2 न मालक्ष्य. K1. 2 दैत्येया. K3 तेषामलक्ष्य दैत्येया. — b) B1 °भरणायुधाः. — c) K3 °भागा (for °वेगा). — d) Ś1 K1 D5 रथम् (for रथान्). Ś1 K1. 2 आदाय (for आस्थाय). K1. 3 S दंसिताः.

**17** a) Many S MSS. नाळीक-. Ś1 K D1. 3 °नाराच- (for °नाराचैर्). — b) K4 B Dc Dn D4–6 T1 भल्लैः (for भल्ल-). — c) B1–3 D (except D1. 3) प्रत्य° (for अभ्य°). K3 M2 मा (for मां).

**18** a) K3. 4 B3. 4 D3. 5 T1 G1. 2. 4 M1 तान् (for तद्). K3. 4 B Dc Dn D1–4. 6 शर°; D5 S शस्त्र° (for चास्त्र°). — b) S समवारयं (G1 °वाकिरं). — c) B3. 4 अस्त्रवर्षं; Dc शरवर्षं. K4 D1 अहं राजन्; B4 अभूद्राजन्; S महाराज. — d) =1. 38. $39^{d}$. K3. 4 D4 M2 °बलमपा°; B2 °बलसमा°.

**19** a) K1. 3. 4 Dc Dn2 D5 T G2. 3 M1 व्या(K1 Dc Dn2 व्य)मोहयन्; K2 विमोहयं; B1 व्यापोहयं; Dn1. n3 D2. 6 G1 M2 व्यमोहयं. — b) K4 °मार्गान्; T G3. 4 °मार्गे (for °मार्गैश्). — c) K3 अभिसंरूढाः; D1. 5 अतिसंमूढाः. K2 तेन्योन्येभ्यश्च सं°. — d) B2 Dn D4. 6 दानवान्.

**20** a) B D (except D1–3. 5) एवं (for अहं). — b) D5 अत्यंतम् (for अन्योन्यम्). — c) T2 G2. 3 विविधैर् (for विशिखैर्). Ś1 K1. 2 तीक्ष्णैर् (for दीप्तैर्). D5 शिरांसि पेतुर्विशिखैर्. — d) B Dc Dn D4. 6 व्यहनं (B1 °रं); T1 व्याहनं; T2 G अच्छिदं (G1 अहरं); M2 व्याहरं (for व्यहरं). D5 दीप्तैः कृत्तानि संघशः.

**21** a) D5 हन्य° (for वध्य°). K2 दैत्येयाः. — c) Dn2 स्वनगरान् (for सनगरा).

**22** a) K D1–3. 5 तानहं (for ततोऽहं). — b) B D (except D1–3. 5) कुरुनंदन (B2 °सत्तम); T2 G2–4 पर्यवारयं; M2 सम° (for प्रत्य°). — M2 om. $22^{cd}$. — c) D2 आश्रित्य (for आवृत्य). — d) Ś1 तेषाम् (for चैषाम्). B4 न्यवारयं.

**23** a) G1 खेचरं. — b) B D (except D1–3. 5) सूर्यसप्रभं (B2 °संनिभं; B4 °वर्चसं); T1 M दीप्तवर्चसं; G1 दीप्ततेजसं. — c) K1–3 दैत्येयैर्. — d) Ś1 K3 चार्यंते स्म; K2 धारयंते; D2 वार्यंते स्म; T1 नीयते स्म.

**24** a) Ś1 K1. 2 अधो भूमौ; K3. 4 D1–3. 5 पुनर्भूमौ. B1–3 Dn2 D1–3. 5 निपतति. — b) Ś1 K1. 2 च गच्छति; B2–4 Dc Dn2 T G प्रतिष्ठितं; M प्रतिष्ठति. — c) D3 पपाताशु; T1 प्रधान्याशु.

**25** a) Dc अमरावतीव संकाशं (hypermetric!); D5

C 3. 12224 B 3. 173. 28 K 3. 175. 29 अमरावतिसंकाशं पुरं कामगमं तु तत् ।
अहमस्त्रैर्बहुविधैः प्रत्यगृह्णं नराधिप ॥ २५
ततोऽहं शरजालेन दिव्यास्त्रमुदितेन च ।
न्यगृह्णं सह दैतेयैस्तत्पुरं भरतर्षभ ॥ २६
विक्षतं चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः ।
महीमभ्यपतद्राजन्प्रभग्नं पुरमासुरम् ॥ २७
ते वध्यमाना मद्बाणैर्वज्रवेगैरयस्मयैः ।
पर्यभ्रमन्त वै राजन्नसुराः कालचोदिताः ॥ २८
ततो मातलिरप्याशु पुरस्तान्निपतन्निव ।
महीमवातरत्क्षिप्रं रथेनादित्यवर्चसा ॥ २९
ततो रथसहस्राणि षष्टिस्तेषाममर्षिणाम् ।
युयुत्सूनां मया सार्धं पर्यवर्तन्त भारत ॥ ३०
तानहं निशितैर्बाणैर्व्यधमं गार्ध्रवाजितैः ।
ते युद्धे संन्यवर्तन्त समुद्रस्य यथोर्मयः ॥ ३१
नेमे शक्या मानुषेण युद्धेनेति प्रचिन्त्य वै ।
ततोऽहमानुपूर्व्येण सर्वाण्यस्त्राण्ययोजयम् ॥ ३२
ततस्तानि सहस्राणि रथानां चित्रयोधिनाम् ।
अस्त्राणि मम दिव्यानि प्रत्यघ्नञ्शनकैरिव ॥ ३३
रथमार्गान्विचित्रांस्ते विचरन्तो महारथाः ।
प्रत्यदृश्यन्त संग्रामे शतशोऽथ सहस्रशः ॥ ३४
विचित्रमुकुटापीडा विचित्रकवचध्वजाः ।
विचित्राभरणाश्चैव नन्दयन्तीव मे मनः ॥ ३५

---

सदृशं ह्यमरावत्या. — $^b$) Ś$_1$ K$_{1-3}$ D$_{3.5}$ °चरं (for °गमं). D$_3$ T$_1$ G$_1$ शुभं (for तु तत्). B Dc Dn D$_{4.6}$ तत्पुरं कामगं महत्. — $^d$) K$_2$ प्रतिगृह्णं; K$_3$ B$_1$ D$_4$ T$_2$ G$_{1.3.4}$ प्रत्यगृह्णां; K$_4$ D$_{1.2}$ प्रत्यविध्यं; M$_1$ प्रत्यागृह्णं. B$_1$ पुरं महत्; B$_{2-4}$ D (except D$_{1-3.5}$) परंतप.

**26** $^a$) T$_1$ शैलराजेन (for शरजालेन). — $^b$) Ś$_1$ K$_{1.2}$ दिव्यास्त्रनिवहेन; K$_3$ B$_{2-4}$ D$_3$ °स्त्रनुदितेन (as in printed ed.!) K$_4$ °स्त्रादुदितेन; G$_1$ °स्त्रपुटितेन; G$_4$ °स्त्रमृदितेन; M °स्त्रचुदितेन. K$_{3.4}$ Dc$_2$ T$_2$ G$_{2-4}$ M ह; D$_3$ T$_1$ हि (for च). — $^c$) Ś$_1$ K$_{1.2}$ D$_1$ G$_1$ न्यगृह्णां; K$_3$ निगृह्णां; B$_4$ Dc Dn D$_{4.6}$ व्यगृह्णं; T$_1$ निगृह्णं. K$_{1-3}$ दैत्येयैस्; S दैत्यैस्तैस् (M$_1$ दैत्येंद्रैस्). — $^d$) B$_2$ Dc$_1$ Dn D$_{4.6}$ पुरुष° (for भरत°).

**27** $^a$) K$_{1.2}$ Dc D$_1$ विक्षितं; D$_3$ विकृतं; S विकीर्णं. D$_5$ सायकै°; S चाक्षयै° (for चायसै°). — T$_1$ om. (hapl.) 27$^b$–31$^a$. — $^b$) Ś$_1$ K$_{1.2}$ D$_{1.2}$ मंत्रयुक्तैर्; G$_2$ मत्प्रमुक्तैर्. D$_5$ महेषुभिः (for अजिह्मगैः). — D$_1$ om. 27$^c$–28$^b$. — $^c$) Ś$_1$ अभिपतद्. K$_4$ D$_2$ तत्तु (for राजन्). — $^d$) Ś$_1$ अगृह्णां; K$_{1.2}$ प्रगृह्णं; K$_3$ प्रणुन्नं; K$_4$m प्रकचं; D$_2$ सुप्रभं; T$_2$ G M प्र(G$_1$ वि)रुग्णं (for प्रभग्नं).

**28** T$_1$ om. 28; D$_1$ om. 28$^{ab}$ (cf. v.l. 27). — $^b$) Ś$_1$ K D$_{2.3.5}$ अजिह्मगैः; G$_1$ अयोमयैः (for अयस्मयैः). — $^c$) Ś$_1$ K D$_{2.3}$ °भ्राम्यंत (K$_2$ °त्रास्यत) (for °भ्रमन्त). — $^d$) K$_4$ D$_{1.2}$ कालनोदिताः; B$_4$ D$_5$ °मोहिताः.

**29** T$_1$ om. 29 (cf. v.l. 27). — $^a$) B D (except D$_{1-3.5}$) आरुह्य; S (T$_1$ om.) अप्यत्र (for अप्याशु). ❀ Cn : पाठान्तरे मातलिमारुह्य आलम्ब्य । महीमवातरमवतीर्णोऽभवमिति शेषः । ❀ — $^b$) K$_{1.2}$ प्रक्रमन् (for निपतन्). — $^c$) K$_3$ अवतरत्.

**30** T$_1$ om. 30 (cf. v.l. 27). — $^b$) S (T$_1$ om.) महायुधि (G$_1$ °त्मनां) (for अमर्षिणाम्). B$_4$ तेषां षष्टिर्महामृधे. — $^c$) G$_1$ महाराज (for मया सार्धं).

**31** T$_1$ om. 31$^a$ (cf. v.l. 27). — $^a$) B$_{1-3}$ Dn D$_{2.4.6}$ तान्यहं. G$_1$ विविधैर्बाणैर्. — $^b$) Ś$_1$ K$_{1.2}$ न्यहनं (for व्यधमं). Ś$_1$ B Dn$_3$ D$_{4-6}$ गार्ध्रराजितैः; K$_3$ D$_{1.3}$ T$_1$ °वाजिभिः; D$_2$ °वासितैः; T$_2$ G M$_2$ गृध्रवाजितैः. — $^c$) K$_2$ D$_3$ तैर् (for ते). Ś$_1$ K D$_{1-3}$ पर्य°; T$_1$ संप्र° (for संन्य°).

**32** $^a$) K$_{1.4}$ D$_{1.3.5}$ न मे; K$_2$ न ते; B$_4$ नैते; G$_1$ ते न (for नेमे). D$_5$ T$_2$ G$_{2.3}$ शक्ता; M$_2$ शक्त्या (for शक्या). Ś$_1$ K$_{1-3}$ Dc Dn D$_{4.6}$ मनुष्येण. — $^b$) K$_{1.2}$ युद्धे नेतुं; D$_5$ युद्धे जेतुं (for युद्धेनेति). B$_4$ D$_5$ S विचिंत्य (for प्र°). Ś$_1$ D$_6$ च; K$_{1.2}$ B$_4$ D$_{1.2}$ तु; K$_3$ ते; K$_4$ B$_{1-3}$ Dc Dn D$_{4.6}$ तत् (for वै). — $^c$) K$_{2.3}$ T$_1$ °पूर्वेण. — $^d$) B D T$_2$ G$_3$ दिव्यानि (for सर्वाणि). D$_5$ [अ]नोद°; T$_1$ [अ]चोद° (for [अ]योज°).

**33** $^a$) B$_1$ रथसह° (for तानि सह°). — $^b$) B Dn D$_{2.4-6}$ रथिनां. — $^d$) Ś$_1$ K$_{1.2}$ अपि; G$_4$ अथ (for इव).

**34** $^a$) D$_5$ °मार्गं विचित्रं. D$_{1.2}$ च (for ते). — $^b$) B D (except D$_{1-3.5}$) °बलाः (for °रथाः). — $^c$) K$_{1.2}$ प्रत्य(K$_2$ °ति)गृह्णंत; G$_1$ °विध्यंत (for °दृश्यन्त).

**35** $^a$) K$_3$ °मुकुटास्ते वै; T$_2$ G$_{3.4}$ °कुसुमापीडा; G$_1$ °कवचा°; G$_2$ M °मकुटा°. — $^d$) S मम प्रीतिकराभवन्.

**36** $^b$) K$_3$ D$_{2.3.5}$ °प्रणुदितै; K$_4$ °प्रमुदितान्; B$_{1.3.4}$

अहं तु शरवर्षैस्तानस्त्रप्रमुदितै रणे ।
नाशक्नुवं पीडयितुं ते तु मां पर्यपीडयन् ॥ ३६
तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि ।
व्यथितोऽस्मि महायुद्धे भयं चागान्महन्मम ॥ ३७
ततोऽहं देवदेवाय रुद्राय प्रणतो रणे ।
स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समयोजयम् ।
यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ॥ ३८
ततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनम् ।
त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्धजम् ।
लेलिहानैर्महानागैः कृतशीर्षममित्रहन् ॥ ३९
विभीस्तनस्तदस्त्रं तु घोरं रौद्रं सनातनम् ।
दृष्ट्वा गाण्डीवसंयोगमानीय भरतर्षभ ॥ ४०
नमस्कृत्वा त्रिनेत्राय शर्वायामिततेजसे ।
मुक्तवान्दानवेन्द्राणां पराभावाय भारत ॥ ४१
मुक्तमात्रे ततस्तस्मिन्रूपाण्यासन्सहस्रशः ।
मृगाणामथ सिंहानां व्याघ्राणां च विशां पते ।
ऋक्षाणां महिषाणां च पन्नगानां तथा गवाम् ॥ ४२
गजानां सृमराणां च शरभाणां च सर्वशः । C 3. 12244 B. 3 173. 47 K. 3. 175. 55

Dn D4. 6 M °प्रचुदितै. T2 G2–4 मंत्रास्त्रमुदितास्त्रणे. — c) K1. 3 D1 G1. 2 M1 नाशक्नुवन्. — d) B D (except D1–3. 5) प्रत्य°; T2 G2–4 अप्य° (for पर्य°).

**37** c) K4 व्याधितोस्मि. D2 तदा (for महा-). — After 37, T G ins.:

856* ततोऽहं परमायस्तो मातलिं परिपृष्टवान् ।
किमेते मम बाणौघैर्दिव्यास्त्रपरिमन्त्रितैः ।
न वध्यन्ते महाघोरैस्तत्त्वमाख्याहि पृच्छतः ।
स मामुवाच पर्याप्तस्त्वमेषां भरतर्षभ ।
तानुद्दिश्याथ मर्माणि प्रतिघातं तदाचर ।
एतच्छ्रुत्वा तु राजेन्द्र संप्रहृष्टस्तमूचिवान् ।
निवर्तय रथं शीघ्रं पश्य चैतान्निपातितान् ।
एवमुक्तो रथं तत्र मातलिः पर्यवर्तयत् ।
ततो मत्वा रणे भग्नं दानवाः प्रतिहर्षिताः ।
विचुक्रुशुर्महाराज स्वरेण महता तदा ।
अभग्नः कैश्चिदप्येष पाण्डवो रणमूर्धनि ।
अस्माभिः समरे भग्न इत्येवं संघशस्तदा ।

[(L. 1) T2 G2–4 परमायत्तो. — (L. 2) G3. 4 किमेतैर् (for °ते). — (L. 3) T G2–4 तत्त्वमाख्यातुमर्हसि. — (L. 4) T2 G3 पर्याप्तान् (for °प्तस्). T2 G2–4 समेतान् (for त्वमेषां). — (L. 5) T2 G2–4 परमं (for मर्माणि), and तत्प्रतीघातमाचर (for the posterior half). — (L. 7) T2 G3 वै तान् (for चैतान्). — (L. 10) T1 महान्; G1 मुहुः (for तदा).]

**38** b) B2–4 D (except D1. 2. 5) T2 G3. 4 प्रयतो (for °णतो). G1 रुद्रायाद्भुतमूर्तये. — After 38ab, G1 ins.:

857* प्रयतः प्रणतो भूत्वा नमस्कृत्य महात्मने ।

— d) Ś1 K D1–3. प्रत्ययोजयं (K3 प्रत्यनोवचं); B Dc Dn D4. 6 समचोदयं; D5 समनोदयं. — e) D5 यद्रौद्रमिति विख्यातं. — After 38, S ins.:

858* अहं पाशुपतं दिव्यं सर्वलोकनमस्कृतम् ।
[T1 M महत् (for अहं)]

**39** d) T1 °संनिभं (for °मूर्धजम्). — e) T1 (corrupt) मूर्धजं लेलिहानागैः. — f) K3. 4 B1–3 Dc D1. 2 कृतापीडम्; B3m. 4 Dn D4. 6 M कृतचीरम्; T G °चिह्नम् (for °शीर्षम्). — After 39; T G ins.:

859* भक्तानुकम्पिनं देवं नागयज्ञोपवीतिनम् ।

**40** a) Ś1 भीतस्ततस्; D5 विभीषणं; T G2–4 सोहं ततस्; G1 विचित्याहं; M विचीयाहं (for विभीस्ततस्). — c) T2 (after corr.) G3 दृढं; G1 स्पृष्ट्वा (for दृष्ट्वा).

**41** a) Ś1 K D1–3. 5 नमस्कृत्य. — b) K4 D4 सर्वाया°; D3 शिवाया°; G1 रुद्राया°. — c) D5 असुरेन्द्राणां (for दान°). — d) T2 G2–4 अभावायैव (for पराभावाय). D6 अभावाय परंतप.

**42** b) K1 अस्मिन् (for आसन्). — c) T1 अपि (for अथ). — d) S व्यालानां (for व्याघ्राणां). B3 (m as in text). 4 विशेषतः; D5 सहस्रशः; G1 वनौकसां (for विशां पते). — K3 om. (hapl.) 42f–43c. — f) G1 transp. तथा and गवाम्.

**43** K3 om. 43abc (cf. v.l. 42); G1 om. 43abcd. — a) K2 T1 M चा(M2 च)मराणां; K4 D1. 2 वानराणां; D3. 5 च हयानां; T2 G (G1 om.) शरभाणां (for सृम°). B Dc Dn D4. 6 शरभाणां गजानां च. — b) B D (except D1–3. 5) वानराणां; T2 G (G1 om.) चमराणां M ऋषभाणां (for शर°). B1. 4 सहस्रशः; B2. 3 D (except D1–3. 5) T2 G3 च संघशः; M च वाजिनां (for च स°). T1 वृषाणां चैव वाजिनां. — Ś1 om. (hapl.) 43cdef; K4 om. 43c–44b. — c) T1 M शरभाणां (for ऋष°). — d) T1 M शुनामपि (for तथैव च). — After 43cd, T2 G2–4 ins.:

860* ऋक्षाश्वमेषवृकाणामुलूकानां तथैव च ।

C 3 12244 B 3.173 47 K 3 175 55 ऋषभाणां वराहाणां मार्जाराणां तथैव च ।
शालावृकाणां प्रेतानां भुरुण्डानां च सर्वशः ॥ ४३
गृध्राणां गरुडानां च मकराणां तथैव च ।
पिशाचानां सयक्षाणां तथैव च सुरद्विषाम् ॥ ४४
गुह्यकानां च संग्रामे नैर्ऋतानां तथैव च ।
झषाणां गजवक्त्राणामुलूकानां तथैव च ॥ ४५
मीनकूर्मसमूहानां नानाशस्त्रासिपाणिनाम् ।
तथैव यातुधानानां गदामुद्गरधारिणाम् ॥ ४६
एतैश्चान्यैश्च बहुभिर्नानारूपधरैस्तथा ।
सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ॥ ४७
त्रिशिरोभिश्चतुर्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः ।
अनेकरूपसंयुक्तैर्मांसमेदोवसाशिभिः ।
अभीक्ष्णं वध्यमानास्ते दानवा ये समागताः ॥ ४८
अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः ।
अद्रिसारमयैश्चान्यैर्बाणैररिविदारणैः ।
न्यहनं दानवान्सर्वान्मुहूर्तेनैव भारत ॥ ४९
गाण्डीवास्त्रप्रणुन्नांस्तान्गतासून्नभसश्च्युतान् ।
दृष्ट्वाहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे ॥ ५०
तथा रौद्रास्त्रनिष्पिष्टान्दिव्याभरणभूषितान् ।
निशाम्य परमं हर्षमगमद्देवसारथिः ॥ ५१
तदसह्यं कृतं कर्म देवैरपि दुरासदम् ।
दृष्ट्वा मां पूजयामास मातलिः शक्रसारथिः ॥ ५२

---

मीनवायसरूपाणां नानावक्त्रप्रचारिणाम् ।

— $^{e}$) S साला° (for शाला°). Some S MSS. -वृकानां. $B_4$ चंडानां (for प्रेतानां). — $^{f}$) $K_3$ $B_2$ $D_3$ S मुरुंडानां ($T_1$ कुक्कुटानां); $B_1$ सुषंडानां; $D_1$ भेरुंडानां; $D_5$ उरगानां (for भुरु°). $B_1$ $D_{1.2}$ तथैव च; $T_1$ $G_1$ $M_2$ च बर्हिणां (for च सर्वशः). $B_4$ प्रेतानामपि सर्वशः. — After 43, $G_1$ ins.:

861* शार्दूलानां वराहाणां शरभाणां प्रवल्गताम् ।

**44** $K_4$ om. $44^{ab}$ (cf. v.l. 43). — $^{b}$) $K_{1.4}$ $B_{2-4}$ Dn $D_{2.4.6}$ च($B_3$ चा)मराणां; $B_1$ चारणानां; Dc भ्रमराणां (for मक°). $D_1$ च सर्वशः; $M_1$ च बर्हिणां (for तथैव च). — After $44^{ab}$, Dc ins.:

862* वृक्षाणां पर्वतानां च समुद्राणां तथैव च ।

On the other hand, B Dn $D_{2.4.6}$ ins. after $44^{ab}$: Dc cont.:

863* देवानां च ऋषीणां च गन्धर्वाणां च सर्वशः ।
[ $B_{1.4}$ सहस्रशः (for च सर्वशः). ]

— $G_1$ om. (hapl.) $44^{c}$–$45^{b}$. — $^{c}$) $K_{2.3}$ $D_5$ $T_2$ $G_{2-4}$ च (for स-). $Dc_1$ om. $44^{d}$–$45^{c}$. — $^{d}$) $D_{1.2}$ $T_1$ राक्षसानां; $G_2$ $M_1$ रक्षसां च (for तथैव च). $D_{1.2}$ तथैव च (for सुर°).

**45** $Dc_1$ om. $45^{abc}$; $G_1$ om. $45^{ab}$ (cf. v.l. 44). — $^{a}$) $G_2$ M किंनराणां (for च संग्रामे). $T_1$ गुह्यानां किंनराणां च. — Ś$_1$ $T_2$ $G_{2-4}$ om. (hapl.) $45^{cd}$. $Dn_2$ transp. $45^{cd}$ and $46^{ab}$. — $^{c}$) $K_{3.4}$ $D_{1.2}$ $T_1$ M झषाश्च; $G_1$ सर्पास्य- (for झषाणां). $K_1$ सर्पाश्चखरवक्त्राणां; $K_2$ सर्पाश्चापरवक्त्राणां. — $^{d}$) $D_5$ अथापि वा; $T_1$ M च भारत (for तथैव च).

**46** $Dn_2$ transp. $45^{cd}$ and $46^{ab}$. — $^{a}$) B Dc Dn $D_{2.4.6}$ मीनवाजि($B_{2.4}$ Dc °य)सरूपाणां; $D_5$ मीनकूर्मसहस्राणां; $T_1$ M °मयूराणां; $T_2$ $G_{2-4}$ तथा मुसलहस्तानां; $G_1$ मीनवायसकूर्माणां. — $^{b}$) $T_1$ $G_1$ °शस्त्रास्त्रपाणिनां; $T_2$ $G_{2-4}$ °शस्त्रास्त्रधारिणां. — $^{d}$) $K_{1.2}$ $D_{1.2.5}$ T G °पाणिनां.

**47** $^{a}$) $D_{1.2}$ भूतै° (for चान्यै°). — $^{b}$) $M_2$ °रूपैर्नरैस् (for °रूपधरैस्). $K_4$ $M_1$ तदा (for तथा). — $^{d}$) Ś$_1$ $K_{1.3.4}$ $D_{1.2}$ विजृंभति; $K_2$ $D_{3.5}$ विजृंभिते; $B_4$ प्रयोजिते; $T_2$ $G_{3.4}$ $M_2$ विसृज्यति (for विसर्जिते).

**48** $^{c}$) $K_1$ °संपन्नैर्. — $^{d}$) Ś$_1$ $K_{1-3}$ $B_3$ °वसादिभिः; Dn $D_{4.6}$ °वसास्थिभिः. — $^{e}$) $G_2$ सुतीक्ष्णं (for अभीक्ष्णं). — $^{f}$) Ś$_1$ $K_{1.3}$ $B_{2-4}$ $Dc_1$ Dn $D_{1-4.6}$ °वा नाशमागताः; $K_2$ $B_1$ $Dc_2$ °वानां समा°; $D_5$ °वास्तैर्महारणे.

**49** $^{a}$) $M_1$ अति- (for अर्क-). — $^{b}$) $K_4$ वज्रशक्ति-; Dc वज्राशन-; $D_{1.2}$ ब्रह्माशनि- (for वज्राशनि-). Ś$_1$ $K_{1.2}$ Dc $D_{1-3}$ -समस्वनैः (for -समप्रभैः). — $^{c}$) $D_3$ अद्भिः; $T_1$ अभि- (for अद्रि-). $B_1$ हि (for च). — $^{d}$) $B_1$ Dc $D_6$ °ररिनिबर्हणैः; $B_{2-4}$ Dn $D_4$ °रपि निबर्हणैः. — $^{e}$) Ś$_1$ $K_{2.3}$ $D_{1.3}$ व्य($D_3$ व्या)हनं (for न्यहनं). — $^{f}$) Ś$_1$ $K_{1.2}$ मुहूर्तादेव.

**50** $^{a}$) Ś$_1$ दानवास्त्र°. — $^{b}$) Ś$_1$ घनाशीन्; $K_1$ घनादीन्; $K_2$ गताशं; $K_4$ गतांस्तान् (for गतासून्). — $^{c}$) Ś$_1$ K $D_{1.3.5}$ प्रणतो; $D_6$ $T_1$ प्रणमं (for प्राणमं).

**51** $^{a}$) Ś$_1$ $K_{1.3.4}$ $D_{1-3}$ ततो; Dc अथ (for तथा). $D_5$ °पीडांस्तान् (for °निष्पिष्टान्). — $^{b}$) Ś$_1$ $K_{1-3}$ $D_3$ दानवान्दारुणाकृतीन्. — $^{c}$) Ś$_1$ $K_{1-3}$ B Dn $D_{1.4-6}$ $M_1$ निशम्य; Dc नियम्य (for निशाम्य).

**52** Ś$_1$ $D_2$ om. (hapl.) 52. — $^{a}$) $B_1$ (m as in text) तदशक्यं; $T_2$ $G_{2-4}$ अविषह्यं (for तदसह्यं). — $^{b}$)

उवाच चेदं वचनं प्रीयमाणः कृताञ्जलिः ।
सुरासुरैरसह्यं हि कर्म यत्साधितं त्वया ।
न ह्येतत्संयुगे कर्तुमपि शक्तः सुरेश्वरः ॥ ५३
सुरासुरैरवध्यं हि पुरमेतत्खगं महत् ।
त्वया विमथितं वीर स्ववीर्यात्तपोबलात् ॥ ५४
विध्वस्तेऽथ पुरे तस्मिन्दानवेषु हतेषु च ।
विनदन्त्यः स्त्रियः सर्वा निष्पेतुर्नगराद्बहिः ॥ ५५
प्रकीर्णकेश्यो व्यथिताः कुरर्य इव दुःखिताः ।
पेतुः पुत्रान्पितॄन्भ्रातॄञ्शोचमाना महीतले ॥ ५६
रुदन्त्यो दीनकण्ठ्यस्ता विनदन्त्यो हतेश्वराः ।
उरांसि पाणिभिर्घ्नन्त्यः प्रस्रस्तस्रग्विभूषणाः ॥ ५७

तच्छोकयुक्तमश्रीकं दुःखदैन्यसमाहतम् ।
न बभौ दानवपुरं हतत्विट्कं हतेश्वरम् ॥ ५८
गन्धर्वनगराकारं हतनागमिव ह्रदम् ।
शुष्कवृक्षमिवारण्यमदृश्यमभवत्पुरम् ॥ ५९
मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्माणमाहवात् ॥ ६०
हिरण्यपुरमारुज्य निहत्य च महासुरान् ।
निवातकवचांश्चैव ततोऽहं शक्रमागमम् ॥ ६१
मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत् ।
सर्वं विश्रावयामास यथाभूतं महाद्युते ॥ ६२
हिरण्यपुरघातं च मायानां च निवारणम् । C 3.12266 B 3.173.69 K. 3.175.78

---

K $D_{1.3}$ सुदुष्करं; $B_{1.3.4}$ Dc $D_5$ $T_2$ (before corr.) $G_{1.2.4}$ $M_2$ दुरुत्सहं; $M_1$ सुदुःषहं (for दुरा°). — $^c$) $K_2$ सं- (for मां).

**53** $^a$) $Ś_1$ $K_{1.2}$ $D_3$ [इ]दं च; $K_3$ चैवं; $T_1$ $G_1$ चैनं (for चेदं). $B_4$ Dn वचनं चेदं (by transp.). — After $53^{ab}$, S ins.:

864* हतांस्तान्दानवान्दृष्ट्वा मया संख्ये सहस्रशः ।
[$G_1$ मंख्ये शन-; $G_{2.4}$ मया संघे (for मया संख्ये).]

— $^c$) $B_{1.3}$ T G अशक्यं (for असह्यं). — $D_1$ om. (hapl.) $53^d$–$54^a$. — $^f$) $Ś_1$ K $B_4$ $D_{2.3.5}$ पुरंदरः (for सुरे°). $T_1$ अपि शक्यं सुरेश्वरैः. — After 53, T G ins.:

865* ध्रुवं धनंजय प्रीतस्त्वयि शक्रः पुरार्दन ।
[$G_1$ तव (for त्वयि). $G_{2.4}$ शंभुः (for शक्रः). $G_1$ परार्दन.]

**54** $D_1$ om. $54^a$ (cf. v.l. 53). — $^a$) $Ś_1$ K $D_{2.3.5}$ असह्यं ($K_4$ अदृश्यं) (for अवध्यं). — $^b$) $D_1$ स्वयं; $D_2$ स्वगं (for खगं). — $^d$) $B_{1-3}$ Dc Dn $D_{4.6}$ स्ववीर्यंतपसो बलात्; $D_{1.2}$ स्ववीर्यात्स्वतपोबलात्.

**55** Before 55, T $G_3$ ins. अर्जुनः. — $^a$) $B_4$ $D_{3.5}$ $T_2$ $G_{2-4}$ तु; Dn $D_2$ स्व- (for ऽथ). — $^c$) $K_{1.2}$ विरुदंत्यः; $K_3$ विमर्दंत्यः; $M_1$ निपतंत्यः. — $^d$) $K_{3.4}$ $D_{3.5}$ $M_1$ निपेतुर्.

**56** $^a$) $B_4$ $M_1$ विकीर्णकेश्यो; $T_1$ प्रकीर्णकेशा. $B_1$ मथिताः. — $^b$) $B_2$ दंशिताः (for दुःखिताः). $T_2$ G सुदीनाः करुणस्वनाः. — After $56^{ab}$, $T_2$ G ins.:

866* कुरर्य इव वाशन्त्यो दुःखिताश्च मुहुर्मुहुः ।

— $^c$) $K_3$ पितॄन् (for पेतुः). $Ś_1$ K $D_{1-3}$ पतीन् (for पितॄन्).

**57** $G_1$ om. 57–58. — $^a$) $B_{2-4}$ $Dn_1$ रुदत्यो. $Ś_1$ च; $B_4$ तु (for ता). — $Dn_3$ om. (hapl.) $57^{bc}$. — $^b$) $B_{2.4}$ $Dn_1$. $n_2$ $D_{4.6}$ निनदंत्यो; $M_1$ विलपंत्यो (for विन°). $K_1$ महीतले (for हते°). $D_5$ नितरां चक्रुशुस्तदा. — $^c$) B Dc $Dn_1$. $n_2$ $D_{4.6}$ °सि परिनिघ्नंत्यः. — $^d$) B Dc Dn $D_{4.6}$ $M_1$ विस्रस्त-; $D_5$ प्रध्वस्त- (for प्रस्रस्त-). $T_1$ प्रसुस्रुस्तत्र शोणिताः; $T_2$ $G_{2-4}$ प्रस्रस्तांबरभूषणाः.

**58** $G_1$ om. 58 (cf. v.l. 57). — $^b$) $K_{1.2}$ दैन्यदुःख- (by transp.). $B_4$ $T_1$ -समागतं; $D_{1.5}$ $G_4$ -समाहितं. — $^d$) $K_3$ °ध्वस्तं; $K_4$ $D_{2.3}$ °चिह्नं; $B_2$ °द्विष्टं; $D_1$ °तिग्मं (for °त्विट्कं).

**59** $^b$) $Ś_1$ K B Dn $D_{1.6}$ $G_4$ हृत° (for हत°). — $^d$) $Ś_1$ K $D_{3.5}$ दुर्दर्श्यं($K_1$ °दृश्य)म् (for अदृश्यम्). $T_1$ अगमत् (for अभवत्). $T_2$ G $M_2$ अदृश्यत महत्पुरं.

**60** $^a$) $D_{1.2}$ संतुष्ट° (for संहृष्ट°). — $^b$) $T_1$ आहरत् (for आनयत्).

**61** $^a$) Dc निहत्य (for हिरण्य-). $Ś_1$ $K_{1.2}$ आभज्य; $K_{3.4}$ $D_3$ (m as in text) $T_2$ (before corr.) $G_4$ आरुह्य; B Dc Dn $D_{4.6}$ उत्सृज्य; $T_2$ (after corr.) $G_3$ आक्रम्य (for आरुज्य). — $^b$) $Ś_1$ $K_{1.2}$ $D_5$ सुरद्विषः (for महा°).

**62** $^a$) $Ś_1$ K $D_{1.5}$ स (for च). B Dc $Dn_3$ $D_4$ $T_2$ $G_{2-4}$ देवेंद्रे. — $^d$) S (except $M_1$) °वृत्तं (for °भूतं). $M_1$ °मते (for °द्युते).

**63** $^a$) $B_2$ $Dn_3$ $D_{4.6}$ $T_2$ $G_{2.3}$ °पातं च; $B_4$ °मुत्सृज्य; $T_1$ °पातश्च (for °घातं च). — $^b$) $B_2$ निपातनं (for निवा°). — $^c$) $D_{2.5}$ तु (for च). — $^d$) $Ś_1$ $K_{1.2}$ महात्मनां (for महौ°). — After 63, T G ins.:

867* कालकेयवधं चैव अद्भुतं रोमहर्षणम् ।

C. 3 12267 B. 3 173. 70 K. 3. 175. 78 निवातकवचानां च वधं संख्ये महौजसाम् ॥ ६३
तच्छ्रुत्वा भगवान्प्रीतः सहस्राक्षः पुरंदरः ।
मरुद्भिः सहितः श्रीमान्साधु साध्वित्यथाब्रवीत् ॥ ६४
ततो मां देवराजो वै समाश्वास्य पुनः पुनः ।
अब्रवीद्विबुधैः सार्धमिदं सुमधुरं वचः ॥ ६५
अतिदेवासुरं कर्म कृतमेतत्त्वया रणे ।
गुर्वर्थश्च महान्पार्थ कृतः शत्रून्घ्नता मम ॥ ६६
एवमेव सदा भाव्यं स्थिरेणाजौ धनंजय ।
असंमूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् ॥ ६७
अविषह्यो रणे हि त्वं देवदानवराक्षसैः ।
सयक्षासुरगन्धर्वैः सपक्षिगणपन्नगैः ॥ ६८
वसुधां चापि कौन्तेय त्वद्बाहुबलनिर्जिताम् ।
पालयिष्यति धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ ६९

इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

# १७१

अर्जुन उवाच ।
ततो मामभिविश्वस्तं संरूढशरविक्षतम् ।
देवराजोऽनुगृह्येदं काले वचनमब्रवीत् ॥ १
दिव्यान्यस्त्राणि सर्वाणि त्वयि तिष्ठन्ति भारत ।
न त्वाभिभवितुं शक्तो मानुषो भुवि कश्चन ॥ २
भीष्मो द्रोणः कृपः कर्णः शकुनिः सह राजभिः ।

---

**64** [c]) Ś$_1$ K$_{1.2}$ महर्षि-; K$_3$ महद्भिः (for मरुद्भिः). — [d]) B$_1$ S (except M$_1$) च (for [अ]थ). — After 64, T G ins.:

868* परिष्वज्य च मां प्रेम्णा मूर्ध्न्युपाघ्राय सस्मितम् ।

**65** [a]) K$_4$ Dc [ऽ]सौ (for वै). S ततः स (M$_1$ च) मां देवराजः. — [c]) K$_{1.2}$ विवरैः (for विबुधैः). — [d]) K$_3$ B$_{2-4}$ Dc$_1$ Dn D$_{1.4}$ T$_1$ G$_{2.4}$ स (for सु-).

**66** [b]) B Dc$_1$ Dn D$_{4-6}$ G$_1$ एव (for एतत्). — [c]) K$_1$ Dc D$_3$ G$_2$ गुर्वर्थं च. Ś$_1$ K$_{1.2}$ B D (except D$_{1-3}$) T$_1$ G$_1$ M$_1$ कृतः (for महान्). T$_1$ G$_1$ पुत्र (for पार्थ). — [d]) Ś$_1$ K$_{1.2}$ B D$_{4.6}$ G$_1$ M$_1$ महा-; Dc Dn महान्; T$_1$ हत्वा (for कृतः). T$_1$ कृतो (for घ्नता).

**68** [b]) Ś$_1$ K$_{1.2}$ °पन्नगैः. — [c]) Dc सयक्षोरग°; D$_6$ सदेवासुर°. — [d]) K$_2$ सयक्ष- (for सपक्षि-). Ś$_1$ K$_{1.2}$ -राक्षसैः (for -पन्नगैः).

**69** [a]) Ś$_1$ K$_{1.2}$ D$_5$ T$_1$ चैव (for चापि). — [b]) D$_5$ °रक्षितां; T$_1$ °निष्ठितां.

Colophon. — *Major parvan:* Ś$_1$ K$_{1.2}$ Dn$_2$ T G$_{2-4}$ आरण्य. — *Sub-parvan:* Omitting sub-parvan name, K$_{3.4}$ D$_3$ mention only निवातकवचवध (followed by समास in K$_{3.4}$), and B$_2$ D$_{1.2}$, only लोमशतीर्थयात्रा (followed by गंधमादनवास in B$_2$). — *Adhy. name:* B$_{1.3}$ Dc हिरण्यपुरवासिवधः; B$_2$ Dn D$_6$ हिरण्यपुरवधः (B$_2$ °पुर * *); D$_{1.2}$ हिरण्यपुरविध्वंसः; D$_5$ G$_1$ कालकेयवधः. — *Adhy. no.* (figures, words or both): Dn 173 (Dn$_2$ 172); D$_1$ 179; S (M$_2$ *sup. lin.*) 174 (M$_2$ orig. 176). —*Śloka no.:* Dn 76; D$_1$ 73.

## 171

**1** [a]) K$_{1.2}$ B D (except D$_{1-3.5}$) अति-; T$_1$ अपि (for अभि-). — [b]) K$_2$ D$_5$ संमूढ-; B$_1$ G$_1$ संरूढं (for संरूढ-). K$_{1.2}$ D$_{1-3.5}$ -शरविक्षितं. — [c]) Ś$_1$ K D$_{1-3.5}$ M$_2$ °राजो निगृह्य; B Dn D$_6$ °राजो विगृह्य; Dc D$_4$ °राजो विसृज्य; M$_1$ °राजोपगूह्य. K$_4$ Dn$_2$ [ए]तत् (for [इ]दं). — [d]) Ś$_1$ कामं (for काले).

**2** [a]) G$_1$ दिव्यास्त्राणि च स°. — [b]) G$_1$ पुत्रक (for भारत). — [c]) T$_2$ G$_{2-4}$ °वीक्षितुं (for °भवितुं). — [d]) T$_1$ मानुषेष्वपि क°.

**3** [a]) T$_2$ G$_{2-4}$ तथा (for कृपः). — [b]) K$_1$ देव- (for सह). T$_1$ G$_{1.2}$ ससुयोधनः (for सह राजभिः). — [c]) D$_5$ तात (for पुत्र). — [d]) Ś$_1$ K$_1$ नार्धंति (!); T$_1$ G$_2$ नार्हंति.

**4** Before 4, Dn D$_{4.6}$ ins. अर्जुन उ°. — [b]) K$_{1-3}$ प्रयच्छत्. K$_2$ S (except M$_1$) भगवान् (for मघवान्).

संग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोडशीम् ॥ ३
इदं च मे तनुत्राणं प्रायच्छन्मघवान्प्रभुः ।
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ ४
देवदत्तं च मे शङ्खं देवः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ॥ ५
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ॥ ६
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप ।
इन्द्रस्य भवने पुण्ये गन्धर्वशिशुभिः सह ॥ ७
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ।
समयोऽर्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ॥ ८
एवमिन्द्रस्य भवने पञ्च वर्षाणि भारत ।
उषितानि मया राजन्स्मरता द्यूतजं कलिम् ॥ ९
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् ।
गन्धमादनमासाद्य पर्वतस्यास्य मूर्धनि ॥ १०

युधिष्ठिर उवाच ।

दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ ११
दिष्ट्या च भगवान्स्थाणुर्देव्या सह परंतप ।
साक्षाद्दृष्टः सुयुद्धेन तोषितश्च त्वयानघ ॥ १२
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
दिष्ट्या वर्धामहे सर्वे दिष्ट्यासि पुनरागतः ॥ १३
अद्य कृत्स्नामिमां देवीं विजितां पुरमालिनीम् ।
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ॥ १४
तानि त्विच्छामि ते द्रष्टुं दिव्यान्यस्त्राणि भारत ।
यैस्तथा वीर्यवन्तस्ते निवातकवचा हताः ॥ १५　　C. 3. 12288 B. 3. 174. 15 K 3. 176. 15

---

Ś$_1$ K Dc$_2$ D$_{1-3.5}$ स्वयं (for प्रभुः). — $^{c}$) Ś$_1$ K$_{1.2.4}$ D$_{1-3.5}$ कांचनं (for कवचं). T$_2$ G$_{1.3.4}$ चैव (for दिव्यं).

**5** $^{b}$) Ś$_1$ K$_{1.2}$ शक्रः; B Dc Dn D$_{4-6}$ पुनः; D$_{1.2}$ देवाः (for देवः). D$_{1.2}$ प्रादुर्. Ś$_1$ K$_{1.2}$ महास्वनं; B$_4$ शतक्रतुः; M$_2$ महारथं. — $^{c}$) Ś$_1$ K D$_{1-3}$ चैतत् (for चेदं). — $^{d}$) T$_1$ सर्वम् (for स्वयम्). B$_1$ च (for ह).

**6** $^{a}$) G$_{2.4}$ चास्त्राणि (for व°). — $^{c}$) Ś$_1$ समेतानि; M$_2$ ममेमानि (for ममै°). — $^{d}$) Ś$_1$ K D$_{1-3}$ रोचनानि (for रुचि°).

**7** D$_5$ om. 7$^{ab}$. — $^{b}$) G$_4$ अभ्युषितो (for अस्म्यु°). — $^{c}$) K$_4$ भुवने (cf. 9$^{a}$); D$_1$ भुवनं; D$_5$ सदने (for भवने). B$_1$ रम्ये; D$_1$ पुण्यं; G$_1$ दिव्ये (for पुण्ये).

**8** $^{c}$) Ś$_1$ K D$_{1-3.5}$ ते गंतुं (by transp.); T$_1$ गंतव्यं. — $^{d}$) K$_4$ [ऽ]त्र (for हि).

**9** $^{a}$) K$_4$ भुवने (cf. 7$^{c}$). — $^{c}$) T$_1$ महाराज (for मया राजन्).

**10** $^{a}$) K$_3$ ततो द्रष्टुमिह प्राप्तो. — $^{c}$) K$_{3.4}$ B D M$_2$ °पादस्य (for °मासाद्य).

**11** Dn$_3$ om. (hapl.) 11$^{ab}$. — $^{b}$) T$_1$ सर्वशः (for भारत). — D$_3$ om. (hapl.) 11$^{c}$–15$^{b}$. — $^{c}$) K$_3$ तात; D$_5$ देवो (for राजा). — $^{d}$) K$_{3.4}$ देवराजः पुरंदरः.

**12** D$_3$ om. 12 (cf. v.l. 11). — $^{a}$) B$_2$ शंभुर् (for स्थाणुर्). — $^{b}$) G$_4$ M$_1$ °तपः (for °तप). — $^{c}$) B Dn D$_{4.6}$ स्व-; D$_1$ स (for सु-). — $^{d}$) D$_5$ स (for च).

**13** D$_3$ om. 13 (cf. v.l. 11). — $^{b}$) D$_5$ संगतो (for समेतो). — $^{c}$) K$_1$ चरामहे (for वर्धा°). K$_2$ B Dc Dn D$_{4-6}$ पार्थ (for सर्वे). T$_2$ G$_{2-4}$ दिष्ट्या च पार्थैः (G$_2$ by transp. पार्थैश्च) संयुक्तो. — $^{d}$) Ś$_1$ त्वं; K$_{3.4}$ च (for [अ]-सि). K$_{1.2}$ दिष्ट्या पुनरिहागतः.

**14** D$_3$ om. 14 (cf. v.l. 11). — $^{a}$) D$_5$ पृथ्वीम् (for कृत्स्नाम्). B Dn D$_{4.6}$ महीं (for इमां). D$_5$ सर्वां (for देवीं). Ś$_1$ K$_{1.2}$ अद्य पृथ्वी मया देवी; Dc अद्य कृत्स्ना मही देवी. — $^{b}$) T$_2$ G$_{3.4}$ समुद्र-; G$_2$ सशैल- (for विजितां). Ś$_1$ K$_{1.2}$ Dc विजिता °मालिनी. — After 14$^{ab}$, T G ins.:

869* पश्यामि भूमिं कौन्तेय त्वया मे प्रतिपादिताम् ।
[T$_1$ अवगच्छामि (for पश्यामि भूमिं).]

— $^{d}$) Ś$_1$ D$_5$ वशे (for वशी-).

**15** D$_3$ om. 15$^{ab}$ (cf. v.l. 11). — $^{a}$) T$_2$ G$_3$ च (for तु). G$_{2.4}$ चेच्छामहे (for त्विच्छामि ते). T$_1$ M$_1$ [अ]हं (for ते). N इच्छामि तानि चास्त्राणि (Ś$_1$ K$_1$ D$_5$ वै द्रष्टुं; K$_2$ ते द्रष्टुं; K$_{3.4}$ D$_{1.2}$ द्रष्टुं वै). — $^{b}$) B Dc Dn D$_{4.6}$ द्रष्टुं दिव्यानि भारत. — $^{c}$) Ś$_1$ K$_{1.2}$ हता; B$_1$ Dc D$_6$ T$_2$ G$_3$ तदा; Dn$_3$ D$_5$ M$_1$ त्वया (for तथा). — $^{d}$) Ś$_1$ K$_{1.2}$ त्वया (for हताः). — After 15, K$_1$ ins.:

870* महाबला महामाया एकेन निहिता युधि ।

**16** D$_2$ T$_1$ om. the ref. D$_2$ om. up to °कवचा. — $^{b}$) D$_5$ T$_1$ भारत (for सर्वशः). — $^{d}$) T$_1$ निहताः प्रभो (for विनिपा°).

**17** $^{a}$) K$_3$ D$_5$ तात; K$_4$ सर्वं (for तत्र). — $^{c}$) K$_3$ सहितैः (for °तः).

C. 3 12289
B 3 174.16
K. 3. 176.16

अर्जुन उवाच ।
श्वः प्रभाते भवान्द्रष्टा दिव्यान्यस्त्राणि सर्वशः ।
निवातकवचा घोरा यैर्मया विनिपातिताः ॥ १६

वैशंपायन उवाच ।
एवमागमनं तत्र कथयित्वा धनंजयः ।
भ्रातृभिः सहितः सर्वै रजनीं तामुवास ह ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

# १७२

वैशंपायन उवाच ।
तस्यां रजन्यां व्युष्टायां धर्मराजो युधिष्ठिरः ।
उत्थायावश्यकार्याणि कृतवान्भ्रातृभिः सह ॥ १
ततः संचोदयामास सोऽर्जुनं भ्रातृनन्दनम् ।
दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया ॥ २
ततो धनंजयो राजन्देवैर्दत्तानि पाण्डवः ।
अस्त्राणि तानि दिव्यानि दर्शयामास भारत ॥ ३
यथान्यायं महातेजाः शौचं परममास्थितः ।
गिरिकूबरं पादपाङ्गं शुभवेणु त्रिवेणुकम् ।
पार्थिवं रथमास्थाय शोभमानो धनंजयः ॥ ४
ततः सुदंशितस्तेन कवचेन सुवर्चसा ।
धनुरादाय गाण्डीवं देवदत्तं च वारिजम् ॥ ५
शोशुभ्यमानः कौन्तेय आनुपूर्व्यान्महाभुजः ।
अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे ॥ ६

---

Colophon om. in $D_1$. — *Major parvan :* $Ś_1$ $K_{1.2}$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan :* Omitting sub-parvan name, $Ś_1$ mentions only निवातकवचकालखंजवध; likewise, $K_{1.2}$ $B_{1.3}$ Dc Dn $D_{2-4.6}$, only निवातकवचवध (followed by कालखंजवध in $K_{1.2}$; to it, $K_{1.2}$ $B_1$ Dc $D_{3.4.6}$, further add समास); $K_3$ $D_5$ mention only गंधमादनप्रवेश; $K_4$, only गंधमादनवास; and finally $B_2$, only लोमशतीर्थयात्रा (followed by निवातकवचवध). — *Adhy. name:* Dc अर्जुनवाक्यं; $D_5$ अर्जुनागमनं. — *Adhy.no.* (figures, words or both): Dn 174 ($Dn_2$ 173); S ($M_2$ *sup. lin.*) 175 ($M_2$ orig. 177). — *Śloka no.*: Dn 17.

## 172

**1** $^{a}$) $K_{3.4}$ $D_{1.2}$ ततो (for तस्यां). $B_{1-3}$ D (except $D_{1-3.5}$) राभ्यां व्यतीतायां (for रजन्यां व्यु°). — $^{c}$) $K_2$ $D_2$ °कर्माणि (for °कार्याणि).

**2** $^{a}$) $K_1$ स चोद°; $K_4$ संनोद°; $D_5$ प्रणोद° (for संचोद°). $B_4$ $T_1$ चोदयामास कौंतेयं ($T_1$ धर्मात्मा). — $^{b}$) $B_{1-3}$ D (except $D_{1-3}$) M मातृ° (for भ्रातृ°). $B_4$ अर्जुनं तत्र वीर्यवान्. — $^{c}$) S पश्यामो° ($T_1$ M पश्येमा°) (for दर्शया°). — $^{d}$) $Ś_1$ K $D_{1-3.5}$ यैस्त्वया दानवा हताः.

**3** $^{a}$) $T_2$ $G_{1.3.4}$ $M_2$ राजा (for राजन्). — $^{b}$) $B_{1.4}$ पांडव; $D_5$ भारत (for पाण्डवः). — $D_5$ om. (hapl.) $3^{cd}$. — $^{d}$) $T_1$ पार्थिवे (for भारत).

**4** $^{a}$) $K_{3.4}$ $D_{1.2}$ यथायोगं; $D_5$ °गमं; T $G_{2-4}$ अर्जुनस्तु (for यथान्यायं). $D_{1.2}$ यथातेजाः. — $^{b}$) S परमं ($T_1$ प्रथमं) शौचमास्थितः. — After $4^{ab}$, S ins.:

871* नमस्कृत्य त्रिणेत्राय वासवाय च पाण्डवः ।
[$T_2$ $G_{2.3}$ °स्कृत्वा (for °स्कृत्य).]

— $^{c}$) Hypermetric! $Ś_1$ $K_{1.2}$ $D_5$ °कूटं; T $G_{2-4}$ °चक्रं (for °कूबरं). $K_{3.4}$ B Dc Dn $D_{1-4.6}$ गिरिकूबरपादाक्षं ($K_{3.4}$ $D_{1-3}$ °पादांगं; $B_2$ °पादाग्रं; $Dc_2$ °पादाख्यं); $G_1$ M त्रिकूबरं समुद्राश्च. — $^{d}$) $K_4$ त्रिभिः शृंगैस्; $B_{1.4}$ शुभवेणुं; Dc शुभरेखा; T $G_{2-4}$ गिरिवेणु (for शुभवेणु). $B_1$ अलंकृतं; $B_1$m. $_{2.3}$ Dn $D_{4.6}$ त्रिवेणुमत् (for °णुकम्). — $^{e}$) $G_1$ वरं रथं समास्थाय. — $^{f}$) $K_4$ $T_2$ G शोभयानो.

**5** $^{a}$) $T_1$ $G_{1.2}$ M स; $T_2$ $G_{3.4}$ सं- (for सु-). $B_{1-3}$ D (except $D_{1-3.5}$) दिव्येन संवृतस्तेन. — $^{b}$) $Ś_1$ $K_{1-3}$ $D_5$ च ($D_5$ सु-) भास्वता (for सुवर्चसा). — $^{c}$) $D_{1.2}$ गांजीवं. — $^{d}$) B Dn $D_{4.6}$ स (for च).

**6** $^{a}$) $Ś_1$ $K_{1.2}$ स शोभ°; $D_1$ सोक्षुभ्यमाणः; $T_1$ शोभमानश्च; $T_2$ (before corr.) $G_{2.4}$ शोशुभ्य°; $M_2$ शुशुभ्य° (for शोशुभ्य°). — $^{b}$) N (except $Ś_1$) °पूर्व्यां (for °पूर्व्यान्). $K_{2.3}$ $D_{1.4}$ °भुज; $D_2$ °जनुः; $D_5$ °यशाः (for °भुजः). — $^{c}$)

अथ प्रयोक्ष्यमाणेन दिव्यान्यस्त्राणि तेन वै ।
समाक्रान्ता मही पद्भ्यां समकम्पत सद्रुमा ॥ ७
क्षुभिताः सरितश्चैव तथैव च महोदधिः ।
शैलाश्चापि व्यशीर्यन्त न ववौ च समीरणः ॥ ८
न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथंचन ॥ ९
अन्तर्भूमिगता ये च प्राणिनो जनमेजय ।
पीड्यमानाः समुत्थाय पाण्डवं पर्यवारयन् ॥ १०
वेपमानाः प्राञ्जलयस्ते सर्वे पिहिताननाः ।
दह्यमानास्तदास्त्रैस्तैर्याचन्ति स्म धनंजयम् ॥ ११
ततो ब्रह्मर्षयश्चैव सिद्धाश्चैव सुरर्षयः ।
जङ्गमानि च भूतानि सर्वाण्येवावतस्थिरे ॥ १२
राजर्षयश्च प्रवरास्तथैव च दिवौकसः ।
यक्षराक्षसगन्धर्वास्तथैव च पतत्रिणः ॥ १३
ततः पितामहश्चैव लोकपालाश्च सर्वशः ।
भगवांश्च महादेवः सगणोऽभ्याययौ तदा ॥ १४
ततो वायुर्महाराज दिव्यैर्माल्यैः सुगन्धिभिः ।
अभितः पाण्डवांश्चित्रैरवचक्रे समन्ततः ॥ १५
जगुश्च गाथा विविधा गन्धर्वाः सुरचोदिताः ।
ननृतुः संघशश्चैव राजन्नप्सरसां गणाः ॥ १६
तस्मिंस्तु तुमुले काले नारदः सुरचोदितः ।
आगम्याह वचः पार्थं श्रवणीयमिदं नृप ॥ १७
अर्जुनार्जुन मा युङ्क्ष्व दिव्यान्यस्त्राणि भारत ।
नैतानि निरधिष्ठाने प्रयुज्यन्ते कदाचन ॥ १८ C. 3 12309 B. 3 175.19 K. 3. 177.19

Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ दिव्यास्त्रतां ($D_{1-3}$ °स्त्राणां) ततस्तेषां; $B_4$ महास्त्राणि महाबाहुः; $T_1$ तानि दिव्यानि चास्त्राणि.

7 $^{a}$) $K_4$ तानि; S तेन (for अथ). $K_4$ $M_1$ प्रयोक्ष्यमाणानि; $B_{1.3}$ $D_2$ प्रयो($B_1$ °यु)ज्यमानेन; $B_{2.4}$ Dn $D_{4.6}$ प्रयोक्ष्यमाणेषु; $D_5$ °माणैस्तैर् (for °माणेन). — $^{b}$) $B_4$ Dn $D_{4.6}$ दिव्येष्वस्त्रेषु (for दिव्यान्यस्त्राणि). $K_4$ S भारत; $B_4$ Dn $D_{4.6}$ तेषु वै (for तेन वै). $D_5$ दिव्यैरस्त्रैर्महात्मना. — $^{c}$) $K_4$ श्रमक्रांता मही यत्र. — $^{d}$) $K_2$ $D_{4.6}$ समाकंपत. $G_1$ शतयोजनकद्रुमा.

8 $^{a}$) $K_4$ सदिश° (for सरित°). — $^{b}$) $K_4$ तथा सर्वे महार्णवाः. — $K_4$ om. 8$^{cd}$. — $^{c}$) $G_2$ चैव (for चापि). $K_1$ $D_{1.2}$ $T_1$ $G_1$ विशीर्यंत; B Dc Dn $D_{4.6}$ $T_2$ $G_{3.4}$ $M_2$ व्यदीर्यंत; $G_2$ [अ]भ्यशीर्यंत. — $^{d}$) $G_1$ तथैव (for न ववौ).

9 $^{a}$) Dc न बभ्राजे (for न बभासे). — $^{b}$) Ś$_1$ $K_{1-3}$ $D_5$ $G_2$ न च जज्वाल; $T_2$ $G_{3.4}$ नापि जज्वाल (for न जज्वाल च). $K_4$ हुताशनः (for च पावकः). — $^{c}$) $Dc_2$ $M_2$ देवाः (for वेदाः).

11 $^{b}$) Ś$_1$ $K_{1.2}$ सर्वे ते (by transp.). B Dc Dn $D_{4.6}$ विकृताननाः; $D_5$ पीडिता जनाः; $G_1$ [ऽ]पि नताननाः; M विनता°. — $^{c}$) Ś$_1$ $K_{1.2}$ तदस्त्रैस; $B_{1.2}$ ततस्तैस; $G_1$ महास्त्रैस; M इवास्त्रैस (for तदास्त्रैस). $K_4$ $D_3$ च; Dc Dn $D_{1.2.4.5}$ T G ते (for तैर्). — $^{d}$) Ś$_1$ भजंति; $K_{1.2}$ भजंते; $K_4$ याचंते (for याचन्ति).

12 $^{a}$) $D_3$ $T_2$ $G_{2.3}$ मह° (for ब्रह्म°). — $^{b}$) B D (except $D_{1-3.5}$) ये च (for चैव). $K_4$ B D (except $D_{1-3}$) $T_1$ $G_1$ M मह° (for सुर°). — $^{c}$) Ś$_1$ $K_{1.2}$ $D_5$ [अ]पि (for च). — $^{d}$) $K_4$ [उ]प° (for [अ]व°).

13 $^{a}$) B D (except $D_{1-3.5}$) $T_1$ $G_1$ M देव° (for राज°). $K_4$ देवलोकगना ये च. — After 13, B D (except $D_{1-3.5}$) ins.:

872* खेचराणि च भूतानि सर्वाण्येवावतस्थिरे ।
[ = (var.) 12$^{cd}$. $B_4$ [उ]प° (for [अ]व°).]

14 $^{b}$) $T_2$ $G_{3.4}$ °पालैः° (for °पाला°). — $^{d}$) $K_4$ [ऽ]पि; $T_1$ हि (for [अ]भि-).

15 $^{a}$) Dc महातेजा; $T_1$ $G_2$ दिव्यगन्धो (for महाराज). — $^{b}$) $T_1$ $G_2$ दिव्यमाल्यैः. $B_2$ Dn $D_{4.6}$ समन्वितः; $B_3$ समंततः (for सुग°). — $^{c}$) $K_{1.4}$ B D (except $D_{1-3.5}$) $G_1$ M पांडवं; $K_2$ पांडवैः (for पाण्डवान्). Dc चित्रम् (for चित्रैर्). — $^{d}$) $K_4$ उप°; S अलं° (for अव°). $T_2$ $G_{3.4}$ समन्वितः (for समन्ततः).

16 $T_1$ om. 16$^{a}$–18$^{b}$. — $^{ab}$) $K_4$ transp. विविधाः and गन्धर्वाः. $K_{3.4}$ $D_{1.2.5}$ सुरनोदिताः. — $^{c}$) $D_3$ शतश°; $D_5$ सर्वश° (for संघश°). — $^{d}$) $T_2$ G चाप्सरसां (for अप्स°). — After 16, $D_{1-3}$ ins.:

873* देवतूर्याण्यवाद्यन्त रम्याणि मधुराणि च ।

17 $T_1$ om. 17 (cf. v.l. 16); $K_3$ om. 17$^{ab}$. — $^{a}$) $K_4$ $D_{1.5}$ सु-; B Dn $D_{4.6}$ M च (for तु). B D (except $D_{1-3.5}$) तादृशे (for तुमुले). — $^{b}$) $D_5$ पवनः (for नारदः). Ś$_1$ सुरपूजितः; $K_4$ $D_{1.2.5}$ °नोदितः; $D_3$ °वंदितः. B Dc Dn $D_{4.6}$ नारदश्चोदितः सुरैः. — $^{c}$) Ś$_1$ $K_2$ $D_5$ आगत्य (for आगम्य).

18 $T_1$ om. 18$^{ab}$ (cf. v.l. 16). Before 18, $B_3$ $M_1$

C 3 12310
B 3.175.20
K. 3.177 20

अधिष्ठाने न वानार्तः प्रयुञ्जीत कदाचन ।
प्रयोगे सुमहान्दोषो ह्यस्त्राणां कुरुनन्दन ॥ १९
एतानि रक्ष्यमाणानि धनंजय यथागमम् ।
बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः ॥ २०
अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव ।
भवन्ति स्म विनाशाय मैवं भूयः कृथाः क्वचित् ॥ २१
अजातशत्रो त्वं चैव द्रक्ष्यसे तानि संयुगे ।
योज्यमानानि पार्थेन द्विषतामवमर्दने ॥ २२
निवार्याथ ततः पार्थं सर्वे देवा यथागतम् ।
जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ ॥ २३
तेषु सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः ।
तस्मिन्नेव वने हृष्टास्त ऊषुः सह कृष्णया ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥ समाप्तं यक्षयुद्धपर्व ॥

# १७३

जनमेजय उवाच ।
तस्मिन्कृतास्त्रे रथिनां प्रधाने
प्रत्यागते भवनाद्वृत्रहन्तुः ।
अतः परं किमकुर्वन्त पार्थाः

---

ins. नारद उ°. — c) D3 °धिष्ठानैः; T2 (before corr.) G2 °धिष्ठानं; G4 °धिष्ठानां. — d) K3 प्रयोज्यंते; D5 प्रयुज्येत; T1 G1 M1 प्रयुंजीथाः; M2 प्रयुंजीत. B1-3 D (except D1-3) T1 G1 कथंचन.

**19** T1 G1 om. (hapl.) 19ab. — a) Ś1 K1-3 D5 S (T1 G1 om.) च; D1-3 [ऽ]पि (for न). Ś1 K1-3 D1-3. 5 नानार्तः; B1. 3. 4 Dc2 Dn1 D6 चानार्तः; T2 G3. 4 नान्यत्र; G2 नान्यस्तः; M नात्यर्थं (for वानार्तः). K4 अधिष्ठानं विना नात्र. — b) Ś1 प्रयुज्यंते; G2 M1 प्रयुंजीथाः. K3. 4 B1. 4 T2 G2-4 कथंचन. — c) Ś1 K1. 2 प्रयोगे च; K3. 4 D2. 5 °गे हि; B Dc Dn D4. 6 °षु; D1 °पि; D3 अप्रयोगे; T2 G3. 4 प्रयोगे तु. Ś1 K1. 2 महादोषो.

**20** D2 om. (hapl.) from रक्ष्य° (in 20a) up to एतानि (in 21a). — a) A few MSS. रक्ष° (for रक्ष्य°). — b) Dc °क्रमं; T1 G1 °गतं (for °गमम्). — c) B2 महा°; B4 यथा° (for सुखा°). — d) K4 बलवंति (for भवि°).

**21** D2 om. 21a (cf. v.l. 20). — a) Ś1 K1. 2 अवेक्ष्य° (for अरक्ष्य°). — b) D5 च पार्थिव (for [अ]पि पाण्डव). — c) Ś1 K1. 2 B1 भविष्यंति; T1 G1 प्रभवंति (for भवन्ति स्म).

**22** b) K3 Dc D1. 2 T G1. 2 M द्रक्ष्यस्येतानि संयुगे. — c) Dc D1. 2. 5 योक्ष्य°; T1 M युज्य° (for योज्य°). T1 G1 ते भ्रात्रा (for पार्थेन). — D2 om. 22d–23c. — d) T2 G3. 4 विद्विषाम् (for द्विषताम्). K3 अवसादने; B2 अरिमर्दन; B4 चावमर्दने; Dc मर्दनेन च; D3 एव मर्दने; D6 अवमर्दन.

**23** D2 om. 23abc (cf. v.l. 22). — Before 23, B4 Dc Dn D6 M1 ins. वैशं° उ° (M1 om. उ°). — a) Ś1 K1. 2 [अ]स्त्रं; B2. 3 Dc D4 [ऋ]षिः (for [अ]थ). Ś1 K1. 2 तथा (for ततः). — b) D5 देवाः सर्वे (by transp.). D3 यथागताः. — c) Ś1 K1-3 D3 ते (for ये). — d) K3 Dc D3 नरर्षभाः.

**24** a) Ś1 K3 कौंतेयाः; T2 G2. 3 कौरव्याः (for कौरव्य). — c) G1 नगे (for वने). — d) K1 तीर्थेषु; D3 तत्रोषुः; D5 ऊषुस्ते; T1 G1. 2 M तदोषुः (for त ऊषुः). D1. 2 कृष्णया सह (by transp.); D5 भरतर्षभाः.

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T2 G2-4 आरण्य. — *Sub-parvan:* B1. 3. 4 Dn D4. 6 तीर्थयात्रा followed by समाप्त. Omitting sub-parvan name, K3. 4 B4 Dc D1. 2, mention only लोमशतीर्थयात्रा (followed in K4 and preceded in B2 by गंधमादनवास; further followed by समाप्त in Dc and by निवातकवचवध in D1. 2); D3 likewise mentions only गंधमादननिवास. — *Adhy. name:* Ś1 K1. 2 D5 अस्त्रदर्शनं; D2 हिरण्यपुरविध्वंसः. — *Adhy. no.* (figures, words or both): Dn 175 (Dn2 174); D1 180; S (M2 *sup. lin.*) 176 (G1 170; M2 orig. 178). — *Śloka no.:* Dn 25; D1 41.

समेत्य शूरेण धनंजयेन ॥ १
वैशंपायन उवाच ।
वनेषु तेष्वेव तु ते नरेन्द्राः
सहार्जुनेनेन्द्रसमेन वीराः ।
तस्मिंश्च शैलप्रवरे सुरम्ये
धनेश्वराक्रीडगता विजह्रुः ॥ २
वेश्मानि तान्यप्रतिमानि पश्य-
न्क्रीडाश्च नानाद्रुमसंनिकर्षाः ।
चचार धन्वी बहुधा नरेन्द्रः
सोऽस्त्रेषु यत्तः सततं किरीटी ॥ ३
अवाप्य वासं नरदेवपुत्राः
प्रसादजं वैश्रवणस्य राज्ञः ।
न प्राणिनां ते स्पृहयन्ति राज-
ञ्शिवश्च कालः स बभूव तेषाम् ॥ ४
समेत्य पार्थेन यथैकरात्र-
मूषुः समास्तत्र तदा चतस्रः ।
पूर्वाश्च षट् ता दश पाण्डवानां
शिवा बभूवुर्वसतां वनेषु ॥ ५
ततोऽब्रवीद्वायुसुतस्तरस्वी
जिष्णुश्च राजानमुपोपविश्य ।
यमौ च वीरौ सुरराजकल्पा-
वेकान्तमास्थाय हितं प्रियं च ॥ ६
तव प्रतिज्ञां कुरुराज सत्यां
चिकीर्षमाणास्त्वदनु प्रियं च ।
ततोऽनुगच्छाम वनान्यपास्य
सुयोधनं सानुचरं निहन्तुम् ॥ ७
एकादशं वर्षमिदं वसामः
सुयोधनेनात्तसुखाः सुखार्हाः ।
तं वञ्चयित्वाधमबुद्धिशील-
मज्ञातवासं सुखमाप्नुयामः ॥ ८ C. 3. 12323 B. 3. 176. 8 K. 3. 178. 8

## 173

**1** $^{a}$) $D_3$ कृतार्थैं; $D_5$ हि पार्थैं (for कृतास्त्रे). Ś$_1$ $K_{1.2}$ $B_2$ वरिष्ठे; $B_{1m.3}$ Dn $D_{4.6}$ प्रवीरे; $T_1$ प्रबर्हे (for प्रधाने). — $^{b}$) Ś$_1$ $K_{1.2}$ $D_5$ °शत्रोः (for °हन्तुः). — $^{c}$) $B_1$ $G_1$ ततः (for अतः). — $^{d}$) $B_4$ धीरेण (for शूरेण).

**2** $^{a}$) $T_2$ $G_{2-4}$ [अ]नेकेषु (for तेष्वेव). $K_2$ ततो; $T_1$ $G_1$ तदा; $T_2$ $G_{2-4}$ च ते; M पुनर् (for तु ते). — $^{b}$) Ś$_1$ K $D_{1-3.5}$ °समानवीर्याः (for °समेन वीराः). — $^{c}$) $T_2$ $G_{2.3}$ तु (for च). $K_3$ $D_3$ शैले (for शैल-). $K_{1.2}$ च (for सु-). — $^{d}$) $K_3$ $T_1$ °वने (for °गता).

**3** $^{a}$) $G_2$ वनानि (for वेश्मानि). $D_1$ [अ]पश्यन्; $T_1$ तत्र (for पश्यन्). — $^{b}$) Ś$_1$ $K_{1.2}$ °द्रुत-; $K_3$ °विध- (for °द्रुम-). $K_{3.4}$ $B_{1.4}$ Dc $D_{1-3.5}$ $T_1$ $G_1$ M -संनिरुद्धाः; $B_{1.3}$ Dn $D_{4.6}$ -संनिबद्धाः (for -संनिकर्षाः). — $^{c}$) Ś$_1$ $K_{2.3}$ Dc $D_{1.2.5.6}$ नरेंद्र; $T_1$ $G_1$ M महात्मा (for नरेन्द्रः). — $^{d}$) $T_2$ $G_{2-4}$ शस्त्रेषु; $G_1$ सोस्त्रेण; $M_1$ योस्त्रेषु (for सोऽस्त्रेषु).

**4** $^{a}$) $T_1$ $G_1$ °वीरवर्याः (for °देवपुत्राः). — $^{c}$) $K_2$ प्राणिनो यं; $D_5$ प्राणिनां स्म. $K_1$ स्पृहयिष्यंति (for ते स्पृहयन्ति). $T_1$ राज्यं (for राजन्). — $^{d}$) $T_1$ चिरं च कालं (for शिवश्च कालः). $K_3$ $T_1$ $G_1$ $M_1$ च (for स).

**5** $^{b}$) Ś$_1$ $K_1$ ऊषाः (for ऊषुः). M तदा (for समास्). $B_2$ $D_5$ ते च (for तत्र). $K_{1.3.4}$ $D_{1-5}$ T G तथा; M समास् (for तदा). — $^{c}$) $K_1$ तु दश; $Dn_3$ द्वादश; $D_4$ वा दश; S तत्र च (for ता दश). $K_4$ $D_{1-3}$ पूर्णाश्च वर्षा दश पां°; $D_5$ पूर्वास्तथा पंच च पां°. — $^{d}$) $T_2$ (before corr.) $G_{2.4}$ सुखा; $M_1$ समा (for शिवा). Ś$_1$ K $D_{1-3.5}$ $G_4$ सु($K_4$ स)-सुखा (for वसतां).

**6** $^{b}$) $T_1$ $G_1$ उपेत्य काले (for उपोपविश्य). — $^{d}$) Ś$_1$ K $D_{1-3.5}$ $T_2$ $G_{2-4}$ आसाद्य (for आस्थाय). $K_4$ transp. हितं and प्रियं.

**7** $^{b}$) $Dc_1$ $T_1$ °माणस् (for °माणास्). $K_4$ B D (except $D_{1-3.5}$) $T_1$ $G_4$ तदनु (for त्वदनु). $T_1$ प्रियश् (for प्रियं). — $^{c}$) $G_1$ इतो (for ततो). Ś$_1$ om. ऽनु. $K_{1.2}$ $B_2$ Dc $D_{1.2.4.6}$ न गच्छाम; $B_{1.3.4}$ Dn $D_3$ (*sup. lin.*) [ऽ]न्वगच्छाम; $D_5$ [ऽ]वगंतास्मि; $T_1$ [ऽ]धिगच्छाम; $T_2$ $G_{1.3.4}$ [ऽ]भि($G_1$ °नु)गच्छेम (for ऽनुगच्छाम). $K_3$ $T_1$ M गृहान्-पास्य (for वना°). — $^{d}$) $T_1$ $G_{1.2}$ दुर्यो° (for सुयो°). Ś$_1$ $K_{1-3}$ $D_{3.5}$ $T_2$ $G_{2-4}$ °बंधं (for °चरं). — After 7, $K_3$ reads $9^{cd}$.

**8** $^{a}$) Ś$_1$ K $T_1$ $G_2$ इमं; Dc इयं (for इदं). Ś$_1$ $K_{1.2}$ $D_3$ $T_1$ $G_1$ $M_1$ वसाम. — $^{b}$) $D_5$ दुर्यो° (for सुयो°). $B_2$ [आ]शु; Dc [आ]स- (for [आ]त्त-). — $^{c}$) $B_4$ तद् (for तं). $D_5$ [अ]धमयुद्धशीलम्; $T_1$ समशीलबुद्धिर्; $T_2$ $G_{3.4}$ यदबुद्धि-

C 3.12324
B 3.176.9
K. 3.178.9

तवाज्ञया पार्थिव निर्विशङ्का
विहाय मानं विचरन्वनानि ।
समीपवासेन विलोभितास्ते
ज्ञास्यन्ति नास्मानपकृष्टदेशान् ॥ ९
संवत्सरं तं तु विहृत्य गूढं
नराधमं तं सुखमुद्धरेम ।
निर्यात्य वैरं सफलं सपुष्पं
तस्मै नरेन्द्राधमपूरुषाय ॥ १०
सुयोधनायानुचरैर्वृताय
ततो महीमाहर धर्मराज ।
स्वर्गोपमं शैलमिमं चरद्भिः
शक्यो विहन्तुं नरदेव शोकः ॥ ११
कीर्तिश्च ते भारत पुण्यगन्धा
नश्येत लोकेषु चराचरेषु ।
तत्प्राप्य राज्यं कुरुपुंगवानां
शक्यं महत्प्राप्तमथ क्रियाश्च ॥ १२
इदं तु शक्यं सततं नरेन्द्र
प्राप्तुं त्वया यल्लभसे कुबेरात् ।
कुरुष्व बुद्धिं द्विषतां वधाय
कृतागसां भारत निग्रहे च ॥ १३
तेजस्तवोग्रं न सहेत राज-
न्समेत्य साक्षादपि वज्रपाणिः ।
न हि व्यथां जातु करिष्यतस्तौ
समेत्य देवैरपि धर्मराज ॥ १४
त्वदर्थसिद्ध्यर्थमभिप्रवृत्तौ
सुपर्णकेतुश्च शिनेश्च नप्ता ।
यथैव कृष्णोऽप्रतिमो बलेन
तथैव राजन्स शिनिप्रवीरः ॥ १५
तवार्थसिद्ध्यर्थमभिप्रवृत्तौ
यथैव कृष्णः सह यादवैस्तैः ।

---

शीलम्; $G_1$ $M_2$ [अ]धमशीलबुद्धिम्; $M_1$ धर्मशीलबुद्धिम्. — $^{d}$) $D_5$ च सुखं वसामः (for सुखमा°). $K_4$ आप्नुमो वै; $D_4$ $T_1$ आप्नुयाम.

**9** $^{a}$) $T_1$ $G_1$ M त्वदाज्ञया. — $^{b}$) $B_1$ (m as in text) $T_1$ $G_1$ M निहत्य (for विहाय). $T_2$ $G_{2-4}$ कामं (for मानं). Ś$_1$ K $D_{1-3}$ $T_2$ $G_{2-4}$ विचरामो; $B_1$ (m as in text) विचरंतो; $T_1$ $G_1$ चरतो; $M_1$ नगरे; $M_2$ व्यचरं (for विचरन् = विचरन्तः Cn). $M_1$ वसेम (for वनानि). $D_5$ विहाय चैनं त्वनुसंचरामः. — $K_3$ reads $9^{cd}$ after 7. — $^{c}$) $D_5$ विलोभितः सः; $T_1$ $M_2$ विलोकितास्ते ($M_2$ °तास्तु); $T_2$ $G_{3.4}$ तिरोहितास्ते; $G_{1.2}$ विमोहितास्ते; $M_1$ विलोभितास्तु. — $^{d}$) $T_1$ हास्यंति (for ज्ञास्यन्ति). $K_{3.4}$ $B_{1-3}$ Dc $Dn_3$ $D_4$ Cnp [अ]नाथान् (for नास्मान्). $K_4$ $B_1$ (m as in text) °देहान् (for °देशान्). $D_5$ ज्ञास्यत्यवश्यं च निकृष्टदेशान्; $G_1$ ज्ञास्यंति देहानवकृष्टदेहान्.

**10** $^{a}$) Ś$_1$ $K_{1.2}$ ते तु; B D (except $D_{1-3.5}$) तत्र (for तं तु). $K_3$ $D_2$ मूढा; $K_4$ $D_{1.3.5}$ $T_1$ $G_1$ M गूढा (for गूढं). — $^{b}$) Ś$_1$ $K_{1.2}$ $T_2$ $G_{2-4}$ उद्धरामः (for उद्धरेम). — $^{c}$) $T_2$ $G_{1.3}$ सुपुण्यं (for सपुष्पं). — $^{d}$) $T_2$ $G_3$ तस्मात् (for तस्मै). $K_4$ $D_{1.2}$ °पौरुषाय.

**11** $^{a}$) $T_1$ $G_{1.2}$ दुर्यो° (for सुयो°). $K_3$ घृताय; $G_1$ मृताय (for वृताय). — $^{b}$) $K_{3.4}$ B D M आवस ($D_{1.2}$ आप्स्यसि); $G_1$ प्राप्नुहि (for आहर). — $^{c}$) Ś$_1$ $K_1$ स्वर्गम्; B D (except $D_{1-3.5}$) देशम् (for शैलम्). Ś$_1$ $K_1$ चलद्भिः. — $^{d}$) $K_2$ विहर्तुं; $K_{3.4}$ $D_{1.2.5}$ विहातुं; $B_1$ $Dc_2$ $D_3$ S निहंतुं (for विहन्तुं). $T_2$ $G_{2-4}$ तत्र (for नर-). Ś$_1$ $K_1$ लोकः; $K_2$ लोचनः (for शोकः).

**12** $^{a}$) B Dc Dn $D_{4.6}$ $T_1$ $G_1$ M तु; $D_{2.3}$ न (for च). $K_3$ पुण्यबद्धा; $D_5$ पुण्यबंधो; $M_2$ पुण्यकीर्तें. — $^{b}$) B D (except $D_{1-3.5}$) नश्येद्धि. — $^{c}$) $T_1$ $M_2$ राजन् (for राज्यं). Dc $T_1$ $G_1$ M °जांगलानां (for °पुंगवानां). — $^{d}$) Ś$_1$ $K_2$ चक्रं (for शक्यं). $D_5$ प्राप्यम् (for प्राप्तुम्). $K_2$ अविक्रियाश्च; $T_1$ अविक्रियां च (for अथ क्रि°).

**13** $^{a}$) $D_3$ वर्षं (m as in text); $G_4$ [अ]शक्यं (for शक्यं). — $^{b}$) $K_{1.3}$ यल्लभते (for °से). — $^{d}$) $K_{1.3}$ $Dc_2$ $G_1$ विग्रहे च; $K_4$ निग्रहे तु; $B_2$ निग्रहाय; $T_2$ $G_{2-4}$ निग्रहेषु.

**14** $^{c}$) $K_1$ करिष्यतेसौ; $M_2$ गमिष्यतस्तौ.

**15** $^{a}$) = (var.) $16^{a}$. $K_1$ त्वमर्थं°; $K_2$ $B_{1-3}$ D (except $D_{1-3}$) तवार्थं° (for त्वदर्थं°). $B_{2-4}$ $Dn_1$ अपि (for अभि-). $T_1$ -प्रयुक्ताः; $M_1$ -प्रवृद्धौ (for -प्रवृत्तौ). — Ś$_1$ $K_2$ $D_1$ om. (hapl.) $15^{b}$–$16^{a}$. — $^{b}$) $K_3$ $B_3$ (m as in text). $_4$ सुवर्ण° (for सुपर्ण°). — $^{c}$) $B_{1.2.4}$ Dn $D_{4.6}$ तथैव (for य°). — $^{d}$) $B_{1.3.4}$ Dc वीरः स ($B_1$ च); $T_1$ M वीरस्तु; $G_1$ शूरस्तु (for राजन्स). $B_2$ Dn

तथैव चावां नरदेववर्य
यमौ च वीरौ कृतिनौ प्रयोगे ।
त्वदर्थयोगप्रभवप्रधानाः
समं करिष्याम परान्समेत्य ॥ १६
ततस्तदाज्ञाय मतं महात्मा
तेषां स धर्मस्य सुतो वरिष्ठः ।
प्रदक्षिणं वैश्रवणाधिवासं
चकार धर्मार्थविदुत्तमौजाः ॥ १७
आमन्त्र्य वेश्मानि नदीः सरांसि
सर्वाणि रक्षांसि च धर्मराजः ।
यथागतं मार्गमवेक्षमाणः
पुनर्गिरिं चैव निरीक्षमाणः ॥ १८
समाप्तकर्मा सहितः सुहृद्भि-
र्जित्वा सपत्नान्प्रतिलभ्य राज्यम् ।
शैलेन्द्र भूयस्तपसे धृतात्मा
द्रष्टा तवास्मीति मतिं चकार ॥ १९
वृतः स सर्वैरनुजैर्द्विजैश्च
तेनैव मार्गेण पतिः कुरूणाम् ।
उवाह चैनान्सगणांस्तथैव
घटोत्कचः पर्वतनिर्झरेषु ॥ २०
तान्प्रस्थितान्प्रीतमना महर्षिः
पितेव पुत्राननुशिष्य सर्वान् ।
स लोमशः प्रीतमना जगाम
दिवौकसां पुण्यतमं निवासम् ॥ २१
तेनानुशिष्टार्ष्टिषेणेन चैव
तीर्थानि रम्याणि तपोवनानि ।
महान्ति चान्यानि सरांसि पार्थाः
संपश्यमानाः प्रययुर्नराग्र्याः ॥ २२ C. 3. 12338 B. 3. 176. 23 K. 3. 178. 23

इति श्रीमहाभारते आरण्यकपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

$D_{4.6}$ तथैव चाहं नरदेववर्यं (cf. $16^c$)

**16** $\acute{S}_1$ $K_2$ $D_1$ om. $16^a$ (cf. v.l. 15). — $^a$) =(var.) $15^a$. $K_4$ M °प्रवृत्तो; B D (except $D_{1-3.5}$) °प्रपन्नो (for °प्रवृत्तौ). — $^b$) $K_{3.4}$ $D_{1.2.5}$ M तथैव (for य°). $K_{3.4}$ $D_{1.3.5}$ रामः; $D_2$ राजन्; $T_2$ $G_{3.4}$ कृष्णौ (for कृष्णः). $D_3$ $T_2$ $G_{3.4}$ ते (for तैः). — $^c$) $B_{1-3}$ D (except $D_{1-3.5}$) $T_1$ $M_2$ चाहं; $T_2$ $G_{2-4}$ चेमौ (for चावां). $B_4$ तथैव राजन्नहमेकवीरो. — $^d$) $D_1$ वर्यौ (for वीरौ). $T_1$ युवानौ (for प्रयोगे). — $^e$) $K_{3.4}$ °योगे (for °योग-). $K_1$ -प्रदानाः; $T_1$ M -प्रधानं (for -प्रधानाः). — $^f$) $\acute{S}_1$ K $D_{1-3.5}$ समी- ($K_1$ समे); $B_{1.3.4}$ Dn $D_{4.6}$ $T_2$ $G_3$ शमं (for समं). $\acute{S}_1$ $K_{2.3}$ $D_{2.3.5}$ करिष्यंति (for °ष्याम). $K_3$ समीपे (for समेत्य).

**17** Before 17, $B_4$ Dc Dn $D_{1.4.6}$ ins. वैशं° उ°. — $^a$) $K_{3.4}$ $B_1$ समाज्ञाय; $T_2$ $G_{2-4}$ तदादाय (for तदाज्ञाय). $K_4$ $D_2$ मतिं (for मतं). — $^b$) $B_{2.4}$ Dn $D_{4.6}$ च (for स). $K_3$ धर्मज्ञवतां; $T_1$ राजप्रवरो (for धर्मस्य सुतो). $T_1$ $G_{1.2}$ मनीषी (for वरिष्ठः). — $K_3$ $D_1$ om. $17^{cd}$. — $^c$) S °णं स्थानमुपेत्य राजा. — $^d$) $\acute{S}_1$ $K_{1.2}$ °विदां वरिष्ठः; $K_4$ $B_4$ $D_{2.3.5}$ °भृतां वरिष्ठः (for °विदुत्तमौजाः). S पर्यक्रमद्वैश्रवणस्य राज्ञः.

**18** $^a$) $K_{1.4}$ $D_{2.3}$ नदीसरांसि; $K_2$ नदीशरास्य; S (except $G_3$; $T_2$ before corr.) सरांसि नद्यः. — $^c$) Many MSS. अवेक्ष्यमाणः. — $^d$) $D_5$ पुरं (for पुनर्). K $B_{2.3}$ $D_{1-3.5}$ S तं च (for चैव). Some MSS. निरीक्ष्यमाणः. $B_4$ Dc गंतुं स ऐच्छत्सह सोदरीयैः. — After 18, Dn $D_6$ ins. :

874* ततो महात्मा स विशुद्धबुद्धिः
संप्रार्थयामास नगेन्द्रवर्यम् ।

**19** $^b$) $T_1$ °लब्धराज्यः (for °लभ्य राज्यम्). — $^c$) $T_2$ $G_{2-4}$ शैले च (for शैलेन्द्र). B D (except $D_{1.2.5}$) जितात्मा; $T_2$ $G_{2-4}$ य° (for धृ°). — $^d$) S भवामी° (for तवास्मी°).

**20** $^a$) $K_4$ B D (except $D_{1.2.5}$) च ($B_1$ तु) (for स). — $^b$) $T_2$ G पुनर्निवृत्तः (for पतिः कुरू°). $T_1$ M पुनर्निवृत्तः सह कृष्णया च. — $^c$) $B_{2.4}$ Dn $D_{1-4}$ T $G_3$ चैतान्; $D_5$ चैवं (for चैनान्). $B_{2.4}$ Dn $D_4$ गणशस्; $B_3$ Dc $D_{5.6}$ $T_2$ $G_{3.4}$ सगणस् (for सगणांस्).

**21** $^b$) $D_5$ पार्थान् (for सर्वान्). — $^{cd}$) $K_{3.4}$ $D_5$ S स लोमशो दिवमेवोत्तमश्रीर्जगाम तेषां विजयं तदो($K_3$ °दु-; $D_5$ °थो-; $G_2$ $M_2$ °तो)क्त्वा.

**22** $K_1$ $T_1$ M om. 22. — $^a$) B D (except $D_{1-3.5}$) तेनार्ष्टिषेणेन तथानुशिष्टास्; $T_2$ G तेनानुशिष्टास्त्वार्ष्टिषेणेन चापि. — $^d$) $\acute{S}_1$ $K_2$ नरेंद्र; $D_4$ नराग्र्य (for नराग्र्याः).

# १७४

C. 3. 12339
B. 3. 177. 1
K. 3. 179. 1

वैशंपायन उवाच ।
नगोत्तमं प्रस्रवणैरुपेतं
दिशां गजैः किंनरपक्षिभिश्च ।
सुखं निवासं जहतां हि तेषां
न प्रीतिरासीद्भरतर्षभाणाम् ॥ १
ततस्तु तेषां पुनरेव हर्षः
कैलासमालोक्य महान्बभूव ।
कुबेरकान्तं भरतर्षभाणां
महीधरं वारिधरप्रकाशम् ॥ २
समुच्छ्रयान्पर्वतसंनिरोधा-
न्गोष्ठान्गिरीणां गिरिसेतुमालाः ।
बहून्प्रपातांश्च समीक्ष्य वीराः
स्थलानि निम्नानि च तत्र तत्र ॥ ३
तथैव चान्यानि महावनानि
मृगद्विजानेकपसेवितानि ।
आलोकयन्तोऽभिययुः प्रतीता-
स्ते धन्विनः खड्गधरा नराग्र्याः ॥ ४
वनानि रम्याणि सरांसि नद्यो
गुहा गिरीणां गिरिगह्वराणि ।
एते निवासाः सततं बभूवु-
र्निशानिशं प्राप्य नरर्षभाणाम् ॥ ५
ते दुर्गवासं बहुधा निरुष्य

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 T2 G2-4 आरण्य. — *Sub-parvan:* Omitting sub-parvan name, Ś1 K2-4 D1-3 mention only लोमशतीर्थयात्रा (followed in D2 and preceded in D3 by गंधमादननिवास); B1-3 Dc Dn D4. 6 M mention likewise, only गंधमादनवास; to the above details, Ś1 K1. 2. 4 B1. 3 D M add समाप्त. K1 corrupt and unintelligible. — *Adhy. name:* T2 G2-4 गंधमादननिवृत्तिः; G1 लोमशस्वर्गगमनगंधमादनपर्वतवाससमाप्तिः. — *Adhy. no.* (figures, words or both): Dn1. n3 176; D1 181; S (M2 *sup. lin.*) 177 (M2 orig. 179). — *Śloka no.:* Dn D3 23; D1 21 and 27.

## 174

**1** [a]) K2-4 D1-3 प्रश्रवणैर्; B4 पुष्पफलैर् (for प्रस्रवणैर्). — [b]) S सदिग्गजैः (for दिशां गजैः). K1. 3 °पंक्तिभिश्च; B2 °यक्षपक्षिभिः; S °पक्षिसंघैः (for °पक्षिभिश्च). — [c]) T2 G3. 4 तपो- (for सुखं). K4 च (for नि-). K4 D1. 2 त्यजतां (for जहतां). Ś1 K D1-3 M1 च तेषां; T2 G2-4 हितैषिणां (for हि तेषां). — [d]) M1 कुरुपुंगवानां (for भरत°).

**2** [a]) Ś1 K1. 2 च; T2 G3. 4 स (for तु). — [b]) D5 शैलं समा° (for कैलासमा°). K3. 4 B4 D1. 2 कैलाश(B4 °स)मालोकयतां बभूव.

**3** D2 om. up to गोष्ठान्गिरीणां. — [a]) K2 T2 G3 समुच्छ्रयात्; T1 G1 M1 समेत्य तान् (for समुच्छ्रयान्). K3 सर्वतःसंनिरोधीन्. — [b]) K2 दृष्टान्; T2 G2. 3 कोष्टं; G4 M2 गोष्ठं (for गोष्ठान्). B Dc Dn D4. 6 हरीणां (for गि°). K2 विरमे तु शालाः; B2 गिरिसेव्यमानाः; B4 गिरिसेतुरक्षान्; S गिरिगह्वराणि (G2 °णां) (for गिरिसेतु°). — T1 om. (hapl.) 3[c]-5[b]. — [c]) S (T1 om.) बहुप्रकारांश्च (M °राणि) (for बहून्प्रपातांश्च). B4 प्रसमीक्ष्य (for समीक्ष्य). K1. 2 वीरः; B4 पार्थाः; G1 राजन् (for वीराः). — [d]) D1. 2 स्थानानि (for स्थलानि). G1 रत्नानि (for निम्नानि). D5 तथैव (for च तत्र).

**4** T1 om. 4 (cf. v.l. 3). — [a]) Dc गंधानि; T2 G2-4 चाल्पानि (for चान्यानि). — [b]) K2 B3 °प्रसेवि°; B2 T2 G2-4 M2 °निषेवि°; D5 °पशोभि° (for °पसेवि°). — [c]) Ś1 K D1. 2. 5 [ऽ]नुययुः (for ऽभि°). D5 नृवीरास (for प्रतीतास्). — [d]) B4 नरेंद्राः (for नराग्र्याः). Ś1 K D1-3. 5 तेजस्विनः खड्गधनुर्धराग्र्याः (Ś1 °ह्याः).

**5** T1 om. 5[ab] (cf. v.l. 3). — [a]) B D (except (D1-3. 5) T2 (after corr.) G3 नदीः सरांसि (for सरांसि नद्यो). — [b]) D1-3 °कंदराणि (for °गह्वराणि). — [c]) T2 (before corr.) G4 वाते निवाताः (for एते निवासाः). — [d]) Ś1 K1. 3. 4 Dc D1-3. 5 निशां निशां; K2 M1 दिवानिशं; T1 G1 निशासुखं (for निशानिशं). T2 G2-4 तु भारतानां (for नर°).

व्यतीत्य कैलासमचिन्त्यरूपम् ।
आसेदुरत्यर्थमनोरमं वै
तमाश्रमाग्र्यं वृषपर्वणस्ते ॥ ६
समेत्य राज्ञा वृषपर्वणा ते
प्रत्यर्चितास्तेन च वीतमोहाः ।
शशंसिरे विस्तरशः प्रवासं
शिवं यथावद्वृषपर्वणस्ते ॥ ७
सुखोषितास्तत्र त एकरात्रं
पुण्याश्रमे देवमहर्षिजुष्टे ।
अभ्याययुस्ते बदरीं विशालां
सुखेन वीराः पुनरेव वासम् ॥ ८
ऊषुस्ततस्तत्र महानुभावा
नारायणस्थानगता नराग्र्याः ।
कुबेरकान्तां नलिनीं विशोकाः
संपश्यमानाः सुरसिद्धजुष्टाम् ॥ ९
तां चाथ दृष्ट्वा नलिनीं विशोकाः
पाण्डोः सुताः सर्वनरप्रवीराः ।
ते रेमिरे नन्दनवासमेत्य
द्विजर्षयो वीतभया यथैव ॥ १०
ततः क्रमेणोपययुर्नृवीरा
यथागतेनैव पथा समग्राः ।
विहृत्य मासं सुखिनो बदर्यां
किरातराज्ञो विषयं सुबाहोः ॥ ११
चीनांस्तुखारान्दरदान्सदार्वा-
न्देशान्कुणिन्दस्य च भूरिरत्नान् ।
अतीत्य दुर्गं हिमवत्प्रदेशं
पुरं सुबाहोर्ददृशुर्नृवीराः ॥ १२
श्रुत्वा च तान्पार्थिवपुत्रपौत्रा-
न्प्राप्तान्सुबाहुर्विषये समग्रान् ।
प्रत्युद्ययौ प्रीतियुतः स राजा C. 3. 12351 B 3. 177. 13 K. 3. 179. 13

---

**6** $^a$) Ś$_1$ K D$_2$ तं दुर्गं° ; D$_1$ तदुग्र° (for ते दुर्गं°). K$_{3.4}$ D$_{1.2}$ नि( K$_2$ न्य )रूप्य ; K$_3$ नितुष्य ; D$_3$ तु रम्यं ; D$_5$ निरस्य ( for निरूप्य ). In G$_2$, the portion of the text from 6$^b$ up to 3. 176. 6$^b$ is lost on a missing fol. — $^b$) D$_{1.2}$ विचिंत्य (for व्यतीत्य). A few MSS. कैलाशम्. — $^c$) B$_1$ D$_5$ अत्यंत- (for अत्यर्थ-). Ś$_1$ K D$_{1-3.5}$ -मनोनुगं ; B$_1$ -मनोरथं (for -मनोरमं ). B D (except D$_{1-3.5}$) T$_2$ G$_{3.4}$ M$_3$ ते ; T$_1$ G$_1$ तु (for वै ). — $^d$) T$_2$ G$_{3.4}$ तद् (for तम्). B D (except D$_{1-3.5}$) तु (for ते).

**7** G$_2$ missing (cf. v.l. 6). Ś$_1$ Dn$_1$ D$_4$ om. (hapl.) 7. — $^a$) T$_1$ G$_1$ वीरा (for राज्ञा). K$_2$ वै (for ते). — $^b$) K$_1$ प्रदर्शिता° (for प्रत्यर्चिता°). — $^c$) K$_2$ D$_{2.5}$ T$_1$ G$_{1.4}$ M विस्तरतः. — $^d$) B$_4$ Dn गिरौ ; D$_6$ गिरिं (for शिवं).

**8** G$_2$ missing (cf. v.l. 6). — $^a$) K$_{2.3}$ सुखोचितास्. B$_{2.4}$ Dn (Dn$_3$ m as in text) तस्य (for तत्र). K$_2$ तु ; K$_4$ D$_{1.2.5}$ च ; G$_4$ तदा (for त). G$_1$ सुखोषिताः पथि तत्र त्रिरात्रं. — $^d$) D$_5$ पुनराश्रमं तं (for पुनरेव वासम्).

**9** G$_2$ missing (cf. v.l. 6). K$_1$ om. 9$^a$–10$^b$. — $^b$) B Dn D$_{4.6}$ समग्राः (for नराग्र्याः). — $^c$) K$_4$ विशोकां ; D$_2$ वीतशोकाः. — Ś$_1$ K$_{2-4}$ B$_2$ D$_5$ G$_1$ om. (hapl.) 9$^d$–10$^a$ ; D$_1$ reads the lines after 11$^{ab}$.

**10** G$_2$ missing (cf. v.l. 6). K$_1$ om. 10$^{ab}$; Ś$_1$ K$_{2-4}$ B$_2$ D$_5$ G$_1$ om. 10$^a$ (cf. v.l. 9). — $^b$) B D (except D$_{1-3.5}$) सर्वनरप्रधानाः ; T$_1$ G$_1$ पंच पंचेंद्रकल्पाः. T$_2$ G$_{3.4}$ M -नृप- (for -नर-). — $^d$) Ś$_1$ K D$_{1-3.5}$ सु( D$_5$ न )रर्षभा ; G$_{1.4}$ M$_1$ द्विजर्षभा (for द्विजर्षयो). B Dn D$_{4.6}$ °मला ; Dc °माना (for °भया). K$_2$ D$_{2.3}$ तथैव (for य°).

**11** G$_2$ missing (cf. v.l. 6). — $^a$) D$_3$ G$_1$ [ए]व (for [उ]प-). — $^b$) Dn$_1$. n$_2$ °जवे° ; D$_5$ °पथे° (for °गते°). Ś$_1$ K$_{1.2}$ D$_5$ गताः (for पथा). K$_2$ Dc$_2$ Dn$_2$ T$_2$ G$_3$ समङ्याः ; T$_1$ G$_1$ नराङ्याः (for समग्राः). — After 11$^{ab}$, D$_1$ reads 9$^d$–10$^a$. Ś$_1$ om. 11$^{cd}$. — $^c$) T$_1$ विसृज्य (for विहृत्य). K$_{2.3}$ T$_1$ M वासं (for मासं). — $^d$) D$_3$ विषये (for °यं).

**12** G$_2$ missing (cf. v.l. 6). — $^a$) G$_4$ वीरान् ; M$_1$ पीनान् (for चीनान्). K$_{2-4}$ D T$_2$ G$_3$ तुषा( Dn$_3$ °सी )रान् ; B$_3$ तथारान् ; T$_1$ M तुखादान् ; G$_1$ तुखातान् (for तुखारान्). K$_{2.3}$ B$_{3.4}$ Dc$_2$ सदर्वान् ; B$_{1.2}$ Dc$_1$ Dn D$_{2-6}$ च सर्वान् ; D$_1$ सदार्यान् ; T G$_{1.3}$ विदर्भान् ; G$_4$ सुदर्भान् ; M$_1$ सुदुर्दान् ; M$_2$ सदर्भान् (for सदार्वान्). — $^b$) Ś$_1$ K$_{1.2}$ D$_3$ कुनिंदस्य ; K$_3$ B Dc Dn D$_{4-6}$ T$_2$ G$_{3.4}$ कु( B$_4$ पु )लिंदस्य (for कुणिन्दस्य). B Dn$_2$. n$_3$ D$_6$ T$_2$ G$_{3.4}$ च भूमिरत्नान् (B$_4$ सर्वदुर्दान्); S (G$_2$ missing) च भूरिरम्यान् (T$_1$

अस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥ ३०
कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संकरस्तत्र नागेन्द्र बलवान्प्रसमीक्षितः ॥ ३१
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ३२

सर्प उवाच ।

श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ३३

इति श्रीमहाभारते आरण्यकपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

# १७८

युधिष्ठिर उवाच ।

भवानेतादृशो लोके वेदवेदाङ्गपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ १

सर्प उवाच ।

पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ २

युधिष्ठिर उवाच ।

दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते ।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम् ॥ ३

सर्प उवाच ।

दाने रतत्वं सत्यं च अहिंसा प्रियमेव च ।
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ॥ ४ C. 3. 12492 B. 3. 181. 4 K. 3. 183. 4

---

एवं). $K_2$ मतिस्त्वे च; $B_1$ मतिर्देवो; $D_5$ मतं द्वैधं; $T_2$ $G_{1.3.4}$ मतं द्वेधा; $G_2$ -विधं द्वेधा (for मतिद्वैधे). — $30^d$=1. 67. $9^d$ etc.

**31** $^a$) $K_1$ $T_1$ $G_1$ कृतकृत्यः. S सर्ववर्णा ($T_1$ सवर्णाय) (for पुनर्वर्णा). — $^b$) $T_1$ $G_2$ $M_2$ न नश्यति ($M_2$ °ते); $G_1$ न दूष्यते; $G_4$ ननु द्रुते (*inf. lin.* as in text). $M_1$ नशिष्यति (for न विद्यते). — $^c$) $Dc_1$ $Dn_1$ T $G_{1-3}$ संस्कारस् (for संकरस्). B D (except $D_{1-3}$) $G_4$ त्वस्य; $M_2$ तस्य (for तत्र). $Ś_1$ K $D_{1-3.5}$ राजेंद्र; $M_2$ विप्रस्य (for नागेन्द्र). — $^d$) $Ś_1$ स ह वीक्षितः; $K_1$ मतवी°; $K_2$ सर्प वीक्ष्यतः; $K_{3.4}$ $D_{1.2}$ असमीक्षितः; T G न ($G_1$ प्र-) समीक्ष्यते (for प्रसमी°). $M_1$ फलभावे तु दृश्यते; $M_2$ तदभावे समीक्ष्यते.

**32** $^b$) $Ś_1$ K $D_2$ सत्कृतं; $D_{3.5}$ यत्कृतं ($D_5$ °ते) (for संस्कृतं). — $^d$) $D_5$ तु भुजंगम (for भुजगो°).

**33** $^b$) $G_1$ महामते (for युधि°).

Colophon. — *Major parvan:* $Ś_1$ $K_2$ $Dn_2$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_{1-3}$ Dc $Dn_2$. $n_3$ $D_{1-3.5.6}$ $G_1$ $M_1$ आ($Dn_3$ $M_1$ अ)जगर. — *Adhy. no.* (figures, words or both): Dn 180 ($Dn_2$ 179); $D_1$ 185; S ($G_1$ corrupt; $M_2$ *sup. lin.*) 181 ($M_2$ orig. 183). — *Śloka no.:* Dn 38; $D_1$ 67.

## 178

**1** $^a$) $T_2$ $G_{2-4}$ °दृशे चोक्ते (for °दृशो लोके). — $^c$) $T_1$ सर्पं (for कर्म). — $^d$) $D_4$ भूतिर् (for गतिर्).

**2** $^a$) $T_2$ $G_{3.4}$ दानं (for पात्रे). Dc दद्यात् (for दत्त्वा). — $^b$) $B_1$ [ए]व; $T_2$ $G_3$ [अ]पि (for च).

**3** $^a$) $K_4$ S दानं and सत्यं (for दानाद् and सत्याद्). $D_5$ दानाद्वा सत्यवाक्याद्वा. — $^b$) $Ś_1$ K $D_{3.5}$ किं नाम ($K_3$ किमतः; $K_4$ किं चातः) पर($Ś_1$ $K_{1.2}$ वर)मुच्यते. — $^c$) $D_{1.2}$ S चापि (for चैव).

**4** $^a$) $K_1$ $G_2$ दानेन तत्वं; $T_2$ $G_{3.4}$ दानेन सह (for दाने रतत्वं). $B_{1.3}$ Dc च तत्वं; $B_2$ च सत्वं; $B_4$ $D_4$ च सत्यं; $D_{1.2}$ तत्वं च; $D_3$ भारत (for रतत्वं). $Ś_1$ $K_{3.4}$ $D_3$ सत्ये वा; $K_{1.2}$ $B_{2-4}$ Dc $D_{1.2.4.5}$ सत्यं वा (for सत्यं च). Dn $D_6$ दानं च सत्यं तत्वं वा. — $^b$) To avoid the hiatus, N (except Dn $D_{4-6}$) [अ]प्यहिंसा (for अहिंसा). $Ś_1$ K $D_{1-3.5}$ -प्रिययोस्तथा (for °मेव च). — $^c$) $K_4$ तेषां; $D_{1.2}$ पर-; S अत्र (for एषां). $K_{1.2}$ °यस्त्वं (for °यस्त्वाद्). — $^d$) $Ś_1$ K $D_{3.5}$ उच्यते (for दृश्यते).

**5** $^a$) $T_1$ कच्चिच्च (for कस्माच्चिद्). $Ś_1$ वा (for हि). $K_2$ तस्माच्च दानयोगाद्वा; $T_2$ G कच्चिद्दानप्रयोगाद्धि; $M_2$ दानयोगाच्च केषांचित्. — $^b$) $K_4$ एतद्; $G_4$ एवं (for एव).

C 3 12493
B. 3 181 5
K. 3. 183. 5

कस्माच्चिद्दानयोगाद्धि सत्यमेव विशिष्यते ।
सत्यवाक्याच्च राजेन्द्र किंचिद्दानं विशिष्यते ॥ ५
एवमेव महेष्वास प्रियवाक्यान्महीपते ।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ॥ ६
एवमेतद्भवेद्राजन्कार्यापेक्षमनन्तरम् ।
यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ॥ ७
युधिष्ठिर उवाच ।
कथं स्वर्गे गतिः सर्प कर्मणां च फलं ध्रुवम् ।
अशरीरस्य दृश्येत विषयांश्च ब्रवीहि मे ॥ ८
सर्प उवाच ।
तिस्रो वै गतयो राजन्परिदृष्टाः स्वकर्मभिः ।
मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ९
तत्र वै मानुषाल्लोकाद्दानादिभिरतन्द्रितः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ १०
विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत् ।
तिर्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ॥ ११
कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ १२
तिर्यग्योन्यां पृथग्भावो मनुष्यत्वे विधीयते ।
गवादिभ्यस्तथाश्वेभ्यो देवत्वमपि दृश्यते ॥ १३
सोऽयमेता गतीः सर्वा जन्तुश्चरति कार्यवान् ।
नित्ये महति चात्मानमवस्थापयते नृप ॥ १४

---

— $Ś_1$ $K_{1.2}$ om. (hapl.) $5^{cd}$. — $^{c}$) $K_{3.4}$ $D_{1-3.5}$ राजर्षे (for राजेन्द्र). — $^{d}$) $K_{3.4}$ $D_{1-3.5}$ S (except $T_1$) क्वचिद् (for किंचिद्).

**6** $^{a}$) $T_1$ $G_1$ $M_1$ महाराज (for महे°). — $^{b}$) $Ś_1$ $K_{1.2}$ $G_{2.4}$ प्रियवाक्यं; $D_5$ प्रियं वाक्यं; $M_1$ प्रियाद्वाक्यान्. $D_5$ विशिष्यते; $T_1$ $G_1$ $M_1$ महामते (for मही°). — $^{d}$) $Ś_1$ $K_{1.2}$ $D_{1-3.5}$ तस्याश्च (for तत°).

**7** $^{a}$) $D_{1.2}$ एव (for एतद्). — $^{b}$) $K_2$ कांक्ष्याप्रेक्षम्; $K_3$ $D_3$ $G_1$ कार्यावेक्षम्; $D_5$ कार्यं वेद्यम् (for कार्यापेक्षम्). $B_1$ अनुत्तमं (for अनन्तरम्). — $^{c}$) $K_{2.3}$ $B_3$ $Dc_1$ $Dn_1$ $T_1$ अन्यं (for अन्यत्). $K_2$ तु; $B_2$ त्वं (for ते). $D_{1.2}$ यथा त्वं मन्यसे राजन्. — $^{d}$) $K_3$ तत्; $K_4$ $B_4$ $D_{1-3.5}$ ते (for [अ]हम्).

**8** $^{a}$) $Ś_1$ $K_{1.2}$ $D_1$ $G_{2.4}$ स्वर्ग- (for स्वर्गे). — $^{c}$) $Dn_3$ $D_1$ S दृश्यंते (for दृश्येत). — $^{d}$) $B_4$ विषयं च. $B_{1-3}$ D (except $D_{1-3.5}$) प्रब्रूहि विषयांश्च मे.

**9** $^{a}$) $D_5$ मिश्रा (for तिस्रो). $K_4$ $D_2$ वि- (for वै). — $^{b}$) $D_5$ च (for स्व-). S जगदि(M °ती)ष्टा यथाविधि ($G_{2.4}$ विधिस्मृताः). — After $9^{ab}$, $M_2$ reads 11. — $^{c}$) $B_4$ Dn $D_4$ मानुषं; $T_2$ $G_3$ मनुष्यः (for मानुष्यं). $T_1$ °वासं च. — $^{d}$) $D_3$ च ते; $D_5$ तथा; S च तास् (for च तत्).

**10** $^{a}$) $Ś_1$ $K_{1.2.4}$ $D_{1.5}$ $G_2$ तत्रैव; $B_4$ तत्रापि; $T_1$ M तत्रैवं; $T_2$ $G_3$ तत्र तं; $G_1$ अत्रैव. Dc मानुषाँल्लोकान्; $D_4$ मानुषा लोकाद्; $G_1$ मानुषा लोका. — $^{b}$) S अनादिभिः (for अतन्द्रितः). — $^{c}$) $G_1$ अहिंसार्थं. $B_{2.3}$ (m as in text).$_4$ °समायुक्तः. $T_1$ M अहिंसार्थैश्च कार्यार्थैः. — $^{d}$) $T_1$ both इष्यते and अश्नुते (as in text).

**11** $M_2$ reads 11 after $9^{ab}$. — $^{c}$) $B_4$ -गतान्; $D_3$ यथा (for तथा). $B_2$ पार्थ; $T_2$ $G_{2-4}$ चात्र (for तात). — $^{d}$) $K_1$ $D_1$ विशेषं. $K_{1.2}$ $D_1$ $T_1$ लक्ष्यते; $K_4$ $B_2$ $D_5$ दृश्यते (for वक्ष्यते). $B_4$ विषयस्तात लक्ष्यते.

**12** $^{ab}$) $Ś_1$ K $D_{1-3.5}$ °लोभ°; $B_4$ °राग° (for °क्रोध°). $Ś_1$ K $D_{1-3.5}$ °मोह° (for °लोभ°). S यदा त्वत्र महत्वेन हिंसार्थो ($T_2$ $G_{2-4}$ °र्थं) लोभ एव च. — $^{cd}$) $B_2$ °योनिः (for °योनौ). $Ś_1$ $K_{1.2}$ $D_{1-3.5}$ प्रजायते (for प्रसू°). $B_4$ तिर्यग्योनिषु जायते. S मनुष्यमा($T_2$ $G_{2-4}$ °ष्य आ)विशेन्मोहात्स तिर्यगवशो ($T_2$ $G_{2-4}$ °ग्वशगो) भवेत्.

**13** $^{a}$) B D (except $D_{1.3.5}$) $T_2$ $G_{2.4}$ तिर्यग्योन्याः; $T_2$ $G_3$ °ग्योनौ. Dc पृथग्भावे. — $^{b}$) $K_4$ $D_1$ मनुष्यत्वाद्; $B_{2.3}$ $D_6$ °ष्यत्वं; $B_4$ Dn $D_4$ °ष्यार्थं; Dc $T_1$ मानुष्यत्वं. $G_4$ विधीयतां. — $^{c}$) $Ś_1$ तथाश्विभ्यो. — $^{d}$) $D_1$ अभि- (for अपि). $T_2$ $G_3$ भिद्यते; $G_{2.4}$ M विद्य° (for दृश्य°).

**14** $^{a}$) $B_1$ ह्येता (for एता). $B_{1-3}$ Dc Dn $D_{4.6}$ तात (for सर्वा). $M_2$ सोयमेतावतीर्जातीर्. — $^{b}$) $Ś_1$ $K_{1.2}$ काल°; $B_2$ वीर्य° (for कार्य°). — $^{c}$) T $G_{2.3}$ M नित्ये; $G_1$ तिक्के (for नित्ये). — $^{d}$) $D_{1.2}$ यदि (for अव-). $K_4$ $B_{2.3}$ $D_{1.2.5}$ -स्थापयति; $T_2$ G -स्थाप्य चरेन् ($G_1$ च वै); $M_2$ -स्थापय वै (for स्थापयते). N (except $Ś_1$ $K_{1.2}$) द्विजः (for नृप).

**15** $^{a}$) $K_{1.2}$ ततो; $B_3$ Dc $D_6$ जातौ (for जातो). Dc जातौ; $T_1$ मानुश् (for जातश्). $K_{3.4}$ $M_1$ बलवद्; $D_5$ भगवान् (for बल°). — $^{b}$) $Ś_1$ नात्माथ; $K_1$ चात्माय; $K_2$ चात्माथ; $K_4$ चात्मापि; $D_3$ आत्मा च; $T_1$ नाम्नाथ; $T_2$ (before corr.) $G_{2.4}$ M नाम्नाय; $G_1$ [S]नामय- (for चात्मा

जातो जातश्च बलवान्भुङ्क्ते चात्मा स देहवान् ।
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः ॥ १५
युधिष्ठिर उवाच ।
शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः ।
तस्याधिष्ठानमव्यग्रं ब्रूहि सर्प यथातथम् ॥ १६
किं न गृह्णासि विषयान्युगपत्त्वं महामते ।
एतावदुच्यतां चोक्तं सर्वं पन्नगसत्तम ॥ १७
सर्प उवाच ।
यदात्मद्रव्यमायुष्मन्देहसंश्रयणान्वितम् ।
करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि ॥ १८
ज्ञानं चैवात्र बुद्धिश्च मनश्च भरतर्षभ ।
तस्य भोगाधिकरणे करणानि निबोध मे ॥ १९
मनसा तात पर्येति क्रमशो विषयानिमान् ।
विषयायतनस्थेन भूतात्मा क्षेत्रनिःसृतः ॥ २०
अत्र चापि नरव्याघ्र मनो जन्तोर्विधीयते ।
तस्माद्युगपदस्यात्र ग्रहणं नोपपद्यते ॥ २१
स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः ।
द्रव्येषु सृजते बुद्धिं विविधेषु परावराम् ॥ २२
बुद्धेरुत्तरकालं च वेदना दृश्यते बुधैः ।
एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः ॥ २३
युधिष्ठिर उवाच ।
मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् । C 3 12512 B. 3. 181. 24 K. 3. 183. 24

---

स). K3 D1. 2. 5 भुंक्ते स्व(K3 °त्म)फलसंभवं. — c) T ... G प्रजार्थेन तु (G2 °र्थं कर्म°) (for फलार्थस्तात) ... चारु; D1. 2 तत्र (for तात). Ś1 K... S1 K1. 2 (m as in text); ... निष्कृत्तः; B1 निसृक्तः ... D1. 2 निर्दिष्टः; T1 निष्पन्नः; T2 ... निर्वृत्तः; G2 निष्पत्तिः (for निष्पृक्तः). — d) Ś1 K1. °पालन° (for °लक्षण°).

16 a) K2 M1 शब्दस्पर्शौ. — c) Ś1 K B3 D1–3. 5 M1 कस्य (for तस्य). N अव्यग्रो (for °ग्रं). — d) B4 T1 सर्वं; D1. 2 तन्मे (for सर्प).

17 ab) Ś1 K B1. 3 Dc D3 तु (K3 तु); D5 च (for न). D1–3. 5 गृह्णाति (for °सि). D1. 2 वा; D3. 5. 6 च (for त्वं). D1. 2 महीपते (for महामते). S युगपच्च महाबुद्धे विषयान् (T1 °यः; T2 [after corr.] G2. 3 °यं) किं न गृह्णति (T1 G1 M1 गृह्णते; M2 गृह्णते). — c) K1. 2 transp. चोक्तं and सर्वं (in d). T2 G2–4 चोक्त्वा (for चोक्तं). T1 स एवमुच्यतां चोक्तः. — d) S सर्वं ब्रूहि महामते.

18 a) S (except G4) तदा° (for यदा°). Ś1 K1. 2 °बुद्धिम् (for °द्रव्यम्). B4 (corrupt) यदामुत्रवानायुष्मन्. — b) T1 M देहे (for देह-). — c) Ś1 K1. 2. 4 B2. 3 T1 M2 कारणाधिष्ठितं (K4 M2 °तान्); T2 G करणाधिष्ठितो (G1 °तान्). — d) Ś1 K1. 2 D5 °युंक्ते (for °भुङ्क्ते).

19 ab) T1 G1. 2 M ज्ञानं चैव मनश्चात्र; T2 G3. 4 मनश्चैव महाभाग (for a). S बुद्धिश्च नरसत्तम (for b). — c) Ś1 K1. 2 D6 M1 भोगाधिकारेण. — d) Ś1 K D1. 5 T1 G1. 2 M2 कार° (for कर°).

20 a) T1 स तु (for तात). M मनः सततमन्वेति (M2 °पर्येति). — c) Ś1 K1. 2 °यतनं वेत्ति; K3 °यतनस्थे ... Ś1 K2. 4 द्रया° ... — d) Ś1 त्वा (for त्वां). तु; D5 °स्थाने; T1 °स्थो हि; G1 °स्थान; G2 त्वन. — ... S चैतस्य (for ... Ś1 K1. 2 D3. 5 क्षेत्रमाश्रितः; K3. 4 °मिश्रितः; B2 D1. 2 °मास्थितः; T1 M °निश्चितः; T2 G2–4 °विष्ठितः. G1 भूतक्षेत्रं विनिश्चितं.

21 a) B1–3 D (except D1–3. 5) G1 तत्र (for अत्र). D1. 2 [अ]पि च (by transp.). — c) B Dn D4. 6 T1 अत्रास्य (by transp.); Dc अर्थस्य. — d) Ś1 K1. 2 न विधीयते (for नोप°).

22 b) K4 °रंतरतः स्थितः. K3 Dn2 S आस्थितः (for आश्रितः). — M2 om. 22c–24d. — c) K4 तद्वै (for बुद्धिं). B D (except D1–3. 5) बुद्धिं द्रव्येषु सृजति. — d) G4 विषयेषु (for विवि°). K1 [अ]पवारणां; K2. 3 [अ]परावरां; K4 परावरान्; B1 Dc परापरां; D3 परां परां; T2 G3 परावराः.

23 M2 om. 23 (cf. v.l. 22). — a) K3 B1. 3 Dc2 Dn1. n3 D4. 6 °कालाच्च; B2. 4 Dc1 Dn2 D3 °काला च; D1. 2 °कालोर्थं; D5 °कालाथ. Ś1 बुद्धेरुत्तमकालाच्च; K1 बुद्धेरुत्तारकालाश्च. — b) D1 वेदनं; G2 चेतसो; G4 चेतना (for वेदना). D5 [आ]देश्यते (for दृश्यते). — c) D1. 2 पृथग् (for एष). Ś1 K1. 2 G4 ते (for वै). T2 G2–4 नर° (for राज°). — d) K1. 2 D1. 2. 4. 5 G1 विधि-; T1 विधिं (for विधिः). D5 -क्षेत्रस्य (for क्षेत्रज्ञ-). K3 D3 विधिवत्क्षेत्रभावनः.

24 M2 om. 24 (cf. v.l. 22). — b) D5 किं (for मे). — c) B4 यत्तद् (for एतद्). Ś1 K1. 2 °वपुषां (for °विदुषां). — d) G4 विधीयतां.

25 a) G1 आत्मगता (for आत्मानुगा). K3 [अ]त्यंतं; B2 Dn D4 [अ]तीव (for तात). — b) Ś1 K D1. 2 उत्पन्नेन;

C. 3. 12512 B. 3. 181. 24 K. 3. 183. 24 एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ २४

सर्प उवाच ।

बुद्धिरात्मानुगा तात उत्पातेन विधीयते ।
तदाश्रिता हि संज्ञैषा विधिस्तस्यैषणे भवेत् ॥ २५
बुद्धेर्गुणविधिर्नास्ति मनस्तु गुणवद्भवेत् ।
बुद्धिरुत्पद्यते कार्ये मनस्तूत्पन्नमेव हि ॥ २६
एतद्विशेषणं तात मनोबुद्ध्योर्मयेरितम् ।
त्वमप्यत्राभिसंबुद्धः कथं वा मन्यते भवान् ॥ २७

युधिष्ठिर उवाच ।

अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि ॥ २८
सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
एवमद्भुतकर्माणमिति मे संशयो महान् ॥ २९

सर्प उवाच ।

सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ।
वर्तमानः सुखे सर्वो नावैतीति मतिर्मम ॥ ३०
सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ।
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ॥ ३१
कृतं कार्यं महाराज त्वया मम परंतप ।
क्षीणः शापः सुकृच्छ्रो मे त्वया संभाष्य साधुना ॥ ३२
अहं हि दिवि दिव्येन विमानेन चरन्पुरा ।
अभिमानेन मत्तः सन्कंचिन्नान्यमचिन्तयम् ॥ ३३
ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसकिंनराः ।
करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥ ३४

---

D3 उत्पन्नेति; D5 उत्पन्नस्य (for उत्पातेन). — c) K3 D5 [अ]पि; B4 [ए]षा (for हि). B Dc D4. 6 संज्ञा च (B4 हि); Dn सा ज्ञेया (!); D5 विज्ञेया; T2 G3. 4 तस्यैषा (for संज्ञैषा). — d) B2 Dn D4. 6 M1 बुद्धिस् (for विधिस्). K2 तस्येषिणे; K3 तस्यैव वै; K4 D1. 5 तस्यैषणा; B (B2m as in text) Dc तस्येषिणो; Dn D4. 6 T2 (after corr.) G3 तस्यैषिणी; D1. 2 तन्नैषणे; G1. 2 तस्यैषणो.

**26** B1. 4 Dn D4. 6 transp. $26^{ab}$ and $26^{cd}$. — T1 M om. $26^{ab}$. — a) K3 D1. 3 बुद्धिर् (for बुद्धेर्). K4 D1. 3 °विधिर्नाम; B2 (m as in text) Dc1 Dn2 °विधानेन; Cnp °विधिर्नास्ति (as in text). — b) B Dc1 Dn2. n3 D4. 6 तद्गुण° (for तु गुण°). — B3 om. $26^{cd}$. — c) Ś1 K1. 2 तूत्पद्यते (for उत्पद्यते). K3. 4 B (B3 om.) D G1 कार्यान् (for कार्ये). — d) B4 S च (for हि).

**27** a) S एतत्तात विशेषेण. — b) Ś1 K1. 2 °बुद्ध्या; Dc D1. 3 °बुद्धेर् (for °बुद्ध्योर्). B D (except D1–3. 5) G4 यदंतरं (for मयेरितम्). — c) K3 Dc2 D2. 4 अति-; K4 Dn2. n3 T G2–4 M अपि (for अभि-). D2 -संक्रुद्धः; D5 -संतुष्टः; T2 G3 -संबद्धः; G2 -संबंधं; M1 -संबद्धं (for -संबुद्धः). — d) S कथं (T1 कामं) वा मन्यसे स्वयं.

**28** b) Ś1 K1. 2 शुद्धा; K4 महा-; T1 G2 M कृता; G1 मता; G4 नाम्ना (for शुभा). K2 M2 अयं (for इयं). — d) B2–4 Dc1 Dn D4 सम्- (for माम्). T2 G2–4 कस्मान्नहुष पृच्छसि. — K2. 4 (which om. 29–31) ins. after 28 a passage given in App. I (No. 20).

**29** K2. 4 om. 29–31. — a) Ś1 K1 सर्वज्ञस्वात्; K3 D1. 4. 6 G4 सर्वज्ञ त्वां; T1 धर्मज्ञं त्वां (for सर्वज्ञं त्वां). — b) B1 प्राविशत्; S ह्यगमत् (for आविशत्). Ś1 K1 M2 °स्थितं; G1 °गामिनं. — After $29^{ab}$, B1. 3 Dc ins.:

888* कथं च सर्पतां यातो भवान्व्याख्यातुमर्हति ।

— c) D1. 2 एतद्° (for एवम°).

**30** K2. 4 om. 30 (cf. v.l. 29). — a) K1 B4 D1. 2. 5 T2 (before corr.) G1. 4 M सुप्राज्ञम्. D1. 2 वै (for चेत्). T2 G1. 3. 4 दूरम् (for शूरम्). — b) D1. 2 G1 बुद्धिर् (for ऋद्धिर्). — d) B D (except D1–3. 5) मुह्यती° (for नावैती°).

**31** K2. 4 om. 31 (cf. v.l. 29). — b) Ś1 K1 यदाविष्टो; T2 G2–4 मदयुक्तो. B4 [अ]वमन्य वै (for युधि°). — c) Ś1 पातितः; T1 प्रतीतः (for पतितः). Ś1 K1 D5 °बुद्धः सन् (for °संबुद्धस्). — d) B4 G1 M1 अतः (for अहम्).

**32** c) T1 M2 पापः (for शापः). K4 Dc2 D3 स (for सु-). K4 कृत्स्नो; G4 -कृच्छ्रान् (for -कृच्छ्रो).

**33** a) G1 नव्येन (for दि°). — b) Dc2 D1. 2. 5 [आ]चरं (for चरन्). — c) Ś1 अपि; K3. 4 D1–3. 5 अति- (for अभि-). Ś1 K1. 2 संतप्तः; D1. 2 मनसि (for मत्तः सन्). S वै (for सन्). — d) K3 D1 किंचिन्; Dc Dn1. n2 कच्चिन्; Dn3 क्वचिन् (for कंचिन्). D5 नान्यं किंचिद् (for कंचिन्नान्यम्). S कंचि(G1 किंचि-; G2 कश्चि)दन्यन्न चिन्तये.

**34** a) D5 ब्राह्मणा; M1 महर्षि- (for ब्रह्मर्षि-). K3 व्यक्तभिर्देवगंधर्वाः; B1 ब्रह्मदेवर्षिगंधर्व-. — b) B1–3 D (except D1–3. 5) G1 °पन्नगाः (for °किंनराः). — c) D3

चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टिबलं मम ॥ ३५
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ।
स मामपनयो राजन्भ्रंशयामास वै श्रियः ॥ ३६
तत्र ह्यगस्त्यः पादेन वहन्स्पृष्टो मया मुनिः ।
अदृष्टेन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ३७
ततस्तस्माद्विमानाग्रात्प्रच्युतश्च्युतभूषणः ।
प्रपतन्बुबुधेऽऽत्मानं व्यालीभूतमधोमुखम् ॥ ३८
अयाचं तमहं विप्रं शापस्यान्तो भवेदिति ।
अज्ञानात्संप्रवृत्तस्य भगवन्क्षन्तुमर्हसि ॥ ३९
ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥ ४०
अभिमानस्य घोरस्य बलस्य च नराधिप ।
फले क्षीणे महाराज फलं पुण्यमवाप्स्यसि ॥ ४१
ततो मे विस्मयो जातस्तदृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाहमचूचुदम् ॥ ४२
सत्यं दमस्तपो योगमहिंसा दाननित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ ४३
अरिष्ट एष ते भ्राता भीमो मुक्तो महाभुजः ।
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥ ४४

वैशंपायन उवाच ।

इत्युक्त्वाजगरं देहं त्यक्त्वा स नहुषो नृपः । C 3. 12533 B 3. 181. 44 K 3. 183. 47

---

कामान्; S वरं (for करान्). — d) K Dc2 D1 सर्व- (for सर्वे).

35 a) G1 सं- (for यं). D1 च (for प्र-). — b) K1 T G प्राणिनां. B1. 3 Dc D4. 6 S °श्वर; D1. 2 °तले (for °पते). — c) T2 G2–4 प्राणान् (for तेजो). — d) D5 तथा (for तद्धि). K2 B D (except D1–3. 5) दृष्टेर्बलं (B2 °र्बलैर्) (for दृष्टिबलं). Dc महत् (for मम).

36 a) Ś1 K D1–3. 5 मह° (for ब्रह्म°), and तु (for हि). T1 G1. 2. 4 M1 सहस्राणि (for °स्रं हि). — b) Ś1 K1. 2 प्रोवाह; S (except T2 G3) वहन्ति (for उवाह). — c) Dc2 D2. 6 T2 G3 ममा° (for माम°). — d) Ś1 K1. 2 भारत (for वै श्रियः).

37 a) D5 S [अ]पि (for हि). K1 T1 पापेन; B4 तु मया (for पादेन). — b) B4 पदा (for वहन्). B4 Dn3 D3 G1. 2. 4 M1 महा- (for मया). — c) B D (except D1. 2. 5) T2 G2–4 अगस्त्येन (for अदृष्टेन). K3 D5 हि; K4 T1 [ऽ]पि (for ऽस्मि). K3. 4 [उ]क्तं (for [उ]क्तो). — d) K2 ध्रुवं (for ध्वंस). K3 तदा; Dc मृषा (for रुषा). D5 सर्पस्त्वं च भवेति ह.

38 a) K1. 2 B Dc2 Dn1. n3 D3. 4 G1. 2 M1 विमानाग्र्यात्. — b) Ś1 K1. 2 च्युतः प्रच्युत- (for प्रच्युतश्च्युत-). B2 Dn1 (m as in text) -लक्षणः (for -भूषणः). — c) D1 G4 प्रा- (for प्र-). — d) Ś1 व्याध°; K2 व्याल° (for व्याली°).

39 b) D1 भविष्यति (for भवे°). — Before 31cd, B Dc Dn D3 (marg.). 4 ins. सर्प उ°. — c) B1–3 D (except D1–3. 5) प्रमादात्सं(B1 °दं मे)प्रमूढस्य. — d) T1 M1 भगवान्. B1 वक्तुम् (for क्षन्तुम्).

40 b) D5 T2 (before corr.) G2 प्रवदंतं (for प्रप°). — c) Ś1 K2. 4 दया° (for कृपा°). — d) Ś1 त्वा (for त्वां).

41 a) K3 D3 अति° (for अभि°). S चैतस्य (for घोरस्य). — b) K3 धनस्य; B Dn D4 पाप°; Dc D6 शाप° (for बल°). — c) S स्व(G1 ह्य)निर्दिष्टं (for महा°). — d) Ś1 K D1–3 पुण्यं फलम् (by transp.).

42 a) D5 अति (for ततो). — b) D2 दृष्ट्वा तत् (by transp.); T1 तं दृष्ट्वा. — c) D3 ब्रह्मचर्यं ब्राह्मणत्वं. — d) Dc2 M तेन (for येन). D2 चा° (for त्वा°). K4 D3. 5 अनूनुदं (for अचूचुदम्).

43 a) K1 तपो दमो (for दमस्तपो). Ś1 K D1. 2. 5 योगस्; B Dc Dn D3. 4. 6 दानम् (for योगम्). — b) Ś1 K D1. 2. 5 स्वहिंसा (for अहिंसा). B1–3 D (except D1. 2. 5) धर्म-; S ज्ञान- (for दान-). K1. 2 Dc G1 -नित्यदा; D5 -मित्युत; T1 -मित्यतः (for -नित्यता). B4 अहिंसा चापि सर्वशः. — c) S सतां (for सदा). — d) Ś1 K1. 2 क्वचित् (for नृप). G1 न ज्ञातिर्न बलं नृप.

44 a) Ś1 K1. 2 अरिष्टाद् (for अरिष्ट). T2 G1–3 एव (for एष). — b) T2 G3 Dc2 मुक्तो भीमो (by transp.). Dc2 °बलः (for °भुजः). B Dc1 Dn D4. 6 भीमसेनो महाबलः. — c) B2 °बाहो (for °राज). — d) S गमिष्येहं (for °ष्यामि). Ś1 K1. 2 transp. दिवं and पुनः. D5 गच्छामि त्रिदिवं नृप. — After 44, S ins.:

889* स चायं पुरुषव्याघ्र कालः पुण्य उपस्थितः ।
तदस्मात्कारणात्पार्थ कार्यं मम महत्कृतम् ।

[(L. 1) G1 चापि (for चायं). T2 G2–4 उपागतः (for उपस्थितः). — (L. 2) T2 G2–4 तन्मे (for मम).]

45 After the ref., S ins.:

890* ततस्तस्मिन्मुहूर्ते तु विमानं कामगामि वै ।

C. 3. 12533
B. 3. 181. 44
K. 3. 183. 47

दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ ४५
युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन संगतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरभ्यगात् ॥ ४६
ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम् ।
कथयामास तत्सर्वं धर्मराजो युधिष्ठिरः ॥ ४७
तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ते त्रयः ।
आसन्सुव्रीडिता राजन्द्रौपदी च यशस्विनी ॥ ४८
ते तु सर्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया ।
मैवमित्यब्रुवन्भीमं गर्हयन्तोऽस्य साहसम् ॥ ४९
पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम् ।
हर्षमाहारयांचक्रुर्विजह्रुश्च मुदा युताः ॥ ५०

इति श्रीमहाभारते आरण्यकपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥ समाप्तमाजगरपर्व ॥

# १७९

वैशंपायन उवाच ।
निदाघान्तकरः कालः सर्वभूतसुखावहः ।
तत्रैव वसतां तेषां प्रावृट् समभिपद्यत ॥ १
छादयन्तो महाघोषाः खं दिशश्च बलाहकाः ।
प्रववर्षुर्दिवारात्रमसिताः सततं तदा ॥ २
तपात्ययनिकेताश्च शतशोऽथ सहस्रशः ।
अपेतार्कप्रभाजालाः सविद्युद्विमलप्रभाः ॥ ३
विरूढशष्पा पृथिवी मत्तदंशसरीसृपा ।

अवपातेन महता तत्रावापतदुत्तमम् ।

[(L. 1) $T_1$ $G_1$ $M_1$ कामगं शुभं (for °गामि वै). — (L. 2) $T_1$ अपदानेन; $T_2$ $G_3$ (both after corr.) अपपातेन; $G_4$ अपवादेन (for अवपातेन).]
— $^{b}$) B D (except $D_{1-3.5}$) मुक्त्वा (for त्यक्त्वा). $K_1$ Dc $G_{1.2}$ नृप (for नृपः). — $^{cd}$) $B_2$ यातस् (for गतस्). $K_{2-4}$ $D_{3.5}$ हि; $B_4$ च (for ह). S दिवं ($T_1$ °वि; $T_2$ $G_3$ °व्यं) दिव्यवपुर्भूत्वा स्वकर्मविजितं ययौ.

**46** $^{a}$) $B_1$ $T_2$ $G_{2-4}$ M तु (for [अ]पि). $T_1$ $G_1$ ततो युधिष्ठिरो राजा. — $^{b}$) $Ś_1$ $K_{1.2.4}$ $D_{1.2}$ भीमसेनेन; $K_3$ $D_{3.5}$ भीमेन सह (for भ्रात्रा भीमेन). — $^{d}$) $B_{1-3}$ D (except $D_{1-3.5}$) आगमत्; $M_1$ अभ्ययात् (for अभ्यगात्).

**47** $^{ab}$) $D_5$ पूर्वेभ्यः (for स°). S ततो द्विजेषु सर्वेषु समेतेषु यथा°. — $^{d}$) $T_2$ $G_{2-4}$ $M_2$ °पुत्रो (for °राजो).

**48** $^{a}$) S द्विजश्रेष्ठा (for द्विजाः सर्वे). — $^{b}$) $K_4$ च तथा; $B_1$ चापि ते; $B_{2.3}$ चास्य ये; $D_5$ चैव ते (for चास्य ते). — $^{c}$) Dc सुविस्मिता; $D_{1.2}$ सुपीडिता. $T_2$ $G_{2-4}$ पार्थो (for राजन्). M आसन्सुप्रीतमनसो.

**49** $^{a}$) $B_2$ च; $D_2$ नु (for तु). Dc $D_3$ द्विजाः श्रेष्ठाः. — $^{b}$) $D_5$ $M_1$ °च्छया (for °प्सया). — $K_1$ om. $49^{c}$–$50^{d}$. — $^{c}$) $B_{3.4}$ नैवम् (for मैवम्). $K_4$ [उ]क्तवान्; $D_5$ $T_1$ [अ]ब्रवीद् (for [अ]ब्रुवन्).

**50** $K_1$ om. 50 (cf. v.l. 49). — $^{c}$) $K_2$ $B_2$ °यामासुर् (for °यांचक्रुर्). — $^{d}$) $Ś_1$ $K_{2.3}$ $B_{2.3}$ $D_5$ $G_{1.2}$ [अ]न्विताः (for युताः).

Colophon. — *Major parvan:* $Ś_1$ $K_2$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N $M_2$ आजगर (followed by समाप्त except in $B_1$). — *Adhy. name:* $G_1$ नहुषचाप(sic)विमोचनभीमसेनमोक्षणं; $M_2$ नहुषशापविमोचनं. — *Adhy. no.* (figures, words or both): Dn 180 ($Dn_3$ 181); $D_1$ 186; S ($M_2$ *sup. lin.*) 182 ($M_1$ orig. 184). — *Śloka no.:* Dn 49; $D_1$ 50.

## 179

**1** $^{a}$) $K_3$ $G_{1.4}$ $M_1$ निदाघानंतरः. — $^{c}$) $K_4$ $D_3$ स (for [ए]व). — $^{d}$) $Ś_1$ $K_2$ प्रावृण्णामाभ्यपद्यत; $K_4$ T $G_1$ (*sup. lin.*). $_{3.4}$ M प्रावृट्कालोभ्यपद्यत; Dc $D_2$ प्रावृट्समभिपद्यते; $G_{1.2}$ प्रावृट्कालोभ्यवर्तत.

**2** $^{a}$) $B_{1.2.4}$ महाघोराः. — $^{b}$) S वलाहकाः. — $^{c}$) $Ś_1$ प्रववहुर्; Dc अभ्यवर्षुर्. — $^{d}$) $Ś_1$ K $D_{1-3.5}$ घनाः (for तदा).

**3** $^{a}$) $Ś_1$ $K_{1.2}$ $T_2$ $G_{2-4}$ तपात्यये निकेताः; $B_2$ उपादाय निकेताः. $T_1$ $G_{1.2}$ M तु; $T_2$ $G_{3.4}$ ते (for च). — $^{b}$) S वलाहकाः (for सह°). — $^{c}$) $K_4$ $B_2$ -ज्वालाः (for -जालाः). $Ś_1$ $K_{1.2}$ अपत्राः कदलीजालाः. — $^{d}$) G T सविद्युन्मंडलप्रभाः

बभूव पयसा सिक्ता शान्तधूमरजोरुणा ॥ ४
न स्म प्रज्ञायते किंचिदम्भसा समवस्तृते ।
समं वा विषमं वापि नद्यो वा स्थावराणि वा ॥ ५
क्षुब्धतोया महाघोषाः श्वसमाना इवाशुगाः ।
सिन्धवः शोभयांचक्रुः काननानि तपात्यये ॥ ६
नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः ।
वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणाम् ॥ ७
स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह ।
मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ॥ ८
तथा बहुविधाकारा प्रावृण्मेघानुनादिता ।
अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ॥ ९
क्रौञ्चहंसगणाकीर्णा शरत्प्रणिहिताभवत् ।
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ १०
विमलाकाशनक्षत्रा शरत्तेषां शिवाभवत् ।
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ११
पश्यन्तः शान्तरजसः क्षपा जलदशीतलाः ।
ग्रहनक्षत्रसंघैश्च सोमेन च विराजिताः ॥ १२
कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः ।
नदीः पुष्करिणीश्चैव ददृशुः समलंकृताः ॥ १३
आकाशनीकाशतटां नीपनीवारसंकुलाम् ।
बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् ॥ १४
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ १५
तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी ।
तत्रैव वसतामासीत्कार्तिकी जनमेजय ॥ १६
पुण्यकृद्भिर्महासत्त्वैस्तापसैः सह पाण्डवाः । C 3 12555 B. 3. 182. 17 K. 3. 184. 17

---

**4** $^{a}$) B D (except $D_{1-3.5}$) धरणी (for पृथिवी). — $^{b}$) $D_{5}$ मत्तपक्षि°. — $^{d}$) $Ś_{1}$ $K_{1-3}$ $B_{3.4}$ Dc $D_{3}$ शांता सर्वं(Dc च सु-)मनोहरा; $B_{1.2}$ Dn $D_{4.6}$ शांता सर्वमनोरमा; $D_{5}$ T G शांतधूमरजोगुणा.

**5** $^{b}$) $B_{1}$ अंभसा समभिप्लुतं; $B_{2}$ अंभसा परमप्लुते; S अद्भिर्लोके परिप्लुते. — $^{d}$) $K_{2.4}$ $B_{1.3.4}$ D $T_{1}$ $G_{1}$ $M_{3}$ च (for the second वा).

**6** $^{a}$) $K_{1.4}$ B Dn $D_{4.6}$ °वेगाः; $K_{3}$ °घोराः (for °घोषाः). — $^{b}$) S श्वसंत ($T_{1}$ $G_{1}$ M °त्य) इव शीघ्रगाः.

**7** $^{b}$) $T_{1}$ $G_{2}$ M स्वराः; $G_{1}$ गिरः (for स्वनाः). — $^{c}$) $K_{4}$ B Dn $D_{4.6}$ छाद्य° (for ताड्य°). — $T_{2}$ $G_{2-4}$ om. $7^{d}$–$10^{a}$.

**8** $T_{2}$ $G_{2-4}$ om. 8 (cf. v.l. 7). — $^{c}$) $K_{4}$ $D_{1-3}$ $T_{1}$ परिनदंति; $G_{1}$ M परिगदंति.

**9** $T_{2}$ $G_{2-4}$ om. 9 (cf. v.l. 7). — $^{a}$) $K_{4}$ Dc M °काराः. — $^{b}$) $Ś_{1}$ $K_{2}$ $B_{1}$ M °नुनादिताः; $K_{4}$ °भिनादिताः. — $^{c}$) $Ś_{1}$ अभ्यतीताः; $T_{1}$ अप्यतीता; $G_{1}$ M अभ्यतीयात्. $Ś_{1}$ शिवास्; Dc गिरास्. — After 9, $K_{1}$ *repeats* 3. 178. $49^{c}$–$50^{d}$ (with unimportant v.l.).

**10** $T_{2}$ $G_{2-4}$ om. $10^{a}$ (cf. v.l. 7). — $^{a}$) $K_{1-3}$ Dc $D_{1-3.5}$ हंसक्रौंचगणा($D_{5}$ °समा)कीर्णा; $K_{4}$ B Dn क्रौंचहंससमा°; $G_{1}$ ततः क्रौंचगणा° (cf. $11^{c}$). — $^{b}$) $K_{4}$ B Dn $D_{4.6}$ शरत्प्रमुदिता°; $D_{3}$ $G_{1.2}$ शरत्प्राणिहिता°. — $D_{2}$ om. (hapl.) $10^{c}$–$11^{b}$. — $^{c}$) $Ś_{1}$ $K_{2}$ रूढकक्ष्य°; $K_{3}$ $D_{1.3}$ रूढशष्प°. — $^{d}$) $K_{1.3.4}$ $D_{3}$ $T_{1}$ °निम्नगाः.

**11** $D_{2}$ om. $11^{ab}$ (cf. v.l. 10). — $^{c}$) Dc $D_{1.2}$ S (except $T_{2}$ $G_{3}$) मृगद्विजगणा°; $D_{5}$ मृगपक्षिसमा° (cf. $10^{a}$).

**12** $^{a}$) $Ś_{1}$ $K_{1-3}$ $Dc_{2}$ $D_{1-3.5}$ पश्यतां; $K_{4}$ $B_{1.4}$ $Dc_{1}$ Dn $D_{4.6}$ दृश्यंते; $T_{1}$ $G_{2}$ ततस्तु. Dc $D_{5}$ शांतरजसां. — $^{b}$) $B_{2}$ जलदसेविता. — $^{d}$) $K_{3}$ $D_{3}$ $T_{1}$ $G_{1}$ विराजता.

**13** $^{c}$) $Ś_{1}$ $K_{2}$ नद्यः. S पुष्करिण्यश्च नद्यश्च. — $^{d}$) $Ś_{1}$ $K_{1.2}$ दृश्यंते; $K_{3}$ $D_{1.2}$ पश्यंतः (for ददृशुः).

**14** $^{a}$) Dc °नीकाशतटी; $D_{5}$ $T_{1}$ M °संकाशतटां; $T_{2}$ G °सं($G_{1}$ °नी)काशजलां. — $^{b}$) $K_{4}$ B Dc Dn $D_{1-4.6}$ $T_{2}$ $G_{1-3}$ M ती($D_{2.3}$ $G_{1}$ M नी)रवानीर°; $T_{1}$ नीलनीवार°; $G_{4}$ तीरवानर°. — $^{c}$) $D_{5}$ पश्यतां (for चरतां).

**15** $K_{3}$ om. (hapl.) 15. — $^{a}$) $D_{6}$ प्रमुदिता (for मुमुदिरे). — $^{b}$) $B_{4}$ शुभां; Dc गिरां (for शिवाम्). — $^{d}$) Dc $D_{3.6}$ $G_{1}$ M प्रति° (for परि°).

**16** $^{b}$) Dc सु-; S च ($G_{4}$ वि-) (for स्म).

**17** $^{a}$) $D_{5}$ तापसैश्च (for महासत्त्वैस्). — $^{b}$) $D_{5}$ तैः सर्वैः (for तापसैः). $K_{2}$ $D_{5}$ पांडवैः. — $^{c}$) $Ś_{1}$ $K_{1.2}$ $Dn_{2}$ ते सर्वे; $K_{3.4}$ $D_{1-3}$ M तत्पर्वं; $Dn_{1}$. $n_{3}$ तत्सर्वे; $G_{2}$ ततस्ते (for तत्सर्वं). $T_{2}$ $G_{2-4}$ भरतश्रेष्ठ. — $^{d}$) $D_{5}$ बभूवुर्; $T_{2}$ G समूषुर्.

**18** $^{a}$) $D_{1.3}$ S तस्मिन्नभ्युदये तत्र ($D_{1.3}$ तस्मिन्). — $^{c}$) $D_{5}$ $T_{2}$ G सार्धं (for चैव).

C 3. 12555 B 3. 182 17 K 3. 184 17

तत्सर्वं भरतश्रेष्ठाः समूहुर्योगमुत्तमम् ॥ १७
तमिस्राभ्युदये तस्मिन्धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥ १८

इति श्रीमहाभारते आरण्यकपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

# १८०

वैशंपायन उवाच ।
काम्यकं प्राप्य कौन्तेया युधिष्ठिरपुरोगमाः ।
कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया ॥ १
ततस्तान्परिविश्वस्तान्वसतः पाण्डुनन्दनान् ।
ब्राह्मणा बहवस्तत्र समन्तात्पर्यवारयन् ॥ २
अथाब्रवीद्द्विजः कश्चिदर्जुनस्य प्रियः सखा ।
एष्यतीह महाबाहुर्वशी शौरिरुदारधीः ॥ ३
विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः ।
सदा हि दर्शनाकाङ्क्षी श्रेयोन्वेषी च वो हरिः ॥ ४
बहुवत्सरजीवी च मार्कण्डेयो महातपाः ।
स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान्समेष्यति ॥ ५
तथैव तस्य ब्रुवतः प्रत्यदृश्यत केशवः ।
सैन्यसुग्रीवयुक्तेन रथेन रथिनां वरः ॥ ६
मघवानिव पौलोम्या सहितः सत्यभामया ।
उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ॥ ७
अवतीर्य रथात्कृष्णो धर्मराजं यथाविधि ।
ववन्दे मुदितो धीमान्भीमं च बलिनां वरम् ॥ ८
पूजयामास धौम्यं च यमाभ्यामभिवादितः ।
परिष्वज्य गुडाकेशं द्रौपदीं पर्यसान्त्वयत् ॥ ९
स दृष्ट्वा फल्गुनं वीरं चिरस्य प्रियमागतम् ।
पर्यष्वजत दाशार्हः पुनः पुनररिंदमम् ॥ १०
तथैव सत्यभामापि द्रौपदीं परिषस्वजे ।

Colophon. — *Major parvan :* Ś$_1$ K$_{1.2}$ G$_{2.4}$ आरण्य. — *Adhy. name :* Ś$_1$ K$_4$ प्रावृड्वर्णनं; K$_1$ प्रावृड्वलनं (sic); B$_1$ Dc Dn$_{1.}$ n$_3$ D$_1$ काम्यकवनप्रवेशः; B$_3$ D$_{4.6}$ G$_1$ काम्यकप्रवेशः; D$_2$ काम्यके पुनः प्रवेशः; D$_5$ काम्यकगमनं. — *Adhy. no.* (figures, words or both): Dn 181 (Dn$_3$ 182); D$_1$ 187; S 183 (M$_2$ 185). — *Śloka no. :* Dn D$_1$ 18.

## 180

**1** $^a$) K$_3$ D$_{1.2.5.6}$ S (except T$_1$ G$_1$ M$_1$) कौरव्या; K$_4$ B Dn D$_{3.4}$ कौरव्य (for कौन्तेया).

**2** T$_1$ om. 2$^{ab}$. — $^b$) Ś$_1$ K$_{1-3}$ Dc D$_5$ वसतस्तत्र पांडवान्. — $^c$) Ś$_1$ K$_3$ वसतस् (for बहवस्). — $^d$) D$_5$ पांडवान् (for समन्तात्).

**3** $^a$) K$_3$ द्विजश्रेष्ठः; T$_1$ प्रियः कश्चिद्. — $^c$) B$_2$ Dn स एष्यति; Dc आयातीह; M$_1$ एष्यतीति. S (except G$_1$) महाबुद्धिर्. — $^d$) B$_1$ शुचिर् (for शौरिर्).

**4** $^c$) Ś$_1$ K$_{1.2}$ सदा च; S स चापि (T$_1$ सदापि). — $^d$) Dc चरो; T$_1$ च यो (for च वो).

**5** M om. 5. — $^b$) Here and in the sequel Ś$_1$ K$_1$ मार्कंडेयः ! K$_{1-3}$ B$_4$ D$_{3.5}$ महायशाः. — $^d$) D[…] उपैष्यति (for समे°).

**6** $^a$) D$_5$ [ए]तद् (for [ए]व). K$_4$ B$_{2.4}$ Dc$_1$ Dn D$_{4-6}$ transp. तस्य and ब्रुवतः. — $^b$) D$_5$ transp. प्रत्य° and केशवः. — $^c$) K$_2$ B D (except Dc$_2$ D$_{1.2}$) शैब्य° (for सैन्य°).

**8** $^b$) Ś$_1$ K$_{1-3}$ B$_4$ Dc D$_{1-3.5}$ युधिष्ठिरं (for यथा°). — K$_3$ om. 8$^{cd}$. — $^c$) Ś$_1$ K$_{1.2}$ B$_4$ Dc D$_{1-3.5}$ [S]… मुदा (for मुदितो).

**9** $^a$) B$_{2.3}$ Dc Dn S (except T$_1$ M$_1$) स (for च). — $^c$) T$_1$ G$_1$ महाभागां; T$_2$ G$_{2-4}$ M$_2$ महाराज (for गुडा°). — $^d$) K$_3$ B$_1$ Dc$_2$ G$_1$ परिसांत्वयत्; B$_{2.3}$ D$_{1.2}$ T$_2$ G… M परिसांत्वयन्.

**10** $^a$) N फाल्गुनं (K$_1$ फल्गुणं). — K$_3$ om. 10$^c$-11… — $^c$) D$_2$ G$_1$ परि° (for पर्य°). — $^d$) Ś$_1$ K$_1$ एनम्; … Dc$_2$ एवम् (for पुनर्). K$_4$ B Dn अरिंदमः; D$_{4.6}$ अरिंद… D$_5$ पुनरेवारिमर्दनं.

**11** K$_3$ om. 11$^{abc}$ (cf. v.l. 10). — $^a$) Dc D…

पाण्डवानां प्रियां भार्यां कृष्णस्य महिषी प्रिया ॥ ११
ततस्ते पाण्डवाः सर्वे सभार्याः सपुरोहिताः ।
आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्वशः ॥ १२
कृष्णस्तु पार्थेन समेत्य विद्वा-
न्धनंजयेनासुरतर्जनेन ।
बभौ यथा भूतपतिर्महात्मा
समेत्य साक्षाद्भगवान्गुहेन ॥ १३
ततः समस्तानि किरीटमाली
वनेषु वृत्तानि गदाग्रजाय ।
उक्त्वा यथावत्पुनरन्वपृच्छ-
त्कथं सुभद्रा च तथाभिमन्युः ॥ १४
स पूजयित्वा मधुहा यथाव-
त्पार्थांश्च कृष्णां च पुरोहितं च ।
उवाच राजानमभिप्रशंस-
न्युधिष्ठिरं तत्र सहोपविश्य ॥ १५
धर्मः परः पाण्डव राज्यलाभा-
त्तस्यार्थमाहुस्तप एव राजन् ।
सत्यार्जवाभ्यां चरता स्वधर्मं
जितस्तवायं च परश्च लोकः ॥ १६
अधीतमग्रे चरता व्रतानि
सम्यग्धनुर्वेदमवाप्य कृत्स्नम् ।
क्षात्रेण धर्मेण वसूनि लब्ध्वा
सर्वे ह्यवाप्ताः क्रतवः पुराणाः ॥ १७
न ग्राम्यधर्मेषु रतिस्तवास्ति
कामान्न किंचित्कुरुषे नरेन्द्र ।
न चार्थलोभात्प्रजहासि धर्मं
तस्मात्स्वभावादसि धर्मराजः ॥ १८
दानं च सत्यं च तपश्च राज-
ञ्श्रद्धा च शान्तिश्च धृतिः क्षमा च ।
अवाप्य राष्ट्राणि वसूनि भोगा-
नेषा परा पार्थ सदा रतिस्ते ॥ १९
यदा जनौघः कुरुजाङ्गलानां
कृष्णां सभायामवशामपश्यत् ।
अपेतधर्मव्यवहारवृत्तं C. 3. 12576 B. 3. 183. 20 K. 3. 185. 21

---

$M_{2}$ च (for [अ]पि). — $^{c}$) Ś$_{1}$ $K_{2}$ प्रिया भार्या.

**12** M om. $12^{a}$–$39^{b}$. — $^{c}$) $B_{1}$ अभ्यर्च्य (for आनर्चुः). — $^{d}$) $T_{1}$ समंततः (for च सर्वशः).

**13** M om. 13 (cf. v.l. 12). — $^{b}$) T G °मर्दनेन (for °तर्जनेन).

**14** M om. 14 (cf. v.l. 12). — $^{b}$) $K_{3}$ गदाधराय. — $^{c}$) $Dn_{2}$ $T_{1}$ $G_{1}$ अन्वगच्छत्. — $^{d}$) $K_{3.4}$ B D स चा° (for तथा°). T G तस्मिन्सु($T_{1}$ $G_{1}$ तथ्यं सु)भद्रां च तथाभिमन्युं. — After 14, T G read 22.

**15** M om. 15 (cf. v.l. 12). — $^{a}$) Ś$_{1}$ $K_{1.2}$ Dc सं- (for स). $T_{2}$ $G_{3.4}$ यथैव (for यथावत्). — $^{b}$) $K_{1.3.4}$ B D (except $D_{2.3.5}$) $T_{1}$ पार्थं (for पार्थान्). — $^{d}$) T G तेन (for तत्र).

**16** M om. 16 (cf. v.l. 12). — Before 16, $K_{1.2}$ $D_{1.2}$ ins. श्रीकृष्ण उ°. — $^{a}$) $T_{2}$ $G_{3.4}$ धर्मात् (for धर्मः). $K_{1}$ पुनः; $D_{3}$ $T_{1}$ परं (for परः). $K_{3}$ $B_{1}$ $Dc_{2}$ T $G_{3.4}$ राज्यलाभस्. — $^{b}$) Ś$_{1}$ $K_{1-3}$ $D_{5}$ तथार्थं°; $Dc_{2}$ तत्पार्थं°; $D_{1-3}$ तदर्थं°; T G तस्यादि° (for तस्यार्थं°). $Dc_{2}$ $T_{1}$ तव (for तप). $K_{1}$ एष (for एव). — $^{c}$) $K_{3}$ च; $B_{1}$ हि; $T_{2}$ $G_{2.3}$ सु- (for स्व-). — $T_{1}$ om. $16^{d}$–$18^{d}$.

**17** $T_{1}$ M om. 17 (cf. v.l. 16, 12). — $^{a}$) $K_{3}$ $D_{2}$ अधीतमार्गे; $B_{2}$ अतीतमग्रे. $T_{2}$ G चरितं व्रतं च (for चरता व्रतानि). — $^{b}$) Ś$_{1}$ $K_{1.2}$ सम्यक्कथा वेदम्. — $^{d}$) $K_{1.2}$ सर्वे कृताश्च; $D_{3}$ सर्वेप्यवाप्ताः; $D_{5}$ प्राप्ताश्च सर्वे. $D_{1.2}$ सुपुण्याः (for पुराणाः).

**18** $T_{1}$ M om. 18 (cf. v.l. 16, 12). — $^{a}$) Ś$_{1}$ $K_{1-3}$ ग्रामधर्मेषु; $D_{4.6}$ ग्राम्यधर्मे च. — $^{b}$) $T_{2}$ G कोपो ($G_{1.4}$ °पे) न कश्चित्पुरुषो नरेंद्र. — $^{d}$) $K_{4}$ $B_{1.3.4}$ Dn $D_{4.6}$ प्रभावाद् (for स्वभावाद्). $K_{1}$ Dc धर्मराज.

**19** M om. 19 (cf. v.l. 12). — $^{b}$) $K_{4}$ $B_{1-3}$ Dn $D_{4.6}$ श्रद्धा च बुद्धिश्च क्षमा धृतिश्च; $B_{4}$ T G क्षमा च ($B_{4}$ श्रुतश्च) शांतिश्च दमो धृतिश्च. — After $19^{ab}$, $D_{1.2}$ ins.:

891* आपत्स्वपि त्वं न जहासि राजन्.

— $^{c}$) $B_{4}$ चास्त्राणि (for राष्ट्राणि). — $^{d}$) $T_{1}$ $G_{1}$ येषां (for एषा). $D_{1.5}$ $T_{1}$ $G_{1}$ transp. सदा and रतिः. $T_{2}$ $G_{3.4}$ एषां भवेत्पार्थ रतिः सदा($G_{4}$ स्वभा)रैः; $G_{2}$ येषां सदा पार्थ रतिः परार्थाः.

**20** M om. 20 (cf. v.l. 12). — $^{a}$) Ś$_{1}$ $K_{1.2}$ $D_{1-3}$

..12576 3.183.20 3.185.21 सहेत तत्पाण्डव कस्त्वदन्यः ॥ २०
असंशयं सर्वसमृद्धकामः
क्षिप्रं प्रजाः पालयितासि सम्यक् ।
इमे वयं निग्रहणे कुरूणां
यदि प्रतिज्ञा भवतः समाप्ता ॥ २१
धौम्यं च कृष्णां च युधिष्ठिरं च
यमौ च भीमं च दशार्हसिंहः ।
उवाच दिष्ट्या भवतां शिवेन
प्राप्तः किरीटी मुदितः कृतास्त्रः ॥ २२
प्रोवाच कृष्णामपि याज्ञसेनीं
दशार्हभर्ता सहितः सुहृद्भिः ।
कृष्णे धनुर्वेदरतिप्रधानाः
सत्यव्रतास्ते शिशवः सुशीलाः ।
सद्भिः सदैवाचरितं समाधिं
चरन्ति पुत्रास्तव याज्ञसेनि ॥ २३
राज्येन राष्ट्रैश्च निमन्त्र्यमाणाः
पित्रा च कृष्णे तव सोदरैश्च ।
न यज्ञसेनस्य न मातुलानां
गृहेषु बाला रतिमाप्नुवन्ति ॥ २४
आनर्तमेवाभिमुखाः शिवेन
गत्वा धनुर्वेदरतिप्रधानाः ।
तवात्मजा वृष्णिपुरं प्रविश्य
न दैवतेभ्यः स्पृहयन्ति कृष्णे ॥ २५
यथा त्वमेवार्हसि तेषु वृत्तिं
प्रयोक्तुमार्या च यथैव कुन्ती ।
तेष्वप्रमादेन सदा करोति
तथा च भूयश्च तथा सुभद्रा ॥ २६
यथानिरुद्धस्य यथाभिमन्यो-
र्यथा सुनीथस्य यथैव भानोः ।
तथा विनेता च गतिश्च कृष्णे
तवात्मजानामपि रौक्मिणेयः ॥ २७
गदासिचर्मग्रहणेषु शूरा-

यथा; $T_2$ G राज्ये ($G_2$ हतं) (for यदा). $K_1$ कुरूणां; Dc $T_1$ जनौघाः; $T_2$ $G_{1.3.4}$ निविष्टः; $G_2$ च देशं (for जनौघः). — [b]) $Dc_2$ च भार्याम् (for सभायाम्). $G_1$ भगवान् (for अवशाम्). $G_2$ अत्रशां च पश्यन्. $T_2$ $G_{3.4}$ अपश्यन्.

**21** M om. 21 (cf. v.l. 12). — [a]) $K_1$ °वेगं (for °कामः). — [c]) T G अद्यैव तन्निग्रहणं कुरूणां.

**22** M om. 22 (cf. v l. 12). T G read 22 after 14. — [ab]) $K_{3.4}$ $B_{2.3}$ D (except $D_{1-3}$) transp. कृष्णां and भीमं. $B_1$ धौम्यं च भीमं च यमौ च कृष्णां युधिष्ठिरं चापि दशार्ह°. — [c]) $D_3$ दृष्ट्वा; $D_5$ शिष्यो (for दिष्ट्या). $Ś_1$ $K_1$ भवता.

**23** M om. 23 (cf. v.l. 12). — [a]) $D_2$ ततश्च; $G_4$ ददर्श (for प्रोवाच). $Ś_1$ अभि यज्ञसेनीं; $K_1$ अपि यज्ञ°; $K_2$ अतियज्ञ°; $D_5$ अथ याज्ञ°. — [b]) $D_{1.2}$ $G_1$ दाशार्ह°. — After $23^{ab}$, N ins.:

892* दिष्ट्या समग्रासि धनंजयेन
समागतेत्येवमुवाच कृष्णः ।
[(L. 1) $Ś_1$ $K_2$ समेतासि (for समग्रासि).]

— After $23^{c}$, $D_5$ reads $25^{cd}$. — [d]) $K_4$ B Dn $D_{4.6}$ तवा($B_4$ °था)त्मजा° (for सत्यव्रता°). $D_5$ यथाव्रतास्ते शिशवः सुखार्हाः. — [c]) $Ś_1$ $K_{1.2}$ यदि स्म दैवाचरितं. $K_4$ $B_{1-3}$ Dn $D_{4.6}$ सुहृद्भिश्च (for समाधिं).

**24** M om. 24 (cf. v.l. 12). — [a]) $Ś_1$ $K_{1-3}$ $D_5$ राज्येन पु($K_3$ मं)त्रैश्च; $B_1$ (m as in text) राज्येन भोगेन; $B_4$ राज्यैश्च भोगैश्च; Dc राजन्यपुत्रैश्च; $T_1$ युक्तैर्नियुक्तैश्च; $T_2$ G राज्ञा ($G_1$ °ज्यं) नियुक्तैश्च.

**25** M om. 25 (cf. v.l. 12). — [a]) $D_{1.2}$ आनर्तमेवाभिरताः; T G आनर्तवासाभिमुखाः.

**26** M om. 26 (cf. v.l. 12). — [a]) $T_2$ (before corr.) $G_{2.4}$ एषा° (for एवा°). $K_2$ B Dn $D_{4.6}$ वृत्तं (for वृत्तिं). $T_1$ यथा त्वमेवाभिमतेषु वृत्तिं. — [b]) $Ś_1$ $K_{1-3}$ $D_{2.3.5}$ $G_4$ तथैव (for य°). — [c]) $K_3$ [अ]प्रमादेषु; $B_{1.4}$ प्रमादेन; $G_{2.4}$ प्रमोदेन (for [अ]प्रमादेन). $K_{3.4}$ B D (except $D_{1-3}$) तथा; $K_{1.2}$ मुदा (for सदा). — [d]) $K_1$ माता च; $K_2$ मा तात; $K_4$ $B_{2.4}$ Dn $D_{4.6}$ तथैव; $B_{1.3}$ Dc ततश्च; $D_{2.3}$ यथा च. $K_{3.4}$ $B_{1-3}$ Dc $D_{1-3}$ सदा; T G ततः (for तथा).

**27** M om. 27 (cf. v.l. 12). — [b]) $Ś_1$ $K_1$ $T_2$ $G_{1.3}$ सुनीतस्य. $K_{1.3}$ तथैव (for य°). — [c]) $Ś_1$ रति° (for गति°). — [d]) $B_{3.4}$ $D_6$ तथा° (for तवा°). $Ś_1$ K $D_5$ $T_1$

नस्त्रेषु शिक्षासु रथाश्वयाने ।
सम्यग्विनेता विनयत्यतन्द्री-
स्तांश्चाभिमन्युः सततं कुमारः ॥ २८
स चापि सम्यक्प्रणिधाय शिक्षा-
मस्त्राणि चैषां गुरुवत्प्रदाय ।
तवात्मजानां च तथाभिमन्योः
पराक्रमैस्तुष्यति रौक्मिणेयः ॥ २९
यदा विहारं प्रसमीक्षमाणाः
प्रयान्ति पुत्रास्तव याज्ञसेनि ।
एकैकमेषामनुयान्ति तत्र
रथाश्च यानानि च दन्तिनश्च ॥ ३०
अथाब्रवीद्धर्मराजं तु कृष्णो
दशार्हयोधाः कुकुरान्धकाश्च ।
एते निदेशं तव पालयन्ति
तिष्ठन्ति यत्रेच्छसि तत्र राजन् ॥ ३१
आवर्ततां कार्मुकवेगवाता
हलायुधप्रग्रहणा मधूनाम् ।
सेना तवार्थेषु नरेन्द्र यत्ता
ससादिपत्त्यश्वरथा सनागा ॥ ३२
प्रस्थाप्यतां पाण्डव धार्तराष्ट्रः
सुयोधनः पापकृतां वरिष्ठः ।
स सानुबन्धः ससुहृद्गणश्च
सौभस्य सौभाधिपतेश्च मार्गम् ॥ ३३
कामं तथा तिष्ठ नरेन्द्र तस्मि-
न्यथा कृतस्ते समयः सभायाम् ।
दाशार्हयोधैस्तु ससादियोधं
प्रतीक्षतां नागपुरं भवन्तम् ॥ ३४
व्यपेतमन्युर्व्यपनीतपाप्मा
विहृत्य यत्रेच्छसि तत्र कामम् ।
ततः समृद्धं प्रथमं विशोकः C. 3. 12592 B. 3. 183. 36 K. 3. 185. 36

रौहिणेयः (cf. v.l. 29).

**28** M om. 28 (cf. v.l. 12). — [a]) Ś$_1$ K$_{1.2}$ D$_{1.2}$ गदासिचक्र°. D$_{1-3}$ T$_2$ G$_{2-4}$ शूरा (for शूरान्). — [b]) D$_{1-3}$ शस्त्रेषु (for अस्त्रेषु). — [c]) T G विनीतान् (for विनेता). B Dn D$_{4.6}$ विनयेदतंद्रीस्; D$_{1-3}$ विनयत्यतंद्रस्. — [d]) Ś$_1$ K$_{1-3}$ D$_{1.2.5}$ तांश्चाभिमन्युं च सनत्कुमारः; T G तांश्चाभिमन्युं च (T G$_3$ °न्युश्च) सदा कुमारान्.

**29** M om. 29 (cf. v.l. 12). — [b]) K$_{1.4}$ B Dc$_1$ Dn D$_{4.6}$ शस्त्राणि (for अस्त्राणि). Dc$_2$ शिक्षां; D$_5$ तेषां (for चैषां). K$_4$ B$_{1-3}$ Dc Dn D$_{4.6}$ विधिवत् (for गुरु°). — [d]) Ś$_1$ K D$_3$ T$_1$ रौहिणेयः (cf. v.l. 27).

**30** M om. 30 (cf. v.l. 12). — [a]) K$_4$ B$_2$ Dn D$_{4.6}$ T$_1$ यथा; Dc सदा (for यदा). Dc विहारान्. Some MSS. प्रसमीक्ष्य°. — [c]) K$_2$ अनुयाति; D$_{1.2}$ उपयांति. — [d]) Ś$_1$ K$_{2.3}$ Dc$_2$ T$_2$ G$_3$ रथाश्वयानानि. B$_2$ वाजि°; B$_4$ हस्ति° (for दन्ति°).

**31** M om. 31 (cf. v.l. 12). — [a]) Ś$_1$ K$_{1-3}$ Dc D$_{1-3.5}$ च (for तु). — [b]) D$_{1.2.5}$ G$_{1.2}$ दाशार्ह°. — [c]) K$_{3.4}$ B Dn D$_{2.4.6}$ T$_1$ पालयंतस्; Dc °यंतु. — [d]) K$_4$ B D (except D$_{1-3.5}$) तिष्ठंतु. Dc G$_1$ धर्मराज; T$_2$ G$_3$ यत्र राजन्. — After 31, K$_2$ ins.:

893* योधास्तवार्थेषु नरेन्द्रयन्ता
कुर्वन्तु कार्यं सरथाः सनागाः ।

**32** M$_2$ om. 32 (cf. v.l. 12). — [a]) D$_{1.2}$ °वेगवाहा. — [b]) G$_{1.4}$ यदूनां (for मधूनाम्). — [c]) Ś$_1$ K$_1$ तवार्थेन; D$_5$ त्वदर्थेषु; T$_1$ तु पार्थाय; T$_2$ G तवार्थाय.

**33** M om. 33 (cf. v.l. 12). — [c]) K$_3$ D$_{3.5}$ सहानु° (for स सानु°). T G ससुहृज्जनश्च. — [d]) K$_4$ B Dc$_1$ Dn D$_{4.6}$ सौमस्य; D$_5$ शाल्व° (for सौभ°). D$_5$ स मार्गः (for च मार्गम्).

**34** M om. 34 (cf. v.l. 12). — [a]) Ś$_1$ K$_{1.2}$ तदा (for तथा). K$_{3.4}$ D$_5$ नराधिप त्वं (for नरेन्द्र तस्मिन्). — [c]) Ś$_1$ K$_4$ B Dn$_1$ D$_{1.6}$ G$_{1.4}$ दशार्हयोधैस्तु (K$_4$ B$_4$ G$_1$ °श्च); K$_3$ दाशार्हसेना तु; Dc यथार्हयोधैस्तु; D$_5$ दाशार्हयोधास्तु. Ś$_1$ K$_{1.2}$ समाधियोगं (K$_1$ °धं); B Dn D$_{4.6}$ हतारि(B$_{3.4}$ °धि)योधं; Dc हतार्हयोधं; D$_5$ ममानुयात्वा. — [d]) A few MSS. प्रतीक्ष्यतां. K$_3$ B$_4$ D$_{1.3.5}$ नागपुरे. T G प्रभग्नं (for भवन्तम्).

**35** M om. 35 (cf. v.l. 12). — [b]) T G कालं (for कामम्). — [c]) K$_4$ B Dn D$_{4.6}$ प्रसिद्धं (for समृद्धं). T G समृद्ध(T$_2$ G$_3$ °द्धः; G$_{2.4}$ °द्धि)प्रभवं (for समृद्धं प्रथमं). K$_{1-3}$ B$_{3.4}$ Dc D$_{1.3}$ (before corr.).$_5$ प्रसभं; D$_2$ प्रभवं; D$_3$ (by corr.) सततं (for प्रथमं). — [d]) B$_3$ संप्राप्स्यसे; B$_4$ प्रयास्यसे.

C 3 10593
B ..183 36
3.195.36

प्रपत्स्यसे नागपुरं सराष्ट्रम् ॥ ३५
ततस्तदाज्ञाय मतं महात्मा
यथावदुक्तं पुरुषोत्तमेन ।
प्रशस्य विप्रेक्ष्य च धर्मराजः
कृताञ्जलिः केशवमित्युवाच ॥ ३६
असंशयं केशव पाण्डवानां
भवान्गतिस्त्वच्छरणा हि पार्थाः ।
कालोदये तच्च ततश्च भूयः
कर्ता भवान्कर्म न संशयोऽस्ति ॥ ३७
यथाप्रतिज्ञं विहृतश्च कालः
सर्वाः समा द्वादश निर्जनेषु ।
अज्ञातचर्यां विधिवत्समाप्य
भवद्गताः केशव पाण्डवेयाः ॥ ३८
वैशंपायन उवाच ।
तथा वदति वार्ष्णेये धर्मराजे च भारत ।
अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक् ।
प्रत्यदृश्यत धर्मात्मा मार्कण्डेयो महातपाः ॥ ३९
तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम् ।
आनर्चुर्ब्राह्मणाः सर्वे कृष्णश्च सह पाण्डवैः ॥ ४०
तमर्चितं सुविश्वस्तमासीनमृषिसत्तमम् ।
ब्राह्मणानां मतेनाह पाण्डवानां च केशवः ॥ ४१
शुश्रूषवः पाण्डवास्ते ब्राह्मणाश्च समागताः ।
द्रौपदी सत्यभामा च तथाहं परमं वचः ॥ ४२
पुरावृत्ताः कथाः पुण्याः सदाचाराः सनातनाः ।
राज्ञां स्त्रीणामृषीणां च मार्कण्डेय विचक्ष्व नः ॥ ४३
तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः ।
आजगाम विशुद्धात्मा पाण्डवानवलोककः ॥ ४४
तमप्यथ महात्मानं सर्वे ते पुरुषर्षभाः ।
पाद्यार्घ्याभ्यां यथान्यायमुपतस्थुर्मनीषिणम् ॥ ४५
नारदस्त्वथ देवर्षिर्ज्ञात्वा तांस्तु कृतक्षणान् ।

---

**36** M om. 36 (cf. v.l. 12). — $^{a}$) $D_3$ T G आदाय (for आज्ञाय). — $^{b}$) $T_2$ $G_{2.3}$ उक्तः.

**37** M om. 37 (cf. v.l. 12); Ś$_1$ $K_{1.2}$ om. $37^{c}$–$38^{d}$. T G read $37^{ab}$ after 38. — $^{cd}$) T G कर्ता (for भूयः), and तथा (for कर्ता).

**38** Ś$_1$ $K_{1.2}$ M om. 38 (cf. v.l. 37, 12). — $^{a}$) $T_1$ स विहृत्य कालं; $T_2$ G च विहृत्य कालं (for विहृतश्च कालः). — After 38, T G read $37^{ab}$; while $K_{3.4}$ B D ($D_4$ om. lines 1 and 2; $D_6$ marg.) ins.:

894* एषैव बुद्धिर्जुषतां सदा त्वां
सत्ये स्थिताः केशव पाण्डवेयाः ।
सदानधर्माः सजनाः सदाराः
सबान्धवास्त्वच्छरणा हि पार्थाः ।

**39** M om. $39^{ab}$ (cf. v.l. 12). — $^{b}$) T G पार्थिवे (for भारत). — $^{c}$) Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ ततः (for अथ). $T_1$ वयो° (for तपो°). — $^{d}$) Ś$_1$ $K_{1.2}$ °धृत्; $K_{3.4}$ $B_2$ Dc $D_{1.5}$ S °दृक् (for °धृक्). — $^{f}$) Ś$_1$ $K_1$ (as usual) मार्कंडेयो. S °मुनिः (for °तपाः). — After 39, $K_4$ B Dc Dn $D_{4.6}$ ins.:

895* अजरश्चामरश्चैव रूपौदार्यगुणान्वितः ।
व्यदृश्यत तथा युक्तो यथा स्यात्पञ्चविंशकः ।

$K_4$ cont.:

896* महावराहकोट्यां च ब्रह्मणामयुतानि च ।
व्यचिन्तयन्महात्मा वै तथा रामं सलक्ष्मणम् ।

**40** $^{b}$) Dc $T_1$ °सहस्रिकं. — $^{c}$) $B_1$ अभ्यर्चन् (for आनर्चुर्). Ś$_1$ $K_{1-3}$ $B_4$ $D_{1-3.5}$ पांडवाः (for ब्राह्मणाः). S उपातिष्ठंत ते सर्वे. — $^{d}$) $K_{1.2.4}$ $B_{1-3}$ $D_4$ transp. सह and पाण्डवैः. Ś$_1$ $K_3$ $B_4$ $D_{3.5}$ कृष्णश्च ब्राह्मणैः सह; S पांडवाः सहयादवाः.

**41** $^{a}$) $T_1$ स तमभ्यर्च्य विश्वस्तम्. — $^{b}$) $B_1$ ऋषिपुंगवं. — $^{c}$) Ś$_1$ $K_{1.2}$ $G_4$ पांडवानां (for ब्राह्म°). — $^{d}$) Ś$_1$ $K_{1.2}$ यादवानां; $G_4$ ब्राह्मणानां (for पाण्ड°).

**42** Before 42, B Dc Dn $D_{4.6}$ ins. कृष्ण उ°. — $^{ab}$) $K_4$ $D_5$ transp. पाण्डवाः and ब्राह्मणाः. — $^{d}$) Ś$_1$ $K_{1.2}$ तवेदं मधुरं वचः.

**43** $^{a}$) Ś$_1$ कुर्वन् (for पुण्याः). — $^{b}$) $K_4$ $B_{2-4}$ D (except $D_{1-3.5}$) सदाचारान्सनातनान्. — $^{d}$) $B_1$ (m as in text) दिदृक्षवः; $B_{3.4}$ Dc S प्रचक्ष्व नः; $D_5$ वदस्व नः.

**44** Before 44, B Dc Dn $D_{4.6}$ ins. वैशं° उ°. — $^{c}$) Ś$_1$ °विष्ठेषु (for °विष्टेषु). — $^{d}$) Ś$_1$ $K_{1.2}$ $M_1$ अवलोकयन्.

**45** $^{a}$) Ś$_1$ $K_{1.2}$ ते तं चाथ; $K_4$ नमस्कृत्य (for तमप्यथ). $K_3$ $D_{1.5}$ महात्मानः. — $^{b}$) Ś$_1$ K $D_{1-3}$ पांडवाः (for सर्वे ते). $D_5$ पांडवास्ते सुरर्षभाः. — $^{c}$) Ś$_1$ $K_2$ यथान्याय्यम्. — $K_1$ om. $45^{d}$–$47^{a}$. — $^{d}$) B D मनीषिणः; $T_1$ $G_1$ $M_1$ महामुनिं.

मार्कण्डेयस्य वदतस्तां कथामन्वमोदत ॥ ४६
उवाच चैनं कालज्ञः स्मयन्निव स नारदः ।
ब्रह्मर्षे कथ्यतां यत्ते पाण्डवेषु विवक्षितम् ॥ ४७
एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः ।
क्षणं कुरुध्वं विपुलमाख्यातव्यं भविष्यति ॥ ४८
एवमुक्ताः क्षणं चक्रुः पाण्डवाः सह तैर्द्विजैः ।
मध्यंदिने यथादित्यं प्रेक्षन्तस्तं महामुनिम् ॥ ४९

इति श्रीमहाभारते आरण्यकपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## १८१

वैशंपायन उवाच ।
तं विवक्षन्तमालक्ष्य कुरुराजो महामुनिम् ।
कथासंजननार्थाय चोदयामास पाण्डवः ॥ १
भवान्दैवतदैत्यानामृषीणां च महात्मनाम् ।
राजर्षीणां च सर्वेषां चरितज्ञः सनातनः ॥ २
सेव्यश्चोपासितव्यश्च मतो नः काङ्क्षितश्चिरम् ।
अयं च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ॥ ३
भवत्येव हि मे बुद्धिर्दृष्ट्वात्मानं सुखाच्च्युतम् ।
धार्तराष्ट्रांश्च दुर्वृत्तानृध्यतः प्रेक्ष्य सर्वशः ॥ ४
कर्मणः पुरुषः कर्ता शुभस्याप्यशुभस्य च ।
स्वफलं तदुपाश्नाति कथं कर्ता स्विदीश्वरः ॥ ५
अथ वा सुखदुःखेषु नृणां ब्रह्मविदां वर ।
इह वा कृतमन्वेति परदेहेऽथ वा पुनः ॥ ६
देही च देहं संत्यज्य मृग्यमाणः शुभाशुभैः । C. 3. 12615 B. 3. 183. 59 K. 3. 186. 7

$G_4$ उत्पेतुः सुमनीषिणः.

**46** $K_1$ om. 46 (cf. v.l. 45). — $^a$) $T_1$ देवांस्तान् (for देवर्षिर्). — $^b$) Ś$_1$ $K_{2-4}$ Dc $D_{1-3.5}$ च (for तु). $B_1$ $T_1$ ज्ञात्वा तान् ($T_1$ विज्ञाय) कृतलक्षणान्; $T_2$ G M तान्विज्ञाय कृत°. — $^d$) Ś$_1$ $K_2$ सोन्वमोदत; $B_3$ $D_5$ अन्वमोदयत्; $B_4$ अनुमोदते. $T_1$ $G_1$ ताः कथास्त्व($G_1$ °था अ)न्वमोदत.

**47** $K_1$ om. 47$^a$ (cf. v.l. 45). — $^a$) $B_4$ धर्मज्ञः; $T_1$ $G_1$ $M_2$ कालज्ञं. — $^b$) $T_1$ मार्कंडेयं (for स्मयन्निव). $K_4$ $B_{1.2}$ D (except $D_{1-3.5}$) सनातनः (for स नारदः). — $^c$) Ś$_1$ $G_{3.4}$ महर्षे (for ब्रह्मर्षे). $T_2$ G तत् (for ते).

**49** $^b$) $D_{2.4}$ $T_1$ $G_2$ सहितैर् (for सह तैर्). — $^c$) Ś$_1$ $K_2$ सूर्यं (for [आ]दित्यं). — $^d$) $B_4$ प्रेक्ष्यमाणा; S पश्यंतस्तं (for प्रेक्षन्तस्तं). $K_{1.3}$ $B_{1-3}$ Dn $D_{3-6}$ ते (for तं).

Colophon om. in $K_4$ Dc Dn $D_{4.6}$. — *Major parvan:* Ś$_1$ $K_{1.2}$ $G_{3.4}$ आरण्य. — *Adhy. name:* $B_3$ कृष्णपांडवनारदसमागमः; $B_4$ कृष्णमार्कंडेयनारदपांडवसमागमः; $D_{1.3}$ वासुदेवाभि($D_3$ om. भि)गमनं; $D_2$ वासुदेवमार्कंडेयाभिगमनं; $D_5$ $M_2$ मार्कंडेयसमागमनं ($M_2$ °गमः); $G_1$ मार्कंडेयागमनं. — *Adhy. no.* (figures, words or both): $D_1$ 188; S ($M_2$ *inf. lin.*) 184 ($M_2$ orig. 186). — *Śloka no.:* $D_1$ 52.

### 181

**1** $K_4$ om. 1$^{ab}$. — $^a$) $K_1$ $G_4$ विवक्षितम्. Ś$_1$ $K_{1.2}$ आमंत्र्य; $T_1$ आलोक्य (for आलक्ष्य). — $^b$) $G_1$ महाद्युतिः. — $^d$) $D_5$ नोद° (for चोद°).

**2** Before 2, $T_1$ $G_1$ $M_1$ ins. युधिष्ठिरः. — $^a$) S (except $G_3$; $T_2$ by corr.) भगवन्देवदैत्यानाम्. — $^c$) S (except $T_1$ $G_1$) पूर्वेषां (for स°). — $^d$) $K_{1.3.4}$ $B_{1-3}$ Dn $D_{1.3-6}$ पुरातनः (for सना°).

**3** $^a$) $D_5$ मेध्यश्चोपास्यबुद्धिश्च. — $^b$) $D_{1.2}$ ततो नः; $D_5$ मनोज्ञः; $G_1$ मत्तो नः; $G_2$ त्वत्तो नः.

**4** $^a$) Dc $D_{1-3.5}$ भ्रमत्येव; $G_{3.4}$ भवानेव (for भवत्येव). $G_{3.4}$ ब्रूहि (for बुद्धिर्). — $^c$) $T_2$ $G_{2-4}$ तान्सर्वान् (for दुर्वृत्तान्). — $^d$) $K_1$ नृत्यतः; $K_2$ दृष्यतः (for ऋध्यतः). Dc सर्वतः. $D_5$ ऋद्धान्प्रेक्ष्य च सर्वशः.

**5** $^b$) $B_{1.3}$ Dc $D_{4-6}$ S [अ]थ (for [अ]पि). $K_{3.4}$ B D वा (for च). — $^c$) $K_2$ B D (except $D_{1.5}$) $G_1$ M स फलं (for स्वफलं).

**6** $^a$) Ś$_1$ $K_{1.2}$ हठे; $K_3$ भोक्ता; $K_4$ $D_2$ हठो; B Dc Dn $D_{4-6}$ कुतो ($B_4$ कथं); $D_1$ हठाद्; $D_3$ (m as in text) हतां (for अथ). — $^b$) Ś$_1$ $K_3$ $D_3$ नृणां.

**7** $^a$) $B_2$ transp. देही and देहं. Ś$_1$ K $B_4$ $D_{1.3.5}$

ततः संवर्तको वह्निर्वायुना सह भारत ।
लोकमाविशते पूर्वमादित्यैरुपशोषितम् ॥ ६०
ततः स पृथिवीं भित्त्वा समाविश्य रसातलम् ।
देवदानवयक्षाणां भयं जनयते महत् ॥ ६१
निर्दहन्नागलोकं च यच्च किंचित्क्षिताविह ।
अधस्तात्पृथिवीपाल सर्वं नाशयते क्षणात् ॥ ६२
ततो योजनविंशानां सहस्राणि शतानि च ।
निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ॥ ६३
सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ।
ततो दहति दीप्तः स सर्वमेव जगद्विभुः ॥ ६४
ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः ।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ॥ ६५
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसंनिभाः ।
केचित्किञ्जल्कसंकाशाः केचित्पीताः पयोधराः ॥ ६६
केचिद्धारिद्रसंकाशाः काकाण्डकनिभास्तथा ।
केचित्कमलपत्राभाः केचिद्धिङ्गुलकप्रभाः ॥ ६७
केचित्पुरवराकाराः केचिद्गजकुलोपमाः ।
केचिदञ्जनसंकाशाः केचिन्मकरसंस्थिताः ।
विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ॥ ६८
घोररूपा महाराज घोरस्वननिनादिताः । C. 3. 12983 B. 3. 188. 78 K. 3. 191. 78

---

(for सह भारत). — c) T1 वर्षशते (for आविशते). — d) Ś1 K1. 2 भास्करैर् (for आदित्यैर्). Ś1 K B2 (m as in text) D1-3 उपतापितं; B3 Dc T1 G2 M2 उपशोभितं; B4 उपशोधितं; D5 परिवारितं.

**61** a) Ś1 K1. 2 च (for स). Ś1 K2 पृथिवी सर्वां (for पृथिवीं भित्त्वा). — b) K4 B D (except D1-3. 5) प्रविश्य च (for समा°). — c) T1 °मानुष° (for °दानव°). — d) K1 B4 महान् (for महत्).

**62** a) D5 यद् (for च). — b) D1. 2 कृता° (for क्षिता°). — c) D5 पृथिवीनाथ; S पृथिवीं राजन्. — d) T2 G2. 3 सर्वान् (for सर्वं). S नाश(T1 राज)यति.

**63** a) K4 D1-3 °कोटीनां (for °विंशानां). Ś1 K1-3 D5 योजनानां (K3 येन नावां) समंताद्धि. — c) T G अशिवैर्घोरैः (for अशिवो वायुः). M निर्दहंतेशिवैर्घोरैः. — d) T1 G1. 4 तथा; T2 G2. 3 M तदा (for स च). Ś1 K1. 2 सांवर्तकोनलः; T G संवर्तकादिभिः (G1 °कोंशुभिः); M °काग्निभिः.

**64** a) K3 D3. 5 °गंधर्वं. — b) D5 °मानुषं. — c) D1. 2 गर्जन्; M2 जगद् (for ततो). B1 D1. 2 दीप्तांशुः; Dn1 Dc2 T G दीप्तः सन्. B2 ततः स दहते दीप्तः. — d) S सर्वानेव दिवौकसः (G1 विभावसुः).

**65** b) K3. 4 D1-3. 5 तडिद्गुण-; T2 G2-4 विद्युज्ज्वाला- (for तडिन्माला-). Ś1 K1. 2 -समन्विताः; B2 -विभूषणाः (for -विभूषिताः). — c) Ś1 K1. 2 उत्तिष्ठंते. Ś1 K D2. 3. 5 घना (Ś1 गणा) राजन् (for महामेघा).

**66** After 66ab, T2 ins.:

929* कारण्डकनिभाः केचित्केचिदिङ्गुलिकप्रभाः ।
[Cf. 67b and 67d.]

— T1 reads 66cd after 68cd. — c) B4 हारिद्र°; T G कुंजर° (for किञ्जल्क°). — Ś1 K2 om. (hapl.) 66d-67a. — d) B1-3 D2 पीनाः; D3 पीत- (for पीताः). D5 केचिद्विमलवत्प्रभाः; M2 केचिन्मकरसंस्थिताः (=68d).

**67** T1 reads 66c-67d after 68cd. Ś1 K2 om. 67a (cf. v.l. 66): B1 G4 om. 67ab; D5 om. 67. — a) T2 G2. 3 द्विरदसंकाशाः; M1 हरिद्रासदृशाः; M2 कुंजरसंकाशाः. — b) T1 om. 67b. B2 Dc2 D2. 3 T2 G2. 3 कारंडवनिभास्. B4 परे; T2 G3 तदा (for तथा). G1 केचिन्मकरसंनिभाः; M1 केचित्काकनिभास्तथा; M2 केचित्कारंडवप्रभाः. — After 67ab, M2 ins.:

930* केचिद्दारिद्र्यसंकाशाः केचित्पीताः पयोधराः ।
[= (var.) 66cd.]

— c) G1 कुरंदकनिभाः केचित्. — d) T1 om. 67d. K4 B3. 4 Dc Dn D4. 6 हिंगुलसप्रभाः; B1 किंशुकसप्रभाः; B2 D1 हिंगुलसंनिभाः; T2 G2-4 अंकुरितप्रभाः; G1 M1 हिंगुलिकप्रभाः; M2 हि स्फटिकप्रभाः.

**68** B1 G4 om. 68ab (cf. v.l. 67). — a) B2 केचित्केचित्प्लवाकाराः; D5 केचिच्च तुहिनाकाराः. — b) Ś1 अलिकुलो°; K2 कूलोपमास्तथा; M2 मरकतप्रभाः (for गजकुलो°). — M2 om. 68cd. — c) B4 कुंजर° (for अञ्जन°). — d) Ś1 K D1-3. 5 °वर्चसः (K3 °धूसराः); B Dc Dn D4. 6 T2 (by corr.) G3 °संनिभाः (for °संस्थिताः). — After 68cd, T1 reads 66cd, followed by 67. — G4 om. 68ef. — e) K3 °निबद्धांगाः; K4 °वदद्धांगाः; D3 M1 °विन(D3 °विनि)-द्धांगाः. — f) B4 तोयदाः; D5 ते घनाः.

**69** a) Ś1 K1-3 महत्तोयं (for महा°). — b) Dc2 D2 S (except T1) °स्वर-; D5 °रूप- (for °स्वन-). B Dc -निनादिनः; D2. 3 S -विनादिनः (G1 °ताः). Ś1 K1-3 विमुंचंति नभोगताः. — c) D2 S सर्व (for सर्वे). — d)

C. 3. 12983
B. 3. 191. 75
K. 3. 191. 79

ततो जलधराः सर्वे व्याप्नुवन्ति नभस्तलम् ॥ ६९
तैरियं पृथिवी सर्वा सपर्वतवनाकरा ।
आपूर्यते महाराज सलिलौघपरिप्लुता ॥ ७०
ततस्ते जलदा घोरा राविणः पुरुषर्षभ ।
सर्वतः प्लावयन्त्याशु चोदिताः परमेष्ठिना ॥ ७१
वर्षमाणा महत्तोयं पूरयन्तो वसुंधराम् ।
सुघोरमशिवं रौद्रं नाशयन्ति च पावकम् ॥ ७२
ततो द्वादश वर्षाणि पयोदास्त उपप्लवे ।
धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ॥ ७३
ततः समुद्रः स्वां वेलामतिक्रामति भारत ।
पर्वताश्च विशीर्यन्ते मही चापि विशीर्यते ॥ ७४
सर्वतः सहसा भ्रान्तास्ते पयोदा नभस्तलम् ।
संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः ॥ ७५
ततस्तं मारुतं घोरं स्वयंभूर्मनुजाधिप ।
आदिपद्मालयो देवः पीत्वा स्वपिति भारत ॥ ७६
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे यक्षराक्षसवर्जिते ॥ ७७
निर्मनुष्ये महीपाल निःश्वापदमहीरुहे ।
अनन्तरिक्षे लोकेऽस्मिन्भ्रमाम्येकोऽहमादृतः ॥ ७८
एकार्णवे जले घोरे विचरन्पार्थिवोत्तम ।
अपश्यन्सर्वभूतानि वैक्लव्यमगमं परम् ॥ ७९
ततः सुदीर्घं गत्वा तु प्लवमानो नराधिप ।
श्रान्तः क्वचिन्न शरणं लभाम्यहमतन्द्रितः ॥ ८०
ततः कदाचित्पश्यामि तस्मिन्सलिलसंप्लवे ।
न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते ॥ ८१
शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप ।

---

Ś1 K3 D1–3. 5 पूरयंति; Dn3 D4 व्यामुंचंति (for व्यापु°). G4 नभस्थलं. — After 69, S ins.:

931* गर्जन्तः पृथिवीपाल पृथिवीधरसंनिभाः ।

**70** b) T1 सपत्तन°; G2 °वनांतरा. — c) B1 Dc आपूर्यंत.

**71** b) D5 भरतर्षभ. B4 घोरारावविराविणः. — cd) T2 G पर्वतान् (for सर्वतः). B2 प्लावयंतस्ते; D5 प्रचरंत्याशु (for प्लाव°). D2. 5 नोदि° (for चोदि°). B1 परुषाः सर्वतस्त्यक्ताः प्लावयंत्याशु चोदिताः (cf. v.l. 71cd).

**72** a) M महातोयं (for महत्तोयं). B1 परमेष्ठिना वर्षमाणाः (hypermetric!). — c) B4 अघोरम् (for सु°). Dc शीघ्रं (for रौद्रं).

**73** b) Ś1 K1. 2 तद्; G2 तु (for ते). M2 उपप्लुतां. B4 पयोदांस्तस्तर्महीं. — c) T2 (before corr.) G2. 4 सूद° (for पूर°). — d) D2 नोद्य° (for चोद्य°). Ś1 K1–3 B4 द्योतमाना महास्वनाः.

**74** a) Ś1 K1. 2 समुद्राः. B4 T2 (before corr.) G2. 4 तां (for स्वां). — b) Ś1 K1. 2 अतिक्रामंति. — c) B D (except D1–3. 5) विदी°; M [अ]पि दी° (for विशी°). — d) K4 चापि विलीयते; B Dc Dn D4. 6 चाप्सु निमज्जति; D1. 2 च प्रतिशीर्यते; D3 चापि व्यलीयत; D5 चापि व्यशीर्यत; G2 M चापि विदीर्यते.

**75** a) S (except T2 G3) सह संभ्रांतास्. — b) D5 transp. ते and पयोदाः. — c) D5 संवेष्ट्य सद्यो नश्यंति. — d) Ś1 K D (except D1–3. 5) °समाह(K3 समाहि)ताः.

**76** a) T2 G2–4 तत्सलिलं (for तं मारुतं). Dc तूर्णं (for घोरं). — b) Ś1 भूयो भूयो नराधिप. — c) B D (except D1–3. 5) T2 G3. 4 आदिः (for आदि-). — d) T1 सपदि; G2 M1 स्वपति (for स्वपिति).

**77** Ś1 K1. 2 om. 77bc. — c) K3 Dc1 D3 M2 नष्ट- (for नष्टे). K3 D1. 3 T1 G1 °नरे (for °गणे). — d) Ś1 K D1–3. 5 प्रण(K3 D1. 3 °न)ष्टोरगराक्षसे.

**78** Ś1 K D1–3. 5 G1 महाराज (for मही°). — b) B2 निःस्वाध्याय°. — c) B1 T1 अंतरिक्षे च; G2 नांतरिक्षे च (for अनन्तरिक्षे). — d) K2 भ्रमाम; K3 भ्राम्यामि; Dc क्रमामि; T1 भ्राम्याम (for भ्रमामि). K3. 4 B1 Dc2 D1–3. 5 M आदितः; B2. 4 Dn D4. 6 आहतः; T G आतुरः (for आदृतः).

**79** a) D4 T2 G2–4 एकार्णव-. T1 महा- (for जले). B1 तत एकार्णवजले. — d) B1 वैक्लव्यम् (for वैक्लव्यम्). K4 B D ततः (B1 D2 तदा; D5 as in text) (for परम्).

**80** a) B Dc Dn D4. 6 T G [अ]हं (for तु). — b) B2 नरोत्तम; Dc2 रसाधिप (for नरा°). — c) T1 शांतः; T2 G2–4 क्लांतः (for श्रान्तः). — d) B4 अरिंदम (for अतन्द्रितः). S लब्धवानस्म्यनिंदित (T2 [by corr.] G3 °तंद्रितः; G1 °निंदितः).

**81** b) B1–3 D (except D1–3. 5) °संचये; B4 S °संनिधौ. — c) T2 G2–4 तु (for सु-). B2 च (for वै).

**82** b) T1 विस्तीर्णस्य. — d) K2. 4 °संभृते; B1 m as in text) °सेविते; B2. 4 D1 G2 M °संवृते. Ś1 शयानं दृष्ट्वा

पर्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते ॥ ८२
उपविष्टं महाराज पूर्णेन्दुसदृशाननम् ।
फुल्लपद्मविशालाक्षं बालं पश्यामि भारत ॥ ८३
ततो मे पृथिवीपाल विस्मयः सुमहानभूत् ।
कथं त्वयं शिशुः शेते लोके नाशमुपागते ॥ ८४
तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये ।
भूतं भव्यं भविष्यच्च जानन्नपि नराधिप ॥ ८५
अतसीपुष्पवर्णाभः श्रीवत्सकृतलक्षणः ।
साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे ॥ ८६
ततो मामब्रवीद्बालः स पद्मनिभलोचनः ।
श्रीवत्सधारी द्युतिमान्वाक्यं श्रुतिसुखावहम् ॥ ८७
जानामि त्वा परिश्रान्तं तात विश्रामकाङ्क्षिणम् ।
मार्कण्डेय इहास्स्व त्वं यावदिच्छसि भार्गव ॥ ८८
अभ्यन्तरं शरीरं मे प्रविश्य मुनिसत्तम ।
आस्स्व भो विहितो वासः प्रसादस्ते कृतो मया ॥ ८९
ततो बालेन तेनैवमुक्तस्यासीत्तदा मम ।
निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत ॥ ९०
ततो बालेन तेनास्यं सहसा विवृतं कृतम् ।
तस्याहमवशो वक्त्रं दैवयोगात्प्रवेशितः ॥ ९१
ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप ।
सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम् ॥ ९२
गङ्गां शतद्रुं सीतां च यमुनामथ कौशिकीम् ।
चर्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम् ॥ ९३
सिन्धुं चैव विपाशां च नदीं गोदावरीमपि ।
वस्वोकसारां नलिनीं नर्मदां चैव भारत ॥ ९४
नदीं ताम्रां च वेण्णां च पुण्यतोयां शुभावहाम् । C 3.12909 B. 3.188.104 K. 3.191.105

---

न्शिशुं.

**83** Ś1 om. 83. — a) B2 महीपाल (for महा°). — b) B D (except D1–3. 5) T2 G3 पद्मेंदु°. — c) B4 -निकाशाक्षं; Dc2 G1 M1 -पलाशाक्षं. K3 प्रफुल्लपद्मशालाक्षं. — T1 om. 83d–86a.

**84** T1 om. 84 (cf. v.l. 83). — a) Ś1 तं दृष्ट्वा मे महाराज. — b) B1 °यः समपद्यत. — c) B1 T2 G2–4 चायं (for त्व°). — d) Dc लोकनाश उपागते.

**85** T1 om. 85 (cf. v.l. 83). — a) Ś1 तमसा. D2 चिंतयानोपि; T2 G2–4 चिंतितश्चापि. — c) K3. 4 B D (except D2. 3. 6) T1 भविष्यं च. — d) B4 महामते (for नरा°).

**86** T1 om. 86a (cf. v.l. 83). — a) K3 °वर्णांगः; B1 T2 G1. 3 M1 °संकाशः; Dc °वर्णाभं; D2 G2. 4 M2 °संकाशं. — b) K2 Dc D2 G2. 4 M2 °लक्षणं; K4 B2–4 Dn D1. 3–6 °भूषणः. — c) D2 स्वयं (for साक्षाल्ल्). — d) D2 तदाप्रभृति भाति मे.

**88** Before 88, B2 ins. देवदेव उ°; D1. 2 ins. श्रीभगवानुवाच. — a) N (except Ś1 D4) T1 त्वां (for त्वा). — b) B Dn D4. 6 ततो; D1. 2 तथा (for तात). — c) Ś1 K1. 2 Dc इहास त्वं; T2 G2–4 महासत्व (for इहास्स्व त्वं). — d) Ś1 इच्छामि (for इच्छसि).

**89** a) K4 अनंतरं; B4 अभ्यंतरे; Dc D4 अभ्यंतर-. Dn D1. 6 M2 शरीरे. D2 शरीराभ्यंतरं मे त्वं. — b) B4 M1 मुनिपुंगव. — c) Ś1 K1. 2 त्वदर्थे; B4 आस्यतां; D2 शाश्वतो; T2 G2–4 आस्वेह; M1 आस्व त्वं (for आस्स्व भो). T1 G1 M2 विहितं वासं.

**90** a) Ś1 K1. 2 ततस्तनैव बालेन. — c) D1. 2 निर्वेदो (D1 °दं) जीविताद्दीर्घान्. — d) Ś1 मानुषत्वे च; K1. 2 मनुष्यत्वे च; D1. 2 मानुष्याच्चैव; M2 मनुष्यत्वेन.

**91** a) Ś1 K1. 2 अथ (for आस्यं); see below. — b) K3 Dn2. n3 T2 (before corr.) G2. 4 विकृतं; B2 संविदं; Dn3m D4 विस्तृतं (for विवृतं). Ś1 K1. 2 महदास्यं विकासितं (see above). — c) K4 B1 अविशं (for अवशो). B D (except D1–3. 5) वक्त्रे. — d) B1 वायुवेगात् (for दैवयोगात्). D1. 2 M मायया संप्र°.

**92** a) B2 प्रविष्टे. Ś1 K D2. 3. 5 तत्कुक्षौ; D1 G4 M2 तं कुक्षिं. — c) K3 D1. 2 सराष्ट्रां (for °ष्ट्र-).

**93** a) K4 शतह्रदां; D2–4 शतद्रुतां (for शतद्रुं); see below. Ś1 K2 B1 Dc D3–6 शीतां; T2 G3 (see below) असितां (for सीतां). K4 D2–4 T2 G3 om. च. — b) Ś1 K1. 2 चाथ (for अथ).

**94** b) D1. 2 तथा (for अपि). — c) K2 वशोकसारां; K3 B1 D3 G1 M1 वस्वौक°; B3 कांबोजमालां; D1. 2 विश्वौकसारां; M2 वस्वेक°. — d) G1 कावेरीं नर्मदां तथा; M2 नर्मगां सुभगामथ.

**95** D5 om. 95ab. — a) M1 तापीं; M2 वापीं (for ताम्रां). K B3 Dc Dn D3. 4. 6 T2 (by corr.) G3 वेणां; B1 मुंडां; B2. 4 वेण्वां (for वेण्णां). D1. 2 ताम्रां च कृष्णवेणां च; T1 नदीं वापीं च बण्णां च; T2 (before corr.) G2. 4

C. 3. 12909 B. 3. 188. 104 K. 3. 191. 105

सुवेणां कृष्णवेणां च इरामां च महानदीम् ।
शोणं च पुरुषव्याघ्र विशल्यां कंपुनामपि ॥ ९५
एताश्चान्याश्च नद्योऽहं पृथिव्यां या नरोत्तम ।
परिक्रामन्प्रपश्यामि तस्य कुक्षौ महात्मनः ॥ ९६
ततः समुद्रं पश्यामि यादोगणनिषेवितम् ।
रत्नाकरममित्रघ्न निधानं पयसो महत् ॥ ९७
ततः पश्यामि गगनं चन्द्रसूर्यविराजितम् ।
जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभैः ।
पश्यामि च महीं राजन्काननैरुपशोभिताम् ॥ ९८
यजन्ते हि तदा राजन्ब्राह्मणा बहुभिः सवैः ।
क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जने ॥ ९९
वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप ।
शुश्रूषायां च निरता द्विजानां वृषलास्तथा ॥ १००
ततः परिपतन्राजंस्तस्य कुक्षौ महात्मनः ।
हिमवन्तं च पश्यामि हेमकूटं च पर्वतम् ॥ १०१
निषधं चापि पश्यामि श्वेतं च रजताचितम् ।

---

नदीं तां ताम्रपर्णीं (T2 °र्णां) च; G1 नदीं तापीं च पेण्णां च. — D1. 2 om. $95^{bc}$. — $^{b}$) Ś1 K B2. 4 Dc D3 वेत्रा(Dc मद्रा)-मपि च भारत; T1 पद्मामपि च पांडव; T2 G M1 प(G1 स)-रमामपि (M1 °थ) पांडव; M2 तुंगां पद्मावतीमपि. — $^{c}$) Ś1 तुवेण्णां; K1 तुवेणां; K2 तु[वे]ण्णां; K3 तुयेणां; B1 कु (m सु)-वेणां; B2 सुवेण्वां; B4 सुवर्णां; Dc सुवेमां; D3 सुवेष्णां; D5 भूवेष्णां (for सुवेणां). Ś1 कृष्णवेण्णां च; B1. 4 °वर्णां च; B2 °वेण्वां च (for °वेणां च). T1 तुंगवण्णां कृष्णवण्णां; T2 G M1 तुंगभद्रां कृष्णवेर्णीं (M1 °ण्यां); M2 तुंगवेण्णां कृष्णवेणां. — $^{d}$) Ś1 K1. 2 M2 कयि(K2 °य)मां च; K3. 4 D3 कपिशां (K3 °सां) च; B2 इरां चैव; D5 T2 (by corr.) G3 कपिलां च; T1 G1 कल(G1 °लि)मां च; T2 (before corr.) G2. 4 कमलां च (for इरामां च). M2 शरावतीं (for महा°). D1. 2 M1 कपिशा(M1 कयिमा)मथ भारत. — After $95^{cd}$, N (except K4 Dc) T2 (marg. *sec. m.*) M1 ins.:

932* वितस्तां च महाराज कावेरीं च महानदीम् ।

[Ś1 K1. 2 D3. 5 M1 नरव्याघ्र; K3 D2 महाभाग (for महाराज). M1 om. (hapl.) the posterior half and $95^{e}$. T2 सरितां वरां (for च महानदीम्).]

— M1 om. $95^{e}$ (see above). — $^{e}$) T1 G1. 2. 4 शोणां च. Dc2 शोणं चैव नरव्याघ्र. — $^{f}$) K2 D3. 5 विशालां; B1 वैशाल्यां (for विशल्यां). Ś1 K1. 2 T1 कंपनामपि; K3 T2 G M2 कंबुना° (G4 कंबुनी°); K4 B Dc Dn D1. 4. 6 किंपुना°; D2 यमुना°; D5 कबुंरा°.

**96** $^{a}$) Ś1 K D1–3 नद्यो वै; B1 या नद्यः; D5 सरितः (for नद्योऽहं). — $^{b}$) Ś1 K D1–3. 5 राजसत्तम; B2 मानवोत्तम; B4 Dc2 या नराधिप; T1 G2. 4 वा नरोत्तम. — $^{c}$) Ś1 परिक्राम्यत्; G4 °क्रमान्; M °क्रमन्. — $^{d}$) Ś1 K D1–3. 5 transp. तस्य and कुक्षौ.

**97** $^{ab}$) Ś1 K B4 D1–3. 5 समुद्रं पुरुष(Ś1 K1. 2 च नर-; B4 मनुज)व्याघ्र भीमनक्रसमाकुलं. — G4 om. $97^{cd}$. — $^{d}$) Ś1 K1–3 D5 पयसां (for पयसो). B Dc Dn D1. 2. 4. 6 पयसो (D1. 2 °सां) निधिमुत्तमं.

**98** $^{a}$) B2–4 Dc1 Dn1. n2 D4 तत्र (for ततः). Ś1 K1 D1. 3 नगरं (for गगनं). — $^{b}$) D5 transp. चंद्र- and सूर्य-. — After $98^{ab}$, K3 *repeats* $96^{cd}$. — $^{d}$) B4 °काग्नि- (for °कार्क-). B1–3 D (except D2. 3. 5) T2 (by corr.) G3. 4 -समप्रभं. — $^{e}$) Ś1 K2 D3 T1 महा- (for महीं). — $^{f}$) Ś1 D3 °शोभितं. — After 98, S ins.:

933* सपर्वतवनद्वीपां निम्नगाशतसंकुलाम् ।

[T1 °वनोद्देशां (for °वनद्वीपां), and °कुल° (for °शत°).]

**99** $^{a}$) D5 च (for हि). Ś1 K4 D3 T1 महाराज; K1–3 D5 सदा राजन्; T2 G3 M1 तथा रा°; G1. 2. 4 ततो रा°. — $^{b}$) G1 पशुभिः (for बहु°). B D (except D1–3. 5) M1 मखैः; G1 सह (for सवैः). — $^{d}$) G1 M2 सर्वैं (for सर्व-). B D (except D1–3. 5) °रंजनैः.

**100** $^{a}$) G1 महाराज (for यथा°). — $^{c}$) B4 शुश्रूषणायां; T1 शुश्रूषणे च. — $^{d}$) B2–4 Dn D4. 6 तदा (for तथा).

**101** $^{a}$) K4 परिपतद्; B1 स पर्यटन् (m as in text); Dn3m परिभ्रमन्. — $^{b}$) Ś1 K D1–3. 5 transp. तस्य and कुक्षौ. — $^{c}$) D3 प्र- (for च). — Ś1 B2 om. (hapl.) $101^{d}$–$102^{a}$. The sequence in D1. 2 (after $101^{c}$) is as follows: $104^{d}$–$106^{b}$, $103^{c}$–$104^{c}$, $101^{d}$–$103^{b}$, $106^{cdef}$. — $^{d}$) B4 भारत (for पर्वतम्). T1 विंध्यं च गिरिमुत्तमं.

**102** Ś1 B2 om. $102^{a}$ (cf. v.l. 101); K3 om. (hapl.) 102–103. For the sequence in D1. 2 cf. v.l. 101. — $^{a}$) K1. 2 D5 महेंद्रं (for निषधं). S चैव (for चापि). — After $102^{a}$, D3 ins.:

933*a* पारियात्रं च पर्वतम् ।
नैषधं चापि पश्यामि.

— $^{b}$) D5 विंध्यं (for श्वेतं). Ś1 K1. 2 रजतासितं; K4 Dn D1–3 °न्वितं; B1 (m as in text) रजतं तथा; D5 गिरिसत्तमं. — D5 om. (hapl.) $102^{c}$–$104^{b}$. — $^{c}$) B1 तं पश्यामि (for पश्यामि च). Ś1 K1. 2. 4 D1–3 M2 महाराज (for

पश्यामि च महीपाल पर्वतं गन्धमादनम् ॥ १०२
मन्दरं मनुजव्याघ्र नीलं चापि महागिरिम् ।
पश्यामि च महाराज मेरुं कनकपर्वतम् ॥ १०३
महेन्द्रं चैव पश्यामि विन्ध्यं च गिरिमुत्तमम् ।
मलयं चापि पश्यामि पारियात्रं च पर्वतम् ॥ १०४
एते चान्ये च बहवो यावन्तः पृथिवीधराः ।
तस्योदरे मया दृष्टाः सर्वरत्नविभूषिताः ॥ १०५
सिंहान्व्याघ्रान्वराहांश्च नागांश्च मनुजाधिप ।
पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते ।
तानि सर्वाण्यहं तत्र पश्यन्पर्यचरं तदा ॥ १०६
कुक्षौ तस्य नरव्याघ्र प्रविष्टः संचरन्दिशः ।
शक्रादींश्चापि पश्यामि कृत्स्नान्देवगणांस्तथा ॥ १०७
गन्धर्वाप्सरसो यक्षानृषींश्चैव महीपते ।
दैत्यदानवसंघांश्च कालेयांश्च नराधिप ।
सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः ॥ १०८
यच्च किंचिन्मया लोके दृष्टं स्थावरजङ्गमम् ।
तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः ।
फलाहारः प्रविचरन्कृत्स्नं जगदिदं तदा ॥ १०९
अन्तः शरीरे तस्याहं वर्षाणामधिकं शतम् ।
न च पश्यामि तस्याहमन्तं देहस्य कुत्रचित् ॥ ११० C 3. 12926 B 3. 198. 123 K 3. 201. 124

---

महीं$^{\circ}$). — $^d$) $K_4$ तत्र वै (for पर्वतं). — $B_2$ om. 102$^d$–103$^c$.

**103** $K_3$ $D_5$ om. 103; $B_2$ om. 103$^{abc}$ (cf v.l. 102). For the sequence in $D_{1.2}$ cf. v.l. 101. — $^a$) Ś$_1$ $K_{1.2.4}$ $D_{1-3}$ पुरुष$^{\circ}$; S च नर$^{\circ}$ (for मनुज$^{\circ}$). — $^b$) S (except $M_2$) चैव (for चापि). — $^c$) $D_{1.2}$ पृथिव्यां; $M_1$ अपश्यं (for पश्यामि). Ś$_1$ $K_{1.2}$ $B_4$ $Dc_2$ $D_{1-3}$ महीपाल; $M_1$ महाशैले; $M_2$ नरव्याघ्र (for महा$^{\circ}$). — $^d$) $D_3$m (? gloss) कांचन$^{\circ}$ (for कनक$^{\circ}$).

**104** $D_5$ om. 104$^{ab}$ (cf. v.l. 102). For the sequence in $D_{1.2}$ cf. v.l. 101. — $^a$) Ś$_1$ K $B_{2.4}$ $D_{1-3}$ M चापि (for चैव). — Ś$_1$ om. (hapl.) 104$^{bc}$. — $^b$) Dc सह्यं (for विन्ध्यं). $K_{3.4}$ $D_{1-3}$ गिरिसत्तमं. — $^c$) S मलयं च महाशैलं. — $^d$) $B_{1.4}$ $^{\circ}$पात्रं (for $^{\circ}$यात्रं). $Dn_2$ $D_6$ विंध्यं ($D_6$ सह्यं) च गिरिमुत्तमं (=104$^b$).

**105** For the sequence in $D_{1.2}$ cf. v.l. 101. — $^d$) $B_{1.3.4}$ D (except $D_{2.3.5}$) $M_1$ सर्वैं (for सर्व-).

**106** For the sequence in $D_{1.2}$ cf. v.l. 101. — $^a$) Ś$_1$ $K_{1-3}$ $D_2$ $G_4$ सिंहव्याघ्र- ($K_3$ $^{\circ}$घ्रान्). — $^b$) $B_{1.3}$ D (except $D_{1-3.5}$) पश्यामि (for नागांश्च). Ś$_1$ वसुधाधिप. $B_4$ नानारूपान्नराधिप. — $^{cd}$) $Dn_2$ तीर्थानि (for चान्यानि). $T_1$ transp. चान्यानि and सत्त्वानि. $B_1$ $D_{1.2}$ पृथिवी$^{\circ}$ (for जगती$^{\circ}$). — $B_2$ om. 105$^e$–108$^d$. — $^f$) $T_1$ शश्वत् (for पश्यन्). T $G_3$ M $^{\circ}$पतं (for $^{\circ}$चरं). $B_1$ तथा (for तदा).

**107** $B_2$ om. 107 (cf. v.l. 106). — $^b$) $K_2$ प्रविष्टं; $D_2$ $G_1$ प्रविश्य. $B_1$ सर्वतो (for संचरन्). $B_4$ तदा (for दिशः). — $^c$) $G_1$ $M_2$ चैव; $G_2$ अपि; $G_4$ च प्र- (for चापि). — $^d$) Ś$_1$ K $D_{2.3}$ सर्वान्; $D_5$ सर्व- (for कृत्स्नान्). $K_3$ M तदा; $B_{1.3.4}$ D (except $D_{2.3.5}$) अहं (for तथा). — After 107, N ($B_2$ om.) ins.:

934* साध्यान्रुद्रांस्तथादित्यान्गुह्यकान्पितरस्तथा ।
सर्पान्नागान्सुपर्णांश्च वसूनप्यश्विनावपि ।

[Ś$_1$ $K_{1.2}$ transp. line 1 and line 2. — (L. 1) Ś$_1$ K $D_{2.3}$ साध्या रुद्रास्तथादित्या (for the prior half). Ś$_1$ K $D_{1-3}$ गुह्यकाः (for $^{\circ}$कान्). $B_{1.3}$ गुह्यकांश्च पितॄंस्तथा (for the posterior half). — (L. 2) Ś$_1$ K $D_{2.3}$ सर्पा नागाः सुपर्णाश्च (for the prior half). Ś$_1$ K $D_{1-3.5}$ वसवोथा$^{\circ}$ (Ś$_1$ $^{\circ}$वो चा$^{\circ}$) (for वसूनप्य$^{\circ}$).]

**108** $B_2$ om. 108$^{abcd}$ (cf. v.l. 106). — $^a$) $D_{1.2}$ यक्षाः. — $^b$) Ś$_1$ K $D_{3.5}$ ऋषयश्च; $D_2$ किंनराश्च (for ऋषींश्चैव). — $^c$) Ś$_1$ $K_{1.2}$ देव-; $M_1$ दैत्या (for दैत्य-). $K_{1.3.4}$ $D_{2.3}$ -संघाश्च. — $^d$) $K_{1.3.4}$ $D_{1-3.5}$ -कालेयाश्च. Ś$_1$ महीपते (for नरा$^{\circ}$). B Dc Dn $D_{4.6}$ नागांश्च मनुजाधिप. — $^e$) Ś$_1$ $K_{2.4}$ $D_5$ $^{\circ}$तनयश्चापि; $K_3$ $D_2$ $G_4$ $M_2$ $^{\circ}$तनयाश्चापि; Dc $^{\circ}$तनयादींश्च; $T_1$ $^{\circ}$तनयाश्चैव. — $^f$) $T_1$ [ऽ]सुरसत्तमाः.

**109** $^a$) Ś$_1$ $K_{1.2}$ यावत् (for यच्च). Ś$_1$ $K_{1-3}$ $B_4$ भवेल्; $G_{2.4}$ जना (for मया). — $^b$) Ś$_1$ $K_{1-3}$ Dc कृत्स्नं; $G_{1.2}$ द्रष्टुं (for दृष्टं). — $^{cd}$) N तच्च (B Dc Dn $D_{4.6}$ सर्वं; $D_3$ तस्य) पश्याम्यहं राजन् ($D_{1.2}$ सर्वं) (for $^c$). Ś$_1$ $K_{1-3}$ $D_5$ transp. तस्य and कुक्षौ. — $^e$) Ś$_1$ धारायणो निराधारः; K B D च($B_1$ $Dn_2$. $n_3$ त्व)रमाणो फलाहारः (K $D_{1-3}$ निराहारः; $D_5$ महाराज). — $^f$) Ś$_1$ $B_{2.3}$ $Dc_1$ Dn $D_4$ विभो; K $B_{1.4}$ $D_{1-3.5}$ प्रभो; $Dc_2$ $D_6$ विभौ (for तदा).

**110** $^b$) $T_2$ $G_{2-4}$ वर्षाणामयुतायुतं. — $^c$) $T_1$ अथ; $T_2$ $G_{2.3}$ तच्च; $G_4$ न स (for न च). $G_1$ तत्र (for तस्य). $B_1$ अंतं (for अहम्). — $^d$) $D_{1-3.5}$ कर्हि$^{\circ}$ (for कुत्र$^{\circ}$). $B_1$ देहमाद्यं कथंचन; B ($B_1$ marg.) Dc Dn $D_{4.6}$ S देहस्यांतं

C. 3. 12929
B. 3. 185. 124
K. 3. 191. 125

सततं धावमानश्च चिन्तयानो विशां पते ।
आसादयामि नैवान्तं तस्य राजन्महात्मनः ॥ १११
ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा ।
वरेण्यं वरदं देवं मनसा कर्मणैव च ॥ ११२
ततोऽहं सहसा राजन्वायुवेगेन निःसृतः ।
महात्मनो मुखात्तस्य विवृतात्पुरुषोत्तम ॥ ११३
ततस्तस्यैव शाखायां न्यग्रोधस्य विशां पते ।
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् ॥ ११४
तेनैव बालवेषेण श्रीवत्सकृतलक्षणम् ।
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् ॥ ११५
ततो मामब्रवीद्वीर स बालः प्रहसन्निव ।
श्रीवत्सधारी द्युतिमान्पीतवासा महाद्युतिः ॥ ११६

अपीदानीं शरीरेऽस्मिन्मामके मुनिसत्तम ।
उषितस्त्वं सुविश्रान्तो मार्कण्डेय ब्रवीहि मे ॥ ११७
मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा ।
यया निर्मुक्तमात्मानमपश्यं लब्धचेतसम् ॥ ११८
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।
सुजातौ मृदुरक्ताभिरङ्गुलीभिरलंकृतौ ॥ ११९
प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ ।
दृष्ट्वापरिमितं तस्य प्रभावममितौजसः ॥ १२०
विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य च ।
दृष्टो मया स भूतात्मा देवः कमललोचनः ॥ १२१
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रुवम् ।
ज्ञातुमिच्छामि देव त्वां मायां चेमां तवोत्तमाम् ॥ १२२

---

कदाचन (T $G_{2-4}$ M न कर्हिचित्; $G_1$ न कुत्रचित्).

**111** $^{ab}$) S सततं ($G_4$ °तः) परिधावंश्च चिंतयंश्च महाद्युते ($G_4$ °मते).. — After 111$^{ab}$, S ins.:

935* भ्रमंस्तत्र महीपाल यदा वर्षगणान्बहून् ।

— $^{c}$) Ś$_1$ K $D_{1-3.5}$ नासादयामि तस्यांतं (Ś$_1$ °स्याहं); $M_1$ नासादयमहं राजन्. — $^{d}$) Ś$_1$ अंतं; K $D_{1-3.5}$ अहं (for तस्य). $T_2$ $G_{2-4}$ $M_1$ शिशोः ($M_1$ मार्गं) तस्य महा°.

**112** $D_1$ om. 112$^{cd}$. — $^{c}$) $B_2$ शरण्यं (for वरेण्यं). — $^{d}$) $T_1$ transp. मनसा and कर्मणा. Ś$_1$ K $D_{2.3.5}$ गिरा; $T_2$ $G_3$ तथा (for [ए]व च).

**113** $^{a}$) $G_1$ महता (for सहसा). — $^{c}$) $T_2$ $G_{2-4}$ मुखांभोजाद् (for मुखात्तस्य). — $^{d}$) $T_2$ $G_3$ अमरात्; $G_{2.4}$ अमलात् (for विवृतात्). Ś$_1$ पुरुषर्षभ (for °षोत्तम).

**114** $^{b}$) $D_{2.3.5}$ S महात्मनः (for विशां पते). — $^{c}$) Ś$_1$ पुरुष°; S स नर° (for मनुज°). — $^{d}$) $B_4$ आपीय (for आदाय).

**115** $^{a}$) Ś$_1$ बालवेशेन. — $^{b}$) $K_3$ °लक्षणः; $Dc_2$ °लक्ष्मणा.

**116** $^{a}$) Ś$_1$ $K_2$ $B_{1.3}$ $D_{1.3.5}$ $T_2$ $G_3$ वीरः; $B_2$ Dn $D_4$ $G_4$ बालः; $B_4$ Dc $D_6$ प्रीतः; $M_2$ राजन् (for वीर). — $^{b}$) $B_2$ शरीरं; $Dn_1$. $n_2$ $D_1$ स प्रीतः; $Dn_3$ $D_4$ $G_4$ स वीर (for स बालः). — $^{d}$) $D_3$ $T_2$ (before corr.) $G_{2.4}$ M महाद्युते; $T_1$ महामते; $G_1$ जगत्पतिः.

**117** $^{b}$) $B_4$ मामिके; $M_2$ मामकैः. $K_1$ मुनिरब्रवीत्. — $^{c}$) $B_1$ भ्रमित° (m उषित° as in text). $B_{1-3}$ Dc Dn $D_{1.4.6}$ परि°; $D_5$ $M_2$ स वि°; $G_1$ स्म वि°; $G_4$ हि वि° (for सुवि°). — $^{d}$) $B_{1-3}$ Dc Dn $D_{1.4.6}$ ब्रवीमि ते; $D_5$ महामुने (for ब्रवीहि मे).

**118** $^{a}$) Ś$_1$ $K_{1.2}$ मुहूर्तमपि; $B_2$ $T_1$ °र्तादिव (for (for °र्तादथ). — $^{b}$) Ś$_1$ नृप; $K_{1.2}$ $G_1$ नर; $G_2$ नव (for नवा). — After 118$^{ab}$, $B_1$ ins.:

936* तं दृष्ट्वा देवदेवेशं मुनिर्वचनमब्रुवम् ।

— $^{c}$) $B_1$ यदा; $D_1$ यथा; $G_{2.4}$ $M_2$ माया- (for यया). $D_{1.2}$ विमुक्तम् (for निर्मुक्तम्). — $^{d}$) Ś$_1$ $K_{1.2}$ लब्ध(Ś$_1$ मूढ)चेतनं.

**119** $D_1$ om. 119. — $^{a}$) $Dn_2$ ताम्रोत्पलौ (for ताम्रतलौ). $K_2$ तावच् (for तात). — $^{c}$) $K_3$ $B_1$ $D_{2.3}$ S सुजात- (for °तौ). — $^{d}$) $K_{1.4}$ अलंकृतं; $B_{1.3}$ D (except $D_{2.3.5}$; $D_1$ om.) विराजितौ (for अलंकृतौ).

**120** $^{a}$) Ś$_1$ प्रणतेन; $K_4$ $B_2$ D (except $D_5$) $G_2$ $M_1$ प्रयत्नेन. — $^{b}$) $T_1$ [अ]पि; $G_1$ च; $T_2$ $G_{2-4}$ [अ]स्य (for हि). Ś$_1$ $K_3$ $B_1$ Dc $D_{3-6}$ °नंदितौ; $B_2$ $D_2$ $G_1$ °वादितौ (for °वंदितौ). — $^{c}$) $K_3$ °परमिदं तस्य; $D_{2.3}$ °परमिमं तस्य; $D_5$ °परममेतस्य; $T_2$ $G_{2-4}$ महात्मनस्तस्य.

**121** $D_1$ om. (hapl.) 121$^{b}$–122$^{a}$. — $^{b}$) $D_5$ पश्चात्तेन (for प्रयत्नेन). $M_2$ [अ]भि° (for [उ]प°). $B_2$ Dn $D_{4.4}$ ह (for च). — $^{d}$) Ś$_1$ मया (for देवः).

**122** $D_1$ om. 122$^{a}$ (cf. v.l. 121). — $^{a}$) $B_2$ तमिमं. $G_1$ प्रांजलीकृत्वा. — $^{b}$) $Dc_2$ $T_2$ $G_{1-3}$ M नमस्कृत्वेदम्. $K_1$ अब्रवीत्; M अब्रवं. — $^{c}$) $D_1$ $T_1$ देवेश; $G_4$ देव त्वा. — $^{d}$) Ś$_1$ $K_{1.2}$ एतां; $K_4$ B D (except $D_{1-3.5}$) चैतां (for चेमां). $D_{1.2}$ नरोत्तम; $D_5$ अनुत्तमां (for तवोत्तमाम्).

आस्येनानुप्रविष्टोऽहं शरीरं भगवंस्तव ।
दृष्टवानखिलाँल्लोकान्समस्ताञ्जठरे तव ॥ १२३
तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगत्स्थावरजङ्गमम् ॥ १२४
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
द्रुतमन्तः शरीरे ते सततं परिधावतः ॥ १२५
इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाहमनिन्दित ।
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ।
पीत्वा जगदिदं विश्वमेतदाख्यातुमर्हसि ॥ १२६
किमर्थं च जगत्सर्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालमिह स्थेयमरिंदम ॥ १२७
एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया ।
त्वत्तः कमलपत्राक्ष विस्तरेण यथातथम् ।
महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो ॥ १२८
इत्युक्तः स मया श्रीमान्देवदेवो महाद्युतिः ।
सान्त्वयन्मामिदं वाक्यमुवाच वदतां वरः ॥ १२९

इति श्रीमहाभारते आरण्यकपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

# १८७

देव उवाच ।
कामं देवापि मां विप्र न विजानन्ति तत्त्वतः ।
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ॥ १
पितृभक्तोऽसि विप्रर्षे मां चैव शरणं गतः । C. 3. 12951 B. 3. 189. 2 K. 3. 192. 2

---

**123** [a]) $K_{1.2}$ $D_5$ आस्ये च (for आस्येन). S [अ]हं प्रविष्टोस्मि (for [अ]नुप्रविष्टोऽहं). — [b]) B Dn $D_{4-6}$ शरीरे (for शरीरं). S देहं तव नरो( $T_1$ $G_1$ M तव सुरो-; $G_4$ ते पुरुषो )त्तम. — [c]) $K_{3.4}$ दृष्टवान्निखिलान्; T G (by transp.) अखिलान्दृष्टवान्. $B_{2.3}$ D (except $D_{1-3.5}$) $M_2$ सर्वान् (for लोकान्). — [d]) $K_{1.2}$ समंताज् (for समस्ताञ्). $D_1$ $T_2$ $G_{2-4}$ उदरे (for जठरे). $B_{1-3}$ D (except $D_{1-3.5}$) हि ते (for तव).

**124** [a]) Ś1 $K_{1-3}$ $D_{3.5}$ शरीरस्थान्. $T_2$ $G_{2-4}$ तव देहे मया दृष्टा. — [bc]) Ś1 $K_{1-3}$ $D_{3.5}$ °राक्षसान्, and °नागांश्च. — [d]) $K_3$ $B_4$ $D_{1.2}$ $T_1$ $G_1$ $M_1$ जगच्च स्थाणुजंगमं; $D_5$ जगत्स्थावरजंगमान्.

**125** [b]) $Dc_2$ मतिर् (for स्मृतिर्). — [d]) Ś1 °धावता; $B_{2.4}$ D (except $D_{1-3.5}$) °वर्तिनः. — After 125, B D (except $D_{1.2.5}$; $D_3$ marg. *sec. m.*) ins.:

937* निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो ।

**126** [a]) $T_2$ $G_{2-4}$ यतिष्ये (for इच्छामि). — [b]) $K_{1.2.4}$ B Dc Dn $D_{3.4.6}$ अनिंदितं; $D_1$ अनंदितं; $D_5$ अनिंदितः. — [c]) $M_2$ शुचिः (for शिशुः). — [d]) Ś1 K $D_{2.3.5}$ को (for किं). Ś1 $K_{1.2}$ अनुतिष्ठति; S अधि( $G_1$ अव )तिष्ठति ( $M_1$ °ते). — [e]) B D (except $D_3$) $T_2$ $G_{2-4}$ सर्वम् (for विश्वम्). — [f]) $M_1$ एतद्व्याख्यातुमर्हति.

**127** [a]) $T_2$ $G_{2-4}$ विश्वं (for सर्वं). — [c]) $T_2$ $G_{3.4}$ महा-; $G_2$ मया (for त्वया). — [d]) $K_3$ $D_5$ अनिंदित (for अरिंदम).

**128** [a]) $D_{3.5}$ $T_2$ $G_{2-4}$ [अ]हं देव ( $D_3$ श्रोतुं) (for देवेश). — [b]) $D_3$ देवेश द्विजकाम्यया. — [d]) $D_3$ यथा तथा. — $G_4$ om. 128[ef]. — [e]) Ś1 $K_{1.2.4}$ $D_3$ $T_1$ $M_1$ °देतद्; $T_2$ G ( $G_4$ om.) °ध्येयम् (for °द्ध्येतद्). $D_3$ त्वां (for च). — [f]) $T_1$ पृष्टवानहं (for दृष्टवान्प्रभो).

**129** [b]) Ś1 $K_2$ महाप्रभुः; $K_1$ °प्रभो; $D_3$ °द्युते (for °द्युतिः). — [d]) $K_3$ Dc $D_4$ $G_4$ M वर.

Colophon. — *Major parvan:* Ś1 $K_{1.2}$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_{2-4}$ Dc Dn $D_{1-4.6}$ $G_1$ मार्कंडेयसम( Dc $Dn_{1}$. $n_3$ $D_4$ °मा)स्या; $B_1$ मार्कंडेयवाक्य. — *Adhy. name:* $G_1$ श्रीमद्भगवन्माहात्म्यकथनं. — *Adhy. no.* (figures, words or both): Dn 187 ( $Dn_3$ 188); $D_1$ 194; S ( $M_2$ *inf. lin.*) 190 ( $M_2$ orig. 193). — *Śloka no.:* $Dn_1$. $n_2$ 145; $Dn_3$ 146; $D_1$ 137.

## 187

☞ 1[ab]–47[cd] recur almost verbatim in the Brahma Purāṇa (Ānandāśrama ed.), 56. 10–57. Cf. note on 60 ff. of the previous adhy.

C. 3. 12951 B. 3. 189. 2 K. 3. 192. 2

अतो दृष्टोऽसि ते साक्षाद्ब्रह्मचर्यं च ते महत् ॥ २
आपो नारा इति प्रोक्ताः संज्ञानाम कृतं मया ।
तेन नारायणोऽस्म्युक्तो मम तद्ध्ययनं सदा ॥ ३
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ ४
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ ५
अहं शिवश्च सोमश्च कश्यपश्च प्रजापतिः ।
अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥ ६
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
सदिशं च नभः कायो वायुर्मनसि मे स्थितः ॥ ७
मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः ।
यजन्ते वेदविदुषो मां देवयजने स्थितम् ॥ ८
पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ।
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषवः ॥ ९
चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम् ।
शेषो भूत्वाहमेवैतां धारयामि वसुंधराम् ॥ १०
वाराहं रूपमास्थाय मयेयं जगती पुरा ।
मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ॥ ११
अग्निश्च वडवावक्त्रो भूत्वाहं द्विजसत्तम ।

---

**1** $K_1$ $B_2$ $Dn_2$ $D_{1-3}$ देवदेव उ°; S (except $M_1$) श्रीभगवान्. — $^{a}$) $K_1$ न; $G_1$ M च (for [अ]पि). $T_1$ ब्रह्मा; $T_2$ $G_{2-4}$ M ब्रह्मन्; $G_1$ नित्यम् (for विप्र). $K_4$ $D_{3.5}$ कामं ($D_5$ कामाद्) देवा अपि न मां; $B_1$ न देवा नर्षयश्चैव. — $^{b}$) $B_{2-4}$ Dc Dn $D_{4.6}$ हि; S (except $M_1$) [अ]भि- (for वि-). $K_4$ $D_{3.5}$ विप्र जानंति तत्वतः. — $^{c}$) $T_1$ त्वां (for त्वत्). $K_4$ प्रतीक्षामि (for प्रव°). — $^{d}$) $D_{1.2}$ विचरा° (for विसृजा°). T $G_{3.4}$ श्रूयतां वचनं मम.

**2** $^{a}$) $Ś_1$ $K_{1.2}$ देवर्षे; $K_3$ मे भक्तो. — $^{b}$) $Ś_1$ K $D_{1-3.5}$ चापि (for चैव). — $^{c}$) B D (except $D_{1.2.5}$) ततो (for अतो). S तुष्टो (for दृष्टो). $K_4$ तपसा (for ते साक्षाद्).

**3** For $3^{ab}$, cf. C. 12. 13168; Manu 1. 10. — $^{a}$) $Ś_1$ $K_{1-3}$ $B_4$ Dn $D_{3.4.6}$ अ($D_3$ आ)पां (for आपो). $Ś_1$ $K_{1.2}$ मया; $K_{3.4}$ $D_{1-3.5}$ सदा; B Dc Dn $D_{4.6}$ पुरा (for प्रोक्ताः). — $^{b}$) $Ś_1$ $K_{1-3}$ नाम पूर्वं; $K_4$ B D संज्ञाकर्म ($D_5$ पूर्वं); S (except $T_1$ M) तासां नाम (for संज्ञानाम). $B_1$ $D_{1-3.5}$ कृता (for कृतं). $Ś_1$ $K_{1-3}$ किल (for मया). — $^{c}$) Dn $D_{4.6}$ [ऽ]पि (for [ऽ]स्मि). S (except $M_1$) तेन नारायणेत्युक्तः. — $^{d}$) $Ś_1$ $K_{1.2}$ ता ह्ययनं; $K_4$ ते ह्ययनं; B Dn $D_{4.6}$ तत्त्वयनं (for तद्ध्ययनं). $K_3$ $B_2$ तदा (for सदा).

**4** $^{a}$) $Ś_1$ K $D_{1-3.5}$ सोहं (for अहं). $Ś_1$ $K_{1.2}$ देवः (for नाम). — $^{b}$) Dc प्रवरः (for प्रभवः). — $G_4$ om. $4^{cd}$. — $^{c}$) $B_4$ जनिता (for विधाता). — $^{d}$) $Ś_1$ संहर्ता (for संहर्ता).

**6** $G_2$ om. up to यज्ञ in $6^{d}$. — $^{a}$) $T_2$ $G_3$ विश्व°; $M_2$ शुक° (for शिव°). — $^{b}$) $B_{1.3}$ Dn S काश्यपः. B D (except $D_{1-3.5}$) [अ]थ (for च). — $G_4$ om. $6^{cd}$.

**7** $^{b}$) $B_2m$ स्तनांतरे (for च लोचने). — After $7^{ab}$, N ins.:

938* द्यौर्मूर्धा खं दिशः श्रोत्रे तथापः स्वेदसंभवाः ।

[$Ś_1$ K मे; $D_4$ च (for खं). $K_4$ श्रोत्र° (for स्वेद°).]

— $^{c}$) $Dn_{1.}$ $n_3$ $D_{4.6}$ सदिशश्च; $D_2$ सदिव्यं; $D_3$ तद्दिव्यं (for सदिशं). $B_2$ ते; $D_3$ स (for च). $Ś_1$ कर्णौ (for कायो). $K_4$ S नभश्च सकलं कायो ($M_2$ °लः कालो). — $^{d}$) $K_4$ $B_1$ Dc $D_{1-3}$ सं- (for मे). $Ś_1$ $K_{1.2}$ $D_5$ $M_2$ वायुर्मे नासिके स्थितः.

**8** $^{b}$) $K_{3.4}$ B $D_{1-5}$ चाप्त°; S (except $M_1$) त्वाप्त° (for स्वाप्त°). — $^{c}$) $D_5$ $M_2$ यजतो (for यजन्ते). $Ś_1$ K $B_{3.4}$ Dc $D_{1-3.5}$ $G_1$ वेदविद्वांसो. — $^{d}$) S देव($T_1$ वेद)-सदने (for °यजने). $D_{1.3}$ स्थिताः.

**9** $^{a}$) $D_2$ om. from क्षत्रिये in $9^{a}$ up to $10^{a}$. $Ś_1$ K $B_3$ $D_{1-3.5}$ पार्थिवेंद्रा° (for क्षत्रि°). $B_3$ ब्राह्मणाः क्षत्रियाश्चैव. — $^{b}$) $Ś_1$ K $B_{2.4}$ $D_{1-3.5}$ क्षत्रियाः; $B_1$ ये चान्ये; $M_1$ यजंते (for पार्थिवाः). — $^{c}$) $Ś_1$ $K_1$ अथो; $D_1$ यथा (for तथा). — $^{d}$) $K_2$ सर्वलोक°; Dn $D_{4.6}$ $T_2$ $G_{2-4}$ स्वर्गलोकजिगीषया; $D_{1.6}$ °कं जिगीषया ($D_1$ °वः); $M_2$ °के जिगीषवः.

**10** $D_2$ om. $10^{a}$ (cf. v.l. 9). — $^{a}$) $D_{3.5}$ चतुःसागर°. — $^{b}$) B ($B_1$ marg.) °भूषिता; $D_5$ $T_1$ °भूषितां; $G_1$ °भूषिताः. — $^{c}$) $Ś_1$ K $B_4$ $D_{1-3.5}$ [ए]नां; M [ए]को (for [ए]तां).

**11** $^{a}$) $K_2$ वराहं; $G_4$ वराह- (for वाराहं). — $^{b}$) $D_3$ पुरेयं (for मयेयं). $Ś_1$ $K_{1.2}$ पृथिवी (for जगती). $D_3$ मया (for पुरा). — $^{c}$) $Ś_1$ K $B_4$ $D_{1-3.5}$ $M_2$ निमज्जती ($K_1$ °ज्जते; $K_4$ °ज्जंती; $M_1$ °ज्जंति) (for मज्ज°). $T_1$ जलनिधौ (for जले विप्र).

**12** $^{b}$) $B_4$ भूत्वा चाहं द्विजोत्तम. — $^{c}$) Dc शिरसि (for

पिबाम्यपः समाविद्धास्ताश्चैव विसृजाम्यहम् ॥ १२
ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संश्रिता विशः ।
पादौ शूद्रा भजन्ते मे विक्रमेण क्रमेण च ॥ १३
ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः ।
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च ॥ १४
यतयः शान्तिपरमा यतात्मानो मुमुक्षवः ।
कामक्रोधद्वेषमुक्ता निःसङ्गा वीतकल्मषाः ॥ १५
सत्त्वस्था निरहंकारा नित्यमध्यात्मकोविदाः ।
मामेव सततं विप्राश्चिन्तयन्त उपासते ॥ १६
अहं संवर्तको ज्योतिरहं संवर्तको यमः ।
अहं संवर्तकः सूर्यो *अहं संवर्तकोऽनिलः ॥ १७
तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ।
मम रूपाण्यथैतानि विद्धि त्वं द्विजसत्तम ॥ १८
रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशम् ।
वसनं शयनं चैव निलयं चैव विद्धि मे ॥ १९
कामं क्रोधं च हर्षं च भयं मोहं तथैव च ।
ममैव विद्धि रूपाणि सर्वाण्येतानि सत्तम ॥ २०
प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम् ।
सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ २१
मद्विधानेन विहिता मम देहविहारिणः ।
मयाभिभूतविज्ञाना विचेष्टन्ते न कामतः ॥ २२
सम्यग्वेदमधीयाना यजन्तो विविधैर्मखैः । C 3.12973 B. 3.189.24 K. 3.192.23

पिबामि). K1. 3. 4 D1. 5 M [आ]पः; B4 [अ]हं (for [अ]पः). Ś1 सदा विद्वान्; K1 समास्थाय; B1 D4 समाविद्धन्; B2 Dn1. n2 D6 सदा विद्धन्; B3 सदा विद्धाः; B4 जलं विद्धन्; Dn3 (marg. *sec. m.* as in text) सदा विद्धान्; T1 सदा-बद्धास् (for समाविद्धाः). — d) K4 Dc D1–3. 5 तथैव (for ताश्चैव). B4 लोकांश्चैव सृजाम्यहं.

**13** b) B2 Dn D4. 6 M1 संस्थिता (for संश्रिता). — c) B D (except D1–3. 5) भवंतीमे (for भजन्ते मे). — d) D1–3 G1 व्युत्क्रमेण (for विक्र°).

**14** b) Ś1 K D3 तु; G1. 2 M1 हि (for [अ]पि). K4 अथर्वकः; D1. 2 T1 G1. 2 M1 अथर्वं च. D5 यजुर्वेदस्तथैव च. — c) G1 ततः (for मत्तः). — d) T1 G1 M1 [उ]त (for च).

**15** a) T2 G2. 4 यांति° (for शान्ति°). — b) K4 जितात्मानो. Ś1 K1. 2 विचेतसः; K3 [ऽ]तिचेतसः; K4 B D (except D5) बुभुत्सवः. — K3 om. $15^{c}$–$16^{b}$. — c) D5 कामक्रोधैश्च निर्मुक्ताः; S अक्रोध( T2 G3. 4 °क्रोधा; G1 °काम)-द्वेषसंयुक्ता. — d) Ś1 B Dn (Dn3 marg. *sec. m.* as in text) D6 निःसंज्ञा.

**16** K3 Dc om. $16^{ab}$ (for K3, cf. v.l. 15). — a) G1 सत्यस्था. — b) Ś1 K1. 2 D5 °त्मचिंतकाः. — c) K3 काममेव स तं विप्राः. — After 16, Ś1 K B1 D1–3. 5 read 22 (cf. v.l. 17).

**17** Ś1 K D1–3. 5 read 17 after 20. — a) Ś1 सांवर्तको. Dn2. n3 D4. 6 वह्निर् (for ज्योतिर्). — b) Ś1 सांवर्तको. B1. 3 Dn3 D4. 6 [ऽ]नलः; B2 Dc Dn1. n2 T2 G3 [ऽ]निलः (for यमः). — T2 G3. 4 om. $17^{cd}$. — c) Ś1 सांवर्तकः. — d) To avoid hiatus, Ś1 K1. 2 B2–4 Dn D4. 6 त्वहं; B1 Dc T1 G1 M ह्यहं (for अहं). Ś1 सांवर्तको. K1–3 Dc Dn3 [ऽ]नलः; B2 यमः (for ऽनिलः).

**18** a) B4 भावारूपाणि (sic). — b) K3 ये चान्येता (for यान्येतानि). G1. 4 नभस्थले. — c) B Dc Dn D4. 6 मम वै (B4 D4. 6 ममैव) रोमकूपाणि. — d) T2 G मां (for त्वं).

**19** G1 om. (hapl.) 19–20. — b) K4 D3 T1 G1. 2. 4 चतुर्दिशः; M दिशो दश. — c) T1 वसतिं; T2 G3. 4 सवनं (for वसनं). — d) B2–4 Dc Dn D6 विलयं; D1 नियतं (for निलयं). M विद्धि मे ब्राह्मणोत्तम. — After 19, B Dn ins.:

939* मयैव सुविभक्तास्ते देवकार्यार्थसिद्धये ।

**20** G1 om. 20 (cf. v.l. 19). — a) D5 कामक्रोधौ. B1 कामः क्रोधश्च हर्षश्च; T1 कामक्रोधौ भयं मोहं. — b) Ś1 K2 लोभं; T1 हर्षं (for भयं). B1 मोहस्; D1. 2 T1 चैव (for मोहं). T1 वै (for च). — c) Dc1 Dn D4. 6 G2 M2 रोमाणि (for रूपाणि). — After 20, Ś1 K D1–3. 5 read 17.

**21** b) T2 G3 कामतः (for शोभनं). — T2 G3 om. $21^{c}$–$22^{d}$. — c) Dc M2 शौचं (for चोग्रं). — d) Ś1 T1 G2 अहिंसां; G1 अहिंसाश् (for अहिंसा). Ś1 K2 सर्व- (for चैव).

**22** Ś1 K B1 D1–3. 5 read 22 after 16 (cf. v.l. 16). T2 G3 om. 22 (cf. v.l. 21). — a) B1 महता; G4 सहिता (for विहिता). — b) S (T2 G3 om.) ममादेशवि-हारिणः. — c) T1 मयाविभूत°; G (G3 om.) मयापहृत°. — d) K3 G1 विचेष्टंति.

**23** b) B D (D3 by corr.) T1 G4 M1 यजंते (for यजन्तो). Ś1 K2. 3 D1. 2. 5 G1 सवैः; K1 M स्तवैः (for मखैः).

C. 3. 12973
B 3. 189. 24
K 3. 192. 23

शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ २३
प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः ।
लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ २४
तं मां महाफलं विद्धि पदं सुकृतकर्मणः ।
दुष्प्रापं विप्रमूढानां मार्गं योगैर्निषेवितम् ॥ २५
यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ २६
दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः ।
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥ २७
तदाहं संप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ २८
सृष्ट्वा देवमनुष्यांश्च गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥ २९
कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम् ।
प्रविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥ ३०
श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।
रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ ३१
त्रयो भागा ह्यधर्मस्य तस्मिन्काले भवन्त्युत ।
अन्तकाले च संप्राप्ते कालो भूत्वातिदारुणः ।
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ॥ ३२
अहं त्रिवर्त्मा सर्वात्मा सर्वलोकसुखावहः ।
अभिभूः सर्वगोऽनन्तो हृषीकेश उरुक्रमः ॥ ३३

— *d*) $T_1$ द्विजास्ततः; $M_1$ द्विजादयः.

**24** $G_4$ om. 24. — *d*) $K_3$ नरैर्यैर् (for अनार्यैर्). $T_1$ अजिता° (for अकृता°).

**25** *a*) $K_3$ $B_{1-3}$ Dn $D_{4-6}$ $G_{1.2.4}$ M तस्मान्; $B_4$ तन्मे (for तं मां). $Ś_1$ $K_{1.2}$ महाबलं; $G_{1.2.4}$ महत्फलं. — *b*) $Ś_1$ K $D_{1-3.5}$ सुकृतकर्मणां. B Dc Dn $D_{4.6}$ नराणां भावितात्मनां. — After $25^{ab}$, $M_1$ ins.:

940* त्वमेवाप्यं विजानीहि नराणां भावितात्मनाम् ।

— *c*) $Ś_1$ $K_{1.2}$ सर्वभूतानां; $K_{3.4}$ $D_{1-3.5}$ सर्वमूढानां. — *d*) $G_4$ M योग- (for यौगैर्).

**26** =(var.) Gītā (Vulg.) 4. 7. — *a*) $Ś_1$ $B_1$ $T_1$ M हि (for च). — *b*) $Ś_1$ $D_{1.3}$ भार्गव; $K_{1.2}$ वै मुने; $K_{3.4}$ $B_3$ Dc $D_{2.5}$ भारत (!) (for सत्तम). $B_2$ ग्लानिर्भरतसत्तम.

**27** $G_4$ om. (hapl.) 27–28. — *a*) $T_1$ $G_1$ सयक्षमानुषै($G_1$ °नवै)श्चाहं; $T_2$ $G_{2.3}$ सर्वैश्च मनुजैश्चाहं; M सर्वैः समानुषैश्चाहं. — *b*) S ($G_4$ om.) अवध्यो देवदानवैः. — *c*) $B_2$ रक्षोभ्य°; T $G_{2.3}$ राक्षसै° (for राक्षसा°). — *d*) $K_3$ [उ]त्पद्यंति; $B_3$ [उ]त्पत्स्यंते; Dc पश्यंति; $G_3$ वत्स्यंति (for [उ]त्पत्स्यन्ति). $K_2$ दारुणं.

**28** $G_4$ om. 28 (cf. v.l. 27). — *a*) $K_3$ $D_5$ संप्रसूये वै; $T_1$ समसूयामि; $G_1$ सुप्रसूयामि. — *b*) $M_1$ °कर्मिणां. — $T_2$ $G_3$ om. $28^{cd}$. — *c*) $Ś_1$ $K_{1.3.4}$ $D_{1-3.5}$ प्रविश्य (for °ष्टो). — K om. (hapl.) $28^{d}$–$30^{c}$. — *d*) $Ś_1$ $K_{2.4}$ $D_{3.5}$ [उ]त (for [अ]हम्). $D_{1.2}$ तत्सर्वं प्रशमाम्युत.

**29** $K_1$ om. 29 (cf. v.l. 28). — *a*) $D_{1.2}$ देवान् (for देव-). $Ś_1$ K ($K_1$ om.) $D_{1-3}$ वै; $B_{1.2}$ $Dc_1$ Dn $D_{4.6}$ तु (for च). $K_3$ (corrupt) सृष्ट्वासु च मनुष्यान्वै; $D_5$ सृष्ट्वा देवमनुष्याणां. — *c*) $K_4$ $D_3$ सर्वाणि (for भूतानि). — *d*) $D_5$ °काम्यया (for °मायया).

**30** $K_1$ om. $30^{abc}$ (cf. v.l. 28). — *a*) $D_5$ कामं (for कर्म-). $G_{2.4}$ कर्मकालेषु निर्देहम्. — *b*) $Ś_1$ K ($K_1$ om.) $D_{1-3}$ अनुसृत्य; Dc (corrupt) अचिन्वंत्य; Dn $D_{4.6}$ अविचिंत्य. $Ś_1$ $K_{2.3}$ $D_{1-3.5}$ व्रजाम्यहं. — *c*) $B_{1-3}$ Dc Dn $D_{4.6}$ $T_1$ $G_1$ M आविश्य (for प्र°). S लोकं (for देहं).

**31** *a*) $B_1$ ब्रह्मन् (for वर्णः). — *b*) $Ś_1$ K $D_{1-3.5}$ रक्तस्; $B_{1.3}$ $Dc_2$ $D_4$ श्यामस् (for पीतस्). $Ś_1$ K $D_{1-3}$ तथा; $B_2$ [ऽ]भवत् (for मम). — *c*) $Ś_1$ K $D_{1-3}$ पीतो; $T_1$ $G_1$ $M_1$ श्यामो; $G_{2.4}$ श्यामं (for रक्तो). — *d*) $K_4$ $B_4$ सदा; $B_2$ [ऽ]भवत्; $Dc_2$ ह्यहं; $D_{1-3}$ मम (for तथा).

**32** *a*) $K_2$ अधर्मस्य; $B_2$ $D_5$ च धर्मस्य (for ह्य°). — *b*) $K_3$ $D_5$ हि; $B_{2-4}$ Dc Dn $D_{4.6}$ M च (for [उ]त). — After $32^{ab}$, S ins.:

941* यदा भवति मे वर्णः कृष्णो वै मुनिसत्तम ।

— *c*) $K_3$ आसन्नकाले. $Ś_1$ $K_{1.2}$ तु; $D_3$ [ऽ]पि (for च). — *d*) $K_1$ (*sup. lin.* as in text). 2 भूताति-; Dc $D_5$ $T_2$ $G_{2-4}$ भूत्वा सु-. $B_1$ काले भूते च दा°. — *ef*) $B_1$ [ए]ष; $T_1$ [ए]तत् (for [ए]कः). $Ś_1$ $K_{1-3}$ $D_5$ संहरामि जगत्सर्वं ($K_1$ °त्कृत्स्नं) कल्पादौ विसृजाम्यहं.

**33** *a*) $K_2$ त्रिकर्मा; $B_1$ तु धर्मः; M त्रिवर्ष्मः. $K_3$ B Dn $D_{4.6}$ विश्वात्मा (for सर्वा°). Dc अहं त्रिवर्गविश्वात्मा. — *b*) $Ś_1$ सर्वभूत°; $B_1$ हृषीकेशस्त्रिविक्रमः; $T_1$ सर्वलोकशुभावहः. — $G_4$ om. $33^{cd}$. — *c*) $Dn_2$ $D_{3.6}$ अविभूः; S अजितः (for अभिभूः). — *d*) $K_2$ उरुक्रमं; S नरोत्तमः.

**34** *a*) $D_3$ काले चक्रं; $G_4$ अहं ब्रह्मन्. $T_1$ [ए]तत् (for

कालचक्रं नयाम्येको ब्रह्मन्नहमरूपि वै ।
शमनं सर्वभूतानां सर्वलोककृतोद्यमम् ॥ ३४
एवं प्रणिहितः सम्यङ्मयात्मा मुनिसत्तम ।
सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ॥ ३५
यच्च किंचित्त्वया प्राप्तं मयि क्लेशात्मकं द्विज ।
सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ ३६
यच्च किंचित्त्वया लोके दृष्टं स्थावरजङ्गमम् ।
विहितः सर्वथैवासौ ममात्मा मुनिसत्तम ॥ ३७
अर्धं मम शरीरस्य सर्वलोकपितामहः ।
अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ३८
यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम् ।
तावत्स्वपिमि विश्वात्मा सर्वलोकपितामहः ॥ ३९
एवं सर्वमहं कालमिहासे मुनिसत्तम ।
अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ४०
मया च विप्र दत्तोऽयं वरस्ते ब्रह्मरूपिणा ।
असकृत्परितुष्टेन विप्रर्षिगणपूजित ॥ ४१
सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम् ।
विक्लवोऽसि मया ज्ञातस्ततस्ते दर्शितं जगत् ॥ ४२
अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम ।
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ॥ ४३
ततोऽसि वक्त्राद्विप्रर्षे द्रुतं निःसारितो मया ।
आख्यातस्ते मया चात्मा दुर्ज्ञेयोऽपि सुरासुरैः ॥ ४४ C 3.12995 B. 3.149.46 K 3.192.45

[ण]को). — $^{b}$) Dc2 T1 G1.2 M अरूपिणं; Dn अरूपकं (for अरूपि वै). B1 ब्रह्मादं बहुरूपधृक्; B4 ब्रह्मन्नहरहः सदा; G4 कालचक्रमरूपकं. — $^{c}$) K3 शमनी; D4 समनं; T1 G1 M शयनं. Ś1 K D1–3 सर्वलोकानां. — $^{d}$) K2 सर्वलोककृतोद्यमः; K3 °भूतकृतो यमः; B1 सर्वकर्मकृतोद्यमं; D1–3 सर्वभूतकृ°; S (except T1 G1) सर्वकालकृ°. — Ś1 K D1–3.5 ins. after 34: B Dc Dn D4.6, after 35:

942* सर्वलोके च मां भक्ताः पूजयन्ति च सर्वशः ।

[Ś1 B1 D1–3.5 °लोकेषु (for °लोके च). Dn2. D3 भक्त्या (for भक्ताः). Ś1 K Dc D1–3.5 सनातनं (for च सर्वशः).]

**35** $^{a}$) K3 समं (for सम्यङ्). — $^{b}$) K4 B Dn D4.6 ममात्मा; T G मायया. D3 द्विजसत्तम. — $^{c}$) B4 सर्वभूतानि. Ś1 K D1–3.5 विप्रर्षे.

**36** $^{a}$) Ś1 K1–3 D1.2.5 इह; T1 त्वयि (for त्वया). T1 प्रोक्तं (for प्राप्तं). — $^{b}$) K3 B1 Dc2 Dn3 T1 अपि (for मयि). Ś1 क्लेशात्मजं; K3 °त्मका. B1 सुखं (for द्विज). T2 (before corr.) G2.4 मयि क्लेशा द्विजोत्तम. — G4 om. 36$^{c}$–37$^{d}$. — $^{c}$) Ś1 K1.2 फलो° (for सुखो°). — $^{d}$) D3 transp. च and तव. Ś1 तथा°; T1 तदा°; G1 यदा° (for तवा°).

**37** G4 om. 37 (cf. v.l. 36). — $^{a}$) T1 G1 किंचिद्धि (for च किंचित्). — After 37$^{ab}$, K1.2 read 42$^{cd}$. — $^{c}$) D5 विहितं. Ś1 K1.2 सर्व एवासौ; Dn1.n3 D4 सर्वदैवासौ; D5 सर्वथा वै ते; T1 सर्वथैवाहं; T2 G2.3 M सर्वथैवात्मा. — $^{d}$) Ś1 K1.2 D5 मयात्मा; S (G4 om.) ममासौ. K3 कुरुनंदन; B1.3 Dc Dn D4.6 भूतभावनः; B4 D3 द्विजसत्तम. B2 मया भूतभवेन च.

**38** $^{a}$) T2 G2–4 अहं धर्मशरीरश्च (G2 °स्य). — K4 om. (hapl.) 38$^{c}$–39$^{d}$. — $^{c}$) T2 G2–4 देवः (for नाम).

**39** K4 om. 39 (cf. v.l. 38). — $^{a}$) T1 एतद् (for यावद्). G2.4 युगांतं (for युगानां). — $^{b}$) Ś1 K1.2 B D (except D3.5.6) सहस्रपरिवर्तनात्; G1 सहस्रं परिवर्तनं. — $^{c}$) Ś1 K1.2 D1–3.5 T1 G1 स्वपिति; T2 G2–4 स्वपामि. D3 धर्मात्मा (for विश्वा°). — $^{d}$) B Dc Dn D4.6 T2 (by corr.) G3 सर्वभूतानि (Dn1 °न्वि-) मोहयन्.

**40** $^{a}$) G4 इमं (for अहं). — $^{b}$) K3 इहासि; K4 M1 इहासेः; B Dn3 D4–6 इहास्से (B1 °सं). Ś1 K D1–3.5 द्विजसत्तम; T2 G मुनिपुंगव.

**41** $^{a}$) D5 ब्रह्म (for विप्र). B Dc Dn D4.6 मया च दत्तो विप्राग्र्य (B1 Dc °य). — $^{b}$) B4 ब्रह्मचारिणे; D1.2 विप्ररूपिणा (D2 °णे). — G4 om. 41$^{cd}$. — $^{c}$) D3 परिहृष्टेन. — $^{d}$) K2.4 Dn3 D1.2.5 G3 °पूजितः; M1 °पूजिते; M2 ब्रह्मर्षिगणपूजितः.

**42** $^{a}$) D1.2 लोकार्णवं (for एका°). — $^{b}$) Ś1 K1.2 Dc1 D1 M2 नष्टस्थावरजंगमं. — $^{c}$) B1 विकृतोसि; Dn2 विक्लवोपि. M2 विक्लवो मयि यज्जातः. — K1.2 read 42$^{cd}$ after 37$^{ab}$.

**43** $^{c}$) K3 दत्वा (for दृष्ट्वा). — $^{d}$) Ś1 विस्मृतो.

**44** $^{a}$) K3 तेनासि (for ततो°). G4 वर्षाद् (for वक्त्राद्). K4 B4 ततो वक्त्राद्धि (B4 °त्तु) विप्रर्षे. — Ś1 om. (hapl.) 44$^{b}$–45$^{c}$. — $^{b}$) G2 दूरं (for द्रुतं). — $^{c}$) T1 च (for ते). M2 मयात्मा च (by transp.). — $^{d}$) B1.2 दुर्विज्ञेयः; D5 दुर्विज्ञानः (for दुर्ज्ञेयोऽपि). B3 Dc Dn D4.6 हि (for ऽपि). B1 सुरादिभिः; D1 चराचरैः.

C 3 12996 B. 3 189 47 K. 3 192 46

यावत्स भगवान्ब्रह्मा न बुध्यति महातपाः ।
तावत्त्वमिह विप्रर्षे विश्रब्धश्चर वै सुखम् ॥ ४५
ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ।
एकीभूतो हि स्रक्ष्यामि शरीराद्द्विजसत्तम ॥ ४६
आकाशं पृथिवीं ज्योतिर्वायुं सलिलमेव च ।
लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ॥ ४७

मार्कण्डेय उवाच ।

इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः ।
प्रजाश्चेमाः प्रपश्यामि विचित्रा बहुधाकृताः ॥ ४८
एतद्दृष्टं मया राजंस्तस्मिन्प्राप्ते युगक्षये ।
आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतां वर ॥ ४९
यः स देवो मया दृष्टः पुरा पद्मनिभेक्षणः ।
स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः ॥ ५०
अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम् ।
दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं तथा ॥ ५१
स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः ।
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ॥ ५२
एष धाता विधाता च संहर्ता चैव सात्वतः ।
श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ॥ ५३
दृष्ट्वेमं वृष्णिशार्दूलं स्मृतिर्मामियमागता ।
आदिदेवमजं विष्णुं पुरुषं पीतवाससम् ॥ ५४
सर्वेषामेव भूतानां पिता माता च माधवः ।
गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः ॥ ५५

इति श्रीमहाभारते आरण्यकपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

---

**45** Ś1 om. $45^{abc}$ (cf. v.l. 44). — b) B Dc Dn D6 न बुध्येत (B1 नाबुध्यत) (for न बुध्यति). T1 पितामहः. — After $45^{ab}$, T1 *repeats* $40^{ab}$. — c) D2 त्वपि ह; S त्वमपि (for त्वमिह). — d) K1 G1. 4 M विस्रब्धश्च; D5 विश्रब्धं.

**46** b) Ś1 °सुखावहे. — c) G1 एकीभूतं. Ś1 [ऽ]स्मि स्रक्ष्यामि; K1. 2 [ऽ]स्मि द्रक्ष्यामि; T1. 2 (before corr.) G1. 2. 4 प्रवे°; T2 (after corr.) विस्र°; G3 विसृ°; M प्रसृ° (for हि स्र°). — d) B4 G2. 4 शरीरं; D3 शरीरान्. B1–3 Dc Dn D4. 6 T2 G1. 3 शरीराणि द्विजोत्तम.

**47** a) Ś1 K1–3 B1 Dc2 T2 G2–4 पृथिवी. — b) Ś1 K1. 2 B1 D1. 2 T G2–4 वायुः; K3 वपुः (for वायुं). K3 वा; M2 तु (for च). — c) K4 T1 G2 M2 [अ]भवत् (for भवेत्). — d) K4 अहं (for इह).

**48** b) T1 परमोद्भुतः. — d) B Dn D6 विविधाः; D5 बहुलाः (for बहुधा-).

**49** a) K3 B2. 3 D (except D1–3. 5) एवं (for एतद्). G1 दृष्टो (for दृष्टं). K3 महाराजन्; S मया तात (for मया राजन्). — c) G4 पुरुष° (for भरत°). — After 49, B1 ins.:

943* सूतात्मानं समाहृत चतुर्दशविधानतः ।
परमात्मानमाविश्य सुपित्यमित्तधी ** ।

**50** G3 om. 50. — a) T1 स च; G1 M यश्च; G2. 4 येन; G3 यो वै (for यः स). — b) B D (except D1–3. 5) T1 G1 M पद्मायतेक्षणः. — c) Ś1 K1. 2 D1. 3 G2 एव (for एष). K3 T1 °व्याघ्रः.

**51** a) Ś1 K1. 2 वरदानेन. — b) G1 हि (for न). — d) Ś1 K च वै; B1–3 D (except D1. 3. 5. 6) T2 (by corr.) G3 मम (for तथा).

**52** a) K1. 3 Dn2 D1 एव (for एष). S एष कृष्णो हि दाशार्हः. — b) Ś1 K D1–3. 5 पुराणः (Ś1 K2 °ण-) पुरुषोत्तमः; B1. 4 T1 G1. 2. 4 M पुराणः पुरुषो विभुः; B2. 3 Dc पुराणः परमो विभुः. — d) B4 महाप्रभुः; M नराकृतिः.

**53** b) K4 B D (except D1. 2. 5) T2 G2. 3 शाश्वतः (for सा°).

**54** a) Ś1 K2 B1. 3 D2. 5 [ए]नं; K3 D1 M1 [ए]वं; B2 D3 G1 [ए]व (for [इ]मं). B2 Dn D4. 6 वृष्णिप्रवरं; G4 राजप्रवरं. — b) B1 मेयमिह (for मामियम्). — c) K3 B2. 3 Dn1. n3 D4. 6 अयं; D3 दिव्यं (for अजं). Ś1 K1–3 D5 नित्यं; K4 D1. 2 दिव्यं; B2–4 Dn D4. 6 जिष्णुं; D3 अजं (for विष्णुं). B1 आदिदेवं सुप्रतिष्ठं.

**55** a) M2 अपि (for एव). — G1 om. $55^{bc}$. — b) M1 केशवः (for माधवः). — c) G2 M2 गच्छ त्वम् (for °ध्वम्). G4 एव; M1 एतं (for एनं). — d) K4 B4 D1. 5 कौरवर्षभ; S पुरुषर्षभ.

Colophon om. in B1. B2–3 Dc Dn D4. 6 read it after 3. 188. 2. — *Major parvan:* Ś1 K2 T2 G2–4 आरण्य. — *Sub-parvan:* K3. 4 Dc D1. 2 मार्कंडेयसमस्या; B2. 3 Dn3 D3 °समास्या (followed by भविष्य in B2 Dn3); T2 G3 °समाख्या; D5 मार्कंडेय (followed by समास). Dn1

# १८८

वैशंपायन उवाच ।
एवमुक्तास्तु ते पार्था यमौ च पुरुषर्षभौ ।
द्रौपद्या कृष्णया सार्धं नमश्चक्रुर्जनार्दनम् ॥ १
स चैतान्पुरुषव्याघ्र साम्ना परमवल्गुना ।
सान्त्वयामास मानार्हान्मन्यमानो यथाविधि ॥ २
युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिम् ।
पुनः पप्रच्छ साम्राज्ये भविष्यां जगतो गतिम् ॥ ३
आश्चर्यभूतं भवतः श्रुतं नो वदतां वर ।
मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ ॥ ४
अस्मिन्कलियुगेऽप्यस्ति पुनः कौतूहलं मम ।
समाकुलेषु धर्मेषु किं नु शेषं भविष्यति ॥ ५
किंवीर्या मानवास्तत्र किमाहारविहारिणः ।
किमायुषः किंवसना भविष्यन्ति युगक्षये ॥ ६
कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतम् ।
विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ७
इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत ।
रमयन्वृष्णिशार्दूलं पाण्डवांश्च महामुनिः ॥ ८
मार्कण्डेय उवाच ।
भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ ।
कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ९ C. 3. 13016 B 3. 190. 9 K 3. 193. 8

---

$D_6$ (both om. sub-parvan name) mention only भविष्य; and $D_4$, likewise, only भविष्यत्. — *Adhy. name:* $G_1$ भगवदात्ममायाप्रतिपादनं. — *Adhy. no.* (figures, words or both): $K_1$ 96 (= 196); Dn 188 ($Dn_3$ 189); $D_1$ 195; S ($M_2$ *inf. lin.*) 191 ($M_2$ orig. 194). — *Śloka no.:* Dn 59; $D_1$ 57.

## 188

**1** $^{a}$) $B_{2.3}$ D (except $Dc_1$ $D_{1-3}$) च (for तु). $K_4$ पार्थास्ते (by transp.). — $^{b}$) $K_{2.4}$ $Dn_1$ $D_{2.3}$ $T_2$ $G_{2-4}$ भरतर्षभौ. — $^{c}$) $B_{2-4}$ D (except $D_{1-3.5}$) T G °द्या सहिताः सर्वे.

**2** $^{a}$) $Ś_1$ $K_2$ $B_4$ $D_1$ $T_1$ चैनान्; $D_5$ चैषां; M च तान्. $Ś_1$ K $B_{2-4}$ $Dc_2$ $D_3$ $M_1$ °व्याघ्रः; $T_2$ $G_{2-4}$ °व्याघ्रान्. — $^{c}$) B Dc Dn $D_{4.6}$ मानार्हो; $D_{1.2}$ दाशार्हो. — $^{d}$) $K_2$ मन्यमाना; $K_{3.4}$ $Dc_2$ $D_2$ $G_4$ M मान्यमानो ($K_3$ °ना; $D_2$ °नौ). — B D (except $D_{1-3.5}$) read the colophon after 2, instead of reading it at the end of the *preceding* adhy.

**3** Before 3, B D (except $D_{1-3.5}$) read वैशं° उ°. — $^{b}$) $Ś_1$ $K_1$ मार्कंडेयं. $T_1$ तपोनिधिं (for महा°). — $^{c}$) $K_4$ $D_{2.3}$ धर्मात्मा; T G सामात्यो; M संभाष्य (for साम्राज्ये). — $^{d}$) $G_{2.4}$ भविष्यज्.

**4** Before 4, $K_2$ B D (except $D_{2.3.5}$) $T_1$ $G_{1.2}$ $M_1$ ins. युधिष्ठिर उ° (resp. युधि°). — $^{a}$) S (except $M_1$) सुमहत् (for भवतः). — $^{b}$) $B_4$ $T_2$ $G_{2-4}$ M वद($B_4$ गद°; $G_4$ भव)तस्तव; $D_3$ भरतर्षभ (for वदतां वर). — $^{c}$) T $G_{2-4}$ मुने भगवतो वृत्तं. — $^{d}$) $Ś_1$ युगानां (for °दौ). $Ś_1$ प्रभ . . .; $K_{1-3}$ $B_{2.3}$ M प्रभवाप्ययं (M °ये); $K_4$ $B_1$ Dc $D_{1.3.5}$ $T_1$ $G_1$ °व्ययं ($D_3$ $T_1$ $G_1$ °व्यये); $B_4$ °त्यपि; Dn $D_{2.4.6}$ °त्ययं; $T_2$ $G_{2-4}$ only as in text.

**5** $K_4$ om. 5. — $^{a}$) $Ś_1$ $K_{1-3}$ $D_{1-3.5}$ चैव; B Dc Dn $D_{4.6}$ त्वस्ति (for [ऽ]प्यस्ति). — $^{c}$) $D_5$ भूतेषु (for धर्मेषु). — $^{d}$) B Dn $D_{4.6}$ किं तु (for किं नु). $K_3$ $D_3$ शेषो; $T_1$ $G_1$ शिष्टं (for शेषं).

**6** $^{a}$) $K_3$ किंकार्या. — $^{b}$) $M_1$ किमाचार°. — $^{c}$) $M_1$ किमाहाराः (for °युषः). $G_1$ $M_1$ किंवसानाः. — $^{d}$) $D_5$ कलौ युगे (for युग°).

**7** $^{b}$) $B_1$ ध्रुवं (for कृतं). $Ś_1$ $K_{1-3}$ $D_5$ प्रपत्स्यंति ($K_3$ °वेश्यामि) कृतं युगं. — $^{d}$) N (except $B_4$ $Dn_{1.n2}$) हि (for [इ]ह).

**8** Before 8, $Ś_1$ $K_{1.3.4}$ $B_1$ $D_{1-3.5}$ S (except $G_2$) वैशं° उ° (resp. वैशं°). — $D_1$ om. $8^{c}$–$9^{b}$. — $^{d}$) $Ś_1$ K $B_{3.4}$ $D_{2.3}$ महर्षिभिः; $B_{1.2}$ Dc Dn $D_{4.6}$ महानृषिः; $D_5$ सहद्विजैः.

**9** $Ś_1$ $K_{1.4}$ $D_{1-3}$ S (except $M_1$) om. the ref. — $K_{2.3}$ B D (except $D_{1-3}$; $D_5$ marg. *sec. m.*) ins. after the ref.: $T_2$ $G_{2-4}$ (all om. the ref. and line 2) ins. after 8:

944* शृणु राजन्मया दृष्टं यत्पुरा श्रुतमेव च ।
अनुभूतं च राजेन्द्र देवदेवप्रसादजम् ।

C 3. 13017 B 3. 190 9 K. 3. 193 9

कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः ।
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा ॥ १०
अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥ ११
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति ।
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ॥ १२
आयुर्वीर्यमथो बुद्धिर्बलं तेजश्च पाण्डव ।
मनुष्याणामनुयुगं ह्रसतीति निबोध मे ॥ १३
राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर ।
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः ॥ १४
सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः ।
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति ॥ १५
आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम् ।
विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति ॥ १६
लोभक्रोधपरा मूढाः कामसक्ताश्च मानवाः ।
वैरबद्धा भविष्यन्ति परस्परवधेप्सवः ॥ १७
ब्राह्मणाः क्षत्रिया वैश्याः संकीर्यन्तः परस्परम् ।
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः ॥ १८
अन्त्या मध्या भविष्यन्ति मध्याश्चान्तावसायिनः ।
ईदृशो भविता लोको युगान्ते पर्युपस्थिते ॥ १९
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः ।
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ॥ २०

---

— $D_1$ om. $9^{ab}$ (cf. v.l. 8). — $^{a}$) $K_3$ T G भविष्यत्. $D_5$ सर्वल्लोकेषु. — $^{c}$) $B_1$ प्रलयं कालम्; $T_1$ $G_1$ $M_2$ कालं कलुषम् (by transp.).

**10** $^{b}$) $K_2$ $B_4$ $D_3$ निर्व्याजोपधि($B_4$ °रि)वर्जितः. — $^{c}$) Ś$_1$ $K_{1.2.4}$ $D_{1-3.5}$ नृप-; $T_1$ पृष्टः (for वृषः). — $^{d}$) $K_4$ $D_5$ $T_1$ मानुषेषु. $G_{2.4}$ तदा (for पुरा). Dn $D_6$ मनुष्ये भरतर्षभ.

**11** $^{a}$) Ś$_1$ Dc $Dn_3$ $G_4$ अधर्मः पादविद्धस्तु ($G_4$ °ध्वस्तः); $K_{1.2}$ स धर्मपादविद्धस्तु; $D_1$ धर्मः पादविरुद्धश्च; $D_2$ $T_2$ $G_{2.3}$ अधर्मपादविध्वस्तः ($D_2$ °द्धश्च); $T_1$ $G_1$ धर्मः पादविहीनस्तु ($G_1$ °श्च). — $M_2$ om. (hapl.) $11^{b}$–$12^{c}$. — $^{c}$) Ś$_1$ द्वापरेणेति; $K_3$ °रार्धेन; $D_5$ °रे चैव; $G_1$ °रोर्धेन.

**12** $M_2$ om. $12^{abc}$ (cf. v.l. 11). — $^{a}$) $D_1$ अंगैर् (for अंशैर्). Ś$_1$ मनुष्यान् (for अधर्मस्). — Ś$_1$ $K_1$ om. (hapl.) $12^{bc}$. — $^{b}$) $D_5$ लोकं (for लोकान्). $K_2$ मनुष्यानुपतिष्ठति. — After $12^{ab}$, N (except Ś$_1$ $K_1$ $D_1$) ins.:

945* तामसं युगमासाद्य तदा भरतसत्तम ।

— $D_1$ om. (hapl.) $12^{cd}$. — $^{d}$) Ś$_1$ अधर्मः (for मनुष्यान्). $K_4$ उपसेवते; $B_{1.3}$ उपतिष्ठते.

**13** $^{a}$) Ś$_1$ K $D_{1-3.5}$ यशो बु($K_{1.3}$ -वृ)द्धिर्; S (except $M_1$) मनो बुद्धिर् (for अथो बुद्धिर्). — $^{c}$) $B_1$ कलियुगे (for अनुयुगं). $K_4$ $G_{1.2.4}$ ह्रसंतीति; $T_1$ हृष्यतीति.

**14** $^{a}$) S ब्राह्मणाः क्षत्रिया वैश्याः. — $^{b}$) Ś$_1$ शुद्रा° (for शूद्रा°). — $^{c}$) $T_1$ व्याजाद् (for व्याजैर्). — $^{d}$) $K_4$ $B_{2.4}$ $D_{1-3}$ T G $M_1$ जनाः; $D_5$ नृपाः (for नराः). Ś$_1$ $K_{1-3}$ धर्मवैतंसिकैर्वृताः; $M_2$ धर्मवीतं सुसंवृताः.

**15** $15^{ab}$=(var.) $38^{ab}$. — $^{a}$) $K_{1.2}$ सत्यः. $K_4$ $D_1$ S संक्षिप्यते. $D_{1.2}$ धर्मो (for लोके). — $^{c}$) $B_1$ सत्यं हन्यात्; $D_1$ सत्यहानिस्. — $^{d}$) T G transp. आयुर् and अल्पं.

**16** $K_4$ om. (hapl.) 16. — $^{a}$) $B_1$ संक्षयाद्. Ś$_1$ विद्या. — $^{b}$) $D_3$ $M_2$ शिक्षंति. $B_{2.3}$ D (except $D_{1-3.5}$) [उ]पजीवितुं; $B_4$ [उ]पसेवितुं. $B_1$ न शक्यमुपजीवति. — $^{c}$) Ś$_1$ K ($K_4$ om.) $B_4$ $D_{1-3.5}$ अबुद्धींस्तान्; $T_1$ अवज्ञानाल्; $T_2$ $G_3$ अभिज्ञानाल्. $B_1$ विद्याहीनास्थिरज्ञानाल्; $G_4$ विद्यानामनभिज्ञानाल्. — $^{d}$) $T_1$ $M_1$ हि (for ऽपि). $B_1$ लोभोत्पत्तिर्भविष्यति; $T_2$ $G_{2-4}$ लोभक्रोधौ भविष्यतः.

**17** $^{a}$) Ś$_1$ K $D_{1-3.5}$ क्रोधलोभ° (by transp.); $T_1$ $G_1$ लोभमोह°. — $^{b}$) $K_{2.4}$ $B_{1.3.4}$ Dc Dn $D_{1.2.4.6}$ कामासक्ता°; $D_5$ T $G_{2-4}$ कामेसक्ता°. — $^{c}$) $K_{1.2}$ वैरवृद्धा; $K_4$ $D_{1.3}$ °बुध्या; $B_4$ T G °सक्ता. — $D_1$ om. (hapl.) $17^{d}$–$18^{c}$. — $^{d}$) $B_{1-3}$ D (except $D_{2.3.5}$; $D_1$ om.) °वधैषिणः.

**18** $K_3$ om. $18^{a}$–$19^{b}$; $D_1$ om. $18^{abc}$ (cf. v.l. 17). — $^{a}$) =$41^{a}$. $G_4$ ब्राह्मणक्षत्रियविशः. — $^{b}$) Dc $T_1$ $G_1$ $M_1$ संकिरंतः; $D_5$ $T_2$ $G_{2-4}$ संकीर्यंते; $M_2$ संसरंतः.

**19** $K_3$ om. $19^{ab}$ (cf. v.l. 18). — $^{a}$) Ś$_1$ $K_1$ अंतमध्या; $K_2$ $D_3$ $M_2$ अंता मध्या; $D_2$ आद्या मध्या. — $^{b}$) B Dc Dn $D_{4.6}$ मध्याश्चांत्या न संशयः; $D_{1.2}$ मध्याश्चांतेवसायिनः. — $^{c}$) $K_{1.2}$ $D_5$ $G_2$ लोके. $B_2$ ईदृशाश्च भविष्यंति. — $^{d}$) Ś$_1$ K $D_3$ प्रत्युपस्थिते; $B_3$ °पर्यंत्र°; $B_4$ $D_{1.2.5}$ समुप°.

**20** $^{a}$) $K_4$ S प्रवरा (T °राः; $G_{2.4}$ °रः) शाटी; $B_1$ $D_1$ प्रवरा शाणा. — $^{b}$) $G_1$ वारानां (for धान्यानां). $K_{1-3}$ $B_{1.3.4}$ $Dc_1$ $D_{1.5.6}$ $G_{1.2}$ M °दूषकः. — Ś$_1$ $K_2$ read 20–23 in this sequence: 20, 23, 22, 21.

मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् ।
गोषु नष्टासु पुरुषा भविष्यन्ति युगक्षये ॥ २१
अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः ।
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये ॥ २२
सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः ।
ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये ॥ २३
श्राद्धे दैवे च पुरुषा ये च नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम् ॥ २४
पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च ।
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये ॥ २५
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।
न यक्ष्यन्ति न होष्यन्ति हेतुवादविलोभिताः ॥ २६
निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः ।
एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः ॥ २७
पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते ॥ २८
म्लेच्छभूतं जगत्सर्वं निष्क्रियं यज्ञवर्जितम् ।
भविष्यति निरानन्दमनुत्सवमथो तथा ॥ २९
प्रायशः कृपणानां हि तथा बन्धुमतामपि ।
विधवानां च वित्तानि हरिष्यन्तीह मानवाः ॥ ३०
अल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः ।
तत्कथादानसंतुष्टा दुष्टानामपि मानवाः । C. 3. 13040 B. 3. 190. 31 K. 3. 193. 31

**21** $T_1$ $G_1$ om. (hapl.) 21–23; $D_3$ om. 21. For Ś$_1$ $K_2$ cf. v.l. 20. $K_1$ $D_1$ read $21^{ab}$ after 22. — $^a$) $B_2$ जीवंति; $T_2$ $G_{2-4}$ $M_2$ भुंजतो (for जीवन्तो). — $^b$) Dc वहंत° (for दुहन्त°). Ś$_1$ [अ]जैडिकं; $D_1$ [अ]जैडकां; $D_5$ [अ]जैडकान्; $T_2$ $G_{2-4}$ [अ]जाविकान्; M [अ]जैळकाः ($M_2$ °कान्). — After $21^c$, Dc Dn ins.:

946* येऽपि नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता.

**22** $T_1$ $G_1$ om. 22 (cf. v.l. 21). For Ś$_1$ $K_2$ cf. v.l. 20. — $^a$) Ś$_1$ $K_{1.2}$ परिमुष्यंते. — $^b$) $T_2$ G ($G_1$ om.) मानवान्. Ś$_1$ $K_{1.2}$ समंताच्चैव मानवाः. — $^c$) $K_{3.4}$ $D_{1-3}$ सुरापा; $D_3$ (marg. *sec. m.*) ये नरा (for अजपा). $D_5$ सुरापानरतास्त्वेते. — After 22, $K_1$ $D_1$ read $21^{ab}$.

**23** $T_1$ $G_{1.4}$ om. 23 (for $T_1$ $G_1$, cf. v.l. 21). For Ś$_1$ $K_2$, cf. v.l. 20. — $^a$) $K_{1-3}$ $D_3$ (marg. *sec. m.* as in text) सरित्तीर्थेषु; $T_2$ $G_3$ ततस्तीरेषु. — $^b$) $K_{1.2}$ वार° (for वाप°). Ś$_1$ $K_{1.2}$ चोपरि; $K_3$ $B_2$ चोषधीः. — $^c$) Ś$_1$ $K_{1.2}$ ताश्च (for चापि). $T_2$ $G_{2.3}$ अफलकास् (for अल्पफलास्).

**24** $^a$) $K_3$ देवेषु; Dc दैवेषु; $D_1$ दाने च; $G_2$ देव्ये च; $M_1$ देवे च. — $^b$) B Dc Dn $D_{4.6}$ [ऽ]पि; $D_2$ ये (for च). $D_{1.2}$ यत°; $T_2$ G दृढ° (for धृत°). — $^c$) Dc समाविष्टा. — $^d$) Ś$_1$ $K_{1-3}$ दास्यंतीह; $B_{1.3}$ भोक्ष्यंति हि; $T_1$ भक्षंतीह; $T_2$ $G_{2-4}$ भक्षयंति; $M_1$ योक्ष्यंतीह; $M_2$ यक्ष्यंति ह. $B_4$ भविष्यंति कलौ युगे.

**25** $^a$) $T_1$ अनिष्टांतानि; $T_2$ $G_{2-4}$ अनिष्टा($G_{2.4}$ °ष्का)-नि च; $G_1$ अनिष्क्रांतानि; $M_2$ अनिष्कां°. — After 25, $D_{1.2}$ ins.:

947* रात्रौ भोक्ष्यन्ति व्रतिनो गृहिणोऽपि युगक्षये ।
एवंविधं करिष्यन्ति कलौ शास्त्रविमोहिताः ।

**26** $^a$) $B_3$ म्लेच्छभूतं जगत्सर्वं ($=29^a$). — $^c$) $K_{3.4}$ $D_{3.5}$ यक्ष्यंते. — $^d$) B D (except $D_{1-3}$) $T_2$ G °विमोहिताः ($B_3$ °विलोडिताः); $T_1$ $M_2$ °विलोपिताः. — After 26, $B_3$ $Dn_{1.}$ $n_2$ $D_6$ ins.:

948* निक्षेप्वीहां करिष्यन्ति हेतुवादविमोहिताः ।

**27** $G_4$ om. $27^{ab}$. — $^a$) Ś$_1$ $K_3$ $D_3$ (marg. *sec. m.* as in text) निक्षेष्टीहां; $K_{1.2.4}$ $B_1$m $D_5$m $M_2$ नि($K_2$ $D_5$ न)क्षेप्वीहां; $B_4$ नित्यं कृषिं. $B_2$ निम्ने चापि कृषिष्यंति; S ($G_4$ om.) न चेष्टिं ($T_1$ °ष्टीः) कारयिष्यंति. — $^b$) Ś$_1$ $K_{1-3}$ $G_2$ धुरि धेनुकां; $T_1$ M धुरि ($T_1$ सुर-) धेनवः. — $^d$) $B_{1-3}$ D (except $D_{1-3.5}$) योज° (for वाह°).

**28** $^c$) $T_1$ ब्रह्मवादे; $M_2$ बृहद्वाची. — $^d$) $D_1$ उपलिप्सते; $T_1$ °लिप्स्यति; $T_2$ $G_{2-4}$ °यास्यते.

**29** $^a$) Ś$_1$ म्लेशी°; K $D_{2.3.5}$ म्लेच्छी°; $Dn_2$ म्लेंच्छ°; $D_1$ म्लेंच्छी°. — $^b$) $K_{3.4}$ $D_{1-3.5}$ धर्म°; $T_2$ $G_{2.3}$ ज्ञान° (for यज्ञ°). — $^c$) $Dc_2$ $T_1$ $G_1$ M भविष्यंति. — $^d$) Ś$_1$ K $D_{1-3}$ निरुत्सवम्; $D_5$ निरुत्साहम् (for अनुत्सवम्). Ś$_1$ $K_{1.2}$ अथापि वा; $K_{3.4}$ $D_{1-3}$ $T_2$ $G_3$ अथो तदा; $T_1$ $G_1$ $M_2$ अमंगलं (for अथो तथा). Dc अनुत्सवमखं तदा; $G_4$ अनुत्त्स्वमतो यथा.

**30** $^a$) K $D_{1-3}$ प्रायश्च (for प्रायशः). $K_{1.2}$ $T_2$ $G_{2-4}$ M च; $T_1$ तु (for हि). $D_5$ प्रायश्च कृपणांधानां. — $^c$) Ś$_1$ $K_{1-3}$ $D_{1-3.5}$ विधवानाथ-; $K_4$ विविधान्यथ; $T_1$ विधवायाश्च. — $^d$) $T_1$ $G_4$ भवि° (for हरि°). M हि (for [इ]ह).

**31** $G_4$ om. (hapl.) 31. — $^a$) $K_2$ Dn $D_{4.6}$ स्वल्प- (for अल्प-). — $^c$) Ś$_1$ $K_{1.2}$ तस्करा दानसंतुष्टाः; $T_2$ $G_3$ संतुष्टास्तत्कथादानाः. — $^d$) Dc दानवाः; M बांधवाः (for

C. 3. [illegible]40 B. 3. [illegible]. 32 P. 3. [illegible]. 32

परिग्रहं करिष्यन्ति पापाचारपरिग्रहाः ॥ ३१
संघातयन्तः कौन्तेय राजानः पापबुद्धयः ।
परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः ।
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः ॥ ३२
अरक्षितारो लुब्धाश्च मानाहंकारदर्पिताः ।
केवलं दण्डरुचयो भविष्यन्ति युगक्षये ॥ ३३
आक्रम्याक्रम्य साधूनां दारांश्चैव धनानि च ।
भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत ॥ ३४
न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ।
स्वयंग्राहा भविष्यन्ति युगान्ते पर्युपस्थिते ॥ ३५
राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः ।
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३६
म्लेच्छीभूतं जगत्सर्वं भविष्यति च भारत ।
हस्तो हस्तं परिमुषेद्युगान्ते पर्युपस्थिते ॥ ३७
सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः ।
स्थविरा बालमतयो बालाः स्थविरबुद्धयः ॥ ३८
भीरवः शूरमानीनः शूरा भीरुविषादिनः ।
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते ॥ ३९
एकाहार्यं जगत्सर्वं लोभमोहव्यवस्थितम् ।
अधर्मो वर्धति महान्न च धर्मः प्रवर्तते ॥ ४०
ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप ।
एकवर्णस्तदा लोको भविष्यति युगक्षये ॥ ४१
न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा ।
भार्या च पतिशुश्रूषां न करिष्यति काचन ॥ ४२

---

मानवाः). $D_8$ दुष्टानां मानवास्तदा; T G ($G_4$ om.) शिष्टानामपि बांध($G_2$ पांड)वाः. — $^f$) B Dn मायाचार°; $T_1$ पापाचारविवर्जिताः; $M_1$ °परायणाः.

**32** $^a$) $Ś_1$ $K_{1-3}$ $D_5$ संपादयंतः; $B_1$ समादाय तु; $B_1$m. 2. 3 Dc Dn $D_{4.6}$ समाह्वयंतः; $B_4$ संपात°; $T_2$ $G_{2-4}$ $M_2$ संघातवंतः. $K_{3.4}$ $D_{1-3}$ तस्मिन्युगे कुरुश्रेष्ठ. — $^c$) $K_{3.4}$ Dc $D_6$ $M_1$ °वधे युक्ता. — $^f$) $B_1$ पंडिता (for क्षत्रिया). $B_4$ क्षत्रियान्या प्रदीयते.

**34** $^b$) $B_{2.4}$ Dn $D_{4.6}$ $G_2$ चापि (for चैव). — $^c$) K $B_2$ $D_{1-3.5}$ $T_2$ $G_3$ भोक्ष्यंति. $T_2$ $G_{2-4}$ °क्रोशं. — $^d$) $T_2$ (before corr.) $G_4$ इव (for अपि).

**35** $G_4$ om. 35. — $^c$) $Ś_1$ $K_{1.2}$ $G_{1.2}$ $M_2$ स्वयंग्रहा. — $^d$) $=36^d$, $37^d$, $39^d$. $Ś_1$ K $D_{1-3.5}$ प्रत्युपस्थिते; B Dn $D_{4.6}$ समुप°.

**36** $D_5$ $T_1$ om. (hapl.) 36–37. — $^b$) $K_1$ $Dc_2$ $G_2$ $M_1$ परार्थाः. — $G_4$ om. $34^{cd}$. — $^d$) $=35^d$, etc. $Ś_1$ K $D_{1-3}$ प्रत्युपस्थिते; B $M_2$ समुप°.

**37** $D_5$ $T_1$ om. 37 (cf. v.l. 36). — $^a$) =(var.) $45^a$. $B_4$ चौरभूतं; $Dn_2$ $D_1$ म्लेंछी°; S ($T_1$ om.) वैर°. — $^b$) $K_1$ जनार्दन; $B_{2.3}$ $Dc_1$ Dn $D_{4.6}$ न संशयः (for च भारत). — $G_4$ om. $37^c$–$38^b$. — $^c$) $Ś_1$ K $B_{1-3}$ $Dc_2$ $D_1$ हस्ताद्; $M_1$ हस्ते (for हस्तो). $Ś_1$ $K_{1-3}$ $B_1$ M पर्यमुषद्; $B_2$ परिमुषन्; $G_1$ पर्यमुष्णाद्. $B_4$ न कन्यां याचते कश्चित् ($=35^a$). — $^d$) $=35^d$, etc. $Ś_1$ K $D_3$ प्रत्युपस्थिते; $B_{1.2.4}$ Dn $D_{1.2.4.6}$ $M_2$ समुप°.

**38** $G_4$ om. $38^{ab}$ (cf. v.l. 37). $38^{ab}$=(var.) $15^{ab}$. — $^a$) $Dc_2$ $Dn_2$ संक्षेप्स्यते; $Dn_3$ $D_4$ संक्षिप्स्यते. — $^c$) $G_4$ बालवृद्धयाढ्या.

**39** $^a$) $Ś_1$ K $B_1$ Dc $D_{1-3.5}$ शूरमतयः; $T_1$ शूरवन्मान्याः; $M_2$ शूरमानिन्यः. $B_1$m. 2–4 Dn $D_{4.6}$ भीरुस्तथा शूरमानी. — $^b$) $T_1$ क्रूरा (for शूरा). — $^c$) $T_2$ $G_3$ विषह्यंति (for विश्व°). — $^d$) $=35^a$, etc. $Ś_1$ K $D_{3.5}$ प्रत्युपस्थिते; B समुप° ($B_4$ पर्यव°).

**40** $^a$) $Ś_1$ $K_{1.2}$ एककार्यं; $K_3$ $G_1$ $M_2$ एकभार्यं; $B_4$ एकातापं; $D_3$ $M_1$ एकहार्यं; $T_1$ एको नवं; $T_2$ $G_{2-4}$ नैकभार्यं. Dn $D_{4.6}$ युगं (for जगत्). — $^b$) $Ś_1$ K $D_{1-3.5}$ भविष्यति युगक्षये (cf. $20^d$, $21^d$, etc.); $T_2$ $G_3$ लोभमोहविवर्जितं. — $^c$) $K_3$ B Dn $D_{2.4-6}$ वर्धते; Dc वर्तते. $Ś_1$ K $D_{1.3}$ तदा ($K_4$ नित्यं); B Dc Dn $D_{2.4.6}$ तत्र; $D_5$ तस्मिन् (for महान्). — $^d$) B D (except $D_{1-3.5}$) तु; $T_1$ $G_{1.2.4}$ [अ]त्र (for च). $Ś_1$ $B_2$ $D_3$ $M_1$ प्रवर्धते; $D_5$ विवर्धते. $K_4$ दानं धर्मश्च हीयते.

**41** $^a$) $=18^a$. $G_4$ ब्राह्मणक्षत्रियविशः. — $^b$) $K_4$ $D_5$ विनक्ष्यंति; $D_3$ विनश्यंति (for न शिष्यन्ति). $Ś_1$ $K_{1.2}$ $B_{2.4}$ नराधिप; $B_1$ (m as in text) युगक्षये; $M_1$ तथैव च. — $^c$) $K_{1.2}$ $G_1$ तथा (for तदा). $B_1$ एकवर्णा भविष्यंति; $T_2$ $G_{3.4}$ एकवर्णास्तदा लोके. — $^d$) $K_2$ $D_2$ $T_2$ $G_{3.4}$ भविष्यंति; $B_1$ तदा लोका.

**42** $G_4$ om. $42^a$–$45^b$. — $^a$) $M_2$ ये (for न). $K_{1.2}$ $D_1$ क्षम्यति; T G रक्षति; $M_2$ नंक्ष्यति. — $^b$) $T_1$ प्रति (for तथा). — $^c$) $K_{3.4}$ B D $M_1$ भार्याः. $B_1$ न (for च). — $^d$) $K_{3.4}$ $B_4$ Dc Dn $D_{1-5}$ M न करिष्यंति काश्चन ($B_4$

ये यवान्ना जनपदा गोधूमान्नास्तथैव च ।
तान्देशान्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ४३
स्वैराहाराश्च पुरुषा योषितश्च विशां पते ।
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते ॥ ४४
म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर ।
न श्राद्धैर्हि पितॄंश्चापि तर्पयिष्यन्ति मानवाः ॥ ४५
न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः ।
तमोग्रस्तस्तदा लोको भविष्यति नराधिप ॥ ४६
परमायुश्च भविता तदा वर्षाणि षोडश ।
ततः प्राणान्विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ४७
पञ्चमे वाथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा ॥ ४८

पत्यौ स्त्री तु तदा राजन्पुरुषो वा स्त्रियं प्रति ।
युगान्ते राजशार्दूल न तोषमुपयास्यति ॥ ४९
अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति ।
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये ॥ ५०
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये ॥ ५१
म्लेच्छाः क्रूराः सर्वभक्षा दारुणाः सर्वकर्मसु ।
भाविनः पश्चिमे काले मनुष्या नात्र संशयः ॥ ५२
क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम् ।
युगान्ते भरतश्रेष्ठ वृत्तिलोभात्करिष्यति ॥ ५३
ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा ।
आत्मच्छन्देन वर्तन्ते युगान्ते पर्युपस्थिते ॥ ५४ C. 3. 13064 B. 3. 190. 55 K. 3. 193. 55

---

Dc1 D1 कश्चन; Dc2 किंश्चन; Dn संक्षये); B1–3 D6 करिष्यंति न काश्चन (B1 °ति कदाचन).

**43** G4 om. 43 (cf. v.l. 42). — a) Dc यवार्थो; G1. 2 M2 यवानां. — b) G1. 2 गोधूमानां त°. — d) $=35^{d}$, etc. Ś1 K1. 2. 4 D3. 5 प्रत्युपस्थिते; K3 B1 D2 M1 समुप°; B4 पर्यंव°. D1 नीलीभूंग्यश्च सर्वदा.

**44** G2 om. 44 (cf. v.l. 42). — a) K3. 4 B D (except Dn3 D3. 5) G1 M स्वैराचाराः. — T2 G3 om. $44^{cd}$. — c) Ś1 K1–3 नोत क्षंस्यंति; K4 D1–3. 5 न क्षमिष्यंति; M2 न च क्षंस्यंति (for न सहिष्यन्ति). — d) Ś1 K D3. 5 प्रत्युपस्थिते; B1. 3 Dc M2 समुप°.

**45** K3. 4 D3 G4 om. $45^{ab}$ (for G4, cf. v.l. 42). — a) =(var.) $37^{a}$. Ś1 K1 B2 Dn2 D1. 2. 5 म्लेछी- (Dn2 म्लेंछ-; D1 म्लेंछी-)भूतं. — b) B2 D2. 5 युगक्षये; B4 च भारत (for युधि°). D1 युगांते पर्युपस्थिते ($=35^{d}$, etc.). — c) K3 श्राद्धैश्च; D1. 2 श्राद्धेन. K4 D3 न श्राद्धैर्देवताश्चापि; B Dc Dn D4. 6 न श्राद्धैस्तर्पयिष्यंति; T G2–4 M2 श्राद्धेन (T1 M2 °द्धैर्न) देवांश्च पितॄन्; G1 श्राद्धैर्न च पितॄन्देवान्; M1 श्राद्धैर्देवांश्च च पितॄन्. — d) B Dc Dn D4. 6 दैवतानीह (Dc °नि च) मानवाः.

**46** a) D1. 2 शिष्यो (for श्रोता). — cd) B2. 3 D (except D1–3) जना° (for नरा°). S (except T2 G2. 3) तमोग्रस्तास्तदा लोका भविष्यंति नरा°.

**47** a) S भवति (for भविता). Dc भवितायुश्च परमस्. — b) K4 नव- (for तदा). — c) D3 विमोक्ष्यंते. — d) $= 35^{d}$, etc. Ś1 K D1. 3. 5 प्रत्युपस्थिते; B1–3 Dn D4. 6 समुप°; B4 पर्यंव°.

**48** a) Ś1 K1–3 Dc2 D5 पंचमेप्यथ वा (K3 D5 °मे वाथ वा; Dc1 °मे वा तथा) पष्ठ. — b) Ś1 K1. 2 M प्रजास्यते; K3 D3. 5 G1 प्रजायते; K4 प्रयास्यति. — d) B3 T1 M तथा (for तदा). K4 D1. 3. 5 प्रजनि(D3 °यि)ष्यंति वै नराः.

**49** a) B4 S पत्यौ (G1 M °तौ) पत्नी (for पत्यौ स्त्री तु). D3 न (for तु). — c) B4 पुरुषव्याघ्र; T2 G3. 4 नरशार्दूल. — d) D3 सतोषं; T1 न दोषं (for न तोषं). B4 उपगच्छति.

**50** a) D5 अद्रव्या च (for अल्पद्रव्या). S (except M1) अल्पद्रव्यो वृथालिंगाः. — b) T1 G1. 4 M2 हिंसां. S प्रचरिष्यति.

**51** =(var.). 3. 186. 36. — Dn3 G4 om. (hapl.) 51. — a) Ś1 K1. 2 अट्टशीला. — b) Ś1 K1. 2 शवशीलाश्च. K1. 2 चतुष्पदाः. — c) B1 भविष्यंति (for स्त्रिय°). T2 G2. 3 M1 चैव (for चापि). Ś1 योषितः केशशीलाश्च; K D1–3. 5 T1 G1 प्रमदाः केशशूलाश्च (K1. 2 °शीलाश्च; K4 D5 °शूलिन्यः). — d) Dc1 युगे युगे (for युगक्षये). B1 स्त्रियश्चानागते युगे.

**52** a) B1 G1 म्लेच्छाः शूराः; B2. 4 Dn D4. 6 म्ले(Dn2 म्लें)च्छाचाराः; D1 म्लेंच्छाः क्रूराः. Dc D1 सर्वभक्ष्या. — d) Ś1 K1. 2 मानवा (for मनुजा). T1 G1 मनुजा मनुजर्षभ (G1 °जाधिप).

**53** b) K4 कांचनं; B3. 4 S वंचनां. — d) B D (except D1–3. 5) वित्तलोभात्. K4 हरिष्यति; G4 भविष्यति.

**54** a) Ś1 K2 विज्ञाय (for [अ]विज्ञाय). — b) Ś1 K1. 2 कारयंति; Dc करिष्यति. K4 D3 तदा क्रियाः; S

C. 3. 13064
B. 3. 190. 56
K. 3. 190. 56

स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशङ्किनः ।
भवितारो जनाः सर्वे संप्राप्ते युगसंक्षये ॥ ५५
आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः ।
भविता संक्षयो लोके जीवितस्य च देहिनाम् ॥ ५६
तथा लोभाभिभूताश्च चरिष्यन्ति महीमिमाम् ।
ब्राह्मणाश्च भविष्यन्ति ब्रह्मस्वानि च भुञ्जते ॥ ५७
हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः ।
त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम् ॥ ५८
जीवितान्तकरा रौद्राः क्रूराः प्राणिविहिंसकाः ।
यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम् ॥ ५९
आश्रयिष्यन्ति च नदीः पर्वतान्विषमाणि च ।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ॥ ६०
दस्युप्रपीडिता राजन्काका इव द्विजोत्तमाः ।
कुराजभिश्च सततं करभारप्रपीडिताः ॥ ६१
धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये ।
विकर्माणि करिष्यन्ति शूद्राणां परिचारकाः ॥ ६२
शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः ।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः ॥ ६३
विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ।
एडूकान्पूजयिष्यन्ति वर्जयिष्यन्ति देवताः ।
शूद्राः परिचरिष्यन्ति न द्विजान्युगसंक्षये ॥ ६४
आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च ।

---

(except $G_1$ $M_1$, $G_2$ *inf. lin.*) क्रियास्तदा. — $^c$) Ś$_1$ कुर्वंति; $K_{3.4}$ $D_{2.3}$ $G_1$ $M_2$ वर्तंतो; $M_1$ वर्धंते. — $^d$) $K_3$ पर्यवस्थिते; $K_4$ $D_{3.5}$ प्रत्युप°; B Dc Dn $D_{4.6}$ समुप°.

**55** $^a$) $K_3$ $D_{1.3.5}$ स्वभावक्रूर°. — $^b$) $B_{1-3}$ Dn $D_{4.6}$ अभिशंसिनः; $B_4$ T $G_{2-4}$ अभिशंकिताः. — $^c$) Ś$_1$ भावितारो. $G_1$ नरा राजन् (for जनाः सर्वे). — $^d$) $B_1$ प्राप्ते च (for संप्राप्ते). $B_4$ Dn $D_5$ $G_1$ संप्राप्ते तु ($D_5$ वै; $G_1$ सं-)युगक्षये.

**56** $^a$) $K_2$ $D_3$ $M_2$ आरामाश्च. $K_4$ $D_{1-3}$ चैत्य- (for चैव). $M_1$ चैत्यान् (for वृक्षान्). — $^b$) $K_4$ नाशयिष्यति सर्वथा. — $^c$) B Dn $D_{4.6}$ संशयो (for संक्षयो). — $^d$) B Dc Dn $D_{4.6}$ हि (for च).

**57** $^a$) $K_4$ $D_5$ यथा (for तथा). — $^b$) $T_1$ भवि° (for चरि°). N भविष्यंति नरा नृप (Dc नराधिप). — $^c$) B Dc Dn $D_{4.6}$ $T_1$ M ब्राह्मणांश्च. B Dc Dn $D_{4.6}$ $G_1$ हनिष्यंति; $D_3$ क्षयि°; $T_1$ M वधि°. — $^d$) $G_1$ [अ]पि (for च). $B_4$ $G_4$ $M_2$ भोक्ष्यते (for भुञ्जते). Ś$_1$ $K_{1-3}$ ब्राह्मणस्वो($K_{2.3}$ °श्वो)-पजीविनः; $K_4$ $B_{1-3}$ D ब्राह्मणस्वो(Dc $D_5$ °श्वो)पभोगिनः; $T_1$ ब्राह्मणान्नानि भुंजते.

**58** $^a$) $K_3$ $M_1$ हाहाभूता; $D_2$ हाहा कृत्वा. — $^d$) $K_4$ $T_1$ भवि° (for भ्रमि°). $T_2$ G विद्रविष्यंति गामिमां ($G_1$ भविष्यंति महीसुराः).

**59** $^{ab}$) $B_{2.3}$ Dc Dn $D_{4.6}$ S (except $G_1$ $M_2$) transp. रौद्राः and क्रूराः. $B_1$ क्षुद्राः (for क्रूराः). Ś$_1$ $K_2$ प्राणविहिंसकाः; $D_{1-3}$ प्राणिविहिंसि($D_3$ °हंस)काः; $T_2$ $G_{2-4}$ प्राण्युपहिंसकाः. $B_4$ प्राणिनां हिंसकास्तथा; $D_5$ प्राणिनां च विहिंसकाः. — After $59^{ab}$, $K_4$ reads $63^{ab}$. — $^d$) $D_5$ संक्षिप्स्यते; S संपत्स्यते. $K_3$ $D_4$ सुखं; $K_4$ $B_3$ $D_{1-3}$ कलिः; $D_6$ जगत् (for युगम्).

**60** $^a$) S (except $G_1$) नदीं. Ś$_1$ $K_{1.2}$ आश्रयंति नदीश्चैव. — $^b$) $T_2$ $G_{2-4}$ विषमानपि (for विषमाणि च). — $^c$) $D_{1.2}$ प्रबाध्यमाना; $T_2$ $G_{1.3}$ वृथा($G_1$ प्रिया)वमाना. — $^d$) $T_1$ $G_1$ प्रजाः (for द्विजाः).

**61** $^a$) $K_4$ $D_{3.5}$ दस्युप्रपीडनाद्राजन् ($D_5$ °द्राज्ञः); B Dc Dn $D_{4.6}$ $G_1$ दस्युभिः पीडिता ($B_4$ दंडप्रपीडिता) राजन्. — $^b$) $T_1$ $G_1$ द्विजातयः; $T_2$ $G_{2-4}$ तदा द्विजाः (for द्विजो°). — $D_1$ om. $61^{cd}$. — $^d$) $K_4$ करभारावपीडिताः; $T_2$ $G_3$ करहारप्रपी°.

**62** $^a$) $T_1$ वैरं (for धैर्यं). $G_1$ कृत्वा (for त्यक्त्वा). — $^c$) $G_1$ $M_1$ चरि° (for करि°). — $^d$) $T_2$ G शूद्राश्च.

**63** $K_4$ reads $63^{ab}$ after $59^{ab}$. — $^a$) $K_4$ $D_{3.5}$ S (except $M_1$) धर्मान् (for धर्मं). $D_{1.2}$ करिष्यंति; $G_4$ प्रचक्ष्यन्ति; $M_1$ प्रवक्ष्यंते. — $^b$) Ś$_1$ $K_{1.2}$ ब्राह्मणाः परिचारकाः; Dc °णाः पर्युपासते; S न द्विजा युगसंक्षये. — $G_4$ om. $63^{cd}$. — $^d$) $K_2$ प्रमाणेन.

**64** $^a$) Ś$_1$ $K_2$ $Dc_2$ $Dn_3$ कालो° (for लोको°). — $^b$) Ś$_1$ $K_2$ $D_5$ $T_1$ $G_1$ $M_1$ [अ]धरोत्तरं; $T_2$ $G_{2-4}$ नरोत्तम. — After $64^{ab}$, M ins.:

949* धर्माचारपरिभ्रष्टा लोभमोहसमन्विताः ।
[ $M_2$ °भ्रष्टो लोभाचारसमन्वितः. ]

— $^c$) $K_{1.2}$ $D_1$ ऐडूकान्; $K_3$ $D_4$ एड°; $K_4$m गोखलान्; $T_1$ जालूकान्; $T_2$ $G_{2.3}$ M जालू°; $G_1$ जालय°; $G_4$ जलू° (cf. v.l. 66). $G_2$ पूरयिष्यंति. — $^d$) Ś$_1$ $K_{1-3}$ $D_5$ नार्चं° (for वर्जं°). — $^e$) $D_5$ शूद्रान्. $T_1$ $G_1$ M शूद्रानभिभवि($T_1$ °वदि)ष्यंति; $T_2$ $G_{2-4}$ शूद्राश्च प्रभविष्यंति. — $^f$) $D_5$ ते (for न). $Dn_3$ $D_5$ S (except $M_2$) द्विजाः. K $D_1$ उप° (for युग°).

देवस्थानेषु चैत्येषु नागानामालयेषु च ॥ ६५
एडूकचिह्ना पृथिवी न देवगृहभूषिता ।
भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ॥ ६६
यदा रौद्रा धर्महीना मांसादाः पानपास्तथा ।
भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम् ॥ ६७
पुष्पे पुष्पं यदा राजन्फले फलमुपाश्रितम् ।
प्रजास्यति महाराज तदा संक्षेप्स्यते युगम् ॥ ६८
अकालवर्षी पर्जन्यो भविष्यति गते युगे ।
अक्रमेण मनुष्याणां भविष्यति तदा क्रिया ।
विरोधमथ यास्यन्ति वृपला ब्राह्मणैः सह ॥ ६९
मही म्लेच्छसमाकीर्णा भविष्यति ततोऽचिरात् ।
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश ॥ ७०
निर्विशेषा जनपदा नराबृष्टिभिरर्दिताः ।
आश्रमानभिपत्स्यन्ति फलमूलोपजीविनः ॥ ७१
एवं पर्याकुले लोके मर्यादा न भविष्यति ।
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः ॥ ७२
आचार्योपनिधिश्चैव वत्स्यते तदनन्तरम् ।
अर्थयुक्त्या प्रवत्स्यन्ति मित्रसंबन्धिबान्धवाः ।
अभावः सर्वभूतानां युगान्ते च भविष्यति ॥ ७३
दिशः प्रज्वलिताः सर्वा नक्षत्राणि चलानि च ।
ज्योतींषि प्रतिकूलानि वाताः पर्याकुलास्तथा ।
उल्कापाताश्च बहवो महाभयनिदर्शकाः ॥ ७४
षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः । C 3. 13097 B. 3. 190. 73 K. 3. 193. 73

---

**65** $^{b}$) T$_1$ द्विजानामालयेषु च.

**66** $^{a}$) K$_{1.2}$ ऐडूक° ; S जाळूक° (cf. v.l. 64). — $^{b}$) Ś$_1$ K$_{1.2}$ °भूषणा ; D$_{1.2}$ °भूमिका (for °भूषिता). — $^{c}$) Dc$_1$ G$_{1.2.4}$ M$_1$ भविष्यंति.

**67** $^{a}$) T$_2$ G$_{1.3.4}$ यथा (for यदा). B$_2$ कर्महीना ; T$_1$ गुणैर्हीना. — $^{b}$) Dc मत्स्यादाः ; T$_1$ मांसाशाः. T$_1$ पशव° (for पानपा°). — $^{c}$) Ś$_1$ K D$_{1-3.5}$ पापास् (for नित्यं). — $^{d}$) S (except G$_1$) संपत्स्यते (for संक्षे°). K$_3$ सुखं ; D$_3$ कलिः ; D$_6$ जगत् (for युगम्).

**68** T$_2$ G$_3$ om. (hapl.) 68. — $^{a}$) Dn D$_{4.6}$ transp. पुष्पे and पुष्पं. D$_6$ महाराज (for यदा राजन्). — $^{b}$) B D (except D$_{1-3.5}$) फले वा फलमाश्रितं. — $^{c}$) K$_4$ D$_3$ जनिष्यते ; D$_2$ जनिष्येत ; D$_5$ जनिष्यति (for प्रजा°). G$_1$ M नरश्रेष्ठ (for महा°). G$_{2.4}$ प्रजायते नरश्रेष्ठ. — $^{d}$) S (T$_2$ G$_3$ om.) संपत्स्यते (for संक्षेप्स्यते). K$_4$ D$_{2.3}$ कलिः ; D$_5$ जगत् ; G$_1$ कृतं (for युगम्).

**69** G$_4$ om. 69$^{abcd}$. — $^{b}$) K$_{1.2}$ B$_1$ D$_5$ T G (G$_4$ om.) युगक्षये ; B$_2$ (by transp.) युगे गते ; Dc M$_2$ युगे युगे. — $^{d}$) K$_{2.4}$ B D (except D$_{1.5}$) G$_1$ भविष्यंति तदा क्रियाः (G$_1$ क्षयाः). — $^{e}$) G$_1$ क्रियाविरोधं यास्यंति. — $^{f}$) T$_2$ G$_{2-4}$ M$_1$ (*sup. lin.* as in text) ब्राह्मणा वृषलैः सह.

**70** $^{a}$) B$_{1-3}$ Dc Dn D$_{3.4.6}$ म्ले(Dn$_2$ म्लें)छजनाकीर्णा ; B$_4$ G$_2$ म्लेछगणा° ; T$_1$ G$_1$ M म्लेछकुला°. — $^{b}$) B$_1$ T$_1$ तदाचिरात् ; D$_1$ युगक्षये. — $^{d}$) Ś$_1$ K$_{1.2.4}$ B$_1$ D$_{2.3.5}$ गमि° ; K$_3$ D$_1$ नशि° ; Dc$_2$ वसि° ; T G व्रजि° (G$_1$ द्रवि°) (for भजि°). — After 70, S ins.:

950* अन्यायवर्तिनश्चापि भविष्यन्ति नराधिपाः ।

**71** $^{b}$) Ś$_1$ K$_{3.4}$ D$_{1-6}$ तदा विष्टि(Ś$_1$ विद्धि ; K$_3$ D$_{1.3}$ वृष्टि)करार्दिताः ; K$_{1.2}$ B Dn तथा वि(B$_{1.2}$ वृ)ष्टिकरा° ; Dc यदा विष्टिकरा° ; T$_1$ G$_1$ M अनावृष्टिभिर(G$_1$ °भया)र्दिताः. — $^{c}$) B$_{2-4}$ Dn D$_{4.6}$ उपलप्स्यंति ; Dc D$_2$ अभिपश्यंति ; T$_1$ नाभिपत्स्यंति ; M$_2$ अभिवत्स्यंति. — $^{d}$) K$_4$ D$_{1.2}$ वृषला ब्राह्मणैः सह (=69$^{f}$).

**72** After 72$^{ab}$, S (except G$_4$) ins.:

951* ब्राह्मणाः क्षत्रिया वैश्याः परित्यक्ष्यन्ति सक्रियाम् ।

— $^{c}$) Ś$_1$ K$_{1.2}$ °देशे तु ; K$_3$ T$_2$ G$_{1.3.4}$ °देशेन (for °देशे च).

**73** $^{a}$) T$_2$ G आचार्योपाधिन(G$_1$ °पचिति)श्चैव. — $^{b}$) B$_{2.3}$ Dn D$_{3.6}$ भत्स्यंते ; Dc D$_4$ वत्स्यंते ; D$_1$ T$_2$ G$_{2.3}$ वत्स्यंते ; D$_5$ विद्यते. — $^{c}$) K$_{1.4}$ D$_5$ T$_1$ G$_1$ अर्थयुक्ताः ; T$_2$ G$_{2-4}$ °युक्तान्. K$_1$ भविष्यंति ; S (except T$_1$ M$_1$) प्रपत्स्यंति. — $^{e}$) Ś$_1$ K$_{1.2}$ अभावः सर्वभावानां ; Dc स्वभावः सर्वभूतानां. — $^{f}$) B D (except D$_{1.3.5}$) सं- (for च).

**74** $^{b}$) B (B$_1$ marg.) D (except D$_{1-3}$) [अ]प्रभाणि च (B$_1$ orig. चराणि च) ; T$_1$ दिशो दश ; T$_2$ G जलानि च (for चलानि च). — $^{c}$) Ś$_1$ K D$_{1-3.5}$ ज्योतींषि प्रतिलोमानि ; B$_{1.3}$ Dc S प्रधूपितानि ज्योतींषि. — G$_4$ om. 74$^{e}$–75$^{d}$. — $^{f}$) Ś$_1$ K B$_4$ D$_{1-3.5}$ G$_1$ °निदर्शनाः.

**75** G$_4$ om. 75$^{abcd}$ (cf. v.l. 74). — $^{b}$) D$_5$ प्रतपिष्यति भास्करः (by transp.). — $^{c}$) B$_4$ उल्काश्चापि सनिर्ह्रादा. — $^{d}$) K$_{1.2}$ निर्दाहा° ; G$_2$ दीनाभा° (for दिग्दा-

C 3. 13087 B 3. 190. 79 K. 3. 193. 78 कबन्धान्तर्हितो भानुरुदयास्तमये तदा ॥ ७५
अकालवर्षी च तदा भविष्यति सहस्रदृक् ।
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ७६
अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः ।
भर्तृणां वचने चैव न स्थास्यन्ति तदा स्त्रियः ॥ ७७
पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये ।
सूदयिष्यन्ति च पतीन्स्त्रियः पुत्रानपाश्रिताः ॥ ७८
अपर्वणि महाराज सूर्यं राहुरुपैष्यति ।
युगान्ते हुतभुक्चापि सर्वतः प्रज्वलिष्यति ॥ ७९
पानीयं भोजनं चैव याचमानास्तदाध्वगाः ।
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते ॥ ८०
निर्घातवायसा नागाः शकुनाः समृगद्विजाः ।
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ८१
मित्रसंबन्धिनश्चापि संत्यक्ष्यन्ति नरास्तदा ।
जनं परिजनं चापि युगान्ते पर्युपस्थिते ॥ ८२
अथ देशान्दिशश्चापि पत्तनानि पुराणि च ।
क्रमशः संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ८३
हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः ।
विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ॥ ८४
ततस्तुमुलसंघाते वर्तमाने युगक्षये ।

---

हा° ). — $T_2$ $G_3$ om. $75^{e}$–$76^{d}$. — $^{e}$) $K_{3.4}$ $D_{1-3.5}$ कबंधांतरितो. — $^{f}$) B D (except $D_{1-3}$) $M_2$ °स्तमने; G ($G_3$ om.) °स्तमयौ. $K_1$ यथा; $K_2$ $D_5$ G ($G_4$ om.) तथा; $K_4$ $D_{2.3}$ सदा (for तदा).

**76** $T_2$ $G_{3.4}$ om. 76 (for $T_2$ $G_3$ cf. v.l. 75). — $^{a}$) B D (except $D_{1-3.5}$) भगवान् ($B_4$ पर्जन्यः) (for च तदा). — $^{b}$) $G_{1.2}$ युगक्षये (for सहस्र°). — $^{c}$) $G_1$ रोहंति. — $^{d}$) Ś$_1$ K $D_{3.5}$ प्रत्यु°; $T_1$ M समु° (for पर्यु°). $G_1$ संप्राप्ते च युगक्षये.

**77** $^{a}$) $T_1$ $G_4$ अभीक्ष्ण-. Dc कर्म° (for क्रूर°). — $^{b}$) $K_1$ B $D_{1.6}$ $G_{1.2}$ पुरुषा (for प°). $K_1$ $Dc_2$ °प्रियः; $K_{3.4}$ $D_{3.4}$ °प्रिया. — $^{d}$) $T_2$ $G_{2-4}$ स्थास्यंते. Ś$_1$ K $D_{1.2.5}$ स्त्रियस्तदा (by transp.); $B_2$ $Dn_1$. $n_3$ ततः स्त्रियः; $B_4$ स्त्रियस्तथा.

**78** $G_4$ om. $78^{ab}$. — $^{b}$) $K_1$ $M_1$ हरिष्यंति; $T_1$ भवि°; $T_2$ $G_{2.3}$ न रक्षंति. — $^{c}$) $T_1$ नादरिष्यंति (for सूदयि°). $G_1$ पशून्; $M_1$ पतिं. — $^{d}$) Ś$_1$ $K_4$ $D_{1.2}$ $G_1$ $M_1$ उपाश्रिताः; $T_2$ $G_{2-4}$ उपासिताः.

**79** $^{b}$) $K_{2-4}$ $D_{3.5}$ S उपेष्यति; $D_{1.2}$ ग्रसि°. — $^{c}$) $K_{3.4}$ $B_4$ $D_{1-3.5}$ $M_2$ क्षयांते (for युगान्ते). $K_{2.3}$ $Dn_2$. $n_3$ $D_3$ वापि (for चापि). — $^{d}$) $B_4$ प्रभविष्यति.

**80** $G_4$ om. 80. — $^{a}$) B D (except $D_{1-3.5}$) चापि (for चैव). — $^{b}$) $K_{1.2}$ $D_5$ $T_1$ $M_1$ तथा (for तदा). $T_2$ $G_{1-3}$ नराः (for [अ]ध्वगाः). $K_{3.4}$ $D_{1-3}$ याचमानस्तथाध्वगः. — $^{c}$) Ś$_1$ $K_{1.2}$ $T_1$ $G_1$ लप्स्यंति; $K_3$ लप्स्यति; $K_4$ $D_{1-3}$ लप्स्यते. $T_1$ $G_1$ निवासांश्च. — $^{d}$) $K_{3.4}$ $D_{1-3}$ निरस्तः. $K_{3.4}$ $D_{1.5}$ शेष्यते.

**81** $D_3$ om. $81^{a}$–$82^{b}$. — $^{a}$) $K_{1.3.4}$ Dc $Dn_3$ $D_{1.2.6}$ $T_1$ $G_1$ M निर्घाता (for निर्घात-). $T_2$ $G_{2-4}$ निरस्ता वायुना गावः. — $^{b}$) $K_4$ $D_2$ शकुंताः (for शकुनाः). — $^{d}$) $K_{3.4}$ $D_5$ प्रत्यु°; $B_1$ समु° (for पर्यु°).

**82** $D_3$ om. $82^{ab}$ (cf. v.l. 81); $K_3$ $M_2$ om. (hapl.) 82–83; $G_4$ om. (hapl.) 82. — $^{a}$) $T_2$ $G_{2.3}$ मित्रान् (for मित्र-). $D_1$ सर्वान् (for चापि). — $^{b}$) Ś$_1$ $K_{1.2.4}$ $B_1$ $D_{1.2.5}$ नराः संत्यज्य शेरते; S ($G_4$ $M_2$ om.) संत्यजंति नरास्तथा ($G_1$ $M_1$ °दा). — $^{c}$) Ś$_1$ $K_{1.2.4}$ $D_{2.3.5}$ दारान्; $D_1$ खेदात्; $T_2$ $G_{2.3}$ जनः (for जनं). Dc $T_2$ $G_3$ परिजनश्च. T G ($G_4$ om.) चैव (for चापि). — $^{d}$) Ś$_1$ $K_4$ $D_{2.3.5}$ प्रत्यु°; $B_1$ $Dc_2$ समु° (for पर्यु°). T $G_{2.3}$ $M_1$ सत्यं च युगसंक्षये; $G_1$ संत्यजंति युगक्षये.

**83** Ś$_1$ $K_{1-3}$ $M_2$ om. 83 (Ś$_1$ $K_{1.2}$ hapl.; for $K_3$ $M_2$ cf. v.l. 82). — $^{a}$) T $G_{2.3}$ देशा. $K_4$ $B_4$ $D_{1-3.5}$ S ($M_2$ om.) चैव (for चापि). — $^{b}$) $B_1$ वनानि च (for पत्तनानि). $T_1$ वनानि; $T_2$ $G_{2-4}$ [आ]पणानि (for पुराणि). — $^{c}$) $T_2$ $G_{2-4}$ संल° (for संश्र°). — $^{d}$) $K_4$ $D_{3.5}$ प्रत्यु°; $B_{1.4}$ $M_1$ समु° (for पर्यु°).

**84** $G_4$ om. 84–85. — $^{a}$) Ś$_1$ $K_2$ $G_1$ सुतेत्येव; $B_4$ भ्रातरिति. — $^{c}$) $K_1$ $D_1$ $G_2$ $M_2$ विक्रोशमाना°. — $^{d}$) Ś$_1$ $K_{1.2}$ $Dc_2$ जनौघः (for जनो गां). $T_2$ $G_{2.3}$ जनोयं प्रवदिष्यति; $G_1$ परितप्स्यंति भारत. — T G $M_1$ (om. line 2) ins. after 84 ($G_4$, which om. 84, ins. line 2 only after 83):

952* भोवादिनस्तथा शूद्रा ब्राह्मणाः प्राकृतप्रियाः ।
पाषण्डजनसंकीर्णा भविष्यन्ति युगक्षये ।

**85** $G_4$ om. 85 (cf. v.l. 84); $T_2$ $G_{2.3}$ om. (hapl.) $85^{ab}$. — $^{a}$) $M_1$ लोके (for ततस्). $D_{2.3}$ तुमल°; $T_1$ तुमलसंयुक्ते. — $^{b}$) Ś$_1$ $K_{1-3}$ $B_{1.4}$ $Dc_2$ $D_3$ $T_1$ $M_2$ जन° (for युग°). — $^{c}$) $T_1$ विजातिपूर्वको लोकं. — $^{d}$) $B_1$

द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति ॥ ८५
ततः कालान्तरेऽन्यस्मिन्पुनर्लोकविवृद्धये ।
भविष्यति पुनर्दैवमनुकूलं यदृच्छया ॥ ८६
यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम् ॥ ८७
कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ।
प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः ।
क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ॥ ८८
कल्किर्विष्णुयशा नाम द्विजः कालप्रचोदितः ।
उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ॥ ८९
संभूतः सम्भलग्रामे ब्राह्मणावसथे शुभे ।
मनसा तस्य सर्वाणि वाहनान्यायुधानि च ।
उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च ॥ ९०
स धर्मविजयी राजा चक्रवर्ती भविष्यति ।
स चेमं संकुलं लोकं प्रसादमुपनेष्यति ॥ ९१
उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः ।
स संक्षेपो हि सर्वस्य युगस्य परिवर्तकः ॥ ९२
स सर्वत्र गतान्क्षुद्रान्ब्राह्मणैः परिवारितः ।
उत्सादयिष्यति तदा सर्वान्म्लेच्छगणान्द्विजः ॥ ९३ C. 3. 13106 B. 3. 190. 97 K. 3. 193. 93

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

संभविष्यति; $D_{2.3}$ न भवि°; $T_2$ $G_{2.3}$ प्रपति°. $D_5$ विक्रमेण भविष्यति; $G_1$ क्रमशः प्रपतिष्यति.

**86** $^a$) Ś$_1$ $K_{1\ 2}$ $G_{1.4}$ तस्मिन् (for ऽन्यस्मिन्). — $^b$) $T_2$ (before corr.) लोकः प्रसिध्यति; $T_2$ (after corr.) $G_{2-4}$ लोकप्रसिद्धये. — $^c$) A few MSS. पुनर्देवम्. $G_1$ भविष्यंति पुनः सर्वे. — $^d$) $G_1$ नरा दैवं (for अनुकूलं).

**87** $^a$) $D_5$ यावच्; $G_4$ यथा (for यदा). $Dc_1$ Dn $D_{4.6}$ transp. चंद्रः and सूर्यः. — $^b$) $B_1$ तदा; $D_1$ $G_2$ यदा; $G_4$ यथा (for तथा). $K_2$ $Dn_2$ तिष्यं बृहस्पतिः; $K_4$ (marg. *sec. m.*) $D_{1.5}$ (marg.) $M_1$ शुक्रबृहस्पती; Dc तिष्ये बृह°; $G_1$ शुक्रो बृहस्पतिः. — $^c$) Ś$_1$ $K_{1-3}$ $D_1$ एकरात्रे ($K_2$ $D_1$ °त्रौ); $D_3$ एकराशीं. — $D_2$ om. (hapl.) from न्ति up to भविष्य in $88^d$. — $^d$) Ś$_1$ $D_3$ प्रपश्यंति; $K_1$ $Dc_2$ प्रपत्स्यंति; $K_3$ प्रवत्स्यति; $B_2$ $D_1$ $M_1$ भविष्यति; T $G_{2.3}$ संपत्स्य($T_1$ °त्स्यं)ति. $G_1$ $M_2$ तदा संपत्स्यते कृतं.

**88** $D_3$ om. up to भविष्य in $88^d$ (cf. v.l. 87). — $^{cd}$) Ś$_1$ K $D_{1-3.5}$ चैव (for चापि). Ś$_1$ $K_{1.2}$ च लोमशः; $B_4$ सुखावहाः (for [अ]नुलोमगाः). $T_2$ G दक्षिणानि भविष्यंति पूज($G_1$ प्रजा)यंतः परस्परं (see below). — For $88^{cd}$, $T_1$ M subst.:

953* दक्षिणानि भविष्यन्ति ग्रहाश्चाप्यनुलोमगाः ।
प्रदक्षिणा भविष्यन्ति पूजयन्तः परस्परम् ।

— $^f$) $D_2$ $M_1$ भविष्यंति. $B_4$ न संशयः; $G_1$ तदा कृतं (for निरामयम्).

**89** $^a$) B $Dn_1$. $n_3$ $D_{4-6}$ S (except $G_1$) कल्की. $K_3$ $D_2$ विष्णुयशो. — $^b$) $D_1$ °प्रयो°; $D_5$ °प्रणो° (for °प्रचो°). — $^c$) $K_4$ Dc $D_3$ S (except $T_1$ $G_1$) उत्पत्स्यति. $D_5$ महाबाहुर्. — $^d$) $K_3$ $D_5$ °बल°.

**90** $^a$) $G_1$ संभूतः. $K_{1.4}$ $D_{1.2}$ शंभलग्रामे; $K_2$ संवल°; T $G_{2-4}$ $M_2$ शंबळ°; $G_1$ संगळ°; $M_1$ शंभळ°. — After $90^{ab}$, S ins.:

954* महात्मा वृत्तसंपन्नः प्रजानां हितकृन्नृप ।

— $^d$) $T_1$ सुबहून्यायुधानि च; $G_{1.2.4}$ बहुनानायुधानि च. — $G_2$ om. (hapl.) $90^{ef}$. — $^e$) $K_3$ भूताश्च; Dc योधांश्च; $T_1$ योगं च; $T_2$ (before corr.) $G_4$ योगैश्च; $G_1$ $M_1$ योगाश्च.

**91** $^a$) Ś$_1$ स सर्व°; $B_2$ स्वधर्म°. $T_1$ $G_1$ $M_1$ राजन् (for राजा). — $^b$) $D_{1.2}$ महायशाः (for भवि°). — $^c$) $B_1$ S सकलं (for संकुलं). Ś$_1$ $K_{1.2}$ स एवेदं कुलं सर्वं; $K_{3\ 4}$ $D_{1-3.5}$ स चेदं संकुलं सर्वं.

**92** $^a$) $K_2$ $D_3$ उच्छ्रितो; $G_2$ उत्स्थितो. — $^b$) Ś$_1$ K $D_{1-3.5}$ कालांत°; $G_1$ क्षत्रांत°; $G_2$ युगांत° (for क्षयान्त°). — $^c$) $B_{1.3}$ Dc $Dn_3$ $T_1$ $G_{1.2.4}$ M संक्षेपो ($B_1$ $Dn_3$ संक्षेपे; $B_3$ संक्षये; $T_1$ संक्षेसा) हि स सर्वस्य; $B_2$ $Dn_1$. $n_2$ $D_{4.6}$ संक्षेपको हि सर्वस्य; $B_4$ समक्षाय हि सर्वस्य; $T_2$ $G_3$ संक्षेपे स हि सर्वस्य. — $^d$) $K_4$ परिवर्तते.

**93** $D_2$ om. 93. — $^a$) S गतः ($T_1$ °तैः) क्षुद्रान्. — $^c$) $T_2$ $G_{2.4}$ उद्घात°; $G_3$ उद्भूत° (for उत्साद°). — $^d$) Ś$_1$ $K_{1.2}$ B D (except $Dc_2$ $D_{1.3}$) सर्व- (for सर्वान्).

Colophon om. in Ś$_1$ $K_{1-3}$. — *Major parvan:* $Dn_2$ $T_2$ $G_{2-4}$ आरण्य. — *Sub-parvan:* $G_1$ $M_2$ मार्कंडेयसमास्या. $K_4$ $B_{2-4}$ Dc Dn $D_{2.3}$ (all om. sub-parvan name) mention only भविष्य; and $D_4$, likewise, only भविष्यत्. — *Adhy. name:* $D_1$ भविष्यकथनं; $G_1$ युगधर्मकथनं. — *Adhy. no.* (figures, words or both): Dn 189 ($Dn_3$ 190); $D_1$ 196; S ($M_2$ *inf. lin.*) 192 ($M_2$

# १८९

C. 3. 13107
B. 3. 191. 1
K. 3. 194. 1

मार्कण्डेय उवाच ।

ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् ।
वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति ॥ १
स्थापयित्वा स मर्यादाः स्वयंभुविहिताः शुभाः ।
वनं पुण्ययशःकर्मा जरावान्संश्रयिष्यति ॥ २
तच्छीलमनुवर्त्स्यन्ते मनुष्या लोकवासिनः ।
विप्रैश्चोरक्षये चैव कृते क्षेमं भविष्यति ॥ ३
कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च ।
स्थापयन्विप्रशार्दूलो देशेषु विजितेषु च ॥ ४
संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान् ।
कल्किश्चरिष्यति महीं सदा दस्युवधे रतः ॥ ५
हा तात हा सुतेत्येवं तास्ता वाचः सुदारुणाः ।
विक्रोशमानान्सुभृशं दस्यून्नेष्यति संक्षयम् ॥ ६
ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत ।
भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ॥ ७
आरामाश्चैव चैत्याश्च तटाकान्यवटास्तथा ।
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे ॥ ८
ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः ।

---

orig. 195). — *Śloka no.:* Dn1 96; Dn2 97; Dn3 D1 98.

## 189

**1** a) Ś1 K1. 2. 4 D (except D1) चौरक्षयं. — c) K1 B2 Dc2 D1 T2 G3 °मेध-; K2 °मेधो; B1 °मेधैर्; G3. 4 °मेधं (for °मेधे). B1 °यज्ञैर्; T2 G2–4 °यज्ञं (for °यज्ञे). — d) G1 कालयिष्यति.

**2** K3 om. (hapl.) 2. — a) B D (except D1–3. 5) च (for स). — b) A few MSS. स्वयंभू°. Ś1 K1. 2 तदा; B4 प्रभुः (for शुभाः). — c) T1 G3 पुनः (for वनं). G1. 2. 4 पुनः (G1 वनं) पुण्ययशः कर्म. — d) B4 जरायां; T G1 जरया; M विधिवत् (for जरावान्). B1–3 Dc Dn रमणीयं प्रवेक्ष्यति.

**3** a) Ś1 K2. 3 M1 अनुवत्स्यंते; K4 Dn2 D2. 3 °वत्स्यंति; B2–4 Dn1. n3 D4–6 °वर्त्स्यंति; D1 T2 G °वर्तंते; T1 M2 °पत्स्यंते (for °वत्स्यन्ते). — b) B1 लोकभाविनः; T2 G लोक(G1 धर्म)चारिणः. — c) G1 विप्रा° (for विप्रै°). D4 चौरक्षयैश्च; D6 चोरक्षयं. Ś1 K Dn D1–3. 5 एवं चौ(D1 चो)रक्षये जाते. — d) Ś1 K D1. 2. 5 महत्; D3 महा- (for कृते).

**4** a) G1 शक्तिं च; M शक्त्यश्च (for शक्ती°). — c) B D (except D1–3. 5) द्विज° (for विप्र°). — d) Ś1 [इ]व जितेषु; Dc विहितेषु; D1 विपिनेषु; T2 G2–4 विविधेषु (for विजितेषु).

**5** a) D6 विप्रेंद्रो. — b) S मानयंश्च (for °यानो). — c) Ś1 K1. 3 कार्किश्च; K4 B2–4 T G2–4 कल्की (for कल्किश्च). B1 (m as in text) चरिष्यति महाबाहुः. — d) Ś1 D5 तदा (for सदा).

**6** a) = 3. 188. 84a. B5 [ए]तत् (for [ए]वं). B1 हा तात हा च पुत्रेति; B2. 3 D (except D1–3. 5) हा मातस्तात पुत्रेति; B4 हा तात हा भ्रातरिति. — b) B4 तदा (for तास्ता). K2 सुदारुणं; M2 च दारुणाः (for सुदा°). — c) K1 M2 विक्रोशमानाः. Ś1 K D1–3. 5 सुबहून् (for सुभृशं). — d) D1 देशान्; G2 शत्रून् (for दस्यून्). K1 स क्षयं; T1 संयुगे (for संक्षयम्).

**7** a) B2 तदा (for ततो). B2 °विनाशं. Ś1 K1. 2 [ऽ]यं (for वै). — c) G1 युगे (for कृते). — d) Ś1 B1. 2 Dc D1. 2. 4. 6 तदा; B3 सदा (for तथा). — After 7, M2 ins. 955*.

**8** a) Ś1 K1. 2 G3 आरामांश्चैव; K3 D1 आश्रमा°; Dc1 आश्रम° (for आरामा°). K1. 2 G1 चैत्यांश्च. — b) Ś1 तडाकान्यवटस्तथा; K1 तडाकान्यवटांस्तथा; K2 तडाकानि वटांस्तथा; K4 B1 D1. 3 तडागान्यवटास्तथा; B2–4 D6 तटागावसथा तथा; Dc Dn D4 तडागावसथास्तथा; D5 तडागाश्च वटास्तथा. — N ins. after 8ab: M2, after 7:

955* पुष्करिण्यश्च विविधा देवतायतनानि च ।

— d) G1 करि° (for भवि°).

**9** a) B1 ब्राह्मणाः क्षत्रिया वैश्या. — c) K4 D1 हत-पाखंडाः; S हत(M1 सह)पाषंडाः. — d) Ś1 K D3. 5 सत्ये तथा; B Dn D4. 6 T1 M2 सत्यजनाः; Dc सत्यप्रियाः; G1 सत्यव्रताः; M1 सत्यरताः (for सत्ये जनाः). D1 महाप्रजाः; D2 सहप्रजाः (for जनाः प्रजाः). T1 तथा; T2 G2–4 तदा

आश्रमाः सहपापण्डाः स्थिताः सत्ये जनाः प्रजाः ॥ ९
जास्यन्ति सर्वबीजानि उप्यमानानि चैव ह ।
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति ॥ १०
नरा दानेषु निरता व्रतेषु नियमेषु च ।
जपयज्ञपरा विप्रा धर्मकामा मुदा युताः ।
पालयिष्यन्ति राजानो धर्मेणेमां वसुंधराम् ॥ ११
व्यवहाररता वैश्या भविष्यन्ति कृते युगे ।
षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः ॥ १२
शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च ।
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा ।
पश्चिमे युगकाले च यः स ते संप्रकीर्तितः ॥ १३
सर्वलोकस्य विदिता युगसंख्या च पाण्डव ।
एतत्ते सर्वमाख्यातमतीतानागतं मया ।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम् ॥ १४
एवं संसारमार्गा मे बहुशश्चिरजीविना ।
दृष्टाश्चैवानुभूताश्च तांस्ते कथितवानहम् ॥ १५
इदं चैवापरं भूयः सह भ्रातृभिरच्युत ।
धर्मसंशयमोक्षार्थं निबोध वचनं मम ॥ १६
धर्मे त्वयात्मा संयोज्यो नित्यं धर्मभृतां वर ।
धर्मात्मा हि सुखं राजा प्रेत्य चेह च नन्दति ॥ १७
निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ।
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ।
ब्राह्मणो रुषितो हन्यादपि लोकान्प्रतिज्ञया ॥ १८

वैशंपायन उवाच ।

मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो नृपः ।
उवाच वचनं धीमान्परमं परमद्युतिः ॥ १९ C. 3. 13123 B. 3. 191. 22 K. 3. 194. 21

(for प्रजाः).

**10** a) B2. 3 Dn D4. 6 प्रयं(D4. 6 °जं)ति; S जायंति (for जास्यन्ति). Ś1 K1-3 चैव बीजानि; T2 G सर्वभूतानि. K4 D1-3 जनिष्यंते (D1 °ति) च बीजानि; D5 जनयिष्यंति बीजानि. — b) K1. 2 तप्य° (!); B Dn D4. 6 रोप्यमाणानि; T2 G शुध्य° (G1 वर्ध°) (for उप्य°). Ś1 K भारत; B2 सर्वशः; D5 वै तदा; T1 वै सह (for चैव ह). — d) B1 Dc2 D2. 3. 5 S सर्व-. G1 सर्वशः संभविष्यति.

**11** a) D3 नियता; D5 [अ]भिरता (for निरता). — b) D1. 2 शुभेषु; G1. 2. 4 वृत्तेषु (for व्रतेषु). — G4 om. 11cd. — c) K1. 3 B2. 4 Dn D3. 4. 6 जप्य°; K2. 4 B3 Dc D1 जाप्य° (for जप°). — d) Ś1 °कामा मुदान्विताः; D1 °काम-मुदा युताः; G1 °कामसमायुताः. — Ś1 K1 om. (hapl.) 11e-12d. — f) B1 धर्मेण पृथिवीमिमां.

**12** Ś1 K1 om. 12 (cf. v.l. 11). — a) T2 G °परा (for °रता). — d) K2 B2 Dn D4. 6 विक्रमे (for रक्षणे).

**13** a) K4 शुश्रूषण- (for शुश्रूषायां). — d) T1 [ऽ]पि च (for तथा). — e) Ś1 K1. 2 तु; S यः (for च). — f) Ś1 K2 B3 यश्च ते; K1 यच्च ते; K4 D2. 3 य(K4 त)था ते; D5 यः सत्ये; T1 G2. 4 M स तेयं; T2 G3 सततं; G1 स च ते (for यः स ते). T1 G2. 4 परिकीर्तितः; G1 सुप्रकीर्तितं.

**14** a) K4 सर्वलोकाश्च. D3 G1 विहिता; T G2-4 M2 कथिता (for विदिता). — b) S भारत (for पाण्डव). — d) B D (except Dc D3) तथा (for मया). — f) D5 ऋषिसंमतं; T1 °भि स्तुतं; G1 °संस्कृतं.

**15** a) B1 समागमे चैव; B2 D4. 5 संसारमार्गोयं (D4 °र्गो मे). — b) Ś1 K1. 3 D1. 2. 5 बहव° (for बहुश°). K1. 2 D5 T G2-4 चिरजीविनः. — c) K1. 2 दृष्ट्वा (for दृष्टाश्च). — d) Ś1 K B4 D1. 2 यान् (for तान्). S किं भूयः श्रोतुमिच्छसि.

**16** For 16ab, S subst.:

956* सर्वमेतद्यथातत्त्वं कथितं तव सर्वशः ।

— c) Ś1 K1-3 धर्मसंच(Ś1 °क्ष-; K3 °श्र)य°; B4 धर्मसंशय-बोधार्थं; D1 धनसंक्षयमोक्षार्थं; S धर्मसंशयहेतोश्च.

**17** a) Ś1 K B1. 3. 4 Dc Dn D2. 3 संस्थाप्यो; B2 योक्तव्यो; D5 संस्थेयं (for संयोज्यो). S न तेन्यथात्र (T1 °था च; G1 °थात्मा; M °था स) विज्ञेयो. — b) S धर्मो (for नित्यं). — T1 G1 M om. 17cd. — c) K3 [अ]भि-सुखं (for हि सुखं). K4 नित्यं; B Dc Dn D4. 6 राजन् (for राजा). D1 धर्म्यादनु हि सुखं राज्यात् (sic). — d) Ś1 K Dn1 D1-3. 5 विंदति (for नन्दति).

**18** a) D2 निबोधैतां; T1 °धय; G2 °धत (for °ध च). D3 G4 सुखां (for शुभां). — b) Ś1 K1. 2 B2 प्रवक्ष्यामि च (for यां प्रव°). G1 नृप (for ऽनघ). — c) K3 (by transp.) ब्राह्मणे न. — d) K4 कथं° (for कदा°). — D1 om. 18ef. — e) B1-3 Dc Dn D4-6 कुपितो; D2 [ऽ]पि रुषा (for रुषितो).

**19** b) T1 G1 कुरुराजो युधिष्ठिरः. — c) B4 श्रीमान् (for धीमान्). — d) K4 परमच्युतं; D3 (marg. *sec. m.*) द्युतिमान्नृप.

C 3.13121 B 3.191.22 K 3.191.23 कस्मिन्धर्मे मया स्थेयं प्रजाः संरक्षता मुने ।
कथं च वर्तमानो वै न च्यवेयं स्वधर्मतः ॥ २०

मार्कण्डेय उवाच ।

दयावान्सर्वभूतेषु हितो रक्तोऽनसूयकः ।
अपत्यानामिव स्वेषां प्रजानां रक्षणे रतः ।
चर धर्मं त्यजाधर्मं पितॄन्देवांश्च पूजय ॥ २१
प्रमादाद्यत्कृतं तेऽभूत्सम्यग्दानेन तज्जय ।
अलं ते मानमाश्रित्य सततं परवान्भव ॥ २२
विजित्य पृथिवीं सर्वां मोदमानः सुखी भव ।
एष भूतो भविष्यश्च धर्मस्ते समुदीरितः ॥ २३
न तेऽस्त्यविदितं किंचिदतीतानागतं भुवि ।
तस्मादिमं परिक्लेशं त्वं तात हृदि मा कृथाः ॥ २४
एष कालो महाबाहो अपि सर्वदिवौकसाम् ।
मुह्यन्ति हि प्रजास्तात कालेनाभिप्रचोदिताः ॥ २५
मा च तेऽत्र विचारो भूद्यन्मयोक्तं तवानघ ।
अतिशङ्क्य वचो ह्येतद्धर्मलोपो भवेत्तव ॥ २६
जातोऽसि प्रथिते वंशे कुरूणां भरतर्षभ ।
कर्मणा मनसा वाचा सर्वमेतत्समाचर ॥ २७

युधिष्ठिर उवाच ।

यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम् ।
तथा करिष्ये यत्नेन भवतः शासनं विभो ॥ २८
न मे लोभोऽस्ति विप्रेन्द्र न भयं न च मत्सरः ।

---

**20** $^{a}$) $B_3$ कथं (for कस्मिन्). — $^{b}$) $K_{1.2}$ प्रजा; $B_3$ प्रजां (for प्रजाः). $K_4$ मया (for मुने). $D_{1.2}$ प्रजानां रक्षणे मुने. — $^{c}$) $D_5$ [ऽ]हं (for वै). — $^{d}$) $D_5$ अच्यवेहं (for न च्यवेयं). — For 20, S subst.:

957* युधिष्ठिरः ।
एतच्छ्रुत्वा मया किं स्यात्कर्तव्यं मुनिसत्तम ।
कथं चायं जितो लोको रक्षितव्यो भविष्यति ।

**21** $^{a}$) $D_5$ यदा च (for दयावान्). — $^{b}$) $T_1$ $G_4$ हिते (for हितो). $G_4$ युक्तो; M रक्षा (for रक्तो). — $^{c}$) $D_5$ सदा; $T_2$ $G_{2-4}$ स्नेहात् (for स्वेषां). B Dc Dn $D_{4.6}$ सत्यवादी मृदुर्दांतः. — $^{e}$) $T_1$ M कुरु (for चर). — $^{f}$) $K_{1.2}$ पूजयन्. S पितॄन्पूर्वाननुस्मर.

**22** $D_3$ om. $22^{ab}$. — $^{a}$) Ś$_1$ प्रमादो यत्कृतस्; $K_2$ प्रमादं यत्कृते; $K_3$ प्रमादा यत्कृतं. — $^{b}$) Ś$_1$ $Dc_2$ $D_5$ ते (for तज्). — $^{c}$) $D_1$ तु (for ते). $D_1$ दानम् (for मानम्). — $^{d}$) $Dn_2$ यतवान्; T G प्रियवाग् (for परवान्). M सततं वै पराजय.

**23** $^{c}$) $T_1$ लोको (for भूतो). $K_1$ $T_2$ $G_{2-4}$ भविष्यच्च; $K_3$ भविष्यंश्च. — $^{d}$) Dc धर्मं वै; $T_1$ $G_1$ लोकस्ते; $T_2$ $G_{2-4}$ लोकस्य (for धर्मस्ते). Ś$_1$ $D_3$ समुदाहृतः.

**24** $^{a}$) =1. 57. $12^{c}$: 5. 16. $7^{c}$. S (except $G_{1.2}$) मे (for ते). — $^{b}$) $B_2$ विभो; $Dn_3$ युधि (for भुवि). Ś$_1$ $K_{1.2}$ त्रिषु लोकेषु मानद (Ś$_1$ भारत); $G_1$ M प्रत्यक्षं यच्च नागतं. — $T_1$ $G_1$ M om. $24^{cd}$. — $^{c}$) $Dn_3$ $D_{2.3}$ $G_4$ इदं (for इमं). Ś$_1$ $K_{1.2}$ इमं च सुपरि°. — $^{d}$) T G ($T_1$ $G_1$ om.) वृथा तं (for त्वं तात). — After 24, B Dc Dn $D_{4.6}$ $T_2$ $G_{2-4}$ ins.:

958* प्राज्ञास्तात न मुह्यन्ति कालेनाभिप्रपीडिताः ।
[Dc °नाभिप्रचोदिताः; Dn $D_{4.6}$ °नापि प्रपीडिताः.]

**25** $^{a}$) $D_5$ एकः (for एष). $T_1$ $G_1$ $M_1$ महान्नेता; $T_2$ $G_3$ महान्राजन्; $G_2$ महातेज (with hiatus); $M_2$ महाबाहुर्. — $^{b}$) $B_2$ अति सर्वं दिवौ°; $D_1$ अति सर्वान्दिवौकसः; $T_1$ $G_1$ सर्वेषां त्रिदिवौकसां. — Dc $G_4$ om. $25^{cd}$. — $^{c}$) Ś$_1$ मुहूर्तं; $K_{1-3}$ $D_1$ $G_{1.2}$ M मुह्यंते; $B_3$ स्त्रक्षंति; $T_1$ उह्यंते (for मुह्यन्ति). Ś$_1$ K $D_{1-3}$ तत्र; $D_5$ सर्वाः (for तात). — $^{d}$) $B_1$ [अ]भिप्रपीडिताः; $B_2$ Dn $D_{4.6}$ [अ]पि प्रचोदिताः; $D_{2.5}$ [अ]भिप्रणो°.

**26** $^{a}$) $D_5$ स (for मा). $B_1$ ते वै; Dn $D_{4.6}$ तत्र (for तेऽत्र). Ś$_1$ $K_1$ $D_{1-3.5}$ विचारोस्तु; B Dc Dn $T_1$ विशंका भूद्. — $^{c}$) Ś$_1$ $B_{2.3}$ $D_{2.5}$ अशंक्यं मद्-; K $B_1$ $D_{1.3}$ अशक्यं मद्-; $B_4$ Dc Dn $D_{4.6}$ आशंक्य मद्- (for अतिशङ्क्य).

**27** $^{a}$) S पश्चिमे (for प्रथिते). $M_1$ काले; $M_2$ देशे (for वंशे). — $^{b}$) $T_1$ $G_1$ कुरुसत्तम (for भरत°).

**28** $^{a}$) Ś$_1$ K $D_{1.3.5}$ मुनिश्रेष्ठ. — $^{d}$) $K_3$ $D_5$ तथा; $K_4$ $D_3$ यथा; $B_2$ प्रभो; $T_1$ $G_1$ मुने (for विभो).

**29** $T_2$ $G_{2-4}$ om. (hapl.) 29. — $^{a}$) $B_2$ ते (for मे). Ś$_1$ K $D_{3.5}$ विप्रर्षे (for विप्रेन्द्र). — $^{b}$) Ś$_1$ K $D_{3.5}$ संभ्रमः (for मत्सरः). — $^{c}$) Ś$_1$ K $D_{3.5}$ [इ]ह; $M_2$ च (for हि). — $^{d}$) Ś$_1$ $K_{1.2}$ यत्त्वयोक्तं (for उक्तं यत्ते). $D_{1.2}$ हितं वचः; $T_1$ प्रियं मुने; M प्रियं प्रभो ($M_2$ विभो) (for मयि प्रभो).

**30** $^{a}$) $G_4$ च (for तु). — $^{b}$) $B_4$ $D_5$ भार्गवस्य (for पाण्ड°). $K_{3.4}$ $D_{3.5}$ यशस्विनः (for महा°). Dc Dn $D_4$ मार्कंडेयस्य धीमतः; $T_1$ $G_1$ धर्मराजस्य धीमतः. — $K_4$ om. $30^{c}$–$31^{b}$. — $^{c}$) $B_{2.4}$ Dn $D_{4.6}$ संहृष्टाः (for प्र°).

करिष्यामि हि तत्सर्वमुक्तं यत्ते मयि प्रभो ॥ २९
वैशंपायन उवाच ।
श्रुत्वा तु वचनं तस्य पाण्डवस्य महात्मनः ।
प्रहृष्टाः पाण्डवा राजन्सहिताः शार्ङ्गधन्वना ॥ ३०
तथा कथां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः ।
विस्मिताः समपद्यन्त पुराणस्य निवेदनात् ॥ ३१

इति श्रीमहाभारते आरण्यकपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

## १९०

वैशंपायन उवाच ।

भूय एव ब्राह्मणमहाभाग्यं वक्तुमर्हसीत्यब्रवी-
त्पाण्डवेयो मार्कण्डेयम् ॥ १ ॥ अथाचष्ट मार्क-
ण्डेयः ॥ २ ॥

अयोध्यायामिक्ष्वाकुकुलोत्पन्नः पार्थिवः परि-
क्षिन्नाम मृगयामगमत् ॥ ३ ॥ तमेकाश्वेन मृगमनु-
सरन्तं मृगो दूरमपाहरत् ॥ ४ ॥ अथाध्वनि जात-
श्रमः क्षुत्तृष्णाभिभूतश्च कस्मिंश्चिदुद्देशे नीलं वन- C. 3. 13147 B. 3. 192. 5 K. 3. 195. 5

---

D3 ब्राह्मणा (for पाण्डवा). B1. 3 Dc संहृष्टो हृष्टरोमाभूत्. — d) Ś1 K B1. 3 Dc सहितः (for °ताः). D1. 3 °धन्विना. — After 30, B Dc Dn D4. 6 T2 G2–4 ins.:

959* विप्रर्षभाश्च ते सर्वे ये तत्रासन्समागताः ।

**31** K4 om. 31ab (cf v l. 30). — a) Ś1 K1. 2 transp. कथां and शुभां. T1 प्राज्ञा; G1 प्रज्ञा; G2. 4 M प्रज्ञां (for कथां). T1 G1 वचः (for शुभां). Dc स तथा तां कथां श्रुत्वा. — c) T1 संप्रपद्यंत. — d) Dn3 निबोधनात्; S निबोधने (for निवे°).

Colophon. — *Major parvan:* Ś1 K2 T2 G2–4 आरण्य. — *Sub-parvan:* B1–3 Dc Dn D4. 6 G1 मार्कंडेयसमा- (Dn3 D4. 6 °स)स्या (followed by भविष्य in B1. 3 Dc Dn D4. 6); M1 मार्कंडेयसंहिता. Ś1 K B4 D1–3. 5 M2 (all om. sub-parvan name) mention only भविष्य (Ś1 K1. 2 M2 °ष्यत्). To भविष्य or °ष्यत्, N (except B2 Dn3) M2 add समास. — *Adhy. name:* G1 युगधर्मकथनं. — *Adhy. no.* (figures, words or both): Dn 190 (Dn3 191); D1 197; S (M2 *inf. lin.*) 193 (M2 orig. 196). — *Śloka no.:* Dn1. n2 35; D1 33.

## 190

**1** Before 1, B2–4 D3 (marg. *sec. m.*). 6 G3 ins.:

960* जनमेजय उवाच ।
भूय एव ब्राह्मणानां माहात्म्यं वक्तुमर्हसि ।
पाण्डवानां यथाचष्ट मार्कण्डेयो महातपाः ।

— G1 om. भूय and reads एवं (for एव). B2 ब्राह्मणानां माहात्म्यं; B3 D5 T2 G1. 2. 4 M1 ब्राह्मणमाहात्म्यं; Dc ब्राह्मणस्य माहात्म्यं; D4 महाभाग; T1 च माहात्म्यं (for ब्राह्मणमहाभाग्यं). Before वक्तुम्, K1. 3 B3 Dc D2. 4 T G1 M1 ins. भगवान्; K2. 4 D3 भवान्; B1 D1. 5 G4 भगवन्; M2 मम भगवन्. Ś1 K B1 Dc D2–4 T2 G1. 4 M1 अर्हनि (for अर्हसि). B1 [इ]त्यथ; B3 [अ]थ (for [इ]ति). Ś1 K1–3 D5 [इ]त्येवं ब्रुवतः पांडवान्; K4 D1–3 [इ]त्यब्रुव(K4 °वद)न्पांडवेयाः; D4 [ए]वं ब्रुवन्पांडवान्. T1 G1 M1 पांडवो (for पाण्डवेयो). Ś1 K D1–5 om. मार्कण्डेयम्.

**2** M om. 2. — D5 om अथ and मार्कण्डेयः. — After 2, K3 B2. 4 Dn G3 ins.:

961* अपूर्वमिदं श्रूयतां ब्राह्मणानां चरितम् ।;

while Dc D3 (marg. *sec. m.*). 6 T2 G2–4 ins.:

962* श्रूयतां कथयामीदं ब्रह्मर्षीणां पूर्वचरितम् ।

[Dc D3. 6 ins. अपूर्वं after इदं. D3. 6 ब्राह्मणानां (for ब्रह्म°). Dc D3. 6 om. पूर्व-.]

**3** Before 3, D5 M read मार्कंडेय उ° (M om. उ°). — G1 अयोध्याधिपतिर् (for अयोध्यायाम्). K1 D4 °कुल उत्पन्नः; B Dn D6 G3 °कुलोद्वहः (for °कुलोत्पन्नः). K4 D4–6 om. पार्थिवः; T2 G2–4 om. पार्थिवः परिक्षिन्नाम. A few MSS. परीक्षिन्. G1 पारीक्षिन्नाम पार्थिवः (for पार्थिवः परिक्षिन्नाम).

**4** B4 T G1. 2. 4 M स एको(M °का)श्वेन. T1 मृगयाम् (for मृगम्). T1 अनुसरन्; T2 G1. 4 अन्वसरत्; G2 M अन्वचरत् (for अनुसरन्तं). Before मृगो, G1 ins. स; M2 तं. Dc M1 दूरतरम् (for दूरम्). Ś1 K3 G2. 4 M1 उपाहरत्; B4 T2 अन्वहरत्; Dc अथाहरत्; T1 अपासरत्.

**5** B2. 3 Dn D4. 6 G2 om. अथ. Ś1 K D1–3. 5 om.

अकीर्तिः कीर्त्यते यस्य लोके भूतस्य कस्यचित् । पतत्येवाधमाँल्लोकान्यावच्छब्दः स कीर्त्यते ॥ २२
तस्मात्कल्याणवृत्तः स्यादत्यन्ताय नरो भुवि । विहाय वृत्तं पापिष्ठं धर्ममेवाभिसंश्रयेत् ॥ २३
इत्येतच्छ्रुत्वा स राजाब्रवीत् । तिष्ठ तावद्याव- दिदानीमिमौ वृद्धौ यथास्थानं प्रतिपादयामीति
॥ २४ ॥ स मां प्राकारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन संसिद्धो यथोचितं स्थानं प्रतिपन्नः ॥ २५ ॥ एतन्मयानुभूतं चिरजीविना दृष्टमिति पाण्डवानुवाच मार्कण्डेयः ॥ २६ ॥
पाण्डवाश्चोचुः प्रीताः । साधु । शोभनं कृतं भवता राजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं स्वे स्थाने स्वर्गे पुनः प्रतिपादयतेति ॥ २७ ॥
अथैनानब्रवीदसौ । ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो राजर्षिर्नृगस्तस्मात्कृच्छ्रात्समुद्धृत्य पुनः स्वर्गं प्रतिपादित इति ॥ २८ ॥ C. 3. 13345 B 3. 199. 18 K 3. 202. 18

इति श्रीमहाभारते आरण्यकपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

(except D1–3. 5) G3 स पतति (for पतत्येव). — d) K1 B1. 3. 4 Dn D4. 6 G3 प्रकी°; D5 [अ]स्य की°; T G1. 2. 4 M तु की° (for स की°).

**23** a) Ś1 K2 कल्याणवृत्तिः; D5 उत्तमवृत्तः; M1 कल्याणयुक्तः. — b) K4 B4 D3 अनंताय; D1. 2 आनंत्याय; D5 कल्याणाय; T2 G2. 4 दाता तावत्; G1 अत्यर्थं च. K1 B1–3 Dc Dn D4. 6 G3 अनंताय नरः सदा. — c) K4 B2 Dc वित्तं; B1 Dn D4 G3 चित्तं (for वृत्तं). — d) K3 D5 शुभं वृत्तं (for धर्ममेव). Ś1 K1. 2. 4 D1–3 [अ]भिवर्धयेत्; K3 D5 सदाश्रयेत्; B3 Dn D4. 6 G3 समाश्रयेत्; T G2. 4 [अ]नुसंश्रयेत्.

**24** S (except G3) om. तिष्ठ तावद्; K1. 4 B D (except D2. 3) G3 om. इदानीम्; D5 om. इति.

**25** G2 om. स. Ś1 D2 T2 G2 प्राकारवर्णं; B Dc Dn D4. 6 G1. 3 प्रावारकर्णं; T1 G4 प्रकारक(G4 °व)र्णं; M1 प्रावरकर्णं. After चोलूकं, M2 ins च. T1 चो° (for यथो°). Dc D5 G4 यथोचितं (D5 G4 °त-) स्थानं. M2 om. तेनैव. T2 G1. 2. 4 M1 om. [ए]व. T1 वै (for [ए]व). Dc S (except T1 G3) देवयानेन (for यानेन). T1 M1 om. संसिद्धो. Ś1 K2 संसिद्धौ; K1 Dn D4. 6 G3 संस्थितो; K4 G4 संविद्धो; D5 संसिद्धं; G1 सुसिद्धो. B4 om. यथोचितं स्थानं. B1 यथोपचितं; B3 इति यथोक्तं (for यथोचितं). After प्रतिपन्नः, B4 ins. इति; T2 G2. 4 ins. एव. N (except Ś1 K2 B4 D1. 2) G3 प्रतिपेदे (for °पन्नः).

**26** K1. 2 B D (except D1–3. 5) T2 G3 तन् (for एतन्). K1. 3. 4 B Dc Dn D2–4. 6 T1 G3 M चिरजीविनेद्दश(Dc °दृष्ट)म्. B1 G1 M2 मार्कंडेयं.

**27** Before पाण्डवाश्, K3 D5 M1 ins. तमृषयः; T2 G1. 2. 4 तमृषिं; M2 ऋषयः. T1 om. च. B2–4 D (except D1–3. 5) G3 M2 om. प्रीताः. — B D (except D1–3) G3 (by transp.) भवता कृतं; T1 यथा. Dc2 D5 T स्वर्गलोकच्युतं. K4 Dc D5 T1 G1. 2. 4 M स्व- (for स्वे). Dc om. स्वर्गे; K1. 3. 4 B Dn D4–6 T1 G3 om. स्वर्गे पुनः. D1–3 G1 M1 (by transp.) पुनः स्वर्गे; T2 G2. 4 M2 पुनः स्वर्गलोके.

**28** K1 B D G3 अथैतान्. K3 D5 S (except G3) प्रत्यब्रवीद् (for अब्र°). D1. 2 T2 G1. 2. 4 om. असौ. D5 अयं (for असौ). — Before ननु, D1. 2 ins. अहो; T2 G1. 2. 4 अनेन. Ś1 K2–4 D1–3. 5 निमज्ज°; T1 पच्य° (for मज्ज°). Ś1 K2 उद्धृत्य; K3 B समुद्धृतः. K1 Dn D4. 6 G3 transp. समुद्धृत्य and पुनः; K1. 3. 4 D1–3 transp. पुनः and स्वर्गं. B D (except D1–3) G3 प्रापित (for प्रतिपादित).

Colophon. — *Major parvan:* Ś1 K1. 2 G2. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या (followed by इंद्रद्युम्नोपाख्यान). K3. 4 B D G2. 3 M2 (all om. sub-parvan name) mention only इंद्रद्युम्नोपाख्यान. — *Adhy. no.* (figures, words or both): Dn 198 (Dn2 197); D1 199; T G1. 2. 4 M (M2 *inf. lin.*) 195 (M2 orig. 197). — *Śloka no.:* Dn1 25; Dn2. n3 18; D1 34.

## 192

**1** After the ref., N ins.:

970* श्रुत्वा स राजा राजर्षेरिन्द्रद्युम्नस्य तत्तदा ।
मार्कण्डेयान्महाभागात्स्वर्गस्य प्रतिपादनम् ।

[(L. 1) K1. 2 Dn D6 तु (for स). D1. 2 सर्वं (for राजा). K4 B1 Dc D5 राजर्षिर्. D5 एतच्छ्रुत्वा स राजर्षिर् (for the prior half). K1 B1. 4 D (except D1–3. 5) तथा (for तदा). — (L. 2) D5 मार्कंडेयं महाभागः. Ś1 K

# १९२

C. 3. 13485
B 3 201. 2
K. 3. 204. 2

वैशंपायन उवाच ।
युधिष्ठिरो धर्मराजः पप्रच्छ भरतर्षभ ।
मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम् ॥ १
विदितास्तव धर्मज्ञ देवदानवराक्षसाः ।
राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः ।
न तेऽस्त्यविदितं किंचिदस्मिँल्लोके द्विजोत्तम ॥ २
कथां वेत्सि मुने दिव्यां मनुष्योरगरक्षसाम् ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथितं द्विज ॥ ३
कुवलाश्व इति ख्यात इक्ष्वाकुरपराजितः ।
कथं नाम विपर्यासाद्धुन्धुमारत्वमागतः ॥ ४
एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम ।
विपर्यस्तं यथा नाम कुवलाश्वस्य धीमतः ॥ ५
मार्कण्डेय उवाच ।
हन्त ते कथयिष्यामि शृणु राजन्युधिष्ठिर ।
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ॥ ६
यथा स राजा इक्ष्वाकुः कुवलाश्वो महीपतिः ।
धुन्धुमारत्वमगमत्तच्छृणुष्व महीपते ॥ ७
महर्षिर्विश्रुतस्तात उत्तङ्क इति भारत ।
मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव ॥ ८
उत्तङ्कस्तु महाराज तपोऽतप्यत्सुदुश्चरम् ।
आरिराधयिषुर्विष्णुं बहून्वर्षगणान्विभो ॥ ९
तस्य प्रीतः स भगवान्साक्षाद्दर्शनमेयिवान् ।

---

Dc D$_{1-3.5}$ स्वर्गसंप्रति°.]

— $^{a}$) N महाराज (B$_1$ °भागः) (for धर्म°). — $^{b}$) B$_4$ T$_2$ G$_3$ भरतर्षभः. Ś$_1$ K$_{2.3}$ B$_1$ Dc D$_{1-3.5}$ पुनः पप्रच्छ तं मुनिं. — $^{d}$) Ś$_1$ K$_{1.2}$ शुद्धात्मानमकल्म°.

**2** Before 2, Dc G$_1$ ins. युधिष्ठिर उ° (G$_1$ om. उ°). — $^{b}$) G$_{2.4}$ M$_1$ °रक्षसां. — $^{cd}$) Ś$_1$ K$_{1.2.4}$ D$_{1-3.5}$ पिशाचोरगगंधर्वा (for 2$^{c}$), and राज° (for ऋषि°). — $^{f}$) S (except G$_3$) द्विजर्षभ (for द्विजो°).

**3** $^{a}$) Ś$_1$ K D$_{1-3.5}$ तथा; T$_2$ G$_{2.4}$ अथ (for कथां). Ś$_1$ K$_{3.4}$ D$_{1-3.5}$ दिव्या; K$_{1.2}$ पुण्या; T$_2$ G$_{2.4}$ वंशान् (for दिव्यां). — $^{b}$) Ś$_1$ K D$_{1-3.5}$ कथाः पुण्या महात्मनां; B$_1$ मानुषोरगराक्षसां. — After 3$^{ab}$, B$_{2-4}$ D (except D$_{1-3.5}$) S ins.:

971* देवगन्धर्वयक्षाणां किंनराप्सरसां तथा ।

[Dc °दानव° (for °गन्धर्व°). S (except G$_3$) सुपर्णकिंनराणां च यक्षाणां च महौजसां.]

— $^{c}$) B D (except D$_{1-3.5}$) G$_3$ इदम्; G$_4$ श्रोतुम् (for एतद्). S (except G$_3$) भगवन् (for [अ]हं श्रोतुं). — $^{d}$) Ś$_1$ B Dc Dn D$_{4.6}$ G$_3$ द्विजसत्तम (for कथितं द्विज). D$_{1.2}$ तव; T$_1$ त्वया (for द्विज).

**4** $^{b}$) T$_2$ G$_{2.4}$ इक्ष्वाकुकुलसंभवः.

**5** $^{a}$) K$_2$ [अ]हं श्रोतुं and तत्त्वेन also (as in text). — $^{b}$) Ś$_1$ भार्गवनंदन; B$_1$ भरतसत्तम; D$_5$ मार्गं च सत्तम. — After 5, B D (except D$_{1.3}$; D$_5$ marg.) G$_3$ ins.:

972* वैशंपायन उवाच ।
युधिष्ठिरेणैवमुक्तो मार्कण्डेयो महामुनिः ।
धौन्धुमारमुपाख्यानं कथयामास भारत ।

[Some MSS. om उवाच.]

**6** D$_3$ om. 6$^{ab}$. — $^{a}$) T$_1$ अधुना; T$_2$ G$_1$ अथ ते; M$_1$ अहं ते (for हन्त ते). — $^{b}$) K$_{3.4}$ D$_5$ राजर्षेस्तस्य धीमतः. — $^{d}$) Dc धौंधुमारस्य. K$_4$ तस्य तत् (for तच्छृणु).

**7** $^{a}$) K$_{1-3}$ Dc$_2$ D$_5$ राजा स (by transp.); B$_2$ चैव स. S ऐ(T$_1$ चै)क्ष्वाकः (T$_1$ M$_1$ °कुः). — K$_2$ om. (hapl.) 7$^{cd}$. — $^{d}$) K$_{3.4}$ D$_5$ मुनेस्तस्य प्रसादतः (K$_4$ प्रभावतः).

**8** $^{b}$) Here and below throughout S उदंक- (for उत्तङ्क-). The variant is ignored (mostly) in the sequel. Dc नाम (for इति). D$_3$ नामतः (for भारत). — $^{d}$) Ś$_1$ K D$_{1-3.5}$ धीमतः; M$_1$ भारत (for कौरव).

**9** $^{a}$) B$_1$ T$_1$ च (for तु). S °तेजा (for °राज). — $^{b}$) K$_4$ B$_1$ D$_{1.3}$ M$_1$ [ऽ]तप्यत (for [ऽ]तप्यत्सु-). Ś$_1$ B$_4$ D$_{1.2}$ T$_2$ G$_{2-4}$ सुदुष्करं; K$_{1.2}$ सुदारुणं; T$_1$ महानृषिः (for सुदुश्चरम्). — T$_1$ om. from 9$^{c}$ up to 3. 193. 10$^{b}$. — $^{c}$) K$_{2-4}$ D$_3$ आर° (for आरि°). Dc देवं (for विष्णुं). — $^{d}$) Ś$_1$ ब्रह्मन् (for बहून्). B$_3$ धर्मगुणान् (for वर्षगणान्). Ś$_1$ K$_{1-3}$ विभुं; K$_4$ Dn D$_{1-3.5}$ विभुः; B$_{1.2.4}$ D$_{4.6}$ उत; B$_3$ Dc मुनिः (for विभो).

**10** T$_1$ om. 10 (cf. v.l. 9). — $^{a}$) K$_4$ च (for स). — $^{b}$) Ś$_1$ K$_{1.2.4}$ B$_{1.2}$ Dn$_2$ °मीयिवान्; D$_3$ °मागतः (for °मेयिवान्). — $^{c}$) Ś$_1$ K D$_{1-3.5}$ च (Ś$_1$ तु) मुनिः प्रह्व (K$_4$ D$_{1-3}$ देवं); B$_1$ तु स राजर्षिः; B$_4$ [ऋ]षिस्तु प्रज्ञस्तं; Dc

दृष्ट्वैव चर्षिः प्रह्वस्तं तुष्टाव विविधैः स्तवैः ॥ १०
त्वया देव प्रजाः सर्वाः सदेवासुरमानवाः ।
स्थावराणि च भूतानि जङ्गमानि तथैव च ।
ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महाद्युते ॥ ११
शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ ।
निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत ।
बाहवस्ते दिशः सर्वाः कुक्षिश्चापि महार्णवः ॥ १२
ऊरू ते पर्वता देव खं नाभिर्मधुसूदन ।
पादौ ते पृथिवी देवी रोमाण्योषधयस्तथा ॥ १३
इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः ।
प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैः स्तवैः ॥ १४
त्वया व्याप्तानि सर्वाणि भूतानि भुवनेश्वर ।
योगिनः सुमहावीर्याः स्तुवन्ति त्वां महर्षयः ॥ १५
त्वयि तुष्टे जगत्स्वस्थं त्वयि क्रुद्धे महद्भयम् ।
भयानामपनेतासि त्वमेकः पुरुषोत्तम ॥ १६
देवानां मानुषाणां च सर्वभूतसुखावहः ।
त्रिभिर्विक्रमणैर्देव त्रयो लोकास्त्वयाहृताः ।
असुराणां समृद्धानां विनाशश्च त्वया कृतः ॥ १७
तव विक्रमणैर्देवा निर्वाणमगमन्परम् ।
पराभवं च दैत्येन्द्रास्त्वयि क्रुद्धे महाद्युते ॥ १८
त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः ।
आराधयित्वा त्वां देवाः सुखमेधन्ति सर्वशः ॥ १९
एवं स्तुतो हृषीकेश उत्तङ्केन महात्मना ।
उत्तङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ॥ २०

उत्तङ्क उवाच ।

पर्याप्तो मे वरो ह्येष यदहं दृष्टवान्हरिम् । C. 3. 13505 B. 3 201. 25 K. 3. 204. 25

---

तमृषिः प्रह्वः (for चर्षिः प्रह्वस्तं). $T_2$ $G_{1.3}$ M दृष्ट्वा महर्षिः प्रह्वस्तं ($G_1$ $M_2$ ब्रह्माणं; $M_1$ धीमांश्च); $G_{2.4}$ दृष्ट्वा च महर्षिर्ब्रह्म.

**11** $T_1$ om. 11 (cf. v.l. 9). Before 11, $K_2$ B D (except $D_{1.3.5}$) ins. उत्तंक उ°; S (except $G_4$; $T_1$ om.) उदंकः. — $^{b}$) $B_{2.4}$ Dn $D_{4.6}$ ससुरासुर- (for सदेवासुर-). $Ś_1$ $K_{1.2.4}$ -मानुषाः (for -मानवाः). — $^{d}$) $B_4$ [इ]तराणि च; S ($T_1$ om.) च सर्वशः (for तथैव च). — $^{e}$) $Ś_1$ K $D_{1.2}$ $G_4$ ब्रह्मा (for ब्रह्म). $K_{1.2}$ वेदश्च; $M_2$ वेद्याश्च. $B_4$ विद्याश्च; $G_1$ वेदं च (for वेद्यं च). — $^{f}$) $B_4$ सृष्टा (for सृष्टं). $Ś_1$ $K_{1.2}$ त्वया सृष्टा जगत्पते.

**12** $T_1$ om. 12 (cf. v.l. 9). — $^{b}$) $D_4$ नेत्रं; $G_4$ नेत्रौ (for नेत्रे). $D_5$ नेत्रे च शशिभास्करौ. — $^{c}$) Some MSS. निश्वासः. — $^{d}$) $B_1$ $G_1$ तथाच्युत; $G_4$ महाद्युते. — $^{e}$) $Ś_1$ च (for ते). — $^{f}$) $Ś_1$ $K_{1.2}$ $D_1$ कुक्षौ. $Ś_1$ तव; $K_{3.4}$ $D_3$ चैव (for चापि). $Ś_1$ $K_{1.2.4}$ $D_{1-3}$ महार्णवाः.

**13** $T_1$ om. 13 (cf. v.l. 9); $D_5$ om. (? hapl.) 13–15. — $^{b}$) N ($D_5$ om.) खं जंघे ($B_1$ जंघे च) (for खं नाभिर्). — $^{c}$) $T_2$ $G_{2-4}$ चैव (for देवी). — $^{d}$) $K_{2-4}$ $D_{1.6}$ $T_1$ (before corr.) $M_1$ रोमाण्यौषधयस्. S ($T_1$ om.) तव (for तथा).

**14** $T_1$ $D_5$ om. 14 (cf. v.l. 9, 13). — $^{c}$) $K_4$ ब्रह्मन्; $B_4$ सर्वे (for प्रह्वास्). — $^{d}$) $B_4$ स्तुत्वा नानाविधैः स्तवैः.

**15** $T_1$ $D_5$ om. 15 (cf. v.l. 9, 13). — $^{ab}$) $Ś_1$ $K_{1.2}$ सर्वाणि भूतानि व्याप्तानि; $K_3$ $B_1$ $D_{1-3}$ $G_1$ व्याप्तानि भूतानि सर्वाणि. — $^{c}$) $Ś_1$ K $D_{1-3}$ योगिनं सु($Ś_1$ त्वां)महावीर्यं. — $^{d}$) $Ś_1$ च; $K_1$ $G_1$ $M_1$ त्वा; $G_{2.4}$ [इ]त्थं (for त्वां).

**16** $T_1$ om. 16 (cf. v.l. 9). $^{a}$) $K_1$ सर्वं; $B_1$ $D_5$ तुष्टं; $B_{2.3}$ सुस्थं; $B_4$ $Dn_1$ $D_6$ -स्वास्थ्यं; S ($T_1$ om.) शांतं (for स्वस्थं). — $^{b}$) $T_2$ $G_{3.4}$ [अ]तुष्टे (for क्रुद्धे). $K_4$ $B_4$ $G_1$ जगद्भयं (for मह°). — $^{c}$) $Ś_1$ °नीता° (for °नेता°). — $^{d}$) $K_2$ एव (for एकः). A few MSS. पुरुषोत्तमः.

**17** $T_1$ $G_4$ om. 17 (for $T_1$ cf. v.l. 9). — $^{b}$) $Ś_1$ K $D_{1-3.5}$ $M_1$ °लोक- (for °भूत-). $Ś_1$ $K_1$ $D_{3-5}$ $G_{1.2}$ $M_1$ -सुखावह. — $^{d}$) $D_{1.2}$ $G_2$ जिताः; $T_2$ (by corr.) $G_3$ वृताः (for [आ]हृताः). $D_5$ त्वया लोका जिताः प्रभो.

**18** $T_1$ om. 18 (cf. v.l. 9). — $^{a}$) $G_{1.2.3}$ (before corr.). $_4$ देव (for देवा). — $^{b}$) $K_1$ corrupt. $K_3$ $Dc_2$ $D_{3.6}$ °णमगमत्; $B_2$ °णशमनं (for °णमगमन्). — $K_1$ om. $18^{c}$–$19^{d}$; $G_4$ om. $18^{cd}$. — $^{c}$) $Ś_1$ $K_{2-4}$ $D_{1-3.5}$ पराजयं; $B_{1.3}$ Dc Dn $D_{4.6}$ °भूताश्च; $B_2$ °भूतश्च (for °भवं). $B_2$ $Dc_2$ $G_1$ दैत्येंद्रस्. — $^{d}$) $G_1$ प्रजापते (for महा°).

**19** $T_1$ $K_1$ om. 19 (cf. v.l. 9, 18); $D_1$ om. $19^{cd}$. — $^{c}$) $B_{1.2}$ $Dc_2$ देव (for देवाः). — $^{d}$) S ($T_1$ om.) नित्यशः (for सर्वशः).

**20** $T_1$ om. 20 (cf. v.l. 9). Before 20, $K_2$ Dc ins. मार्कंडेय उ°. — $^{a}$) $T_2$ $G_3$ स्तुते °केशे.

**21** $T_1$ om. 21 (cf. v.l. 9); $D_3$ om. 21 with the ref. — $^{a}$) $G_4$ [ऽ]यं (for मे). $Dn_3$ तु (for हि). — $^{c}$) $T_2$ $G_{2-4}$ विष्णुं (for दिव्यं). — $^{d}$) $Ś_1$ $K_{1.2}$ जगतां (for

3 13505 3 201 26 3 204 25 पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् ॥ २१

विष्णुरुवाच ।

प्रीतस्तेऽहमलौल्येन भक्त्या च द्विजसत्तम ।
अवश्यं हि त्वया ब्रह्मन्मत्तो ग्राह्यो वरो द्विज ॥ २२
एवं संछन्द्यमानस्तु वरेण हरिणा तदा ।
उत्तङ्कः प्राञ्जलिर्वव्रे वरं भरतसत्तम ॥ २३
यदि मे भगवान्प्रीतः पुण्डरीकनिभेक्षणः ।
धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ।
अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं महेश्वर ॥ २४

विष्णुरुवाच ।

सर्वमेतद्धि भविता मत्प्रसादात्तव द्विज ।
प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम् ।
त्रयाणामपि लोकानां महत्कार्यं करिष्यसि ॥ २५
उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः ।
तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ॥ २६
बृहदश्व इति ख्यातो भविष्यति महीपतिः ।
तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः ॥ २७
स योगबलमास्थाय मामकं पार्थिवोत्तमः ।
शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति ॥ २८

मार्कण्डेय उवाच ।

उत्तङ्कमेवमुक्त्वा तु विष्णुरन्तरधीयत ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

---

°तः ). Ś1 K D1. 3. 5 पतिं (for प्रभुम्). B2 स्रष्टारमजरं विभुं.

**22** T1 om. 22 (cf. v.l. 9). — G1 भगवान्; G4 श्रीभगवान् (for विष्णु°). — b) K4 B2 Dc च तव; B1. 3. 4 Dn D4. 6 तव च; D3 च मुनि- (for च द्विज-). — c) Ś1 K3. 4 D1–3 तु; D5 तत् (for हि). S (T1 om.) विद्वन् (for ब्रह्मन्). — d) D5 वरो ग्राह्यो (by transp.).

**23** T1 om. 23 (cf. v.l. 9). Before 23, B2 Dc ins. मार्कंडेय उ°. — a) Ś1 B1. 3 Dc Dn स छंद्य°; D2 संछिद्य°; D3 (before corr.) संछिंद्य°; S (T1 om.) संचोद्य° (for संछन्द्य°). B2 छंद्यमानो वरेणैवम्; B4 एवं स उक्तस्तुष्टेन. — b) B2 उत्तंको (for वरेण). B2 ततः; D1 तथा (for तदा). — c) B2 स पुनः (for उत्तङ्कः). B1 Dc भूत्वा (for वव्रे). — d) M वरदसत्तम.

**24** T1 om. 24 (cf. v.l. 9). Before 24, Dc ins. उत्तंक उ°. — a) B2. 4 Dn D5. 6 G2. 4 M भगवन्. K2 प्रीतिः (for प्रीतः). — b) Many MSS. °क्षण (for °क्षणः). — c) Ś1 K B4 D1–3. 5 सत्ये धर्मे (by transp.). — d) Ś1 K2. 4 D3 प्रीतिर्; K1 प्रीतो (for बुद्धिर्). — e) D1 अभ्यासाच्च; G1 °सं च. — f) B1–3 Dn D4. 6 T2 G1. 3 ममे°; Dc सुरे° (for महे°).

**25** T1 om. 25 (cf. v.l. 9). — N G1 भगवान् (K2. 4 B2 D1–3. 5, with prefixed श्री) (for विष्णुर्). — a) K1. 2 D3 भवतो; G1 भवति; G1 भवतान्; M2 भवता (for भविता). — b) Ś1 K1. 2. 4 B2. 4 D3 G4 द्विजोत्तम (for तव द्विज). — c) Ś1 K D3 ते योगो; B4 योगस्ते (for योगश्च). — e) B1. 3 चापि (for अपि). — f) B2 महाकार्यं. K3. 4 B3 D1 करिष्यति.

**26** T1 om. 26 (cf. v.l. 9). — a) D5 उत्सादनाय. B1 D1 लोकस्य. — Ś1 om. (hapl.) 26b–28c. — b) S (T1 om.) भविष्यति (for महा°). — c) K1–3 महा- (for तपो). — After 26, K2 B3 D (except D1. 3. 5) ins.:

973* राजा हि वीर्यवांस्तात इक्ष्वाकुरपराजितः ।

**27** Ś1 T1 om. 27 (cf. v.l. 9, 26). — c) G4 शिशुर् (for शुचिर्). — d) K1. 2. 4 D1–3 स्मृतः (for श्रुतः).

**28** T1 om. 28; Ś1 om. 28abc (cf. v.l. 9, 26). — a) D1 आश्रित्य (for आस्थाय).

**29** All MSS. (except Dc) om. the ref. — a) Ś1 K D3 स (for तु). B Dc Dn D4. 6 एवमुक्त्वा तु तं विप्रं.

Colophon om. in S. — *Major parvan:* Ś1 K1. 2 आरण्य. — *Sub-parvan:* K3. 4 B D (all om. sub-parvan name) mention only धुंधुमारोपाख्यान. — *Adhy. no.* (figures, words or both): Dn1. n3 D1 200; Dn2 199. — *Śloka no.:* Dn 33; D1 32.

# 193

☞ A shorter version of the Dhundhumāra episode as narrated in adhy. 193 and 195 occurs in Harivaṁśa (Calcutta ed.) 1. 11. 667–705; Vāyu Purāṇa 88. 20–60; and Brahmāṇḍa 3. 63. 29–61. Many of the lines agree verbatim with each other.

# १९३

मार्कण्डेय उवाच ।
इक्ष्वाकौ संस्थिते राजञ्शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥ १
शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥ २
विष्वगश्वः पृथोः पुत्रस्तस्मादार्द्रस्तु जज्ञिवान् ।
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ॥ ३
जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता ।
श्रावस्तस्य तु दायादो बृहदश्वो महाबलः ।
बृहदश्वसुतश्चापि कुवलाश्व इति स्मृतः ॥ ४
कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः ।
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ॥ ५
कुवलाश्वस्तु पितृतो गुणैरभ्यधिकोऽभवत् ।
समये तं ततो राज्ये बृहदश्वोऽभ्यषेचयत् ।
कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ॥ ६
पुत्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः ।
जगाम तपसे धीमांस्तपोवनममित्रहा ॥ ७
अथ शुश्राव राजर्षिं तमुत्तङ्को युधिष्ठिर ।
वनं संप्रस्थितं राजन्बृहदश्वं द्विजोत्तमः ॥ ८
तमुत्तङ्को महातेजाः सर्वास्त्रविदुषां वरम् । C 3.10524 B 3.202.10 K. 3.205.10

---

**1** T1 om. 1–10[ab] (cf. v.l. 3. 192. 9). — [a]) T2 (m as in text) G2 इक्ष्वाकुर्यः स्थितो राजा; G4 इक्ष्वाकुस्तु ततो राजा. — [b]) K2 D3 (*sup. lin. sec. m.*) ससादः; T2 G3. 4 शशास (for शशादः). T2 G1. 2. 4 पृथिवीपतिः. — [d]) Ś1 K D1–3. 5 सोयोध्याधिपतिर्बभौ.

**2** T1 om. 2 (cf. v.l. 1). — [ab]) D3 ससादस्य. D1. 2 च (for तु). T2 (before corr.) G2. 4 शशादस्तस्य दायादः (for [a]). A few MSS. ककुस्थो (for ककुत्स्थो). B4 ककुत्स्थो नाम मेधावी पुत्रोस्य सुमहात्मनः. — [c]) K3 G4 अनेन (for अनेनाश्). D5 T2 G3 च ककुत्स्थस्य (for चापि काकुत्स्थः). A few MSS. काकुस्थः. — [d]) G4 च जनितः (for चानेनसः). Dc स्मृतः; M2 सुखः (*inf. lin.* सुतः as in text).

**3** T1 om. 3 (cf. v.l. 1). — [a]) Ś1 K1–3 Dc M2 विश्वगश्वः; B2 D4 T2 (by corr.) G3 विष्टराश्वः; D3 पृष्ठगश्वः; T2 (before corr.) G4 बाढशाश्व; G2 बाधशाश्व. B2 तु तत् (for पृथोः). — [b]) B4 Dn1. n2 D1 अद्रिः (for आर्द्रः). B1. 3. 4 Dc Dn D4. 6 T2 G3 च (for तु). D6 वीर्यवान् (for जज्ञि°). — [c]) K4 B1. 3. 4 Dc Dn3 D2. 4. 6 M1 आर्द्रात्तु; Dn1. n2 D1 अद्रेश्च; D5 आंधस्य (for आर्द्रस्य). K1 युवनाश्वस्थः; K3 चाभवत्पुत्रः; B2 युवनाश्वोभूत्; D1. 2 °नाश्वश्च. — [d]) D1 सुश्रावस; T2 G श्रावकस्; M श्यावस्थस् (for श्रावस्तस्). K3 B4 श्रावस्तो नाम वीर्यवान्; B1–3 Dc Dn D2. 4. 6 °स्त(B2 °स्तो)स्यात्मजोभवत्; D5 °स्तो नाम तत्सुतः.

**4** T1 om. 4 (cf. v.l. 1). — [a]) B Dc Dn1 D4. 6 तस्य (B4 ततः) (for जज्ञे). T2 G श्रावस्ततो; M श्यावस्थको. B Dc Dn1 D4. 6 ज्ञेयः (B4 जज्ञे) (for राजा). K3 D5 पुरीणामुत्तमा लोके. — [b]) T2 G2–4 श्रावकी; M श्यावस्थी (for श्रावस्ती). — [c]) Ś1 B4 D1. 2 G1 M1 च (for तु). B1 श्रावस्तकस्य दा°. — The portion from 4[d] up to 3.194.3[b] is lost in D3 on a missing fol. (264). — [e]) D5 चासीत् (for चापि). B Dc Dn D4. 6 बृहदश्वस्य दायादः. — [f]) Ś1 D5 श्रुतः (for स्मृतः).

**5** T1 om. 5 (cf. v.l. 1). D3 missing (cf. v.l. 4). — [c]) Ś1 K1. 3 D1 सर्वे· (for सर्वे).

**6** T1 om. 6 (cf. v.l. 1). D3 missing (cf. v.l. 4). — [a]) B1. 2. 4 Dn D2. 4 °श्वश्च; D1. 6 °श्वस्य (for °श्वस्तु). — G1 om. (hapl.) 6[cd]. — [c]) B Dc Dn D4. 6 T2 (by corr.) पिता; D5 तथा; T2 (before corr.) G (G1 om.) M तदा (for ततो). — K3 D2 om. (hapl.) 6[d]–7[a]. — [f]) D5 °विक्रमं (for °धार्मिकम्).

**7** T1 om. 7; K3 D2 om. 7[a] (cf. v.l. 1, 6). D3 missing (cf. v.l. 4). — [c]) T2 G श्रीमान् (for धीमान्).

**8** T1 om. 8 (cf. v.l. 1). D3 missing (cf. v.l. 4). Before 8, B Dc Dn D2. 4. 6 ins. मार्कंडेय उ°. — [a]) M2 अथो (for अथ). — [b]) B2 Dn D4. 6 नराधिप (B2 Dn1 °पं) (for युधिष्ठिर). — [d]) K1. 3. 4 Dc D4 G4 द्विजोत्तम; D5 महाद्युति.

**9** T1 om. 9 (cf. v.l. 1). D3 missing (cf. v.l. 4). — [b]) K4 वरः (for वरम्). — [c]) K2 निवार°; D6 अवार° (for न्यवार°). — [d]) K1–3 B4 D5 S (T1 om.) पुरोत्तमं (T2 G2–4 M2 °मे) (for नरो°).

**10** T1 om. 10[ab] (cf. v.l. 1). D3 missing (cf.

). 3 13524
3. 0. 202 10
(. 3. 205 10

न्यवारयदमेयात्मा समासाद्य नरोत्तमम् ॥ ९

उत्तङ्क उवाच।

भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि।
निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्वसेमहि ॥ १०
त्वया हि पृथिवी राजन्रक्ष्यमाणा महात्मना।
भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ॥ ११
पालने हि महान्धर्मः प्रजानामिह दृश्यते।
न तथा दृश्यतेऽरण्ये मा ते भूद्बुद्धिरीदृशी ॥ १२
ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते।
प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः।
रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि ॥ १३
निरुद्विग्नस्तपश्चर्तुं न हि शक्नोमि पार्थिव।
ममाश्रमसमीपे वै समेषु मरुधन्वसु ॥ १४
समुद्रो वालुकापूर्ण उज्जानक इति स्मृतः।
बहुयोजनविस्तीर्णो बहुयोजनमायतः ॥ १५
तत्र रौद्रो दानवेन्द्रो महावीर्यपराक्रमः।
मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः ॥ १६
अन्तर्भूमिगतो राजन्वसत्यमितविक्रमः।
तं निहत्य महाराज वनं त्वं गन्तुमर्हसि ॥ १७
शेते लोकविनाशाय तप आस्थाय दारुणम्।
त्रिदशानां विनाशाय लोकानां चापि पार्थिव ॥ १८
अवध्यो देवतानां स दैत्यानामथ रक्षसाम्।
नागानामथ यक्षाणां गन्धर्वाणां च सर्वशः।
अवाप्य स वरं राजन्सर्वलोकपितामहात् ॥ १९
तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा।
प्राप्स्यसे महतीं कीर्तिं शाश्वतीमव्ययां ध्रुवाम् ॥ २०

---

v.l. 4). — b) K3 तात यत्; T2 G3 तातवत्; G4 तात तत् (for तत्तावत्). B4 क्रियतामिति (for कर्तुम°). — d) B Dn D4. 6 भवे° (for वसे°).

11 D3 missing (cf. v.l. 4). — a) D5 तु (for हि), and नूनं (for राजन्). — b) G1 रम°; M1 द्रक्ष्य° (for रक्ष्य°). — d) K1 T2 G2–4 मारण्यं; B1 या विभो; G4 अरण्यं. G2 कर्तुम् (for गन्तुम्).

12 D3 missing (cf. v.l. 4). — a) G1 महाधर्मः. — Ś1 K1. 2. 4 om. (hapl.) 12c–13b. — d) B Dc Dn D4. 6 transp. ते and भूत्.

13 D3 missing (cf. v.l. 4). Ś1 K1. 2. 4 om. 13ab (cf. v.l. 12). — a) D5 ईदृशो हि महाराज. — c) Ś1 K3 पालनेनार्य. B2 वै हि; D5 धर्मो; T2 G3 यत्नं; G2. 4 यत्नः (for यो वै). — e) B1–3 D5 रक्षितव्या. — f) Ś1 K1. 2 तत्त्वं; K4 त्वं च; D1 तांश्च; D2 ताश्च; T1 त्वं हि; T2 G3 तांस्त्वं (for तास्त्वं).

14 D3 missing (cf. v.l. 4). — a) Ś1 K1. 2 समु° (for निरु°). B1. 3. 4 Dc D1. 2 S तप्तुं (for चर्तुं). — b) Ś1 K1 शक्नोसि; K2 D1 शक्तोमि (read °क्षि?). K1 भार्गव; K3 भार्गवान् (for पार्थिव). B2 ममाश्रमसमीपतः. — c) D1. 2 तु; D5 G1 °षु; T G2–4 M हि (for वै).

15 D3 missing (cf. v.l. 4). — 15ab = 3. 195. 7ab. — a) Ś1 K1. 2 T G समुद्र° (for समुद्रो). Ś1 Dc2 T1 G1. 2 °पूर्णा (for °पूर्ण). — b) B D (except D1. 5; D3 missing) उज्जालक; M °नुक (for °नक). — c) D5 योजनायुतवि°.

16 D3 missing (cf. v.l. 4). — a) Ś1 K1 ततो (for तत्र). — d) K1 °र्नामा; G1 °मारः (for °र्नाम). Ś1 K B4 D1. 2. 5 T1 महासुरः (for सुदा°).

17 D3 missing (cf. v.l. 4). — d) K4 D5 transp. वनं and त्वं; T2 G2. 3 transp. त्वं and गन्तुं.

18 D3 missing (cf. v.l. 4). — a) S स शेते (G1 M शेते स) लोकनाशाय. — K1 om. (hapl.) 18bc. — b) D5 दुष्करं (for दारुणम्). — d) B1 T1 G1 M1 om. च. T2 G2–4 लोकानां च नराधिप.

19 D3 missing (cf. v.l. 4). — a) K1. 2 B2. 4 Dc1 Dn3 D4. 6 T2 G3 दैवतानां (for दे°). Ś1 K1. 2. 4 B1 D5 च; B2. 4 Dc1 Dn D4. 6 हि (for स). — b) K4 B1 अपि; G1 सह (for अथ). — c) B1 अपि (for अथ). Ś1 K D1. 2. 5 सर्प(K1 °र्वा)णां (for यक्षाणां). — d) T2 (before corr.) G2. 4 राक्षसानां (for गन्ध°). — e) T1 M1 वरान् (for वरं).

20 D3 missing (cf. v.l. 4). — a) D5 T1 तद् (for तं). K1 D5 G2 विनाशाय (for °शय). T1 बुध्यतां (for भद्रं ते). — b) Ś1 K D1. 2. 5 मा ते भूद्बुद्धिरन्यथा; G1 मा च ते बुद्धिरन्यथा. — c) Ś1 K B4 D1. 2. 5 महतीं प्राप्नुहि ख्यातिं. — d) K2. 3 Dc Dn3 ध्रुवं (for ध्रुवाम्). T1 महतीं ध्रुवमव्ययां; G1 अव्ययं परमं ध्रुवं.

क्रूरस्य स्वपतस्तस्य वालुकान्तर्हितस्य वै ।
संवत्सरस्य पर्यन्ते निःश्वासः संप्रवर्तते ।
यदा तदा भूश्चलति सशैलवनकानना ॥ २१
तस्य निःश्वासवातेन रज उद्धूयते महत् ।
आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम् ।
सविस्फुलिङ्गं सज्वालं सधूमं ह्यतिदारुणम् ॥ २२
तेन राजन्न शक्नोमि तस्मिन्स्थातुं स्व आश्रमे ।
तं विनाशय राजेन्द्र लोकानां हितकाम्यया ।
लोकाः स्वस्था भवन्त्वद्य तस्मिन्विनिहतेऽसुरे ॥ २३
त्वं हि तस्य विनाशाय पर्याप्त इति मे मतिः ।
तेजसा तव तेजश्च विष्णुराप्याययिष्यति ॥ २४
विष्णुना च वरो दत्तो मम पूर्वं ततो वधे ।
यस्तं महासुरं रौद्रं वधिष्यति महीपतिः ।
तेजस्तं वैष्णवमिति प्रवेक्ष्यति दुरासदम् ॥ २५
तत्तेजस्त्वं समाधाय राजेन्द्र भुवि दुःसहम् ।
तं निषूदय संदुष्टं दैत्यं रौद्रपराक्रमम् ॥ २६
न हि धुन्धुर्महातेजास्तेजसाल्पेन शक्यते ।
निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

**21** $D_3$ om. 21 (cf. v.l. 4). — [a]) $B_{1-3}$ Dc Dn $D_{4.6}$ तस्य स्वपतः (by transp.). $Ś_1$ K $B_4$ $D_{1.2.5}$ स्वपतस्तस्य रौद्रस्य. — [b]) $Ś_1$ B D (except $D_5$; $D_3$ missing) च (for वै). — [c]) $K_4$ $D_{1.2}$ पर्याये; $T_2$ (before corr.) शुध्यंते (for पर्यन्ते). $Dn_1$ संवत्सरे तु पर्यंते; $D_5$ स संवत्सरपर्यंते. — [d]) Some MSS. निश्वासः. $D_5$ संप्रवर्धते. $D_{1.2}$ स निःश्वासं प्रमुंचति.

**22** $D_3$ missing (cf. v.l. 4). — [a]) Some MSS. निश्वास°. — [c]) $T_2$ (before corr.) $G_{2.4}$ °रथम् (for °पथम्). B Dn $D_{4.6}$ S (except $M_1$) आश्रित्य; Dc आस्थाय (for आवृत्य). — [d]) $T_1$ $M_2$ भूमिकंपनः. — [e]) $T_1$ $G_1$ $M_1$ सविस्फुलिंगः. $Ś_1$ K $D_{1.5}$ सांगारं; $T_1$ $G_1$ M सज्वालः. — [f]) $T_1$ $G_1$ M सधूमो. $Ś_1$ K $D_{1.2.5}$ om. हि. $T_1$ $G_1$ M °दारुणः. B Dc Dn $D_{4.6}$ धूममिश्रं सुदारुणं.

**23** $D_3$ missing (cf. v.l. 4). — [a]) S न तेन राजन् (by transp.). $K_2$ $D_5$ शक्तोस्मि (for शक्नोमि). — [b]) $K_3$ $B_3$ $Dc_2$ $D_2$ $T_1$ $G_{1.2.4}$ स्वमाश्रमे. — [c]) $Ś_1$ $K_{1.2}$ $T_1$ तद्विनाशाय (for तं विना°). $M_2$ विनाशयति भद्रं ते. — [e]) $B_{2.3}$ सुस्था (for स्वस्था). B D (except $D_{1.2.5}$; $D_3$ missing) भविष्यंति (for भवन्त्वद्य). — [f]) $B_1$ त्वया (for तस्मिन्). S युधि (for ऽसुरे). — After 23, $T_2$ G ins.:

974* धुन्धुर्नामानमत्युग्रं दानवं रोमहर्षणम् ।
समरे घोरमतुले विनाशय महेषुणा ।

**24** $D_3$ missing (cf. v.l. 4). $G_1$ om. 24[a]–25[b]. — [a]) $T_2$ $G_3$ सर्वं- (for तस्य). — [b]) $D_5$ (? gloss) समर्थः (for पर्याप्तः). — [c]) $K_4$ लोक° (for तेज°).

**25** $D_3$ missing (cf. v.l. 4). $G_1$ om. 25[ab] (cf. v.l. 24). — [b]) B D (except $D_{1.2.5}$; $D_3$ missing) transp. मम and पूर्वं. N ($D_3$ missing) $T_2$ (by corr.) $G_3$ महीपते; $M_1$ तवानघ; $M_2$ तु ते मन्ये (for ततो वधे). — [c]) $B_1$ यश्च; $D_4$ यस्त्वं (for यस्तं). $G_1$ समरे घोरतुमुले. — [d]) $Ś_1$ हरिष्यति; K $D_{1.2.5}$ हनि° (for वधि°). — [e]) $T_{1.2}$ (before corr.) $G_{1.2.4}$ तद् (for तं).

**26** $D_3$ missing (cf. v.l. 4). $B_2$ om. 26[ab]. — [a]) $Ś_1$ $K_{1.2}$ Dc समादाय; $G_4$ °स्थाय. — [b]) $T_1$ $G_1$ $M_1$ दुःसहं भुवि भूपते. — [c]) $M_2$ सं- (for तं). Some MSS. निसूदय. B Dc Dn $D_4$ राजेंद्र; $D_6$ वै पुष्टं; S संदिष्टो ($G_2$ संदष्टो; $M_2$ तं दुष्टं).

**27** $D_3$ missing (cf. v.l. 4). $K_3$ om. 27. — [a]) $B_1$ °राज; $T_2$ $G_{1.3}$ M °वीर्यस् (for °तेजास्). $T_1$ नियुध्यस्व महावीर्यं; $G_{2.4}$ न हि युद्धे महावीर्यस्. — [b]) $D_5$ [अ]न्येन (for [अ]ल्पेन). $T_1$ धक्ष्यते (for शक्यते). — [c]) $B_1$ तु मही° (for पृथिवी°). — [d]) $D_1$ न (for स). $D_5$ पृथ्वीपाल° (for स हि वर्ष°).

Colophon om. in $B_{1.3}$ Dc. $D_3$ missing. — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $G_{1.2}$ $M_2$ मार्कंडेयसमस्या ($G_2$ °समाख्या; $M_2$ °समास्या) (followed by धुंधुमारोपाख्यान in $G_1$ and कुवलयाश्वचरित in $G_2$). $K_{3.4}$ $B_{2.4}$ Dn $D_{1.2.4-6}$ (all om. sub-parvan name) mention only धुंधुमारोपाख्यान. — *Adhy. no.* (figures, words or both): $Dn_1$ $n_3$ $D_1$ 201; $Dn_2$ 200; S ($M_2$ *inf. lin.*) 196 ($M_2$ orig. 198). — *Śloka no.:* Dn $D_1$ 31.

## 194

**1** 1[a]–3[b] missing in $D_3$ (cf. v.l. 3. 193. 4). — [a])

# १९४

C 3 13546
B.S 203 1
K.3 206 1

मार्कण्डेय उवाच ।

स एवमुक्तो राजर्षिरुत्तङ्केनापराजितः ।
उत्तङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् ॥ १

न तेऽभिगमनं ब्रह्मन्मोघमेतद्भविष्यति ।
पुत्रो ममायं भगवन्कुवलाश्व इति स्मृतः ॥ २

धृतिमान्क्षिप्रकारी च वीर्येणाप्रतिमो भुवि ।
प्रियं वै सर्वमेतत्ते करिष्यति न संशयः ॥ ३

पुत्रैः परिवृतः सर्वैः शूरैः परिघबाहुभिः ।
विसर्जयस्व मां ब्रह्मन्न्यस्तशस्त्रोऽस्मि सांप्रतम् ॥ ४

तथास्त्विति च तेनोक्तो मुनिनामिततेजसा ।
स तमादिश्य तनयमुत्तङ्काय महात्मने ।
क्रियतामिति राजर्षिर्जगाम वनमुत्तमम् ॥ ५

युधिष्ठिर उवाच ।

क एष भगवन्दैत्यो महावीर्यस्तपोधन ।
कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुम् ॥ ६

एवं महाबलो दैत्यो न श्रुतो मे तपोधन ।
एतदिच्छामि भगवन्याथातथ्येन वेदितुम् ।
सर्वमेव महाप्राज्ञ विस्तरेण तपोधन ॥ ७

मार्कण्डेय उवाच ।

शृणु राजन्निदं सर्वं यथावृत्तं नराधिप ।
एकार्णवे तदा घोरे नष्टे स्थावरजङ्गमे ।
प्रनष्टेषु च भूतेषु सर्वेषु भरतर्षभ ॥ ८

प्रभवः सर्वभूतानां शाश्वतः पुरुषोऽव्ययः ।
सुष्वाप भगवान्विष्णुरप्शय्यामेक एव ह ।

---

$T_2$ $G_{2-4}$ इति (for स). — $^d$) $Ś_1$ $K_1$ कृत्वांजलिम् (for कृताञ्जलिर्). $Ś_1$ $M_1$ अभाषत (for अथाब्रवीत्).

**2** $D_3$ missing (cf. v.l. 1). Before 2, Dc ins. बृहदश्व उ°. — $^a$) T $G_{2-4}$ न हि मे (for न तेऽभि-). — $^b$) $Ś_1$ K $D_1$ वृथा ह्येतद्; $G_1$ न मोघं तद् (for मोघमेतद्). — $K_3$ om. $2^{cd}$. — $^c$) $T_2$ $G_3$ [अ]पि (for [अ]यं). — $^d$) $Ś_1$ $K_{1.2}$ $B_2$ T $G_{2.3}$ श्रुतः; $D_5$ स ह (for स्मृतः).

**3** $D_3$ missing up to $3^{ab}$ (cf. v.l. 4). — $^a$) $K_4$ $T_1$ स्मृति° (for धृति°). — $^c$) $Ś_1$ K $D_{1-3.5}$ प्रियं च ($K_{1.2}$ स प्रियं) सर्वमेतत्ते; B Dc Dn $D_{4.6}$ प्रियं च ते सर्वमेतत्.

**4** $^{ab}$) $B_3$ $D_3$ पुत्रः. $B_{1.3}$ परिवृतैः. $K_4$ $D_{1-3}$ transp. सर्वैः and शूरैः. $T_2$ $G_{2-4}$ $M_2$ °पाणिभिः (for °बाहुभिः). — After $4^{ab}$, S ins.:

975* हनिष्यति महाबाहुस्तं वै धुन्धुं महासुरम् ।

**5** $^a$) $Ś_1$ K $D_{1-3}$ स (for च). $D_5$ तथोक्तेन (for च तेनोक्तो). — $^b$) $Ś_1$ K $D_{1-3.5}$ मुनिना सत्यवादिना. — $^c$) $Ś_1$ आदेश्य; $K_{1.2}$ आवेद्य (for आदिश्य). $Ś_1$ $K_{1.2}$ भगवान् (for तनयम्). $B_3$ शतमादिश्यत सुतम् — $^d$) $D_5$ उत्तंकस्य °त्मनः.

**6** $^a$) $K_{1.3}$ $B_{1.3}$ $Dc_2$ भगवान्. — $^b$) $Ś_1$ $K_{1.2}$ °वने (for °धन). — $^c$) $G_4$ वा (for [ऽ]थ). $D_2$ वा नप्ता (by transp.). — $^d$) To avoid hiatus, $Ś_1$ $K_{1-3}$ $B_{2.3}$ $D_{2-4.6}$ ins. अपि; S (except $G_4$) हि before एतद्.

**7** $T_2$ $G_3$ om. (hapl.) $7^{abcd}$. — $^a$) $T_1$ एवंबलो महादैत्यो; $G_{2.4}$ एवं महावीर्यबलो. — $^b$) $B_4$ नस् (for मे). — After $7^{ab}$, S ($T_2$ $G_3$ om.) ins.:

976* यस्य निःश्वासवातेन कम्पते भूः सपर्वता ।

— $G_4$ om. (hapl.) $7^{cdef}$. — $^d$) $B_3$ $Dc_2$ $T_1$ $G_1$ यथा° (for याथा°). $Ś_1$ $K_{1.2}$ $D_1$ प्रोच्यमानं तपोधन ($D_1$ द्विजोत्तम); $K_3$ यथातत्वेन वेदितुं. — $Ś_1$ $K_3$ $D_5$ om. $7^{ef}$. — $^e$) $D_3$ एतन् (for एव). $B_1$ °प्रज्ञ (for °प्राज्ञ). — $^f$) $K_{1.2}$ द्विजोत्तम; $T_1$ $G_1$ $M_1$ महामुने (for तपो°).

**8** $^{ab}$) $Dn_3$ transp. इदं सर्वं and यथावृत्तं. $D_1$ विस्तरेण (for यथा°). — After $8^{ab}$, N (except $B_{1.3}$ $D_{1.4.6}$) ins.:

977* कथ्यमानं महाप्राज्ञ विस्तरेण यथातथम् ।
[ $K_2$ °प्रज्ञ (for °प्राज्ञ). $Ś_1$ यथावृत्तं (for विस्त°).]

— $^c$) $K_2$ तथा घोरे; B $Dc_1$ Dn $D_{4.6}$ तदा लोके; $Dc_2$ $D_5$ $G_1$ महाघोरे; $T_1$ निरालंबे; $T_2$ $G_3$ दुरालोके; $G_{2.4}$ निरालोके (for तदा घोरे). — $^d$) $Ś_1$ $K_{1.2}$ नष्ट- (for नष्टे). — $G_4$ om. $8^{ef}$. — $^{ef}$) $B_4$ $G_1$ $M_2$ प्रविष्टेषु च; $T_1$ प्रतप्तेषु च; $T_2$ $G_{2.3}$ नष्टेषु चैव; some MSS. प्रणष्टेषु च. $K_3$ $D_5$ तु (for च). $B_4$ Dc $T_1$ transp. भूतेषु and सर्वेषु.

**9** $^a$) N (except $K_{3.4}$ $D_{3.5}$) $T_2$ $G_{1-3}$ M प्रभवं लोककर्तारं; $T_1$ $G_4$ प्रभवे ($G_4$ °वो) लोककर्ता च. — $^b$) $Ś_1$ $K_{1.2}$ $D_{1.2.5}$ $M_2$ शाश्वतं विष्णुमव्ययं; B Dc Dn $D_{4.6}$ $T_2$

नागस्य भोगे महति शेषस्यामिततेजसः ॥ ९
लोककर्ता महाभाग भगवानच्युतो हरिः ।
नागभोगेन महता परिरभ्य महीमिमाम् ॥ १०
स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्यां विनिःसृतं तत्र यत्रोत्पन्नः पितामहः ।
साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्येन्दुसप्रभे ॥ ११
चतुर्वेदश्चतुर्मूर्तिस्तथैव च चतुर्मुखः ।
स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः ॥ १२
कस्यचित्त्वथ कालस्य दानवौ वीर्यवत्तरौ ।
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् ॥ १३
शयानं शयने दिव्ये नागभोगे महाद्युतिम् ।
बहुयोजनविस्तीर्णे बहुयोजनमायते ॥ १४
किरीटकौस्तुभधरं पीतकौशेयवाससम् ।
दीप्यमानं श्रिया राजंस्तेजसा वपुषा तथा ।
सहस्रसूर्यप्रतिममद्भुतोपमदर्शनम् ॥ १५
विस्मयः सुमहानासीन्मधुकैटभयोस्तदा ।
दृष्ट्वा पितामहं चैव पद्मे पद्मनिभेक्षणम् ॥ १६
वित्रासयेतामथ तौ ब्रह्माणममितौजसम् ।
वित्रास्यमानो बहुशो ब्रह्मा नाभ्यां महायशाः ।
अकम्पयत्पद्मनालं ततोऽबुध्यत केशवः ॥ १७
अथापश्यत गोविन्दो दानवौ वीर्यवत्तरौ ।
दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ ।
ददानि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते ॥ १८
तौ प्रहस्य हृषीकेशं महावीर्यौ महासुरौ । C. 3. 13569 B. 3. 203. 24 K. 3. 206. 25

---

G1–3 M1 विष्णुं शाश्वतमव्ययं; T1 विष्णुः शाश्वत अव्ययः; G4 स विष्णुः शाश्वतोऽव्ययः. — After $9^{ab}$, N (except K3) ins.:

978* यमाहुर्मुनयः सिद्धाः सर्वलोकमहेश्वरम् ।;

while T2 G2. 3 ins.:

979* चतुर्भुजमुदाराङ्गं दृष्टवानस्मि भारत ।

— $^{c}$) B2. 4 भगवन् (for °वान्). — $^{d}$) M2 च (for ह). Ś1 K1. 2 अप्सुशय्यागत एव ह; K3 B Dc Dn D2–4. 6 अप्सु योगत एव सः (K3 D3 ह); K4 अपशय्यागतो विभुः; D1. 5 अप्सु शय्याततो (D5 योगेश्वरो) हरिः; T1 G4 शय्यायामेक एव ह (G4 हि); T2 G2. 3 अपि शय्यां स एव हि.

**10** $^{a}$) K3 D5 T2 G1–3 °बाहो; K4 D1–3 G4 °बाहुर्; B2 Dc T1 M °भागो (for °भाग). — $^{c}$) T1 भोगि° (for नाग°). — $^{d}$) K3 D1. 2 S परि(K3 प्रति)गृह्य; B4 °वार्य (for °रभ्य). T2 G2–4 च मेदिनीं (for महीमिमाम्).

**11** $^{c}$) Ś1 K1. 2 Dn2 नाभ्या (for नाभ्यां). Some MSS. विनिसृतं. Ś1 K2 तत्तु; K1 यत्तु; B D (except D1. 3. 5) T2 (by corr.) G3 दिव्यं (for तत्र). — $^{d}$) K3 B Dc Dn1. n3 D2. 6 T2 G2–4 तत्रो°; Dn2 D4 ततो° (for यत्रो°). D5 G1. 2 प्रजापतिः (for पिता°). — G4 om. $11^{ef}$. — $^{f}$) K3 B1 D3 M2 पद्म- (for पद्मे). B1–3 D (except D1. 3. 5) G2 सूर्यसमप्रभः.

**12** $^{a}$) K3 °बाहुस्; D3 °मूलस् (for °मूर्तिस्). — $^{b}$) T1 चतुर्वर्णश्; T2 G2–4 चतुर्वेगश् (for तथैव च). — $^{c}$) T1 G1 दुर्निरीक्ष्यो (for दुरा°). — $^{d}$) K1 महाबुद्धिप°; T1 G1 दुराधर्षो महाबलः.

**13** $^{b}$) = (var.) $18^{b}$. B2–4 D (except D1–3. 5) °वत्तमौ; T G1. 3 °सत्तमौ (for °वत्तरौ). — After $13^{ab}$, D1 ins.:

980* विष्णुकर्णमलोद्भूतौ योजनानां शतोच्छ्रितौ ।

**15** G4 om. $15^{cdef}$. — $^{c}$) B4 दीप्तं (for राजन्). — $^{d}$) B1 सदा; D6 श्रिया; T1 G1 M1 तदा (for तथा). — $^{f}$) T2 G3 अद्भुताकारदर्शनं.

**16** $^{b}$) B4 Dc2 Dn D4. 6 T1 G2 तथा (for तदा). — $^{c}$) Ś1 K1. 2 D5 देवं; B Dc Dn D6 चापि; D4 वापि (for चैव). — $^{d}$) T1 G3. 4 M2 पद्मपत्रनिभे°.

**17** G1 om. $17^{a}$–$18^{b}$. — $^{a}$) Ś1 K1. 3. 4 D3. 5 T2 (before corr.) G3. 4 व्यत्रासयेतां; B4 वित्रासयंतौ. — $^{b}$) Ś1 K1. 2 °तौजसौ (for °तौजसम्). — $^{c}$) Dn D3 वित्रस्यमानो. S बहुधा (for °शो). — $^{e}$) Ś1 K1. 2 B2 पद्मनाभं (B2m °नालं as in text). — $^{f}$) K4 D1. 2. 3 (before corr.) तेन (for ततो).

**18** G1 om. $18^{ab}$ (cf. v.l. 17). — $^{a}$) Dc ततो°; D3 यथा°; G4 तथा° (for अथा°). — After $18^{a}$, K1. 2 ins.:

981* ब्रह्माणममितौजसम् ।
तौ च वीर्यमदोन्मत्तौ.

— $^{b}$) = $13^{b}$. K3 D3 T1 M2 °सत्तमौ; K4 D1. 2 T2 G2–4 °वत्तमौ (for °वत्तरौ). — $^{c}$) Ś1 K1. 2 वीरः (for देवः). — $^{d}$) Ś1 वो (for वां). — $^{e}$) K4 B1. 3. 4 Dn D1–3 T1. 2 (before corr.) G3. 4 ददामि. — $^{f}$) T2 G3 transp. हि and मम.

C 3 13569
B 3 203. 24
K 3 206. 25

प्रत्यब्रूतां महाराज सहितौ मधुसूदनम् ॥ १९
आवां वरय देव त्वं वरदौ स्वः सुरोत्तम ।
दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन् ॥ २०

भगवानुवाच ।

प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम ।
युवां हि वीर्यसंपन्नौ न वामस्ति समः पुमान् ॥ २१
वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ ।
एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै ॥ २२

मधुकैटभावूचतुः ।

अनृतं नोक्तपूर्वं नौ स्वैरेष्वपि कुतोऽन्यथा ।
सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम ॥ २३
बले रूपे च वीर्ये च शमे च न समोऽस्ति नौ ।
धर्मे तपसि दाने च शीलसत्त्वदमेषु च ॥ २४
उपप्लवो महानस्मानुपावर्तत केशव ।
उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः ॥ २५
आवामिच्छावहे देव कृतमेकं त्वया विभो ।
अनावृतेऽस्मिन्नाकाशे वधं सुरवरोत्तम ॥ २६
पुत्रत्वमभिगच्छाव तव चैव सुलोचन ।
वर एष वृतो देव तद्विद्धि सुरसत्तम ॥ २७

भगवानुवाच ।

बाढमेवं करिष्यामि सर्वमेतद्भविष्यति ॥ २८

मार्कण्डेय उवाच ।

विचिन्त्य त्वथ गोविन्दो नापश्यद्यदनावृतम् ।
अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः ॥ २९

---

**19** $^{a}$) $B_3$ प्रहृष्य (for प्रहस्य). — $K_3$ om. $19^{b}$ and $19^{d}$. — $^{b}$) $K_{1.2}$ $G_{2.4}$ $M_2$ °वीर्यौ; B D (except $D_{1-3.5}$) °दर्पौ (for °वीर्यौ). $B_{1-3}$ Dn $D_{4.6}$ $G_{1.2.4}$ °बलौ (for °सुरौ). — $^{c}$) $K_3$ वचस्तदा for महा°). — $^{d}$) $K_3$ om. $19^{d}$. $B_2$ मोहितौ. Ś$_1$ $K_{1.2.4}$ $D_{1.3.5}$ °कैटभौ (for °सूदनम्).

**20** $^{a}$) Ś$_1$ $K_{1.2}$ वरं (for आवां). — $^{c}$) $K_{1.2}$ $D_3$ $T_1$ स्वौ; $K_3$ $G_{2.4}$ स्व (for स्वो). — $^{d}$) $D_5$ तत्त्वं ब्रूहि; $T_1$ $G_{2.4}$ तत्र($T_1$ °त्र)ब्रूहि (for तद्ब्रवीहि).

**21** $^{b}$) $T_1$ $G_{1.2.4}$ ईप्सितं. $K_4$ $D_3$ चेद्; $D_5$ यो (for च). $T_{1.2}$ (before corr.) $G_{1.2.4}$ वरोत्तमं (for वरो मम). — After $21^{ab}$, $D_3$ (marg. *sec. m.*) ins.:

982* विधारयन्वरं वीरौ प्रतिगृह्णामि कामतः ।

— $^{c}$) Ś$_1$ वै; $K_{1.2}$ वा (for हि). $T_1$ युवां वीर्येण लोकेस्मिन्.

**22** $^{a}$) Ś$_1$ K $B_2$ $Dc_2$ $D_{1-3.5}$ मम ($K_2$ सम-) गच्छेतां ($K_{1.2}$ $D_{2.5}$ °थां). — $^{b}$) Ś$_1$ K $D_{1.2.5}$ भृशं; $B_2$ युवां; $D_3$ भृशं युवां (sic) (for मम). — $^{cd}$) Ś$_1$ K $D_{1-3.5}$ transp. कामं and प्राप्तुं. Dc $G_1$ श्रोतुं (for कामं). $B_1$ सत्व° (for लोक°).

**23** $G_4$ असुरौ (for मधुकैटभौ), om. ऊचतुः. — $^{a}$) Ś$_1$ $K_{1.2}$ $Dn_2$ वै; $K_4$ मे (for नौ). — $^{c}$) Dc धर्मे सत्ये च; $G_1$ सत्ये च धर्मे (by transp.). — $^{d}$) $T_2$ $G_3$ पुरुषोत्तमौ; $G_1$ मधुसूदन (*sup. lin.* as in text).

**24** $^{a}$) Ś$_1$ K $D_{1-3.5}$ transp. रूपे and वीर्ये. B Dc Dn $D_{4.6}$ $T_1$ शौर्ये (for वीर्ये). — $^{b}$) $K_2$ समे; Dc कामे (for शमे). Ś$_1$ B Dc Dn $T_2$ $G_3$ न च; $D_5$ नैव (for च न). $K_{1.2}$ $B_1$ वै (for नौ). $T_1$ शमे चाथ समे स्थिरौ. — $^{d}$) $D_1$ शीले. $T_1$ $G_1$ °सत्य- (for °सत्त्व-). Dc -समेषु; $D_1$ $T_2$ $G_3$ -मदेषु (for -दमेषु).

**25** $^{d}$) $G_1$ [ऽ]ति- (for हि).

**26** $^{a}$) T $G_{2-4}$ युद्धम् (for आवाम्). Ś$_1$ $K_{1-3}$ Dn $D_{1.5}$ $T_1$ $G_{2.4}$ M °महे (for °वहे). — $^{b}$) Ś$_1$ $K_{1.2}$ एव; $K_4$ $D_3$ एतत्; $B_2$ एवं (for एकं). — $^{c}$) T $G_{1.3}$ M त्व- ($G_1$ त्वा)माकाशे; $G_{2.4}$ [ऽ]वकाशे त्वं (for ऽस्मिन्नाकाशे). — $^{d}$) S जह्यावां सुरसत्तम. — After 26, $B_2$ ins.:

983* विनाशे तेजसा युक्ता * * पुरुषसत्तम ।

**27** $^{a}$) Ś$_1$ अभिगम्यैव; $K_{1.2}$ अभिगत्वैव; $K_4$ $D_1$ $T_1$ $G_1$ अभिगच्छावस्; $B_{1.4}$ $D_2$ अधिगच्छेव; $B_2$ Dc Dn $D_{4.6}$ अधिगच्छाव; $B_3$ अधिगच्छेत्त्वं; $D_{3.5}$ अधिगच्छावस्; $T_2$ $G_3$ अद्य गच्छेतां; $G_{2.4}$ उपगच्छावस् ($G_4$ °व); $M_3$ अभिगच्छेव. — $^{b}$) B Dc Dn $D_{4.6}$ $T_2$ $G_{2-4}$ $M_2$ चापि; $D_{1.2}$ [ए]व च (for चैव). Ś$_1$ $K_{1.2}$ सुरोत्तम (for सुलो°). — Ś$_1$ om. (hapl.) $27^{cd}$. — $^{c}$) $D_5$ कृतो (for वृतो). — $^{d}$) $G_1$ पुरुषोत्तम (for सुर°). $K_4$ तत्र विद्धि सुरोत्तम. — After 27, $K_2$ B D (except $D_{1-3.5}$) ins.:

984* अनृतं मा भवेद्देव यद्धि नौ संश्रुतं तदा ।

**28** $^{a}$) Ś$_1$ $T_1$ एतत् (for एवं). $D_3$ गमि° (for करि°). — $^{b}$) Ś$_1$ एव (for एतद्).

**29** All MSS. om. मार्क° उ°. — $^{a}$) $B_4$ Dn $D_5$ स विचिंत्याथ; S चिंतयन्नथ (for विचिन्त्य त्वथ). — $^{b}$) S तद् (for यद्). — $^{c}$) Ś$_1$ $K_{1.2}$ वै (for वा).

**30** $^{a}$) Ś$_1$ $K_{1.2}$ स्वकायसंवृता°; $K_{3.4}$ $D_{1.3}$ °वसंवृता°;

स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा ।
मधुकैटभयो राजञ्शिरसी मधुसूदनः ।
चक्रेण शितधारेण न्यकृन्तत महायशाः ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

# १९५

मार्कण्डेय उवाच ।
धुन्धुर्नाम महातेजास्तयोः पुत्रो महाद्युतिः ।
स तपोऽतप्यत महन्महावीर्यपराक्रमः ॥ १
अतिष्ठदेकपादेन कृशो धमनिसंततः ।
तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभो ॥ २
देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम् ।
अवध्योऽहं भवेयं वै वर एष वृतो मया ॥ ३
एवं भवतु गच्छेति तमुवाच पितामहः ।
स एवमुक्तस्तत्पादौ मूर्ध्ना स्पृश्य जगाम ह ॥ ४
स तु धुन्धुर्वरं लब्ध्वा महावीर्यपराक्रमः ।
अनुस्मरन्पितृवधं ततो विष्णुमुपाद्रवत् ॥ ५
स तु देवान्सगन्धर्वाञ्जित्वा धुन्धुरमर्षणः ।
बबाध सर्वानसकृद्देवान्विष्णुं च वै भृशम् ॥ ६
समुद्रो वालुकापूर्ण उज्जानक इति स्मृतः ।
आगम्य च स दुष्टात्मा तं देशं भरतर्षभ ।
बाधते स्म परं शक्त्या तमुत्तङ्काश्रमं प्रभो ॥ ७ C. 3 13589 B. 3. 204. 8 K. 3. 207. 7

---

D5 °र्यैं संवृता. — b) T1 देवः पुरस् (for देववरस्). — K2 om. 30cd. — e) A few MSS. सित° (for शित°).

Colophon. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या (followed by धुंधुमारोपाख्यान); G2 °समाख्या (followed by कुवलयाश्वचरित). K3. 4 B2–4 D (all om. sub-parvan name) mention only धुंधुमारोपाख्यान. — *Adhy. name:* K1. 2 Dc G1 मधुकैटभवधः; B1 मधुकैटभोपाख्यानं; G2 मधुकैटभवधानुकथनं. — *Adhy. no.* (figures, words or both): Dn1 (*sup. lin.*). n3 D1 202; Dn2 201; S 197 (M2 orig. 199; and *inf. lin.* 207). — *Śloka no.:* Dn 35; D1 34.

## 195

**1** a) B2 Dn D4. 6 °राज (for °तेजास्). — b) D3 °द्युते; D5 °बलः (for °द्युतिः). — B3 om. 1cd. — c) D1 महान् (for महन्). B4 स तपोतप्यत्सुमहन्. — 1d=5b.

**2** b) K3 D1–3. 5 G2. 4 वर्षाणामयुतं नृप (D5 पुरा). — c) Ś1 K1. 2 वरं प्रादाद्; T1 [अ]ददत्प्रीतो; G2. 4 महाप्रीतो. — d) D1. 2 T2 G2–4 transp. स and च. Ś1 K1. 2 D1 प्रभोः; K3 B Dc Dn D4. 6 T2 (by corr.) G1. 3 M प्रभुं; D5 T1 प्रभुः. T1 G1 M वरं प्रोवाच (T1 प्राह च) स प्रभुः.

**3** Before 3, Dc ins. धुंधुरुवाच. — a) D5 T1 °सर्पाणां (for °यक्षाणां). — b) D5 T1 यक्ष-; M3 सर्व- (for सर्प-). Ś1 K1. 2 T2 G1–3 गंधर्वोरगरक्षसां.

**4** Dc1 D3 om. 4cd. — Before 4cd, Dc ins. मार्कंडेय उ°. — c) D5 एवमुक्तः स (by transp.). — d) S स्पृष्ट्वा (for स्पृश्य).

**5** a) T2 G1. 3 च (for तु). — b) =1d. B3 बल° (for महा°). — c) K1 पितुर्वैरं (for पितृवधं). — d) B2. 4 D (except D1–3. 5) द्रुतं (for ततो). B4 Dn D4. 6 °गमत् (for °द्रवत्). Ś1 K1. 2 विष्णुमेव ह्युपा°; B1 पश्चाद्देवद्रुपा°.

**6** a) T2 G2. 3 च; G1 हि (for तु). — B3 om. 6cd. — c) B1 देवांश्च (for असकृद्). — d) K3. 4 B2. 4 Dc Dn D1–4. 6 G4 विष्णुं देवांश्च (by transp.); B1 गंधर्वांश्चैव; D5 विष्णुं सर्वांश्च. G4 सर्वतः (for वै भृशम्).

**7** 7ab=3. 193. 15ab. — a) K2 B D (except D1–3. 5) T1 M समुद्रे वालुकापूर्णे (M °र्णैः); T2 G समुद्रवालुकापूर्णं (T2 G1. 3 °पूर्णे). — b) K1. 2 तज्जानक; B Dn D4. 6 उज्जालक; T2 G3 M उज्जानुक (for उज्जानक). B Dc Dn D4. 6 T1 G1 M स्मृते; D1. 2 श्रुतः; T2 G3 स्मृतिः (for स्मृतः). — c) D5 T1 आगत्य. Ś1 K D1–3. 5 G4 दुरात्मा वै; Dc T2 G1. 3 सुदुष्टात्मा. — e) B1. 2. 4 Dn D4. 6 बाधति. B3. 4 पुरा (for परं). D5 बाधते सर्वभूतानि. — f) B1–3 D (except D1–3. 5) G4 विभो; G1 M प्रति (for प्रभो).

C. 3. 13589
B. 3. 201. 9
K. 3. 207. 8

अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तदा ।
मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ॥ ८
शेते लोकविनाशाय तपोबलसमाश्रितः ।
उत्तङ्कस्याश्रमाभ्याशे निःश्वसन्पावकार्चिषः ॥ ९
एतस्मिन्नेव काले तु सभृत्यबलवाहनः ।
कुवलाश्वो नरपतिरन्वितो बलशालिनाम् ॥ १०
सहस्रैरेकविंशत्या पुत्राणामरिमर्दनः ।
प्रायादुत्तङ्कसहितो धुन्धोस्तस्य निवेशनम् ॥ ११
तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः ।
उत्तङ्कस्य नियोगेन लोकानां हितकाम्यया ॥ १२
तस्मिन्प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् ।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति ॥ १३
दिव्यैश्च पुष्पैस्तं देवाः समन्तात्पर्यवाकिरन् ।
देवदुन्दुभयश्चैव नेदुः स्वयमुदीरिताः ॥ १४
शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः ।
विपांसुलां महीं कुर्वन्ववर्ष च सुरेश्वरः ॥ १५
अन्तरिक्षे विमानानि देवतानां युधिष्ठिर ।
तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः ॥ १६
कुवलाश्वस्य धुन्धोश्च युद्धकौतूहलान्विताः ।
देवगन्धर्वसहिताः समवैक्षन्महर्षयः ॥ १७
नारायणेन कौरव्य तेजसाप्यायितस्तदा ।
स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतोदिशम् ॥ १८

---

**8** $^{b}$) B3 Dn D4–6 तथा; M1 स च (for तदा). — G4 om. $8^{cd}$. — $^{c}$) K4 तत्र (for पुत्रो). — $^{d}$) K4 पुत्रो धुंधुरिति श्रुतः.

**9** $^{a}$) D5 ततो (for शेते). — $^{b}$) Ś1 K2 तपोबलसमन्वितः; B1. 3 तपोवनसमाश्रितः; Dn D4. 6 M °बलमुपा°. — $^{c}$) K3. 4 B1–3 Dc D2–5 °भ्यासे (for °भ्याशे). — $^{d}$) Some MSS. निश्वसन्.

**10** $^{a}$) M2 अथ (for एव). — $^{b}$) K2. 3 B1–3 Dc Dn D5 T2 G1. 3 राजा स-; D4. 6 स राजा (for सभृत्य-). — After $10^{ab}$, K3 B1–3 D (except D1–3) ins.:

985* उत्तङ्कविप्रसहितः कुवलाश्वो महीपतिः ।
पुत्रैः सह महीपालः प्रययौ भरतर्षभ ।;

while G4 ins.:

986* कुवलाश्वो नरपतिः पुत्रैश्च सहितः प्रभुः ।

— K3 D5 G4 om. $10^{c}$–$11^{b}$. B1–3 Dc Dn D4. 6 transp. $10^{cd}$ and $11^{ab}$. — $^{c}$) T G1. 3 M क्षिति° (for नर°).

**11** K3 D5 G4 om. $11^{ab}$. B1–3 Dc Dn D4. 6 transp. $10^{cd}$ and $11^{ab}$ (cf. v.l. 10). — $^{a}$) S (except G1; G4 om.) °विंशद्भिः (for °विंशत्या). — $^{b}$) B2 °सूदनः (for °मर्दनः). — K3 B1–3 D (except D1–3) om. $11^{cd}$. — $^{d}$) Ś1 K4 D1–3 निवेशने; K1. 2 विनाशनः; B4 G1 M वधाय वै.

**12** $^{a}$) D5 समा° (for तमा°). — $^{b}$) Ś1 K1. 2 सहसा; T2 G3 तेजसां (for तेजसा). G4 स्वयं (for प्रभुः). — $^{d}$) S (except G1. 4) च हितेप्सया (for हितका°).

**13** $^{b}$) K2 दिव्य- (for दिवि). B3 हर्षो (for शब्दो). — $^{c}$) K1 वृषपतिर्; K2 नृपपते; B1 T2 G1. 3 M नृपो ह्यय; B2–4 Dc Dn D4. 6 अवध्योद्य (Dn1 °यं); D5 नृपवरो (for नृपसुतो).

**14** Before 14, G3. 4 ins. वैशं°. — $^{a}$) B1 G4 पुष्पैश्च (by transp.). D5 तान् (for तं). G1 दिव्यैश्च पुष्पवर्षैस्तं. — $^{b}$) Dn °वारयन् (for °वाकिरन्)! — $^{c}$) B1–3 D (except D1–3. 5) T1 G3. 4 M2 चापि; G1 नेदुर् (for चैव). — $^{d}$) G1 दिवि (for नेदुः). B D (except D1–3. 5) M अनीरि(B2 °षि)ताः; T G1–3 अताडिताः (for उदीरिताः).

**15** $^{a}$) Ś1 K1. 4 Dc D1–3. 5 T1 G (except G3) शिव°; K2 दिव° (for शीत°). — $^{c}$) Many N MSS. विपांशुलां; M2 निष्पांसुलां. D3 ब्रह्मन् (*sup. lin. sec. m.* as in text); D5 सर्वां (for कुर्वन्). — $^{d}$) D1. 2 प्रववर्ष (for ववर्ष च). — After 15, G1. 2. 4 M ins.:

987* प्रदक्षिणाश्चाप्यभवन्वन्यास्तस्य मृगद्विजाः ।

**16** D5 om. (hapl.) 16. — $^{a}$) B अंतरीक्षे! — $^{b}$) G1 M देवानां च (for देवतानां). — $^{c}$) K1 तत्रैवं; K3. 4 D1–3 T1 G4 तत्र वै. — $^{d}$) B4 [अ]सुरेश्वरः; D6 महारथः; T2 G3 महासुराः.

**17** $^{b}$) K2 युधः; Dc D3 युद्धं; D5 T1 M युद्धे (for युद्ध-). — $^{c}$) D3 देवदानवगंधर्वाः. — $^{d}$) Dn2. n3 D1 समवेक्षन्; T1 G1 M चाभ्याजग्मुर्; T2 G2–4 समपश्यन्.

**18** S (except G2. 4) read $18^{ab}$ after $19^{ab}$. — $^{b}$) B3 तथा (for तदा). — After $18^{ab}$, S ins.:

988* हितार्थं सर्वलोकानामुदङ्कस्य वशे स्थितः ।

— K3 D5 om. $18^{cd}$. — $^{c}$) S (except G4) गत्वा (for गतो). — $^{d}$) Dn1 पुत्रास् (for पुत्रैस्). Dn1 G1 ते; M1

अर्णवं खानयामास कुवलाश्वो महीपतिः ।
कुवलाश्वस्य पुत्रैस्तु तस्मिन्वै वालुकार्णवे ॥ १९
सप्तभिर्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः ।
आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत् ।
दीप्यमानं यथा सूर्यस्तेजसा भरतर्षभ ॥ २०
ततो धुन्धुर्महाराज दिशमाश्रित्य पश्चिमाम् ।
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः ॥ २१
कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः ।
अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुसलैरपि ।
पट्टिशैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः ॥ २२
स वध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः ।
क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च ॥ २३

आस्याद्वमन्पावकं स संवर्तकसमं तदा ।
तान्सर्वान्नृपतेः पुत्रानदहत्स्वेन तेजसा ॥ २४
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव ।
क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ।
सगरस्यात्मजान्क्रुद्धस्तदद्भुतमिवाभवत् ॥ २५
तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम ।
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम् ।
आससाद महातेजाः कुवलाश्वो महीपतिः ॥ २६
तस्य वारि महाराज सुस्राव बहु देहतः ।
तदापीयत तत्तेजो राजा वारिमयं नृप ।
योगी योगेन वह्निं च शमयामास वारिणा ॥ २७
ब्रह्मास्त्रेण तदा राजा दैत्यं क्रूरपराक्रमम् ।

C. 3. 13612
B. 3. 204. 31
K. 3. 207. 30

---

तं (for तैः). $B_1$ Dc °दिशः (for °दिशम्).

**19** $^a$) Ś$_1$ $K_1$ खनयामास. — After $19^{ab}$, S (except $G_{3.4}$) reads $18^{ab}$. — $^c$) $B_2$ Dn $D_{4.6}$ च (for तु). S (except $G_4$) तस्य पुत्रैः खनद्भिस्तु. — $^d$) $K_3$ $D_{1.2}$ सर्वतो (for तस्मिन्वै).

**20** $^b$) $G_1$ $M_2$ °सुरः (for °बलः). — $^c$) $G_4$ तत्र (for तस्य). — $^d$) $D_1$ तदा (for महत्). $K_3$ $D_{2.5}$ °र्हितस्य वै ($D_2$ च) (for °र्हितं महत्). — After $20^{cd}$, $K_{3.4}$ $D_{3.5}$ ins.:

989* युगान्ते सर्वभूतानि पावकस्येव धक्ष्यतः ।

[ $K_3$ पावकस्य दिधक्षतः (for the posterior half). ]

— $K_{3.4}$ $D_5$ om. $20^{ef}$. — $^e$) Ś$_1$ $K_{1.2}$ $T_2$ $G_{2-4}$ $M_2$ °मानो (for °मानं). $B_4$ $D_1$ $G_1$ सूर्यं; $T_1$ [आ]दित्यं (for सूर्यस्). — $^f$) $D_{1.2}$ युगांते (for तेजसा). $B_2$ तेजस्यंतर्हितं महत्. — After 20, $D_2$ ins.:

990* दीप्यमानस्ततो धुन्धुस्तेजसा च नरेश्वर ।

**21** $^a$) $B_1$ धुंधुर्नाम महातेजा. — $^b$) $K_3$ B D (except $D_{1-3.5}$) S (except $G_4$) आवृत्य (for आश्रित्य). — $^d$) $K_4$ कालांतक- (for कालानल-). $D_2$ -महाद्युतिः; $T_1$ $G_1$ -समप्रभः (for -समद्युतिः).

**22** $^a$) $B_4$ च; $M_2$ स (for तु). — $^b$) $D_5$ समंतात्; $T_2$ $G_{2-4}$ परितः (for सर्वतः). — $^c$) Ś$_1$ $D_3$ अभिद्रुतैः. — $^d$) $G_{2.4}$ गदासि- (for गदाभिर्). A few MSS. मुसुलैर्; मुशलैर्, मुषलैर्. $K_{1.2}$ $B_1$ $D_5$ तथा (for अपि). — $G_4$ om. $22^{ef}$. — $^e$) S ($G_4$ om.) पट्टसैः. Ś$_1$ $K_{1.2}$ त्रिविधैः (for परिघैः). $K_{2.4}$ $D_{1.2.5}$ पाशैः; $K_3$ प्राशैः; $B_4$ शूलैः (for प्रासैः). — $^f$) Ś$_1$ K $B_4$ $D_{1-3.5}$ $G_3$ विमलैश्च परश्व- (K $D_{1-3.5}$ °स्व)धैः.

**23** $^a$) $K_4$ वध्यमानः स (by transp.); $B_1$ विबाध्यमानः; $B_3$ $M_1$ अवध्य°. Ś$_1$ K $D_{1-3.5}$ $T_1$ $G_{1.3.4}$ संग्रामे (for संक्रुद्धः). — $^b$) $K_1$ $G_1$ समुत्तस्थुर्. — $^c$) $D_{1.2}$ चापि; $T_1$ $G_4$ चैषां (for तेषां). — $^d$) Ś$_1$ $K_{1.4}$ $B_1$ $Dc_1$ $D_3$ $T_1$ सः (for च).

**24** $^a$) $B_1$ तु; $T_1$ च (for स). — $^b$) $K_4$ संमर्दक° (m as in text); $G_{2.4}$ संवर्ताग्नि°. — $^c$) $K_4$ भूपतेः; $T_1$ आपतत्; $T_2$ $G_3$ अदहत् (for नृपतेः). — $^d$) $B_1$ $T_2$ $G_3$ नृपतेः (for अदहत्). Ś$_1$ $K_{1.2}$ तेन (for स्वेन). $B_3$ कर्मणा (for तेजसा).

**25** $^a$) Ś$_1$ K $Dn_3$ $D_{1-3.5}$ $G_4$ क्रोधाल्ल् (for क्रुद्धो). — $^b$) $K_1$ लोभाद् (for लोकान्). — $^c$) $B_1$ $G_4$ नर° (for राज°).

**26** $^c$) $K_{1-3}$ $D_{3.5}$ तं प्रवृद्धं; $M_1$ सुप्रबुद्धं. Ś$_1$ K $B_4$ $D_{1-3.5}$ $G_{2.4}$ महाबाहुं (for °त्मानं).

**27** $^a$) $M_1$ °तेजाः (for °राज). — $^c$) Ś$_1$ तदाप्यायत तत्तेजो; $K_3$ B Dc $D_{1-3.5}$ $G_1$ तदापीय ततस्तेजो; T $G_{2-4}$ तत्तदा पी($T_1$ ही)यते तेजो. — $^d$) $T_1$ $G_{2.4}$ राज्ञा (for राजा). $T_1$ वारि वमन् (for वारिमयं). $K_{2.4}$ $B_3$ $D_1$ $M_1$ नृपः. — $^e$) $K_{1.3}$ योगे (for योगी). $B_4$ वह्निं तं; $T_1$ तद्वृष्टिं; $T_2$ $G_{2-4}$ वृष्टिं स; $G_1$ M वह्निं स (for वह्निं च). — $^f$) T G $M_2$ श($G_{2.4}$ ग)मयित्वा च वारिणा ($G_{2.4}$ विचारिणा).

**28** $^a$) $B_{1-3}$ D (except $D_{1-3.5}$) च राजेंद्र; S ततो

C. 3. 13565 B 3. 209 24 K 3 213. 25

वध्यमाने शरीरे तु देहनाशो भवत्युत ।
जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ २४

ब्राह्मण उवाच ।

कथं धर्मभृतां श्रेष्ठ जीवो भवति शाश्वतः ।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतां वर ॥ २५

व्याध उवाच ।

न जीवनाशोऽस्ति हि देहभेदे
मिथ्यैतदाहुर्म्रियतेति मूढाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास्य शरीरभेदः ॥ २६
अन्यो हि नाश्नाति कृतं हि कर्म
स एव कर्ता सुखदुःखभागी ।
यत्तेन किंचिद्धि कृतं हि कर्म
तदश्नुते नास्ति कृतस्य नाशः ॥ २७
अपुण्यशीलाश्च भवन्ति पुण्या
नरोत्तमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वै-
स्ततः समुत्पद्यति भावितस्तैः ॥ २८

ब्राह्मण उवाच ।

कथं संभवते योनौ कथं वा पुण्यपापयोः ।
जातीः पुण्या ह्यपुण्याश्च कथं गच्छति सत्तम ॥ २९

व्याध उवाच ।

गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ॥ ३०
यथा संभृतसंभारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ३१
शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ॥ ३२

---

**24** [a]) B$_2$ G$_1$ वधं° (for वध्य°). T$_1$ च देहे (for शरीरे). Ś$_1$ K D$_{2.3.5}$ च (K$_4$ वै) (for तु). — [c]) K$_2$ नित्यं (for ऽन्यत्र). — [d]) = (var.) 34[d]. Ś$_1$ K$_{1-3}$ B$_1$ D$_5$ कर्मबंधन(D$_5$ °धातु)बंधनः; D$_3$ कर्मसंबनि°; T$_1$ °वश्यश्च शाश्वतः; G$_1$ M °बंधनबंधितः. — After 24, K$_{1.2}$ ins. an addl. colophon.

**25** T$_1$ G$_1$ कौशिकः (for ब्राह्मण उ°). — [a]) B$_{1-3}$ D$_6$ धर्म(B$_1$ ब्रह्म)विदां; Dc Dn D$_{3.4}$ कर्मविदां (D$_3$ °भृतां). — [c]) B$_1$ Dc D$_2$ S (except T$_2$ G$_3$) श्रोतुं (for ज्ञातुं). — [d]) B$_1$ तत्वतो. B$_2$m वरदां (for वदतां).

**26** Ś$_1$ K$_{1.2}$ B$_2$ धर्मव्याधः (for व्याधः). — [a]) T$_2$ देहनाशो. D$_5$ त्विह (for [अ]स्ति हि). D$_1$ शरीरभेदे (for हि देह°). — [b]) Ś$_1$ K$_{1.2.4}$ D$_{2.3}$ म्रियते प्रमूढाः; K$_3$ Dc$_1$ Dn D$_4$ G$_4$ M म्रियतीति मूढाः; D$_{1.5}$ म्रियते किलेति; T$_1$ प्रवदंत्यमूढाः. — [d]) K$_4$m B$_4$ T$_2$ G$_{2.4}$ दशार्धता तस्य; D$_5$ आदृश्यते वापि; T$_1$ दशापरस्तस्य (for दशार्धतैवास्य).

**27** [a]) Ś$_1$ K$_{1.4}$ D$_1$ अन्यच्च; K$_{2.3}$ D$_{2.3}$ G$_4$ M$_1$ अन्यश्च; D$_5$ T G$_{1.2}$ अन्यस्य (T$_1$ त्र°); M$_2$ अन्यैश्च. — [b]) G$_4$ चैव (for एव), and °भोगी (for °भागी). B$_{1-3}$ D (except D$_{1-3.5}$) G$_3$ मनुष्यलोके मनुजस्य कश्चित्; T G$_{1.2}$ M स वै कर्ता सुखदुःखस्य (G$_2$ दुःखसुखस्य) भा(T$_1$ M$_2$ भो)-गी. — [c]) T$_2$ G$_{2.4}$ M$_2$ यत्नेन (for यत्तेन). Ś$_1$ K D$_{1-3.5}$ सुकृतं; M$_1$ च कृतं (for हि कृतं). K$_3$ D$_1$ कृतं च (for हि कर्म). — [d]) G$_1$ M$_2$ नात्र (for नास्ति).

**28** [a]) Ś$_1$ K$_{1.2}$ B$_{2.3}$ D (except D$_{1-3.5}$) G$_3$ सुपुण्य° (for अपुण्य°). B Dn D$_{4.6}$ G$_3$ हि (B$_4$ तु) (for च). M$_1$ [अ]पुण्या (for पुण्या). — [b]) N T$_1$ G$_3$ M नराधमाः (for नरो°). K$_{3.4}$ D$_{1-3.5}$ पुण्यकृतो; G$_{1.4}$ पापकृता. — [c]) D$_5$ नरस्तु जातस्त्विह; T$_1$ G$_1$ M$_2$ नरास्तु (G$_1$ °रा हि; M$_2$ °राथ) गच्छंति हि; G$_{2.4}$ नरोनुगम्येत हि; M$_1$ अधो नरो गच्छति. — [d]) T$_2$ वृतैः; G$_{2.4}$ कृतैः (for ततः). Ś$_1$ K B$_1$ D$_{1-3.5}$ T$_2$ समुत्पत्स्यति. Ś$_1$ K$_{1.2}$ M भावितैस्. — After 28, G$_{2.4}$ ins. an addl. colophon (*adhy. no.*: 204).

**29** G$_1$ कौशिकः (for ब्राह्मणः). — [a]) K$_4$ Dc$_2$ Dn$_1$ D$_{5.6}$ स (for सं-). — [c]) K$_{1.2.4}$ Dc$_2$ D$_4$ जाती; Dc$_1$ G$_{1.3}$ M$_1$ जातिः; G$_{2.4}$ जाताः; M$_2$ जात्या. B$_2$ Dn तु (for हि). T$_1$ जात्या पुण्यामपुण्यां च. — [d]) G$_{2.4}$ गर्भं (for कथं). K$_4$ B$_{1.2}$ D$_{1.5}$ T$_2$ G$_{2.4}$ M गच्छंति. D$_5$ जंतवः (for सत्तम).

**30** Ś$_1$ K$_2$ धर्मव्याधः (for व्याध उ°). — Ś$_1$ om. 30. — [a]) K$_{1.2}$ गर्भाधाने. — [b]) K$_{1.2.4}$ D$_{2.3.5}$ संप्रपद्यते; K$_3$ D$_1$ °वर्तते; Dc$_2$ °पश्यते. — [c]) K B$_4$ D$_{1-3}$ तत्सर्वं; D$_5$ तान्सर्वान् (for ते क्षिप्रं). — [d]) T$_1$ प्रवक्ष्येहं (for °क्ष्यामि). T$_2$ G$_{1.2.4}$ M वक्ष्यामि द्विजसत्तम.

**31** [c]) T$_1$ शुभमाप्नोति; T$_2$ G$_{1.2.4}$ शुभयोनौ तु (for °योनीषु!).

**32** [c]) Ś$_1$ वियोनी च; T$_1$ विमोहत्वं; T$_2$ G$_2$ च तिर्यक्त्वं;

जातिमृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः ॥ ३३
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ॥ ३४
जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थमपुण्यां योनिमश्नुते ॥ ३५
ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वापथ्यमिवातुरः ॥ ३६
अजस्रमेव दुःखार्तोऽदुःखितः सुखसंज्ञितः ।
ततोऽनिवृत्तबन्धत्वात्कर्मणामुदयादपि ।
परिक्रामति संसारे चक्रवद्बहुवेदनः ॥ ३७
स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ।
प्राप्नोति सुकृताँल्लोकान्यत्र गत्वा न शोचति ॥ ३८
पापं कुर्वन्पापवृत्तः पापस्यान्तं न गच्छति ।
तस्मात्पुण्यं यतेत्कर्तुं वर्जयेत च पातकम् ॥ ३९
अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते ।
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ॥ ४०
संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ॥ ४१
सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् । C 3 13374 B. 3 209. 44 K. 3. 2°3 45

---

G1 अमानीषु (for त्रियो°). — d) T1 यथाकामी च; T2 G2 अधर्मैरेति; G4 अधोगामी च; M2 अधोगामिषु. Ś1 K1-3 Dn D1. 3 किल्बिषी.

**33** a) D1 जन्म°; S (except G3) व्याधि°. — b) Ś1 K1 D1-3 T2 G2 °द्रुताः; K2 Dc G4 °द्रुतं. — T1 om. $33^{c}$–$35^{d}$. — c) The reading संचरे or संचारे (for संसारे) of some old printed ed. is not found in any MS! Ś1 K1. 4 D1-3 T2 G1. 2 M2 पच्यमाना (M2 °नै)श्च. — d) K3. 4 D1-3 T2 G1 नराः.

**34** T1 om. 34 (cf. v.l. 33). — c) D5 संप्रतिवर्तते. — d) = (var.) $24^{d}$. Ś1 K1. 3 B3 G1. 2 M1 कर्मबंधनबंधनाः (G1. 2 °संयुताः; M1 °बंधिनाः); T2 M2 कामबंधनसंयताः.

**35** T1 om. 35 (cf. v.l. 33). — a) Ś1 K1. 2 जंतवः; B2 T2 जंतुः स्व-; B4 G1 M2 जंतुश्च; Dc जंतुषु. G1 (before corr.). 2 स्वैः स्वैः (for तैस्तैः). — b) K1. 2 Dc D4. 6 G3 सु- (for स्व-). Ś1 K1 दुःखिताः. — d) Ś1 K1. 2 अश्नुयुः; B2 Dn D4. 6 G3 आप्नुते; B4 ऋच्छति. B3 पुण्यां योनिमवाप्नुते; D5 G2. 4 पुण्यां योनिं समश्नुते; G1 M अपुण्या याति योनयः.

**36** a) Ś1 K1. 2 समाधत्ते. — b) Dc न तु (for बहु). D1 पुनरन्यत्र यद्बहु. — c) K1. 2 पश्यते; K3 B1 मुच्यते; Dc पच्यंते. — d) T1 G1. 4 [अ]भक्ष्यम् (for [अ]पथ्यम्). Dc इवात्मनः.

**37** a) Ś1 इव; K D1-3. 5 इह (for एव). — b) Dn D4. 6 G3 सुखसंज्ञकः; T1 सुखसंज्ञितं. Dc असत्यसुखपीडितः; G2. 4 दुःखितोदुःखसंज्ञितः. — c) Ś1 K1. 2 अतो. B3 °निमित्तबंध°; D5 °निर्वृत्तबंध°; M °निवृत्तबंधु°. — e) Ś1 K B4 D1-3. 5 परिभ्रमति. T1 G1 M1 संसारं; G3 संचारे. — f) Ś1 K B4 D1-3. 5 T G3. 4 M1 बहुवेदने (T1 M1 °नं); G1 परिवेष्टनं.

**38** a) T1 ते (for चेन्). — b) D1 निवृत्त° (for विशुद्ध°). — After $38^{ab}$, all MSS. (except D1. 3. 5 T1 G1; K1. 2 om. line 2) ins.:

1026* तपोयोगसमारम्भं कुरुते द्विजसत्तम ।
कर्मभिर्बहुभिश्चापि लोकानश्नाति मानवः ।,

which in K3. 4 B Dc Dn D2. 4. 6 T2 G2-4 M2 is followed by a *repetition* of $38^{ab}$. — c) Ś1 K1. 2 प्राप्नुते. — d) Ś1 शोचते.

**39** a) D1 पापवृत्तिः. T2 पापात्मा पापवृत्तिश्च; G1 सततं पापवृत्तस्तु. — b) B Dc नियच्छति (for न ग°). — After $39^{ab}$, G2. 4 ins.:

1027* पुण्यं कुर्वन्पुण्यवृत्तः पुण्यस्यान्तं न गच्छति ।

— d) K4 D2. 3. 5 वर्जयेत्तच्च; B Dc Dn D4. 6 T1 G3 M वर्जयीत च; T2 G1. 2. 4 वर्जयित्वा तु. K2 B2-4 Dn1. n2 D4. 6 T1 G3 M पापकम्.

**40** a) K3 B3 Dc D3 T2 अनसूयः. Ś1 K D1-3. 5 कृतप्रज्ञः. — b) Ś1 K1. 3 D3 कल्याणानेव; B1. 3 Dc Dn D4. 6 T2 G3 °णानि च; B2 कश्मलानि च. — d) Ś1 K D1. 2. 5 सुकृतैर्लभते महत्.

**41** a) K4 D2. 3 सत्कृतस्य. B1-3 D (except D1-3) G3 M1 च; G1 तु; M2 [इ]ह (for हि). K2 om. (hapl.) $41^{b}$–$42^{c}$. — b) Dn3 D2 जितात्मनः. — c) T2 G2. 4 °नुत्तमा (for °नन्तरा).

**42** K2 om. $42^{abc}$ (cf. v.l. 41). — b) B2. 4 D6 S (except T1 G3) क्रियाः. — c) Ś1 K1. 3. 4 D1-3. 5 धर्मं° (for लोक°). — d) K3 D3 लप्स्येत. Some MSS. द्विजः.

C 3 10865
B 3.209 44
K 3 213 45

असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज ॥ ४२
सन्ति ह्यागतविज्ञानाः शिष्टाः शास्त्रविचक्षणाः ।
स्वधर्मेण क्रिया लोके कर्मणः सोऽप्यसंकरः ॥ ४३
प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ।
तस्य धर्मादवाप्तेषु धनेषु द्विजसत्तम ।
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥ ४४
धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।
स मैत्रजनसंतुष्ट इह प्रेत्य च नन्दति ॥ ४५
शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदुः ॥ ४६
धर्मस्य च फलं लब्ध्वा न तृप्यति महाद्विज ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ ४७
प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।
विरज्यति यथाकामं न च धर्मं विमुञ्चति ॥ ४८
सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ४९
एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकश्चापि भवति मोक्षं च लभते परम् ॥ ५०
तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ ५१
इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ॥ ५२

---

**43** B2 om. 43$^{ab}$. — $^{a}$) K2 B1. 3. 4 Dc Dn D4. 6 T1 G3 ह्यागम° (for ह्यागत°). D1 आगतागमविज्ञानाः. — $^{b}$) K2 Dn D4 T1 G3 शास्त्रे (for शास्त्र-). — $^{d}$) Ś1 K1 कर्मणः सोस्य संकरः; K2 कर्मनाशोसि सं°; T1 कुर्वाणः सो ह्यसं°; T2 G2. 4 कुर्वाणास्ते ह्यसंकरः (G2 °राः); G1 कुर्वाणा ये ह्यसंकराः; M कर्मणः स ह्यसंकरः.

**44** $^{a}$) Ś1 K2-4 D1-3 प्रजा; D5 राज- (for प्राज्ञो). T1 G1 M धर्मे च (for धर्मेण). K4 G1 (before corr.) लभ° (for रम°). — $^{b}$) D5 प्रजा चै°; T1 धर्मेणै° (for धर्मं चै°). — After 44$^{ab}$, M ins.:

1028* धर्मेण वृत्तिं कुरुते धर्मं चैव प्रशंसति ।

— K3 om. 44$^{c}$–45$^{d}$. — $^{c}$) K4 Dn D1-6 ततो ध(Dn D4. 6 °स्माद्)र्मादवाप्तेन; M स तु धर्मादवाप्तैर्हि. — $^{d}$) K4 Dn D1-6 धनेन; B1 धर्मेषु; T2 नष्टेषु. M धनैर्ब्राह्मणसत्तम. — $^{e}$) T1 मुंचते; T2 G2-4 M1 [आ]सिंचते. — $^{f}$) S (except G3) गुणं. B3 T1 G4 पश्यंति.

**45** K3 om. 45 (cf. v.l. 44). — $^{a}$) Ś1 K1. 2 भवते; G4 वदति. — G2 om. 45$^{cd}$. — $^{c}$) K4 B D (except D5) G3 स मित्र°. — $^{d}$) Ś1 K1. 2 परत्रेह (for इह प्रेत्य). D5 विंदति; G1 नश्यति (for नन्दति).

**46** $^{a}$) Dc T1 M शब्दस्पर्शौ. B1 गंधं (for रूपं). Ś1 K1. 2. 4 D1. 3. 5 शब्दे (K1. 2 °ब्द-) स्पर्शे तथा रूपे. — $^{b}$) Ś1 K1. 2. 4 D1. 3 रसे (K1. 2 °स-) गंधे च; B1 रूपमिष्टं च; D2 रसं गंधं च; D5 गंधेभीष्टे च (for गन्धानिष्टांश्च). B4 भारत; G1 सर्वशः (for सत्तम).

**47** $^{a}$) T1 अधर्मस्य (for धर्मस्य च). — $^{b}$) B3 Dn D1. 4. 6 G3 M1 तुष्यति; G2 त्रप्स्यति. K3 D1 M2 महान्; K4 Dc सदा (for महा-). — $^{c}$) Ś1 K1-3 Dc D1 T2 G2. 4 M2 अतृप्यमानो; B1 तृप्यमाणोपि; B2 अतुष्यमाणो; B4 न तृप्यमाणो. — $^{d}$) B D (except D1-3. 5) G3 आपेदे; T1 नादत्ते (for आदत्ते).

**48** $^{a}$) Ś1 K D1-3 ज्ञान° (for प्रज्ञा°). Ś1 K1. 2 इति; Dc इव (for इह). — $^{b}$) K3 B1. 4 Dc1 D2. 3. 5 चैव; T1 G1 एव (for नैव). D1 [अ]नुरुध्यति; G1 M2 °बुध्यते. T2 G2. 4 दोषैर्नैवावरुध्यते. — $^{c}$) K4 विरज्येत; B Dc Dn D2-6 T1 G1. 3 विरज्यते; D1 विरतिं च; T2 M2 विराजति; M1 विरज्येति. B1. 3. 4 Dc T1 G1 M तथा कामान्.

**49** $^{a}$) G2. 4 फल° (for सर्व°). T1 M2 न (for च). — $^{b}$) D1 क्षयान्वितं; D5 जयात्मकं; S (except G3) क्रियात्मकं. — $^{c}$) K1. 2 चिरं; K3. 4 D5 मोक्षं; Ś1 lacuna. — $^{d}$) K1. 2 T2 नानुपायान्; G1 यतते तान्. D5 M2 अपायतः.

**50** $^{a}$) B2 आदाय; T1 आसन्ने. — $^{b}$) Ś1 K1 B1 T1 G2 M2 पापकर्म. — $^{c}$) S (except G3) चैव (for चापि). — $^{d}$) Ś1 K1. 2 नरः; G4 वरं (for परम्).

**51** $^{a}$) S (mostly) निश्रेयसं. — $^{b}$) B4 S (except G3) तपो मूलं (T M रूपं) तपो दमः. — D1 om. (hapl.) 51$^{d}$–52$^{c}$. — $^{d}$) G2. 4 मनसेप्सितान्.

**52** D1 om. 52$^{abc}$ (cf. v.l. 51). — $^{b}$) B2 शमेन (for सत्येन). — $^{c}$) K1. 2 ब्रह्मणा; B4 T1 G1. 4 M ब्राह्मणः. T1 समवा°; T2 G1 M सर्वमा° (for पदमा°). — T1 om. (hapl.) 52$^{d}$–54$^{a}$.

**53** T1 om. 53 (cf. v.l. 52). — $^{a}$) K1. 4 D5 [अ]नु; S (except G3) [इ]ति (for तु). — $^{b}$) G4 कानि कानि;

ब्राह्मण उवाच ।

इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत ।
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ॥ ५३
कथं च फलमाप्नोति तेषां धर्मभृतां वर ।
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं सुधार्मिक ॥ ५४

इति श्रीमहाभारते आरण्यकपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

# २०१

मार्कण्डेय उवाच ।

एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ॥ १

व्याध उवाच ।

विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्तते ।
तत्प्राप्य कामं भजते क्रोधं च द्विजसत्तम ॥ २
ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च निषेवते ॥ ३
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ४
तस्य लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ५
व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।
व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम । C. 3. 13903 B. 3. 210. 6 K. 3. 214. 6

---

$M_2$ तानि तानि. — [cd]) $B_4$ यथा (for कथं), and यत् (for किं).

**54** $T_1$ om. $54^a$ (cf. v.l. 52). — [a]) $Ś_1$ $K_{1.2}$ $Dn_2$ कथं फलमवाप्नोति; $G_1$ आप्नोति तेषां धर्मात्मन्. — [b]) $G_1$ कथं (for तेषां). — [c]) $B_4$ [अ]हं ज्ञातुं (for तत्त्वेन). — [d]) $Ś_1$ K $D_{1-3.5}$ $T_2$ सर्वं (for धर्मं). Dn निबोध मे (for सुधार्मिक)! $B_4$ धर्मतत्त्वेन सुव्रत.

Colophon om. in $K_3$ $D_1$. — *Major parvan:* $Ś_1$ $K_2$ $Dn_2$ $T_2$ $G_{2.4}$ आरण्य; $B_2$ आदि (!). — *Sub-parvan:* $G_1$ $M_2$ मार्कंडेयसम(M₂ °मा)स्या (followed by पतिव्रतोपाख्यान in $M_2$). $K_3$ B Dc $Dn_{1.}$ $n_3$ $D_{2-6}$ $G_3$ (all om. sub-parvan name) mention only पतिव्रतो($D_5$ व्याधो)पाख्यान. — *Adhy. name:* $G_1$ धर्मव्याधकौशिकसंवादः; $G_2$ कौशिकव्याधसंवादः. — *Adhy. no.* (figures, words or both): Dn ($Dn_1$ *sup. lin.*) 206 ($Dn_3$ 207); T $G_1$ M ($M_2$ *sup. lin.*) 203; $G_{2.4}$ $M_2$ (orig.) 205. — *Śloka no.*: $Dn_{1.}$ $n_2$ 56: $Dn_3$ 57.

## 201

**1** [a]) $B_{1.2}$ च (for तु). — [c]) $B_1$ वृत्तं; S प्रश्नं (for विप्रं). $Ś_1$ K $D_{1-3.5}$ प्रत्युवाचाथ यद्वृत्तं. — [d]) $B_4$ युधिष्ठिर (for नरा°).

**2** [a]) $Ś_1$ $K_{1.2}$ हि विषये (for मनु°). — [b]) $B_{1-3}$ Dc S (except $G_3$) मतिः (for मनः). $D_1$ प्रपद्यते (for प्रवर्त°). — [c]) $B_{1.3}$ Dc S तां; $D_5$ तं (for तत्). $Ś_1$ $K_{1.2}$ भजति; $D_{1.3}$ Dc S (except $G_3$) जयति (for भजते). $B_4$ ततः प्रजायते कामो; $D_1$ ततः कामं च भजते. — [d]) $B_{1.3}$ D (except $D_{1-3.5}$) S रोषं; $B_4$ रोषश्च (for क्रोधं).

**3** [a]) $B_4$ स्वमर्थं (for तदर्थं). $T_1$ महते (for यतते). — [b]) $K_3$ कर्मैमारभते. — [d]) $K_1$ M चेत् (for च).

**4** $K_{3.4}$ om. (hapl.) $4^{bc}$. — [b]) $B_2$ मोहश्च; $D_2$ विद्वेषस्; S (except $G_{1.3}$) रोषश्च (for द्वेष°). — $Ś_1$ $K_{1.2}$ $B_2$ $D_5$ om. (hapl.) $4^{cd}$. — [c]) $M_2$ रोषः (for लोभः). — [d]) T $G_1$ द्रोह° (for मोह°).

**5** [a]) B D (except $D_{1-3.5}$) $G_3$ ततो (for तस्य). — [d]) $K_1$ धर्मं (for धर्मं). $T_1$ वै (for च).

**6** [a]) $K_{1.2}$ चरितो; $K_{3.4}$ (after corr.) $B_{1.3}$ $Dc_2$ $D_{1.2.4.6}$ S चरतो ($G_1$ च ततो; $M_2$ रोचते) (for चरते). — [b]) $B_3$ सत्यं (for अर्थं). $B_2$ चेच्छति (for रोचते). $Ś_1$ $K_{1.3.4}$ $D_{1.2.5}$ अर्थं($D_5$ °र्थे)व्याजोपि रोचते ($Ś_1$ $K_1$ वर्तते); $K_2$ अर्थे व्याजे प्रवर्तते; T $G_1$ व्याजेन च न रो°; $G_{2.4}$ व्याजोपि न च रो°; M अव्याजेन च रो°. — [c]) $K_3$ $B_2$ व्याजेषु; $T_1$ कामेन (for व्याजेन). $B_4$ S (except $G_3$) सेव्य°; $D_2$ रोच° (for सिध्य°). — [d]) $D_1$ धर्मेषु; S (except $G_3$) एते° (for

C 3 13934 B. 3. 210 7 K 3 214 7 तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति ॥ ६
सुहृद्भिर्वार्यमाणश्च पण्डितैश्च द्विजोत्तम ।
उत्तरं श्रुतिसंबद्धं ब्रवीति श्रुतियोजितम् ॥ ७
अधर्मस्त्रिविधस्तस्य वर्धते रागदोषतः ।
पापं चिन्तयते चापि ब्रवीति च करोति च ॥ ८
तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ।
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ॥ ९
स तेनासुखमाप्नोति परत्र च विहन्यते ।
पापात्मा भवति ह्येवं धर्मलाभं तु मे शृणु ॥ १०
यस्त्वेतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते ।
तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु जायते ॥ ११

ब्राह्मण उवाच ।
ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते ।
दिव्यप्रभावः सुमहानृषिरेव मतोऽसि मे ॥ १२

व्याध उवाच ।
ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा ।
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा ॥ १३
यत्तेषां च प्रियं तत्ते वक्ष्यामि द्विजसत्तम ।
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ॥ १४
इदं विश्वं जगत्सर्वमजय्यं चापि सर्वशः ।
महाभूतात्मकं ब्रह्मन्नातः परतरं भवेत् ॥ १५
महाभूतानि खं वायुरग्निरापस्तथा च भूः ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ १६

धने°). — c) T G$_1$ M अत्रैव (for त°).

**7** a) Dc वार्यमाणै°. D$_1$ तु (for च). — b) K B$_{1.4}$ Dc$_2$ D$_{2.3.5}$ द्विजोत्तमैः; D$_1$ द्विजातिभिः. — c) K$_3$ उत्तरैः; S (except G$_3$) उत्तमं (for उत्तरं). Ś$_1$ K B$_2$ D$_{2.3.5}$ प्रति-; G$_4$ द्विज- (for श्रुति-). T$_2$ M -संबंधं (for -संबद्धं). — d) Ś$_1$ K D$_{1-3.5}$ प्रतियोजितं; B Dc Dn D$_{4.6}$ [अ]श्रुतियो°; T$_2$ G$_{2.4}$ M$_1$ श्रुतिचोदितं.

**8** a) D$_5$ विविधस्; G$_1$ तु विधिस् (for त्रिविधस्). T$_1$ G$_1$ तत्र (for तस्य). — b) B$_1$ जायते; B$_{2-4}$ Dc$_1$ Dn D$_{4.6}$ S (except M$_1$) वर्त° (for वर्ध°). K$_4$ B$_{1-3}$ D (except D$_4$) G$_3$ रागदोषजः; T$_1$ तव भेदतः. — c) B$_{1-3}$ D (except D$_{1-3.5}$) G$_3$ चैव (for चापि). — d) K$_4$ प्र- (for the *first* च).

**9** a) Dc D$_1$ तथा°; T$_1$ यस्या° (for तस्या°). B$_1$ [अ]धर्मप्रयुक्तस्य; Dn$_2$ [अ]धर्मे प्रवृत्तस्य. — c) Dn °शीलै°; D$_{4.6}$ °शील° (for °शीला°). B$_1$ हि (for च). Ś$_1$ K$_1$ मित्रघ्नं; G$_1$ मित्रार्थं (for मित्रत्वं). — d) K$_{1-3}$ D$_{3.6}$ G$_{1.2}$ भजते; B$_3$ व्रजंतं; B$_4$ भजंति. Ś$_1$ सहकर्मिणः; K$_1$ पापकर्मभिः; K$_3$ B$_3$ D$_5$ T$_1$ G$_{2.4}$ °कर्मणः; K$_4$ D$_{1-3}$ °कारिणः.

**10** a) Ś$_1$ K$_{1.2}$ D$_5$ स नेह; B$_2$ सत्येन; G$_4$ एतेन (for स तेन). Ś$_1$ K$_{1-3}$ D$_5$ T$_1$ सुखम्; K$_4$ B Dc Dn D$_{1-4.6}$ G$_3$ दुःखम् (for [अ]सुखम्). — b) K$_3$ परत्रं तु. B D (except D$_{1-3.5}$) G$_3$ विपद्यते (B$_4$ निहन्यते). — c) K$_1$ भवते. G$_4$ M ह्येव. — d) B$_{1.3}$ Dc °लोकं (for °लाभं). Ś$_1$ K$_{1.2}$ B$_2$ D$_5$ T$_1$ G$_1$ च (for तु).

**11** a) D$_5$ प्राप्नुयाद् (for प्रज्ञया). — b) Ś$_1$ K$_{1-3}$ B$_4$ D$_{1-3.5}$ सर्वानेव; T$_1$ गुणान्वाचा (for पूर्वमेव). Ś$_1$ K$_{1.2}$ D$_5$ [अ]न्न; K$_3$ प्र- (for [अ]नु-). K$_4$ सर्वानुपरि पश्यति. — c) B$_4$ सुखदुःखेन; D$_5$ सर्वदुःखेषु. — d) D$_5$ साधुं (for साधून्). K$_3$ [अ]प्यु निषे° (for [अ]प्युपसे°). — e) Ś$_1$ K$_{1.2}$ °चाराद्; K$_{3.4}$ °चारो; D$_{1-3}$ °चारा; D$_5$ °चारे; M$_2$ °रंभं (for °रम्भाद्). — f) Dc$_1$ Dn$_1$. n$_3$ राजते (for जायते) D$_1$ बुद्धिर्धर्मे प्रजायते.

**12** a) Dn$_2$. n$_3$ धर्म्यं (for धर्मं). — b) Ś$_1$ K$_1$ वार्तां (for वक्ता). — c) K$_4$ Dc °स्वभावः; D$_1$ °स्वभावाद् (for °प्रभावः). D$_1$ भगवन्; D$_5$ तु महान् (for सुमहान्). — d) B$_1$ विभासि मे; D$_5$ मतो हि नः.

**13** a) G$_4$ महाभाग. — b) K$_4$ [ऽ]ब्रभुजः. K$_1$ सुदा; T G$_{1.2.4}$ तथा; M$_2$ तदा (for सदा). — d) Dc$_2$ D$_5$ लोकैद् (for लोके). Ś$_1$ K$_{1-3}$ Dc T G$_1$ M मनीषिणां.

**14** a) G$_4$ M$_2$ तु (for च). Ś$_1$ K D$_{1-3.5}$ लोके (see below); Dc तं ते; M$_2$ धत्ते (for तत्ते). — b) Ś$_1$ K D$_{1-3.5}$ तत्ते वक्ष्यामि सत्तम (see above). — c) K B$_1$ D$_{1-3.5}$ नमस्कृत्य. Dc ब्राह्मणेभ्यो नमस्कृत्य. — d) K$_{3.4}$ D$_{1-3}$ ब्रह्मविद्यां; G$_1$ ब्राह्मीं वृत्तिं.

**15** a) T$_2$ इह (for इदं). T$_2$ G$_{3.4}$ विद्वन् (for विश्वं). — b) D$_5$ मायया; T$_2$ G$_{1.2.4}$ M$_1$ अजगच् (for अजय्यं). T$_1$ जगच्चापि च सर्वशः. — D$_1$ om. 15$^{cd}$. — c) B$_{1.2.4}$ Dn D$_{4.6}$ G$_3$ ब्रह्म (for ब्रह्मन्). — d) B$_{1-3}$ ततः (for नातः). Ś$_1$ K B$_4$ D$_{2.3.5}$ महत् (for भवेत्).

**16** a) G$_{2.4}$ यान्याहुर् (for खं वायुर्). — b) Ś$_1$ K D$_{1-3.5}$ मही तथा; B$_2$ T G$_{1.2}$ M तथैव च; G$_4$ तथा विभुः

तेषामपि गुणाः सर्वे गुणवृत्तिः परस्परम् ।
पूर्वपूर्वगुणाः सर्वे क्रमशो गुणिषु त्रिषु ॥ १७
षष्ठस्तु चेतना नाम मन इत्यभिधीयते ।
सप्तमी तु भवेद्बुद्धिरहंकारस्ततः परम् ॥ १८
इन्द्रियाणि च पञ्चैव रजः सत्त्वं तमस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ १९
सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

# २०२

मार्कण्डेय उवाच ।
एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत ।
कथामकथयद्भूयो मनसः प्रीतिवर्धनीम् ॥ १

ब्राह्मण उवाच ।
महाभूतानि यान्याहुः पञ्च धर्मविदां वर ।
एकैकस्य गुणान्सम्यक्पञ्चानामपि मे वद ॥ २

C. 3. 13921
B. 3. 211. 2
K. 3. 215. 2

---

(for तथा च भूः). — After 16^ab, G2. 4 ins.:
1029* वायुराकाशसंयुक्तः सर्वभूतेषु वर्तते ।
— ^d) Dc ते (for तद्-).

17 ^a) D5 अर्थ- (for अपि). — Ś1 K1. 2 om. (hapl.) 17^bc. — ^b) K3 B4 D1-3. 5 T1 G1 M °वृद्धिः; K4 °वृध्या; T2 G2 °वृद्धाः (for °वृत्तिः). D2. 3 परे परे; G1. 2. 4 M परे परा (G1 परस्परं as in text also). — ^c) K3. 4 B1. 3. 4 D1-3 पूर्वं पूर्वं; D5 पूर्वे पूर्वे (for पूर्वपूर्व-). — ^d) B4 गुणितास्त्रिषु; D5 गुणवृत्तिषु; T G2. 4 M1 गुणिनास्त्विह; G1 गुणता द्विज.

18 ^a) Dn2 T1 षष्ठं; D5 षष्ठी (for षष्ठस्). Ś1 K1. 2 च (for तु). K3. 4 D1-3 G4 M धातुर्; T या तु; G1 यातुर्; G2 यां तु (for नाम). — ^b) B3 अपि (for अभि-). — ^c) Ś1 K1-3 T1 M2 सप्तमा. Ś1 K1. 2 [अ]भवद् (for भवेद्). — ^d) K1. 2 M1 स्वतः; B4 तथा; D1 च तद्- (for ततः). Ś1 K1. 2 B4 Dc1 D1-3 परः (for परम्).

19 ^a) B1. 2. 4 S (except G3) तु (for च). Dn D2-4. 6 पंचात्मा (for पञ्चैव). — K1 om. 19^b-20^c. — ^b) M1 transp. रजः and तमः. — ^c) T2 इत्येतो; G2 इत्येवं; G4 इत्येषु. Ś1 भूतदशको; T2 सप्तदशतो; M1 साप्तदशिको. — ^d) K3. 4 B1 D2. 3 S (except G3) °संज्ञितः.

20 K1 om. 20^abc (cf. v.l. 19). — ^a) B1 तैः सर्वैर्; Dc सर्वैश्च (with hiatus); M1 सर्वैरेव (for सर्वैरिह). D5 [इं]द्रियार्थश्च; T1 [इं]द्रियैस्तैस्तु; T2 [इं]द्रियैरर्थैर्. Ś1 K2-4 B2. 4 D1-3 च (for तु). — ^b) B4 व्यक्ताव्यक्तः. K2. 3 G2. 4 च; K4 B4 D1. 3. 5 T G1 M तु (for सु-). B1-3 D (except D1-3. 5) -संवृतैः; G3 -संस्कृतैः; M1 -संज्ञितः (for -संवृतः). — B4 om. 20^cd. — ^d) K3 B2 D1. 2. 5. 6 गणः (for गुणः). — T2 om. 20^ef. — ^e) B4 इत्येतत् (for एतत्ते). — ^f) D5 भूयः किं (by transp.).

Colophon om. in T2. — *Major parvan:* Ś1 K1. 2 Dn3 G2. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या. K3. 4 B Dc Dn1. n3 D1-6 G3 (all om. sub-parvan name) mention only पतिव्रतो(D5 व्याधो)पाख्यान. — *Adhy. name:* G1 धर्मव्याधकौशिकसंवादः. — *Adhy. no.* (figures, words or both): Dn1. n3 209; Dn2 D1 208; T1 G1 M (M2 *sup. lin.*) 204; G2. 4 M2 (orig.) 206. — *Śloka no.:* Dn1. n3 21; Dn2 22; D1 76.

## 202

1 T2 om. 1. — ^a) B3 तु विप्रर्षे; D5 G2 (by transp.) तु विप्रः स (G2 तु). — ^c) Ś1 K1-3 G1 अचोदयद्; D5 अनोदयद् (for अकथयद्). M2 प्रीतो (for भूयो). K4 D1-3 कथां पप्रच्छ भूयोपि. — ^d) Ś1 K4 D1. 2. 5 प्रीतिवर्धिनीं; B1 स्नेहवर्धनीं; B2 परिव°. K1. 2 मनःप्रीतिविवर्धि- (K2 °र्ध-)नीं.

2 ^b) Ś1 K D1-3. 5 धर्मविदो जनाः; B Dc Dn D4. 6 T1 G1. 3. 4 °भृतां वर. — ^c) D5 गुणं (for गुणान्). Ś1 सर्वान् (for सम्यक्).

3 ^ab) B3 वह्निर् (for ज्योतिर्). Dn2 transp. ज्योतिर्

C 3.10922
B 3.211.3
K 3.215.3

व्याध उवाच ।

भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च ।
गुणोत्तराणि सर्वाणि तेषां वक्ष्यामि ते गुणान् ॥ ३
भूमिः पञ्चगुणा ब्रह्मन्नुदकं च चतुर्गुणम् ।
गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः ॥ ४
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एते गुणाः पञ्च भूमेः सर्वेभ्यो गुणवत्तराः ॥ ५
शब्दः स्पर्शश्च रूपं च रसश्चापि द्विजोत्तम ।
अपामेते गुणा ब्रह्मन्कीर्तितास्तव सुव्रत ॥ ६
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः ।
शब्दः स्पर्शश्च वायौ तु शब्द आकाश एव च ॥ ७
एते पञ्चदश ब्रह्मन्गुणा भूतेषु पञ्चसु ।
वर्तन्ते सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः ।
अन्योन्यं नातिवर्तन्ते संपच्च भवति द्विज ॥ ८
यदा तु विषमीभावमाचरन्ति चराचराः ।
तदा देही देहमन्यं व्यतिरोहति कालतः ॥ ९
आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः ।
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः ।
यैरावृतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ १०
इन्द्रियैः सृज्यते यद्यत्तद्व्यक्तमिति स्मृतम् ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ११
यथास्वं ग्राहकान्येषां शब्दादीनामिमानि तु ।

---

and वायुर्. K$_{1.2}$ D$_3$ T$_1$ G$_1$ आकाश एव. — $^d$) K$_{1.2}$ तथा (for तेषां). B$_1$ वक्ष्यंति (for वक्ष्यामि).

**4** $^a$) G$_1$ M$_2$ भूमेः (for भूमिः). — $^b$) Dc M तु (for च). — $^c$) G$_{2.4}$ तेजसस् (for तेजसि). Ś$_1$ K$_{1.2}$ वै; K$_{3.4}$ D$_{1-3.5}$ G$_{2.4}$ M$_2$ तु (for च). — $^d$) K$_{1.2}$ D$_6$ तु (for च).

**5** M$_2$ om. $5^a$–$7^b$. — $^b$) K$_4$ चापि (for गन्धश्च). K$_4$ द्विजोत्तम; T$_1$ च पंचधा; M$_1$ तथैव च (for च पञ्चमः). — T$_1$ om. $5^c$–$7^b$. — $^c$) Ś$_1$ K B$_4$ D$_{1-3.5}$ transp. गुणाः and पञ्च. — $^d$) Ś$_1$ K$_{1.2}$ °त्तमाः (for °त्तराः).

**6** D$_2$ (hapl.) T$_1$ M$_2$ (cf. v.l. 5) om. 6. — $^b$) Ś$_1$ रसश्च द्विजसत्तम; G$_{2.4}$ रसश्चैव तथैव च. — $^c$) Ś$_1$ K$_2$ चैते (for एते). T$_2$ G$_1$ M$_1$ विप्र (for ब्रह्मन्). — D$_3$ om. (hapl.) $6^d$–$8^a$. — $^d$) G$_1$ चत्वारः कीर्तितास्तव; M$_1$ कीर्तितास्ते द्विजोत्तम.

**7** T$_1$ M$_2$ om. $7^{ab}$; D$_3$ om. 7 (cf. v.l. 5, 6). — $^b$) Ś$_1$ K$_{1.2}$ T$_2$ च (for [अ]थ). — $^c$) B$_4$ D$_5$ शब्दस्पर्शौ तु. K$_4$ T G$_{1.2.4}$ वायोः (for वायौ). K$_2$ तौ; B$_{1.4}$ T$_2$ G$_{2.4}$ च (for तु). — $^d$) K$_{3.4}$ B D G$_3$ M चाकाश (for आकाश). K$_4$ B Dn D$_{4-6}$ G$_3$ M तु (B$_2$ हि) (for च).

**8** D$_3$ om. $8^a$ (cf. v.l. 6). — $^c$) T G$_{1.2.4}$ उक्ता वै (for वर्तन्ते). T$_1$ M °लोकेषु (for °भूतेषु). — $^d$) Ś$_1$ येषां; K$_2$ एषां; G$_4$ एषु (for येषु). Ś$_1$ B$_2$ प्रकीर्तिताः (for प्रति°). — $^e$) K$_{1.2}$ B$_{1.3.4}$ Dc ना(B$_1$ चा)भिव°; D$_3$ तानि व° (for नातिव°). — $^f$) K$_4$ D$_3$ संपत्तिर्; B$_{1.2}$ Dn D$_{1.4.6}$ G$_3$ सम्यक्च (for संपच्च). B$_1$ भवतो (for °ति). Ś$_1$ K$_{1.2}$ सम्यक्तेषां भवेद् द्विज; B$_3$ सम्यग्वर्तति च द्विज; B$_4$ Dc D$_2$ सम्यग् (D$_2$ संपद्) भवति वै तदा (Dc द्विज); D$_5$ साम्यं तेषु भवेद् द्विज; T$_1$ समवच्चाभवद् द्विज. ❀ Cn: सम्यक् च भवति एकीभावेन प्रकाशन्ते। एकत्वमार्षं। ❀

**9** $^a$) K$_3$ B$_{1.4}$ D$_{2.3.5}$ T G$_{2.4}$ M$_2$ Cnp विषमंभावम्; B$_{2.3}$ Dc$_1$ Dn G$_3$ विषयी(Dn$_3$m °सं)भावम्. — $^b$) Ś$_1$ K$_{1.2}$ B$_4$ D$_5$ आविशंति (for आचरन्ति). D$_6$ चराचरं; T$_2$ परावराः. — $^c$) M$_2$ अन्यद् (for अन्यं). — $^d$) D$_1$ अधि°; G$_1$ अति° (for व्यति°). Ś$_1$ K$_{1.2}$ D$_5$ चा(Ś$_1$ ना)नघ; T$_1$ G$_4$ कायतः (for कालतः).

**10** Before 10, T$_2$ G$_4$ ins. व्याधः. — $^a$) Ś$_1$ K$_{1.2}$ T G$_{1.4}$ आनुपूर्व्यात्; B$_1$ °पूर्व्यां; G$_1$ (also).$_2$ प्रातिलोम्यात्. G$_1$ च (for वि-). — $^b$) B$_1$ °पृष्ठशः (for °पूर्वशः). — $^c$) D$_1$ यत्र यत्र. B$_4$ T$_2$ G$_1$ च (for हि). — $^d$) K D$_{1.4}$ T G$_{2.4}$ पंचभौ(K$_4$ °भू)तिकाः; B$_1$ सार्वभौ°; G$_1$ च परंतप. — $^e$) T$_2$ G$_2$ आततम् (for आवृतम्). G$_4$ एतैरापादितं सर्वं.

**11** = (var.) B. 12. 189. 15; 329. 49. — $^a$) K$_4$ T G$_{1.2.4}$ M गृ(T$_2$ ग्रा)ह्यते; B$_1$ सज्ज°; B$_2$ सूय°; D$_1$ शक्य°; D$_5$ व्यज्य° (for सृज्य°). — $^b$) K$_3$ D$_2$ मूर्तम् (for व्यक्तम्). B$_4$ इदं (for इति). K$_3$ स्थितं; D$_6$ श्रुतिः (for स्मृतम्). Dn$_{2.}$n$_3$ तद्व्यक्तमिति संस्मृतं. — $^c$) K$_2$ D$_5$ तज्ज्ञेयं. Ś$_1$ K$_1$ B$_{1-3}$ Dc Dn D$_{4.6}$ G$_3$ त(Dc$_1$ य)दव्यक्तमिति ज्ञेयं. — $^d$) D$_1$ M$_2$ °ग्रामम् (for °ग्राह्यम्).

**12** $^a$) G$_{1.2.4}$ यदा; M$_2$ तथा- (for यथा-). K$_2$ -स्वां; K$_3$ D$_3$ G$_{1.2}$ M -स्व-; D$_5$ सु-; G$_4$ ह्य- (for -स्वं). Some MSS. ग्राहकाण्येषां. — $^b$) K$_3$ °नि च; D$_4$ °निति (for °नि तु). — $^c$) K$_3$ तथा; B$_4$ Dc T यथा; D$_1$ G$_{1.2.4}$ M$_1$ तदा; D$_2$ तु यं (for यदा). K$_1$ देहे. — $^d$) B$_{1.3}$ D

इन्द्रियाणि यदा देही धारयन्निह तप्यते ॥ १२
लोके विततमात्मानं लोकं चात्मनि पश्यति ।
परावरज्ञः सक्तः सन्सर्वभूतानि पश्यति ॥ १३
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ १४
ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजम् ।
लोको बुद्धिप्रकाशेन ज्ञेयमार्गेण दृश्यते ॥ १५
अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् ।
अनौपम्यममूर्तं च भगवानाह बुद्धिमान् ।
तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि ॥ १६
इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ १७
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् ।
एतन्मूलं हि तपसः कृत्स्नस्य नरकस्य च ॥ १८
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिमवाप्नुते ॥ १९
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ २०
रथः शरीरं पुरुषस्य दृष्ट-
मात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥ २१ C. 3. 13942 B. 3. 211. 23 K. 3. 215. 23

---

(except D1–3. 5) G3 इव; T2 न हि (for इह). Ś1 K B1m D1–3. 5 दृश्यते (for तप्यते).

**13** a) B4 सततम्; G2 विदितम् (for विततम्). — K4 om. (hapl.) 13cd. — c) B2–4 Dc Dn D4. 6 T2 G3 M1 परापरज्ञः; D2 °वरेशः. K1 D4 G2 M2 शक्तः सन्; Dc D1. 5 स(D1 श)क्तः स; T G1 यः शक्तः; G4 शक्तिः सन् (for सक्तः सन्). — d) Ś1 K1. 2 D1–3 भूतानि प्रति°; B2 Dn D4. 6 G3 स तु भूतानि; T1 M स भूतानि प्र°.

**14** a) T1 पश्यंतं (for पश्यतः). — b) D1 सद्यो° (for सर्वा°). — c) D1 °भूतश्च; T1 G1. 2 M °भूतेन. — d) K2 नाशुभो नोप°; D1 नाश्नुते नोप°.

**15** Ś1 K1. 2 om. 15. — a) K3 Dn3 D2. 4. 5 T2 G3 Cnp °पूर्वात्म(T2 °दि)कं; B1 °मूलार्थकं; T1 G4 °भूतादिकं. K4 D1. 3 अज्ञानमूलं तं क्लेशम्. — b) K4 T1 अनिवृत्तस्य; Dc2 D3. 6 G3 M1 इतिवृ°; D5 अतिवृद्धस्य. K4 B4 D2 मोहनं (K4 °जं also as in text); B1 लक्षणं; B2. 3 Dc Dn D4. 6 G3 पौरुषं; D1 मोहदं. — c) K3. 4 G1 लोक°; B1–3 D2. 3. 5 G4 लोके; B4 अहं°; Dc D1 G2 लोकं (for लोको). Dn D4. 6 G3 लोकवृत्तिप्रकाशेन. — d) K3. 4 D2 ज्ञेयं; B1–3 Dc Dn D4. 6 T2 G3 ज्ञान°; D1 जानन् (for ज्ञेय°). B1. 3 D (except D1–3. 5) G3 गम्यते; B2 पश्यति; G1 M1 इष्यते; M2 रिष्यते (for दृश्यते).

**16** b) B1 सदासुखं. — c) K4 अपूर्वं; B1 अमर्त्यं; T2 G2. 4 M अमूर्तिं (for अमूर्तं). — d) B1 वृद्धि° (for बुद्धि°). D5 भगवन्निह विद्धि मां. — e) K3 ततो मूलम्; G2 तपोकूलम्; G4 तपोबलम्. — f) T1 G2. 4 M2 मा (for मां). D1. 5 °पश्यसि (for °पृच्छसि). — After 16, S ins.:

1030* तपसा हि समाप्नोति यद्यद्देवाभिवाञ्छितम् ।

[M1 नशा°; M2 नमा° (for समा°). T2 G3 °वांछति.]

T2 G1. 2. 4 M2 cont.. Ś1 K1. 2 Dn D5 ins. after 16:

1031* यदिन्द्रियाणि संयम्य तपो भवति नान्यथा ।

[Dn G1 M2 इंद्रियाण्येव (for यदिन्द्रियाणि). T2 तपोवनमनास्तथा (for the posterior half).]

**17** B4 om. 17ab. — a) Dc इंद्रियाणां च (for °ण्येव). T1 तत्स्वर्गं. — b) Ś1 K1. 2 यौ (for यत्).

**18** d) T2 G2. 4 स्वर्गं° (for कृत्स्न°). B4 ते (for च).

**19** D2 om. 19b–20a. — b) Ś1 D5 यच्छति; K3 B2 Dn D4. 6 अर्छं°; B3 इच्छ°; Dc अर्हं°; G3 अभ्यर्ति (sic) (for ऋच्छति). — c) Ś1 तु तानेव; K4 च तान्येव; G4 M2 कृतान्येव. — d) B1 Dc Dn D4. 6 G3 समाप्नुयात्; B2. 3 G1 अवाप्नुयात्; T2 G3 उपाश्नुते (for अवाप्नुते).

**20** D2 om. 20a (cf. v.l. 19). — a) = 22a. K2 नित्यानाम्; T1 G1. 2. 4 M योज्यानाम्; T2 योग्यानाम् (for नित्यानाम्). — Ś1 D5 om. (hapl.) 20b–22a. — b) D2 अधिगच्छति (om. यः); S (except G3) योधि(G1 °व)तिष्ठति. — c) T G1 च (for स). S (except G3) न चा° (for कुतो°). — d) B4 युज्यते द्विजसत्तम; S (except G3) संयुज्येत जितेंद्रियः.

**21** Ś1 D5 om. 21 (cf. v.l. 20). — a) K D1–3 सृष्टम्; T G2. 4 दृष्टो (for दृष्टम्). — b) T G2. 4 ह्यात्मा (for आत्मा). B1 च यंतें°; G3 यंतें° (for नियन्ते°). K1. 2 षट् च तानि (for [इ]न्द्रियाणि). K D1–3 T1 G1 M [अ]स्य चाश्वाः (for [आ]हुरश्वान्). — c) B1 D3 T G1. 4 M2 अप्रमत्तैः. K4 D2. 3 कुशलैः; B1 S (except G3) कुशलो. S

13943 / 211. 24 / 215. 24 षण्णामात्मनि नित्यानामिन्द्रियाणां प्रमाथिनाम् ।
यो धीरो धारयेद्रश्मीन्स स्यात्परमसारथिः ॥ २२
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्वा तानि जयेद् ध्रुवम् ॥ २३
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि ॥ २४
येषु विप्रतिपद्यन्ते षट्सु मोहात्फलागमे ।
तेष्वव्यवसिताध्यायी विन्दते ध्यानजं फलम् ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

# २०३

मार्कण्डेय उवाच ।
एवं तु सूक्ष्मे कथिते धर्मव्याधेन भारत ।
ब्राह्मणः स पुनः सूक्ष्मं पप्रच्छ सुसमाहितः ॥ १
ब्राह्मण उवाच ।
सत्त्वस्य रजसश्चैव तमसश्च यथातथम् ।
गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः ॥ २
व्याध उवाच ।
हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि ।
एषां गुणान्पृथक्त्वेन निबोध गदतो मम ॥ ३
मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम् ।

---

(except G$_{2.3}$) यथाश्वैर्. — $^{d}$) K$_{1.3}$ D$_{1.2}$ M पथीव; T$_1$ G$_1$ सदैव; T$_2$ वशीव (for रथीव).

**22** Ś$_1$ D$_5$ om. 22$^{a}$ (cf. v.l. 20). — $^{a}$) = 20$^{a}$. B$_{1-3}$ Dc Dn D$_{4.6}$ G$_3$ युक्ता°; G$_1$ सृष्टा° (for नित्या°). — $^{c}$) K$_4$ Dc$_2$ T$_1$ वीरो (for धीरो).

**23** $^{a}$) T$_2$ G$_2$ प्रहृष्टानां. — $^{b}$) B$_1$ वर्त्मनि (for °सु). — $^{c}$) B$_2$ वृत्तिं (for धृतिं). — $^{d}$) K$_4$ D$_1$ बुधः (for ध्रुवम्). Dn$_3$ धृत्वा विजयते ध्रुवं; G$_1$ धृत्वैतानि ध्रुवो जयः.

**24** = (var.) Gītā (Vulg.) 2. 67. — $^{a}$) K$_3$ B$_4$ D$_{1.5}$ तु; B$_{1-3}$ Dn D$_{4.6}$ G$_3$ वि- (for हि). — $^{b}$) B$_1$ [ऽ]थ (for [ऽ]नु-). — $^{c}$) Ś$_1$ D$_{1.5}$ T$_1$ G$_1$ हरति प्रज्ञां; T$_2$ G$_{2.4}$ M बुद्धिं हरति (T$_2$ M$_2$ °ते) (for हरते बुद्धिं). — $^{d}$) Ś$_1$ K D$_{1-3.5}$ T$_1$ G$_1$ वायुर्नावमिवांभसि.

**25** $^{a}$) Ś$_1$ K$_3$ तेषां; K$_{1.2.4}$ D$_{3.5}$ येषां; T$_1$ ये तु; G$_1$ यो हि; G$_{2.4}$ एषु. G$_{1.2.4}$ °पद्येत (for °पद्यन्ते). D$_1$ ये ध्रुवं प्रतिपद्यंते. — $^{b}$) Ś$_1$ षट्सु लोकात्; K$_{1.2}$ षट्सु लोभात्; K$_4$ D$_{1.2}$ षट्सु षोढा; D$_3$m षड्गुणोढा; D$_5$ षट्सु लोभ-; T$_2$ G$_{2.4}$ M षट्स्वमोहात्. — $^{c}$) G$_{2.4}$ ज्ञाता (for तेषु). Ś$_1$ B$_4$ Dc$_2$ व्यवसितो° (Dc$_2$ °ता°); K$_1$ वै वसितो°; K$_2$ विवसिता°; K$_3$ D$_5$ व्यवस्थिता°; K$_4$ D$_{1-3}$ [अ]ध्यवसितो°; D$_1$ T G$_1$ M$_2$ [अ]ध्यावसिता° (D$_1$ °तो°; T$_1$ °ते°) (for [अ]व्यवसिता°). — $^{d}$) K$_1$ विंदीत; K$_2$ T$_1$ विंदेत (for विन्दते). K$_{1.2}$ बलं (for फलम्).

Colophon. — *Major parvan:* Ś$_1$ K$_{1.2}$ G$_{2.4}$ आरण्य. — *Sub-parvan:* G$_1$ मार्कंडेयसमस्या. K$_{3.4}$ B Dc Dn$_{1.}$n$_3$ D$_{1-6}$ G$_3$ M$_2$ (all om. sub-parvan name) mention only पतिव्रतो(D$_5$ धर्मव्याधो)पाख्यान. — *Adhy. name:* D$_5$ महाभूतनिर्णयः; G$_1$ धर्मव्याधकौशिकसंवादः. — *Adhy. no.* (figures, words or both): Dn$_1$ 210; Dn$_2$ D$_1$ 209; T$_1$ G$_1$ M (M$_2$ *inf. lin.*) 205; T$_2$ 204; G$_{2.4}$ M$_2$ (orig.) 207. — *Śloka no.:* Dn$_1$ 28; Dn$_{2.}$n$_3$ 27; D$_1$ 26 (followed by 27).

## 203

**1** $^{b}$) D$_1$ धर्मैं (for धर्म-). — $^{c}$) M$_2$ परमः (for स पुनः). N (except B$_{1-3}$ D$_{1-3.5}$) पुनः सूक्ष्मतरं विप्रः. — $^{d}$) T$_2$ तु (for सु-).

**2** $^{a}$) K$_4$ D$_{1-3}$ T$_1$ चापि (for चैव). — $^{c}$) K$_3$ गुणं; Dc$_1$ D$_4$ गुणास् (for गुणान्). — $^{d}$) Ś$_1$ यथाप्रश्नं हि पृ°; K$_{1.2}$ यथावत्परिपृ°.

**3** 3$^{a}$=1. 48. 4$^{a}$; 53. 35$^{a}$; 59. 9$^{a}$; etc., etc. — $^{b}$) =1. 27. 4$^{b}$; 89. 4$^{b}$; etc. B$_3$ M मा (for मां). — $^{c}$) K$_1$ M$_2$ येषां; T$_1$ G$_{1.2.4}$ एतान् (for एषां). K$_3$ गुणाः; D$_5$ गुण- (for गुणान्). — $^{d}$) G$_1$ वदतो (for ग°).

**4** $^{a}$) D$_5$ मोहमेकं (for मोहात्मकं). K$_2$ तपस् (for तमस्). Dn$_{1.}$n$_3$ D$_{5.6}$ T$_2$ G$_3$ स्त्वेषां (for तेषां). — $^{b}$) K$_{1.2}$ तेषां; T$_1$ एव (for एषां). D$_1$ प्रवर्तते. — $^{c}$) Ś$_1$ K D$_{1-3.5}$ तु (for च). — $^{d}$) T$_2$ जातिर् (for ज्याय). Ś$_1$

प्रकाशबहुलत्वाच्च सत्त्वं ज्याय इहोच्यते ॥ ४
अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः ।
दुर्दृशीकस्तमोध्वस्तः सक्रोधस्तामसोऽलसः ॥ ५
प्रवृत्तवाक्यो मन्त्री च योऽनुरागयभ्यसूयकः ।
विवित्समानो विप्रर्षे स्तब्धो मानी स राजसः ॥ ६
प्रकाशबहुलो धीरो निर्विविस्त्सोऽनसूयकः ।
अक्रोधनो नरो धीमान्दान्तश्चैव स सात्त्विकः ॥ ७
सात्त्विकस्त्वथ संबुद्धो लोकवृत्तेन क्लिश्यते ।
यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ॥ ८
वैराग्यस्य हि रूपं तु पूर्वमेव प्रवर्तते ।
मृदुर्भवत्यहंकारः प्रसीदत्यार्जवं च यत् ॥ ९
ततोऽस्य सर्वद्वंद्वानि प्रशाम्यन्ति परस्परम् ।
न चास्य संयमो नाम कश्चिद्भवति कश्चन ॥ १०
शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं भवति ब्रह्मन्क्षत्रियत्वं तथैव च ॥ ११
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ।
गुणास्ते कीर्तिताः सर्वे किं भूयः श्रोतुमिच्छसि ॥ १२

ब्राह्मण उवाच ।

पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ १३

मार्कण्डेय उवाच ।

प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर । C 3 13960 B 3 213 7 K 3 216 14

---

$K_1$ इवो° (for इहो°).

**5** [b]) $K_8$ °शोक- (for °शीलो). $Dc_2$ विलोचनः (for विचेतनः). — [c]) $K_{1.2}$ B Dn $D_{4.6}$ $G_3$ दुर्हृषीकस् ($B_3$ दुर्धर्षणस्); $K_4$ $D_1$ दुःस्वशीलस्; $D_{2.3.5}$ T दुर्दर्शनस्; $G_{1.2.4}$ $M_1$ दुर्दर्शि($G_{2.4}$ °र्शी)कस्. $Ś_1$ नमोग्रस्तः; $D_5$ तदोध्वस्तः. — [d]) $Ś_1$ K $D_{1-3.5}$ क्रोधन° (for सक्रोध°). $B_3$ (m as in text) स्मृतः; $D_3$ (by corr.) मतः; $D_5$ जनः; $T_2$ नरः (for [अ]लसः).

**6** [a]) $Ś_1$ $K_4$m (orig. corrupt) प्रवृत्तरागो; $B_4$ स वृत्तवाक्यो; $T_2$ $G_{2.4}$ M सुवृत्त°; $G_1$ संवृत्त°. $T_3$ तंद्री (for मन्त्री). — [b]) $Ś_1$ $K_{1.2.4}$ $T_2$ योनुरागाभ्यसू°; $K_3$ B Dc Dn $D_{3.4.6}$ $T_1$ $G_{1.3}$ M यो नराभ्योनसू° ($D_3$m प्रारंभायासशीलवान्); $D_1$ योनुरागयोभ्यसू°; $D_2$ योनुवाग्यस्य सू°; $D_5$ योगवाच्यभ्यसू°; $G_2$ योनुराग्यनसू°; $G_4$ यो निराग्यनुसू°. — $K_1$ om. (hapl.) $6^c$–$7^b$; $K_3$ om. $6^c$–$7^d$. — [c]) $Ś_1$ $K_2$ विविक्तमानो; $K_4$ $D_1$ $T_1$ $G_{2.4}$ विवत्स°; B Dc Dn $D_{3.4.6}$ $G_3$ M विधित्स°; $D_2$ विविश°. $K_2$ राजर्षे (for विप्र°). — [d]) $G_3$ तस्थौ (for स्तब्धो). $K_4$ $B_4$ $D_{2.3.5}$ च (for स).

**7** $K_1$ $D_5$ om. $7^{ab}$; $K_3$ om. 7 (cf. v.l. 6). — [b]) B $Dc_1$ Dn $D_{3.4.6}$ $G_3$ निर्विधित्सो; $G_{1.2.4}$ निर्विवत्सो. — [c]) $B_4$ अक्रोधनो मृदुर्; $T_1$ $G_{2.4}$ °नपरो; $T_2$ $G_1$ M °परमो. $Ś_1$ धीरो; $G_2$ श्रीमान् (for धीमान्). — [d]) $K_{1.2}$ शांत° (for दान्त°).

**8** $Ś_1$ $K_{1.2}$ om. $8^{ab}$. — [ab]) $T_2$ तत्र; $M_2$ तस्य (for स्त्वथ). $D_6$ संवृत्तो; $T_2$ संबंधो (for संबुद्धो). $T_2$ $G_{2.4}$ °वृत्तैर्न (for °वृत्तेन). $T_1$ लुप्यते; $T_2$ $G_{1.2.4}$ लिप्य°; M लिक्ष्य° (for क्लिश्य°). $K_{2.4}$ $D_{1-3.5}$ क्लिश्यते लोकवृत्तेन संबुद्धस्त्वथ सात्त्विकः (by transp.). — [c]) $K_{1.2}$ बोध्यति; $M_1$ बुध्येत (for बुध्यति). $D_1$ यदा बुध्या विबोद्धव्यं. — [d]) $Ś_1$ $K_{1.4}$ $Dn_3$ $D_{2.3.5}$ जुगुप्सति; $K_2$ °प्सिते; $K_3$ °प्सितं.

**9** [a]) $B_2$ Dn $D_{4.6}$ $T_2$ $G_3$ विरागस्य (for वैराग्य°). $Ś_1$ $K_{1-3}$ $B_{1-3}$ Dc Dn $D_{1.4.6}$ $G_3$ च; $K_4$ $D_{2.3.5}$ [अ]नु-; $B_4$ $G_1$ तु (for हि). $B_4$ वै; $D_1$ च (for तु). — [c]) $Ś_1$ $K_{1.2}$ [अ]हंकारे (for °कारः). — [d]) $Ś_1$ $K_{1.2}$ [आ]र्जवे (for °वं). $Ś_1$ $K_{1.2}$ यः; $T_2$ तत् (for यत्).

**10** [a]) $Ś_1$ K $B_3$ $D_{1-3.5}$ °दुःखानि (for °द्वंद्वानि). $T_1$ ततो निवृत्तद्वंद्वश्च. — [b]) $T_1$ M लोकवृत्तं जुगुप्सते (= $8^d$). — [c]) $Ś_1$ $K_{1.2}$ $D_5$ तदास्य; $K_3$ औदास्यं; $M_1$ न चापि (for न चास्य). $K_4$ $B_{1-3}$ Dn $D_{1-4.6}$ $G_3$ संशयो; $T_2$ $G_4$ [अ]पगमो; $G_1$ $M_1$ [अ]संयमो; $G_2$ [अ]संगमो (for संयमो).

**11** [a]) T $G_1$ M °भावेपि (for °योनौ हि). — [b]) $K_3$ $M_2$ तद्गुणान्; $Dc_2$ $G_1$ षड्गुणान्. T $G_{1.4}$ M अधि°; $G_2$ अति° (for उप°). — [c]) $B_{1-3}$ D (except $D_{1-3.5}$) $G_3$ लभते (for भवति). — [d]) $K_4$ हि (for च).

**12** [b]) $T_1$ $G_{2.4}$ अपि (for अभि-). — [c]) $B_1$ ब्रह्मन् (for सर्वे). — [d]) $B_1$ किं भूयः कथयामि ते. — After 12, $K_{3.4}$ $B_{1-3}$ D $G_3$ ins. an addl. colophon (*adhy. no.*: $Dn_1$, $n_3$ 211; $Dn_2$ $D_1$ 210).

**13** [a]) $G_3$ वायवं (for पार्थिवं). $B_1$ आश्रित्य (for आसाद्य). — [b]) $Dn_3$ $D_{1.5}$ $G_{2.4}$ शरीरे (for शारीरो). $T_1$ $G_4$ $M_2$ कथं विभो; $T_2$ प्रकंपते (for कथं भवेत्). — [c]) $B_1$ °विशोकेन (m °विशेषेण as in text). — [d]) $K_4$ [ऽ]नलः (for [ऽ]निलः).

**14** [a]) एकं; $D_5$ एतत्; $G_{2.4}$ $M_2$ एवं (for एतं). — [c])

C. 3. 13150 B. 3. 213. 2 K. 3. 216. 14 व्याधः स कथयामास ब्राह्मणाय महात्मने ॥ १४

व्याध उवाच ।

मूर्धानमाश्रितो वह्निः शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ।
भूतं भव्यं भविष्यच्च सर्वं प्राणे प्रतिष्ठितम् ॥ १५
श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे ।
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।
मनो बुद्धिरहंकारो भूतानां विषयश्च सः ॥ १६
एवं त्विह स सर्वत्र प्राणेन परिपाल्यते ।
पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ १७
बस्तिमूले गुदे चैव पावकः समुपाश्रितः ।
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ॥ १८
प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मविदुषो जनाः ॥ १९
संधौ संधौ संनिविष्टः सर्वेष्वपि तथानिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ २०
धातुष्वग्निस्तु विततः स तु वायुसमीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्परिधावति ॥ २१
प्राणानां संनिपातात्तु संनिपातः प्रजायते ।
ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ २२

---

B D (except $D_{1-3.5}$) $T_2$ $G_3$ तु (for स).

**15** $^a$) $B_1$ आस्थितो; $D_2$ आह्रि° (for आश्रि°). — $^b$) $Ś_1$ $K_{1.2}$ अनु°; $B_4$ प्रति° (for परि°). — $^c$) $B_1$ तु (for the second च). — $^d$) $K_{1.3}$ विचेष्टिते ($K_3$ °तं); Dc [S]वचेष्टते (for विचेष्टते). — $^e$) $K_3$ $B_{1.3.4}$ D (except $D_1$) $G_3$ भविष्यं च.

**16** $^a$) $K_4$ $D_3$ तं ($D_3$ तद्) देवदेवानां; $G_2$ तं सर्वभूतानां. — $^b$) $B_2$ $Dc_1$ Dn $D_{2.4.6}$ $G_3$ °योनिम् ($D_2$ °योनिर्) (for °ज्योतिर्). $B_{2.4}$ उपासते (for °स्महे). — $D_3$ om. (hapl.) from -त्मा (in 16$^c$) up to भूता- (in 16$^f$). — $^c$) $D_5$ $T_1$ $G_2$ $M_2$ °भूतानां (for °भूतात्मा). — $^e$) $B_{1.2}$ (m as in text)$_{.4}$ Dc Dn $D_{4.6}$ $G_3$ महान् (for मनो). — After 16, $T_1$ $M_1$ ins.:

1032* शरीरमध्ये नाभिः स्यान्नाभ्यामग्निः प्रतिष्ठितः ।
[ $T_1$ °मध्ये नाभ्यां तु जठरेग्निः प्रति°. ]

On the other hand, $T_2$ $G_{1.2.4}$ ins. after 16:

1033* अव्यक्तं सत्त्वसंज्ञं च जीवः कालः स चैव हि ।
प्रकृतिः पुरुषश्चैव प्राण एव द्विजोत्तम ।
जागर्ति स्वप्नकाले च स्वप्ने स्वप्नायते च सः ।
जाग्रत्सु बलमाधत्ते चेष्टत्सु चेष्टयत्यपि ।
तस्मिन्निरुद्धे विप्रेन्द्र मृत इत्यभिधीयते । [5]
त्यक्त्वा शरीरं भूतात्मा पुनरन्यत्प्रपद्यते ।,

which is followed by 1032*.

[(L. 4) $G_1$ चेष्टयेच् (for चेष्टत्सु). — (L. 6) $G_1$ प्रवर्तते (for प्रपद्यते).]

**17** $^a$) $K_4$ सर्वं; $M_2$ एतत् (for एवं). $D_2$ द्विज (for त्विह). $Ś_1$ $K_{1.2}$ च (for स). $B_4$ सर्वात्मा (for सर्वत्र). T $G_{2.4}$ एष त्वग्निरपानेन. — $^b$) $B_4$ प्रति° (for परि°). — $^c$) $Ś_1$ $K_{1-3}$ $D_2$ च (for तु). $K_1$ समासीनं; $K_4$ $B_3$ $M_2$ °सेन (for °नेन). — $^d$) $B_3$ यां यां (for स्वां स्वां). $B_2$ योनिम् (for गतिम्). $B_{1.3}$ $Dn_1.n_2$ अपा° (for उपा°).

**18** $D_5$ $G_1$ om. (hapl.) 18$^{ab}$. — $^b$) $K_4$ $B_{2.3}$ Dn $D_{1-3.6}$ $T_2$ $G_{2.4}$ $M_1$ पावकं. $B_4$ समुपस्थितः. — $^c$) $K_4$ T $G_{1.2.4}$ मूत्रपुरीषं. $K_{1.4}$ $B_2$ D $G_3$ वा° (for चा°). — $^d$) $B_4$ हि (for [अ]पि). $G_1$ om. अपि. $T_2$ प्रति° (for परि°).

**19** $Ś_1$ $K_{1.2}$ om. (hapl.) 19$^{ab}$. — $^a$) $D_1$ यत्ने च (for प्रयत्ने). — $^b$) $B_{1.2}$ Dc Dn ($Dn_3$ before corr.) $D_{2.4.6}$ $G_{1.3}$ स (for य). $D_{1.2}$ $M_2$ एष (for एकस्). $G_{2.4}$ संश्रितः (for वर्तते). — $^c$) B D (except $D_{2.3.5.6}$) $T_2$ $G_3$ उदानम् (for °न). — $^d$) $Ś_1$ K $B_4$ $D_{1-3.5}$ °कुशला (for °विदुषो). $Ś_1$ $K_{1.2}$ $D_5$ नराः (for जनाः).

**20** $^a$) $D_2$ $G_4$ स ($G_4$ च) निर्विष्टः (for संनिविष्टः). $T_1$ स संधौ संनिविष्टः सन्. — $^b$) $Ś_1$ गतो°; $G_{2.4}$ यथा° (for तथा°). $T_1$ संधीन्सर्वान्सदानिलः; $T_2$ $G_1$ M संधिपर्वण्यथानिलः ($T_2$ °पि यः). — $^d$) $D_5$ [अ]भिधीयते (for [उ]पदिश्यते). — After 20, Dc ins. (a definition of धातु, extracted from some medical treatise):

1034* त्वङ्मांसमेदोमज्जास्थिरसरक्ताश्च धातवः ।

**21** $^a$) $K_4$ विचितः (for विततः). — $^b$) $Ś_1$ $K_{1.2}$ च (for तु). $M_2$ समानोग्निसमीरकः. — $^c$) $K_3$ $G_1$ रस- (for रसान्). $D_5$ बहून् (for धातून्). $Ś_1$ K $D_{1-3.5}$ भूतानां ($K_4$ °नि); M दोषाणां (for दोषांश्च). — $^d$) $G_2$ वर्धं° (for वर्तं°).

**22** $^a$) $Dc_2$ °पातत्वे; $D_5$ °पाते तु; $G_{2.4}$ °पातस्तु (for °पातात्तु). — $^b$) T $G_2$ संसर्गाद्यः (for संनि°). Dc स जायते; M प्रमी° (for प्रजा°). — $^c$) $Ś_1$ K $D_{1-3.5}$ ऊष्माग्निरिति विज्ञेयो; $B_3$ तस्माच्चाग्निरिति ज्ञातो; S (except $G_3$)

अपानोदानयोर्मध्ये प्राणव्यानौ समाहितौ ।
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः ॥ २३
तस्यापि पायुपर्यन्तस्तथा स्याद्गुदसंज्ञितः ।
स्रोतांसि तस्माज्जायन्ते सर्वप्राणेषु देहिनाम् ॥ २४
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ २५
पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्थितः ।
नाभिमध्ये शरीरस्य प्राणाः सर्वे प्रतिष्ठिताः ॥ २६
प्रवृत्ता हृदयात्सर्वास्तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः ॥ २७
योगिनामेष मार्गस्तु येन गच्छन्ति तत्परम् ।
जितक्लमासना धीरा मूर्धन्यात्मानमादधुः ।
एवं सर्वेषु विततौ प्राणापानौ हि देहिषु ॥ २८
एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमन्तं हि तं विद्धि नित्यं कर्मजितात्मकम् ॥ २९
तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ।
आत्मानं तं विजानीहि नित्यं योगजितात्मकम् ॥ ३०
देवो यः संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ ३१
जीवात्मकानि जानीहि रजः सत्त्वं तमस्तथा । C. 3. 13979 B. 3. 213. 21 K. 3. 216. 37

---

सोष्मा सोऽग्निरिति ज्ञेयो. — d) $B_1$ ह्यन्नं (for योऽन्नं).

**23** $T_1$ om. (hapl.) 23–24. — a) $K_4$ B D (except $D_6$) $G_3$ समानो°; $M_2$ अपानप्राणयोर्. — b) $K_4$ B D $G_3$ प्राणापानौ; $M_2$ व्यानोदानौ; (for प्राणव्यानौ). — c) $B_1$ $Dn_2$ $G_3$ समर्थितस्; $T_2$ समिंधितस् (for समन्वितस्). $Ś_1$ $K_{1.2}$ $T_2$ $G_2$ त्वधिष्ठाने; $K_3$ Dc $D_4$ स्वा( $K_3$ स्व )धिष्ठानं; M समानेन (for त्वधिष्ठानं). — d) $Ś_1$ ह्यन्नं (for सम्यक्).

**24** $T_1$ om. 24 (cf. v.l. 23). — a) $B_{1.3}$ $G_3$ अस्यापि; $G_2$ आस्यादि- (for तस्यापि). $Ś_1$ K $D_{1.3}$ $G_1$ $M_2$ वायुः; $B_{1.3}$ Dc $G_4$ वायु- (for पायु-). $K_4$ $D_1$ -पर्यंतं; $D_2$ -पर्यंते; $D_3$ पर्येति (for -पर्यन्तस्). $D_5$ आस्यादपानं पर्येति. — b) $B_1$ तस्य (for तथा). $B_{2-4}$ Dc $D_2$ $T_2$ $G_4$ M गुण- (for गुद-). $B_1$ $D_1$ $T_2$ -संज्ञकः; $D_5$ -संज्ञकं (for -संज्ञितः). $Ś_1$ $K_{1.2}$ तथास्य स्वेदसंज्ञि( $K_2$ °ज्ञ )तः. — c) $K_{3.4}$ $D_{1-5}$ श्रोतांसि. $Ś_1$ $K_{1.2.4}$ यस्माज्. S (except $G_3$) स्रोतसो- स्मात्प्रजायंते. — d) $G_1$ M °स्रोतांसि (for °प्राणेषु). Dc $G_3$ देहिनः.

**25** a) $T_1$ अस्ति; $G_1$ अग्निर् (for अग्नि-). $T_2$ -सहः (for -वहः). $K_4$ $D_{1-3}$ अपानेन स हि ( $K_4$ तु स; $D_3$ सह ) प्राणो. — c) $B_4$ यद् (for स). $T_1$ आगत्य (for आगम्य). $Ś_1$ $K_{1.2}$ तथा; $B_4$ मनः (for पुनः). — d) $D_1$ पावकः (for °कम्).

**26** a) T $G_{2.4}$ ततो (for त्वधो). N (except $Ś_1$) T $G_3$ M नाभ्याम्; $G_1$ नाभेर् (for नाभ्या). — b) $Ś_1$ धामाशयः; $K_{1-3}$ $D_{1.2}$ चामा° (for आमा°). $B_4$ T $G_{1.2.4}$ स्मृतः (for स्थितः). — c) $K_3$ नाति°; $K_4$ $D_{1.5}$ नाभी°; $D_1$ नाभिर्° (for नाभि°). — d) $B_2$m नाड्यः सर्वाः (for प्राणाः सर्वे). $Ś_1$ $K_{1.2}$ $D_5$ सुसंस्थिताः (for प्रतिष्ठिताः).

**27** a) $Ś_1$ $K_{1.2}$ Dc $Dn_2$, $n_3$ $T_2$ G सर्वे (for सर्वास्). — c) $T_2$ °सत्रा (for °रसान्). — d) Dc प्राणाः (for प्राण-). $Ś_1$ °समीरिताः; $D_5$ °प्रणोदिताः; $T_2$ °प्रयोजिताः.

**28** a) $D_2$ वै (for तु). — b) $K_{1.2.4}$ $B_{3.4}$ $D_{2.5}$ तत्पदं; $G_1$ तत्पुरं (for तत्परम्). — c) $K_3$ $B_{3.4}$ °माशना; $K_4$ °मासनो; $B_{1.3}$ Dc Dn $D_{4.6}$ $G_3$ °माः समा; $T_1$ °मा- श्रमा; $T_2$ °मा नरा; $G_1$ °मश्रमा (for °मासना). $G_{2.4}$ °क्लमासनो धीरो. — d) $B_4$ $T_1$ $G_1$ M आदधन्; $G_{2.4}$ आद- धत् (for आदधुः). — f) $Ś_1$ K $D_{1-3}$ स्म; $B_1$ तु (for हि). $B_2$ शरीरिषु; $B_4$ हि देहिनां; $T_2$ हि जंतुषु (for हि देहिषु). — After 28, S (except $G_3$) ins.:

1035* तावग्निसहितौ ब्रह्मन्विद्धि वै प्राणमात्मनि ।

[ $T_2$ वन्हि° (for अग्नि°). $G_{2.4}$ तौ तावदग्निसहितौ (for the prior half). ]

**29** b) $T_1$ कर्ता (for कला-). $K_3$ $M_2$ °संभृतं; $D_{2.5}$ °संवृतः (for °संभृतः). — c) $D_3$ मूर्ध्नि भूतं (for मूर्तिमन्तं). $T_1$ स्थितं; $T_2$ स्तुतं; $G_{1.2.4}$ $M_1$ स्म तं (for हि तं). — d) $K_{3.4}$ $D_3$ T नित्य- (for नित्यं). B $Dn_2$ $D_2$ योग° (for कर्म°).

**30** a) $K_3$ Dc $G_{2.4}$ $M_1$ वह्निर्; $K_4$ $D_{1-3}$ नित्यं ($D_3$ °त्यो ); $B_{1.3}$ [ऽ]ग्निस्तु (for ह्यग्निर्). — b) $K_4$ $D_{1-3}$ वन्हिः (for नित्यं). $B_{2.4}$ इव स्थितः; $D_2$ समाहितः; $T_2$ इवास्थितः (for इवाहितः). — c) $G_3$ जीवात्मानं (for आत्मानं तं). — d) $B_1$ योगे; $D_2$ कर्म-; $T_2$ ज्ञान- (for योग-).

**31** $Ś_1$ $K_3$ $D_2$ $T_2$ om. (hapl.) 31. — a) Dc संश्रि- तस्. $K_1$ $D_1$ ह्यस्मिन्; $K_4$ यस्मिन्; $D_3$ स्वस्मिन् (for तस्मिन्). — c) $M_1$ आत्मानं (for क्षेत्रज्ञं). — d) $K_{1.2.4}$ $G_{1.2.4}$ M त्याग°; (as in text); Dc $T_1$ ज्ञान°; the rest योग°).

**32** a) $T_2$ $G_{2.4}$ °त्मकं वि- (for °त्मकानि). $Ś_1$ $K_{1-3}$ $D_{5.6}$ यानीह; $G_1$ च तथा (for जानीहि). — b) K $B_4$ $D_{1-3.5}$ transp. रजः and तमः. — c) $Ś_1$ $K_{1.2}$ °समं (for

लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत ॥ २२
अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः ।
रमयामास शैलस्थं बालं क्रीडनकैरिव ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

# २१६

मार्कण्डेय उवाच ।
ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा ।
हुताशनमुखाश्चापि दीप्ताः पारिषदां गणाः ॥ १
एते चान्ये च बहवो घोरास्त्रिदिववासिनः ।
परिवार्य महासेनं स्थिता मातृगणैः सह ॥ २
संदिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः ।
आरुह्यैरावतस्कन्धं प्रययौ दैवतैः सह ।
विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ ॥ ३
उग्रं तच्च महावेगं देवानीकं महाप्रभम् ।
विचित्रध्वजसंनाहं नानावाहनकार्मुकम् ।
प्रवराम्बरसंवीतं श्रिया जुष्टमलंकृतम् ॥ ४
विजिघांसुं तदायान्तं कुमारः शक्रमभ्ययात् ।
विनदन्पथि शक्रस्तु द्रुतं याति महाबलः ।
संहर्षयन्देवसेनां जिघांसुः पावकात्मजम् ॥ ५ C. 3. 14374 B. 3. 227. 7 K. 3. 228. 35

---

**22** $^{b}$) Ś1 K Dc D1. 3. 5 सह मातृगणेन तु (Ś1 K1. 2 ह). — $^{c}$) D1 °त्मानं (for °सेनं). — $^{d}$) K3 D2 M2 परिरक्षत; T2 समभाषत (for पर्य°).

**23** T1 G1. 2. 4 read 23 after 3. 217. 8 (cf. v.l. 17). — $^{a}$) Ś1 K2. 3 D1–3 T1 M नैगमेशः (Ś1 K3 T1 M2 °षः; M1 °पुः); T2 G1. 2. 4 ततश्चैनं (for नैगमेयः). — $^{b}$) Ś1 महाप्रजः; K3 बहुव्रजः; K4 बहुव्रजः (for °प्रजः). — $^{c}$) B1 शैलस्तं; T2 °स्य (for °स्थं). — $^{d}$) = (var.) 3. 31. 36$^{d}$. K3 T2 बाल- (for बालं).

Colophon om. in T G1. 2. 4. — *Major parvan:* Ś1 K2 Dn2 आरण्य. — *Sub-parvan:* K3. 4 B1–3 Dc1 Dn D2–6 G3 (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* B2 Dn D4. 6 G3 स्कंदोत्पत्तिः; B3. 4 Dc1 कुमारोत्पत्तिः. — *Adhy. no.* (figures, words or both): Dn1. n3 225; Dn2 224; D1 228; M (M2 *inf. lin.*) 218 (M3 orig. 220). — *Śloka no.:* Dn1. n3 D6 29; Dn2 28; D1 24.

## 216

**1** T G1. 2. 4 om. the ref. T1 G1 read 1$^{a}$–3$^{d}$ after 3. 215. 17. T2 om. 1$^{a}$–3$^{d}$. — $^{a}$) K1. 2 D1. 2. 5 चोप°; G3 M सोम° (for सोप°). — $^{b}$) B1 मातरश्चर्षयस्तथा. — $^{c}$) B Dn D4. 6 G3 चैव (for चापि). — $^{d}$) K4 B1. 2 Dn D1. 4. 6 G3 दृप्ताः. D1. 2. 4. 6 T1 G1. 2. 4 पारिषदा. Dc गणैः. Ś1 K1. 2 दीप्ताक्षाः (K2 °ख्याः) पार्षदां गणाः; B4 दीप्ताः सर्वे सपार्षदाः.

**2** For T G1 cf. v.l. 1. — $^{b}$) K1–3 °नादिनः (for °वासिनः). — $^{d}$) Ś1 K1–3 D1–3. 5 भूत° (for मातृ°).

**3** For T G1 cf. v.l. 1. G2 M om. (hapl.) 3$^{abcd}$. — $^{a}$) T1 विषयं (for विजयं). — $^{b}$) B2 विजयेच्छुः. B4 T1 G1. 4 पुरंदरः (for सुरे°). — $^{c}$) Ś1 K D1. 3 [ऐ]रावण°. — After 3$^{cd}$, K2 B D (except D1. 2; D3 marg.) G3 ins.:
1067* आदाय वज्रं बलवान्सर्वैर्देवगणैर्वृतः ।
— $^{f}$) Ś1 K B1. 3. 4 Dc D1–3. 5 तदा (K3 तथा) (for ययौ).

**4** $^{a}$) B2–4 Dn T1 G1. 2 तं च; B1 T2 तस्य (for तच्च). B1–3 Dn D4. 6 G3 °नादं; T1 °देवं (for °वेगं). — $^{b}$) B1. 3 °भुज (for °प्रभम्). — Ś1 K1. 2 om. 4$^{cd}$.

**5** $^{a}$) B4 विजयेप्सुं. K1. 4 B1–3 D (except D1. 2. 5) G3 तमायांतं. — $^{b}$) K3. 4 B D (except D1–3) G3 अन्वयात्; T2 अन्वियात् (for अभ्य°). — $^{c}$) K4 B4 D1–3. 5 M1 विनदंन्. B1–3 Dn D4. 6 G3 पार्थे; T1 G1 परि- (for पथि). B1–3 Dn D4. 6 G3 देवेशो (for शक्रस्तु). T2 स वियत्पथि शक्रस्तु; G2. 4 वियत्पतिः स शक्रस्तु. — $^{d}$) D2 हंतुं; T1 G1 रौद्रं; T2 श्रुतं (for द्रुतं). G2. 4 आयान् (for याति). T M2 °बलं (for °बलः). — $^{e}$) Ś1 Dc1 D3 स हर्षयन्. T2 °गणान् (for °सेनां).

**6** $^{c}$) B Dn D4. 6 T1 G2 अथ; M1 अभि°; M2 अपि

C 3. 14375
B 3. 227. 8
K 3. 228. 36

संपूज्यमानस्त्रिदशैस्तथैव परमर्षिभिः ।
समीपमुपसंप्राप्तः कार्तिकेयस्य वासवः ॥ ६
सिंहनादं ततश्चक्रे देवेशः सहितः सुरैः ।
गुहोऽपि शब्दं तं श्रुत्वा व्यनदत्सागरो यथा ॥ ७
तस्य शब्देन महता समुद्भूतोदधिप्रभम् ।
बभ्राम तत्र तत्रैव देवसैन्यमचेतनम् ॥ ८
जिघांसूनुपसंप्राप्तान्देवान्दृष्ट्वा स पावकिः ।
विससर्ज मुखात्क्रुद्धः प्रवृद्धाः पावकार्चिषः ।
ता देवसैन्यान्यदहन्वेष्टमानानि भूतले ॥ ९
ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ।
प्रच्युताः सहसा भान्ति चित्रास्तारागणा इव ॥ १०
दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ।
देवा वज्रधरं त्यक्त्वा ततः शान्तिमुपागताः ॥ ११
त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रोऽभ्यवासृजत् ।
तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणम् ।
बिभेद च महाराज पार्श्वं तस्य महात्मनः ॥ १२
वज्रप्रहारात्स्कन्दस्य संजातः पुरुषोऽपरः ।
युवा काञ्चनसंनाहः शक्तिधृग्दिव्यकुण्डलः ।
यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत् ॥ १३
तं जातमपरं दृष्ट्वा कालानलसमद्युतिम् ।
भयादिन्द्रस्ततः स्कन्दं प्राञ्जलिः शरणं गतः ॥ १४
तस्याभयं ददौ स्कन्दः सहसैन्यस्य सत्तम ।
ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ १५

इति श्रीमहाभारते आरण्यकपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

---

(for उप-). $B_4$ संप्राप्य. — $^{d}$) T $G_{1.2.4}$ M वह्नि($T_1$ $G_{1.2.4}$ °ह्नेः)पुत्रस्य वा°. — After 6, $D_5$ ins.:

1068* अथ दृष्ट्वा स्थितं स्कन्दं श्वेतस्याग्रे महागिरेः ।

**7** $^{b}$) $B_{1.4}$ Dn $T_2$ $G_{1.3.4}$ सहितैः; $T_1$ त्रिदशैः (for सहितः). — $^{c}$) $T_1$ $G_1$ तत् (for तं). — $^{d}$) $D_3$ व्यानदत्; $T_1$ स नदत्.

**8** $^{a}$) $K_4$ तेन; S (except $G_3$ $M_1$) अस्य (for तस्य). — $^{b}$) $K_{2.3}$ $B_{3.4}$ Dn $D_{1.2.4.6}$ °न्भूतो° (for °द्भूतो°). — $^{c}$) $T_1$ प्रभूतं (for बभ्राम). — $^{d}$) S (except $G_3$) समंततः (for अचेतनम्).

**9** $^{a}$) $K_4$ $B_4$ अथ; $D_2$ अनु-; $M_2$ इह (for उप-). — $^{b}$) $D_3$ दृष्ट्वा देवान् (by transp.). — $^{d}$) $Ś_1$ $K_{1.2}$ सहसा (for प्रवृद्धाः). — $^{e}$) $Dc_1$ $D_{2.4}$ तदैव; $T_1$ तद्दैव- (for ता देव-). $B_4$ $T_1$ $G_1$ [अ]दहद्; $T_2$ [अ]पतन् (for [अ]दहन्). $Ś_1$ K Dn $D_{1.3.5}$ अदहद्देवसैन्यानि. $G_2$ सा देवसेना न्यपतत्. — $^{f}$) $Ś_1$ $K_{1.2.4}$ Dn $D_{1.2}$ वेप°; $K_3$ B Dc $D_{3-6}$ $G_3$ चेष्ट° (for वेष्ट°). $G_2$ वेष्टमाना महीतले.

**10** $G_1$ om. $10^{ab}$. — $^{a}$) $M_2$ प्रदीप्तशिरसो देहाः. — $^{c}$) $K_2$ यांति; Dc भ्रांताः (for भान्ति). — $^{d}$) $K_4$ $D_{2.3}$ दिव°; B Dc Dn $D_{1.4.6}$ $G_3$ व्यस्ता° (for चित्रा°).

**11** $^{a}$) $K_4$ ययुस्तं; $D_2$ प्रदीप्तास् (for प्रपन्नास्). — $^{c}$) $D_1$ देवं (for देवा).

**12** $^{a}$) $D_{2.3}$ तदा (for ततः). S (except $G_3$) शक्रो (for स्कन्दे). — $^{b}$) $T_1$ $G_{1.2.4}$ M स्कंदे; $T_2$ तस्मै (for शक्रो). $B_{1-3}$ Dn $D_{4.6}$ $G_3$ न्यपातयत्; Dc [ऽ]भ्यपातयत्; $T_1$ $G_{1.2.4}$ $M_2$ त्ववासृ°; $T_2$ ह्यवासृ°; $M_1$ व्यवासृ° (for [अ]भ्यवासृ°). — $T_1$ om. $12^{c}$–$13^{f}$; $T_2$ om. $12^{ef}$.

**13** $T_1$ om. 13 (cf. v.l. 12). — $^{b}$) $B_1$ जज्ञेथ; $D_{4.6}$ स जातः (for सं°). $K_4$ परः (for [अ]परः). — $^{d}$) $Ś_1$ $K_{2.3}$ $D_5$ M °भृद्; $K_1$ $D_4$ $G_4$ °धृद् (for °धृग्). $M_2$ वज्र° (for दिव्य°). — $^{e}$) $D_1$ °व्यसना°; $D_{2.3}$ (*sup. lin. sec. m.*) $G_3$ °त्रिशिखा° (for °विशना°). $T_2$ $G_1$ यः स्वबंधु($G_1$ सवज्र)-विनाशात्तु.

**14** $^{a}$) $K_4$ $B_2$ Dn $D_{1.4.6}$ $G_{1.3}$ सं- (for तं). $T_1$ परमं; $G_1$ पुरुषं (for अपरं). — $^{b}$) $T_1$ $G_1$ विशाखं च (for कालानल-). $B_1$ -महाप्रभं; $G_1$ -महाद्युतिं (for -समद्युतिम्). — $^{c}$) Dn तु तं (for ततः)।

**15** $^{b}$) $K_{2.4}$ Dn $D_{1.5.6}$ $G_3$ सत्तमः. M ससैन्यस्य समंततः. — $^{d}$) $Ś_1$ $K_{1.3}$ [अ]भिवादयन्.

Colophon om. in T $G_{1.2.4}$. — *Major parvan:* $Ś_1$ $K_{1.2}$ $Dn_2$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_{1-3}$ Dc Dn $D_{1.2.4-6}$ $G_3$ $M_2$ (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* $B_2$ स्कंदोत्पत्तिः; $B_4$ Dc कुमारोत्पत्तिः; $M_2$ विशाखोत्पत्तिः. — *Adhy. no.* (figures, words or both): $Dn_{1}$. $n_3$ 226; $Dn_2$ 225; $D_1$ 229; M ($M_2$ *inf. lin.*) 219 ($M_2$ orig. 221). — *Śloka no.:* $Dn_1$. $n_2$ $D_1$ 18; $Dn_3$ 19.

# २१७

मार्कण्डेय उवाच ।
स्कन्दस्य पार्षदान्घोराञ्शृणुष्वाद्भुतदर्शनान् ।
वज्रप्रहारात्स्कन्दस्य जज्ञुस्तत्र कुमारकाः ।
ये हरन्ति शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः ॥ १
वज्रप्रहारात्कन्याश्च जज्ञिरेऽस्य महाबलाः ।
कुमाराश्च विशाखं तं पितृत्वे समकल्पयन् ॥ २
स भूत्वा भगवान्संख्ये रक्षंश्छागमुखस्तदा ।
वृतः कन्यागणैः सर्वैरात्मनीनैश्च पुत्रकैः ॥ ३
मातॄणां प्रेक्षतीनां च भद्रशाखश्च कौशलः ।
ततः कुमारपितरं स्कन्दमाहुर्जना भुवि ॥ ४
रुद्रमग्निमुमां स्वाहां प्रदेशेषु महाबलाम् ।
यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः ॥ ५
यास्तास्त्वजनयत्कन्यास्तपो नाम हुताशनः ।
किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषत ॥ ६
मातर ऊचुः ।
भवेम सर्वलोकस्य वयं मातर उत्तमाः ।
प्रसादात्तव पूज्याश्च प्रियमेतत्कुरुष्व नः ॥ ७
मार्कण्डेय उवाच ।
सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथग्विधाः ।
अशिवाश्च शिवाश्चैव पुनः पुनरुदारधीः ॥ ८ C 3 14395 B. 3. 228. 9 K 3. 228. 57

## 217

**1** T G1. 2. 4 om. the ref. — a) K4 B D G3 M2 स्कंदपारिषदान् (for °स्य पार्षदान्). Ś1 K1. 2 देवान् (for घोरान्). — b) T2 G2. 4 दृष्ट्वा च (for शृणुष्व). M °विक्रमान् (for °दर्शनान्). — c) S (except G3) देवस्य (for स्कन्द°). — d) K3 जज्ञुस्तस्य; T1 G1 जातास्तत्र; M जज्ञिरेस्य (for जज्ञुस्तत्र). — e) Ś1 हरंत; K2 हरंते. B1 शिशूञ्जातान्ये हरंति. — f) D5 अपि (for चैव). K4 Dc D2. 3 दारुणान्.

**2** a) T2 G4 M अन्यां(M2 °न्या)श्च (for कन्याश्च). — b) M जज्ञुः कन्या (for जज्ञिरेऽस्य). — c) K4 Dn D4. 6 G3 कुमारास्ते; T G1 M °रस्य; G2. 4 °रः स. Ś1 K2 D2 विशाखश्च (for °खं तं). B ते; Dc Dn D4. 6 G3 च; T G1. 2. 4 M नु (for तं). — d) S (except G3) पुत्रत्वे (for पितृ°). B Dc M पर्य°; G2. 4 समकल्पयत्. Ś1 K2 तं पितृत्वेभ्यकल्प°; K3 D1–3. 5 पितृ(D2. 3 [before corr.] पुत्र)त्वेनाभ्यकल्पयन् (K3 D2. 3 °यत्).

**3** a) Ś1 K D1–3. 5 तं (D2. 3 तत्) श्रुत्वा (for स भूत्वा). K3 सांख्ये; Dc शाखो; T1 G2. 4 M संखे (for संख्ये). — b) K1 °मुखाः; D4. 6 G3 °मुखं; T1 °मुखान् (for °मुखः). D3 (m as in text) T G2. 4 तथा (for तदा). — d) K3 आत्मवीर्यैश्च; K4 B2. 4 Dc Dn D4. 6 T2 G3 M आत्मीयैः सह (T2 चैव; M च स-); B1. 3 आत्मकीयैः स-; D5 T1 G2. 4 आत्मनीयैश्च; G1 °कीयैश्च.

**4** a) Dc D1–3. 5 प्रेक्षमाणानां; T G1. 2. 4 प्रेषितानां च; M प्रेक्षतां चैव (for °तीनां च). — b) D1–3 रुद्र° (for भद्र°). B T1 G1. 2. 4 M नु; T2 स (for च). B Dc कौ(Dc को)शले; T1 G1. 2. 4 M कोमलैः; T2 G2 कोमलः (for कौशलः). — c) Ś1 K2 Dn1. n3 T G1. 2. 4 कुमारं; B1 कुमारी- (for कुमार-). T G1. 2. 4 संजातं (for -पितरं).

**5** a) Ś1 K1 अग्निमुखा; B2. 4 Dn1 M2 °मुखां (for अग्निमुमां). T2 स्कंदं (for स्वाहां). — b) Ś1 K2 °बलात्; K1 B Dc Dn D1. 4. 6 G3 °बलं; K3 D2. 3 °बलान्; K4 °बल; T G2 °बलाः; G1 °बलः. — c) D2. 3 यजंते (for यजन्ति). — d) Ś1 K2 महाबलाः; K1 महाजनाः; D1 तदा जनाः; T1 सभाजनाः (for सदा जनाः).

**6** a) K3 B1 Dc T1 G1 एतास्; T2 यस्तास्; M1 यास्त्वां (for यास्तास्). — b) K1. 2 तमो (for तपो). — c) T1 कुर्मेति च (for करोमीति). K3 Dc D1–3. 5 स्कंदः (for स्कन्दं). G1 किं कुर्मेति द्विजाः स्कंदं; G2 किंकराः स्मेति ताः स्कंदं. — d) D5 ताः (for सं-). Ś1 K1. 2 संबभाषिरे; T2 [अ]थैसमभाषत (for समभाषत). The reading समभाषयन् of some old printed ed. was not found in any of the MSS. collated!

**7** D (except D1–3. 5) G3 कुमार्यः (for मातरः). — b) Dn D4. 6 G3 मातरो वयमुत्तमाः.

**8** All MSS. om. मार्कण्डेय उ° ! — a) Ś1 K2 S (except G3) [ए]व (for [ए]वं). — b) K1. 2 भविष्यथ (for °ध्वं). — T2 (which om. 8cd) reads 3. 215. 18–23 (with colophon) after 8ab. — c) M चेति (for चैव). K4 Dn D4. 6 G3 शिवाश्चैवाशिवाश्चैव. — After 8, T1 G1. 2. 4

C 3 14395 B 3 229. 9 K. 3 229. 1 ततः संकल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत् ।
काकी च हलिमा चैव रुद्राथ बृहली तथा ।
आर्या पलाला वै मित्रा सप्तैताः शिशुमातरः ॥ ९
एतासां वीर्यसंपन्नः शिशुर्नामातिदारुणः ।
स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयंकरः ॥ १०
एष वीराष्टकः प्रोक्तः स्कन्दमातृगणोद्भवः ।
छागवक्त्रेण सहितो नवकः परिकीर्त्यते ॥ ११
षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत् ।
षट्शिरोऽभ्यन्तरं राजन्नित्यं मातृगणार्चितम् ॥ १२
षण्णां तु प्रवरं तस्य शीर्षाणामिह शब्दते ।
शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह ॥ १३
इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ।
तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप ॥ १४

इति श्रीमहाभारते आरण्यकपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

# २१८

मार्कण्डेय उवाच ।
उपविष्टं ततः स्कन्दं हिरण्यकवचस्रजम् ।
हिरण्यचूडमुकुटं हिरण्याक्षं महाप्रभम् ॥ १
लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम् ।

---

read 3. 215. 23, followed by a colophon (*adhy. no.:* T1 G1 218; G2. 4 220) and by the ref. मार्कंडेयः.

**9** a) G1 मातः (for ततः). K2. 3 संकल्प-; S (except G3) प्रकल्प्य (for सं°). — b) T2 °गणागमन् (for °गणोऽगमत्). Ś1 K D2. 3. 5 तदा (for [अ]गमत्). — c) M काची (for काकी). Ś1 हिमिला; K1 मिहिला; K2 सिहला; K3 D1–3. 5 हिलिमा; B1 हलिना. — d) K1. 4 D1–3. 5 भद्रा च (K1 D5 [अ]थ); K3 रुद्रा च; B Dc Dn D4. 6 G3 मालिनी; M रुचाथ (for रुद्राथ). Ś1 पृथला; K1. 4 D1–3. 5 वृषला; K2 प्रखला; K3 पृषता; B Dc Dn D4. 6 G3 बृंहिना (Dc1 Dn D6 °ता; Dc2 °मा; D4 G3 °ला) (for बृहली). T G1. 2. 4 मात्स चैव (T2 G2. 4 चाथ) हली तथा. — e) Ś1 K1. 2 आर्या पलोला. T आर्याबला वा (T2 या) वै धात्री (T2 °ध्या); G1 आर्याबला तथा धात्री; G2. 4 आर्या बाला च धात्री च. — f) M1 शिव° (for शिशु°).

**10** Ś1 D2 om. 10. — c) K3 Dc G1. 4 स्कंदः प्रसादजः. — d) M1 महाप्रभः (for भयं°).

**11** a) D2 एकवीरो° (for एष वीरा°). T1 G1 वीर्यो-(G1 °रो)ष्टमः; T2 वीराष्टके. — b) G2 स्कंदो (for स्कन्द-). Ś1 K D1–3. 5 °गणोद्भुतः; M °गणोद्वहः (for °गणोद्भवः). — c) T2 एक° (for छाग°). — d) T1 G1 M नवमः (for °कः). K1. 2 T1 G1 °कीर्तितः (for °कीर्त्यते). T2 G2. 4 महासेनः प्रकीर्त्यते.

**12** a) Ś1 इष्टं; T1 षष्ठ्यां (for षष्ठं). T1 च गमयद्; M2 जगाम यं (for छागमयं). — b) Ś1 Dc1 G1 [इ]व (for [ए]व). B3m T2 G1. 2. 4 विद्धि तं; T1 G1 वर्धितं. — c) Ś1 K2 °शिरोभ्यंतरा; Dc °शिराभ्यंतरं; T G1. 2. 4 षण्णामभ्यंतरं (T2 °रा); M2 षड्भिराभ्यंतरं. — d) T1 G1. 2. 4 M यत्तन् (T1 G1 °त्तं); T2 यत्तु. K4 B1 °न्वितं; S (except G3) °श्रितं (for °र्चितम्).

**13** b) M शिरसाम् (for शीर्षाणाम्). Ś1 K1–3 Dc D1–3. 5 दृश्यते; T2 G2. 4 शस्य° (for शब्द°). — d) D5 °शीर्षं; S (except G3) °शाखाम् (for °शाख).

**14** a) K1. 4 Dn3 D1 इत्येते; B1 इत्येत्रं; Dc इत्येतं. — b) K2 Dc D3. 4 पंचमी (for °मीम्). — c) Ś1 K2. 3 D3 तत्तु (for तत्र). T G1. 2. 4 M घोरं महद्यु(M1 महायु)द्धं. — d) G1 ततः; M2 वृद्धं (for वृत्तं). Ś1 K1–3 Dc D1–3. 5 नरा° (for जना°).

Colophon om. in T1 G1. 2. 4. — *Major parvan:* Ś1 K2 Dn2 T2 आरण्य. — *Sub-parvan:* K3. 4 B Dc Dn1. n2 D1–6 G3 (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* Dn D4. 6 G3 M2 कुमारोत्पत्तिः. — *Adhy. no.* (figures, words, or both): Dn1 (marg.). n2 227; Dn3 226; D1 230; T2 218; M (M2 *inf. lin.*) 220 (M2 orig. 222). — *Śloka no.:* Dn1. n2 14; Dn3 D1 15.

**218**

**1** a) B1. 2 Dn D4. 6 G3 तु तं (for ततः). — b) B4

सर्वलक्षणसंपन्नं त्रैलोक्यस्यापि सुप्रियम् ॥ २
ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम् ।
अभजत्पद्मरूपा श्रीः स्वयमेव शरीरिणी ॥ ३
श्रिया जुष्टः पृथुयशाः स कुमारवरस्तदा ।
निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी ॥ ४
अपूजयन्महात्मानो ब्राह्मणास्तं महाबलम् ।
इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः ॥ ५
हिरण्यवर्ण भद्रं ते लोकानां शंकरो भव ।
त्वया षड्रात्रजातेन सर्वे लोका वशीकृताः ॥ ६
अभयं च पुनर्दत्तं त्वयैवैषां सुरोत्तम ।
तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयंकरः ॥ ७

स्कन्द उवाच ।

किमिन्द्रः सर्वलोकानां करोतीह तपोधनाः ।
कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः ॥ ८

ऋषय ऊचुः ।

इन्द्रो दिशति भूतानां बलं तेजः प्रजाः सुखम् ।
तुष्टः प्रयच्छति तथा सर्वान्दायान्सुरेश्वरः ॥ ९
दुर्वृत्तानां संहरति वृत्तस्थानां प्रयच्छति ।
अनुशास्ति च भूतानि कार्येषु बलसूदनः ॥ १०
असूर्ये च भवेत्सूर्यस्तथाचन्द्रे च चन्द्रमाः ।
भवत्यग्निश्च वायुश्च पृथिव्यापश्च कारणैः ॥ ११
एतदिन्द्रेण कर्तव्यमिन्द्रे हि विपुलं बलम् ।
त्वं च वीर बलश्रेष्ठस्तस्मादिन्द्रो भवस्व नः ॥ १२

शक्र उवाच ।

भवस्वेन्द्रो महाबाहो सर्वेषां नः सुखावहः ।
अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम ॥ १३ C. 3. 14414 B. 3. 229. 13 K. 3. 229. 20

---

सुवर्ण-; S (except G3) आमुक्त- (for हिरण्य-). B2 °कवचावृतं (for °कवचस्रजम्). — K3 om. 1[cd]. — [c]) D3 M1 °चूडा- (for °चूड-). Ś1 K (K3 om.) D1-3. 5 -वलयं; S (except G3) -मकुटं (for -मुकुटं). — [d]) K4 हिरण्याख्यं; D5 लोहिताक्षं. Ś1 K (K3 om.) Dc D1-3. 5 महाबलं; G1 °द्युतिं.

2 [b]) B4 D1 G2. 4 °हरं (for °रमम्). — [c]) B2. 3 °संपूर्णं. — [d]) K2 सुप्रभं (for °प्रियम्).

3 [c]) Ś1 K1-3 B1m Dc D1-3. 5 M1 पद्महस्ता श्रीः; T2 °निलया.

4 [a]) Ś1 पृथुवक्षाः; K1. 2 पृथ्वाजुष्टः; T2 श्रिया स्पृष्टः (for श्रिया जुष्टः). — [b]) Ś1 K1. 2 B1. 3 Dc D2. 4. 6 G1 M सु- (for स). Ś1 K2 °तरस्; T1 G1 M1 °वपुस् (for °वरस्). Ś1 K1. 2 B2 T1 तथा (for तदा). B4 G2. 4 कुमारो वरदस्तदा. — [c]) T G2. 4 M ददृशे (for दृश्यते). — [d]) K4 D2. 3 पूर्णं° (for पौर्णं°). K3 B3. 4 D3. 5 T G1. 2. 4 M1 शशी यथा (by transp.); M2 इवोडुराट्.

5 [a]) K2 G2. 4 °त्मानं (for °त्मानो). — [d]) B3 D3 चैव (for तत्र).

6 Before 6, N (except Ś1 K1; B1. 3 marg.) G3 ins. ऋषय ऊचुः (resp. ऋषयः). — [a]) K4 B1-3 D (except D1-3. 5) G3 °गर्भ; T1 G1 °रूप (for °वर्ण). — [c]) Ś1 K2 यत्तात (for षड्रात्र-). — [d]) K1. 2 B1. 3. 4 Dc Dn2. n3 D3. 5. 6 T1 सर्वं- (for सर्वे). D2 G2. 4 सर्वलोको °कृतः; T2 सर्वं लोकं °कृतं.

7 [a]) B1 वै; M1 तु (for च). D5 पुरा (for पुनर्). T1 G1 दत्वा (for दत्तं). — [b]) D3 त्वया चैषां; T1 एतैरेषां; G1 त्वमेवैषां (for त्वयै°). Ś1 K2 सुरेश्वर (for सुरो°). — [c]) Ś1 K2-4 Dc D1-3. 5 तत (for तस्माद्). — [d]) Ś1 K D1-3. 5 हिताय वै (for [अ]भयंकरः).

8 [a]) G4 °भूतानां (for °लोकानां). — [d]) S (except G3) सर्वान् (for नित्यं).

9 [a]) B1-3 D (except D1-3. 5) G3 दधाति (for दिश°). — [b]) K1. 2. 4 B1. 2. 4 Dc Dn D4-6 G3 प्रजा-; D1 प्रजां; T1 प्रियं (for प्रजाः). — [c]) Ś1 K1-3 D1-3. 5 प्रज्ञां; T1 G1. 2 इष्टं (for तुष्टः). B2 यथा; D1. 5 G2. 4 तदा; T G1 सदा (for तथा). B4 तुष्टः प्रज्ञां धृतिश्चैव. — [d]) Ś1 K1. 2 सर्वा मायाः; B Dc Dn D4-6 G3 M सर्वान्कामान्; D2 सर्वदा च; D3 सर्वथायं; T1 सर्वदायान्; T2 सर्वान्देवान्; G2 सर्वान्देयान्. Ś1 K1 सुरेश्वर; B4 सुरोत्तम.

10 [b]) B2 G3 व्रत°; B4 वृत्ति° (for वृत्त°). — [c]) T1 G1. 4 हि (for च). Dc भूतात्मा (for °नि). — [d]) Ś1 K1. 2 कालेषु.

11 [a]) Ś1 K Dc Dn3 D3. 4. 6 G3 [अ]भवत् (for भवेत्). D5 सूर्ये च स भवत्सूर्यः. — [b]) Dc °चंद्रेण; M1 °चंद्रेषु (for °चंद्रे च). — [d]) K4 च कारणे; T1 G1. 2. 4 M च खं तथा; T2 चकार वै.

12 [a]) T2 इंद्रो हि (for इन्द्रेण). D5 वर्तव्यं (for क°). — [b]) G1 M1 इंद्रो (for इन्द्रे). D5 च (for हि). B4 Dc परमं (for विपुलं). — [c]) K3 G2 M1 वीर्यं- (for वीर).

C. 3. 14415
B. 3. 229. 14
K. 3. 229. 21

स्कन्द उवाच ।
शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः ।
अहं ते किंकरः शक्र न ममेन्द्रत्वमीप्सितम् ॥ १४
शक्र उवाच ।
बलं तवाद्भुतं वीर त्वं देवानामरीञ्जहि ।
अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः ॥ १५
इन्द्रत्वेऽपि स्थितं वीर बलहीनं पराजितम् ।
आवयोश्च मिथो भेदे प्रयतिष्यन्त्यतन्द्रिताः ॥ १६
भेदिते च त्वयि विभो लोको द्वैधमुपेष्यति ।
द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा ।
विग्रहः संप्रवर्तेत भूतभेदान्महाबल ॥ १७
तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि ।
तस्मादिन्द्रो भवानद्य भविता मा विचारय ॥ १८
स्कन्द उवाच ।
त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च ।
करोमि किं च ते शक्र शासनं तद्ब्रवीहि मे ॥ १९
शक्र उवाच ।
यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया ।
यदि वा शासनं स्कन्द कर्तुमिच्छसि मे शृणु ॥ २०
अभिषिच्यस्व देवानां सेनापत्ये महाबल ।
अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल ॥ २१
स्कन्द उवाच ।
दानवानां विनाशाय देवानामर्थसिद्धये ।
गोब्राह्मणस्य त्राणार्थे सेनापत्येऽभिषिञ्च माम् ॥ २२

---

D (except D2–4. 6) G3 बली (for बल-).

**13** Ś1 K1. 2 B4 D5 S (except G3) इंद्रः (for शक्रः). — a) G2 भव इंद्रो. — c) Ś1 K1–3 T1 G1. 2 अभिषिंचस्व; G4 अभ्यषिच्यस्त्वम्. Ś1 वै चाद्य; D1 वै राज्ये; T G1. 2. 4 M चा(G4 अ)द्यैव. — d) Ś1 प्रासरूपेपि. Some MSS. सत्तमः.

**14** d) T2 G2 न मे शक्रत्वम्; G4 न मे इंद्रत्वम्; M2 न ममैंद्रत्वम्. D1 ईक्षितं (for ईप्सितम्).

**15** Ś1 K D1–3. 5 T G1. 2. 4 इंद्रः (for शक्रः). — a) T G1. 2. 4 [अ]तुलं (for [अ]द्भुतं). — b) K4 देवतानाम्; D5 तद्देवानाम् (for त्वं देवानाम्). T1 G1. 2. 4 अरिं. — c) Dc अवज्ञास्यसि. Dc1 G2 मा (for मां). — d) B1 तव वीर्येण (by transp.). B1 संवृताः.

**16** a) K4 B1. 3. 4 Dn D4. 6 G3 तु; B3 T1 G1 [ऽ]व-; M1 हि (for ऽपि). T2 corrupt. — After 16[ab], S (except G3) ins.:

1069* त्वत्तेजसावमंस्यन्ति लोका मां सुरसत्तम ।

— c) Dc भेदैः (for भेदे).

**17** a) T2 तथा (for विभो). — b) Ś1 K1. 2 B3 °मुपैष्यति; K3 D3 °त्वमेष्यति; T G1. 2. 4 M को द्वैध(T1 G1 वै स)मपनेष्यति. — c) Ś1 K B4 Dc D2. 3. 5 द्वैधी° (for द्विधा°). D5 दैवे° (for लोके°). — d) Ś1 K3 B1 D1. 2. 5 M तदा; K4 यथा (for तथा). — e) Ś1 K2 संप्रपद्येत (for °वर्तेत). T G1. 2. 4 विग्रहाः °वर्तते. — f) K2. 3 Dc2 D1. 3 °बलः; B3 G4 °बलाः.

**18** a) B2 अत्र. Ś1 K2. 3 D2. 5 त्वं मा; K4 मां त्वं (by transp.). T2 तत्र (for तात). — b) K3 Dc2 विजेष्यति; D3 °ते. — c) S (except G3) त्वमेव (for भवान्). K1. 4 B D1. 4. 6 G3 एव (for अद्य). — d) K3 भवतां; B1 विधाता (for भविता). S (except G3) भव मा च वि°.

**19** b) Ś1 D3 [अ]पि; D2 [इ]ति (for [ए]व). — c) Ś1 किं करोमि (by transp.). Ś1 किं च तं; K2 किं च मे; T1 किंकरः; T2 तदहं; G1. 2. 4 M किमहं. B1 तात (for शक्र). — d) G2. 4 शासनात्. B1 च (for तद्). T M मां (for मे). K4 Dc D1–3. 5 शासनं ब्रूहि तन्मम.

**20** K1. 2 B1. 3. 4 D (except D2. 3. 5) S इंद्रः (for शक्रः). — After the ref., B Dn D1. 4–6 G3 read 21[cd]. — a) K3 D2 शक्यम् (for सत्यम्). — b) K3 G4 निश्चितं; Dc2 निश्चयं (for निश्चयाद्). T2 कांक्षितं (for भाषितं). — d) K4 B1. 4 D1 अर्हसि (for इच्छसि). D3 प्रियः (marg. *sec. m.* कुरु) (for शृणु).

**21** a) Ś1 K1. 2 D5 T2 G1. 2 अभिषिंचस्व. — b) K1. 3 B2–4 Dc1 Dn1 D1. 4–6 T1 G4 सैना°. K2. 3 B Dc Dn1 D1–4. 6 T2 G3. 4 °बलः. — B Dn D1. 4–6 G3 read 21[cd] after the ref. in 20. — d) Ś1 K Dc D1 महायशाः; D2 °प्रभो; D3 G4 M1 °प्रभ (for °बल). — After 21, Ś1 ins. an addl. colophon.

**22** c) D2. 3 T G1. 2 M1 गोब्राह्मणानां. K3 D1 त्राणार्थं; K4 D2. 3 चार्थाय; T2 रक्षार्थं. B1–3 Dc Dn D4. 6 G3 गोब्राह्मणहितार्थाय. — d) K3 B Dc1 Dn1. n2 D4. 6 सैना°. B2 [ऽ]भिषिच्यतां.

**23** K3 D2. 3 om. the ref. — After the ref., G1 ins.:

1070* तस्य तद्वचनं श्रुत्वा स्कन्दस्य बलवृत्रहा ।

मार्कण्डेय उवाच ।
सोऽभिषिक्तो मघवता सर्वैर्देवगणैः सह ।
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः ॥ २३
तस्य तत्काञ्चनं छत्रं ध्रियमाणं व्यरोचत ।
यथैव सुसमिद्धस्य पावकस्यात्ममण्डलम् ॥ २४
विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी ।
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना ॥ २५
आगम्य मनुजव्याघ्र सह देव्या परंतप ।
अर्चयामास सुप्रीतो भगवान्गोवृषध्वजः ॥ २६
रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ।
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्वतोऽभवत् ।
पावकस्येन्द्रियं श्वेते कृत्तिकाभिः कृतं नगे ॥ २७
पूज्यमानं तु रुद्रेण दृष्ट्वा सर्वे दिवौकसः ।
रुद्रसूनुं ततः प्राहुर्गुहं गुणवतां वरम् ॥ २८
अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः ।
तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् ॥ २९
रुद्रस्य वह्नेः स्वाहायाः षण्णां स्त्रीणां च तेजसा ।
जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ॥ ३०
अरजे वाससी रक्ते वसानः पावकात्मजः ।
भाति दीप्तवपुः श्रीमान्रक्ताभ्राभ्यामिवांशुमान् ॥ ३१
कुक्कुटश्चाग्निना दत्तस्तस्य केतुरलंकृतः ।
रथे समुच्छ्रितो भाति कालाग्निरिव लोहितः ॥ ३२
विवेश कवचं चास्य शरीरं सहजं ततः ।
युध्यमानस्य देवस्य प्रादुर्भवति तत्सदा ॥ ३३ C 3. 14436 B. 3. 229. 35 K. 3. 229. 43

ऋषिभिस्तं महासेनं हृष्टो देवगणैः सह ।
सौवर्णे रत्नखचिते तरुणारुणभास्वरे ।
दिव्यासने समास्थाप्य विमलैः पुण्यवारिभिः ।
महासेनं तदा शक्रः सेनापत्येऽभिषिक्तवान् ।

— [b]) T $G_1$ $M_2$ सर्व- (for सर्वैर्). — [c]) $G_{2.4}$ तेन; $M_2$ स्कंदः (for तत्र).

**24** [a]) $K_4$ $B_2$ Dn $D_{4.6}$ $G_3$ तत्र (for तस्य). — [b]) T $G_1$ M व्यराजत; $G_{2.4}$ विराजते (for व्यरो°).

**25** [a]) $T_1$ रम्या; $T_2$ चैव; $G_1$ दिव्या (for चास्य). — [b]) T $G_{2.4}$ दिव्य-; $G_1$ रम्या (for दिव्या). — [d]) $D_2$ रुद्रेण च (for स्वयमेव).

**26** [a]) $T_2$ °श्रेष्ठ (for °व्याघ्र). — [b]) $Ś_1$ K $D_{2.5}$ मात्रा ($K_1$ *sup. lin.* पत्न्या) (for देव्या). — [c]) $M_2$ तनयं लालयामास. — [d]) $K_2$ वृषभ° (for गोवृष°).

**27** [b]) $Ś_1$ °सूर्यस्तनुस् (for °सूनुस्ततस्). Dc च (for तु). — After $27^{ab}$, S (except $G_3$) ins.:

1071* कीर्त्यते सुमहातेजाः कुमारोऽद्भुतदर्शनः ।

— $D_1$ om. $27^c$–$28^d$. — [c]) S (except $G_3$) शुक्लम् (for शुक्रम्). — [d]) $B_4$ S (except $G_3$) तेन ($T_2$ येन) श्वेतो-भवद्गिरिः. — After $27^{cd}$, $T_1$ $G_1$ $M_1$ ins.:

1072* तच्छुक्लं भक्षयामास वह्निस्तस्माद्गुहोऽभवत् ।

— $G_1$ om. $27^e$–$29^d$. — [e]) $Ś_1$ $K_2$ $D_5$ प्रियं (for [इ]न्द्रियं). — [f]) $B_1$ Dc कृते; $T_2$ $G_2$ धृतं (for कृतं). $B_1$ युगे (for नगे).

**28** $D_1$ $G_1$ om. 28 (cf. v.l. 27). — [c]) $T_1$ गुहं (for ततः). $Dc_2$ स रुद्रसूनुस्तत्प्राहुः. — [d]) $T_1$ ततो (for गुहं).

**29** $G_1$ om. 29 (cf. v.l. 27). — [b]) $D_{1.3.5}$ $T_2$ $G_2$ वह्नि-; $T_1$ रुद्र; $M_1$ वह्नेर् (for वह्निं). $B_2$ यतः; $T_2$ [S]प्ययं (for ह्ययं). $Ś_1$ $K_2$ शुचिः (for शिशुः). — [c]) $Ś_1$ $K_2$ ततो (for तत्र). $B_4$ यतः (for ततः). — $29^d = 30^d$.

**30** $Ś_1$ $K_3$ om. (hapl.) 30; $D_{1.3}$ read it in marg. — [a]) T $G_{2.4}$ स्वाहायां. — [b]) $K_{1.2}$ तु (for च). $K_4$ $B_{1-3}$ Dn $D_{3.4.6}$ $G_3$ भारत (for तेजसा). — [c]) $K_1$ ततः (for जातः).

**31** [a]) $Dc_2$ $T_2$ अजरे; $T_1$ $G_{1.2.4}$ M विरजे (for अरजे). — [c]) $K_3$ $D_5$ अति-; $T_1$ अहो; $T_2$ $G_{3.4}$ M बभौ (for भाति). $K_{1-3}$ $B_3$ Dc $D_{2.3.5}$ $G_4$ $M_2$ धीमान् (for श्रीमान्). $G_1$ अतीव शुशुभे श्रीमान्. — [d]) $Ś_1$ मध्याह्न इव भास्करः; $K_3$ भ्राजमान इवांशुमान्; $T_1$ $G_1$ अनुरक्तो यथांशु°; $T_2$ मुक्तोऽभ्रेषु यथांशु°; $M_1$ रक्ताभ्रैरिव चांशु°.

**32** [ab]) $D_{2.3}$ transp. दत्तः and तस्य. — After 32, N $G_3$ ins.:

1073* या चेष्टा सर्वभूतानां प्रभा शान्तिर्बलं तथा ।
अग्रतस्तस्य सा शक्तिर्देवानां जयवर्धिनी ।

[(L. 1) $K_1$ $D_1$ °लोकानां (for °भूतानां). $Ś_1$ $K_{1.2}$ $D_3$ शक्तिर् (for शान्तिर्). — (L. 2) $Ś_1$ $K_{1.2.4}$ $D_{2.3}$ भय-नाशिनी ($K_4$ m as in text); $B_1$ प्रीतिवर्धिनी (for जय°).]

**33** [b]) $Ś_1$ $K_{2-4}$ Dn $D_{1.4.6}$ $T_1$ $G_1$ शरीरे (for °रं). $K_4$ Dn $D_{4.6}$ $T_2$ तथा; $G_4$ $M_2$ तदा (for ततः). — [c]) $Ś_1$ $K_{1-3}$ Dc $D_{1.6}$ तस्यैव (for देवस्य). — [d]) $D_1$ $T_2$ सर्वदा; $D_3$ नान्यदा (for तत्सदा).

**34** [a]) $K_4$ $B_{1-3}$ Dn $D_{1.3-6}$ धर्मो; Dc मेधा; $T_1$ $G_1$ वर्ष्मं; $T_2$ $G_{2.4}$ वीर्यं (for वर्म). — [b]) Dc $D_2$ $T_2$ $G_2$ M

C. 3. 14437
B. 3. 229. 36
K. 3. 229. 44

शक्तिर्वर्म बलं तेजः कान्तत्वं सत्यमक्षतिः ।
ब्रह्मण्यत्वमसंमोहो भक्तानां परिरक्षणम् ॥ ३४
निकृन्तनं च शत्रूणां लोकानां चाभिरक्षणम् ।
स्कन्देन सह जातानि सर्वाण्येव जनाधिप ॥ ३५
एवं देवगणैः सर्वैः सोऽभिषिक्तः स्वलंकृतः ।
बभौ प्रतीतः सुमनाः परिपूर्णेन्दुदर्शनः ॥ ३६
इष्टैः स्वाध्यायघोषैश्च देवतूर्यरवैरपि ।
देवगन्धर्वगीतैश्च सर्वैरप्सरसां गणैः ॥ ३७
एतैश्चान्यैश्च विविधैर्हृष्टतुष्टैरलंकृतैः ।
क्रीडन्निव तदा देवैरभिषिक्तः स पावकिः ॥ ३८
अभिषिक्तं महासेनमपश्यन्त दिवौकसः ।
विनिहत्य तमः सूर्यं यथेहाभ्युदितं तथा ॥ ३९
अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतोदिशम् ॥ ४०
ताः समासाद्य भगवान्सर्वभूतगणैर्वृतः ।
अर्चितश्च स्तुतश्चैव सान्त्वयामास ता अपि ॥ ४१
शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा ।
सस्मार तां देवसेनां या सा तेन विमोक्षिता ॥ ४२
अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयम् ।
इति चिन्त्यानयामास देवसेनां स्वलंकृताम् ॥ ४३
स्कन्दं चोवाच बलभिदियं कन्या सुरोत्तम ।
अजाते त्वयि निर्दिष्टा तव पत्नी स्वयंभुवा ॥ ४४

---

कांतित्वं ; $T_1$ $G_{1.4}$ क्षांति($G_4$ °त)त्वं. $B_1$ आकृतिः; $B_{2.3}$ Dc $D_{4.6}$ $G_3$ अच्युतिः; Dn उन्नतिः (for अक्षतिः).

**35** $G_4$ om. (hapl.) $35^{ab}$. — $^{a}$) $Ś_1$ विकर्तनं; $K_{1.2}$ निकर्तनं. $M_2$ तु (for च). $B_1$ शक्तानां; $B_3$ शक्राणां (for शत्रू°). — $^{b}$) $Ś_1$ $K_{1.2}$ अपि; $K_3$ $D_{3.5}$ चापि (for चाभि-). — $G_1$ om. (? hapl.) from $35^{c}$ up to रवैः (in $37^{b}$). — $^{d}$) $Ś_1$ नराधिप; $K_{2.3}$ जनाधिपः; $D_2$ जनार्दनः (for °धिप). $T_1$ सर्वाण्येतानि पार्थिव.

**36** $G_1$ om. 36 (cf. v.l. 35). — $^{b}$) $T_1$ महाबलः (for स्वलं°). — $^{c}$) $B_2$m अतीव; $B_4$ चातीव; $G_2$ प्रदीप्तः (for प्रतीतः). $T_2$ सुमहान्. — $^{d}$) T $G_{2.4}$ $M_2$ प्रति- (for परि-). $Ś_1$ K B Dc $D_{1-3.5}$ °संनिभः ($B_4$ °लक्षणः); Dn $D_{4.6}$ $G_3$ °मंडलः (for °दर्शनः).

**37** $G_1$ om. up to रवैः (in $37^{b}$). — $^{a}$) $Ś_1$ $K_{2-4}$ Dc $D_{1-3}$ शुभैः (for इष्टैः). — $^{b}$) $Ś_1$ K Dc $D_{1-3.5}$ वेणु- (for देव-). B $Dn_3$ $D_4$ °वरैर् (for °रवैर्). $Ś_1$ K Dc $D_{1-3.5}$ तथा (for अपि). — $^{d}$) $M_1$ नृत्तैः (for सर्वैः). $Ś_1$ $K_{1-3}$ $B_4$ Dc $D_{1-3.5}$ M चाप्सरसां (for अप्सरसां).

**38** $^{a}$) $B_{1-3}$ Dn $D_{1.4.6}$ $G_3$ बहुभिर् (for विविधैर्). — $^{b}$) $K_4$ $B_1$ Dc $D_2$ हृष्टपुष्टैः; $B_{2.3}$ Dn $D_{1.4.6}$ $G_3$ M तुष्टैर्हृष्टैः; $B_4$ T $G_1$ तुष्टैरिष्टैः; $G_{2.4}$ मृष्टैस्तुष्टैः (for हृष्टतुष्टैः). $K_3$ $B_{1.3.4}$ D (except $D_{2.3}$) $G_3$ M स्वलंकृतैः; $K_4$ $G_{2.4}$ अलंकृतः (for अलंकृतैः). — After $38^{ab}$, B D (except $D_{1-3.5}$) $G_3$ ins.:

1074* सुसंवृतः पिशाचानां गणैर्देवगणैस्तथा ।

— $^{c}$) $B_{1-3}$ Dn $D_{4.6}$ $G_3$ भाति (for इव). — $^{d}$) $Ś_1$ $B_2$ Dn $D_{4.6}$ $G_3$ च; $B_{1.3}$ तु (for स).

**39** $^{a}$) $Ś_1$ °देवम् (for °सेनम्). — $^{c}$) $K_2$ विनिहन्य; $Dn_1$. $n_2$ °हत्य. — $^{d}$) $K_4$ $D_{2.3}$ S (except $G_3$) यथैव (for यथेह). $Ś_1$ $K_{1.2}$ [अ]भ्युदये (for °दितं). $K_1$ तदा; $K_3$ यथा (for तथा).

**40** $^{a}$) $Ś_1$ $K_{3.4}$ $D_{1-3.5}$ T $G_4$ $M_1$ तथैनम्; $G_1$ तदैनम् (for अथैनम्). $T_1$ सेना (for सर्वा). — $^{d}$) $T_2$ $G_{2.4}$ ब्रुवंत्यः (for ब्रुवाणाः). B Dn $D_{1.4.6}$ $G_3$ सर्वतो दिशः; $T_1$ $G_1$ सर्वदेवताः.

**41** $^{b}$) $K_{2.3}$ $B_1$ $D_{1.5}$ सर्वैर् (for सर्व-). $B_1$ $G_{2.4}$ -देव° (for -भूत°). $Ś_1$ $K_{1-3}$ $D_{1.5}$ विभुः (for वृतः). — $^{c}$) $K_4$ Dn $D_{1.4.6}$ $G_3$ तु (for च). Dc $Dn_2$ तत° (for स्तुत°). $T_1$ $G_1$ चापि (for चैव). — $^{d}$) $K_3$ तास्त्वयि; Dc तानपि; $T_2$ $G_{2.4}$ तास्तदा (for ता अपि).

**42** $^{b}$) $K_3$ $D_2$ तथा (for तदा). — $^{c}$) $Dc_2$ देवसेनां तां (by transp.). — $^{d}$) $T_1$ $G_1$ पूर्वं; $G_4$ [अ]नेन (for तेन). $K_{1.4}$ विमोचिता (for °क्षिता).

**43** $^{a}$) $M_2$ अस्याः (for तस्याः). $T_2$ दत्तो (for नूनं). — $^{b}$) $K_3$ पुरा (for स्वयम्). — $T_2$ om. $43^{c}$–$44^{d}$. — $^{c}$) $K_{1.4}$ $D_{1-3.5}$ विचिंत्येत्या($D_1$ °त्यैवा)नयामास ($D_5$ °ह्वयामासुर्); $K_3$ इति तामानयामासुर्; $T_1$ $G_{1.2.4}$ M संचिंत्य चा($G_{2.4}$ °त्य त्वा-; M °त्येत्या)नयामास. — $^{d}$) $K_{1.4}$ $B_2$ Dn $D_{4-6}$ $G_3$ ह्यलं°; $B_1$ $D_1$ अलं° (for स्वलं°).

**44** $T_2$ om. 44 (cf. v.l. 43). — $^{a}$) $K_{1.4}$ $B_1$ Dn $D_{1.6}$ प्रोवाच (for चो°). $B_4$ नृपते; M वल° (for बल°). $G_{2.4}$ स्कंदायोवाच वलभिद्. — $^{d}$) $Ś_1$ भार्यां (for पत्नी).

**45** $^{a}$) $T_1$ $G_1$ तस्यास् (for तस्मात्). $T_2$ त्वमस्या विधिवत्पाणिं. — $^{b}$) $T_2$ होम- (for पाणिं). — $^{d}$) $B_1$ Dn $G_2$

तस्मात्त्वमस्या विधिवत्पाणिं मन्त्रपुरस्कृतम् ।
गृहाण दक्षिणं देव्याः पाणिना पद्मवर्चसम् ॥ ४५
एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि ।
बृहस्पतिर्मन्त्रविधिं जजाप च जुहाव च ॥ ४६
एवं स्कन्दस्य महिषीं देवसेनां विदुर्बुधाः ।
षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदाम् ।
सिनीवालीं कुहूं चैव सद्वृत्तिमपराजिताम् ॥ ४७
यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया ।
तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी ॥ ४८
श्रीजुष्टः पञ्चमीं स्कन्दस्तस्माच्छ्रीपञ्चमी स्मृता ।
षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात्षष्ठी महातिथिः ॥ ४९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

## २१९

मार्कण्डेय उवाच ।
श्रिया जुष्टं महासेनं देवसेनापतिं कृतम् ।
सप्तर्षिपत्न्यः षड् देव्यस्तत्सकाशमथागमन् ॥ १
ऋषिभिः संपरित्यक्ता धर्मयुक्ता महाव्रताः ।
द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुम् ॥ २
वयं पुत्र परित्यक्ता भर्तृभिर्देवसंमितैः । C 3 14456 B. 3. 230. 3 K. 3. 230. 3

---

पद्मवर्चसा. T2 पाणिना वर्चसा श्रियाः. — After 45, G1 ins.:

1075* एवमुक्तो भगवता महासेनो महाबलः ।
दृष्ट्वा कमलपत्राक्षीं तनुमध्यां यशस्विनीम् ।
अतीव रूपसंपन्नां सर्वाभरणभूषिताम् ।
सर्वलक्षणसंपन्नां देवसेनां शुचिस्मिताम् ।

46 a) G1 प्रीत्या परमया युक्तस्. — b) D5 पाणिं तस्या (by transp.). — After 46ab, G1 ins.:

1076* जग्राह भरतश्रेष्ठ देवसेनापतिस्ततः ।

— c) Dn1. n3 मंत्रविद्धि (for मन्त्रविधिं).

47 b) B1. 3 Dn D4. 6 T2 G3 M जनाः (for बुधाः). — c) Ś1 K2 षष्ठी. — d) Ś1 K2. 3 B Dn D2–5 आसां (for आशां). D4. 6 G3 °प्रभां (for °प्रदाम्). — f) T1 G1. 4 M सुवृत्तिम् (for सद्वृत्तिम्). — After 47, S (except G3) ins.:

1077* इत्येवमादिभिर्देवी नामभिः परिकीर्त्यते ।

48 a) G4 यथा (for यदा). K3 प्रतिलब्धः; T1 प्रीतिलब्धः. — c) Ś1 K1–3 D1–3 समाश्रयल् (K1. 2 °श्रया); D5 [प]नमाश्रयल्; M1 तमाश्रया. — D4 reads 48d–49d after the ref. in 3. 219. 7. — d) M2 एव (for देवी).

49 For D4 cf. v.l. 48. — a) K3 °तुष्टः (for °जुष्टः). T G1. 2 श्रिया जुष्टः स पंचम्यां. — b) K3 तदा (for तस्मात्). Ś1 K4 S (except G3. 4) श्रीः पंचमी. — c) Ś1 D1–3. 5 यच्च; K G2. 4 M2 यत्र (for यस्मात्).

Colophon. — *Major parvan:* Ś1 K2 Dn2 T2 G3. 4 आरण्य. — *Sub-parvan:* G1 मार्कंडेयसमस्या. K4 B1–3 Dc Dn1. n3 D1. 3. 4–6 G3 M2 (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* B3 स्कंदाभिषेकः; B4 कुमारोत्पत्तिः; G1 स्कंदचरित्रे स्कंदपट्टाभिषेकमहोत्सवदेवसेनाविवाहः; M2 सुब्रह्मण्यविवाहः. — *Adhy. no.* (figures, words or both): Dn1. n3 228; Dn2 227; D1 231; T G1 219; G3. 4 M (M2 *inf. lin.*) 221; M2 (orig.) 223. — *Śloka no.:* Dn 51; D1 49; D6 52.

## 219

1 b) G2. 4 °पती° (for °पतिं). B2 प्रभुं (for कृतम्). — d) B2 तत्समीपम् (for तत्सकाशम्). B1 उपा° (for अथा°).

2 a) D2. 3 °ताः परित्यक्ता; D5 परिसंत्यक्ता. — b) T2 पति° (for महा°). — G2 om. 2c–3d. — c) Ś1 K1. 2 Dc आगत्य (for आगम्य). T1 ते; G1 तं (for ता).

3 G2 om. 3 (cf. v.l. 2). — After 3a, K1. 2 ins.:

1078* धर्मयुक्ता महाव्रताः ।
भवदीयैकशरणाः.
[Line 1 = 2b.]

— b) Ś1 D2. 3 °संमतैः; D1 °संन्निभैः (for °संमितैः).

C 3. 14456 B 3. 230 K 3. 230 3 अकारणाद्रुषा तात पुण्यस्थानात्परिच्युताः ॥ ३
अस्माभिः किल जातस्त्वमिति केनाप्युदाहृतम् ।
असत्यमेतत्संश्रुत्य तस्मान्नस्त्रातुमर्हसि ॥ ४
अक्षयश्च भवेत्स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो ।
त्वां पुत्रं चाप्यभीप्सामः कृत्वैतदनृणो भव ॥ ५

स्कन्द उवाच ।

मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः ।
यच्चाभीप्सथ तत्सर्वं संभविष्यति वस्तथा ॥ ६

मार्कण्डेय उवाच ।

एवमुक्ते ततः शक्रं किं कार्यमिति सोऽब्रवीत् ।
उक्तः स्कन्देन ब्रूहीति सोऽब्रवीद्वासवस्ततः ॥ ७
अभिजित्स्पर्धमाना तु रोहिण्या कन्यसी स्वसा ।
इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ॥ ८
तत्र मूढोऽसि भद्रं ते नक्षत्रं गगनाच्च्युतम् ।
कालं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ॥ ९
धनिष्ठादिस्तदा कालो ब्रह्मणा परिनिर्मितः ।
रोहिण्याद्योऽभवत्पूर्वमेवं संख्या समाभवत् ॥ १०
एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गताः ।
नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ॥ ११
विनता चाब्रवीत्स्कन्दं मम त्वं पिण्डदः सुतः ।
इच्छामि नित्यमेवाहं त्वया पुत्र सहासितुम् ॥ १२

स्कन्द उवाच ।

एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात्प्रशाधि माम् ।
स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा ॥ १३

---

— c) T1 G1 अकारणरुषा; M °रणं रुषा. G4 दूष्य (for रुषा). B1 तैश्च; D (except D2. 3. 5) G3 तैस्तु (for तात). — d) K1. 2. 4 D5 T G1 M पुण्यात् (for पुण्य-).

**4** b) K3 अथ (for इति). D1 [उ]पा° (for [उ]दा°). — c) K4 B D (except D2. 3. 5) G3 तत्सत्यम्; T2 G1. 2. 4 अपत्यम् (for असत्यम्). S (except G3) संस्मृत्य (for संश्रुत्य).

**5** a) G2. 4 तु (for च). — c) S (except G3) पुत्रं च त्वामभीप्सामः (T2 °मवाप्स्यामः).

**6** K1 om. 6 (with the ref.). — a) Ś1 K3. 4 Dn D1. 3. 5 G4 भवंत्यो (for °त्यो). — c) B1–3 Dn (Dn1m as in text) D4. 6 G3 M यद्वा(M2 °च्चा)पीच्छत (M °थ); T2 यदवाप्स्यथ (for यच्चाभीप्सथ). — d) Ś1 K (K1 om.) Dc D2. 3. 5 सदा; D1 T2 तदा (for तथा). B4 भविष्यति वरस्तथा; G2. 4 भविष्यति च सर्वदा.

**7** M om. the ref. — After the ref., D4 reads 3. 218. $48^{d}$–$49^{d}$. — a) K3 D1. 5 एवमुक्त्वा; B Dc Dn D4. 6 T2 G2. 3 विवक्षं(T2 °क्षि)तं; G1. 4 एवमुक्तस्. Ś1 K2 G4 M शक्रः (for शक्रं). T1 विवक्षितं ते शक्रश्च. — b) Ś1 K1. 2. 4 Dc D3 चा° (for सो°). — c) K4 उक्तं; Dc ततः; D2 उक्ते (for उक्तः). K3 देहीति (for ब्रू°). S (except G3) स्कन्देनोक्तः प्रब्रवीहि. — d) D1. 2 G4 तदा (for ततः

**8** a) D5 सर्वनामा; G1 स्पर्धमानं. D3 च (for तु). — b) Ś1 K1. 2 अनुजा; K4 चानुजा; D2. 3 ह्यनुजा (for कन्यसी). T1 G1 रोहिण्या कनकाह्वया; T2 G2–4 रोहिण्यास्तु (T2 G3 °ण्या तु) कनीयसी. — c) Ś1 K1–3 D2. 3. 5. 6 T1 M1 इच्छती. K3 श्रेष्ठतां. — d) K3 D5 वने (for वनं).

**9** a) K4 Dc1 D1 अत्र (for तत्र). — c) G2. 4 त्वमपरं (for त्विमं परं). Ś1 प्रति (for परं). K2. 3 स्कंदं (for स्कन्द). — d) Ś1 स हि चिंतय; K3 D1 पर्यचिंतयत् (D1 °यं); D2 G4 M सह चिंतया; D3 T1 G1 सह चिंतयन् (G1 °त्).

**10** T2 om. $10^{ab}$. — a) Ś1 K1. 2. 4 B4 D3 (*sup. lin. sec. m.* as in text) G1. 2. 4 M तथा (for तदा). — b) Ś1 K B4 Dc D1–3. 5 परिकीर्तितः; B1–3 Dn D4. 6 G3 °कल्पितः. — c) K3 रोहिण्या योभवत्; B Dc Dn D4. 6 G3 रोहिणी ह्यभवत्; D1. 5 रोहिण्याद्यभवत्; T1 G1 रोहिण्याश्चाभवत्; T2 धाता प्रजापतिः. — d) Ś1 K2. 3 D3. 5 एषा; K4 D2 एषां (for एवं). Ś1 K1. 2 सदा°; T G1. 4 समो° (for समा°). B1 Dc M भवेत्.

**11** a) Dc2 उक्ते च; D5 उक्तेन (for उक्ते तु). — b) K1. 4 B1. 3 Dc Dn2 T2 M1 गता (for गताः). — c) K4 D3 सर्पशीर्षाभं; B Dc Dn D1. 2. 4. 6 G3 सप्तशीर्षाभं for शकटा°). — d) T1 G1 नित्याग्नि°; T2 तध्याग्नि° (for तद्वह्नि°).

**12** b) Ś1 K D2. 3. 5 दयितः (for पिण्डदः). T2 सदा (for सुतः). — D2 om. (hapl.) $12^{c}$–$15^{b}$. — c) T G1 M नित्यं सहिता; G4 नित्यं भवता (for नित्यमेवाहं).

**13** D2 om. 13 (cf. v.l. 12). — b) K4 पुत्रं (for पुत्र-). — d) K3. 4 Dc D1. 3. 5 दिवि; Dn D4. 6 T G1. 2 देवी (for देवि). D3 वै सदा (for नित्यदा).

मार्कण्डेय उवाच ।

अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत् ।
वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः ।
इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ॥ १४

स्कन्द उवाच ।

मातरस्तु भवत्यो मे भवतीनामहं सुतः ।
उच्यतां यन्मया कार्यं भवतीनामथेप्सितम् ॥ १५

मातर ऊचुः ।

यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकल्पिताः ।
अस्माकं तद्भवेत्स्थानं तासां चैव न तद्भवेत् ॥ १६
भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ ।
प्रजास्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः ॥ १७

स्कन्द उवाच ।

दत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुम् ।
अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ ॥ १८

मातर ऊचुः ।

इच्छाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः ।
त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥ १९

स्कन्द उवाच ।

प्रजा वो दद्मि कष्टं तु भवतीभिरुदाहृतम् ।
परिरक्षत भद्रं वः प्रजाः साधु नमस्कृताः ॥ २०

मातर ऊचुः ।

परिरक्षाम भद्रं ते प्रजाः स्कन्द यथेच्छसि ।
त्वया नो रोचते स्कन्द सहवासश्चिरं प्रभो ॥ २१ C. 3. 14475 B. 3. 230. 21 K. 3. 230. 21

---

**14** $D_2$ om. 14 (cf. v.l. 12). — $^{a}$) Ś$_1$ $K_1$ °गणं मर्वं; $Dn_1$ $G_1$ °गणाः सर्वे; T °गणाः सर्वाः. — $^{b}$) Ś$_1$ $K_{1.2}$ स्कंदो (for स्कन्दं). $Dn_1$ $T_1$ अब्रुवन् (for अब्रवीत्). — $K_1$ om. $14^{c}$–$14^{f}$. — $^{c}$) $B_4$ एवं (for वयं). — $^{d}$) $D_3$ T $G_{1.2.4}$ स्मृताः (for स्तुताः). — Ś$_1$ $K_2$ om. $14^{ef}$. — $^{e}$) $K_3$ $D_5$ $T_1$ $G_{1.4}$ M इच्छाम (for °मो). — After 14, $K_{3.4}$ Dc $D_{1.3.5}$ S (except $G_3$) ins.:

1079* स तासां वचनं श्रुत्वा स्कन्दो वचनमब्रवीत् ।

[S (except $G_3$) तासां तु (for स तासां). T $G_1$ M भाषितं (for the first वचनं).]

**15** $D_2$ om. $15^{ab}$ (cf. v.l. 12). — Ś$_1$ $K_{1.3}$ $D_{3.5}$ S (except $G_3$) om. the ref. — $^{a}$) $B_2$ Dn $D_{1.4.6}$ $G_3$ हि (for तु). — $^{c}$) $K_3$ $D_5$ तन् (for यन्). — $^{d}$) Ś$_1$ $K_2$ यथे°; $K_{3.4}$ Dc $D_{2.3.5}$ S (except $G_3$) इहे°; $B_4$ अभी° (for अथे°).

**16** $^{a}$) $D_3$ यथा सु- (for यास्तु ता). — $^{b}$) $K_3$ $D_{1.5}$ प्रवर्तिताः; $K_4$ $D_3$ S (except $G_3$) प्रकीर्तिताः; $B_2$ प्रकाशिताः; Dc प्रवर्तकाः. — $^{c}$) $K_{1.2}$ $D_{1-3.5}$ आस्मासु (for °कं). $K_4$ $B_{1.3}$ $Dn_2$. $n_3$ तु; $B_2$ $Dn_1$ $D_{4.6}$ $T_2$ $G_3$ च (for तद्). $G_4$ स्थानात् (for स्थानं).

**17** $^{a}$) Ś$_1$ K Dc $D_{1-3.5}$ सर्व- (for पूज्या). — $^{b}$) Ś$_1$ K Dc $D_{1-3.5}$ नित्यं (Ś$_1$ $K_{1.2}$ °त्य-) (for न ताः). T $G_{1.2.4}$ °र्षिभिः (for °र्षभ). — $^{c}$) Ś$_1$ $K_{1.2}$ हिताः; $K_3$ $D_3$ T $G_{1.2.4}$ हताः (for हृताः). $T_2$ $G_{2.4}$ [अ]स्माभिस् (for ताभिस्). — $^{d}$) $K_{3.4}$ $D_{2.5}$ $T_2$ $G_{2.4}$ तां; $M_1$ तत् (for ताः).

**18** Ś$_1$ $K_{1.2}$ $D_2$ om. (hapl.) $18^{a}$–$19^{b}$; $G_1$ om. 18–21. — $^{a}$) $B_1$ Dn वृत्ताः ($Dn_1$ हृताः); $D_1$ न ताः (for दत्ताः). $K_4$ $D_{1.3.5}$ दत्ता प्रजा न ता शक्या; $G_{3.4}$ दत्ता न ताः प्रजाः शक्या. — $^{b}$) $K_4$ निषेधितुं; $T_1$ निषीदितुं. — $^{c}$) $B_{3.4}$ अन्या वः काः; $T_1$ अन्यां कां वः; $G_1$ कन्यां कामं; $G_{2.4}$ अन्यं कामं (for अन्यां वः कां). — $^{d}$) $K_4$ $B_{3.4}$ प्रजा या; $Dn_2$. $n_3$ $D_{1.6}$ प्रजा यां; T M पूजां यां. $T_1$ मम मातरः (for मनसेच्छथ).

**19** Ś$_1$ $K_{1.2}$ $D_1$ om. $19^{ab}$; $G_1$ om. 19 (cf. v.l. 18); $K_4$ om. (hapl.) 19–20. — $^{a}$) $B_1$ इच्छामि; $T_2$ ब्रह्मा तु (for इच्छाम). $G_2$ भोक्तुं (for तासां). $G_4$ परिरक्षाम भोक्तुं त्वं. — $^{b}$) B $D_{3.5}$ $T_1$ प्रजां (for प्रजा). $G_{2.4}$ स्कंद (for भोक्तुं). $G_4$ ह (for नः). — $^{d}$) $D_5$ महे° (for अथे°).

**20** $K_4$ $G_1$ om. 20 (cf. v.l. 19, 18). — $^{a}$) $M_2$ पूजां (for प्रजा). $T_1$ च (for तु). — $^{c}$) $D_1$ $T_2$ परिरक्षंतु; $D_5$ °रक्षतु; $T_1$ °रक्षथ.

**21** $G_1$ om. 21 (cf. v.l. 18). — $^{b}$) Ś$_1$ K Dc $D_{2.3.5}$ साधु; $T_2$ देहि (for स्कन्द). $G_4$ प्रयच्छ ह (for यथे°). — $^{c}$) $G_{2.4}$ न (for नो). — $^{d}$) Ś$_1$ K $D_{2.3.5}$ $T_2$ विभो (for प्रभो).

**22** $^{b}$) $B_{1.3}$ भवेद्धि; $D_1$ भवित्री (for भवन्ति). Ś$_1$ $K_{1.2.4}$ $B_{1.3}$ $D_{1.3}$ तरुणी (Ś$_1$ $K_2$ °णीः). $B_{1.3}$ प्रजा. — $^{c}$) Ś$_1$ $K_3$ प्रधावत; $K_2$ °धावति; $K_4$ $D_{1.3}$ °बाधनं; $T_1$ $G_1$ $M_1$ °बाधध्वं; $M_2$ °बाध त्वं. — $^{d}$) $K_4$ तावद्भूतैः; $B_1$ $G_1$ तादृग्रूपैः; $T_2$ $G_2$ तत्तद्रूपैः.

C. 3. 14475
B 3. 230. 22
K. 3. 230. 22

स्कन्द उवाच ।

यावत्पोडश वर्षाणि भवन्ति तरुणाः प्रजाः ।
प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः ॥ २२
अहं च वः प्रदास्यामि रौद्रमात्मानमव्ययम् ।
परमं तेन सहिता सुखं वत्स्यथ पूजिताः ॥ २३

मार्कण्डेय उवाच ।

ततः शरीरात्स्कन्दस्य पुरुषः काञ्चनप्रभः ।
भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः ॥ २४
अपतत्स तदा भूमौ विसंज्ञोऽथ क्षुधान्वितः ।
स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः ।
स्कन्दापस्मारमित्याहुर्ग्रहं तं द्विजसत्तमाः ॥ २५
विनता तु महारौद्रा कथ्यते शकुनिग्रहः ।
पूतनां राक्षसीं प्राहुस्तं विद्यात्पूतनाग्रहम् ॥ २६
कष्टा दारुणरूपेण घोररूपा निशाचरी ।
पिशाची दारुणाकारा कथ्यते शीतपूतना ।
गर्भान्सा मानुषीणां तु हरते घोरदर्शना ॥ २७
अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालाञ्शिशून्घोरो बाधते वै महाग्रहः ॥ २८
दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् ।
अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा ॥ २९
कुमाराश्च कुमार्यश्च ये प्रोक्ताः स्कन्दसंभवाः ।
तेऽपि गर्भभुजः सर्वे कौरव्य सुमहाग्रहाः ॥ ३०
तासामेव कुमारीणां पतयस्ते प्रकीर्तिताः ।
अज्ञायमाना गृह्णन्ति बालकान्रौद्रकर्मिणः ॥ ३१
गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।
शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून्भुवि ॥ ३२
सरमा नाम या माता शुनां देवी जनाधिप ।
सापि गर्भान्समादत्ते मानुषीणां सदैव हि ॥ ३३

---

**23** [a]) $G_4$ चेमं (for च वः). — [b]) $G_1$ वरम् (for रौद्रम्). — [c]) $Ś_1$ परमेतेन (for परमं तेन). — [d]) $G_{2.4}$ नित्यदा (for पूजिताः).

**24** $Ś_1$ K $B_{1.3.4}$ Dc $D_{1-3.5}$ S (except $G_3$) om. the ref. — [a]) $B_4$ ततः स्कंदस्य पुरुषः. — [b]) $B_4$ शरीरात् (for पुरुषः). $Ś_1$ $K_{1.2}$ शाश्वतः प्रभुः ($K_1$ °भः); $B_{1-3}$ D (except $D_{1-3.5}$) $G_3$ पावकप्रभः (for काञ्चन°). — [c]) $D_4$ स्स; $T_2$ तु (for स). — [d]) $K_4$ $D_3$ निपपात. $Ś_1$ K $B_4$ Dc $D_{2.3.5}$ महाग्रहः; Dn $D_1$ °प्रभः.

**25** [a]) B D (except $D_{2.3.5}$) $G_3$ सहसा; $T_2$ स ततो (for स तदा). — [b]) $D_{4.6}$ $G_3$ संविग्नो° (for विसंज्ञो°). $B_{2.3}$ D (except $D_{1-3.5}$) $G_3$ °र्दितः (for °न्वितः). — [e]) $K_{3.4}$ Dc $D_{2.5}$ $T_2$ $G_{2.4}$ $M_1$ °पस्मार (for °पस्मारम्). — [f]) $B_4$ तु; T $G_{1.2.4}$ $M_1$ तद् (for तं).

**26** [a]) $Ś_1$ $K_{2-4}$ $B_{1.3}$ Dc $D_{4-6}$ $G_3$ M °रौद्रः (for °रौद्रा). — [b]) $Ś_1$ $K_{1.2}$ T $G_1$ शत्रुनिग्रहः; $B_4$ $G_1$ शकुनिर्ग्रहः. — [c]) T $G_{1.2.4}$ मातॄणां; M पितॄणां (for पूतनां). M रक्षसां (for राक्षसीं). $B_3$ $D_1$ आहुस्; Dc त्वाहुस् (for प्राहुस्). Dc $T_2$ $G_{1.2.4}$ तां (for तं).

**27** [a]) $Ś_1$ नष्टा (for कष्टा). $Ś_1$ चनक°; K $D_{2.5}$ $T_1$ M दारक° (for दारुण°). — [c]) M दारुणाचारा. — [d]) $D_3$ सा तु पूतना; $G_{2.4}$ शीघ्रसूदना (for शीत°).

**28** [a]) $K_2$ Dc $D_4$ $M_2$ आहुर् (for प्राहुर्). — [c]) $Ś_1$ बालः (for बालान्). $Ś_1$ $K_{1-3}$ Dc $D_5$ शिशुर्भूत्वा; $B_{1-3}$ Dn $D_{4.6}$ महाघोरो (for शिशून्घोरो). $K_4$ $D_2$ $T_2$ घोरान् (for घोरो). — [d]) $D_1$ हि; $D_5$ स (for वै).

**29** [b]) $T_1$ $G_{1.2.4}$ $M_2$ मुखमंडितां. — [d]) $K_3$ संप्रतुष्टा; $B_2$ सा प्रहृष्टा; $D_1$ $T_1$ $G_1$ संप्रदुष्टा; $D_{2.3}$ °पुष्टा; $T_2$ °दृष्टा (for °हृष्टा). $G_{2.4}$ M संप्रहृष्टां °सदां.

**30** [a]) K $B_{1.3}$ Dc $D_{1-3.5}$ T $G_1$ M कुमार्यश्च कुमाराश्च. — [b]) $Ś_1$ $K_2$ याः (for ये).

**31** [a]) $Ś_1$ $K_{1-3}$ $B_4$ Dc $D_{1-3.5}$ च ($K_3$ $B_4$ $D_1$ तु) नारीणां; $B_{1-3}$ Dn $D_{4.6}$ $G_3$ तु पत्नीनां (for कुमा°). $K_4$ तानेव चैव नारीणां. — [c]) $B_{1.2}$ $Dn_1$. $n_2$ $T_1$ आजायमानान् ($T_1$ °माना); $B_{3.4}$ $D_{1.3}$ आज्ञायमाना; $Dn_3$ अज्ञायमानान्. $G_4$ ग्राहंति (for गृह्णन्ति). — [d]) $Ś_1$ K Dc $D_{2.3.5}$ दारका° (for बालका°). $D_{2.3}$ T $G_{1.2.4}$ °कर्मणः (for °कर्मिणः).

**32** [a]) $K_3$ च (for तु). — [b]) $T_2$ नव (for नृप). — [c]) $M_1$ शकुनिं तु समारुह्य. — [d]) $Ś_1$ $K_{1.2}$ $D_5$ शिशुं. Dc प्रति (for भुवि).

**33** [ab]) $Ś_1$ K Dc $D_{2.3.5}$ transp. माता and देवी. $B_2$ या देवी; $B_4$ माता या (by transp.); $T_1$ $G_1$ या तात. $B_1$ गुणान्; $B_2$ शुनो (for शुनां). T $G_{1.2.4}$ तेषां (for देवी). — [c]) $T_2$ तु; $G_{2.4}$ हि (for [अ]पि). $D_{2.3.5}$ गर्भं (for गर्भान्). $K_4$ समाधत्ते. — [d]) $K_1$ $Dc_1$ मानुषाणां; $D_3$ मनुष्याणां. $K_4$ हिताय (for सदैव). $Ś_1$ $B_1$ ह; $K_4$ वै;

पादपानां च या माता करञ्जनिलया हि सा ।
करञ्जे तां नमस्यन्ति तस्मात्पुत्रार्थिनो नराः ॥ ३४
इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः ।
द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे ॥ ३५
कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशेद्यदा ।
भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ॥ ३६
गन्धर्वाणां तु या माता सा गर्भं गृह्य गच्छति ।
ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ॥ ३७
या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा ।
उपविष्टं ततो गर्भं कथयन्ति मनीषिणः ॥ ३८
लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता ।
लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ॥ ३९
पुरुषेषु यथा रुद्रस्तथार्या प्रमदास्वपि ।
आर्या माता कुमारस्य पृथक्कामार्थमिज्यते ॥ ४०
एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः ।
यावत्षोडश वर्षाणि अशिवास्ते शिवास्ततः ॥ ४१
ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः ।
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ॥ ४२
तेषां प्रशमनं कार्यं स्नानं धूपमथाञ्जनम् ।
बलिकर्मोपहारश्च स्कन्दस्येज्या विशेषतः ॥ ४३ C. 3. 14496 B. 3. 230. 44 K. 3. 230. 44

B3. 4 तु (for हि).

**34** Ś1 K1. 2 om. 34ab. — a) K4 D2. 3 हि; S (except G3) तु (for च). — b) T1 G1 °या शुभा; G4 °याभिधा (for °या हि सा). — After 34ab, B D (except D1–3. 5) G3 ins.:

1080* वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी ।
[B1 दंतुरा (for वरदा).]

— c) K1. 2 करंजैस्. K1. 2 Dc D4 T1 तान् (for तां). Ś1 करांश्चैतान्प्रयच्छंति. — d) Ś1 K1. 2. 4 जनाः; T2 पराः (for नराः).

**35** a) T1 °दश ह्येवं; T2 G1. 2. 4 °दश ह्येते (for °दशान्ये वै). Ś1 K1. 2. 4 च (for वै). — c) T1 G1 दिवं च रात्रिं; T2 G2. 4 M दिवारात्रं च (T2 तु) (for द्विपञ्चरात्रं). — d) Ś1 सतताः.

**36** a) D6 G3 रुद्रः (for कद्रूः). K3 Dc D1. 5 सूक्ष्मं (Dc D1 °क्ष्म-) वपुः कृत्वा. — b) T1 G1 गर्भान्स्तं (for गर्भिणीं). B3. 4 Dn D4. 6 G3 प्रविशति (for °शेद्). B1. 3 मुदा; B2 [उ]त; B4 [अ]पि; Dn [अ]थ; D1 यदि; D4. 6 G3 [अ]यं (for यदा). — c) D1 सा भुंक्ते (by transp.). D4. 6 G3 स (for सा). B1 तद्भुतं; B4 तत्र तद् (for तत्र तं). — d) Ś1 K1. 2. 4 D2. 3 कथयंति मनीषिणः (=38d).

**37** T2 om. 37. — a) Ś1 K1–3 G3 च (for तु). T1 G1. 4 M सुजाता हरिणी या तु. — b) K4 D1–3. 5 गृह्य तिष्ठति; T1 G1. 4 M पिबति प्रभो (for गृह्य गच्छति). — c) Ś1 K Dc D1–3. 5 तु (for सा).

**38** a) D5 जनयित्री (for या जनित्री). — b) G1 प्रसह्य (for प्रगृ°). D5 च (for सा). — c) Ś1 K1. 2 Dn D1. 5 °नष्टं (for °विष्टं). — d) Ś1 K1. 2. 4 D3 सा (K1 स; D3 या) तु नागं प्रसूयते (=36d).

**39** b) B2 या; T2 सं-; M च (for सा). — c) K4 लोहितायिति; D5 °यति; T2 °ता धात्रि; G3 °येति (for °यनिर्). S (except G3) [ए]व (for [ए]वं). — d) Ś1 K1 कदंभे. B4 T G1 M तु; D6 [अ]भि-; G2. 4 प्र- (for हि). B1 गृह्य° (for पूज्य°).

**40** a) B2 G2 यदा (for यथा). K1. 2 रुद्रास्; G4 रौद्रस् (for रुद्रस्). — b) Dc प्रमदा अपि (for °स्वपि). — d) Ś1 कार्यार्थम्; D2 मासार्थम् (for कामार्थम्). K3 D1 इष्यते; B1 ईक्ष्यते (for इज्यते).

**41** a) B4 कुमारीणां. — b) Ś1 K1. 2 तु वै; D5 परि- (for महा-). — d) To avoid hiatus, Ś1 K B1. 3. 4 Dc D1–6 T M ह्यशिवा° (for अशिवा°). Ś1 शिवास्तथा; B1 शिवास्तुतः; D1 तथा शिवाः; T1 G1 शिवा ग्रहाः; T2 G2. 4 M शिवाः स्मृताः. B2 Dn G3 शिशूनां ह्यशिवास्ततः.

**42** a) S (except G3) एवं (for ये च). G4 °गणः प्रोक्तः. — b) K3 वै ग्रहाः; B3 विग्रहाः (for ये ग्रहाः). — c) Ś1 K1. 2 राजन् (for नाम). — d) K4 मनीषिभिः (for शरी°).

**43** a) S (except G3 M1) कुर्यात् (for कार्यं). — b) Dc D3 स्थानं (for स्नानं). D3 धूपस् (for धूपं). K B4 Dc D1–3. 5 T G1. 2. 4 तथा (for अथ). K4 B1 D1–3 [अ]र्चनं; T1 G1 जपं (for [अ]ञ्जनम्). M स्नानधूपांज(M1 °पास)नादिभिः. — c) Ś1 K1 (m as in text). 2 बल्युद्वर्तनमभ्यंगः; K3 B2 Dn D1. 5 बलिकर्मोपहाराश्च; B1 T1 G1 M °हारैश्च; T2 G2. 4 °हारं च. — d) D1. 3 [इ]ष्टा; T2 G2. 4 M1 [इ]ज्यां (for [इ]ज्या).

**44** D2 om. 44. — a) B3. 4 Dn D4. 6 G3 अभ्यर्चिताः; T1 G1 एवा° (for एते°). D1 सम्यक् (for सर्वे). — b) K3 Dc2 D3 शुभां; T1 °भान् (for °भं). — c) T1 G1. 2. 4

C 3 14499 B 3.230 45 K 3 230.45 एवमेतेऽर्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् ।
आयुर्वीर्यं च राजेन्द्र सम्यक्पूजानमस्कृताः ॥ ४४
ऊर्ध्वं तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम् ।
तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥ ४५
यः पश्यति नरो देवाञ्जाग्रद्वा शयितोऽपि वा ।
उन्माद्यति स तु क्षिप्रं तं तु देवग्रहं विदुः ॥ ४६
आसीनश्च शयानश्च यः पश्यति नरः पितॄन् ।
उन्माद्यति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ॥ ४७
अवमन्यति यः सिद्धान्क्रुद्धाश्चापि शपन्ति यम् ।
उन्माद्यति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः ॥ ४८
उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान् ।
उन्माद्यति स तु क्षिप्रं स ज्ञेयो राक्षसो ग्रहः ॥ ४९
गन्धर्वाश्चापि यं दिव्याः संस्पृशन्ति नरं भुवि ।
उन्माद्यति स तु क्षिप्रं ग्रहो गान्धर्व एव सः ॥ ५०
आविशन्ति च यं यक्षाः पुरुषं कालपर्यये ।
उन्माद्यति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः ॥ ५१
अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं क्वचित् ।
उन्माद्यति स तु क्षिप्रं पैशाचं तं ग्रहं विदुः ॥ ५२
यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः ।
उन्माद्यति स तु क्षिप्रं साधनं तस्य शास्त्रतः ॥ ५३
वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् ।
उन्माद्यति स तु क्षिप्रं सत्त्वं तस्य तु साधनम् ॥ ५४

---

M दीर्घं; T2 दिव्यं (for वीर्यं). T1 G राज्यं च (for राजेन्द्र). — d) B4 कुर्यात् (for सम्यक्). Ś1 K1. 2. 4 D3. 5 पूज्य (for पूजा-). T2 G1. 2. 4 -नमस्कृतैः (for -नमस्कृताः).

**45** a) T1 G1 षोडशकाद् (for तु षोडशाद्). — b) T1 न (for ये). T2 ग्रहंति (for भवन्ति). — c) B2 अनहं (for तानहं). — d) K1 महेश्वरीं; K2 °रीः (for °रम्).

**46** a) K4 M2 देवं (for देवान्). — b) T G2. 4 जाग्रन्वा. — K3 om. $46^c$–$47^b$. — c) $=47^c$, $48^c$, etc., etc. G2. 4 उन्माद्य तु (for उन्माद्यति). T1 उन्मादि तु क्षिप्रमेव. — d) Dn दैव° (for देव°)!

**47** K3 om. $47^{ab}$ (cf. v.l. 46). The sequence of K3 is extremely confused; it is ignored here. — b) S (except G3) transp. यः and नरः. — c) D2. 3 च (for तु). — d) B transp. $47^d$ and $48^d$. Ś1 K2. 3 D1–3 विज्ञेयः (for स ज्ञेयः). Ś1 K1. 2 च; T1 हि (for तु).

**48** G2. 4 om. 48; K3 om. $48^{ab}$. — a) Ś1 K (K3 om.) D1. 2 अवमन्यंति; T1 G1 °मन्येत; T2 अवेक्ष्यते हि. Ś1 K (K3 om.) D1–3 यं; D5 वः (for यः). Ś1 क्रुद्धाः; K (K3 om.) D1–3. 5 सिद्धाः; D6 क्रुद्धान्; T2 सिद्धः (for सिद्धान्). — b) D5 क्रूराश्च; M क्रुद्धश्च (for क्रुद्धाश्च). M1 चाभि- (for चापि). D5 विशंति यं; T1 G1 M शपत्यपि (for शपन्ति यम्). K4 D1–3 च (for यम्). Ś1 सिद्धाश्च शमयंति यं; T2 सिद्धान्पश्यस्युपेत्य च. — K1 (hapl.) om. $48^d$–$49^c$. — d) B transp. $47^d$ and $48^d$. D4. 6 °गण° (for °ग्रह°). — After 48, G2. 4 read 52.

**49** K1 om. $49^{abc}$ (cf. v.l. 48); G1 om. 49–50. — a) K3 D1. 5 उपघ्राति तु (D1 च); B1 T2 G4 M उपा- (G4 °प)घ्रायति; B4 उपजिघ्रति. K4 D2. 3 तु (for च). D5 यं गत्वा (for यो गन्धान्). — b) D5 तासां; T2 नृणां (for रसान्). T G4 M चापि (for चैव). K3 विशेषतः; D5 पृथग्विधं. — K3 om. (hapl.) $49^d$–$50^c$. — d) Ś1 K2 D2. 3 वि- (for स). B2. 4 Dc T1 M1 राक्षसग्रहः.

**50** G1 om. 50; K3 om. $50^{abc}$ (cf. v.l. 49). — a) B4 या; D2 ये; T1 यद् (for यं). — b) B1–3 D (except D2. 3) G3 संविशंति (for °स्पृशन्ति). B1 वनं; T2 M2 नरा (for नरं). — d) Ś1 B1 D2 गंधर्वं. S (except G3; G1 om.) उच्यते (for एव सः).

**51** B1. 3 D (except D1–3. 5) transp. 51 and 52. — a) Ś1 K1–3 B1 T1 G1 M तु; T2 G4 [अ]पि (for च). Ś1 तं; K1 यां; G2 कं (for यं). K1 यक्षः; T1 वृक्षः; T2 कामाः; G2. 4 कामात् (for यक्षाः). — b) K1 G4 पुरुषः; K4 पौरुषं; T2 G2 पुरुषान्. — K3 lacuna for $51^{cd}$. — d) B3 ग्रहो गंधर्व एव सः (cf. $50^d$); B4 साधनं तत्र संस्तुतः; G2. 4 पैशाचं तं ग्रहं विदुः ($=52^d$).

**52** G2. 4 read 52 after 48. B1. 3 D (except D1–3. 5) transp. 51 and 52. T2 om. 52. — a) B4 अभि° (for अधि°). K1. 2. 4 ये (for यं). D3 क्षिप्रं (for नित्यं). — b) B1–3 Dn D1. 4. 6 G3 प्रति (for क्वचित्). — d) B Dn D4. 6 G3 ग्रहः पैशाच एव सः; G2. 4 ज्ञेयः सिद्धग्रहस्तु सः ($=48^d$).

**53** a) Ś1 पर-; K1. 2 सर्व-; D4 G3 तस्य (for यस्य). T1 G1 M प्रकुपितैश्च. — b) Ś1 K2 D2. 4 M2 मुह्यंति; Dc माद्यति (for मुह्यति). — c) G2 ततः (for स तु). — d) M2 विधानं (for साधनं).

**54** a) Ś1 K1–3 Dc D2. 3 चापि (for चैव). — b) T1 G1 M1 चैव (for चापि). — d) Ś1 B Dn D2. 5 सांत्वं (B1

कश्चित्क्रीडितुकामो वै भोक्तुकामस्तथापरः ।
अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः ॥ ५५
यावत्सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् ।
अतः परं देहिनां तु ग्रहतुल्यो भवेज्ज्वरः ॥ ५६
अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।
आस्तिकं श्रद्दधानं च वर्जयन्ति सदा ग्रहाः ॥ ५७
इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्तितः ।
न स्पृशन्ति ग्रहा भक्तान्नरान्देवं महेश्वरम् ॥ ५८

इति श्रीमहाभारते आरण्यकपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

# २२०

मार्कण्डेय उवाच ।
यदा स्कन्देन मातॄणामेवमेतत्प्रियं कृतम् ।
अथैनमब्रवीत्स्वाहा मम पुत्रस्त्वमौरसः ॥ १
इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम् ।
तामब्रवीत्ततः स्कन्दः प्रीतिमिच्छसि कीदृशीम् ॥ २
स्वाहोवाच ।
दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज ।
बाल्यात्प्रभृति नित्यं च जातकामा हुताशने ॥ ३
न च मां कामिनीं पुत्र सम्यग्जानाति पावकः ।
इच्छामि शाश्वतं वासं वस्तुं पुत्र सहाग्निना ॥ ४
स्कन्द उवाच ।
हव्यं कव्यं च यत्किंचिद्द्विजा मन्त्रपुरस्कृतम् ।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्यतम् ॥ ५
अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः । C. 3. 14519 B. 3. 231. 6 K. 3. 231. 6

---

शास्त्रं) (for सत्त्वं). Ś$_1$ K$_{1.2}$ प्र-; D$_2$ हि (for तु). M$_1$ साधयेत् (for साधनम्). Dc सत्त्वं साधनशास्त्रतः.

**55** $^a$) K$_3$ क्वचित्; T$_1$ किंचित्; G$_2$ कच्चित् (for कश्चित्). K$_{1.4}$ Dc क्रीडति कामो; K$_3$ क्रीडतुकामो; D$_1$ क्रीडन्सकामो; T$_2$ G$_2$ क्रीडनकामो. K$_{3.4}$ Dc D$_{1-3.5}$ M वा; B$_4$ T$_2$ G$_{1.2}$ हि (for वै). — $^b$) T$_1$ हातु° (for भोक्तु°). B$_4$ [अ]परे; D$_1$ [अ]पि वा; T$_1$ G$_{2.4}$ ग्रहः; T$_2$ [अ]ग्रतः (for [अ]परः). — T$_2$ om. 55$^{cd}$. — $^c$) Ś$_1$ K$_{1.2}$ D$_1$ अतिकामस्; D$_5$ रतिकामस् (for अभिकामस्). — $^d$) B$_2$ T$_1$ G$_{1.2.4}$ M$_2$ [ए]वं (for [ए]ष). M$_2$ त्रिविधा ग्रहाः.

**56** $^a$) Ś$_1$ K$_{1.3}$ D$_{1-3.5}$ यावत्तु सप्त वर्षाणि. — $^b$) B$_1$ तावंत्येते (for भवन्त्येते). D$_1$ भृशं (for नृणाम्). — $^c$) S (except G$_3$) तु मर्त्यानां (for देहिनां तु). — $^d$) S (except T$_1$ G$_3$) °तुल्या (for °तुल्यो). D$_5$ ज्वरो भवेत् (by transp.). K$_4$ नरः; S (except G$_3$) जरा (for ज्वरः).

**57** $^a$) Ś$_1$ K$_{1.2}$ °यग्रामं (for °यं दान्तं). — $^c$) D$_{4.6}$ G$_3$ शुद्धाचारं च; M$_1$ दैवतपरं (for श्रद्दधानं च).

**58** $^b$) S (except G$_{1.3}$) मनुष्याणां. — $^c$) K$_{3.4}$ D$_{1-3.5}$ T$_1$ G$_1$ नरान्; G$_2$ सदा (for ग्रहा). — $^d$) K$_3$ G$_1$ ग्रहो; K$_4$ D$_{2.3.5}$ T$_1$ ग्रहा; D$_1$ देव (for नरान्). K$_2$ देवो महेश्वरः; S (except G$_3$ M$_1$) देवे महेश्वरे.

Colophon. — *Major parvan:* Ś$_1$ K$_{1.2}$ T$_2$ G$_{2.4}$ आरण्य. — *Sub-parvan:* G$_1$ मार्कंडेयसमस्या. B$_{1-3}$ D G$_3$ (all om. sub-parvan name) mention only आंगिरस (Dc °रसोपाख्यान). — *Adhy. name:* B$_{2.4}$ Dn$_1$. n$_3$ D$_{4.6}$ T$_2$ G$_3$ कुमारोत्पत्तिः; G$_1$ कुमारचरित्रे ग्रहानुकथनं; G$_2$ ग्रहादेशः. — *Adhy. no.* (figures, words or both): Dn$_1$. n$_3$ 229; Dn$_2$ 228; D$_1$ 232; T$_1$ 221; T$_2$ G$_{1.2.4}$ M (M$_2$ *inf. lin.*) 220 (M$_2$ orig. 224). — *Śloka no.:* Dn$_1$ 55; Dn$_2$. n$_3$ 59; D$_{1.6}$ 60.

## 220

**1** $^b$) B$_1$ तत्तत् (for एतत्). B$_4$ कृतं प्रियं (by transp.); S (except G$_3$) प्रकीर्तितं.

**2** $^c$) Ś$_1$ K$_{1.2}$ तदा (for ततः).

**3** $^c$) D$_6$ ज्ञानात् (for बाल्यात्).

**4** $^a$) K$_1$ B Dn D$_{4.6}$ G$_3$ स (for च). — $^b$) T$_2$ पुत्रक (for पावकः). — $^c$) T$_1$ G$_1$ M वस्तुं (for वासं). — $^d$) T$_1$ G$_1$ बाढं; M वासं (for वस्तुं).

**5** $^a$) B$_4$ पवित्रं हि (for च यत्किंचिद्). — $^b$) B$_{1.4}$ G$_1$ द्विज- (for द्विजा). K$_4$ B$_3$ Dn D$_{4.6}$ G$_3$ द्विजानां मंत्रसंस्तु- (D$_{4.6}$ G$_3$ °स्कृ)तं. — $^c$) B$_1$ होमस्त्वग्नौ (for होष्यन्त्यग्नौ). D$_5$ तदा (for सदा). T$_1$ सर्वे (for देवि). — $^d$) K$_1$ समग्रुति; B$_2$ (m as in text) सदा हुतं; B$_4$ Dn D$_{4.6}$ G$_3$

C. 3 14519 B. 3 231. 6 K. 3 231. 6

एवमग्निस्त्वया सार्धं सदा वत्स्यति शोभने ॥ ६
मार्कण्डेय उवाच ।
एवमुक्ता ततः स्वाहा तुष्टा स्कन्देन पूजिता ।
पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ॥ ७
ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् ।
अभिगच्छ महादेवं पितरं त्रिपुरार्दनम् ॥ ८
रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया ।
हितार्थं सर्वलोकानां जातस्त्वमपराजितः ॥ ९
उमायोन्यां च रुद्रेण शुक्रं सिक्तं महात्मना ।
आस्ते गिरौ निपतितं मिञ्जिकामिञ्जिकं यतः ॥ १०
संभूतं लोहितोदे तु शुक्रशेषमवापतत् ।
सूर्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि ।
आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधापतत् ॥ ११
त एते विविधाकारा गणा ज्ञेया मनीषिभिः ।
तव पारिषदा घोरा य एते पिशिताशनाः ॥ १२
एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम् ।
अपूजयदमेयात्मा पितरं पितृवत्सलः ॥ १३
अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धनार्थिभिः ।
व्याधिप्रशमनार्थं च तेषां पूजां समाचरेत् ॥ १४
मिञ्जिकामिञ्जिकं चैव मिथुनं रुद्रसंभवम् ।
नमस्कार्यं सदैवेह बालानां हितमिच्छता ॥ १५
स्त्रियो मानुषमांसादा वृद्धिका नाम नामतः ।

---

समुद्भूतं.

**6** a) B2 होष्यंति (for दास्यन्ति). — b) D5 संवृताः; T2 सुव्रताः. K3 B4 D5 सत्पथि; G2. 4 °थ- (for °थे).

**7** a) K1. 3 Dc2 D3. 6 M2 एवमुक्त्वा. K1. 2 तदा (for ततः). — b) T1 G1 स्कंदेन तु सुपूजिता. — d) Ś1 K1. 2 भक्ता; B4 तत्र; T1 G1 ततः (for भर्त्रा).

**8** a) G4 अतो (for ततो). — b) S (except G3) अभाषत (for अथाब्रवीत्). — d) Ś1 K1. 2 G1 त्रिपुरांतकं; M1 ते महेश्वरं.

**9** a) B4 पुत्रेण (for रुद्रेण). — d) D1 G1 अपराजित.

**10** a) Ś1 K1. 2 तु (for च). — D2 om. (hapl.) from सिक्तं (in $10^{b}$) up to शुक्र (in $11^{b}$). — b) S (except G3) शुक्लं (for शुक्रं). — c) Ś1 K1–3 D3 (before corr.). 5 अस्ते; K4 B2–4 Dc Dn D3 (by corr.). 4. 6 G3 अस्मिन् (for आस्ते). — d) Cf. $15^{a}$. Ś1 K1. 2 मिंजिका(K2 °कां)-मिंजिको (Ś1 °के); K4 मज्जिकामज्जिकं; B4 मिंजिकामिंजितं; D3 मिजिकामिजिकं; T1 G1 M1 मुंजको मुंज(M1 °जि)का; T2 मिंजिरो मिंजिका; G2. 4 मुंजि(G4 मुष्टि)को मुष्टिका; M2 मुंजिको मुंजिका. K4 B1. 3 T G1. 2. 4 M1 ततः; Dc च यत्; M2 तथा (for यतः). — After 10, S (except G3) ins.:

1081* मिथुनं वै महाभाग तत्र तद्रुद्रसंभवम् ।

**11** D2 om. $11^{a}$ (cf. v.l. 10). — a) T1 G1 संभूतं. Ś1 K1 लोहितोदेति; K4 °ताहे तु; D5 °तं हेतु; T1 G1 °ते देशे; G2. 4 M °तोद्देशे (for °तोदे तु). T2 द्रुतं लोकहितोद्देशे. — b) Ś1 K1–3 D1. 3. 5 शुक्रं; T1 शुद्धं; T2 M1 शुक्ल-; G1. 2. 4 M2 शुक्लं (for शुक्र-). K1 इवापतत्; K4 अवाप्तवान्; B4 समापतत्; T1 G1. 4 M अपातयत् (for अवापतत्). B2 शुक्राशयमवाप्य तत्. — c) G4 [अ]भाव् (for [अ]न्यद्). — d) Ś1 K1. 2 चापि (for चैव). — f) Ś1 K B2. 3 Dc D1–3. 5 एतत् (for एवं). T1 G1 M2 [अ]भवत् (for [अ]पतत्).

**12** a) Ś1 K1. 2. 4 तदेते; B D (except D2. 3) तत्र ते (B1 एते हि); T2 एतेषु; G2. 4 एते तु (for त एते). — b) G4 गुह (for गणा). Ś1 मनीषिणा; B2 महर्षिभिः. — T1 G1 om. (hapl.) $12^{c}$–$14^{b}$. — c) B1 एवं (for तव). Ś1 K1–3 Dc D1. 5 T2 G4 M त एव (Ś1 भवंति; K1 भवते; K2 ततस्ते; K3 तत्र ये; Dc तवैव; D1 न चैते; D5 तवैते) पार्षदा घोरा. — d) Ś1 T2 एतेपि (for य एते). Ś1 B1–3 Dn1. n2 D1. 4. 6 पिशिताशिनः.

**14** Before 14, K2 B D (except D1. 2. 5; D3 marg. *sec. m.*) S (T1 G1 om.) ins. मार्कंडेय उ° (resp. मार्कंडेयः). — T1 G1 om. $14^{ab}$ (cf. v.l. 12). — a) K4 अर्घं° (for अर्कं°). B1 D2 च (for तु). T2 मे (for ते). — c) S (except G3) व्याधेः (for व्याधि-). D2 °र्थाय (for °र्थं च). B3 तु (for च). — d) Ś1 K Dc D1–3. 5 T2 पूजा. Ś1 K D1–3. 5 समंततः; T1 G1. 2. 4 M अथारभेत्; T2 यथार्थतः (for समा°).

**15** a) Cf. $10^{d}$. Ś1 K1 मिंजिकामिंजिकश्च (K1 °का); K3 °मिंजितं; K4 D3 मज्जिकामज्जिकं; D2 मंजिकामंजिकं; T1 G1 मुंजको मुंजका; T2 मंजको मंजका; G2. 4 M मुंजि(G4 मुष्टि-; M2 मुंज)को मुष्टि(M मुंजि)का. — d) K3 Dc D1. 5 लोकानां (for बाला°). D5 शमम् (for हितम्).

**16** b) K3 D2 विद्धिका; T G1. 2. 4 वृक्ष(T2 G2 °क्षि)का (for वृद्धिका). — c) Ś1 K1–3 Dc D2. 3. 5 नार्यो (for

वृक्षेषु जातास्ता देव्यो नमस्कार्याः प्रजार्थिभिः ॥ १६
एवमेते पिशाचानामसंख्येया गणाः स्मृताः ।
घण्टायाः सपताकायाः शृणु मे संभवं नृप ॥ १७
ऐरावतस्य घण्टे द्वे वैजयन्त्याविति श्रुते ।
गुहस्य ते स्वयं दत्ते शक्रेणानाय्य धीमता ॥ १८
एका तत्र विशाखस्य घण्टा स्कन्दस्य चापरा ।
पताका कार्तिकेयस्य विशाखस्य च लोहिता ॥ १९
यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा ।
तैरेव रमते देवो महासेनो महाबलः ॥ २०
स संवृतः पिशाचानां गणैर्देवगणैस्तथा ।
शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृतः ॥ २१
तेन वीरेण शुशुभे स शैलः शुभकाननः ।
आदित्येनेवांशुमता मन्दरश्चारुकन्दरः ॥ २२
संतानकवनैः फुल्लैः करवीरवनैरपि ।
पारिजातवनैश्चैव जपाशोकवनैस्तथा ॥ २३
कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ।
दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्वतः ॥ २४
तत्र देवगणाः सर्वे सर्वे चैव महर्षयः ।
मेघतूर्यरवाश्चैव क्षुब्धोदधिसमस्वनाः ॥ २५
तत्र दिव्याश्च गन्धर्वा नृत्यन्त्यप्सरसस्तथा ।
हृष्टानां तत्र भूतानां श्रूयते निनदो महान् ॥ २६
एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम् ।
प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात् ॥ २७ C. 3. 14541 B. 3. 231. 27 K. 3. 231. 28

इति श्रीमहाभारते आरण्यकपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

देव्यो).

**17** $^{a}$) B1. 3 Dc D4. 6 G3 M एवमेव; T G1. 2. 4 ए(T2 ते)षामेव (for एवमेते). — $^{b}$) Dn1. n3 D1. 4. 6 G3 असंख्येय-. T1 G1. 2. 4 गुणाः (for गणाः). — K3 om. (? hapl.) 17$^{c}$–18$^{d}$.

**18** K3 om. 18 (cf. v.l. 17). — $^{a}$) Ś1 K (K3 om.) D2. 3. 5 ऐरावणस्य; G2 एतावतस्य. — $^{b}$) T1 G1 स्मृते (for श्रुते). K4 D5 वैजयंत्या विनिःसृते; T2 G2. 4 वैजयंत्या विभूषिते. — $^{c}$) S (except G3) गुहाय (for गुहस्य). Ś1 K1. 2 द्वयं (for स्वयं). — $^{d}$) Dn3 D1. 6 क्रमेणा° (for शक्रेणा°). B1 [अ]प्यति-; B4 [ए]वास्य; Dn2 [अ]प्यथ; D5 [आ]नम्य (for [आ]नाय्य).

**19** $^{a}$) D2 T1 G1 तस्य (for तत्र). — $^{b}$) Ś1 शक्र° (for स्कन्द°). — $^{c}$) D1 श्वेता तु (for पताका). — $^{d}$) K3 Dc D2. 3. 5 तु (for च).

**20** $^{b}$) K4 वै सदा; D5 वै पुरा; G2. 4 तानि वै (for वै तदा). — $^{c}$) Ś1 K D2. 3. 5 सार्धं (for देवो).

**21** $^{a}$) Ś1 K3 D2. 5 सुसंवृतः; K1 स संवृत्तः; K2 D3 सुसंवृत्तः; B3 स संभृतः. — $^{b}$) B4 भृत्य° (for देव°). K4 सह; G1 तदा (for तथा). — $^{d}$) T2 G1. 2 °मानश्रि(G1 °स्त्रि)या वृतः.

**22** $^{b}$) K4 कालः; M2 गिरिः (for शैलः). — $^{c}$) Dc आदित्यस् (for °त्येन). Dc G4 M1 [ए]व (for [इ]व).

**23** Ś1 om. (hapl.) 23$^{c}$–24$^{b}$. — $^{c}$) M1 चापि (for चैव). — D1 om. (hapl.) 23$^{d}$–24$^{c}$. — $^{d}$) B3. 4 जवा° (for जपा°). Dc जराशोकवलैस्तथा.

**24** Ś1 om. 24$^{ab}$; D1 om. 24$^{abc}$ (cf. v.l. 23). — $^{a}$) K3. 4 Dc2 Dn1. n2 D3–6 °खंडै° (for °षण्डै°). — $^{b}$) Dc तथा (for अपि). — T2 om. 24$^{c}$–25$^{d}$. — $^{c}$) K4 पितृ° (for पक्षि°). T1 G1 M चापि (for चैव). B4 दिव्यपुष्पफलैश्चैव.

**25** T2 om. 25 (cf. v.l. 24). — $^{a}$) M2 चापि (for सर्वे). — $^{b}$) B1–3 Dn D4. 6 G3 सर्वे देवर्षयस्तथा. — $^{c}$) Ś1 K D2. 5 T1 G1 °रवै°; D3 °निभै° (for °रवा°). G2. 4 चापि (for चैव). — $^{d}$) Ś1 K D2. 3. 5 °निभस्वनैः; D1 °समस्वनैः.

**26** $^{a}$) Ś1 K1. 2 D1–3 G2. 4 M1 देवाः (for दिव्याः). Ś1 K1. 2 Dc D1–3. 5 स-; K3 स्स (for च). — $^{b}$) B Dn D4. 6 G3 नृत्यंते; Dc नृत्यंत (for नृत्यन्ति). T1 G1 [अ]प्सरसां गणाः; Dc [अ]प्सरसस्तदा. — $^{c}$) D3 सर्व- (for तत्र). — $^{d}$) S (except G3) शुश्रुवे (for श्रूयते).

**27** $^{b}$) D3 °संश्रितं; S (except G3) °मास्थितं. — $^{c}$) Ś1 K1. 2 प्रेक्ष्य च; K4 D2. 3. 5 प्रेक्ष्य तं; B2. 3 S (except G3) वीक्षते (for प्रे°). — $^{d}$) T1 G1. 2 M न च (M1 चा-) ग्लायत दर्शनात्.

Colophon om. in B2 Dn D4. 6 G3. — *Major parvan:* Ś1 K2 T2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B1. 3 Dc D1–3. 5 M2 (all om. sub-parvan name) mention only आंगिरस. — *Adhy. name:* T2 कुमारोत्पत्तिः; G1

# २२१

C. 3. 14541
B. 3. 231 28
K 3 232. 1

मार्कण्डेय उवाच ।

यदाभिषिक्तो भगवान्सेनापत्येन पावकिः ।
तदा संप्रस्थितः श्रीमान्हृष्टो भद्रवटं हरः ।
रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ॥ १
सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे ।
उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितः ॥ २
ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान् ।
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः ॥ ३
तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह ।
विद्युता सहितः सूर्यः सेन्द्रचापे घने यथा ॥ ४
अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह ।
आस्थाय रुचिरं याति पुष्पकं नरवाहनः ॥ ५
ऐरावतं समास्थाय शक्रश्चापि सुरैः सह ।
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् ॥ ६
जम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलंकृतः ।
यात्यमोघो महायक्षो दक्षिणं पक्षमास्थितः ॥ ७
तस्य दक्षिणतो देवा मरुतश्चित्रयोधिनः ।
गच्छन्ति वसुभिः सार्धं रुद्रैश्च सह संगताः ॥ ८
यमश्च मृत्युना सार्धं सर्वतः परिवारितः ।
घोरैर्व्याधिशतैर्याति घोररूपवपुस्तथा ॥ ९

---

कुमारचरित्रं. — *Adhy. no.* (figures, words or both): D1 233; T G1 221; G2. 4 M (M2 *inf. lin.*) 223 (M2 orig. 225). — *Śloka no.*: D1 27.

## 221

**1** a) B4 यथा (for यदा). M2 बल° (for भग°). — b) B Dc D4. 6 M1 सैनापत्येन; G2. 4 सेनापत्ये तु. — c) Ś1 T2 स (for सं-). — d) S (except G3) ततो (for हृष्टो). K4 D1–3 रुद्र°; B1 तत्र (for भद्र°). K4 नरः (m as in text); B3 तव (for हरः). — f) T2 पार्वती-. — After 1, S (except G3) ins.:

1082* अनुयातः सुरैः सर्वैः सहस्राक्षपुरोगमैः ।

**2** a) B3 Dc1 T2 तत्र (for तस्य). — b) B1 युक्ते (for युक्तं). — c) T1 G1 ततो दिव्यः; T2 रथो दिव्यं; G2 रथो दिव्यः; G4 रथः शुभ्रं (for दिवं शुभ्रं). — d) Ś1 K D1–3 सूतेन; B4 जवेन; M1 कशया (for कालेन). K2 B4 [अ]ति- (for [अ]भि-). Ś1 K1. 2 B1 Dn3 D2. 5 M -प्रचोदितं; D1. 3 -प्रणोदितं.

**3** b) Ś1 K B1 Dc D1–3. 5 °श्चराचरं. — c) T1 G1 सिंहा रथं वहंतश्च. — d) K4 D2. 3 नदंत° (for नदन्त°). D5 च सु- (for चारु-). K2. 3 B2–4 Dc D3 -केशराः.

**4** a) D5 गण° (for पशु°). — b) Ś1 K1. 2 यात्यु° (for भात्यु°). — K4 om. (hapl.) $4^{c}$–$5^{b}$. — c) Ś1 K1–3 D2. 3, 5 मंडिते; D1 मंडितः (for सहितः). Ś1 K1–3 सूर्यें. — d) D1 °चापघने; G1. 2. 4 °चापो घनो (for °चापे घने). B3 तथा (for यथा). T2 सेंद्रचापयुतो यथा.

**5** K4 om. $5^{ab}$ (cf. v.l. 4). — b) Ś1 विमानं; B1 वनेसौ (for धनेशो). — G4 om. (hapl.) $5^{c}$–$6^{b}$. — c) K4 B4 Dn D4 तु चिरं (for रु°). D4. 6 G3 यानं; T G1. 2 M2 भाति (for याति). — d) M2 नाम (for नर-).

**6** G4 om. $6^{ab}$ (cf. v.l. 5). — a) Ś1 K1. 3. 4 Dc D2. 5 ऐरावणं. B4 °रुह्य (for °स्थाय). — b) K4 स्वामिसुरैः; Dc देवगणैः (for चापि सुरैः). D1 सुरेश्वरः (for सुरैः सह).

**7** a) Ś1 जंबुकै°; K4 B2. 4 Dn जृंभकै°; T G1. 2. 4 भास्करै° (for जम्भकै°). — b) Ś1 K1 M °कृतैः; K3 Dc2 D1. 5 °कृतं (for °कृतः). — c) B1 [अ]मेयो (for [अ]मोघो). — d) Ś1 K Dc D1–3. 5 पार्श्वम् (for पक्षम्). B1 D4. 6 S आश्रितः.

**8** b) B1–3 D (except D1–3. 5) G3 बहव° (for मरुत°). — c) B2 Dc D4. 5 बहु° (for वसु°). — d) Ś1 K1–3 Dc D5 सिद्धैः (K3 Dc D5 रुद्रैः) साध्यैश्च (for रुद्रैश्च सह). G2. 4 संवृत्ताः (for °गताः).

**9** a) Ś1 K1–3 D1. 5 S (except T2 G3) तु (for च). — b) B2 बहुभिः (for सर्वतः). — c) Ś1 K1. 2 चापि; T2 युक्तो (for याति). — d) K3. 4 D1–3 T1 G1 M तदा (for तथा).

**10** a) Ś1 K2–4 D2. 3. 5 चापि; B2 याति (for चैव). — b) T °शिरसः (for °शिखरः). K3. 4 सितः; D1 T1 ततः

यमस्य पृष्ठतश्चैव घोरस्त्रिशिखरः शितः ।
विजयो नाम रुद्रस्य याति शूलः स्वलंकृतः ॥ १०
तमुग्रपाशो वरुणो भगवान्सलिलेश्वरः ।
परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ॥ ११
पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टिशः ।
गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः ॥ १२
पट्टिशं त्वन्वगाद्राजंश्छत्रं रौद्रं महाप्रभम् ।
कमण्डलुश्चाप्यनु तं महर्षिगणसंवृतः ॥ १३
तस्य दक्षिणतो भाति दण्डो गच्छञ्श्रिया वृतः ।
भृग्वङ्गिरोभिः सहितो देवैश्चाप्यभिपूजितः ॥ १४
एषां तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः ।
याति संहर्षयन्सर्वांस्तेजसा त्रिदिवौकसः ॥ १५

ऋषयश्चैव देवाश्च गन्धर्वा भुजगास्तथा ।
नद्यो नदा द्रुमाश्चैव तथैवाप्सरसां गणाः ॥ १६
नक्षत्राणि ग्रहाश्चैव देवानां शिशवश्च ये ।
स्त्रियश्च विविधाकारा यान्ति रुद्रस्य पृष्ठतः ।
सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः ॥ १७
पर्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनम् ।
छत्रं तु पाण्डुरं सोमस्तस्य मूर्धन्यधारयत् ।
चामरे चापि वायुश्च गृहीत्वाग्निश्च विष्ठितौ ॥ १८
शक्रश्च पृष्ठतस्तस्य याति राजञ्श्रिया वृतः ।
सह राजर्षिभिः सर्वैः स्तुवानो वृषकेतनम् ॥ १९
गौरी विद्याथ गान्धारी केशिनी मित्रसाह्वया ।
सावित्र्या सह सर्वास्ताः पार्वत्या यान्ति पृष्ठतः ॥ २० C 3. 14562 B 3. 231. 49 K 3. 232. 22

(for शितः). B2 घोरस्त्रिशिरसंस्थितः; B4 G2. 4 सुघोरस्त्रिशिरः स्थि(G2. 4 शि)तः; G1 सुखोपित्रयिराततः (sic). — d) Ś1 K2. 3 D5 शरो याति; T1 G1 यस्त्रिशूलः (for याति शूलः).

**11** ab) G2. 4 उग्रपाशोथ (for तमुग्रपाशो). K3. 4 Dc D1–3 S (except G3) transp. वरुणः and भगवान्. — c) T1 G1 शतै° (for शनै°). — d) B2 Dc2 बहुभि° (for विविधै°).

**12** a) Ś1 K1–3 Dc D1–3. 5 [अ]थ (for [अ]पि). — b) S (except G3) पट्टसः (for पट्टिशः). — c) MSS. °मुसुल°, °मुशल° also. — d) Ś1 K1. 2 °णैरपि; K3 Dc D1. 5 °णैर्वरैः; K4 D2 °णैर्वरः (for °णोत्तमैः). B1 वृतः सह रथोत्तमैः.

**13** a) S (except G3) पट्टसं (for पट्टिशं). Ś1 K2 G2. 4 च (for तु). B1 [अ]गमद् (for [अ]न्वगाद्). — b) K2 D1. 2 T1 G1. 2. 4 शस्त्रं; T2 वज्रं (for छत्रं). B3 रौक्मं; T G1 घोरं (for रौद्रं). — c) K4 चाप्यनुगतो; T2 G1. 2. 4 चानुययौ (for चाप्यनु तं). B1. 3m Dn D3. 4. 6 G3 °सेवितः; B2 °सेवितं (for °संवृतः).

**14** Ś1 om. (hapl.) 14ab. — a) S (except T1 G1) याति (for भाति). — b) M [ऽ]प्यत्र (for गच्छञ्). — B1 om. (? hapl.) 14c–17d. — d) B4 om. च. T1 G1 °संवृतः (for °पूजितः). B2. 3 Dn D4. 6 G3 दैवतैश्चानु(B2. 3 °भि)पूजितः.

**15** B1 om. 15 (cf. v.l. 14). — a) Ś1 K Dc D1–3. 5 तेषां (for एषां). G1. 2. 4 मध्य° (for पृष्ठ°). — c) T1 देवान्; G1 देवः (for सर्वान्). Ś1 K1. 2 सर्वे महर्षयो यांति. — d) Ś1 K1. 2 च; B4 हि (for त्रि-).

**16** B1 om. 16 (cf. v.l. 14). — a) Ś1 K1–3 च हि; K4 B (B1 om.) Dn D1–6 G3 चापि (for चैव). — b) T2 गंधर्वानुगनास्तदा. — c) Ś1 K B4 D2. 3. 5 T2 द्रुमाः; B3 Dc Dn D1. 4. 6 G3 ह्रदाः (for नदाः). Ś1 K1. 2 च नागाश्च; K3 B4 D5 T2 नगाश्चैव; K4 B1–3 Dc Dn D1–4. 6 G3 समुद्राश्च (for द्रुमाश्चैव).

**17** B1 om. 17abcd (cf. v.l. 14). D5 transp. 17 and 18. — a) B3 S (except G3) नक्षत्राणां गणाश्चैव. — b) B4 तथा (for च ये). — c) S (except G3) °श्च सर्व(M °र्वा)देवानां. — e) D4 T2 सृजंतः; G2. 4 सृजंति. — f) K1 दिव्य- (for चारु-). T1 G1 -वेगा (for -रूपा).

**18** D5 transp. 17 and 18. — b) K4 D2. 3 T G1. 2. 4 पितामहं; M महेश्वरं (for पिना°). — c) Ś1 B1–3 D (except D2. 3. 5) G1. 3 च (for तु). T G1. 2. 4 पांडरं. — d) M2 [अ]पात° (for [अ]धार°). — f) K3 समवर्तत (for [अ]ग्निश्च विष्ठितौ). K1m. 4 B2. 4 Dn D1–3. 5 धिष्ठितौ; K2 विष्टते (for विष्ठितौ).

**19** K3 om. 19ab. — ab) K2 Dc2 T2 शक्रस्य; B4 G2. 4 शक्रस्तु; M शुक्रश्च (for शक्रश्च). B1 चैव; B3 चास्य (for तस्य). D2 transp. तस्य and याति. — d) Ś1 K D1–3 संस्तुवन्; Dc T1 G4 स्तुन्वानो; D5 अस्तुवन् (for स्तुवानो). Ś1 K Dc D1–3. 5 °वाहनं (for °केतनम्).

**20** a) K1. 2 विशाखा; Dc D2 T2 विद्या च (for °थ). — b) K2 चित्रसा°; D5 तिवसा°; M1 मिश्रसा° (for मित्रसा°). — c) B3 M1 सावित्र्या (M1 °त्री-) सहिताः सर्वाः.

**21** b) T1 G1 वृताः; T2 G2. 4 स्थू°; M स्तु° (for कृ°).

C 3 14563
B. 3 231 49
K 3 232 23

तत्र विद्यागणाः सर्वे ये केचित्कविभिः कृताः ।
यस्य कुर्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे ॥ २१
स गृहीत्वा पताकां तु यात्यग्रे राक्षसो ग्रहः ।
व्यापृतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा ।
पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः ॥ २२
एभिः स सहितस्तत्र ययौ देवो यथासुखम् ।
अग्रतः पृष्ठतश्चैव न हि तस्य गतिर्ध्रुवा ॥ २३
रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम् ।
शिवमित्येव यं प्राहुरीशं रुद्रं पिनाकिनम् ।
भावैस्तु विविधाकारैः पूजयन्ति महेश्वरम् ॥ २४
देवसेनापतिस्त्वेवं देवसेनाभिरावृतः ।
अनुगच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः ॥ २५
अथाब्रवीन्महासेनं महादेवो बृहद्वचः ।
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ॥ २६

स्कन्द उवाच ।

सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो ।
यदन्यदपि मे कार्यं देव तद्वद माचिरम् ॥ २७

रुद्र उवाच ।

कार्येष्वहं त्वया पुत्र संद्रष्टव्यः सदैव हि ।
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥ २८

मार्कण्डेय उवाच ।

इत्युक्त्वा विससर्जैनं परिष्वज्य महेश्वरः ।
विसर्जिते ततः स्कन्दे बभूवौत्पातिकं महत् ।
सहसैव महाराज देवान्सर्वान्प्रमोहयत् ॥ २९
जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम् ।
चचाल व्यनदच्चोर्वी तमोभूतं जगत्प्रभो ॥ ३०

---

— After $21^{ab}$, M ins.:

1083* स्वेन स्वेनानुयोगेन सर्वे तेऽनुययुर्हरम् ।

— $G_1$ om. $21^{c}$–$22^{f}$. — $^{c}$) $K_1$ B Dn $D_{4.6}$ $G_3$ तस्य (for यस्य). — $^{d}$) $K_1$ देव्य° (for देवा°). $B_4$ च संमुखे (for चमू°).

**22** $G_1$ om. 22 (cf. v.l. 21). — $^{a}$) $B_{1-3}$ Dn $D_{4.6}$ $G_3$ गृहीत्वा तु ($B_1$ च) (for स गृहीत्वा). Ś$_1$ $K_2$ पताकायां (for °कां तु). $B_2$ Dn $D_{4.6}$ $G_3$ वै (for तु). — $^{b}$) Ś$_1$ $K_3$ यात्यंभो (for यात्यग्रे). $T_2$ $G_{2.4}$ M यात्यसौ राक्षसोग्रतः. — $K_3$ om. $22^{cdef}$. — $^{c}$) $D_1$ व्याहृतश्च; $D_2$ आमृतश्च; $D_3$ आवृत्तश्च; $D_5$ व्यावृतस्; T $G_{2.4}$ क्रीडितस् (for व्यापृतस्). $D_{1-3}$ च (for तु). — $^{e}$) $T_2$ $M_1$ रक्षेंद्रो (for य°).

**23** $^{a}$) $G_1$ स एभिः (by transp.). $B_{1.2}$ Dn $D_{4.6}$ $G_3$ च; $B_4$ Dc तु (for स). $B_2$ Dn $D_{4.6}$ $G_3$ देवः (for तत्र). — $^{b}$) Ś$_1$ $K_{1.2}$ B याति देवो; Dn $D_{4.6}$ $G_3$ तत्र याति (for ययौ देवो).

**24** $^{a}$) $G_{2.4}$ नित्यं (for रुद्रं). Ś$_1$ K Dc $D_{1-3.5}$ रुद्रं स्व($D_1$ सत्)कर्मभिर्विप्राः. — $^{b}$) $M_1$ सनातनं (for [इ]ह दैवतम्). — $^{c}$) $K_4$ $D_{2.3}$ शिव (for शिवम्). $D_1$ अस्त्विति (for इत्येव). — $^{d}$) $T_1$ $G_1$ अत्र रुद्रं; $T_2$ $G_{2.4}$ रुद्रं चैव; M अग्निरूपं (for ईशं रुद्रं). $B_2$ $Dn_1$. $n_3$ $D_{4.6}$ $G_3$ पितामहं (for पिना°). — After $24^{cd}$, S (except $G_3$) ins.:

1084* एवं सर्वे सुरगणास्तदा वै प्रीतमानसाः ।

**25** $^{a}$) Ś$_1$ चैव; $T_2$ $G_4$ त्वेव (for त्वेवं). — $^{b}$) $B_4$ -रक्षितः (for आवृतः). — $^{d}$) Dc $T_1$ ब्राह्मणाः ($T_1$ ब्रह्मण्यं) कृत्तिकासुतं.

**26** $^{ab}$) Ś$_1$ $K_{1.2}$ $T_1$ $G_{1.2.4}$ transp. °सेनं and °देवो. $K_2$ [अ]ब्रवीद्वचः; $B_1$ बृहद्धनुः; $D_1$ वृतो गणैः; $T_1$ $G_{1.2.4}$ महद्वचः (for बृहद्वचः). $T_2$ महातेजा वृषध्वजः (for $^{b}$). — $^{c}$) = $27^{a}$. $K_1$ मरुतं; $K_3$ $Dc_2$ मारुतं; $K_4$ मरुतः; $G_4$ मरुत- (for मारुत-). — Dc om. (hapl.) $26^{d}$–$27^{a}$. — $^{d}$) $D_1$ $G_4$ रक्षन्नित्यम्. Ś$_1$ अरिंदम; $M_2$ अतंद्रितं.

**27** Dc om. $27^{a}$ with the ref. (cf. v.l. 26). — $^{a}$) = $26^{c}$. $K_1$ मरुतं; $K_4$ मारुतं; $G_4$ मरुत- (for मारुत-). $K_2$ $B_{2.3}$ -स्कंदं. — $^{b}$) $B_4$ $D_2$ विभो (for प्रभो).

**28** Ś$_1$ $K_{1.3.4}$ $D_{2.5}$ महेश्वरः; $K_2$ $D_{1.3}$ $T_2$ M महादेवः; $T_1$ $G_1$ देवः (for रुद्रः). — $^{a}$) $B_4$ कार्ये त्वहं. — $^{b}$) Ś$_1$ K $D_{2.3}$ $M_2$ संप्रष्टव्यः; $D_5$ संप्रहृष्टः; $G_4$ संदिष्टव्यः. — $^{c}$) $G_{2.4}$ मद्भक्त्या (for भक्त्या च). — After 28, Dc ins. an addl. colophon.

**29** After $29^{ab}$, S (except $G_3$) ins.:

1085* स्कन्दं सहोमया प्रीतो ज्वलन्तमिव तेजसा ।

— $^{c}$) $K_1$ तदा (for ततः). — $^{d}$) $K_3$ $D_{1.2}$ G बभूवोत्पा°; $T_2$ बहु चोत्पा° (for बभूवौत्पा°). — $^{f}$) Ś$_1$ $K_{3.4}$ Dc $D_{1.3.5}$ देवान्सेंद्रान्; $K_{1.2}$ देवाः सेंद्राः; $B_4$ सर्वान्देवान् (by transp.); $D_2$ सेंद्रान्देवान्. Ś$_1$ $K_{1.2}$ अमोह°; $B_4$ विमोह°; $D_2$ व्यमोह° (for प्रमोह°).

**30** $^{b}$) $G_{2.4}$ $M_2$ संमूढं (for प्र°). — $^{c}$) $B_4$ चान°; $G_2$ विन° (for व्यन°). — $^{d}$) B Dn $D_{4.6}$ $G_3$ $M_2$ बभौ

ततस्तद्दारुणं दृष्ट्वा क्षुभितः शंकरस्तदा ।
उमा चैव महाभागा देवाश्च समहर्षयः ॥ ३१
ततस्तेषु प्रमूढेषु पर्वताम्बुदसंनिभम् ।
नानाप्रहरणं घोरमदृश्यत महद्बलम् ॥ ३२
तद्धि घोरमसंख्येयं गर्जच्च विविधा गिरः ।
अभ्यद्रवद्रणे देवान्भगवन्तं च शंकरम् ॥ ३३
तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः ।
पर्वताश्च शतघ्न्यश्च प्रासाश्च परिघा गदाः ॥ ३४
निपतद्भिश्च तैर्घोरैर्देवानीकं महायुधैः ।
क्षणेन व्यद्रवत्सर्वं विमुखं चाप्यदृश्यत ॥ ३५
निकृत्तयोधनागाश्वं कृत्तायुधमहारथम् ।
दानवैरर्दितं सैन्यं देवानां विमुखं बभौ ॥ ३६
असुरैर्वध्यमानं तत्पावकैरिव काननम् ।
अपतद्दग्धभूयिष्ठं महाद्रुमवनं यथा ॥ ३७
ते विभिन्नशिरोदेहाः प्राद्रवन्त दिवौकसः ।
न नाथमध्यगच्छन्त वध्यमाना महारणे ॥ ३८
अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरंदरः ।
आश्वासयन्नुवाचेदं बलवद्दानवार्दितम् ॥ ३९
भयं त्यजत भद्रं वः शूराः शस्त्राणि गृह्णत ।
कुरुध्वं विक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत् ॥ ४०
जयतैनान्सुदुर्वृत्तान्दानवान्घोरदर्शनान् ।
अभिद्रवत भद्रं वो मया सह महासुरान् ॥ ४१
शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः ।
दानवान्प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयम् ॥ ४२ C. 3. 14356 B. 3. 231. 72 K. 3. 232. 46

---

(for प्रभो).

**31** $^a$) Dc $T_1$ तं; $D_5$ च (for तद्). $T_2$ स्कंदाननं (for तद्दारुणं). — $^c$) T $G_{2.4}$ M चापि; $G_1$ चाथ (for चैव). $D_2$ $G_2$ °भाग (for °भागा). — $^d$) Ś$_1$ $K_1$ चैव (for च स-). S (except $G_3$) देवाश्चर्षिगणैः सह.

**32** $^c$) $T_1$ $G_{1.2.4}$ रौद्रम् (for घोरम्). — $^d$) $D_2$ बृह° (for मह°).

**33** $^a$) $K_1$ $B_4$ Dn $D_{4.6}$ $G_3$ वै (for हि). Ś$_1$ घोरतरं संख्ये (for °मसंख्येयं). — $^b$) $B_1$ जगर्ज; T $G_{1.2.4}$ गर्जतं (for गर्जच्च). — $^c$) $D_2$ परे (for रणे). — $^d$) $D_3$ महेश्वरं (for च शं°).

**34** $^a$) = $44^a$. $K_2$ ते; $D_5$ तद् (for तैर्). $T_2$ [अ]नेकानि. — $^c$) $G_{1.4}$ शतघ्नीश्च. — $^d$) $B_3$ $D_6$ पाशाः (for प्रासाः). K $B_4$ Dc $D_{2.3.5}$ स-; Dn $D_{1.4.6}$ $G_3$ [अ]सि- (for च). Ś$_1$ $K_4$ तथा (for गदाः).

**35** $^a$) Ś$_1$ K $D_{1-3.5}$ विनदद्भिः; $B_1$ निपतंति (for निपतद्भिः). Ś$_1$ महा-; $K_{1.2}$ सदा; $K_3$ Dc $D_{1.3.5}$ तथा; $K_4$ $D_2$ तदा; $B_1$ स्म तैर्; $B_4$ ततो; S (except $G_3$) तु तैर् (for च तैर्). — $^b$) Ś$_1$ महा°; $K_1$ देव्या°; $K_2$ सहा° (for देवा°). $K_3$ अथा°; $B_1$ महामृधे; $D_5$ तथायुधैः. — $^c$) $K_2$ क्षीणेन. Ś$_1$ $K_2$ तद्बलं; $B_4$ T [अ]भ्यद्रवत्; $D_3$ व्यधमत् (for व्यद्रवत्). — $^d$) $B_2$ $T_1$ $G_{1.2.4}$ $M_2$ वि- (for [अ]पि). $T_2$ °खं चैव दृश्यते.

**36** $D_5$ om. 36–38. — $^a$) $T_1$ $G_1$ निर्ययौ; $T_2$ $M_1$ निवृत्त-; $G_4$ विकृत्त- (for निकृत्त-). Dc $T_2$ °नागाश्च; $G_{2.4}$ °नागं च (for °नागाश्वं). — $^b$) $T_1$ $G_1$ कृतवर्मायुधं महद्. — $^c$) $K_1$ अर्पितं (for अर्दितं). — $^d$) $T_1$ $G_1$ ययौ (for बभौ). $B_4$ देवानां च बभौ रणे.

**37** $D_5$ om. 37 (cf. v.l. 36). — $^a$) $K_{1.2}$ बाध्य°; $B_4$ भक्ष्यमाणं; $D_2$ विध्य°; S (except $T_2$ $G_3$) धक्ष्यमाणं (for वध्य°). $D_{2.3}$ S (except $G_3$) तु (for तत्). — $^c$) T $G_{1.2.4}$ अभव° (for अपत°).

**38** $D_5$ om. 38 (cf. v.l. 36). — $^a$) $K_2$ तेन भिन्न°; $K_3$ तेस्थिभिन्न°; $K_4$ $D_{1-3}$ ते भिन्नास्थि°; Dc ते छिन्नास्थि° (for ते विभिन्न°). — $^b$) Ś$_1$ $K_2$ प्रच्यवंति; $K_{1.3.4}$ Dc $D_{1-3}$ $T_2$ प्राद्रवंत; $B_{1-3}$ Dn प्राद्रवंतो; $B_4$ $D_{4.6}$ $G_3$ M प्रच्यवंतो. — $^c$) $K_3$ B Dn $D_{3.4.6}$ $G_3$ अधिगच्छंति; $T_1$ $G_{1.2.4}$ $M_2$ अभ्यगच्छंत. — $^d$) $M_2$ °बैलः (for °रणे).

**39** $^{ab}$) $D_2$ अनयद्; $D_5$ असकृद्; $T_1$ $G_1$ अथ तं (for अथ तद्). S (except $G_3$) transp. सैन्यं and दृष्ट्वा. $D_5$ [ए]व च (for देवः). — $^d$) $B_{1-3}$ Dc Dn $D_{1.4.6}$ $G_3$ बलभिद्; $B_4$ $D_{2.3}$ $T_2$ $G_2$ M बलं तद् (for बलवद्).

**40** $^b$) Ś$_1$ $K_2$ $D_1$ शरान्; Dc सुराः; $T_1$ $G_1$ स्थिराः (for शूराः). $D_1$ बिभ्रत (for गृह्णत). — $^d$) $D_5$ om. $40^d$. Ś$_1$ K $D_{1.2}$ मा च; Dc नात्र (for मा वः). Ś$_1$ $K_{2-4}$ Dc $D_3$ (before corr.) व्यथास्तु वः; $D_2$ व्यथां कुरु (for व्यथा भवेत्).

**41** $^a$) Dc $D_{1-3.5}$ [ए]तान् (for [ए]नान्). $D_5$ om. from सुदुर्वृत्तान् up to मया सह. S (except $G_3$) दुराधर्षान् (for सुदुर्वृत्तान्).

**42** Before 42, T $G_{1.2.4}$ ins. मार्कंडेयः. — $^c$) Dc °विध्यंत (for °युध्यन्त). $T_2$ प्रत्ययुध्यंत देवा वै.

C 3 14566 B 3 231 72 K 3 232 47 ततस्ते त्रिदशाः सर्वे मरुतश्च महाबलाः ।
प्रत्युद्ययुर्महावेगाः साध्याश्च वसुभिः सह ॥ ४३
तैर्विसृष्टान्यनीकेषु क्रुद्धैः शस्त्राणि संयुगे ।
शराश्च दैत्यकायेषु पिबन्ति स्मासृगुल्बणम् ॥ ४४
तेषां देहान्विनिर्भिद्य शरास्ते निशितास्तदा ।
निष्पतन्तो *अदृश्यन्त नगेभ्य इव पन्नगाः ॥ ४५
तानि दैत्यशरीराणि निर्भिन्नानि स्म सायकैः ।
अपतन्भूतले राजंश्छिन्नाभ्राणीव सर्वशः ॥ ४६
ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि ।
त्रासितं विविधैर्बाणैः कृतं चैव पराङ्मुखम् ॥ ४७
अथोत्क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः ।
संहतानि च तूर्याणि तदा सर्वाण्यनेकशः ॥ ४८
एवमन्योन्यसंयुक्तं युद्धमासीत्सुदारुणम् ।
देवानां दानवानां च मांसशोणितकर्दमम् ॥ ४९
अनयो देवलोकस्य सहसैव व्यदृश्यत ।
तथा हि दानवा घोरा विनिघ्नन्ति दिवौकसः ॥ ५०
ततस्तूर्यप्रणादाश्च भेरीणां च महास्वनाः ।
बभूवुर्दानवेन्द्राणां सिंहनादाश्च दारुणाः ॥ ५१
अथ दैत्यबलाद्घोरान्निष्पपात महाबलः ।
दानवो महिषो नाम प्रगृह्य विपुलं गिरिम् ॥ ५२
ते तं घनैरिवादित्यं दृष्ट्वा संपरिवारितम् ।
समुद्यतगिरिं राजन्व्यद्रवन्त दिवौकसः ॥ ५३

---

**43** $D_5$ om. 43. — $^{a}$) $T_1$ $G_1$ ते ततस् (by transp.). $T_2$ $G_{2.4}$ तु; $M_1$ तान्; $M_2$ तत् (for ते). — $^{b}$) $D_2$ °रथाः (for °बलाः). — $^{c}$) B Dn $D_{4.6}$ $G_3$ °भागाः; $T_2$ °सेनाः (for °वेगाः).

**44** $^{a}$) =34$^{a}$. $Ś_1$ [अ]नेकानि (for [अ]नीकेषु). — $^{b}$) $K_4$ क्रुद्धाः शस्त्रेण सं°. — $^{c}$) $B_{1-3}$ $D_{4.6}$ $G_3$ गजा° (for शरा°). $Ś_1$ K $B_1$ Dc $D_{1-3.5}$ °कायेभ्यः (for °कायेषु). $B_4$ दैत्याश्च नागकायेभ्यः; $T_1$ $G_{1.2.4}$ M तदा दैतेयकायेषु; $T_2$ दैतेयगजकायेषु. — $^{d}$) $Ś_1$ $K_1$ (*sup. lin.* as in text). $_2$ स्रवंति (for पिबन्ति). B Dn $D_{4.6}$ $G_3$ रुधिरं बहु (for स्मासृगुल्बणम्). $D_5$ पिबंतस्त्वसृगु°.

**45** $^{a}$) $K_3$ देहाद्; $B_{2-4}$ $Dn_2$ $D_{4.6}$ $G_3$ देहं (for देहान्). $G_4$ तु (for वि-). — $^{b}$) $B_4$ विविशु° (for निशिता°). — $^{c}$) $B_{1.2}$ Dn $D_{4-6}$ $T_2$ $G_3$ निप° (for निष्प°). To avoid hiatus, $Ś_1$ $K_{1.2}$ $B_{1.3.4}$ ह्यद°; $B_2$ Dn $D_{4.5}$ T $G_3$ $M_1$ [ऽ]भ्यद°; $D_6$ $G_{2.4}$ व्यद°; $G_1$ $M_2$ [ऽ]प्यद° (for *अद°). $K_{3.4}$ Dc $D_{1-3}$ निष्प($K_3$ निप)तंतः प्रद°. — $^{d}$) $Ś_1$ नागेभ्य; Dc नगेंद्र (for नगेभ्य).

. **46** $^{b}$) $B_3$ विभिन्नानि (for निर्भि°). $Ś_1$ $K_2$ विनिर्भिन्नानि सायकैः. — $^{c}$) $K_3$ $B_{1.4}$ Dc $D_{1.5}$ S (except $G_3$) न्यप° (for अप°). — $^{d}$) $Ś_1$ भिन्ना° (for छिन्ना°). $Ś_1$ $K_1$ $M_2$ सर्वतः (for °शः).

**47** $^{a}$) $M_2$ तु (for तद्). — $^{b}$) $D_5$ भुवि (for युधि).

**48** $^{a}$) $D_6$ $G_3$ तथा; $G_4$ तत्र (for अथ). $B_1$ [आ]क्रुष्टं; $G_{2.4}$ $M_1$ [उ]द्घुष्टं (for [उ]त्क्रुष्टं). $B_1$ तथा (for तदा). $B_3$ क्रुष्टैः; Dc $D_2$ क्रुष्टैः; $T_1$ $G_{1.2.4}$ देवैः (for हृष्टैः). $Ś_1$ अथोत्क्रुष्टतमा हृष्टाः. — $^{b}$) $T_1$ $G_{1.2.4}$ हृष्टैः सर्वैर् (for सर्वैर्देवैर्). K $D_{1-3.5}$ मुदा युतैः (for उदायुधैः). $Ś_1$ सर्वे देवा मुदा युताः; $B_4$ सर्वैर्देवगणैर्युधि. — $^{c}$) $Ś_1$ $K_{1.2}$ $Dc_1$ संहितानि; $B_1$ संभ्रू°; $Dc_2$ सहस्राणि (for संहतानि). $Ś_1$ K Dc $D_{1.2.5}$ सर्वा° (for तूर्या°). — $^{d}$) $B_4$ $G_4$ [अ]शेषतः (for [अ]नेकशः). $Ś_1$ K Dc $D_{1-3.5}$ तदा ($Ś_1$ $K_{1.2}$ ततस्) तूर्या($D_3$ सर्वा)ण्यवादयन्; $B_{1-3}$ Dn $D_{4.6}$ $G_3$ प्रावाद्यंत ह्यनेकशः.

**49** $^{a}$) $Ś_1$ $K_3$ $B_3$ Dc $Dn_1$. $n_2$ $D_{3.4.6}$ $G_3$ °संसक्तं; $B_{1.2}$ °सक्तं तद् (for °संयुक्तं). — $^{d}$) $K_1$ °कर्दमी (*sup. lin.* as in text); $D_1$ °कर्दमैः; $T_2$ °दूषितं.

**50** $^{a}$) $Ś_1$ सर्वस्य; $K_2$ B $D_2$ $G_{1.4}$ M अनयोर्; $K_4$ अजयो; $D_1$ अजेयो; $G_2$ अभ्रयो (for अनयो). — $^{b}$) B Dn $D_{4.6}$ $G_3$ [अ]भ्यदृ° (for व्यदृ°). — $D_1$ om. 50$^{cd}$. — $^{c}$) $K_4$ $D_{2.3}$ तथैव; $T_2$ तदापि; $G_1$ तदा हि; M ततोथ (for तथा हि). $B_2$ दानवान्घोरान्. — $^{d}$) $Dn_1$. $n_2$ $T_2$ $G_{1.2.4}$ $M_1$ वि($G_{2.4}$ $M_1$ व्य)निघ्नंस्त्रिदिवौकसः.

**51** $T_2$ om. (hapl.) 51–53. — $^{a}$) $Dc_2$ तत्र; $D_1$ तथा (for ततस्). — $^{b}$) $K_2$ वीराणां (for भेरीणां). $K_1$ °स्वनः (for °स्वनाः). — $^{d}$) $G_{2.4}$ °नादश्च दारुणः.

**52** $T_2$ om. 52 (cf. v.l. 51). — $^{b}$) $K_{3.4}$ निपपात.

**53** $T_2$ om. 53 (cf. v.l. 51). — $^{a}$) $B_4$ वृतं; Dc तं ते (by transp.); $D_2$ ततो. $Ś_1$ गणै° (for घनै°). — $^{b}$) $K_{1.2}$ °वर्तितं (for °वारितम्). — $^{c}$) $Ś_1$ समुद्धत°; $K_4$ समुद्यम्य गिरीन्; Dn $D_5$ तमुद्यतगिरिं. — $^{d}$) $K_2$ $D_5$ प्राद्रवंत; $T_1$ $G_{1.2.4}$ विद्रवंति. $B_2$ $M_2$ दिशो दश (for दिवौ°).

**54** $^{a}$) M तदा° (for अथा°). — After 54$^{ab}$, S (except $G_3$) ins.:

अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिम् ।
पतता तेन गिरिणा देवसैन्यस्य पार्थिव ।
भीमरूपेण निहतमयुतं प्रापतद्भुवि ॥ ५४
अथ तैर्दानवैः सार्धं महिषस्त्रासयन्सुरान् ।
अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव ॥ ५५
तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः ।
व्यद्रवन्त रणे भीता विशीर्णायुधकेतनाः ॥ ५६
ततः स महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ ।
अभिद्रुत्य च जग्राह रुद्रस्य रथकूबरम् ॥ ५७
यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः ।
रेसतू रोदसी गाढं मुमुहुश्च महर्षयः ॥ ५८
व्यनदंश्च महाकाया दैत्या जलधरोपमाः ।
आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ॥ ५९
तथाभूते तु भगवान्नावधीन्महिषं रणे ।
सस्मार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ॥ ६०
महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस्य नानदत् ।
देवान्संत्रासयंश्चापि दैत्यांश्चापि प्रहर्षयन् ॥ ६१
ततस्तस्मिन्भये घोरे देवानां समुपस्थिते ।
आजगाम महासेनः क्रोधात्सूर्य इव ज्वलन् ॥ ६२
लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः ।
लोहितास्यो महाबाहुर्हिरण्यकवचः प्रभुः ॥ ६३
रथमादित्यसंकाशमास्थितः कनकप्रभम् ।
तं दृष्ट्वा दैत्यसेना सा व्यद्रवत्सहसा रणे ॥ ६४
स चापि तां प्रज्वलितां महिषस्य विदारिणीम् । C 3 14609 B. 3 231. 95 K. 3 232. 71

---

1086* महाकायं महाराज सतोयमिव तोयदम् ।
— $^{c}$) Ś$_1$ K$_3$ पपाता (sic): K$_2$ पतिना (for पतता). B$_4$ गिरिणा तेन (by transp.). — $^{d}$) Ś$_1$ K$_{1.2}$ देवसैन्यानि; Dc$_2$ °सैन्यं च. Ś$_1$ K B$_2$ Dc D$_{1-3.5}$ भारत (for पार्थिव). — $^{f}$) G$_2$ पातयद् (for प्रापतद्). S (except G$_3$) युधि (for भुवि).

**56** $^{a}$) T$_1$ G$_1$ सहसा (for महिषं). — $^{d}$) K$_4$ B Dn D$_{4.6}$ T$_1$ G$_{1.3}$ M$_1$ विकीर्णा°.

**57** $^{a}$) K$_3$ क्षुद्रस् (for क्रुद्धस्). — $^{b}$) K$_1$ भद्र° (m रुद्र° as in text). — $^{c}$) K$_{2.3}$ Dc D$_{1.2.5}$ T$_2$ G$_{1.4}$ M °सृत्य (for °द्रुत्य). Ś$_1$ K$_{2.3}$ Dc D$_{1-3.5}$ M$_2$ स (for च). — $^{d}$) S (except G$_3$) स रुद्र- (for रुद्रस्य).

**58** $^{a}$) D$_2$ क्षुद्रो (for क्रुद्धो). — $^{b}$) Ś$_1$ स तथा; T$_1$ G$_{1.4}$ स तदा; G$_2$ तरसा (for सहसा). — $^{c}$) K$_{3.4}$ D$_5$ त्रेसतू; B$_2$ रेजतू; D$_{1.2}$ ररास; T$_1$ G$_1$ रसेते; T$_2$ G$_{2.4}$ M$_2$ रसतो; M$_1$ त्रसतो (for रेसतू). Ś$_1$ K Dc D$_{1-3.5}$ तूर्णं (for गाढं). — $^{d}$) Dc D$_5$ तदर्षयः; T$_2$ M [ऋ]षयस्तदा (M$_2$ °था) (for मह°).

**59** $^{a}$) K$_2$ विनदंश्च; K$_4$ B$_{1-3}$ Dn D$_{4.6}$ G$_3$ अन°; Dc व्यनदच्च. — $^{c}$) T$_1$ निश्चयं; G$_{1.2.4}$ निश्चयस् (for निश्चितं). — $^{d}$) T$_1$ G$_1$ जयमस्माकमित्युत.

**60** $^{a}$) Ś$_1$ K$_{1.2}$ त(K$_2$ य)थाभूतं च; K$_3$ Dc D$_{1.2}$ (before corr.) T$_2$ तथाभूतेषु; B$_4$ °तेपि; T$_1$ °तेन; G$_1$ °ते च; M$_2$ °तेथ (for °ते तु). — After 60$^{a}$, T$_1$ G$_1$ M ins.:

1087* आहूय गुहमात्मजम् ।
उवाच सस्मितं देवो विवित्सुः पुत्रविक्रमम् ।
दौरात्म्यं पश्य पुत्र त्वं दानवस्य दुरात्मनः ।
जहि शीघ्रं दुराचारं द्रष्टुमिच्छामि ते बलम् ।
इत्युक्त्वा भगवान्स्कन्दं परिष्वज्य महेश्वरः ।
अयोजयन्निग्रहार्थं महिषस्य गतायुषः ।
तथाभूते तु भगवान्.

[T$_1$ om. lines 4–7; G$_1$ om. posterior half of line 3.] — T$_1$ M$_1$ om. 60$^{bcd}$; G$_1$ om. 60$^{bc}$. — $^{b}$) B Dn D$_{4.6}$ अहनन्; T$_2$ G$_{2.4}$ आगतं; M$_2$ आहतं (for नावधीन्). — $^{c}$) Ś$_1$ K$_{2.4}$ स (for च). B$_2$ रणे (for तदा). — $^{d}$) G$_1$ दानवस्य (for मृत्युं तस्य). D$_1$ °सदं (for °त्मनः).

**61** $^{a}$) T$_1$ [ऽ]भि-; G$_1$ वि-; G$_{2.4}$ M$_2$ हि (for ऽपि). D$_5$ सृष्ट्वा; M$_1$ स्पृ° (for दृ°). — $^{b}$) K$_3$ B$_{2.4}$ Dn D$_{4.6}$ G$_3$ रौद्रो (for रौद्रं). B Dn D$_{1.4.6}$ G$_3$ M चानदत् (for ना°). Ś$_1$ K$_{1.2}$ रौद्रं सोप्यन्वनादयत्; Dc रौद्रं रुद्रमचोदयत्. — $^{c}$) D$_5$ च त्रास°; M$_2$ संताप° (for संत्रास°). — $^{d}$) K$_3$ [अ]ति (for [अ]पि). Ś$_1$ K$_2$ दैत्यांश्च प्रत्य(Ś$_1$ °ति)हर्षयन्; S (except G$_3$) दानवांश्च प्रह°.

**62** $^{a}$) D$_1$ तस्मिंस्तदा (for ततस्तस्मिन्). D$_2$ रथे; T$_2$ क्षये (for भये). — $^{c}$) T$_1$ G$_1$ °तेजाः (for °सेनः). — $^{d}$) K$_4$ क्रुद्धः (for क्रोधात्). G$_{2.4}$ इवोज्वलन् (for इव ज्वलन्).

**63** $^{a}$) = (var.) 3. 218. 2$^{a}$. K$_3$ °संभूतो (for °संवीतो). — $^{c}$) Ś$_1$ K Dc D$_5$ लोहिताक्षो; B Dn D$_{1.4.6}$ G$_3$ °क्षो (for °स्यो). — $^{d}$) K$_3$ B$_4$ D$_{1.5}$ T$_2$ G$_{2.4}$ °कवचस्रजः; B$_2$ °कवचावृतः; T$_1$ G$_1$ °कवचोज्वलः; M °कवचायुधः.

**64** $^{b}$) B$_{1.2}$ T$_1$ G$_1$ M$_2$ °प्रभः (for °प्रभम्). — $^{c}$) M$_2$ देव° (for दैत्य°). — $^{d}$) Ś$_1$ सहसा व्यद्रवद् (by transp.).

C 3. 14609
B 3. 231. 95
K 3. 232. 71

मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ॥ ६५
सा मुक्ताभ्यहनच्छक्तिर्महिषस्य शिरो महत् ।
पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ॥ ६६
क्षिप्ताक्षिप्ता तु सा शक्तिर्हत्वा शत्रून्सहस्रशः ।
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः ॥ ६७
प्रायः शरैर्विनिहता महासेनेन धीमता ।
शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः ।
स्कन्दस्य पार्षदैर्हत्वा भक्षिताः शतसंघशः ॥ ६८
दानवान्भक्षयन्तस्ते प्रपिबन्तश्च शोणितम् ।
क्षणान्निर्दानवं सर्वमकार्षुर्भृशहर्षिताः ॥ ६९
तमांसीव यथा सूर्यो वृक्षानग्निर्घनान्खगः ।
तथा स्कन्दोऽजयच्छत्रून्स्वेन वीर्येण कीर्तिमान् ॥ ७०
संपूज्यमानस्त्रिदशैरभिवाद्य महेश्वरम् ।
शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान् ॥ ७१
नष्टशत्रुर्यदा स्कन्दः प्रयातश्च महेश्वरम् ।
अथाब्रवीन्महासेनं परिष्वज्य पुरंदरः ॥ ७२
ब्रह्मदत्तवरः स्कन्द त्वयायं महिषो हतः ।
देवास्तृणमया यस्य बभूवुर्जयतां वर ।
सोऽयं त्वया महाबाहो शमितो देवकण्टकः ॥ ७३
शतं महिषतुल्यानां दानवानां त्वया रणे ।
निहतं देवशत्रूणां यैर्वयं पूर्वतापिताः ॥ ७४
तावकैर्भक्षिताश्चान्ये दानवाः शतसंघशः ।

---

**65** $^a$) $K_4$ चामितां; $T_1$ चान्वितां (for चापि तां). — $^b$) $K_3$ $B_{1. 2. 4}$ Dc Dn $D_{4. 6}$ $G_2$ विदारणीं; $K_4$ $D_{2. 3}$ $T_1$ $G_1$ विदारणे.

**66** $^a$) $K_2$ [अ]भिहनत्; $K_3$ $D_{1. 5}$ ऽव्यहरत्; $B_2$ [अ]भ्यद्रवत्; $B_4$ चाभिहनत्; Dn $D_{2-4. 6}$ $G_3$ [अ]भ्यहरत्; $T_1$ ह्यहनत्; $G_2$ ह्यछिनत्; $G_4$ ह्यभिनत्; $M_2$ ह्यहरत् (for [अ]भ्यहनत्). $B_{2. 3}$ Dn $D_{3. 4. 6}$ $G_3$ तस्य (for शक्तिर्). — $^b$) Dc [ऽ]हरत् (for महत्). — $^c$) $D_{4. 6}$ $G_3$ भिन्नः (for भिन्ने). — After 66, $K_2$ B D (except $D_{1-3}$) $G_3$ ins.:

1088* पतता शिरसा तेन द्वारं षोडशयोजनम् ।
पर्वताभेन पिहितं तदगम्यं ततोऽभवत् ।
उत्तराः कुरवस्तेन गच्छन्त्यद्य यथासुखम् ।

[(L. 1) $B_4$ पपात (for पतता). $D_5$ तद्दश° (for षोडश°). — (L. 2) $B_2$ पतता तेन (for पर्वताभेन). Dc महत् (for ऽभवत्). — (L. 3) $D_5$ [इ]ति (for [अ]द्य).]

**67** $^a$) $G_1$ क्षिप्ता तेन (for क्षिप्ताक्षिप्ता). Dc च (for तु).

**68** $^a$) $Ś_1$ $K_{2. 3}$ $B_1$ Dc $D_{2. 3. 5}$ शूरैर् (for शरैर्). $Ś_1$ K $B_1$ Dc $D_3$ °हतैर् (for °हता). S (except $G_3$) प्रायो हतेषु शूरेषु. — After 68$^{ab}$, S (except $G_3$) ins.:

1089* दानवेषु महाराज तस्मिन्देवासुरे युधि ।

— $^c$) $Ś_1$ $K_{1. 2}$ T $G_{1. 2. 4}$ M तेषां ($M_1$ येन्ये) (for शेषा). — $^d$) $T_1$ $G_1$ जितास् (for भीतास्). $Ś_1$ $D_5$ तत्र (for त्रस्ता). $Ś_1$ $K_{1-3}$ $D_{1-3. 5}$ °सदाः (for °सदैः). — $^e$) $K_4$ B D (except $D_{2. 3}$) $T_1$ $G_3$ स्कंदपारिषदैर्. S (except $G_3$) घोरैर् (for हत्वा). — $^f$) $B_{1-3}$ Dn $D_{4. 6}$ $G_3$ च सहस्रशः (for शत°).

**69** $G_1$ om. 69$^b$–71$^a$. — $^b$) $B_1$ $T_1$ पिबंतश्चैव; Dc पिबंतश्चापि; $D_3$ $M_2$ प्रपिबंति स्म (for प्रपिबन्तश्च). — $^c$) $K_4$ $D_{2. 3}$ सैन्यम् (for सर्वम्). $B_1$ °र्दानवान्सर्वान्. — $^d$) $K_3$ $B_2$ Dc °दुःखिताः (for °हर्षिताः).

**70** $G_1$ om. 70 (cf. v.l. 69). — $^b$) $K_1$ गणान्; $D_5$ घनं (for घनान्). $Ś_1$ वृक्षसंघान्हुताशनः. — $^c$) $D_2$ सैन्यं (for शत्रून्). — $^d$) $B_1$ तेन (for स्वेन). $G_4$ सैन्येन (for वीर्येण). $Dc_2$ वीर्यवान्; T $G_{2. 4}$ शक्तिमान् (for कीर्ति°). $B_4$ स्वेनानीकेन वीर्यवान्.

**71** $G_1$ om. 71$^a$ (cf. v.l. 69). — $^b$) S (except $G_3$) अभिपूज्य (for °वाद्य). $T_1$ $G_1$ च शंकरं (for महे°). — $Ś_1$ $K_{1. 2}$ om. (hapl.) 71$^c$–72$^b$.

**72** $Ś_1$ $K_{1. 2}$ om. 72$^{ab}$ (cf. v.l. 71). — $^b$) $B_2$ Dn $D_{1. 4. 6}$ $G_3$ तु (for च). $B_{1. 3. 4}$ $D_5$ $T_1$ $M_1$ °श्वरः (for °श्वरम्). — $^c$) $K_1$ $B_{1-3}$ Dn $D_{4. 6}$ $G_3$ तदा° (for अथा°). — $^d$) $D_5$ °पूज्य (for °ष्वज्य).

**73** $^a$) $K_{3. 4}$ $B_3$ $D_1$ $T_2$ $G_{1. 2. 4}$ M °वर (for °वरः). — After 73$^{ab}$, S (except $G_3$) ins.:

1090* अजय्यो युधि देवानां दानवः सुमहाबलः ।

— $^c$) $B_{2-4}$ Dn $D_{4. 6}$ $G_3$ °समा (for °मया). — $^d$) $T_2$ बिभीयुर् (for बभूवुर्). $K_{2. 3}$ $B_{2. 4}$ $Dc_2$ $D_3$ $T_2$ वरः (for वर). — $^f$) $Ś_1$ $K_2$ समितौ (for शमितो).

**74** $^b$) $K_4$ T M महा- (for त्वया). — $^d$) $T_1$ $G_1$ °कंपिताः (for °तापिताः).

**75** $^a$) Dc चान्यैर् (for चान्ये). — After 75$^{ab}$, S (except $G_3$) ins.:

1091* भवतोऽनुचरैर्वीर गणैः परमभीषणैः ।

— $^c$) $B_{1. 4}$ T $G_{1. 2}$ M अजय्य° (for अजेय°)

अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः ॥ ७५
एतत्ते प्रथमं देव ख्यातं कर्म भविष्यति ।
त्रिषु लोकेषु कीर्तिश्च तवाक्षय्या भविष्यति ।
वशगाश्च भविष्यन्ति सुरास्तव सुरात्मज ॥ ७६
महासेनेत्येवमुक्त्वा निवृत्तः सह दैवतैः ।
अनुज्ञातो भगवता त्र्यम्बकेन शचीपतिः ॥ ७७
गतो भद्रवटं रुद्रो निवृत्ताश्च दिवौकसः ।
उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ॥ ७८
स हत्वा दानवगणान्पूज्यमानो महर्षिभिः ।
एकाह्नैवाजयत्सर्वं त्रैलोक्यं वह्निनन्दनः ॥ ७९
स्कन्दस्य य इदं जन्म पठते सुसमाहितः ।
स पुष्टिमिह संप्राप्य स्कन्दसालोक्यतामियात् ॥ ८०

इति श्रीमहाभारते आरण्यकपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥ समाप्तं मार्कण्डेयसमास्यापर्व ॥

# २२२

वैशंपायन उवाच ।
उपासीनेषु विप्रेषु पाण्डवेषु महात्मसु ।
द्रौपदी सत्यभामा च विविशाते तदा समम् ।
जाहस्यमाने सुप्रीते सुखं तत्र निषीदतुः ॥ १ C. 3. 14650 B. 3. 233. 2 K. 3. 234. 2

**76** a) Ś1 K1. 2 B1 परमं (for प्रथमं). D3 S (except G3) कर्म (for देव). — b) T2 M देव ख्यातं (for ख्यातं कर्म). T1 G1. 2. 4 देव ख्यातिं गमिष्यति. — D2 om. (hapl.) $76^{cd}$; G4 om. $76^{ef}$. — f) B2. 3 Dn D4. 6 G3 महाभुज (for सुरा°). D5 सुराश्च तव सत्तम.

**77** a) K1 G2 °सेनं त्वेवम्; B3. 4 D (except D1–3. 5) °सेनमेवम् (for °सेनेत्येवम्). G3 एवमुक्त्वा महासेनं; G4 सुरात्मजं त्वेवमुक्त्वा. — b) B4 सर्वदैवतैः.

**78** a) Ś1 om. $78^{a}$. Dc G2. 4 गते; T ततो (for गतो). K4 D1 रुद्रवटं; T1 भद्रवटाद्. Dc G2. 4 रुद्रे (for रुद्रो). — b) K2 विनिवृत्ता (for निवृत्ताश्च). — c) G2 उक्तं च.

**79** b) Dc महाबलः (for महर्षिभिः). — c) Dc D5 M एकाहेन (for एकाह्नैव). G1 [अ]भजत् (for [अ]जयत्).

**80** a) K3 य इमं; T1 G1 यो जनो (for य इदं). K1. 3. 4 B D G3 विप्रः (for जन्म). — b) Ś1 K2 पठेद्धि (for पठते). K1. 3. 4 B D G3 पठेज्जन्म समाहितः. — After $80^{ab}$, G2. 4 ins. lines 61–62 only of a passage given in App. I (No. 22). — d) Ś1 K Dn3 D1. 3. 5 T1 G1. 3 M1 °माप्नुयात् (for °तामियात्).

Colophon om. in K2. — *Major parvan:* Ś1 T2 G2. 4 आरण्य. — *Sub-parvan:* G1 M2 मार्कंडेयसम( M2 °मा)-स्या (followed by आंगिरस in M2, which adds समाप्त to both); G4 °समास्या (followed by समाप्त). Ś1 K (K2 om.) B Dc D1–3. 5 (all om. sub-parvan name) mention only आंगिरस (D1 आंगिरसोपाख्यान); to it Ś1 K (K2 om.) B1 D1. 3 add समाप्त. — *Adhy. name:* B2 Dc Dn D4. 6 G3 स्कंदोत्पत्तिः; B4 M1 कुमारोत्पत्तिः; G1 स्कंदचरितसमाप्तिः; M2 देवासुरयुद्धं. — *Adhy. no.* (figures, words or both): Dn (Dn1 marg.) 230 (Dn2 229); D1 234; T G1 222; G2. 4 M (M2 *inf. lin.*) 224 (M orig. 226). — *Śloka no.:* Dn 113; D1 84.

☞ After adhy. 221, K2 B Dc Dn D3–6 ins. a passage given in App. I (No. 22), of which lines 61–62 are ins. in G2. 4 after line $80^{ab}$ of that adhy.

## 222

**1** a) Ś1 K D1–3 तान्विप्रान्; T1 G1 सर्वेषु (for विप्रेषु). — b) T2 G2. 4 M च भारत (for महा°). — d) K1. 2 विवेशाते. K3 B2–4 Dn1 D2. 4–6 S (except G3) तदा( B2 °मा)श्रमं (for तदा समम्). — After $1^{cd}$, S (except G3) ins.:

1092* प्रविश्य चाश्रमं पुण्यमुभे ते परमस्त्रियौ ।

— e) Ś1 K1. 2 B1 D5m प्रहस्यमाने; K3 सहर्षयुक्ते; T1 G1 M हसमानेथ; T2 G3 ते भासमाने; G2. 4 भासमाने तु. — f) Ś1 K1. 2. 4 B1. 3 Dc D1. 5 (before corr.) निषेदतुः; S (except T2 G3) न्यषीदतां.

**2** b) T1 G1 तेन्योन्यं वै; G4 अन्योन्यस्य (om. ते); M तेन्योन्यं च; M2 ते अन्योन्यं. — cd) B1. 2 Dc D4. 6 T2

C 3.14650 B 3 233 2 K 3 234.3 न्निरस्य दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे ।
कथयामासतुश्चित्राः कथाः कुरुयदुक्षिताम् ॥ २
अथाब्रवीत्सत्यभामा कृष्णस्य महिषी प्रिया ।
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ॥ ३
केन द्रौपदि वृत्तेन पाण्डवानुपतिष्ठसि ।
लोकपालोपमान्वीरान्यूनः परमसंमतान् ।
कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ॥ ४
तव वश्या हि सततं पाण्डवाः प्रियदर्शने ।
मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ॥ ५
व्रतचर्या तपो वापि स्नानमन्त्रौषधानि वा ।
विद्यावीर्यं मूलवीर्यं जपहोमस्तथागदाः ॥ ६
मम *आचक्ष्व पाञ्चालि यशस्यं भगवेदनम् ।
येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ॥ ७
एवमुक्त्वा सत्यभामा विरराम यशस्विनी ।
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम् ॥ ८
असत्स्त्रीणां समाचारं सत्ये मामनुपृच्छसि ।
असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ॥ ९
अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते ।
तथा ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया ॥ १०
यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ ११
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम् ।
न जातु वशगो भर्ता स्त्रियाः स्यान्मन्त्रकारणात् ॥ १२
अमित्रप्रहितांश्चापि गदान्परमदारुणान् ।

---

$G_3$ चित्रां कथां; $D_2$ कथाश्चित्राः (by transp.). $K_2$ $D_1$ कुरुयदुस्थिताः ($K_2$ °तां); $K_3$ °कुलोद्वह; $K_4$ °यदुश्रिताः; B Dc Dn $D_{4.6}$ $M_2$ °यदूस्थिताः ($B_{1.3}$ Dc $D_{4.6}$ °तां); $D_{2.3}$ °यदू($D_3$ °यदु)क्षिताः; $D_5$ °यदुष्विति; $T_1$ °वधूचिताः; $T_2$ $G_{2.4}$ °यदूचिताः; $G_1$ चक्रुर्यदूचिताः; $G_3$ कुरुयमास्थितां (sic); text as in $Ś_1$ $K_1$ $M_1$ only.

**3** [c]) $Ś_1$ सा भ्राजती; $K_4$ $D_{2.3}$ प्रीयमाणा (for सात्राजिती). $Ś_1$ यज्ञसेनीं. — [d]) $D_1$ सुमध्यमे; $G_4$ सुमध्यमां.

**4** Before 4, $D_1$ ins. सत्यभामा उ°. — [b]) $Ś_1$ $K_{1.2}$ $D_5$ उपतिष्ठसे; B Dn $D_{4.6}$ $G_3$ अधितिष्ठसि. — [d]) $Ś_1$ $K_1$ यूनान्; B Dc $D_6$ पुनः; $D_1$ शूरान्; $T_1$ $G_1$ उर्व्यां; $T_2$ $G_{2.4}$ नूनं (for यूनः). $K_1$ °संमितान्; $B_1$ °संहितान्; $B_{2.3}$ D (except $D_{1-3.5}$) $G_3$ °संहतान्. — [e]) $T_1$ चैवं गता° (for च वशगा°). — [f]) S (except $G_3$) च कुप्यन्ति (by transp.). $Ś_1$ $K_{1.2}$ शुचिस्मिते (for च ते शुभे).

**5** [a]) S (except $G_3$) सुभृशं (for सततं). — After $5^{ab}$, the same MSS. ins.:

1093* न चान्योन्यमसूयन्ते कथं वा ते सुमध्यमे ।

— [c]) $K_3$ $G_1$ हि (for च). $B_2$ सततं (for ते सर्वे). — [d]) Dc $D_{1.5}$ तत्वं मे ब्रूहि तत्वतः (Dc तद्वचः).

**6** [b]) $Ś_1$ $K_{1-3}$ Dc $Dn_3$ $D_{1.3.5}$ $G_{1.4}$ $M_2$ स्नानं. $K_4$ $B_4$ $D_{1-3.5}$ $G_4$ मंत्रौषधानि च; $T_2$ $G_{1.3}$ °धानिव. — [c]) $Ś_1$ $K_{1.2}$ रूप° (for मूल°). — [d]) $Ś_1$ $K_{1.4}$ $D_2$ जपोहोमस्; $K_3$ $D_{1.3.5}$ M जपहोमास्. $Ś_1$ तदागदः; $K_{1.2}$ $D_{2.5}$ तथागदः; $D_3$ तथागदं; $T_1$ $G_1$ तथागतं; $T_2$ $G_{3.4}$ तथागमाः. $B_{1-3}$ Dn $D_{4.6}$ जपहोमागदा($D_6$ °मा)स्तथा.

**7** [a]) $Ś_1$ $K_{1.2}$ समाचक्ष्व च; $K_{3.4}$ $D_{1-3.5}$ T $G_1$ M ममाप्याचक्ष्व; B Dn $D_{4.6}$ $G_3$ ममाद्या°; Dc तन्ममा°; $G_{2.4}$ मम चा° (for मम *आचक्ष्व). — [b]) S (except $G_3$) रहस्यं (for यशस्यं). $K_2$ B D (except $D_{1-3.5}$) $G_3$ भगदैवतं; T $G_{1.2.4}$ M °वेतनं; Cnp as in text. — [cd]) $K_{3.4}$ Dc $D_{1-3.5}$ S (except $G_3$) transp. कृष्णे and कृष्णो.

**8** [b]) $K_3$ विरराज मनस्विनी.

**9** Before 9, $D_2$ $T_2$ ins. द्रौपदी उ° (resp. द्रौपदी). — [a]) $T_1$ अस्ति (for असत्). — [d]) Dc °वर्तनं; $G_3$ °कीर्तितं (for °कीर्तनम्).

**10** [a]) $B_2$ अनुप्रश्नं. $Ś_1$ संशयिता; $K_1$ °यितं; $K_2$ °यितः (for °यो वा). — [b]) $T_2$ $G_{2.4}$ M नैष (for नैतत्). $Ś_1$ $K_{1.2}$ सत्ये यन्मानुपृच्छसि. — [c]) $K_3$ $D_5$ यथा; $T_2$ $G_{2.4}$ कथं (for तथा). $K_3$ [अ]भ्युपेता; $B_1$ [अ]प्युपेता; Dc व्युपेता. $T_1$ $G_1$ M समुपेतासि (M °ता हि) बुद्ध्या त्वं.

**11** [a]) $Ś_1$ $K_{1.2}$ $G_{2.4}$ यदा भर्ता विजानीयात्. — [c]) $Ś_1$ $K_1$ (before corr.). $_2$ उद्वेजिता; $K_4$ (marg. *sec. m.* as in text) $T_2$ उद्वेजते.

**12** [d]) K M स्त्रियः; $D_{1.3.4}$ °या (for °याः). B Dc Dn मंत्रकर्मणा; $D_{4.6}$ $G_3$ °कर्मणि.

**13** $Ś_1$ om. (? hapl.) $13^{ab}$. — [a]) $D_{2.5}$ T $G_{1.3}$ M अमित्रप्रहिताः ($D_2$ °तात्); $G_4$ किं मंत्रप्रहितान्. — [b]) $D_2$ गदात्परमदारुणात्; T $G_{1.2.4}$ M गदास्तत्र ($T_1$ $G_1$ गदाश्चापि; $T_2$ बाधास्तत्र; $M_1$ गदाः स्युश्च) सुदारुणाः. — [c]) $K_3$ $B_2$ Dn $D_{4-6}$ मूलप्रचारैर्हि; $B_4$ °वादेन हि; $T_1$ $G_2$ °प्रपातेन; $T_2$ $G_{1.4}$ M °प्रवादेन; $G_3$ °प्रवालैर्हि. — [d]) $T_1$ $G_1$ प्रापयंति

ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ।
कुण्डले कवचं चैव कर्णस्यापहरिष्यति ॥ २१
तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः ।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति ।
प्रख्यातास्तेऽर्जुनं वीरं निहनिष्यन्ति मा शुचः ॥ २२
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप ।
मा विषादं नयस्वास्मान्नैतत्त्वय्युपपद्यते ।
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव ॥ २३
गच्छ वीर न ते बुद्धिरन्या कार्या कथंचन ।
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः ॥ २४

वैशंपायन उवाच ।

एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम् ।
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः ॥ २५
स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ।
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ ॥ २६
तैर्विसृष्टं महाबाहुं कृत्या सैवानयत्पुनः ।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् ॥ २७
प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च ।
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत ॥ २८
गतायामथ तस्यां तु राजा दुर्योधनस्तदा ।
स्वप्नभूतमिदं सर्वमचिन्तयत भारत ।
विजेष्यामि रणे पाण्डूनिति तस्याभवन्मतिः ॥ २९
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः ।
अमन्यत वधे युक्तान्समर्थांश्च सुयोधनः ॥ ३०

---

**21** K3 om. 21 (cf. v.l. 20). — a) B4 तच्च् (for [ए]तच्च्). — b) G4 रक्षार्थी. — c) Ś1 K1. 2 [अ]पि (for [ए]व). — d) B1 D1 [अ]पि (for [अ]प-).

**22** b) T2 G1 चापि (for शत-). — d) T2 ते वै; G1 एते (for ये ते). K2–4 B2. 4 D (except D3) G3 संसप्तका; T1 सर्वांतका. D1 इव (for इति). — e) K1. 3 G1 वीर. — f) Dn3 D6 हनिष्यंति च; T1 G1. 4 M युधि हिंस्यं(M2 °सं)ति; T2 G2 युधि योत्स्यंति (for निहनि°).

**23** a) B4 असपत्नी. T2 G1 ह्येषा; G2. 4 वीर (for हीयं). — b) Dn2 D1 G1 वसुधाधिप. — c) B4 न (for मा). D1 T2 विषादे; G2. 4 विषादो. K1 नयस्वास्य; K3 B2 Dc D1. 2. 5 नयात्मानं; Dn D4. 6 गमस्तस्मान्; D3 T1 नयस्वात्मा; G2. 4 त्वया कार्यो; M2 नयस्यास्था (sic) (for नयस्वास्मान्). — d) T2 मनस्वस्थो भवानघ. — f) K1 मोक्षो (for पक्षो). T1 सर्वदा; M2 पार्थिव (for कौरव).

**24** c) K1 रतिर् (for गतिर्). — d) D5 दैवतानां. Ś1 K1–3 D2. 3. 5 तु (for च). — After 24, D1 ins. an addl. colophon (*adhy. no.* : 252).

**25** a) B1 परित्यज्य. — b) T2 G1 ते (for तं). Ś1 K1. 2 °पुंगवं (for °कुञ्जरम्). — c) Ś1 K1 Dc D1. 3. 5 दुर्धर्षाः (K1 °र्षः).

**26** a) Ś1 स्थितां (for स्थिरां). — B2 om. (hapl.) $26^{c}$–$29^{d}$. — c) T2 [अ]नुज्ञाप्य (for °ज्ञाय). — d) B1 शिवम् (for जयम्). Ś1 प्राप्नुहि; D1 प्राप्स्यसि (for आप्नुहि). D1 मा व्यथः (for चेत्यथ).

**27** B2 om. 27 (cf. v.l. 26). — b) T1 च (for सा). D1 प्रभुः (for पुनः). — c) G2 यत्र; G4 तत्र (for देशं). G2 तत्रा° (for यत्रा°).

**28** B2 om. 28 (cf. v.l. 26). — a) T2 G1 प्रतिवेश्य च (for °निक्षिप्य). — c) Ś1 K1. 2. 4 [अ]थ; Dc2 तद्- (for च). Dc2 -आज्ञा; T1 कृत्या (for राज्ञा). B4 G1 सा राज्ञा (by transp.); T2 [ए]व राज्ञा. Ś1 K1. 2 तु; K3 Dc D3. 5 [अ]थ; K4 D1 च (for सा). — d) =1. 92. $16^{b}$; 93. $43^{b}$; 94. $27^{d}$; etc., etc. B3 Dc1 Dn D4. 6 तथै° (for तत्रै°).

**29** B2 om. $29^{abcd}$ (cf. v.l. 26). — a) T2 च (for तु). — c) Dc अनुभूतम्; G1 यत्तु भूतम् (for स्वप्न°). B1 इमं; Dc तथा (for इदं). — d) G1 चिंतयामास (for अचिन्तयत). — After $29^{cd}$, S (except G3) ins.:

1155* संस्मृत्य तानि वाक्यानि दानवोक्तानि दुर्मतिः ।

[T2 सर्वाणि (for वाक्यानि). T1 M1 श्रुत्वा च (M1 संस्मृत्य) दानवोक्तानि तानि वाक्यानि दुर्मतिः.]

— e) Ś1 K1. 2. 4 D2. 3. 5 विजेष्येहं; B2 विजेष्यसे. — f) B Dn D4. 6 G2. 3 चास्य (for तस्य). Ś1 K2 मनः (for मतिः).

**30** a) Dc T1 M1 कर्ण- (for कर्णं). K3 B4 D (except Dn D6) संसप्त°. — b) D1 [अ]पि प्रघातिनः; D2 [अ]मित्रपातिनः. — c) Ś1 K1. 2 रणे (for वधे). — d) G1 पार्थिवान् (for समर्थान्).

**31** a) T2 वृथा; G1. 2 वृधा (for दृढा). T1 ह्येषा (for तस्य). — c) Dc विनिर्जित्य. — B2 om. $31^{d}$–$34^{c}$. — d) Ś1 K1. 2 पुरुषर्षभ (for भरत°).

एवमाशा दृढा तस्य धार्तराष्ट्रस्य दुर्मतेः ।
विनिर्जये पाण्डवानामभवद्भरतर्षभ ॥ ३१
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना ।
अर्जुनस्य वधे क्रूरामकरोत्स मतिं तदा ॥ ३२
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः ।
रजस्तमोभ्यामाक्रान्ताः फल्गुनस्य वधैषिणः ॥ ३३
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः ।
न तथा पाण्डुपुत्राणां स्नेहवन्तो विशां पते ।
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः ॥ ३४
दुर्योधनं निशान्ते च कर्णो वैकर्तनोऽब्रवीत् ।
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ॥ ३५
न मृतो जयते शत्रूञ्जीवन्भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः ।
न कालोऽद्य विषादस्य भयस्य मरणस्य वा ॥ ३६
परिष्वज्याब्रवीच्चैनं भुजाभ्यां स महाभुजः ।
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन् ।
शत्रून्प्रताप्य वीर्येण स कथं मर्तुमिच्छसि ॥ ३७
अथ वा ते भयं जातं दृष्ट्वार्जुनपराक्रमम् ।
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥ ३८
गते त्रयोदशे वर्षे सत्येनायुधमालभे ।
आनयिष्याम्यहं पार्थान्वशं तव जनाधिप ॥ ३९
एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा ।
प्रणिपातेन चान्येषामुदतिष्ठत्सुयोधनः ।
दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ॥ ४० B. 3. 252. 45 / 3. 253. 46

**32** $B_2$ om. 32 (cf. v.l. 31). — $^{a}$) $D_1$ $M_2$ कर्णो ऽप्या($D_1$ ॰स्या)विष्ट॰; $B_3$ $D_3$ कर्णोप्याविष्टचितात्मा; $Dc_1$ $G_1$ कर्णोप्यवि($G_1$ ॰दु)ष्ट॰; $D_4$ कर्णोप्यानिष्ट॰. — $^{c}$) $T_1$ वधं कर्तुम् (for वधे क्रूराम्). — $^{d}$) $K_3$ $D_1$ अकरोत्स्वां; $T_2$ अन्तोत्स (for अकरोत्स). $T_1$ स्मृतिं; $T_2$ ममां; $G_1$ सदा (for मतिं). $T_2$ $G_1$ मतिं (for तदा). B Dn $D_{4.6}$ $G_3$ करोति स्म तदा मतिं.

**33** $B_2$ om. 33 (cf. v.l. 31). — $^{a}$) $Ś_1$ संशप्तकान्; $K_{3.4}$ $B_{3.4}$ Dc $D_{1-3}$ संसप्तकाः. $B_1$ तदा; $K_3$ च ये (for च ते). $K_1$ वीर (for वीरा). S (except $G_3$) संशप्तका बभूवुश्च. — $^{c}$) $D_3$ आविष्टाः; $D_{4.6}$ $G_3$ विक्रांताः (for आक्रान्ताः). — $^{d}$) N ($B_2$ om.) $G_{2.3}$ $M_2$ फाल्गुनस्य ($Ś_1$ फल्गुण॰; $D_{4.6}$ फाल्गुण॰).

**34** $B_2$ om. $34^{abc}$ (cf. v.l. 31). — $^{a}$) $D_6$ ॰कृपाचार्या. — $^{b}$) $Ś_1$ दानवाविष्टचेतसः (cf. $33^{b}$). — $^{c}$) $Ś_1$ तत् (for न). $M_2$ ॰पुत्रेषु (for ॰पुत्राणां). — $^{d}$) $T_2$ ते भवंति (for स्नेह॰). $G_{2.4}$ M [S]भवंस्तदा (for विशां पते). — $^{e}$) $B_4$ चाचक्षीत; $Dn_3$ चाचक्षेत; $T_2$ चाचष्टे च (for चाचचक्षे). $G_1$ कस्मिश्चिद्. — $^{f}$) $K_3$ Dc $D_1$ एवं (for एतद्). $B_4$ transp. एतत् and राजा. — After 34, S (except $G_3$) ins.:

1156* कृत्ययानार्यकथितं यदस्य निशि दानवैः ।

**35** $^{b}$) S (except $G_3$) कर्णो वचनमब्रवीत्. — $^{c}$) $G_1$ हस॰ (for स्मय॰). — $^{d}$) $B_1$ सुमहद् (for हेतुमद्). $D_2$ पार्थिवेदं तु सद्वचः.

**36** $B_2$ om. $36^{b}$–$38^{c}$. — $^{b}$) $B_4$ जीवं तत्रापि पश्यति. — $^{e}$) $T_1$ $G_{2.4}$ M [S]थं (for Sद्य). — $^{f}$) $T_1$ तत्राथ (for भयस्य). $Ś_1$ $K_{1.2}$ transp. भयस्य and मरणस्य. $K_{1.2}$ वं; $D_3$ $T_2$ च (for वा).

**37** $B_2$ om. 37 (cf. v.l. 36). — $^{a}$) $K_4$ Dc एवं; $T_1$ वाक्यं; $T_2$ $G_{1.2.4}$ M एनं (for चैनं). — $^{b}$) $T_1$ ॰बलः; Dc ॰श्रमः; $G_4$ ॰भुजं (for ॰भुजः). — $^{d}$) $B_4$ कस्माच्छोचितुमर्हसि. — $^{e}$) $Ś_1$ प्रतप्य; $D_3$ संताप्य (for प्र॰). — $^{f}$) $T_2$ सकलं; $G_1$ कथं त्वं (for स कथं). $Ś_1$ $K_1$ $B_1$ $Dc_1$ $D_{1-3}$ T कर्तुम्; $K_2$ $B_3$ Dn $D_{4-6}$ मृत्युम् (for मर्तुम्). $B_3$ S (except $G_{1.3}$) अर्हसि (for इच्छसि).

**38** $B_2$ om. $38^{abc}$ (cf. v.l. 36). — $^{a}$) $Ś_1$ $K_{1.2}$ भये जाते (for भयं जातं). — $^{b}$) $G_{2.6}$ अर्जुनस्य पराक्रमं. — After $38^{ab}$, $D_5$ reads $39^{cd}$.

**39** $^{a}$) S (except $G_3$) इतस् (for गते). $T_1$ तृतीयके (for त्रयो॰). — $^{b}$) $T_1$ शस्त्रेणा॰ (for सत्येना॰). — $D_5$ reads $39^{cd}$ after $38^{ab}$. — $^{cd}$) $D_1$ $T_2$ $G_1$ पार्थं (for पार्थान्). $B_1$ आनयिष्ये रणे पार्थान्; $D_5$ आनयिष्यामि पार्थं तु (for $^{c}$). $Ś_1$ $K_{1.2}$ वशे (for वशं). $Ś_1$ $K_{1.2}$ $G_1$ नराधिप; $K_3$ Dc $D_1$ जनेश्वर (for जना॰). $K_4$ $D_3$ करिष्यामि वधं राजन्पार्थस्यामिततेजसः.

**40** $^{b}$) $B_{2.4}$ Dc वचनात्तदा; $D_5$ वचनेन वा; S (except $T_1$ $G_{1.3}$) वचसा तदा. — $^{c}$) $D_1$ प्रणिधानेन. B Dn $D_{4.6}$ $G_3$ चाप्येषाम्. — $^{d}$) $Ś_1$ $K_{1.2.4}$ $D_{2.3.5}$ समुपस्थौ (for उदतिष्ठत्). — $^{e}$) $K_3$ $D_1$ तु (for तद्). — $^{f}$) $K_4$ transp. स्थिरां and मतिं.

**41** $^{a}$) $K_1$ मनुजशार्दूल; $B_1$ [S]थ नरशार्दूलो; $T_2$ वै राज॰.

ततो मनुजशार्दूलो योजयामास वाहिनीम् ।
रथनागाश्वकलिलां पदातिजनसंकुलाम् ॥ ४१
गङ्गौघप्रतिमा राजन्प्रयाता सा महाचमूः ।
श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डुरैः ॥ ४२
रथैर्नागैः पदातैश्च शुशुभेऽतीव संकुला ।
व्यपेताभ्रघने काले द्यौरिवाव्यक्तशारदी ॥ ४३
जयाशीर्भिर्द्विजेन्द्रैस्तु स्तूयमानोऽधिराजवत् ।
गृह्णन्नञ्जलिमालाश्च धार्तराष्ट्रो जनाधिपः ॥ ४४
सुयोधनो ययावग्रे श्रिया परमया ज्वलन् ।
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ॥ ४५
दुःशासनादयश्चास्य भ्रातरः सर्व एव ते ।
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ॥ ४६
रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा ।
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः ।
कालेनाल्पेन राजंस्ते विविशुः स्वपुरं तदा ॥ ४७

इति श्रीमहाभारते आरण्यकपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

— $^{c}$) $K_4$ $Dn_3$ $D_3$ °कलिलाः. — $B_2$ om. $41^{d}$–$42^{a}$. — $^{d}$) $Ś_1$ $K_{1.2.4}$ $D_{2.3}$ °ध्वजसंकुलां; $D_5$ पत्तिध्वजसमाकुलां.

**42** $B_2$ om. $42^{a}$ (cf. v.l. 41); $D_6$ om. $42^{a}$–$43^{b}$. — $^{a}$) $K_3$ गांगोघ-. $B_1$ $T_2$ $G_{1.2}$ -प्रतिमां. $T_1$ $G_{2.4}$ चास्य; $T_2$ $G_1$ वीर; $M_1$ सा तु; $M_2$ साद्य (for राजन्). — $^{b}$) $B_4$ transp. प्रयाता and सा. $T_1$ शुशुभे स महा°; $T_2$ $G_{1.2}$ प्रयाणे ($T_2$ प्रायेण) स महाचमूं; $G_4$ M प्रयाणे शुशुभे चमूः. — $^{c}$) $D_3$ °पत्रैः (for °च्छत्रैः). T पताकैश्च (for °काभिश्च). — $^{d}$) $K_1$ $T_1$ सपांडु($T_1$ °ड)रैः; $K_4$ $B_4$ Dc $D_{1-3}$ [अ]पि पांडुरैः; $T_2$ $G_{1.4}$ M सुपांडरैः.

**43** $D_6$ om. $43^{ab}$ (cf. v.l. 42). — $^{a}$) $Ś_1$ $K_{1.2}$ च पादातैः; $B_1$ पताकैश्च (for पदातैश्च). — $^{b}$) $D_1$ वीर- (for ऽतीव). $K_2$ शोभना (for संकुला). $T_1$ प्रयाणे सा चमू बभौ; $T_2$ $G_{1.2.4}$ M प्रयाणे सा बभौ ($G_4$ शुशुभे; M प्रबभौ) चमूः. — $^{d}$) $T_1$ °वासक्तशारदी; $T_2$ °वासीत्सु°; $G_1$ °वाव्यक्तशर्वरी; $G_4$ °वासीत्तु शारदी. — After 43, S (except $G_3$) ins.:

1157* हंसपङ्क्तिसमाकीर्णा भ्रमत्सारसशोभिता ।

**44** $^{a}$) $K_4$ $D_{2.3}$ द्विजाग्र्याणां; $D_1$ द्विजैश्चैव; $T_2$ $G_{2.4}$ द्विजेंद्राणां (for द्विजेन्द्रैस्तु). $K_1$ B Dn $D_{4.6}$ स; $K_3$ Dc $D_5$ $T_1$ $G_1$ च (for तु). — $^{b}$) $B_1$ व्यराजत; $B_4$ Dc $D_5$ विराजते (for ऽधि°). — $^{c}$) $K_1$ °लिमानश्च; Dc °लिमादाय; $T_2$ °लयश्चापि (for °लिमालाश्च). — $^{d}$) $Ś_1$ $G_1$ जनाधिप; $K_1$ धनाधिपः.

**45** $^{a}$) $D_5$ दुर्योधनो. $D_3$ यथा चाग्रे; $D_5$ यथा मार्गे (for यया°). — $^{b}$) $B_2$ $T_2$ युतः (for ज्वलन्). — $^{d}$) $G_{2.4}$ सु- (for च).

**46** After $46^{ab}$, M ins.:

1158* प्रत्युद्गताश्च कुरुभिर्नागरैर्ब्राह्मणैरपि ।

— $^{c}$) $K_{1.2}$ भूरिश्रवः. — $^{d}$) $K_1$ महाराजा च.

**47** $^{c}$) $Ś_1$ $K_{3.4}$ $D_{1-3}$ प्रयातं. $B_2$ राज°; $T_2$ $G_{1.2.4}$ नर° (for नृप°). $K_3$ तु (for तं). — $^{d}$) $D_1$ अभिजग्मुः. $K_{1.4}$ $D_{2.3}$ $G_1$ कुरूद्वहं ($K_1$ °हः; $G_1$ °ह). — After $47^{cd}$, S (except $G_3$) ins.:

1159* प्रहृष्टमनसः सर्वे दुर्योधनपुरोगमाः ।

— $^{e}$) $B_4$ [अ]न्येन (for [अ]ल्पेन). B Dn $D_{4.6}$ $G_3$ राजेंद्र; T $G_{1.2.4}$ M ते राजन् (for राजंस्ते). — $^{f}$) B Dn $D_{4.6}$ $G_3$ transp. विविशुः and स्वपुरं.

Colophon. — *Major parvan:* $Ś_1$ $K_2$ $Dn_3$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $Ś_1$ $K_{1.2}$ घोषयात्रा (followed by समाप्त); $K_{3.4}$ B D $G_3$ दुर्योधन($K_4$ $B_4$ Dc om. दुर्योधन)प्रायोपवेश (followed by समाप्त in $K_{3.4}$ $B_1$ D $G_3$). — *Adhy. name:* $M_2$ प्रायोपवेशननिवर्तनं. — *Adhy. no.* (figures, words or both): $B_4$ 322; Dn 251 ($Dn_2$ 250); $D_1$ 253; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 244 ($M_2$ orig. 246); $T_2$ $G_1$ 241; $G_2$ 243. — *Śloka no.:* Dn 52; $D_1$ 27.

## 241

**1** $^{a}$) $Ś_1$ K Dc $D_{1-3.5}$ T $G_1$ वर्तमानेषु; $G_{2.4}$ M एवं गतेषु. — $^{b}$) $T_1$ वने ब्रह्मन्; $T_2$ $G_{1.2.4}$ M पांडवेषु (for वने तस्मिन्). — $^{d}$) $K_4$ B Dn $D_{4.6}$ $T_2$ $G_{2.4}$ अकुर्वत. $K_{1.2.4}$ B Dn $D_{2.4-6}$ $G_4$ सत्तमाः ($B_2$ वै द्विज).

**2** $^{a}$) B D (except $D_{1-3.5}$) $G_{1-3}$ चैव (for चापि). — $^{b}$) $B_2$ S (except $G_3$) शकुनिश्चापि सौबलः. — $^{c}$) $Ś_1$ $K_{1.4}$ $T_2$ $G_{2.4}$ M भीष्मो द्रोणः ($Ś_1$ °मो द्रोण-; $G_4$ °ष्म-द्रौणिः) कृपश्चैव.

**3** $^{a}$) $B_2$ गतेषु तेषु पार्थेषु. — $^{b}$) $Ś_1$ $K_{1.2}$ $B_1$ नि($B_1$

# २४१

जनमेजय उवाच।

वसमानेषु पार्थेषु वने तस्मिन्महात्मसु।
धार्तराष्ट्रा महेष्वासाः किमकुर्वन्त सत्तम ॥ १
कर्णो वैकर्तनश्चापि शकुनिश्च महाबलः।
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ २

वैशंपायन उवाच।

एवं गतेषु पार्थेषु विसृष्टे च सुयोधने।
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः।
भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वचः ॥ ३
उक्तं तात मया पूर्वं गच्छतस्ते तपोवनम्।
गमनं मे न रुचितं तव तच्च कृतं च ते ॥ ४
ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात्।
मोक्षितश्चासि धर्मज्ञैः पाण्डवैर्न च लज्जसे ॥ ५
प्रत्यक्षं तव गान्धारे ससैन्यस्य विशां पते।
सूतपुत्रोऽपयाद्भीतो गन्धर्वाणां तदा रणात्।
क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ॥ ६
दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम्।
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मतेः ॥ ७
न चापि पादभाक्कर्णः पाण्डवानां नृपोत्तम।
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ॥ ८
तस्य तेऽहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः।
संधिं संधिविदां श्रेष्ठ कुलस्यास्य विवृद्धये ॥ ९
एवमुक्तस्तु भीष्मेण धार्तराष्ट्रो जनेश्वरः।
प्रहस्य सहसा राजन्विप्रतस्थे ससौबलः ॥ १०
तं तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः।
अनुजग्मुर्महेष्वासा धार्तराष्ट्रं महाबलम् ॥ ११
तांस्तु संप्रस्थितान्दृष्ट्वा भीष्मः कुरुपितामहः।
लज्जया व्रीडितो राजञ्जगाम स्वं निवेशनम् ॥ १२ C 3. 15020 B 3. 253. 13 K 3. 254. 13

वि;सृष्टेषु (for विसृष्टे च). K2 नराधिप (for सुयो°). — c) B1. 3. 4 D4 T G1. 3. 4 हस्तिन°. — e) Ś1 तदा राजा (for महा°).

**4** a) Dn D4. 6 G3 तथा (for मया). — b) Ś1 K Dc D1–3. 5 T2 G1 सुयोधन (for तपो°). — c) G3. 4 वचनं (for गमनं). K4 T2 G1. 3. 4 M1 ते; T1 तन् (for मे). — d) T1 G2. 4 मम; G1 M तथा (for तव). K1. 3 B Dc Dn D4–6 G3 तत्र; T1 तं च (for तच्च). K3 च मे; G1 M त्वया (for च ते). K4 D2. 3 T2 मद्वचो (T2 तत्तथा) न कृतं त्वया; D1 मद्वचो न कृतं च ते.

**5** a) M2 तात (for वीर). — b) T1 transp. ग्रहणं and शत्रुभिर्. — c) B2 D1–3 T M2 चापि (for चासि).

**6** a) M3 राजेंद्र (for गान्धारे). — b) D2. 3 सैन्यस्य च (for ससैन्यस्य). — c) Ś1 तदापेतो; K1. 3. 4 D1 T2 G1. 4 भयाद्भीतो (for ऽपयाद्भीतो). — d) Ś1 तथा रणात्; B3. 4 तदा भयात्; B2 तदा बलात्; D1 T1 तरस्विनां. — After 6cd, T1 G3. 4 ins.:

1160* व्यपयात्स्पृष्टतस्तस्मात्प्रेक्षमाणः पुनः पुनः।

— f) B4 M1 विशां पते; M3 यथागतम् (for नृपा°).

**7** b) B1 पांडूनां सुमहात्मनां. — G4 om. 7c–8b.

**8** G4 om. 8ab (cf. v.l. 7). — b) B4 S (except G3; G4 om.) महात्मनां (for नृपो°). D1 पांडवस्य नृपात्मज. — c) K4 D2. 3 धनुर्विद्यासु (for °वेंदे). K3 B3 Dc T1 G3. 4 M1 [ऽ]थ (for च). K4 D2. 3 शूरैस्तु (for शौर्ये). K3 B1 T1 G3 M वा (for च). — d) D1 कुशलो (for धर्मे वा). B1 धर्मशीलता; Dc D1 धर्मवत्सलः. K4 D2. 3 सर्वैश्च बलवत्तरैः.

**9** a) B Dn D4. 6 G3 तस्मादहं (for तस्य तेऽहं). — c) T1 M संधिमतां. — d) Ś1 K1. 3. 4 Dc D1–3 स्वकुलस्य (for कुलस्यास्य).

**10** a) B1. 3. 4 Dn1 D6 G3 M2 च (for तु). — b) Ś1 K1. 3 जनाधिपः; T1 महीपतिः (for जने°). — c) K1. 3 प्रसह्य; T2 प्रहसन् (for प्रहस्य). K4 B1 D2. 3 स महाराज; G1 M1 सहसा राजा. — d) Ś1 K1. 3 T1 महाबलः (for ससौ°). K4 D2. 3 प्रतस्थे सहसौबलः.

**11** a) Ś1 K Dc D1–3. 5 ततः (for तं तु). Ś1 आस्थाय. — b) B4 T1 G1 °नावपि (for °नादयः). — c) D5 महेष्वासान्; T2 महेष्वासं. — d) T2 G1 जनेश्वरं (for महा°). K4 T1 धार्तराष्ट्रा महाबलाः; D3 धार्तराष्ट्रान्महाबलान्.

**12** a) D1 श्रुत्वा (for दृष्ट्वा). Dc स तु प्रतस्थिवान्दृष्ट्वा. — b) K1. 3 भीष्मः कुरुकुलोद्वहः. — c) K4 D2. 3 [अ]धो-

गते भीष्मे महाराज धार्तराष्ट्रो जनाधिपः ।
पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः ॥ १३
किमस्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते ।
कथं नु सुकृतं च स्यान्मन्त्रयामास भारत ॥ १४
कर्ण उवाच ।
दुर्योधन निबोधेदं यत्त्वा वक्ष्यामि कौरव ।
श्रुत्वा च तत्तथा सर्वं कर्तुमर्हस्यरिंदम ॥ १५
तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम ।
तां पालय यथा शक्रो हतशत्रुर्महामनाः ॥ १६
वैशंपायन उवाच ।
एवमुक्तस्तु कर्णेन कर्णं राजाब्रवीत्पुनः ।
न किंचिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ ॥ १७
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ।
अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् ॥ १८
राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं तदा ।
मम स्पृहा समुत्पन्ना तां संपादय सूतज ॥ १९
एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत् ।
तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम ॥ २०
आहूयन्तां द्विजवराः संभाराश्च यथाविधि ।
संभ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च ॥ २१
ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः ।
क्रियां कुर्वन्तु ते राजन्यथाशास्त्रमरिंदम ॥ २२
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः ।
प्रवर्ततां महायज्ञस्तवापि भरतर्षभ ॥ २३
एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशां पते ।
पुरोहितं समानाय्य इदं वचनमब्रवीत् ॥ २४
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहर त्वं मम कृते यथान्यायं यथाक्रमम् ॥ २५
स एवमुक्तो नृपतिमुवाच द्विजपुंगवः ।
न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ।

---

मुखो ; $T_2$ $G_{2.4}$ [अ]वनतो (for व्रीडितो). — [d]) $G_4$ $M_2$ स्व- (for स्वं).

**13** [b]) $K_3$ B Dn $D_{2-4.6}$ $G_3$ जनेश्वरः ($B_4$ सुयोधनः); $T_2$ महाबलः (for जनाधिपः). — [c]) $K_3$ राजा (for देशम्). — [d]) $K_1$ आमंत्रयत ; $K_3$ न्यमंत्र°.

**14** [a]) $B_1$ अस्माभिर् (for अस्माकं). — [b]) $B_1$ $G_1$ मम (for भव-). — [c]) N $G_{1.3}$ च (for नु). $Ś_1$ $K_1$ नु ; $K_{2.3}$ न ; $K_4$ $D_5$ नः ; $B_{1-3}$ Dn $D_{2-4.6}$ $G_3$ तत् ; $B_4$ Dc $D_1$ मे (for च). — [d]) $Ś_1$ K $D_{1-3.5}$ मंत्रयामोत्र य($K_4$ $D_{2.5}$ त)द्धितं ; $B_{1.3.4}$ Dc Dn $D_{4.6}$ $G_3$ मंत्रयामोद्य य(Dc त)द्धितं ; $B_2$ मंत्रयामो धियाकृतं.

**15** [a]) $Ś_1$ K Dc निबोध त्वं (for °धेदं). — [b]) $K_4$ B D $T_2$ $G_3$ यत्त्वां ; $K_3$ यथा. $Ś_1$ $K_{1.2}$ $D_1$ भारत (for कौरव). — After 15[ab], $K_4$ D (except $D_4$) $G_3$ ins. a passage given in App. I (No. 24). — $K_{2.4}$ $D_2$ om. 15[cd]. — [c]) B Dn $D_{4.6}$ $G_3$ वाचं ; $D_5$ तु तत् ; $T_1$ च तं. — [d]) $B_2$ $G_1$ [अ]निंदित (for [अ]रिंदम).

**16** [a]) $B_1$ $D_2$ T राजन् (for वीर). — [b]) $D_1$ संप्रपन्ना (for निःस°). — [c]) $B_1$ महाराज ; $T_2$ महाबाहो (for यथा शक्रो). — [d]) $B_1$ यथा शक्रो ; $G_{1.2.4}$ $M_2$ गतशत्रुर्. $B_2$ $D_1$ महाबलः.

**17** [b]) S (except $G_3$) राजा कर्णमथाब्रवीत्. — [d]) $Ś_1$ $K_{1.2.4}$ $D_{2.3.5}$ पुरुषोत्तम.

**18** [a]) $D_5$ सुसहायोनुरक्तश्च. — [b]) $B_1$ समर्थं ; S (except $T_1$ $G_3$) मदर्थे. — [d]) $T_2$ $G_{1.4}$ तन्मे (for तं वै).

**19** [b]) $K_3$ B D (except $D_{1-3.5}$) $G_3$ महत् (for तदा). — [d]) $G_1$ सुव्रत (for सूतज).

**20** [a]) $K_{1.3.4}$ $D_{1-3}$ तदा (for ततः). — [d]) S (except $G_3$) सर्वे वश्या (by transp.). $D_3$ नृपात्मज.

**21** [a]) $K_1$ $D_2$ आह्वयंतां ; $G_1$ आहूयंत. $T_1$ द्विजवरान्.

**22** [a]) $K_4$ $D_3$ समाहूय ; $T_1$ यथा भूता. — [b]) $K_4$ $B_{2-4}$ Dn $D_{1-4.6}$ $G_3$ $M_2$ यथोक्ता. $K_{1.2}$ $B_{1-3}$ Dc वेदपारगैः. — [c]) $K_{1.4}$ $B_1$ $D_{1-3}$ S (except $T_2$ $G_3$) क्रियाः.

**23** [d]) $T_2$ $G_1$ तवाद्य पुरुषर्षभ.

**24** Before 24, $K_4$ $B_1$ $Dc_1$ $D_{1-3.5}$ ins. वैशं° उ°. — [c]) $K_4$ $D_2$ समासाद्य ; $D_4$ $G_3$ °नीय ; $T_2$ $G_1$ °हूय. — [d]) To avoid hiatus, $K_1$ त्विदं (for इदं). $B_{1-3}$ D (except $D_{1-3.5}$) $G_3$ वचनं चेदमब्रवीत्.

**25** [a]) =33[a]. $K_{1.2}$ S (except $G_3$) क्रतुवरं. — [c]) $T_2$ $G_{2.4}$ आहरस्व यथाशास्त्रं.

**26** [a]) $T_1$ एवमुक्तः स नृपतिम्. — [b]) $B_{1-3}$ Dn $D_{4.6}$ $T_1$ $G_{1.3}$ $M_2$ द्विजसत्तमः. — After 26[ab], S (except $G_3$) ins.:

1161* ब्राह्मणैः सहितो धीमान्ये तत्रासन्समागताः ।

आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम ॥ २६
दीर्घायुर्जीवति च वै धृतराष्ट्रः पिता तव ।
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम ॥ २७
अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो ।
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम ॥ २८
य इमे पृथिवीपालाः करदास्तव पार्थिव ।
ते करान्संप्रयच्छन्तु सुवर्णं च कृताकृतम् ॥ २९
तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम ।
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत ॥ ३०
तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः ।
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ॥ ३१
एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ।
एतेन नेष्टवान्कश्चिदृते विष्णुं पुरातनम् ॥ ३२
राजसूयं क्रतुश्रेष्ठं स्पर्धत्येष महाक्रतुः ।
अस्माकं रोचते चैव श्रेयश्च तव भारत ।
अविघ्नश्च भवेदेष सफला स्यात्स्पृहा तव ॥ ३३
एवमुक्तस्तु तैर्विप्रैर्धार्तराष्ट्रो महीपतिः ।
कर्णं च सौबलं चैव भ्रातॄंश्चैवेदमब्रवीत् ॥ ३४
रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः ।
रोचते यदि युष्माकं तन्मा प्रब्रूत माचिरम् ॥ ३५
एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम् ।
संदिदेश ततो राजा व्यापारस्थान्यथाक्रमम् ॥ ३६
हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः ।
यथोक्तं च नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ॥ ३७ C 3 15267 B 3 255 23 K 3 256 24

इति श्रीमहाभारते आरण्यकपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

— c) K3 शक्यस्तु; B3 स शत्रुः; D3 शक्यः स (by transp.); T1 च शक्यं; T2 वै शक्यं. Ś1 K1. 2 त्वया राजन्; K3 D3 T G1. 2. 4 M कुरुश्रेष्ठ (T G1. 4 °ष्ठ; M1 °ष्ठो); B3 कुलश्रेष्ठो. — d) T2 वर्त° (for जीव°). — f) B4 काले (for कुले). Ś1 K1. 2 नराधिप; T2 G1 नरोत्तम.

**27** K4 om. (hapl.) 27. — a) Dc G2 M2 om. च. T2 G1 स (for च). B D (except D2. 3. 5) G3 ते (for वै). — b) B1. 3. 4 D (except D1–3. 5) G3 नृप (for तव). — c) D5 [अ]सौ (for ते).

**28** a) M1 अस्तु (for अस्ति). G1 चान्यन्. B4 D5 महासत्रं. Ś1 K1. 2 अस्ति त्वन्यो महाराज. — b) Ś1 K1. 2 °समः. T1 विदुः; G1. 2. 4 M विभो (for प्रभो). — d) Dc शृणुष्वेदं; T1 शृणु चैवं.

**29** a) T2 G2 ये चेमे (for य इमे). — d) S (except G2) सुवर्णमकृतं कृतं (T1 °तं शुभं; M2 °ताकृतं).

**30** c) K4 D1–3 वै (for ते). — d) K2 ते नृपोत्तम; B2 तव भारत; G1 ते नरर्षभ.

**31** D2 om. 31. — a) K3 तेन; B2 रुद्र°; B3 Dc2 यत्र (for तत्र). T2 G1 नरश्रेष्ठ. — b) B1 प्रभूतार्थः. — d) K B1. 4 Dc D2 G1 सर्वशोप्यनि°; D1 सर्वपापनिवारणः; T1 G2. 4 M सर्वशो ह्यनि°; T2 संस्पृशोप्यनि°.

**32** a) Dc2 S (except G2) वै (for ते). — c) T1 एतेनैव तु यज्ञेन. — d) T1 दृष्ट्वा (for ऋते). G2. 4 विष्णोः. K2 Dc T G1 M सनातनं; G2. 4 सनातनात्.

**33** a) = 25c. K1 G1 क्रतुश्रेष्ठः; Dc क्रतुवरं. — b) T2 G1 स्पर्धनेयं. — c) K1–3 Dc D1. 5 T G2 M चैव (for चैव). K4 D2. 3 एतं नु रोचतेऽस्माकं. — d) K1 B1 श्रेष्ठश्च; G2. 4 M श्रेयांश्च. — e) Dc भवत्येष. B Dn D4. 5 G3 निर्विघ्नश्च भवत्येष. — f) K B1 Dc D1–3. 5 T G1. 2. 4 च ते (for तव). — After 33, S (except T1 G3) ins.:

1102* तस्मादेष महाबाहो तव यज्ञः प्रवर्तताम् ।

**34** a) T2 G1 धर्मेण (for तैर्विप्रैर्). — b) K1. 2 D5 महामतिः (for मही°).

**35** a) K4 ते (for मे). — b) M2 तथैव च (for न संशयः). — d) K D2. 3. 5 T2 तन्मां; B Dc Dn D1. 4. 5 G3 तस्मात् (Dn2 तच्च); G2. 4 M ततः (for तन्मा). T2 ब्रुवत (for प्रब्रूत). G1 तन्मम ब्रूत माचिरं.

**36** a) K1 सर्वे ते (by transp.). — b) G1 प्रत्यूचुस्तं नरा°. — After 36ab, T2 ins 3. 242. 1cd (v.l. धृतराष्ट्रं for धार्तराष्ट्रं), *repeating* it in its proper place. — c) G4 आदि° (for संदि°). T1 महाराजः; M2 तथा राजा. — d) T G1 M व्यापारान्स्वा°; M1 °रांस्ता°न्यथा°.

**37** a) K3 करणं; K4 कारणाच्च; D3 कारणे. K3 Dc D1 चैव (for चापि). — b) D1 शिल्पकारिणः (for सर्व°). — c) T2 ते; G1 तत् (for च). — d) T1 ते तं (for कृतं). G4 कृत्यं (for सर्वं).

Colophon. G3 broken. — *Major parvan:* Ś1 K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 D1–4. 5 (all om. sub-parvan name) mention only धार्तराष्ट्रयज्ञ;

# २४२

C. 3. 15020
B. 3. 255. 1
K. 3. 257. 1

वैशंपायन उवाच ।
ततस्तु शिल्पिनः सर्वे अमात्यप्रवराश्च ह ।
विदुरश्च महाप्राज्ञो धार्तराष्ट्रे न्यवेदयत् ॥ १
सज्जं क्रतुवरं राजन्कालप्राप्तं च भारत ।
सौवर्णं च कृतं दिव्यं लाङ्गलं सुमहाधनम् ॥ २
एतच्छ्रुत्वा नृपश्रेष्ठो धार्तराष्ट्रो विशां पते ।
आज्ञापयामास नृपः क्रतुराजप्रवर्तनम् ॥ ३
ततः प्रववृते यज्ञः प्रभूतान्नः सुसंस्कृतः ।
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ ४
प्रहृष्टो धृतराष्ट्रोऽभूद्विदुरश्च महायशाः ।
भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ॥ ५
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ।
ते प्रयाता यथोद्दिष्टं दूतास्त्वरितवाहनाः ॥ ६
तत्र कंचित्प्रयातं तु दूतं दुःशासनोऽब्रवीत् ।
गच्छ द्वैतवनं शीघ्रं पाण्डवान्पापपूरुषान् ।
निमन्त्रय यथान्यायं विप्रांस्तस्मिन्महावने ॥ ७
स गत्वा पाण्डवावासमुवाचाभिप्रणम्य तान् ।
दुर्योधनो महाराज यजते नृपसत्तमः ॥ ८
स्ववीर्यार्जितमर्थौघमवाप्य कुरुनन्दनः ।
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥ ९
अहं तु प्रेषितो राजन्कौरवेण महात्मना ।

---

and B Dc Dn $D_{4.6}$, likewise, only दुर्योधनयज्ञ. — *Adhy. name:* $M_2$ धार्तराष्ट्रयज्ञनिर्णयः. — *Adhy. no.* (figures, words or both): $B_4$ 323; Dn 254 ($Dn_2$ 253); $D_1$ 256; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 245 ($M_2$ orig. 247): $T_2$ $G_1$ 242; $G_2$ 244. — *Śloka no.:* Dn $D_1$ 25 ($Dn_2$ 24).

## 242

**1** $^{a}$) Dc ते; $T_1$ च (for तु). $T_2$ $G_{1.2.4}$ सर्वे. — $^{b}$) $B_{2-4}$ Dn $D_{4.6}$ $G_3$ ये (for ह). To avoid hiatus, $T_1$ M तेमात्यप्रवरा($M_1$ °मुख्या)श्च ह; $T_2$ $G_{1.2.4}$ कृतमूचुर्न(G1 °र्दुं न)राधिपं. — $^{c}$) $K_3$ $D_{2.3}$ महाप्रज्ञो. — $^{d}$) $D_1$ T $G_{1.2.4}$ धृतराष्ट्रे ($T_1$ °ष्ट्रं). $Ś_1$ न्यवेशयत्; $K_1$ M न्यवेदयन्.

**2** $^{a}$) $Ś_1$ $K_{1.2}$ सज्जः क्रतुवरो राजन्; T $G_{2.4}$ M सज्जं कृतं ($T_1$ °ज्जः क्रतुं; $G_3$ °ज्जं क्रतुर्; $G_4$ °ज्जः क्रतुर्; $M_1$ °ज्जीकृतं) महाराज; $G_1$ संभाराः संभृता राजन्. — $^{b}$) $Ś_1$ $K_{1.2}$ Dc प्राप्तकालं; $K_{3.4}$ $D_{1.2}$ कालं प्राप्तं; $T_1$ $G_4$ कालप्राप्तश्च; $T_2$ $G_1$ कालः प्राप्तश्च; $G_2$ काले प्राप्तश्च. — $^{c}$) $B_{2.3}$ Dn $D_{4-6}$ $G_3$ सर्वं; $G_4$ द्रव्यं (for दिव्यं). — $^{d}$) B Dn $D_{4-6}$ $G_3$ च (for सु-).

**3** $^{a}$) $B_2$ चैव (for श्रुत्वा). $K_1$ नृपश्रेष्ठ; $K_{3.4}$ $D_{1-3.5}$ $G_4$ $M_1$ नरश्रेष्ठो. — $^{b}$) $T_2$ $G_{1.2.4}$ धृतराष्ट्रो. $K_4$ नराधिपः; $T_2$ $G_1$ महीपतिः (for विशां पते). — $B_2$ om. $3^{cd}$. — $^{c}$) $D_{4.6}$ प्राज्ञा° (for आज्ञा°). $K_1$ नृप; $G_1$ नृपान्. — $^{d}$) T $G_1$ क्रतू राजन् ($T_2$ राज्ञो यज्ञः; $G_1$ यज्ञो राज्ञः) प्रवर्ततां.

**4** $D_2$ om. 4. — $^{a}$) $K_3$ $Dc_2$ प्रवर्तते. — $^{b}$) $B_1$ प्रभूतार्थं; Dn °तार्थः (!). $B_1$ °संस्कृतं; $T_2$ °सत्कृतः. — $^{c}$) $G_{2.4}$ गांधारो. — $4^{d}=23^{b}$.

**5** $^{a}$) $B_1$ प्रविष्टो. $K_3$ $B_2$ धार्तराष्ट्रः. B Dn $D_{4.6}$ $G_3$ च (for ऽभूद्). — $^{b}$) $T_1$ $G_{2.4}$ M महामनाः; $T_2$ °द्युतिः; $G_1$ °मतिः. — $^{c}$) $G_{2.4}$ भीष्मद्रोणः.

**6** $^{a}$) $T_2$ निमंत्रणाय; $G_{2.4}$ आमंत्रणार्थं. — $^{b}$) $D_2$ प्रेरयामास. $G_1$ वीर्यवान्. — $^{c}$) $K_{1.2.4}$ Dc $D_{1.2.5}$ राजेंद्रो; $K_3$ विप्रेंद्रो. — $^{d}$) $Ś_1$ च भारत; $K_{1.2}$ च पार्थिव (for तथैव च). — $^{e}$) $Ś_1$ $K_{1.2}$ Dc यथाज्ञप्तं; $K_3$ $D_{1-3}$ यथाप्रज्ञं; $K_4$ यथायज्ञं; $B_{2-4}$ Dn $D_{4.6}$ $G_{3.4}$ $M_2$ यथोद्दिष्टा.

**7** $^{a}$) $D_1$ तं तु; $G_4$ ततः (for तत्र). — $^{d}$) $K_4$ $B_{3.4}$ $D_1$ पापपौरुषान्; T $G_1$ पुरुषर्षभान्. — $^{f}$) $K_{3.4}$ Dc $D_{2.3}$ T G वने तथा; B Dn $D_{4.6}$ वने तदा ($B_2$ स्थितान्); $D_1$ च यद्वने; $D_5$ वने यथा (for महावने).

**8** $^{a}$) $B_{2-4}$ Dn $D_{4-6}$ $G_3$ स गत्वा पांडवान्सर्वान्. — $^{b}$) $K_{3.4}$ $B_4$ S (except $G_3$) [अ]थ (for [अ]भि-). B Dn $D_{4-6}$ $G_3$ च (for तान्). — $^{c}$) $Ś_1$ $K_{2.3}$ $B_2$ Dc $D_1$ महाराजो. — $^{d}$) $K_{2.4}$ $B_2$ Dc $D_5$ T $G_{1.4}$ °सत्तम.

**9** $^{a}$) $B_2$ °तमर्थौघम्; $D_4$ °तरत्नौघम्. — $^{b}$) $K_{1-3}$ Dc $D_{1-3.5}$ $G_2$ $M_2$ कुरुनंदन; $B_{2.3}$ Dn $D_{4.6}$ $G_3$ °सत्तमः.

आमन्त्रयति वो राजा धार्तराष्ट्रो जनेश्वरः ।
मनोभिलषितं राजस्तं क्रतुं द्रष्टुमर्हथ ॥ १०
ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ।
अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः ।
यजते क्रतुमुख्येन पूर्वेषां कीर्तिवर्धनः ॥ ११
वयमप्युपयास्यामो न त्विदानीं कथंचन ।
समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥ १२
श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत् ।
तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ॥ १३
अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति ।
वर्षात्त्रयोदशादूर्ध्वं रणसत्रे नराधिपः ॥ १४
यदा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः ।
आगन्तारस्तदा स्मेति वाच्यस्ते स सुयोधनः ॥ १५
शेषास्तु पाण्डवा राजन्नैवोचुः किंचिदप्रियम् ।
दूतश्चापि यथावृत्तं धार्तराष्ट्रे न्यवेदयत् ॥ १६
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः ।
ब्राह्मणाश्च महाभागा धार्तराष्ट्रपुरं प्रति ॥ १७
ते त्वर्चिता यथाशास्त्रं यथावर्णं यथाक्रमम् ।
मुदा परमया युक्ताः प्रीत्या चापि नरेश्वर ॥ १८
धृतराष्ट्रोऽपि राजेन्द्र संवृतः सर्वकौरवैः ।
हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ १९
यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः ।
तुष्येच्च यज्ञसदने तथा क्षिप्रं विधीयताम् ॥ २०
विदुरस्त्वेवमाज्ञप्तः सर्ववर्णानरिंदम ।
यथाप्रमाणतो विद्वान्पूजयामास धर्मवित् ॥ २१
भक्ष्यभोज्यान्नपानेन माल्यैश्चापि सुगन्धिभिः । C. 3. 15321 B. 3. 256. 24 K. 3. 257. 23

---

— [d]) Dc G$_4$ सहस्रशः (for ततस्ततः).

**10** [a]) Ś$_1$ K$_{1.2.4}$ B$_4$ D$_{2.3.5}$ राज्ञा (for राजन्). — K$_1$ om. 10[cd]. — [c]) Dc आमंत्र्य यदि वो राजा. — [d]) Dc$_1$ T$_2$ G$_1$ धृत° (for धार्त°). T$_2$ G$_1$ महीपतिः; G$_{2.4}$ नराधिपः (for जने°). — [e]) T$_2$ राजन् (for राज्ञः). — [f]) T$_1$ अर्हसि.

**11** [b]) D$_1$ श्रुत्वा दूतस्य भाषितं. — [c]) Ś$_1$ K$_{1.2}$ राज°; G$_1$ नर° (for नृप°). — [d]) T$_2$ यज्ञं (for राजा). — [e]) T$_2$ G$_1$ क्रतुमुख्यानां. — [f]) D$_1$ T G$_1$ M$_1$ सर्वेषां; G$_4$ गच्छेम. T$_2$ G$_1$ कीर्तिवर्धनं; G$_{2.4}$ M प्रीतिवर्धन.

**12** [b]) K$_4$ D$_{2.3}$ चेदानीं (for त्वि°).

**13** [c]) Ś$_1$ K$_{1.2.4}$ D$_{2.5}$ हि; G$_1$ M [अ]त्र (for तु). — [d]) Ś$_1$ K$_{1.2}$ कुरु° (for धर्म°).

**14** [a]) Ś$_1$ K B$_{1.4}$ D$_{2.3}$ G$_4$ °प्रदीप्ताग्नौ. — [b]) G$_4$ पाच°. — [d]) B$_1$ T G$_1$ M नर° (for रण°).

**15** [b]) K$_{1.2}$ G$_1$ पांडवाः. Dc धार्तराष्ट्रे युधिष्ठिरः. — [c]) K$_{2.3}$ D$_5$ आगंताहं (K$_3$ °ता च); G$_4$ अभ्यंतरस्. Ś$_1$ सदा (for तदा). T$_1$ [अ]स्मि (for स्म). B Dc Dn D$_{4.6}$ G$_3$ आगंताहं तदास्मीति. — [d]) T G$_4$ एव; G$_{1.2}$ M एवं (for ते स). Ś$_1$ हि (for स).

**16** [a]) Ś$_1$ K Dc D$_{1-3}$ शिष्टास्तु. — [b]) Ś$_1$ K$_{1.2}$ Dc$_2$ D$_4$ च (for [ए]व). — [c]) Ś$_1$ K$_{1.2}$ स च दूतस्; K$_3$ B$_4$ Dc D$_1$ T G$_1$ दूतश्च तद्; K$_4$ D$_{2.3}$ स दूतस्तद् (D$_3$ °स्तु); G$_{2.4}$ दूतस्त्वेतद् (for दूतश्चापि). Ś$_1$ K$_{1.2}$ तथा°; D$_5$ ह्यथा°.

**17** [a]) Ś$_1$ K$_{1.2}$ T$_1$ G$_3$ M$_2$ नृप°; T$_2$ G$_1$ द्विज° (for नर°). — Ś$_1$ om. (hapl.) 17[c]–18[d]. — [c]) Dn D$_{4.6}$ G$_3$ महाभाग. — [d]) B$_{1.4}$ D$_6$ धृत° (for धार्त°).

**18** Ś$_1$ om. 18 (cf. v.l. 17). — [a]) B$_1$ यथान्यायं. — [b]) B$_1$ यथाशास्त्रं; B$_{2-4}$ Dn D$_{4.6}$ G$_3$ यथाविधि (for यथावर्णं). B$_3$ यथातथं. — [d]) K$_4$ B Dn D$_{4-6}$ G$_3$ प्रीताश्चापि. K$_4$ B D (except D$_{1-3}$) G$_3$ नरेश्वराः; T G$_{1.2.4}$ M जनेश्वर (T °राः).

**19** [a]) D$_5$ स; G$_4$ [S]थ (for ऽपि). K$_{3.4}$ B$_1$ Dc$_2$ Dn$_{2.3}$ D$_{1.2}$ G$_3$ M$_1$ राजेंद्रः. Ś$_1$ धार्तराष्ट्रपुरे जग्मुः. — [b]) Ś$_1$ संवृताः; K$_{1.2}$ संवृतः. K$_{1.2}$ Dc T$_1$ G$_3$ M$_2$ सह (for सर्व°). — After 19[ab], Ś$_1$ ins.:

1163* प्रासादान्सर्वाश्च पाण्डवा धार्तराष्ट्रो महामनाः ।

— [c]) K$_1$ महताविष्टो.

**20** [a]) B$_1$ यथा; D$_2$ G$_1$ °सुखं (for सुखी). M$_1$ जनः सुखी (by transp.). K$_1$ सर्वं; T$_1$ सर्वे. — [b]) K$_4$ B$_1$ D$_5$ कृतः; B$_4$ क्रतुः (for क्षत्तः). Dc तत्र (for अन्न°). — [c]) K$_4$ स तुष्येद्; Dc$_2$ तुष्येत; D$_{2.3}$ तुष्टश्च; T$_2$ G$_1$ तुष्येच्च. B$_4$ Dn D$_6$ तु (for च). Ś$_1$ °सदनं. — [d]) Ś$_1$ तदा. Dc यज्ञो; D$_5$ S (except G$_3$) नीतिर् (for क्षिप्रं).

**21** [a]) B$_{1-3}$ Dn D$_{4.6}$ G$_3$ विदुरस्तु यथाज्ञाप्य; Dc °स्त्वेवमाज्ञातः. — [b]) K$_4$ B$_{1.3}$ D$_1$ अरिंदमः. — [c]) B$_3$ वृद्धान्; D$_5$ विप्रान् (for विद्वान्).

वामोर्मिर्विविधैश्चैव योजयामास हृष्टवत् ॥ २२
कृत्वा ह्यवभृथं वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ।
विसर्जयामास नृपान्ब्राह्मणांश्च सहस्रशः ॥ २३
विसर्जयित्वा स नृपान्भ्रातृभिः परिवारितः ।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

# २४३

वैशंपायन उवाच ।
प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतम् ।
जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमम् ॥ १
लाजैश्चन्दनचूर्णैश्चाप्यवकीर्य जनास्तदा ।
ऊचुर्दिष्ट्या नृपाविघ्नात्समाप्तोऽयं क्रतुस्तव ॥ २
अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिम् ।
युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः ।
नैव तस्य क्रतोरेष कलामर्हति षोडशीम् ॥ ३
एवं तत्राब्रुवन्केचिद्वातिकास्तं नरेश्वरम् ।
सुहृदस्त्वब्रुवंस्तत्र अति सर्वानयं क्रतुः ॥ ४

---

**22** a) Ś1 K1–3 B Dc Dn D1. 4. 6 G3 भक्ष्यपेयान्न‑पानेन (K1. 2 °पानानि; K3 D1 °दानानि; Dc Dn2 °दानेन); T2 G2 M2 °भोज्यान्नपानैश्च.

**23** a) N G3 ह्यावसथान्; T2 G1 [अ]प्यवभृथं; G2 M2 ह्यवभृतं. — b) =4$^{d}$. M1 °विधि (for °क्रमम्). — After 23$^{ab}$, M1 ins.:

1164* स्नातश्चावभृथो राजा धार्तराष्ट्रो महामनाः ।

— c) D1 सांत्वयामास (for °यित्वा च). D2 तु; G4 [अ]थ (for च). Ś1 K2. 4 B1 D2. 3 T1 G1 राजेंद्र; T2 राजेंद्रान्. — d) T1 M बहुविधं (for च वि°). — Ś1 T1 G2 om. (hapl.) 23$^{f}$–24$^{a}$. — f) K4 D5. 8 G4 ब्राह्मणांश्चापि (G4 °श्चैव) सर्वशः.

**24** Dc D1 om. 24$^{ab}$; Ś1 T1 G2 om. 24$^{a}$ (cf. v.l. 23). — a) B Dn D4–6 G3 विसृज्य च नृपान्सर्वान् (B4 विसर्जयामास नृपान्). — b) B1 ब्राह्मणान् *****(cf. 23$^{f}$). — c) B1. 2. 4 T G2. 4 M1 हस्तिन°. — d) Ś1 कर्णकौरवैः.

Colophon om. in Ś1 K1–3. — *Major parvan:* Dn2 T1 G2. 4 आरण्य. — *Sub-parvan:* K4 B1 Dc D1–3. 5 (all om. sub-parvan name) mention only धार्तराष्ट्रयज्ञ; B2–4 Dn D4. 6 G3, likewise, only दुर्योधन(Dn2 om. दुर्योधन)यज्ञ. — *Adhy. no.* (figures, words or both): Dn 255 (Dn2 254); D1 257; T1 G4 M (M2 *inf. lin.*) 246 (M2 orig. 248); T2 G1 243; G2 245. — *Śloka no.*: Dn1. n3 28; Dn2 D1 26.

## 243

**1** a) K4 Dn3 M1 महाराजं; D1 महाबाहुं. — b) T2 G1 अर्चितं (for अच्युतम्). — c) S (except G3) मागधाश्च (for जना°). D1 महाबाहुं; T1 महेष्वासा. — d) Ś1 Dn तुष्टुवू राजसत्तम; T G1. 2 M नागराश्च सहस्रशः (T1 M2 समंततः).

**2** a) B1 °गंधैश्च; B2 °चूर्णेन; T2 G1 °पुष्पैश्च; G2 °चूतैश्च (for °चूर्णैश्च). — b) Ś1 K1. 2 [अ]प्यकीर्यंत; K3 D1 [अ]प्यपकीर्य; B Dn D4. 6 T1 G3 विकीर्य च (B2 T1 °र्यंत); Dc अवकीर्य (with hiatus); T2 व्यकीर्यंत; G1 व्यकिरंत; G2. 4 व्यवकीर्य. Ś1 K3. 4 B D (except D5) G3 ततः; T1 तथा. — c) N (except K4 B1. 4) G3 M1 नृपाविघ्नः; G1. 4 °विघ्नान्. — d) D1 महाक्रतुः (for क्रतुस्तव).

**3** T2 om. 3$^{a}$–4$^{b}$; D1 om. 3$^{abcd}$. — b) K2. 4 B1 Dn3 D2. 3. 5 G3 वार्तिका°; T1 G1. 2. 4 M1 वादिका°; M2 वादिता°. B2 नराधिपं (for महीपतिम्). — c) G1. 2. 4 M2 यौधि°. S (except G3; T2 om.) यज्ञस्य. — e) G2 न वै (for नैव). G1 ह्येष.

**4** T2 om. 4$^{ab}$ (cf. v.l. 3); M2 om. 4$^{ab}$. — a) B1 तु ते° (for तत्रा°). — b) K2. 4 B1 D1–3. 5 वार्तिका°; Dc2 वीतिका°; T1 G2. 4 M1 वादिका°; G1 वादिन°. K2 G1 M1 महीपतिं; B1. 3 Dc1 Dn D1. 4–6 G3 जनेश्वरं; B2 नराधिपं. — c) T2 अपरे (for सुहृदस्). B4 D5 च (for तु). T1 केचिद् (for तत्र). — d) M ह्यति (for अति). Ś1 क्रतु‑

ययातिर्नहुषश्चापि मांधाता भरतस्तथा ।
क्रतुमेनं समाहृत्य पूताः सर्वे दिवं गताः ॥ ५
एता वाचः शुभाः शृण्वन्सुहृदां भरतर्षभ ।
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः ॥ ६
अभिवाद्य ततः पादौ मातापित्रोर्विशां पते ।
भीष्मद्रोणकृपाणां च विदुरस्य च धीमतः ॥ ७
अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृवत्सलः ।
निषसादासने मुख्ये भ्रातृभिः परिवारितः ॥ ८
तमुत्थाय महाराज सूतपुत्रोऽब्रवीद्वचः ।
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः ॥ ९
हतेषु युधि पार्थेषु राजसूये तथा त्वया ।
आहृतेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः ॥ १०

तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः ।
सत्यमेतत्त्वया वीर पाण्डवेषु दुरात्मसु ॥ ११
निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ ।
राजसूये पुनर्वीर त्वं मां संवर्धयिष्यसि ॥ १२
एवमुक्त्वा महाप्राज्ञः कर्णमाश्लिष्य भारत ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः ॥ १३
सोऽब्रवीत्सुहृदश्चापि पार्श्वस्थान्नृपसत्तमः ।
कदा तु तं क्रतुवरं राजसूयं महाधनम् ।
निहत्य पाण्डवान्सर्वानाहरिष्यामि कौरवाः ॥ १४
तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर ।
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥ १५
अथोत्क्रुष्टं महेष्वासैर्धार्तराष्ट्रैर्महारथैः ।

---

न्सर्वानहं स्वति; K1. 2 क्रतुः सर्वांस्त्वयं इति; K3. 4 D1–3. 5 T2 क्रतून्सर्वानियं इति; T1 इति सर्वानलंकृतान्; G1 क्रतून्सर्वानवाप्स्यसि. — After 4, T1 G1. 2. 4 M ins.:

1165* प्रवर्तितो ह्ययं राज्ञा धार्तराष्ट्रेण धीमता ।
[T1 M क्रतुः (M2 क्रतुः), प्रवर्तितो राज्ञा धार्त° etc.]

5 a) K3 Dc D1. 3 नाहुष°. B4 T2 G1 चैव (for चापि). — b) D5 मांधाता भरतर्षभ; G3 °भिरतस्तथा. — c) Ś1 K1. 2 B4 D5 T2 M एतं (for एनं). — d) B3 भूताः सर्वे; T1 पूतात्मानो (for पूताः सर्वे).

6 b) Ś1 K1. 4 B2 °र्षभः. — c) B4 विवेश च (for प्रविवेश). — d) Ś1 सुवेश्म च; T2 G1 स्वयमेव. B1 T2 G1. 4 नराधिप; M1 परंतपः.

7 a) K1 नृपः (for ततः). G3. 4 M पादान् (for पादौ). — K1 om. (? hapl.) $7^{b}$–$9^{a}$. — c) B D (except D1–3. 5) G3 °कृपादीनां. — d) S (except T1 G3) भारत (for धीमतः).

8 K1 om. 8 (cf. v.l. 7). — a) Hypermetric! Ś1 K2. 4 B4 D2. 3 कनिष्ठैश्च; T1 कनीयो हि. — b) K3. 4 B D T2 G3 °नंदनः (for °वत्सलः).

9 K1 om. $9^{a}$ (cf. v.l. 7). — a) Ś1 K2 तमुवाच (for °त्थाय). K3 B2. 4 Dn D2–4. 6 T2 G3 महाराजं; K4 तदा राजन्. — b) Ś1 K1. 2 महद् (for ऽब्रवीद्). — M2 om. (hapl.) $9^{d}$–$12^{a}$. — d) T2 G1 क्रतूत्तमः; G4 मम क्रतुः; M1 त्वया क्रतुः.

10 M2 om. 10 (cf. v.l. 9). — c) K4 B2 T2 G4 [ऽ]त्वं; D2 च (for ऽहं). Ś1 K D2. 3 M1 नृप° (for नर°). T1 आहूतोयं नृपश्रेष्ठ; G1 आहूते भरतश्रेष्ठ.

11 M2 om. 11 (cf. v.l. 9). — a) K4 महाबाहुर्; G1 महाराज. — Before $11^{cd}$, T2 G2. 3 ins. दुर्योधनः. — c) Ś1 K1. 2. 4 D2. 3 T1 एव; D4 एनं (for एतत्). K3 च त्वां वीर; B1–3 D (except D1–3. 5) G3 त्वयोक्तं हि (for त्वया वीर). — d) Dc D5 T G1 महात्मसु (for दुरा°).

12 M2 om. $12^{a}$ (cf. v.l. 9). — a) K1 नृपश्रेष्ठ; K3 वर°; B1 कुरु°; T1 महावीर; T2 G1. 2 रणे वीरान्. — c) T1 G4 महावीर (for पुनर्वीर). — d) K3 B1–3 D (except D1–3) T2 G3 त्वमेवं वर्ध°; B4 M त्वं मां वर्धाप°; T1 त्वं मां वै वर्ध°.

13 a) B D (except D1–3) T G1. 3 महाराज; G2. 4 महेष्वासः (for महाप्राज्ञः). — b) Ś1 K1. 2. 4 आश्लिष्य (for आश्लिष्य). — c) K4 क्रतुवरं; D1 कुरुश्रेष्ठं. — d) M1 भारतः (for कौरवः).

14 Dc2 D3 om. (? hapl.) 14. — a) T1 G1. 4 M अब्र° (for सोऽब्र°). B Dn D4. 6 T1 G3 कौरवांश्चापि (for सुहृद°). — b) D1 T1 G1. 2 M1 नृप(T1 नर)सत्तम. — After $14^{ab}$, S (except G3) ins.:

1166* राधेयसौबलादीन्वै धार्तराष्ट्रो महीपतिः ।
[T2 G1 °सौबलान्वीक्ष्य.]

— c) K1. 2 B3–4 G1 M नु (for तु). — d) Ś1 K1. 2 T1 महाक्रतुं.

15 b) Ś1 K1. 2 राजपुंगव; K4 राजसत्तम. — After 15, K3 B Dc Dn D2. 3 (marg. sec. m.). 4–6 G3 ins.:

1167* कीलालजं न खादेयं करिष्ये चासुरव्रतम् ।

प्रतिज्ञाते फल्गुनस्य वधे कर्णेन संयुगे ।
विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः ॥ १६
दुर्योधनोऽपि राजेन्द्र विसृज्य नरपुंगवान् ।
प्रविवेश गृहं श्रीमान्यथा चैत्ररथं प्रभुः ।
तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत ॥ १७
पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः ।
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥ १८
भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता ।
प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ॥ १९
एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप ।
अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ।
अनुस्मरंश्च संक्लेशान्न शान्तिमुपयाति सः ॥ २०
तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।
बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम् ॥ २१
धार्तराष्ट्रोऽपि नृपतिः प्रशशास वसुंधराम् ।
भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा ॥ २२
संगम्य सूतपुत्रेण कर्णेनाहवशोभिना ।
दुर्योधनः प्रिये नित्यं वर्तमानो महीपतिः ।
पूजयामास विप्रेन्द्रान्क्रतुभिर्भूरिदक्षिणैः ॥ २३
भ्रातॄणां च प्रियं राजन्स चकार परंतपः ।
निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥ समाप्तं घोषयात्रापर्व ॥

नास्तीति नैव वक्ष्यामि याचितो येन केनचित् ।

**16** $^{a}$) $K_4$ $M_3$ अथोत्कृष्टं; $G_{1.4}$ °द्दुष्टं; $G_2$ °द्दृष्टं. $T_2$ $G_1$ महाराज (for महेष्वासैर्). — $^{c}$) $K_{2.4}$ B D $G_3$ फाल्गुनस्य; $K_3$ अर्जुनस्य. — After 16, S (except $G_3$) ins :

1168* तदा प्रतिज्ञामारब्धे सूतपुत्रेण भाषिते ।

**17** $^{a}$) T M [ऽ]थ (for ऽपि). $B_2$ $D_{4.6}$ $G_{3.4}$ $M_2$ राजेंद्रो. — $^{b}$) $T_1$ विजित्य; M °हृत्य (for °सृज्य). $D_1$ M नरपुंगवः; $G_1$ च नराधिप. — $^{c}$) $K_4$ $D_{1-3}$ धीमान्; T राजन्; $G_1$ राजा (for श्रीमान्). — $^{d}$) $B_2$ (m as in text) सुखं; $B_4$ विभुः; Dc $D_{1.5}$ हरिः; T $G_{1.4}$ M तथा; $G_2$ प्रति (for प्रभुः). $K_3$ पूज्यमानश्च बंदिभिः. — $D_3$ om. (hapl.) $17^{f}$–$18^{a}$. — After 17, $K_4$ $D_{1.2}$ ins.:

1169* कर्णोऽपि स्वगृहं गत्वा मुदितो बान्धवैः सह ।
प्रददौ वित्तमर्थिभ्यो धनाध्यक्ष इवापरः ।;

while S (except $G_3$) ins. :

1170* स्वानि स्वानि महाराज भीष्मद्रोणादयो नृपाः ।

**18** $D_3$ om. $18^{a}$ (cf. v.l. 17). — $^{a}$) $K_3$ $M_1$ पांडवापि; $G_4$ °स्तु. — $^{b}$) $D_1$ °प्रणोदिताः.

**19** $^{a}$) S (except $G_3$) भूयश्चारैर्नृपश्रेष्ठ. — $^{d}$) $K_3$ अर्जुनस्य; $B_4$ विजानंतु (for विजयस्य).

**20** $^{a}$) $Ś_1$ $K_{1.2}$ धर्मपुत्रः; T $G_1$ °राजः. — $^{b}$) $K_{3.4}$ $B_{1.2}$ Dc $D_{1-3}$ $T_2$ $G_3$ $M_1$ नराधिपः. — After $20^{ab}$, S (except $G_3$) ins. :

1171* अधोमुखश्चिरं तस्थौ किं कार्यमिति चिन्तयन् ।

— $^{c}$) $B_4$ Dc $D_{1.2}$ $M_1$ अभेद्यं कवचं. $B_1$ ज्ञात्वा. — $^{e}$) $T_2$ $G_{1.4}$ सु- (for च). $K_1$ $T_2$ $G_{1.2}$ -संक्लेशं. — $^{f}$) T $G_{1.2.4}$ उपजग्मि(T1 °ज्ञि)वान्; M उपयान्नृपः (for °याति सः).

**21** $^{c}$) $Ś_1$ $K_{1.2}$ महाव्यालमृगा°; $B_3$ बहुव्यालगणा°; $D_2$ बहुव्यालसमा°. — $^{d}$) $K_3$ $D_{1.3}$ T $G_{1.2.4}$ सरः (for वनम्).

**22** $^{a}$) $Ś_1$ $K_{1.2}$ [ऽ]पि राजर्षिः; $T_2$ $G_1$ नरपतिः (for ऽपि नृपतिः). — $^{c}$) Dc transp. भ्रातृभिः and सहितो. $M_2$ वीरो. — $^{d}$) $B_2$ भीष्मद्रोणकृपादिभिः; Dc द्रोणभीष्मकृपैस्तथा.

**23** $^{a}$) $T_1$ संगत्य. — After $23^{ab}$, S (except $G_3$) ins. :

1172* सततं प्रीयमाणो वै देविना सौबलेन च ।

— $^{d}$) $Ś_1$ $K_{1.2}$ महामतिः; $K_3$ $B_{1.3.4}$ Dc Dn $D_{1.4.6}$ $G_3$ महीभृतां; $B_2$ $D_{2.3}$ महीक्षितां; $T_2$ $G_1$ $M_1$ महीपतेः.

**24** $^{a}$) $K_3$ कार्यं (for राजन्). — $^{c}$) $K_3$ वीरं; $T_2$ $G_1$ राजन्. — $^{d}$) =2. 5. $101^{b}$ : 5. 39. $51^{d}$.

Colophon. — *Major parvan:* $Ś_1$ $K_1$ $Dn_1$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_1$ Dc $D_{1-3.5}$ $M_2$ (all om. sub-parvan name) mention only धार्त( $Dc_2$ $D_3$ धृत )राष्ट्रयज्ञ (followed, except in $M_2$, by समाप्त); $B_{2-4}$ $Dn_{1.n3}$ $D_{4.6}$ $G_3$, likewise, only दुर्योधनयज्ञ (followed, except in $B_2$, by समाप्त). — *Adhy. name:* $M_2$ कर्णप्रतिज्ञानं. — *Adhy. no.* (figures, words or both): Dn 255 ($Dn_3$ 256); $D_1$ 258; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 247 ($M_2$ orig. 249); $T_2$ $G_1$ 244; $G_2$ 246. — *Śloka no.:* Dn 28; $D_1$ 27.

# २४४

जनमेजय उवाच ।
दुर्योधनं मोचयित्वा पाण्डुपुत्रा महाबलाः ।
किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि ॥ १
वैशंपायन उवाच ।
ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः ।
स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम् ॥ २
तानब्रवीत्स राजेन्द्रो वेपमानान्कृताञ्जलीन् ।
ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते ॥ ३
एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना ।
प्रत्यब्रुवन्मृगास्तत्र हतशेषा युधिष्ठिरम् ॥ ४
वयं मृगा द्वैतवने हतशिष्टाः स्म भारत ।
नोत्सीदेम महाराज क्रियतां वासपर्ययः ॥ ५
भवन्तो भ्रातरः शूराः सर्व एवास्त्रकोविदाः ।
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ॥ ६
बीजभूता वयं केचिदवशिष्टा महामते ।
विवर्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ॥ ७
तान्वेपमानान्वित्रस्तान्बीजमात्रावशेषितान् ।
मृगान्दृष्ट्वा सुदुःखार्तो धर्मराजो युधिष्ठिरः ॥ ८
तांस्तथेत्यब्रवीद्राजा सर्वभूतहिते रतः ।
तथ्यं भवन्तो ब्रुवते करिष्यामि च तत्तथा ॥ ९
इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः ।
अब्रवीत्सहितान्भ्रातॄन्दयापन्नो मृगान्प्रति ॥ १०
उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः ।
तनुभूताः स्म भद्रं ते दया नः क्रियतामिति ॥ ११
ते सत्यमाहुः कर्तव्या दयास्माभिर्वनौकसाम् ।
साष्टमासं हि नो वर्षं यदेनानुपयुञ्ज्महे ॥ १२ C. 3. 15364 B. 3. 258. 12 K. 3. 259. 12

---

## 244

**1** $^{a}$) Ś$_1$ K Dc D$_{1-3.5}$ पांडुपुत्रा; B (B$_4$ marg.) Dn D$_{4.6}$ G$_3$ मोक्षयित्वा (for मोच°). — $^{b}$) Ś$_1$ K Dc D$_{1-3.5}$ मोचयित्वा (for पाण्डु°). S (except G$_3$) महारथाः. — $^{c}$) G$_4$ किमकुर्वन् (for °कार्षुर्). — $^{d}$) G$_1$ तत्त्वमा° (for तन्ममा°). K$_4$ समा° (for ममा°). D$_5$ समाख्यातुं त्वमर्हसि; T$_1$ तन्ममाचक्ष्व सर्वशः.

**2** $^{a}$) B$_2$ नृपतिं; B$_4$ राजानं (for कौन्तेयं).

**3** D$_5$ T$_1$ om. (hapl.) 3–4. — $^{b}$) Ś$_1$ Dc वेपमानः. Dc कृतांजलिः. — $^{c}$) B$_1$ तु (for स्थ). — $^{d}$) K$_4$ इच्छते; B$_4$ इच्छथ (for इष्यते). T$_2$ G$_{2.4}$ M तत्करिष्याम्यशेषतः; G$_1$ करिष्ये तदशेषतः.

**4** D$_5$ T$_1$ om. 4 (cf. v.l. 3). — $^{b}$) G$_4$ महात्मना (for यश°). — $^{c}$) G$_1$ त्रस्ता (for तत्र).

**5** $^{b}$) B$_2$ S (except G$_3$) हतशेषाः. B$_{1-3}$ D[illegible] D$_{4.6}$ T$_1$ G$_3$ तु भारत; M$_1$ युधिष्ठिर (for स्म भा[illegible]). — $^{c}$) G$_1$ नोत्सादनं (for नोत्सीदेम). — $^{d}$) G$_1$ [illegible]

**6** $^{a}$) Ś$_1$ Dn$_2$ D$_{2.3}$ (b[illegible] पांडवर्षभ. Dc सर्वशस्त्राख्र°. — [illegible] corr.) G$_3$ भवतो. — $^{b}$)

**7** $^{a}$) B$_3$ [illegible]) Ś$_1$ °शेषाणि. [illegible]नं (for वयं). — $^{b}$) Ś$_1$ K Dc D$_{1-3.5}$ T$_2$ G$_1$ महीपते; T$_1$ विशां पते (for महामते). — $^{c}$) Ś$_1$ K$_{1.2}$ विवर्धेम महाराज; M$_1$ विवृधेमहि रा°.

**8** Ś$_1$ K$_{1.2.4}$ om. (? hapl.) 8. — $^{c}$) D$_1$ सुदुःखार्तान्. — $^{d}$) B$_1$ धर्मपुत्रो.

**9** $^{a}$) T$_2$ G$_1$ [ए]व (for [इ]ति). — $^{c}$) B$_{2-4}$ Dn D$_{4.6}$ G$_3$ यथा (for तथ्यं). — $^{d}$) K$_3$ वचस् (for च तत्). S (except G$_3$) तत्करिष्यामि वो वचः.

**10** $^{a}$) T G$_4$ M$_1$ सन् (for स). — $^{b}$) D$_6$ व्युष्टायां (for रात्र्यन्ते). S (except G$_3$) व्युष्टायां निशि पार्थिवः (M$_1$ भारतः). — $^{d}$) B$_4$ दयावांस्तान्; D$_1$ दयावंतो.

**11** $^{a}$) Dc$_2$ T$_1$ G$_4$ अस्मिन्. — $^{b}$) Dc मृगशेषितैः; T$_1$ हतशेषिभिः. — $^{c}$) K$_3$ तेत्वभूताः; B$_1$ [illegible]; [illegible] Dn D$_{2.4-6}$ [illegible]तनु; D$_1$ M$_1$ तनू°. T$_1$ अनुभूतास्तु दृश्यंते.

**12** $^{a}$) T$_2$ G$_1$ कर्तव्यं. — $^{b}$) Dc दयास्माकं; T$_2$ G$_1$ वने यदस्माभिर्. — $^{c}$) T$_2$ हृष्टमासं; G$_2$ हृष्टामांसं. T$_2$ G$_1$ वने (for हि नो). — $^{d}$) T$_2$ G$_1$ यदेतद्; G$_2$ यदेतम्; G$_4$ M यदेतान्. Ś$_1$ D$_4$ उपयुज्महे; K$_{1.2}$ °भुज्महे; K$_3$ °यत्स्महे; K$_4$ °भुंक्ष्वहे; B$_1$ °भुंज्महे; B$_{2-4}$ °भुंजते; B$_4$m G$_3$ °भुंक्ष्महे; Dc °युंजहे; Dn (Dn$_3$ before corr.) D$_5$ °युंक्ष्महे; T$_2$ °युज्महि; G$_1$ °युंक्ष्वहि; G$_{2.4}$ M$_1$ °युंज्महि; M$_2$ °युज्महि. — After 12, S (except G$_3$) ins.:

पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम् ।
मरुभूमेः शिरः ख्यातं तृणबिन्दुसरः प्रति ।
तत्रेमा वसतीः शिष्टा विहरन्तो रमेमहि ॥ १३
ततस्ते पाण्डवाः शीघ्रं प्रययुर्धर्मकोविदाः ।
ब्राह्मणैः सहिता राजन्ये च तत्र सहोषिताः ।
इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ १४
ते यात्वानुसृतैर्मार्गैः स्वन्नैः शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यमाश्रमं तापसायुतम् ॥ १५
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा ।
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा ॥ १६

इति श्रीमहाभारते आरण्यकपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ समाप्तं मृगस्वप्नभयपर्व ॥

# २४५

वैशंपायन उवाच ।
वने निवसतां तेषां पाण्डवानां महात्मनाम् ।
वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ ॥ १
फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम् ।
प्राप्तकालमनुध्यान्तः सेहुरुत्तमपूरुषाः ॥ २
युधिष्ठिरस्तु राजर्षिरात्मकर्मापराधजम् ।
चिन्तयन्स महाबाहुर्भ्रातृणां दुःखमुत्तमम् ॥ ३
न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः ।

---

1173* अर्जुनः ।

त्वदधीना वयं राजन्मा त्वमस्मान्विचारय ।
यत्रैव मन्यसे पार्थ तत्र गच्छामहे वयम् ।

**13** Before 13, S (except G3) ins. युधिष्ठिरः. — b) T G1 M श्रूयते काम्यकं वनं. — c) Dn स्थानं (!); M3 ख्यातस्. G1. 2. 4 मरुभूः शिखरं ख्यातं. — e) B Dn D4. 6 G3 M2 तत्रेमां वसतिं शिष्टां; T2 G1. 2. 4 तत्र मासान्वने शिष्टान्. — f) Ś1 K Dc D1–3. 5 वसेमहि; B1. 2 रमामहे. — After 13, T2 G1. 2. 4 ins. :

1174* वैशंपायनः ।

इत्युक्तास्ते महात्मानः पाण्डवेन महात्मना ।

**14** T2 G1. 2 om. 14ab. — b) B1 युद्ध° (for धर्म°). — e) Ś1 K1 यैस्तैस्तत्र; K3 Dc2 ये तैस्तत्र; K4 Dc1 D2. 3 T1 G4 ये ते तत्र; D1 य एतेत्र; M ये तत्रासन्. D6 ये तत्र वनवासिनः; T2 G1. 2 जग्मुस्तत्र सहोषितैः. — f) T2 G1. 2 भृत्यैर् (for प्रेष्यैर्). Dc अनुगतैस्. K1. 2. 4 B1 D1–3. 5 G3 तथा; T2 G1 च ते.

**15** a) K4 ते याताः; T1 गत्वा ते. K4 D3 T1 G3. 4 M1 सुसुखैर्; B3 M2 [अ]नुगतैर्; T2 तु रथैर्; G1 तु सुखैर्. — b) Ś1 K1. 2. 4 D1. 3 शुभैः; B1 श्वभ्रैः; D6 क्षुण्णैः; T1 स्वच्छैः; T2 G1. 2 शनैः. — c) T1 विविशुः (cf. 16a). G1 पुण्याम्; M3 रम्यम्. — d) K1 तापसावृतं; K2. 4 B Dc Dn D1. 4. 6 T G4 M2 तपसा युतं (B3 T °न्वितं; Dc1 युताः; Dc2 °न्विताः); G1. 2 तापसान्वितं; M1 तापसैर्युतं.

**16** a) T G1 M2 ददृशु° (for विविशु°); cf. 15c. — b) K4 Dc D1–3 विप्रर्षिभिस्. K4 B1 D2. 3 M2 तथा. — c) M °श्रेष्ठ. G1 तद्वनं विविशुः पार्थाः.

Colophon. — *Major parvan :* Ś1 K1. 2 Dn3 G2. 4 आरण्य. — *Sub-parvan :* K3 B4 Dc D1–3 M2 मृगस्वप्नदर्शन; K4 B2. 3 Dn D4. 6 G3 मृगस्वप्न; B1 स्वप्नदर्शन; D5 मृगस्वप्नोद्भवप्रदर्शन. — *Adhy. no.* (figures, words or both): Dn 256 (Dn3 257); D1 259; T1 G4 M (M2 *inf. lin.*) 248 (M2 orig. 250); T2 G1 245; G2 247. — *Śloka no.:* Dn D1 17.

**245**

**2** a) K1 °शिन° (for °शना°). Dn3 D4. 6 G3 [ऽ]ति; T1 [ऽ]पि (for हि). — b) K4 G4 सुखम् (for दुःखम्). — Ś1 D1 om. (hapl.) 2c–3d. — c) T2 प्राप्य- (for प्राप्त-). T2 G1. 2 °प्राप्ताः (for °ध्यान्तः). D5 प्राप्तकालमनुध्यत्वात्. — d) K4 D2. 3 T1 सेहुरुत्तमपौरुषाः; B2. 3. 4 (m as in text) Dn D4. 6 G3 सेहिरे वरपूरुषाः; T2 तेरुस्ते पुरुषर्षभाः.

**3** Ś1 D1 om. 3 (cf. v.l. 2). — c) K1. 2. 4 D5 चिंतयंस्तान्; S (except G3) अचिंतयन्.

**4** a) T1 महाराजे; T2 चिरं राजन्; G2. 4 M1 तदा राजा (for सुखं राजा). — b) Ś1 K1. 2 इवार्दितः; B1 T1 G1 M1 इवार्पितः; T2 इवाभवत्. — c) Ś1 K1. 2. 4 D2. 3 अनुपश्यन्स; D1 अनुसंपश्यन्. T1 दौरात्म्यमात्मन. [illegible]पश्यन्. — d)

C. 3. 15591
B. 3. 265. 4
K. 3. 266. 4

न चापि जानीम तवेह नाथम् ॥ ४
वयं हि मानं तव वर्धयन्तः
पृच्छाम भद्रे प्रभवं प्रभुं च ।
आचक्ष्व बन्धूंश्च पतिं कुलं च
तत्त्वेन यच्चेह करोषि कार्यम् ॥ ५
अहं तु राज्ञः सुरथस्य पुत्रो
यं कोटिकाश्येति विदुर्मनुष्याः ।
असौ तु यस्तिष्ठति काञ्चनाङ्गे
रथे हुतोऽग्निश्चयने यथैव ।
त्रिगर्तराजः कमलायताक्षि
क्षेमंकरो नाम स एष वीरः ॥ ६
अस्मात्परस्त्वेष महाधनुष्मा-
न्पुत्रः कुणिन्दाधिपतेर्वरिष्ठः ।
निरीक्षते त्वां विपुलायतांसः
सुविस्मितः पर्वतवासनित्यः ॥ ७
असौ तु यः पुष्करिणीसमीपे
श्यामो युवा तिष्ठति दर्शनीयः ।
इक्ष्वाकुराज्ञः सुबलस्य पुत्रः
स एष हन्ता द्विषतां सुगात्रि ॥ ८
यस्यानुयात्रं ध्वजिनः प्रयान्ति
सौवीरका द्वादश राजपुत्राः ।
शोणाश्वयुक्तेषु रथेषु सर्वे
मखेषु दीप्ता इव हव्यवाहाः ॥ ९
अङ्गारकः कुञ्जरगुप्तकश्च
शत्रुंजयः संजयसुप्रवृद्धौ ।
प्रभंकरोऽथ भ्रमरो रविश्च
शूरः प्रतापः कुहरश्च नाम ॥ १०
यं षट्सहस्रा रथिनोऽनुयान्ति
नागा हयाश्चैव पदातिनश्च ।
जयद्रथो नाम यदि श्रुतस्ते

---

कुलं. — $^{d}$) Ś1 K1. 2 D5 T2 G1 यच्चेह; K3. 4 Dc2 D1–3 G3. 4 जातिं च; T1 गतिं च; M1 ज्ञातिं च; M2 ज्ञातींश्च (for तत्त्वेन). Ś1 K1. 2 D5 भद्रे प्र°; T2 किं वाद्य; G1 लोको हि (for यच्चेह).

**6** $^{a}$) Ś1 K1. 2 D5 हि; Dc D3 च (for तु). — $^{b}$) =3. 250. 4$^{b}$. Dc मां (for यं). Ś1 K B1 Dn D3–5 कोटिकास्ये(K1 °श्चे)ति; B2. 3 Dc D1. 2. 6 °काश्येति; B4 °शश्राति. — After 6$^{ab}$, S (except G3) ins.:

1195* वश्येन्द्रियः सभ्यरुचिर्वरोरु
वृद्धोपसेवी गुरुपूजकश्च ।

— $^{c}$) T2 G1 अथो तु (G1 न) (for असौ तु). Ś1 K1 कांचनांके. — $^{d}$) K1. 4 T2 हुताग्निः; Dc नतोग्निः; G4 चितोग्निः. Dc2 G1 च वने; T1 स वने. — $^{e}$) B Dc Dn D3. 4. 6 G3 °यताक्षः. — $^{f}$) K3 ममर्ष; B1 D1. 2 G4 स एव (for स एष).

**7** $^{a}$) B3 तस्मात्; B4 G1 अस्मत्. D2. 3 पुरस्त्वेष. — $^{b}$) B D (except D1. 2) T2 G3 कुलिंदा°. — $^{cd}$) Ś1 M2 त्वा (for त्वां). B1. 3. 4 Dn D2. 4. 6 T1 G3 M1 विपुलायताक्षः; B2 Dc कमलायताक्षि (B2 °क्षः). B1.·2. 3m Dc Dn M1 सुपुष्पितः; B3. 4 D3 शुचिस्मितः; T1 आविस्मितः; T2 G1 भुवि स्थितः; G4 सुरस्मिते (for सुविस्मितः). K2 °वासमुख्यः. — For 7$^{cd}$, K1 subst.:

1196* सुविस्मितः पर्वतवासनिद्रो
न चापि जानीम तवेह नाथम् ।

[Prior half = (var.) 7$^{d}$. Posterior half = 4$^{d}$.]

**8** $^{c}$) Ś1 K3 B2 D2. 5 G3. 4 °राजः (for °राज्ञः). G3 सुभवस्य (for सुबलस्य); and this is the reading of some of our old ed.! — $^{d}$) B1 Dc Dn D1 एव (for एष).

**9** $^{a}$) Ś1 K B3. 4 Dc Dn1. n3 D2. 3 T2 यस्यानुचक्रं; B1. 3 Dn2 D5 °नुयात्रां; T1 G2. 4 °नुयात्र°. Cnp अनुयात्रा[:]. — $^{d}$) Dc मध्येषु; M कुंडे° (for मखे°). Dc1 तप्ता (for दीप्ता).

**10** $^{a}$) B2. 4 Dn1. n2 D2 G3 कुंजरो गुप्तकश्च; B3 कुंजरगुप्तकंठः; T2 G1. 2. 4 M1 °गुप्तकौ च. — $^{b}$) Dc2 शत्रुंतपः. K4 °पुत्रबुद्धौ; B1 T G2. 4 M1 °सुप्रबुद्धौ; B3 °सुप्रवृत्तौ; B4 °संप्रवृत्तौ; D1 °सप्रबुद्धौ; M2 °सुप्रसिद्धौ. — $^{c}$) Ś1 K1. 2 भ्रूभंगुरोथ; K4 Dn D3. 6 G3 भयंकरोथ; B4 M2 प्रभा°; T G1 शुभं°; M1 भ्रमं°. K4 D1 भ्रमरोथ विश्वः. — $^{d}$) K4 प्रतीपः; T1 परागः; G2. 4 पतंगः (for प्रतापः). K4 कुररश्च; B2 च सहश्च; B3 Dc D3 T G1. 2. 4 M2 कुहक°; B4 Dn G3 कुहन°. D3 T G1. 4 M1 नाम्ना; G2 नाम्नः.

**11** $^{b}$) T1 G2. 4 M चापि (for चैव). Ś1 K B1. 3 Dc2 D1–3. 5 T2 G1 पदातयश्च. — $^{c}$) Ś1 K2 यथा (for यदि). — $^{d}$) Ś1 K1. 2 B1. 2. 4 सुभगः. Ś1 K1 य (for स).

सौवीरराजः सुभगे स एषः ॥ ११
तस्यापरे भ्रातरोऽदीनसत्त्वा
बलाहकानीकविदारणाद्याः ।
सौवीरवीराः प्रवरा युवानो
राजानमेते बलिनोऽनुयान्ति ॥ १२
एतैः सहायैरुपयाति राजा
मरुद्गणैरिन्द्र इवाभिगुप्तः ।
अजानतां ख्यापय नः सुकेशि
कस्यासि भार्या दुहिता च कस्य ॥ १३

इति श्रीमहाभारते आरण्यकपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

# २५०

वैशंपायन उवाच ।
अथाब्रवीद् द्रौपदी राजपुत्री
पृष्टा शिबीनां प्रवरेण तेन ।
अवेक्ष्य मन्दं प्रविमुच्य शाखां
संगृह्णती कौशिकमुत्तरीयम् ॥ १
बुद्ध्याभिजानामि नरेन्द्रपुत्र
न मादृशी त्वामभिभाष्टुमर्हा ।
न त्वेह वक्तास्ति तवेह वाक्य-
मन्यो नरो वाप्यथ वापि नारी ॥ २
एका ह्यहं संप्रति तेन वाचं
ददानि वै भद्र निबोध चेदम् ।
अहं ह्यरण्ये कथमेकमेका
त्वामालपेयं निरता स्वधर्मे ॥ ३
जानामि च त्वां सुरथस्य पुत्रं C. 3. 15605 B. 3. 266. 4 K. 3. 267. 4

---

**12** [a]) Ś$_{1}$ K$_{1.2}$ Dc अस्यापरे. — [b]) T G$_{1}$ °कामित्रविदा(T$_{1}$ °चा)रणाद्याः; G$_{2.4}$ M °काभीरविचारणाद्याः. — [c]) G$_{2}$ सुवीर°. — [d]) D$_{3.5}$ °याताः (for °यान्ति).

**13** [b]) Ś$_{1}$ इवावगुप्तः; B$_{2.3}$ इवाति°; T$_{1}$ इवानुयातः. — [c]) K$_{3}$ T G$_{2.4}$ M सा जानती; Dc न जानतां; D$_{1-3}$ साजानतां. K$_{4}$ आख्याहि मे शीघ्र *****; G$_{1}$ (corrupt) सजानमख्यापय नः सुकेशि. — [d]) K$_{4}$ D$_{3}$ G$_{2.4}$ [अ]सि; T$_{2}$ [अ]थ (for च).

Colophon om. in Ś$_{1}$ K$_{1.3}$ D$_{1}$ (cf. colophon of adhy. 248). — *Major parvan:* Dn$_{2}$ G$_{4}$ आरण्य; G$_{2}$ श्रीमदारण्यकांड (!). — *Sub-parvan:* N (Ś$_{1}$ K$_{1.3}$ D$_{1}$ om.) T$_{1}$ G$_{3}$ M$_{2}$ द्रौपदीप्रमाथ. — *Adhy. name:* M$_{2}$ कोटिकाश्यवचनं. — *Adhy. no.* (figures, words or both): Dn 263 (Dn$_{3}$ 264); T$_{1}$ G$_{4}$ M (M$_{2}$ *inf. lin.*) 253 (M$_{2}$ orig. 255); T$_{2}$ G$_{1}$ 250; G$_{2}$ 252. — *Śloka no.:* Dn 13 (Dn$_{3}$ 14).

## 250

**1** [a]) G$_{2.4}$ राजपुत्रं (for °पुत्री). T$_{2}$ G$_{1}$ अथाब्रवीद्राजपुत्री तदानीं. — [b]) B$_{2}$ G$_{1}$ ऋषभेण (for प्रवरेण). — [c]) B$_{1}$ (m as in text) सर्वं (for मन्दं). G$_{1}$ शालां (for शाखां). — [d]) T$_{2}$ संगृह्य सा; G$_{2}$ संगृह्णंती.

**2** [a]) Ś$_{1}$ K$_{1.2}$ बुद्ध्या विजानामि; K$_{3}$ शुद्धाभिजा°; D$_{2.3}$ बुद्ध्याभिजानासि; T$_{1}$ अन्यापि जानामि; T$_{2}$ G$_{1.2.4}$ M अद्याभिजानीहि (M °नामि). — [b]) B$_{2}$ अभिभाष्यमाना; Dn अभिभाष्टुमर्हति (!); D$_{1}$ T$_{1}$ अभिप्रष्टुमर्हा; G$_{2.4}$ अभिद्रष्टुमर्हा. T$_{2}$ G$_{1}$ न मादृशी त्वादृशैः (G$_{1}$ त्वद्विधैः) प्रष्टुमर्हा. — [c]) Ś$_{1}$ K$_{1.2}$ B$_{1}$ Dc$_{2}$ Dn$_{2}$ D$_{2.6}$ G$_{2-4}$ त्वेव (for त्वेह). T$_{2}$ G$_{1}$ न त्वेव वक्ता हि न मेद्य वाक्यं.

**3** K$_{3}$ om. 3[ab]. — [a]) Ś$_{1}$ K$_{1.2}$ एकाप्यहं. G$_{1}$ नैव (for तेन). B$_{4}$ G$_{2}$ वाक्यं; T$_{1}$ वाचा. — [b]) K$_{4}$ Dn$_{2}$ D$_{1-3}$ T$_{1}$ ददामि. Ś$_{1}$ K (K$_{3}$ om.) D$_{1-3}$ T$_{2}$ G$_{1}$ ते; T$_{1}$ G$_{2.4}$ M तद् (for वै). — [c]) K$_{3}$ अरण्ये (om. हि); G$_{4}$ त्वरण्ये. — [d]) Ś$_{1}$ K$_{1}$ समा°; B$_{4}$ त्वां वा°; M$_{1}$ यामा° (for त्वामा°). T$_{2}$ G$_{1}$ नियता.

**4** [a]) Ś$_{1}$ K$_{1.2}$ G$_{1}$ त्वा (for त्वां). — [b]) =3. 249. 6[b]. Ś$_{1}$ K$_{2.4}$ B$_{1.4}$ Dn$_{1.}$ n$_{3}$ D$_{1.5}$ °कास्ये°; K$_{1}$ °काम्बे°; K$_{3}$m B$_{2.3}$ Dc D$_{2.3.6}$ °काव्ये° (for °काश्ये°). — K$_{3.4}$ M om. (hapl.) 4[c]–5[b]. — [c]) Ś$_{1}$ तुभ्यं हि सर्वम् (for

C. 3. 15605
B. 3. 266. 4
K. 3. 267. 4

यं कोटिकाश्येति विदुर्मनुष्याः ।
तस्मादहं शैब्य तथैव तुभ्य-
मारव्यामि बन्धून्प्रति तन्निबोध ॥ ४
अपत्यमस्मि द्रुपदस्य राज्ञः
कृष्णेति मां शैब्य विदुर्मनुष्याः ।
साहं वृणे पञ्च जनान्पतित्वे
ये खाण्डवप्रस्थगताः श्रुतास्ते ॥ ५
युधिष्ठिरो भीमसेनार्जुनौ च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
ते मां निवेश्येह दिशश्चतस्रो
विभज्य पार्था मृगयां प्रयाताः ॥ ६
प्राचीं राजा दक्षिणां भीमसेनो
जयः प्रतीचीं यमजावुदीचीम् ।
मन्ये तु तेषां रथसत्तमानां
कालोऽभितः प्राप्त इहोपयातुम् ॥ ७
संमानिता यास्यथ तैर्यथेष्टं
विमुच्य वाहानवगाहयध्वम् ।
प्रियातिथिर्धर्मसुतो महात्मा
प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ॥ ८
एतावदुक्त्वा द्रुपदात्मजा सा
शैब्यात्मजं चन्द्रमुखी प्रतीता ।
विवेश तां पर्णकुटीं प्रशस्तां
संचिन्त्य तेषामतिथिस्वधर्मम् ॥ ९

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

# २५१

वैशंपायन उवाच ।
अथासीनेषु सर्वेषु तेषु राजसु भारत ।
कोटिकाश्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत् ॥ १
यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः ।

तथैव तुभ्यम्). — $^d$) $Ś_1$ $K_{1.2}$ ते ; $T_1$ $G_1$ तान् (for तन्). B D (except $D_{1-8}$) आख्यामि बंधून्प्रथितं कुलं च; $T_2$ आख्यामि बंधुप्रतिमं निबोध.

**5** $K_{3.4}$ M om. $5^{ab}$ (cf. v.l. 4). — $^b$) $Ś_1$ $B_1$ मा (for मां). — $^c$) $G_{2.4}$ M वृता (for वृणे). $Dn_{2}$. $n_3$ पतीन्वै (for पतित्वे).

**6** $^a$) M भीमसेनोर्जुनश्च.

**7** $^a$) $Ś_1$ $K_1$ भीमसेनोप्यवाचीं (for दक्षिणां भी°). — $^b$) $G_1$ जिष्णुः (for जयः). $T_2$ $G_1$ च यमा° (for यमजा°). — $^d$) $B_1$ कालोचितः; T $G_1$ कालोतीतः; $G_{2.4}$ M कालो बहु. $D_1$ काल्लोभीतः प्रातरिहोपयातुं.

**8** $^a$) $Ś_1$ संमानिताश्चाप्यथ वा यथेष्टं. — $^b$) B Dc Dn $D_{2.4.6}$ $G_3$ अवरोह($D_2$ °प)यध्वं ; M अवगाहयंतु. — $^d$) $T_1$ $G_{2.4}$ M सर्वान् (for युष्मान्).

**9** $^b$) $B_1$ प्रशस्ता (for प्रतीता). — $^c$) $B_{2.3}$ Dn $D_{4.6}$ $G_3$ पर्णशालां; $D_{2.3}$ पत्रकुटीं. — $^d$) $Dn_1$. $n_2$ $D_6$ $G_3$ अतिथिस्वधर्मं. The reading अतिथित्वमर्थं (for °स्वधर्मम्) of some old printed ed. was *not* found in any MS. collated!

Colophon. — *Major parvan:* $Ś_1$ $K_2$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $Ś_1$ K B Dc Dn $D_{1.2.4-6}$ $G_3$ $M_2$ द्रौपदीप्रमाथ. — *Adhy. name:* $B_4$ द्रौपदीवाक्यं. — *Adhy. no.* (figures, words or both): Dn 264 ($Dn_3$ 265); $D_1$ 266; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 254 ($M_2$ orig. 256); $T_2$ $G_1$ 251; $G_2$ 253. — *Śloka no.:* Dn 9; $D_1$ 23.

## 251

**1** $^a$) $K_3$ $B_{1.3.4}$ D (except $D_{1-3.5}$) S (except $G_{2.4}$) तथा° (for अथा°). — After $1^{ab}$, $B_{2-4}$ D (except $D_{1.2}$) ins.:

1197* यदुक्तं कृष्णया सार्धं तत्सर्वं प्रत्यवेदयत् ।

सीमन्तिनीनां मुख्यायां विनिवृत्तः कथं भवान् ॥ २
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ३
दर्शनादेव हि मनस्तया मेऽपहृतं भृशम् ।
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी ॥ ४

कोटिकाश्य उवाच ।

एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पञ्चानां पाण्डुपुत्राणां महिषी संमता भृशम् ॥ ५
सर्वेषां चैव पार्थानां प्रिया बहुमता सती ।
तया समेत्य सौवीर सुवीरान्सुसुखी व्रज ॥ ६

वैशंपायन उवाच ।

एवमुक्तः प्रत्युवाच पश्यामो द्रौपदीमिति ।
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः ॥ ७
स प्रविश्याश्रमं शून्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ८
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामासि तेऽपि कच्चिदनामयाः ॥ ९

द्रौपद्युवाच ।

कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः ।
अहं च भ्रातरश्चास्य यांश्चान्यान्परिपृच्छसि ॥ १० C. 3. 15622 B. 3. 267. 12 K. 3. 268. 12

[ $D_{5}$ वीर (for सार्धं). $B_{2}$ समवर्धयत्; $D_{5}$ कोटिकोब्रवीत् (for प्रत्य°). ]
— $D_{5}$ cont.:

1198* वाक्यं यथार्थं तच्छ्रुत्वा कोटिकाश्यमुखोद्गतम् ।

On the other hand, after $1^{ab}$, $G_{2.4}$ ins.:

1199* कोटिकाश्यो जगामाशु सिन्धुराजनिवेशनम् ।

— $^{c}$) MSS. °कास्य°, °काख्य°, °काश्व°, etc. $T_{2}$ $G_{1.2.4}$ श्रोतुं (for श्रुत्वा). — $^{d}$) A few MSS. सैब्यं.

**2** $^{a}$) $K_{3.4}$ Dc $D_{1-3}$ यदा वाचो; $T_{1}$ पांचालीति; $T_{2}$ यदुवाच. — $^{b}$) T निरतं; $G_{1}$ नियतं (for रमते). — $^{c}$) $K_{3}$ $Dc_{2}$ $T_{2}$ मुख्यानां; $B_{4}$ मुख्या सा; $D_{1}$ मुख्येयं. — $^{d}$) $T_{2}$ विनियुक्तः. $K_{3}$ भवेत्; $D_{1}$ तदा; $G_{2}$ पुमान् (for भवान्).

**3** $^{a}$) Dc स्त्रिया; $T_{2}$ $G_{1.2.4}$ स्त्रियं. $Ś_{1}$ $K_{1}$ [ऽ]प्यन्या; $B_{1}$ [ऽ]न्या मे; $T_{2}$ $G_{1}$ मन्ये; $G_{2}$ मेन्यां.

**4** $^{ab}$) $Ś_{1}$ $K_{2}$ मनो यया; $K_{1.4}$ $D_{1.3.5}$ मनोनया (for मनस्तया). $T_{1}$ M प्रसभं (for ऽपहृतं). $Ś_{1}$ $K_{1.2}$ बलात् (for भृशम्). — $^{c}$) $D_{4.6}$ $T_{1}$ $G_{2.4}$ M तां ममाचक्ष्व; $G_{1}$ नाममाचक्ष्व (corrupt). — $^{d}$) $T_{1}$ $G_{4}$ $M_{2}$ मानुषीं.

**5** $Ś_{1}$ $K_{4}$ $D_{1.3}$ कोटिकास्य उ° ($Ś_{1}$ om. उ°); $K_{1}$ °काश्वः; $K_{2.3}$ B Dc Dn $D_{4.6}$ $G_{3}$ कोटिक उ°; $D_{2}$ °काख्य उ°; M शैब्यः. — $^{b}$) $D_{2}$ राजपत्नी. $M_{1}$ तर° (for यश°). — $^{d}$) $B_{4}$ $T_{2}$ $G_{1}$ transp. महिषी and संमता.

**6** $^{a}$) $B_{4}$ $T_{1}$ $G_{2.4}$ $M_{1}$ om. च. — $^{b}$) $T_{2}$ $G_{1}$ या वै प्रियतमा सती. — $^{c}$) $Ś_{1}$ यथा; $K_{2}$ तथा (for तया). $G_{1}$ सौवीरान्. — $^{d}$) $Ś_{1}$ $K_{1.2}$ सुवीरां; $B_{1.4}$ Dc $T_{1}$ $G_{2.4}$ सौवीरान्; $G_{1}$ प्रयाहि. $K_{1.2}$ सुमुखीं; $K_{4}$ $B_{1.4}$ Dc $D_{2.5}$ सुमुखी; $G_{2}$ सुकृती. $B_{2.3}$ Dn $D_{4.6}$ $G_{3}$ सौवीराभिमुखो व्रज.

**7** $T_{2}$ $G_{1}$ om. the ref. — $^{b}$) $K_{3}$ पश्याम; $B_{2.4}$ $D_{1}$ $G_{1.3}$ पश्यामि; $T_{2}$ नापश्यं. $K_{1.2}$ प्रति (for इति). — $^{c}$) $Ś_{1}$ K Dc $D_{1-3.5}$ $T_{2}$ $G_{1}$ नृपः (for पतिः). $D_{5}$ सौवीरसिंहानां; $T_{1}$ $G_{2}$ सुवीरसिंधूनां.

**8** $^{a}$) $T_{1}$ तत्; $T_{2}$ $M_{1}$ सं- (for स). $B_{1.3.4}$ Dn $D_{4.6}$ $G_{3}$ M पुण्यं (for शून्यं). $G_{2.4}$ स प्रविश्याश्रमपदं. — $^{b}$) $Ś_{1}$ $K_{1.2}$ सिंहीगोष्ठ-; $T_{1}$ सिंहपत्नीं; $G_{1}$ $M_{1}$ सिंहकोष्ठं; $G_{4}$ सिंहकोष्ठ-. $B_{4}$ (m as in text) मृगो (for वृको). — $^{c}$) $Ś_{1}$ $K_{1.2}$ आत्मनः. $D_{1}$ मुदितः (for सप्तमः). $B_{4}$m आत्मनाभिमुखः कृष्णाम्; $T_{2}$ $G_{1.2}$ आत्मना सप्तदशमः. — $^{d}$) $T_{2}$ $G_{1.2}$ कृष्णां (for इदं). $B_{4}$ इदमित्यब्रवीद्वचः; $T_{1}$ $G_{4}$ M अथोवाच हसन्निव ($G_{4}$ महीपते).

**9** $D_{4}$ om. 9. — $^{b}$) $B_{1}$ $G_{4}$ हि (for ऽपि). — $^{c}$) $T_{2}$ येषां कुशलकामासीत्. — $^{d}$) T $G_{4}$ तेषां (for तेऽपि). T $G_{2.4}$ अनामयं. $G_{1}$ तेषां संप्रत्यनामयं.

**10** $K_{2}$ $B_{1}$ Dc Dn $D_{2.4-6}$ ins. after the ref.: $B_{2-4}$ ins. after 10: T G ins. after 1201*:

1200* अपि ते कुशलं राज्ये राष्ट्रे कोशे बले तथा ।
कच्चिदेकः शिबीनाढ्यान्सौवीरान्सह सिन्धुभिः ।
अनुतिष्ठसि धर्मेण ये चान्ये विदितास्त्वया ।

[ (L. 1) Dn राजन् (!); T G राष्ट्रे (for राज्ये). T G तथा कोशे च सैंधव. — (L. 2) $D_{5}$ अद्य; T $G_{1.2.4}$ सर्वान् (for आढ्यान्). $Dc_{2}$ सह बंधुभिः; T $G_{1.2.4}$ चाप्यकंटकान्. — (L. 3) T G विजिताः. $G_{1}$ स्मृताः (for त्वया). ]
— $D_{1}$ om. 10–11. — $^{a}$) $G_{4}$ राजन् (for राजा). — $^{b}$) $Ś_{1}$ K $Dc_{2}$ $D_{2.3.5}$ धर्म° (for कुन्ती°). — $^{d}$) $Ś_{1}$ K $Dc_{2}$ $D_{2.3.5}$ अनु° (for परि°). — After 10, $B_{2-4}$ ins. 1200*; while T G ins.:

1201* अपि त्वं कुशली राजन्सहामात्यः सहप्रजः ।,

followed by 1200*.

C. 3. 25623 B. 3. 267 13 K. 3. 268. 13 पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान्पञ्चाशतं चैव प्रातराशं ददानि ते ॥ ११
ऐणेयान्पृषतान्न्यङ्कून्हरिणाञ्शरभाञ्शशान् ।
ऋश्यान्रुरूञ्शम्बरांश्च गवयांश्च मृगान्बहून् ॥ १२
वराहान्महिषांश्चैव याश्चान्या मृगजातयः ।
प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः ॥ १३

जयद्रथ उवाच ।

कुशलं प्रातराशस्य सर्वा मेऽपचितिः कृता ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ १४
गतश्रीकांश्च्युतान्राज्यात्कृपणान्गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ १५
न वै प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते ।
युञ्जानमनुयुञ्जीत न श्रियः संक्षये वसेत् ॥ १६
श्रिया विहीना राज्याच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ १७
भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि ।
अखिलान्सिन्धुसौवीरानवाप्नुहि मया सह ॥ १८

वैशंपायन उवाच ।

इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी ॥ १९
अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैन्धवम् ॥ २०
सा काङ्क्षमाणा भर्तॄणामुपयानमनिन्दिता ।
विलोभयामास परं वाक्यैर्वाक्यानि युञ्जती ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

---

**11** D1 om. 11 (cf. v.l. 10). — a) B2 T G1. 2. 4 त्वम् (for [इ]दम्). — c) K1 D3 पंचशतं. Ś1 चापि; K1. 2 चास्य (for चैव). T1 G1 मृगान्हत्वा मृगीं चैव; T2 मृगान्हतान्मृतांश्चैव; G2. 4 मृगान्विता मृगीश्चैव. — d) G4 प्रातराशीन्. K3. 4 D2. 3 T G1. 2. 4 ददामि.

**12** a) Ś1 K1. 2 Dc D3 एणेयान्. T1 न्यंकुकांश्चैव (for पृषतान्न्यङ्कून्). — b) M1 शलभान्. G4 शकान्; M1 शलान् (for शशान्). — c) Ś1 K1. 2 B2. 3 Dc1 D3. 5 ऋष्यान्; K3 B1. 4 Dc2 Dn D1. 2. 4. 6 T G3 ऋक्षान्. Ś1 K1 कुरूञ् (for रुरूञ्)! Ś1 K1. 2 शंभरांश्च; D3 M1 च सृमरान्; T1 M2 वराहांश्च; T2 G1. 2. 4 च चमरान्.

**14** b) Ś1 सर्वस्य; K1. 2 सर्वापि; D3 सदा मे; D5 सर्वा च (for सर्वा मे). B Dc Dn D4. 6 G3 सर्वं मे दित्सितं (B1 तृषितं) त्वया. — c) K4 आरुह्य.

**15** a) T2 G1. 2. 4 हत° (for गत°). B Dn D4. 6 हृतराज्यान्. — b) D5 नष्ट° (for गत°). — c) K3 T2 आरण्य°. — d) D1 इहा° (for त्वम°).

**16** a) K4 B1. 3 Dn1. n2 T2 G3 नैव; G1. 2. 4 न तु; M न हि (for न वै). Ś1 पूज्या; K1 G4 प्रज्ञा. M गतश्रीकान्. T1 न तु प्राज्ञान्गतश्रीकान्. — b) Ś1 K1. 2 B1. 3. 4 उपभुंजते; K3 Dc °युंजसे (K3m °भुंजसे); G3 °युज्यते. T1 M भर्तॄन्समुपयुं(T1 °भुं)जते. — c) Ś1 K1. 2 भुंजानम्. K1. 3 Dc2 D1–3 T1 M उपयुं(T1 °भुं)जीत. — d) B1 श्रिया न; B4 श्रियश्च (for न श्रियः). Ś1 संक्षयं; B4 Dn2 D1. 2. 4. 6 प्रक्षये; T2 संक्षयो. T2 भवेत् (for वसेत्).

**17** a) B3. 4 विहीनान्. Dn राष्ट्राच्च (!). — b) S (except G3) च्युतास्ते (for विनष्टाः). — c) B1 अनष्टे (for अलं ते).

**18** 18a = 1. 67. 1c, etc. — b) K3. 4 Dc2 D1–3 T1 G4 M1 त्यजैतान्. — d) B1. 4 तानाप्नुहि; B2. 3 Dn D4. 6 T2 G3 आप्नुहि त्वं; G1. 2. 4 प्राप्नुहि त्वं (for अवाप्नुहि).

**19** K4 om. 19. — d) G1 क्रोधात् (for देशात्). B3. 4 Dc सा (for स-).

**20** a) Ś1 K Dc D1–3. 5 अनादृत्य तु (K4 Dc च); B1. 3 अवमन्यास्य. T1 G2. 4 M transp. तद् and वाक्यं. — b) S (except G3) तदाक्षिप्य (for आक्षिप्य च). — c) M2 वाक्यं (for कृष्णा). — d) T1 वधस्वेति; T2 G1. 4 त्यज° (for लज्ज°). B4 लज्जसे नेति सैंधवं; Dc2 न लज्जस्वेति सैंधव.

**21** b) B1–3 Dc Dn D3 उपयातम्; D5 उपस्थानम्. — c) G1. 2 विलंब° (for विलोभ°). Ś1 K B1. 4 Dn3 D1–6 परैर् (for परं). — d) T [अ]योजयत्; M योजयत् (for युञ्जती). G1. 2. 4 वाक्यैर्वाक्यं न योजयत् (G2 न्ययोजयेत्). — After 21, T G1. 2. 4 ins.:

1202* द्रौपदी।

नैवं वद महाबाहो न्याय्यं त्वं न च मन्यसे।
पाण्डूनां धार्तराष्ट्राणां स्वसा चैव कनीयसी।
दुःशला नाम तस्यास्त्वं भर्ता राजकुलोद्भवः।
मम भ्राता च न्याय्येन त्वया रक्ष्या महारथ।

# २५२

वैशंपायन उवाच ।
सरोषरागोपहतेन वल्गुना
सरागनेत्रेण नतोन्नतभ्रुवा ।
मुखेन विस्फूर्य सुवीरराष्ट्रपं
ततोऽब्रवीत्तं द्रुपदात्मजा पुनः ॥ १
यशस्विनस्तीक्ष्णविषान्महारथा-
नधिक्षिपन्मूढ न लज्जसे कथम् ।
महेन्द्रकल्पान्निरतान्स्वकर्मसु
स्थितान्समूहेष्वपि यक्षरक्षसाम् ॥ २
न किंचिदीड्यं प्रवदन्ति पापं
वनेचरं वा गृहमेधिनं वा ।
तपस्विनं संपरिपूर्णविद्यं
भषन्ति हैवं श्वनराः सुवीर ॥ ३
अहं तु मन्ये तव नास्ति कश्चि-
देतादृशे क्षत्रियसंनिवेशे ।
यस्त्वाद्य पातालमुखे पतन्तं
पाणौ गृहीत्वा प्रतिसंहरेत ॥ ४
नागं प्रभिन्नं गिरिकूटकल्प-
मुपत्यकां हैमवतीं चरन्तम् ।
दण्डीव यूथादपसेधसे त्वं B. 3. 15643 B. 3. 268. 5 K. 3 269. 5

---

धर्मिष्ठानां कुले जातो न धर्मं त्वमवेक्षसे ।
वैशंपायनः ।
इत्युक्तः सिन्धुराजोऽपि वाक्यमुत्तरमब्रवीत् ।
राज्ञां धर्मं न जानीषे स्त्रियो रत्नानि चैव हि ।
साधारणानि लोकेऽस्मिन्प्रवदन्ति मनीषिणः ।
स्वसा च स्वस्त्रिया चैव भ्रातृभार्या तथैव च ।
संगृह्णन्ति च राजानस्ताश्च तत्र नृपोद्भवाः ।

[(L. 1) T$_1$ मवं (for नैवं). T$_2$ बुध्यसे (for मन्यसे). — (L. 3) T$_2$ राजकुलोद्वह. — (L. 5) G$_1$ अपे° ; G$_4$ उपे° (for अवे°). — (L. 10) T$_2$ न संगृह्णंति राजानस्. G$_4$ नृपोत्तमाः.]

Colophon. — *Major parvan:* Ś$_1$ K$_{1.2}$ Dn$_2$ G$_{2.4}$ आरण्य. — *Sub-parvan:* Ś$_1$ K$_{1.3.4}$ B D G$_3$ द्रौपदी-प्रमाथ. — *Adhy. name:* M$_2$ जयद्रथप्रार्थनं. — *Adhy. no.* (figures, words or both): Dn 265 (Dn$_3$ 266); D$_1$ 267; T$_1$ G$_4$ M (M$_2$ *inf. lin.*) 255 (M$_2$ orig. 257); T$_2$ G$_1$ 252; G$_2$ 254. — *Śloka no.:* Dn$_1$ 23; Dn$_2$ 22; Dn$_3$ 24; D$_1$ 21.

## 252

**1** Dc om. the ref. — $^{a}$) Ś$_1$ K$_4$ सा रागरोषोपहतेन ; K$_{1.2}$ सरागरोषोप° ; K$_3$ B$_1$ सा रागदोषोप° ; B$_{2-4}$ D$_{1.2}$ सा रोषरागोप° ; Dc D$_{3.5}$ सा रागरोषाप° ; T G$_{1.4}$ सरोषवाचोपहितेन ; G$_2$ M सा रोषवाचोपहतेन. K$_{1.2}$ G$_1$ फल्गुना ; D$_2$ चक्षुषा (for वल्गुना). — $^{b}$) Ś$_1$ K$_3$ B$_1$ D$_3$ M$_2$ नतो( D$_3$ तथो- ; M$_2$ ततो )न्नतभ्रुणा ; D$_2$ G$_{2.4}$ ततो( D$_2$ °थो )न्नतभ्रुवा ; T$_1$ ततो नतभ्रूः. — $^{c}$) Ś$_1$ K$_{1-3}$ D$_{2.5}$ G$_1$ M$_1$ विस्फूर्ज्य ; B$_1$ G$_4$ विस्फार्य. Ś$_1$ K B$_1$ D$_3$ °राष्ट्रजं ; Dc D$_1$ °राजं ; T$_1$ °राष्ट्रकं.

**2** $^{a}$) Ś$_1$ K$_{1-3}$ तीक्ष्णमुखान्. Ś$_1$ K D$_{1-3.5}$ महोरगान् (for महारथान्). — $^{b}$) B$_{1-3}$ Dc$_1$ Dn D$_{4.6}$ G$_3$ अभिब्रुवन् (for अधिक्षिपन्). B$_3$ वि- (for न). — $^{c}$) K$_4$ नरेंद्र° ; T$_2$ G$_{1.2}$ यमेंद्र° (for महेन्द्र°). D$_3$ S (except G$_3$) स्वधर्मे (for स्वकर्मसु). — $^{d}$) D$_1$ T$_2$ स्थिरान्. Dc समूह्ये (for समूहे).

**3** $^{a}$) K$_4$ B$_4$m कंचिद्. K$_3$ अन्यं ; B$_1$ ईड्याः ; B$_4$m इष्टं ; T$_1$ एवं ; G$_1$ M आर्यं ; G$_{2.4}$ आर्याः (for ईड्यं). Ś$_1$ K Dc D$_{2.3}$ (before corr.) G$_3$ पापा ; D$_3$ (after corr.).$_5$ पार्था ; T G$_1$ वाचा (for पापं). — $^{b}$) Ś$_1$ D$_1$ °मेधिनां. — $^{d}$) K$_3$ B$_1$ G$_1$ भवंति ; G$_{2.4}$ भजंति (for भषन्ति). Ś$_1$ K$_{1.2}$ श्वानाः ; K$_3$ नैवं ; B$_1$ नैव ; T G$_{1.2.4}$ चैवं ; M चैव (for हैवं). B$_3$ T$_2$ स्वनराः ; T$_1$ शुनकाः ; G$_{1.4}$ च नराः ; G$_2$ सुनराः (for श्वनराः).

**4** $^{c}$) B$_{1.3}$ Dn D$_4$ G$_3$ यस्त्वद्य ; T G$_{1.2.4}$ M यस्त्वां हि. — $^{d}$) Ś$_1$ K$_{1.2}$ पाणिं. G$_2$ प्रतिसंरभेत.

**5** $^{a}$) Ś$_1$ K D$_{1.3.5}$ °मात्रम् ; S (except G$_3$) °कायम् (for °कल्पम्). — $^{b}$) K$_1$ अपत्यकां ; K$_4$ उत्पत्तिकां ; Dc उपेत्य तां ; S (except G$_3$) उपेत्य गां. T G$_{1.2.4}$ हैमवतं. — $^{c}$) K$_{1.2}$ B$_{1.4}$ D$_5$ अपसेवसे ; K$_4$ D$_1$ अपकर्षसे ( D$_1$ °सि ) ; B$_2$ Dn$_1$ D$_{2.4.6}$ G$_3$ अपसेधसि ; M अवधावसे. T$_1$ दंडेन

C. 3. 15643
B. 3. 268. 5
K. 3. 269. 5

यो जेतुमाशंससि धर्मराजम् ॥ ५
बाल्यात्प्रसुप्तस्य महाबलस्य
सिंहस्य पक्ष्माणि मुखाल्लुनासि ।
पदा समाहत्य पलायमानः
क्रुद्धं यदा द्रक्ष्यसि भीमसेनम् ॥ ६
महाबलं घोरतरं प्रवृद्धं
जातं हरिं पर्वतकन्दरेषु ।
प्रसुप्तमुग्रं प्रपदेन हंसि
यः क्रुद्धमासेत्स्यसि जिष्णुमुग्रम् ॥ ७
कृष्णोरगौ तीक्ष्णविषौ द्विजिह्वौ
मत्तः पदाक्रामसि पुच्छदेशे ।
यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां
जघन्यजाभ्यां प्रयुयुत्ससे त्वम् ॥ ८
यथा च वेणुः कदली नलो वा
फलन्त्यभावाय न भूतयेऽऽत्मनः ।
तथैव मां तैः परिरक्ष्यमाणा-
मादास्यसे कर्कटकीव गर्भम् ॥ ९

जयद्रथ उवाच ।

जानामि कृष्णे विदितं ममैत-
द्यथाविधास्ते नरदेवपुत्राः ।
न त्वेवमेतेन विभीषणेन
शक्या वयं त्रासयितुं त्वयाद्य ॥ १०
वयं पुनः सप्तदशेषु कृष्णे
कुलेषु सर्वेऽनवमेषु जाताः ।
षड्भ्यो गुणेभ्योऽभ्यधिका विहीना-
न्मन्यामहे द्रौपदि पाण्डुपुत्रान् ॥ ११
सा क्षिप्रमातिष्ठ गजं रथं वा
न वाक्यमात्रेण वयं हि शक्याः ।
आशंस वा त्वं कृपणं वदन्ती
सौवीरराजस्य पुनः प्रसादम् ॥ १२

द्रौपद्युवाच ।

महाबला किं त्विह दुर्बलेव

---

युद्धादवसेधसि त्वं; $T_2$ $G_{1.2.4}$ दंडीव दंडेन हि धावसि ($T_2$ $G_2$ °से) त्वं. — d) $M_1$ धर्मपुत्रं.

**6** a) $D_1$ $T_1$ $G_1$ $M_1$ बलात् (for बाल्यात्). $B_{1.3}$ महाधनस्य. — c) $Ś_1$ $K_1$ पलायमानं ; $T_1$ पलायसे त्वं.

**7** a) $Ś_1$ $Dc_2$ $D_5$ $T_1$ $G_{1.4}$ घोरतमं. $Ś_1$ $K_{1.2}$ च (for प्र-). — b) $T_1$ $G_{1.4}$ M °कंदरासु. — d) $Ś_1$ $K_{1-3}$ आपत्स्यसि; $K_4$ $D_3$ आपश्य° ; B Dc Dn $D_{2.4-6}$ $G_3$ आयोत्स्य° ; $D_1$ $T_1$ आशंस° (for आसेत्स्य°). $K_{1.2}$ मूढ जिष्णुं (for जिष्णुमुग्रम्).

**8** a) $T_2$ $G_{1.4}$ $M_2$ तीक्ष्णो° (for कृष्णो°). $K_4$ दीप्तविषौ; Dc Dn $D_{4-6}$ तीक्ष्णमुखौ; $D_{2.3}$ दीप्तमुखौ; $G_2$ तीव्रभुजौ; $G_4$ तीव्रविषौ. $Ś_1$ $K_{1.2}$ सुजिह्वौ; $G_{2.4}$ भुजंगमौ. — b) $T_1$ मुग्धः; $T_2$ $G_{1.2.4}$ M मत्तौ. $G_1$ पुच्छमूले. — c) $K_4$ $D_{1-4}$ यत् (for यः).

**9** a) $D_3$ (by corr.) कदलीदले च; $T_1$ M कदलीदलो वा. — b) $Ś_1$ $K_{1.3.4}$ Dc $Dn_2$ $D_{2-4.6}$ $G_3$ फलत्य°. $Ś_1$ $K_{1.2}$ $B_4$ $D_3$ (by corr.) पुनः (for ऽऽत्मनः). $T_1$ $G_{1.2.4}$ M पराभवायैव फलं बिभर्ति. — d) $Ś_1$ $K_{1.2}$ कर्कं (for गर्भम्).

**10** b) S (except $G_3$) यथागता ($T_1$ °विधा) द्रौपदि पांडुपुत्राः. — c) $T_1$ बिभर्षि तेन (for विभीषणेन). — d) $G_1$ भवत्या (for त्वयाद्य).

**11** $K_3$ om. 11. $D_2$ transp. 11 and 12. — a) $Ś_1$ त्विमे (for पुनः). — c) $B_1$ [ऽ]प्यधिकाः; Dc $G_3$ [ऽ]भ्यधिकान्; $D_2$ $T_2$ $G_2$ M [ऽ]भ्यधिकं; $T_1$ $G_{1.4}$ ह्यधिकं. $K_{1.4}$ न हीनान्; $B_1$ [अ]वहीनान्; $D_{1.2}$ निहीनान् (for विही°). — d) $B_1$ संध्या° (for मन्या°).

**12** Before 12, $Ś_1$ $K_{1.2}$ $D_{2.5}$ ins. चित्रसेन उ°; $K_3$ कोटिः. — $D_2$ transp. 11 and 12. — a) $Ś_1$ K Dc $D_{1.3.5}$ एहि त्वमातिष्ठ रथं गजं वा. — b) S (except $T_2$ $G_3$) स्म (for हि). — c) $B_1$ आशंस वाक्यं; $T_1$ आशंससे त्वं; $M_2$ आशाससे त्वा (for आशंस वा त्वं). — $Ś_1$ om. (hapl.) $12^d$–$13^a$. — d) $B_{2-4}$ सौवीरराज्यस्य; $M_2$ सुवीरराजस्य. $K_2$ पुरः; $D_2$ हि नः; $D_5$ कुरु (for पुनः). $G_2$ प्रवादम्.

**13** $Ś_1$ om. $13^a$ (cf. v.l. 12); $M_2$ om. the ref. — a) $T_2$ $G_4$ महाबलाः. M न्विह. T $G_2$ वा; $G_{1.4}$ M वै (for [इ]व). — b) $K_4$ पंचाल°; $B_{3.4}$ $D_6$ $G_3$ $M_2$ सुवीर°; T $G_{1.2.4}$ पांचाल° (for सौवीर°). $K_4$ $T_1$ $G_{1.2.4}$ सुताहम्; Dc नताहम् (for मताहम्). $Ś_1$ $K_{1.2}$ अस्य; $D_3$ अद्य (for अस्मि). — c) $K_{3.4}$ B D $G_3$ नाहं; $T_1$ कथं; $T_2$ $G_{1.2.4}$ साहं (for याहं). $Ś_1$ $K_{1.2}$ T $G_{1.2.4}$ प्रमादादिह.

सौवीरराजस्य मताहमस्मि ।
याहं प्रमाथादिह संप्रतीता
सौवीरराजं कृपणं वदेयम् ॥ १३
यस्या हि कृष्णौ पदवीं चरेतां
समास्थितावेकरथे सहायौ ।
इन्द्रोऽपि तां नापहरेत्कथंचि-
न्मनुष्यमात्रः कृपणः कुतोऽन्यः ॥ १४
यदा किरीटी परवीरघाती
निघ्नन्रथस्थो द्विषतां मनांसि ।
मदन्तरे त्वद्ध्वजिनीं प्रवेष्टा
कक्षं दहन्नग्निरिवोष्णगेषु ॥ १५
जनार्दनस्यानुगा वृष्णिवीरा
महेष्वासाः केकयाश्चापि सर्वे ।
एते हि सर्वे मम राजपुत्राः
प्रहृष्टरूपाः पदवीं चरेयुः ॥ १६
मौर्वीविसृष्टाः स्तनयित्नुघोषा
गाण्डीवमुक्तास्त्वतिवेगवन्तः ।
हस्तं समाहत्य धनंजयस्य
भीमाः शब्दं घोरतरं नदन्ति ॥ १७
गाण्डीवमुक्तांश्च महाशरौघा-
न्पतंगसंघानिव शीघ्रवेगान् ।
सशङ्खघोषः सतलत्रघोषो
गाण्डीवधन्वा मुहुरुद्वमंश्च ।
यदा शरानर्पयिता तवोरसि
तदा मनस्ते किमिवाभविष्यत् ॥ १८
गदाहस्तं भीममभिद्रवन्तं
माद्रीपुत्रौ संपतन्तौ दिशश्च ।
अमर्षजं क्रोधविषं वमन्तौ
दृष्ट्वा चिरं तापमुपैष्यसेऽधम ॥ १९
यथा चाहं नातिचरे कथंचि-
त्पतीन्महार्हान्मनसापि जातु ।
तेनाद्य सत्येन वशीकृतं त्वां C. 3. 15659 B. 3. 268. 21 K. 3. 269. 21

$K_{3.4}$ $D_{1-3}$ $G_2$ संप्रभीता; $B_1$ °वृत्ता; T $G_4$ °हीणा. — $^{d}$) $M_2$ सुवीर°.

**14** $^{a}$) $T_2$ $G_{3.4}$ यस्याश्च; $G_1$ यस्यां च. — $^{b}$) $K_4$ $T_1$ समासिताव्. $Ś_1$ K $Dc_2$ एकरथौ ($K_4$ °थं). $K_{3.4}$ $D_{1-3}$ सखायौ; B Dn $D_{4.6}$ $G_3$ समेतौ (for सहायौ). — $^{c}$) $K_{3.4}$ $B_{1.4}$ $D_3$ नोत ($K_4$ °प-) हरेत्; $T_2$ नाभिभवेत्.

**15** $^{a}$) $B_{1.2.4}$ $Dc_1$ Dn $D_{4.6}$ $T_1$ $G_3$ $M_1$ यथा; $T_2$ $G_{1.2.4}$ सदा (for यदा). — $^{c}$) $Ś_1$ मां नंदयस्; $K_1$ मासांतरे; $K_2$ सामंतरे; $M_2$ तदंतरे (for मदंतरे). $K_2$ $G_1$ तद्-; $T_1$ तु; $G_{2.4}$ ते (for त्वद्-). $Ś_1$ $K_{2.3}$ ध्वजिनी-. $D_3$ प्रविष्टः; $T_1$ प्रवेष्टः. — $^{d}$) $K_3$ $Dc_2$ $T_1$ दहत्यग्निर्. $Ś_1$ K Dc $D_{1-3.5}$ इवोष्ण(Dc °ग्र)तेजाः; $T_1$ इवोष्णकाले; $G_1$ इवोष्णकेषु.

**16** $^{a}$) $K_4$ $D_1$ $T_1$ जनार्दनस्याप्यनुगा वृष्णिवीरा; B Dc Dn $D_{4.6}$ $G_3$ जनार्दनः सां($D_6$ $G_3$ सौं)धकवृष्णिवीरो; $G_{2.4}$ °नस्याहुकवृष्णिवीरो ($G_4$ °रा). — $^{b}$) $K_4$ $B_3$ $Dn_{2}$. $n_3$ $D_{1.6}$ $G_3$ कैकया°. S (except $T_1$ $G_3$) चैव पंच (for चापि सर्वे). — $^{c}$) $Ś_1$ K Dc $D_{1-3.5}$ समेता (for हि सर्वे).

**17** $^{a}$) $T_1$ $M_2$ °प्रसृष्टाः; $G_{1.2.4}$ °विमुक्ताः; $M_1$ °निसृष्टाः. $M_2$ °घोरा (for °घोषा). — $^{b}$) $T_1$ ह्यतिवेगवंतः; $T_2$ $G_{1.2.4}$ M ह्यतिवेलमुग्राः. — $^{d}$) Dc T $G_{1.2.4}$ शरा (for शब्दं). $K_3$ घोषतरं; $B_1$ घोररवं; Dc घोरभयं. $T_1$ पतंति (for नदन्ति).

**18** After $18^{ab}$, N $T_1$ $G_3$ ins.:

1203* यदा द्रष्टास्यर्जुनं वीर्यशालिनं
तदा स्वबुद्धिं प्रतिनिन्दितासि ।

[(L. 1) $Ś_1$ $K_{1.2.4}$ $D_3$ (by transp.) द्रष्टा यदा; $D_1$ यदा स्रष्टा; $T_1$ दृष्ट्वा ह्यथा. $K_{1.2}$ $T_1$ हि (for [अ]सि). $K_3$ $B_4$ Dc $D_{1-3.6}$ [अ]र्जुनेन प्रयु($K_3$ $D_{2.3.6}$ °मु)क्तान्; $T_1$ [अ]र्जुनवीर्यशालिनः. $Ś_1$ वै सृजंतं; $K_{1.2.4}$ वीर($K_4$ °र्यं)शालिं (for वीर्यशालिनं). — (L. 2) $T_1$ स्वयुद्धं (for स्वबुद्धिं). K $D_{1-3.5}$ $T_1$ परि- (for प्रति-).]

— $^{c}$) $Ś_1$ $K_{1.2}$ सतनुत्र°. — $^{d}$) $K_3$ B D (except $D_{1-3.5}$) $G_3$ मुहुरुद्वहंश्च; $T_2$ $G_1$ °रन्वहंश्च.

**19** $^{b}$) $Ś_1$ $K_{1.2}$ $D_5$ संचरंतौ. $T_2$ $G_{1.2.4}$ हि दृष्ट्वा; M च दृष्ट्वा (for दिशश्च). — M om. $19^{cd}$. — $^{c}$) $T_1$ यदाजय्यौ (for अमर्षजं). $T_1$ $G_4$ वहंतौ (for वमन्तौ). — $^{d}$) $K_3$ $Dc_2$ $D_2$ भृशं; $K_4$ $D_{1.3}$ परं; $T_1$ ध्रुवं (for चिरं). $Dc_2$ नाशम् (for तापम्). $K_3$ $Dc_2$ $D_{1.2}$ उपे($Dc_2$ $D_2$ °पै)ष्यसि; $K_4$ अवेक्ष्यसे; $D_{3.5}$ $T_1$ उपेष्यसे. $K_3$ $Dc_2$ $D_{1.2.5}$ $T_1$ त्वम् (for ऽधम). $Ś_1$ $K_1$ दृष्ट्वा भृशं तापयसे नृपाधम;

C. 3. 15659
B. 3. 268. 21
K. 3. 269. 21

द्रष्टासि पार्थैः परिकृष्यमाणम् ॥ २०
न संभ्रमं गन्तुमहं हि शक्ष्ये
त्वया नृशंसेन विकृष्यमाणा ।
समागताहं हि कुरुप्रवीरैः
पुनर्वनं काम्यकमागता च ॥ २१
वैशंपायन उवाच ।
साताननुप्रेक्ष्य विशालनेत्रा
जिघृक्षमाणानवभर्त्सयन्ती ।
प्रोवाच मा मा स्पृशतेति भीता
धौम्यं प्रचुक्रोश पुरोहितं सा ॥ २२
जग्राह तामुत्तरवस्त्रदेशे
जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः
पपात शाखीव निकृत्तमूलः ॥ २३
प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिःश्वस्य च राजपुत्री ।
सा कृष्यमाणा रथमारुरोह
धौम्यस्य पादावभिवाद्य कृष्णा ॥ २४
धौम्य उवाच ।
नेयं शक्या त्वया नेतुमविजित्य महारथान् ।
धर्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ ॥ २५
क्षुद्रं कृत्वा फलं पापं प्राप्स्यसि त्वमसंशयम् ।
आसाद्य पाण्डवान्वीरान्धर्मराजपुरोगमान् ॥ २६
वैशंपायन उवाच ।
इत्युक्त्वा ह्रियमाणां तां राजपुत्रीं यशस्विनीम् ।
अन्वगच्छत्तदा धौम्यः पदातिगणमध्यगः ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

---

$T_2$ $G_{1.2.4}$ दृष्ट्वा समंतादुपवेक्ष्य( $G_2$ °दभिवीक्ष्य )सेथ.

☞ For 20, 22[ab], 23 and 24, cf. passage 307* of the Virāṭa-parvan (lines 1–7, 9–12).

**20** [a]) $K_3$ $D_4$ $T_2$ $G_{1.2.4}$ यदा (for यथा). $B_1$ $D_{3.6}$ वाहं; $G_4$ चरन् (for चाहं). K $B_{3.4}$ $D_{1.3.5}$ नाभिचरे; Dc नाभिचरेत्. $B_{1.4}$ $T_2$ कदाचित्. — [c]) $T_1$ तेनास्य. — [d]) T $G_{1.2.4}$ द्रक्ष्यामि; M पश्यामि. $B_1$ $D_2$ परिक्लिश्यमाणं; $M_2$ °क्षुष्यमाणं.

**21** [a]) $D_3$ कर्तुम् (for गन्तुम्). $B_1$ प्रसह्य; $B_4$ हि शक्ये; Dc हि शक्या. — [d]) $B_{2.3}$ Dn $D_{4.6}$ $G_3$ [अ]स्मि (for च).

**22** B S (except $G_3$) om. the ref. — [a]) Ś$_1$ K $D_{2.3}$ (orig.).$_5$ अभिप्रेक्ष्य; $T_1$ $G_1$ M उपप्रे°; $T_2$ $G_{2.4}$ समुत्प्रे°. Ś$_1$ $K_4$ om. विशाल°; $K_1$ जिघृक्षमाणा; $M_2$ विशालनेत्रां. $D_3$ (by corr.) स तामभिप्रेक्ष्य विशालनेत्रां. — [b]) $T_2$ परि-; $G_2$ अपि; $G_4$ अभि- (for अव-). K सौवीरराजेन न भर्त्स°; $K_4$ $Dn_2$ जिघृक्षमाणा न च भर्त्स°; $D_3$ (by corr.) °माणो न च भर्त्संयंतीं. — [c]) Ś$_1$ $K_{1.2.4}$ Dc $D_{2.3.5}$ उवाच (for प्रो°). $D_2$ मा मां. $K_3$ उवाच मा संस्पृशतीति मत्वा; T $G_{1.2.4}$ M पुरा ह्ययं मा ($T_1$ नराधमो मां; $T_2$ पुरा ह्यधमां; $G_1$ पुरा ह्यधर्मा) स्पृशतीति मत्वा. — [d]) $D_3$ च; S (except $G_3$) वै (for सा).

**23** [a]) Ś$_1$ उत्तम° (for उत्तर°). — [b]) $K_{3.4}$ $Dc_2$ $D_{1-3}$ सहसा°; $T_2$ $G_{2.4}$ स समा° (for समवा°). — [c]) $D_3$ समुत्क्षिप्ततनुः. $G_4$ पापी (for पापः).

**24** [a]) $M_2$ महाजनेन. — [b]) Some MSS. विनिश्वस्य. $Dc_2$ $T_1$ तु (for च). — [c]) $K_3$ Dc $D_2$ विकृष्य°; $T_2$ $G_{2.4}$ M साम्रृष्य°. — [d]) $D_2$ सा धौम्य- (for धौम्यस्य). Ś$_1$ $K_2$ [अ]भिनंद्य; $K_{1.4}$ $D_{1.3}$ [अ]भिवंद्य.

**25** [a]) $T_1$ बलान् (for त्वया). $G_{2.4}$ [आ]दातुम्; $M_2$ जेतुम् (for नेतुम्). — [b]) $D_3$ अभिजित्य; $T_2$ $M_2$ अवजित्य; $G_{1.2.4}$ अवमत्य. — [c]) Ś$_1$ क्षत्रधर्मस्य; $T_1$ तत्र धर्मं न; $G_{2.4}$ धर्मं क्षत्रस्य. T $G_1$ पौराणाम्.

**26** [a]) Ś$_1$ $K_2$ फले; $K_1$ बले (for फलं). $B_1$ $D_3$ पाप. S (except $T_1$ $G_3$) क्षुद्रं खलु नृशंसात्मन्. — [b]) B $Dc_1$ Dn $D_{4.6}$ $G_3$ transp. प्राप्स्यसि and त्वं. $K_4$ B D (except $Dc_2$ $D_1$) $G_3$ न संशयः; T असंशयः.

Colophon. — *Major parvan:* Ś$_1$ $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* Ś$_1$ $K_{1.3.4}$ B Dc $Dn_1$. $n_3$ $D_{1-6}$ $T_1$ $G_3$ $M_2$ द्रौपदीप्रमाथ. — *Adhy. no.* (figures, words or both): Dn 266 ($Dn_3$ 267); $D_1$ 268; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 256 ($M_2$ orig. 258); $T_2$ $G_1$ 253; $G_2$ 255. — *Śloka no.:* Dn $D_1$ 28.

# २५३

वैशंपायन उवाच ।

ततो दिशः संप्रविहृत्य पार्था
मृगान्वराहान्महिषांश्च हत्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां
पृथक्चरन्तः सहिता बभूवुः ॥ १

ततो मृगव्यालगणानुकीर्णं
महावनं तद्विहगोपघुष्टम् ।
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः
श्रुत्वा गिरो व्याहरतां मृगाणाम् ॥ २

आदित्यदीप्तां दिशमभ्युपेत्य
मृगद्विजाः क्रूरमिमे वदन्ति ।
आयासमुग्रं प्रतिवेदयन्तो
महाहवं शत्रुभिर्वावमानम् ॥ ३

क्षिप्रं निवर्तध्वमलं मृगैर्नो
मनो हि मे दूयति दह्यते च ।
बुद्धिं समाच्छाद्य च मे समन्यु-
रुद्धूयते प्राणपतिः शरीरे ॥ ४

सरः सुपर्णेन हृतोरगं यथा
राष्ट्रं यथाराजकमात्तलक्ष्मि ।
एवंविधं मे प्रतिभाति काम्यकं
शौण्डैर्यथा पीतरसश्च कुम्भः ॥ ५

ते सैन्धवैरत्यनिलौघवेगै-
र्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरा-
स्तदाश्रमायाभिमुखा बभूवुः ॥ ६

तेषां तु गोमायुरनल्पघोषो
निवर्ततां वाममुपेत्य पार्श्वम् ।
प्रव्याहरत्तं प्रविमृश्य राजा
प्रोवाच भीमं च धनंजयं च ॥ ७

यथा वदत्येष विहीनयोनिः C. 3. 15674 B. 3. 269. 8 K. 3. 270. 8

## 253

**1** $^{a}$) $K_{3.4}$ $D_{1.3}$ संपरिहृ($K_{3}$ °कृ)त्य; T $G_{1.2.4}$ संपरिवृत्य; M संपरिसृत्य. $M_{2}$ पांडवा (for पार्था). — $^{c}$) $B_{1}$ $D_{1}$ $G_{1}$ श्रेष्ठतराः. — $^{d}$) $K_{3}$ $D_{1}$ सह सं- (for सहिता).

**2** $^{a}$) K $D_{1.3.5}$ °गजा°; $T_{1}$ °मृगा°; $G_{1.2.4}$ M °जना° (for °गणा°). — $^{b}$) $K_{4}$ $D_{3}$ $T_{2}$ $G_{1}$ महद्वनं. $D_{1}$ $T_{1}$ $G_{1}$ °जुष्टं (for °घुष्टम्). — $^{c}$) Ś$_{1}$ $K_{1.2}$ त्वरन्; $K_{3.4}$ $G_{1}$ $M_{2}$ चरन्; $D_{1.3}$ चरंतो (for च तान्). Dc $D_{2}$ न्यवदद्; $T_{1}$ $M_{2}$ अभ्यवदन्. — $^{d}$) $T_{2}$ वचो (for गिरो).

**3** $K_{3}$ om. 3. — $^{a}$) Ś$_{1}$ $K_{1.2}$ आदीप्तदीप्तां; $K_{4}$ $D_{3}$ आदित्यजुष्टां. $T_{1}$ अभ्युपेता; $M_{1}$ अभ्युपेतुर्. — $^{b}$) B Dn $D_{4.6}$ $T_{2}$ मृगा (for मृग-). — $^{c}$) $M_{2}$ यथा समग्रं (for आयासमुग्रं). Ś$_{1}$ °वेदयंते; $K_{1.2}$ $B_{2}$ °वेदयंति. — $^{d}$) Ś$_{1}$ महाहवे; B D (except $D_{1.3.5}$) °वनं; T $G_{1.2.4}$ °भयं; $G_{3}$ Cnp °धनं. Ś$_{1}$ $K_{1.2}$ बाध°; $K_{4}$ $D_{3}$ चाव°; B Dc Dn $D_{2.4-6}$ $G_{3}$ बाध्य°; $D_{1}$ आह्वमाने; $G_{1}$ वध्य° (for वाव°).

**4** $^{a}$) Ś$_{1}$ विलंबैर्; $K_{1}$ मनो हि (for मृगैर्नो). — $^{b}$) $K_{1}$ मृगैश्च (for मनो हि). Ś$_{1}$ $K_{4}$ $D_{3}$ दह्यति; $K_{2.3}$ $B_{2-4}$ Dc $D_{1.2.6}$ $T_{2}$ $G_{1.3}$ $M_{1}$ दूयते; $B_{1}$ $T_{1}$ दह्यते; $G_{2}$ ग्लायते; $G_{4}$ ग्लायति (for दूयति). Ś$_{1}$ $K_{4}$ $B_{1}$ $D_{3}$ $G_{2.4}$ दूयते; $T_{1}$ द्रुह्यते (for दह्यते). — $^{c}$) Ś$_{1}$ $K_{1.2.4}$ $D_{3}$ समासाद्य; $K_{3}$ °स्थाय (for °च्छाद्य). — $^{d}$) $T_{2}$ $G_{1}$ उद्ध्यायते; $G_{2.4}$ आधूयते. Ś$_{1}$ प्राणमतिः; $B_{1}$ °मिमं (for °पतिः).

**5** $^{a}$) $G_{2.4}$ हृतोरगेंद्रं (for हृतोरगं यथा). — $^{b}$) $T_{1}$ राज्यं यथा राजसमाप्तलक्ष्मः (sic); $T_{2}$ $G_{1.2.4}$ M अ(M ह्य)राजकं राष्ट्रमिवेह शांतं. — $^{d}$) $D_{5}$ °रसं च कुंडं; S (except $T_{1}$ $G_{3}$) °सुरश्च कुंभः.

**6** $^{a}$) Ś$_{1}$ K $T_{2}$ तैः (for ते). $B_{2-4}$ Dn $D_{4.6}$ $G_{3}$ अत्यनिलोग्रवेगैर्; Dc $D_{2}$ अत्यनिलौघवर्णैर्; $T_{2}$ $G_{1.2.4}$ अभ्यनिलोद्ध($G_{2}$ °लार्थ-; $G_{4}$ °लोत्थ)वेगैर्. — $^{b}$) $K_{3.4}$ $D_{3}$ S (except $G_{3}$) महाबलैर्. — $^{c}$) $K_{4}$ $B_{1.4}$ $D_{3}$ महद्भिः (for बृहद्भिः). $B_{1}$ पुरुषै°; $T_{2}$ स्वरथै°; $G_{1.2.4}$ सरथै°.

**7** $^{a}$) $K_{4}$ $T_{1}$ च (for तु). $K_{1}$ °तेजा (for °घोषो). — $^{b}$) $K_{3.4}$ $T_{1}$ निवर्त्यतां. — $K_{3}$ om. (hapl.) $7^{c}$–$8^{b}$. — $^{c}$) $K_{1}$ $B_{1}$ $T_{1}$ $G_{4}$ प्रव्याहरंतं; $D_{3}$ प्रत्याहरत्तं. $B_{2-4}$ Dc Dn $D_{1.2.4-6}$ $T_{2}$ $G_{2.3}$ M तत् (for तं). A few MSS. °मृष्य.

C. 3. 15674
B. 3. 269. 8
K. 3. 270. 8

शालावृको वाममुपेत्य पार्श्वम् ।
सुव्यक्तमस्मानवमन्य पापैः
कृतोऽभिमर्दः कुरुभिः प्रसह्य ॥ ८
इत्येव ते तद्वनमाविशन्तो
महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यन्त तदा रुदन्तीं
धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ९
तामिन्द्रसेनस्त्वरितोऽभिसृत्य
रथादवप्लुत्य ततोऽभ्यधावत् ।
प्रोवाच चैनां वचनं नरेन्द्र
धात्रेयिकामार्ततरस्तदानीम् ॥ १०
किं रोदिषि त्वं पतिता धरण्यां
किं ते मुखं शुष्यति दीनवर्णम् ।
कच्चिन्न पापैः सुनृशंसकृद्भिः
प्रमाथिता द्रौपदी राजपुत्री ।
अनिन्द्यरूपा सुविशालनेत्रा
शरीरतुल्या कुरुपुंगवानाम् ॥ ११
यद्येव देवी पृथिवीं प्रविष्टा
दिवं प्रपन्नाप्यथ वा समुद्रम् ।
तस्या गमिष्यन्ति पदं हि पार्था-
स्तथा हि संतप्यति धर्मराजः ॥ १२
को हीदृशानामरिमर्दनानां
क्लेशक्षमाणामपराजितानाम् ।
प्राणैः समामिष्टतमां जिहीर्षे-
दनुत्तमं रत्नमिव प्रमूढः ।
न बुध्यते नाथवतीमिहाद्य
बहिश्चरं हृदयं पाण्डवानाम् ॥ १३
कस्याद्य कायं प्रतिभिद्य घोरा
महीं प्रवेक्ष्यन्ति शिताः शराग्र्याः ।
मा त्वं शुचस्तां प्रति भीरु विद्धि

---

**8** $K_3$ om. $8^{ab}$ (cf. v.l. 7). — $^a$) Ś$_1$ $K_{1.2}$ विहीनहानिः; $D_{3.5}$ $T_2$ $G_{1.2}$ M निहीनयोनिः. — $^b$) $T_1$ सृगालको; $T_2$ $G_{1.2.4}$ M सालावृको. $B_{2.4}$ पार्थं (for पार्श्वम्). — $^c$) T $G_{1.2.4}$ $M_1$ परिभूय; $M_2$ अभिभूय (for अवमन्य). — $^d$) Ś$_1$ $K_{1.2}$ $D_{1.3}$ कृतो विमर्दः; $K_{3.4}$ $Dc_2$ $D_{2.5}$ $T_2$ $G_{1.2.4}$ M कृतोवमर्दः; $T_1$ कृतोवमानः.

**9** $^a$) S (except $G_3$) एत्याथ (for इत्येव). $K_3$ आविशंत्यो; $T_1$ आचरंतो. — $^b$) $G_2$ दहत्यरण्ये. — $K_3$ om. (hapl.) $9^d$–$10^c$. — $^d$) $K_{3.4}$ $D_{1.3}$ $G_1$ $M_2$ प्रेक्ष्य; $G_4$ वीक्ष्य (for प्रेष्य-). $T_1$ धात्रीं तदा प्राणसमां प्रियां तां.

**10** $K_3$ om. $10^{abc}$ (cf. v.l. 9). — $^a$) $K_1$ $G_1$ °तो विसृत्य; $G_{2.4}$ °तोपसृत्य. — $^d$) $Dn_1$. $n_2$ Cn अंति°; Cnp as in text.

**11** $^a$) Ś$_1$ $K_2$ धरिञ्यां; $K_{1.3.4}$ $D_{1-3.5}$ धरिण्यां. — $^b$) $T_2$ $G_{1.2.4}$ स्वन्- (for ते). $K_{3.4}$ $D_3$ (m as in text) दीनकंठं. — After $11^{ab}$, S ins.:

1204* गतेष्वरण्यं हि सुतेषु पाण्डोः
कच्चित्परैर्नापकृतं वनेऽस्मिन् ।
पर्याकुला सा तु समीक्ष्य सूत-
मभ्यापतन्तं द्रुतमिन्द्रसेनम् ।
उरो घ्नती कष्टतरं तदानी-
मुच्चैः प्रचुक्रोश हतेति देवी ।

[(L. 4) $T_1$ $M_1$ समा° (for अभ्या°). — (L. 5) $T_1$ क्लिष्टतरं. — (L. 6) $T_1$ $M_1$ प्रचक्रंद (for प्रचुक्रोश).] — S (except $G_3$) om. $11^{cd}$. — Before $11^{ef}$, S ins. इंद्रसेनः. — $^e$) $K_3$ B D (except $D_{1.3.5}$) अचिंत्य° (for अनिन्द्य°). — After 11, $D_{1.3}$ ins.:

1205* पतिव्रता सत्यसंधा तथैव
क्व सा नीता केन वा शंस तथ्यम् ।;

while S (except $G_3$) ins.:

1206* केनात्मनाशाय वदापनीता
छिद्रं समासाद्य नरेन्द्रपत्नी ।

[(L. 1) $T_1$ हृतो°; $G_4$ विदो°; M पथा° (for वदा°). — (L. 2) $T_2$ रंध्रं (for छिद्रं). $T_1$ $M_1$ नरेंद्रपुत्री.]

**12** $^a$) S (except $G_3$) यदीह (for यद्येव). Dc Dn $D_{4.5}$ T देवीं. $D_1$ यदाप्यसौ पृथिवीं संप्रविष्टा. — $^b$) $T_1$ प्रपन्नां. $T_1$ यदि वा; $T_2$ $G_{1.4}$ M ह्यथ वा. — $^c$) $K_3$ पथं; $B_2$ $D_6$ पदे (for पदं). S (except $G_3$) पदं गमिष्यंति हि तस्य ($T_1$ $M_1$ तत्र) पार्थास्. — $^d$) B $Dc_1$ Dn $D_{4.6}$ $G_3$ यथा (for तथा). N (except Ś$_1$ $D_1$) $G_3$ धर्मपुत्रः.

**13** $^a$) Ś$_1$ मादृ° (for हीदृ°). $B_1$ नरपुंगवानां (for अरिमर्द°). — $^b$) $K_{1.2}$ B Dn $D_{4-6}$ °क्षमानाम्. — $^c$) $T_1$ जिहीर्षुर्. — $^d$) $T_1$ इव प्रमूढं; $T_2$ इव प्रमूष्मान् (sic); $G_{1.2.4}$ इव प्रमूषुः; M इवामुमूर्षुः.

**14** $^a$) $K_{3.4}$ $D_{1.3.5}$ $T_2$ $G_{1.2.4}$ प्रविभिद्य; $T_1$ प्रवि-

यथाद्य कृष्णा पुनरेष्यतीति ।
निहत्य सर्वान्द्विषतः समग्रा-
न्पार्थाः समेष्यन्त्यथ याज्ञसेन्या ॥ १४
अथाब्रवीच्चारुमुखं प्रमृज्य
धात्रेयिका सारथिमिन्द्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य
पश्चेन्द्रकल्पान्परिभूय कृष्णा ॥ १५
तिष्ठन्ति वर्त्मानि नवान्यमूनि
वृक्षाश्च न म्लान्ति तथैव भग्नाः ।
आवर्तयध्वं ह्यनुयात शीघ्रं
नदूरयातैव हि राजपुत्री ॥ १६
संनह्यध्वं सर्व एवेन्द्रकल्पा
महान्ति चारूणि च दंशनानि ।
गृह्णीत चापानि महाधनानि
शरांश्च शीघ्रं पदवीं व्रजध्वम् ॥ १७
पुरा हि निर्भर्त्सनदण्डमोहिता
प्रमूढचित्ता वदनेन शुष्यता ।
ददाति कस्मैचिदनर्हते तनुं
वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ १८
पुरा तुषाग्नाविव हूयते हविः
पुरा श्मशाने स्रगिवापविध्यते ।
पुरा च सोमोऽध्वरगोऽवलिह्यते
शुना यथा विप्रजने प्रमोहिते ।
महत्यरण्ये मृगयां चरित्वा
पुरा शृगालो नलिनीं विगाहते ॥ १९
मा वः प्रियायाः सुनसं सुलोचनं C. 3. 15688 B. 3. 269. 22 K. 3. 270. 25

शंति; $M_1$ प्रतिपद्य; $M_2$ प्रतिबिम्ब्य. $G_2$ घोरं; $M_1$ बाणा; $M_2$ बाला (for घोरा) $Ś_1$ $K_{1.2}$ आच्छाद्य कामं प्रविविश्य घोरा. — $^b$) $G_1$ अभि- (for महीं). $K_4$ प्रविष्यंति (sic). M सुपुंखाः (for शराढ्याः). — $^d$) $G_{1.2.4}$ यथा च (for यथाद्य). — $^e$) Dc $D_2$ द्विषतान्. $Ś_1$ $K_{1.2}$ समेताः; $K_{3.4}$ Dc $D_{1-3.5}$ समेतान्; $B_1$ $T_1$ समग्राः; M ससैन्यान्.

**15** $^a$) $B_2$ चाश्रुमुखी; $T_2$ $G_{1.2.4}$ सा तु मुखं; $G_3$ साश्रुमुखं. $K_3$ $Dn_2$ विमृष्य; $B_{1.3}$ विसृज्य; $B_{2.4}$ $Dc_1$ $Dn_1$. $n_3$ $D_4$ विमृश्य; $Dc_2$ $D_6$ $T_2$ $G_3$ विमृज्य; $D_1$ प्रमृष्य. — Before $15^{cd}$, $G_{1.2}$ ins. धात्रेयिका; $G_4$ धात्री. — $^c$) $K_4$ $D_3$ °नोपहृतां; $D_1$ °नापहृतां. $K_1$ प्रमाथ्य; $K_3$ $D_3$ प्रपश्य. — $^d$) $K_4$ $D_3$ $G_1$ कृष्णां; $D_1$ पार्थान्.

**16** $^a$) $Ś_1$ $K_1$ तिष्ठंत्यवर्त्मानि. $K_1$ $B_3$ वनानि; $K_4$ $D_3$ बहूनि; $G_1$ पद्मानि; $G_2$ चर्माणि (for नवानि). — $^b$) S (except $G_3$) द्रुमा° (for वृक्षा°). $B_1$ नश्यंति; Dc $D_2$ लंबंति; $T_1$ नम्राश्च; $T_2$ $G_{1.4}$ न ग्लांति. $D_1$ म्लायंति वृक्षाश्च तथातिभग्नाः. — $^c$) $Ś_1$ K Dc $D_{1-3.5}$ अनुयात; $T_2$ $G_{1.2.4}$ ह्यनुयांतु. — $^d$) $Ś_1$ अदूर°; $T_2$ $G_{1.2.4}$ न दूरयातेव. Dc $D_2$ ह (for हि).

**17** $^b$) Dc $D_1$ दंशितानि; $T_2$ $G_{1.2.4}$ दंसितानि. $T_1$ महांति दारूणि वतंसितानि (sic); $M_1$ महार्हरूपाणि च दंसनानि. — $^c$) $K_{2.3}$ $B_3$ Dc $D_{2.3}$ गृहीत. $Ś_1$ $K_{1.2}$ ससाधनानि; $B_1$ शरांश्च शीघ्रं; $G_1$ महायुधानि (for °धनानि). — $^d$) $Ś_1$ प्रपध्वं; $K_1$ प्रवृत्तं; $K_2$ पतध्वं; $K_3$ $B_{2-4}$ Dc Dn $D_{2.4-6}$ $G_3$ M चरध्वं; $D_1$ प्रपद्य (for व्रजध्वम्). $B_1$ बध्नीत तूणी पदवीं च लब्धं.

☞ In $Ś_1$, the portion from भस्मनि (in $18^d$) up to the *end* of this parvan is lost on missing fol.; the MS. is almost entirely ignored in the sequel.

**18** $^a$) $K_4$ °दंडताडिता. — $^b$) $Dc_1$ Dn $D_{4.6}$ $G_3$ प्रमोहचित्ता; $Dc_2$ प्रमूढचेता. $T_2$ $G_{1.2.4}$ शुष्यति. — $^d$) $B_{1.3.4}$ श्रुतं; Dc $T_1$ $G_{1.2}$ स्रुवं (for स्रुचम्).

**19** $^b$) $K_{3.4}$ $D_{2.3}$ स्मशाने. $K_3$ स्रगिवावविध्यते; $B_1$ $M_1$ °वोपदृश्यते; Dc $D_2$ °वोपविध्यते; $G_{1.4}$ °वावबध्यते. — $^c$) $K_{1.2}$ पुरे च; $T_1$ पुरा हि. S (except $G_3$) °ध्वरजो. K $D_{1.3.5}$ $T_2$ $G_{2.4}$ विलुप्य ($K_4$ °प्यते); $T_1$ विलिह्य; $G_1$ विलिप्य; $M_1$ विलिह्यते. — $^d$) Dc $D_{2.5}$ S (except $G_3$) विमो° (for प्रमो°). — After $19^{cd}$, $T_1$ ins.:

1207* पुरा हि पार्थाश्च हतौ च कापिलम्
प्रसिच्यते क्षीरधारा यतध्वम् ।

— $^e$) $D_{3.5}$ गतानां (for चरित्वा). — $^f$) $K_1$ S सृगालो. $B_3$ प्रगाहते. — After 19, $Dc_1$ $D_{1-3}$ ins.:

1208* श्रुतिं च सम्यक्प्रकृतिं महाध्वरे
ग्राम्यो जनो यद्वदसौ न नाशयेत् ।;

while S (except $G_3$) ins.:

1209* पुरा हि मन्त्राहुतिपूजितायां
हुताग्निवेद्यां बलिभुक्क निलीयते ।

**20** $^b$) $K_{1.2}$ $B_1$ Dc $D_{1.2.5}$ °प्रभाभं; $K_3$ °प्रभं तद्; $K_4$ $D_3$ °प्रभासं. $B_4$ $T_2$ $G_{1.2.4}$ M चंद्रप्रभं वदनं तत्पुरस्तात् ($B_4$ °नं सुप्रसन्नं). — $K_1$ om. $20^{cd}$. — $^c$) $K_4$ पश्चाच्छुभं;

C. 3. 15688
B. 3. 269. 22
K. 3. 270. 25

चन्द्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी
श्वा वै पुरोडाशमिवोपयुञ्जीत् ।
एतानि वर्त्मान्यनुयात शीघ्रं
मा वः कालः क्षिप्रमिहात्यगाद्वै ॥ २०

युधिष्ठिर उवाच ।

भद्रे तूष्णीमास्स्व नियच्छ वाचं
मास्मत्सकाशे परुषाण्यवोचः ।
राजानो वा यदि वा राजपुत्रा
बलेन मत्ता वञ्चनां प्राप्नुवन्ति ॥ २१

वैशंपायन उवाच ।

एतावदुक्त्वा प्रययुर्हि शीघ्रं
तान्येव वर्त्मान्यनुवर्तमानाः ।
मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो
ज्यां विक्षिपन्तश्च महाधनुर्भ्यः ॥ २२
ततोऽपश्यंस्तस्य सैन्यस्य रेणु-
मुद्धूतं वै वाजिखुरप्रणुन्नम् ।
पदातीनां मध्यगतं च धौम्यं
विक्रोशन्तं भीममभिद्रवेति ॥ २३
ते सान्त्व्य धौम्यं परिदीनसत्त्वाः
सुखं भवानेत्विति राजपुत्राः ।
श्येना यथैवामिषसंप्रयुक्ता
जवेन तत्सैन्यमथाभ्यधावन् ॥ २४
तेषां महेन्द्रोपमविक्रमाणां
संरब्धानां धर्षणाद्याज्ञसेन्याः ।
क्रोधः प्रजज्वाल जयद्रथं च
दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ २५
प्रचुक्रुशुश्चाप्यथ सिन्धुराजं
वृकोदरश्चैव धनंजयश्च ।
यमौ च राजा च महाधनुर्धरा-
स्ततो दिशः संमुमुहुः परेषाम् ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

---

$D_{1.3}$ स्पृशेच्छुभं; $T_2$ $G_{1.2.4}$ रागान्वितः; M रागातुरः. — [d]) $K_2$ इवोपयोक्ष्य; $K_3$ $D_5$ $T_2$ °पयोक्षीत्; $K_4$ $D_1$ °पयुंज्यात्; B Dc Dn $D_{2.4.6}$ $G_3$ इवाध्वरस्थं; $D_3$ इवोपयुज्यते; $G_3$ °पभोक्ष्येत्. — [e]) $T_1$ $G_1$ वाक्यानि; $M_2$ वर्णानि (for वर्त्मानि). $T_2$ $G_{1.2.4}$ [अ]नुयांतु (for °यात). $T_2$ $G_{2.4}$ मा वः (for शीघ्रं). — [f]) $T_2$ $G_{2.4}$ कालः प्रति- (for मा वः कालः). M दीर्घं (for क्षिप्रम्). $K_{3.4}$ इहातिगाद्वै; $M_2$ इहात्ययाद्वै. — After 20, $K_4$ $Dc_2$ $D_{1-3}$ ins.:

1210* शीघ्रं प्रधावध्वमितो नरेन्द्रो
　　यावन्न दूरं व्रजतीति पापः ।;

while S (except $G_3$) ins.:

1211* प्रत्याहरध्वं द्विषतां सकाशा-
　　ल्लक्ष्मीमिव स्वां दयितां नृसिंहाः ।

**21** $T_1$ $G_4$ om. the ref. — [a]) $K_{1.2}$ तूर्णमाशु; $B_{2.4}$ Dn $D_{4.6}$ $G_3$ प्रतिक्राम (for तूष्णीमास्स्व). $T_1$ भद्रे प्रतीपं विनयाच्च वाचं. — [b]) $K_{1.4}$ $M_1$ वाचः (for [अ]वोचः). — [d]) $G_1$ बलेन युक्ताः. $G_{1.2.4}$ पंचतामाप्नु° (for वञ्चनां प्राप्नु°).

**22** [c]) $B_1$ मुहुर्मुहुर्व्यालवनं विशंतो. — [d]) $B_{2.4}$ $Dc_2$ $Dn_2$ $D_2$ $T_1$ $G_3$ ज्या (for ज्यां). $B_2$ उत्क्षि° (for विक्षि°). $T_1$ महाधनुर्भृतः.

**23** [a]) $B_4$ ततोपश्यं रेणुसमुद्धृतं वै. — [b]) $K_1$ T $G_{1.2.4}$ $M_2$ उद्धूयंतं; $B_2$ समुद्धूतं; $B_3$ उद्धृतं वै; $B_4$ निपीडितं; $M_1$ आधूयंतं (for उद्धूतं वै). $K_3$ °खुरप्रपन्नं. — [c]) $K_{1.2}$ हि (for च). $T_2$ $G_{1.2.4}$ पदातिमध्ये विचरंतं च धौम्यं. — [d]) $K_3$ $B_1$ $D_{1.3.5}$ $T_2$ $M_2$ अभ्याद्रवेति; $K_4$ अभिद्रवंतं; $G_1$ अभ्यद्रवंतं. $T_1$ विक्रोशंतं भीम भीमाद्रवेति; $T_2$ $G_{2.4}$ विक्रोशंतं भीम पार्थेत्यभीक्ष्णं.

**24** [a]) $K_{1.2.4}$ $B_2$ (m as in text) $D_{1.3}$ धौम्यं परिदीनसत्त्वं; $T_2$ $G_{1.2.4}$ M तं धौ($G_2$ $M_2$ तद्धौ)म्यमदीनसत्वाः. — [b]) $G_{2.4}$ सुखी भवानस्त्विति राज°. — [c]) $K_1$ Dc $D_2$ S (except $G_3$ $M_2$) °संप्रसक्ता.

**25** [c]) $T_2$ $G_{1.2.4}$ $M_1$ कोपः (for क्रोधः). $K_{3.4}$ $D_3$ तु (for च). — [d]) $T_1$ स्थितां (for प्रियां). $M_1$ चास्य (for तस्य). $K_4$ $G_{1.2.4}$ $M_2$ रथस्थितां; $T_1$ रथे प्रियां.

**26** [a]) M [अ]भि (for [अ]पि). — [c]) $B_2$ $T_2$ $G_{1.2.4}$ M धनुर्धरास्तदा ($B_2$ °तो). — [d]) $B_2$ दिशो (for ततो) $G_2$ संप्रमुमुहुः. $M_2$ परेतरां.

# २५४

वैशंपायन उवाच ।
ततो घोरतरः शब्दो वने समभवत्तदा ।
भीमसेनार्जुनौ दृष्ट्वा क्षत्रियाणाममर्षिणाम् ॥ १
तेषां ध्वजाग्राण्यभिवीक्ष्य राजा
स्वयं दुरात्मा कुरुपुंगवानाम् ।
जयद्रथो याज्ञसेनीमुवाच
रथे स्थितां भानुमतीं हतौजाः ॥ २
आयान्तीमे पञ्च रथा महान्तो
मन्ये च कृष्णे पतयस्तवैते ।
सा जानती ख्यापय नः सुकेशि
परं परं पाण्डवानां रथस्थम् ॥ ३
द्रौपद्युवाच ।
किं ते ज्ञातैर्मूढ महाधनुर्धरै-
रनायुष्यं कर्म कृत्वातिघोरम् ।
एते वीराः पतयो मे समेता
न वः शेषः कश्चिदिहास्ति युद्धे ॥ ४
आख्यातव्यं त्वेव सर्वं मुमूर्षो-
र्मया तुभ्यं पृष्टया धर्म एषः ।
न मे व्यथा विद्यते त्वद्भयं वा
संपश्यन्त्याः सानुजं धर्मराजम् ॥ ५
यस्य ध्वजाग्रे नदतो मृदङ्गौ
नन्दोपनन्दौ मधुरौ युक्तरूपौ ।
एतं स्वधर्मार्थविनिश्चयज्ञं
सदा जनाः कृत्यवन्तोऽनुयान्ति ॥ ६
य एष जाम्बूनदशुद्धगौरः
प्रचण्डघोणस्तनुरायताक्षः ।
एतं कुरुश्रेष्ठतमं वदन्ति
युधिष्ठिरं धर्मसुतं पतिं मे ॥ ७ C. 3. 15701 B. 3. 270. 7 K. 3. 271. 7

---

Colophon om. in $B_{1.3}$. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य; $G_1$ श्रीमदारण्य. — *Sub-parvan:* K $B_{2.4}$ Dc $Dn_3$ $D_{1-6}$ $T_1$ $G_3$ $M_1$ द्रौपदीप्रमाथ; $Dn_1$ द्रौपद्याः प्रमाथ. — *Adhy. name:* M पांडवानुगमनं. — *Adhy. no.* (figures, words or both): $Dn_2$ 267; $Dn_3$ 268; $D_1$ 269; T $G_4$ M ($M_2$ *inf. lin.*) 257 ($M_2$ orig. 259); $G_1$ 254; $G_2$ 256. — *Śloka no.:* $Dn_{1.n2}$ 28; $Dn_3$ 29; $D_1$ 30.

## 254

**1** $^{d}$) $K_3$ अमर्षणं; $D_1$ मनीषिणां; $T_1$ अमर्षिणौ; $G_4$ महर्षिणां.

**2** $K_1$ om. $2^{ab}$. — $^{a}$) $K_3$ $D_2$ ध्वजाग्र्याणि; $G_1$ ध्वजाग्रान्. $T_1$ राजन्. — $^{b}$) $Dn_{2.n3}$ स्मयन् (for स्वयं). $M_2$ कुरुपांडवानां. — $^{d}$) $G_1$ M स्थितो (for स्थितां). $B_4$ कांतिमतीं; $G_4$ भर्तृमतीं. $K_1$ B M हृ($B_1$ त)तौजाः; $K_4$ महौजाः; $T_1$ विहस्य.

**3** $^{a}$) $K_1$ आयातेमे. T $G_{1.2.4}$ ते (for [इ]मे). — $^{b}$) $K_3$ तथैते; $K_4$ तवेति; S (except $G_3$) तवेमे. — $^{c}$) =var. 3. 249. $13^{c}$. $K_1$ मा जानतां; $T_2$ सेमानिति; $G_4$ संजानती. — $^{d}$) $D_3$ परस्परां; $T_1$ परावरं; $G_{1.2.4}$ परंपरां (for परं परं). $D_3$ T $G_1$ रथस्था; $G_2$ रथस्थां; $G_4$ रथानां.

**4** $^{a}$) $G_{1.3.4}$ $M_1$ तैर् (for ते). — $^{b}$) $K_1$ अनायोध्यं; $B_2$ अमानुषं. $K_{1.3.4}$ Dc $D_2$ कृत्वा सुघोरं ($K_1$ °षं). — $^{c}$) M क्रुद्धा (for एते). Dc $D_2$ प्रियाः (for वीराः). — $^{d}$) $T_1$ ते (for वः). $K_{3.4}$ Dc $D_{1-3}$ $G_4$ शेषं. $K_3$ $D_{1.3}$ $T_1$ किंचिद्.

**5** $^{a}$) $G_1$ आख्यातायाः. $K_4$ चैव; $T_2$ $G_{1.2}$ तव; $G_4$ तच्च (for त्वेव). $K_{1.3.4}$ $Dc_2$ $D_{2.3}$ $G_2$ $M_1$ मुमूर्षौ. — $^{b}$) $T_2$ $G_{1.2.4}$ सर्वं (for तुभ्यं). — $^{c}$) $K_{3.4}$ $D_1$ $T_2$ $G_{1.2.4}$ transp. विद्यते and त्वद्भयं. — $^{d}$) $K_4$ संप्रेक्षंत्याः.

**6** $^{a}$) $T_1$ ध्वजाग्रौ. $K_3$ T $G_{2.4}$ नदतौ. $K_1$ मृदंगैर्; $K_4$ $Dc_2$ $D_{1.2}$ मृदंगो. — $^{b}$) $K_3$ Dc $D_{1.2}$ मधुरं युक्तरूपौ; $K_4$ $B_2$ °रं सुरूपौ; S (except $G_3$) °रं सुयुक्तौ. — $^{c}$) $K_1$ $B_4$ $Dn_2$ $D_{1.3}$ एवं; $T_2$ $G_{1.2.4}$ एनं (for एतं). $K_3$ $T_1$ सु-; $M_1$ स्व (for स्व-). — $^{d}$) $K_1$ Dc $D_2$ कृतवंतो. $T_1$ सदा जनाः सत्यवंतो वदंति.

**7** $^{a}$) $D_1$ $G_{1.2.4}$ $M_1$ स (for य). — $^{b}$) $K_{1.2}$ $D_1$ $T_1$ °घोर°; $K_2$ $B_1$ $D_3$ °घोष° (for °घोण°). — $^{c}$) $K_4$ $Dc_1$ $D_{1-3}$ T $G_{2-4}$ एनं. — $^{d}$) $T_1$ प्रियं (for पतिं).

C 3. 15702
B. 3 270. 8
K. 3. 271. 8

अप्येष शत्रोः शरणागतस्य
दद्यात्प्राणान्धर्मचारी नृवीरः ।
परैह्येनं मूढ जवेन भूतये
त्वमात्मनः प्राञ्जलिर्न्यस्तशस्त्रः ॥ ८
अथाप्येनं पश्यसि यं रथस्थं
महाभुजं शालमिव प्रवृद्धम् ।
संदष्टोष्ठं भ्रुकुटीसंहतभ्रुवं
वृकोदरो नाम पतिर्ममैषः ॥ ९
आजानेया बलिनः साधु दान्ता
महाबलाः शूरमुदावहन्ति ।
एतस्य कर्माण्यतिमानुषाणि
भीमेति शब्दोऽस्य गतः पृथिव्याम् ॥ १०
नास्यापराद्धाः शेषमिहाप्नुवन्ति
नाप्यस्य वैरं विस्मरते कदाचित् ।
वैरस्यान्तं संविधायोपयाति
पश्चाच्छान्तिं न च गच्छत्यतीव ॥ ११
मृदुर्वदान्यो धृतिमान्यशस्वी
जितेन्द्रियो वृद्धसेवी नृवीरः ।
भ्राता च शिष्यश्च युधिष्ठिरस्य
धनंजयो नाम पतिर्ममैषः ॥ १२
यो वै न कामान्न भयान्न लोभा-
त्त्यजेद्धर्मं न नृशंसं च कुर्यात् ।
स एष वैश्वानरतुल्यतेजाः
कुन्तीसुतः शत्रुसहः प्रमाथी ॥ १३
यः सर्वधर्मार्थविनिश्चयज्ञो
भयार्तानां भयहर्ता मनीषी ।
यस्योत्तमं रूपमाहुः पृथिव्यां
यं पाण्डवाः परिरक्षन्ति सर्वे ॥ १४
प्राणैर्गरीयांसमनुव्रतं वै
स एष वीरो नकुलः पतिर्मे ।

---

**8** $^{a}$) $G_{1.4}$ शरणं गतस्य. — $^{b}$) $G_1$ प्राणं (for प्राणान्). — $^{c}$) $B_1$ $Dc_1$ $Dn_{1.n3}$ $D_4$ $G_1$ $M_2$ परेह्येनं; $B_4$ $M_1$ परैर्ह्येनं; $G_2$ पुरोहितं; $G_4$ परो ह्येतं. $T_1$ प्रेत्य ह्येनं मूढ भजस्व तूर्णं. — $^{d}$) $K_1$ $D_1$ त्वमात्मना; $B_4$ दुरात्मनः; $T_1$ महात्मानं; $G_4$ तवात्मानः.

**9** $^{a}$) $K_1$ M अथाप्येतं. $K_3$ पश्यसे. S (except $G_3$) रथे स्थितं (for रथस्थं). — $^{b}$) $K_1$ महाबलं. $K_1$ S (except $T_2$ $G_3$) साल° (for शाल°). $K_3$ प्रविद्धं. — $^{c}$) N (except $D_1$) T $G_3$ संदष्टौष्ठं. A few MSS. भृकुटी-. $K_1$ °संनतभ्रूर्; $K_{3.4}$ $D_1$ $T_2$ °संहतभ्रुं; $T_1$ °संहतभ्रुर्; $M_2$ °संहतभ्रुवो.

**10** $M_2$ om. (hapl.) 10–12. — $^{a}$) $K_1$ आजानीया; $K_2$ आजानया; $D_4$ अजानेया. Dc बलिनां; $T_2$ $G_{1.2.4}$ वाजिनः. — $^{b}$) K $T_1$ $M_1$ महाबलं; $G_4$ महाजवाः. $K_1$ शूरमुदाहरंति; $T_1$ °तमं वहंति. — $^{d}$) T $G_{1.2.4}$ $M_1$ ततः (for गतः).

**11** $M_2$ om. 11 (cf. v.l. 10). — $^{a}$) $D_5$ $T_2$ $G_2$ अपराधात्. $K_{1.2}$ शेषमिहानुयांति; $B_{1-3}$ D (except $D_{1.5}$) $G_3$ °मवाप्नुवंति. — $^{b}$) B Dn $D_{4.5}$ नायं; Dc $D_{2.3.6}$ $G_3$ नायं च (for नाप्यस्य). T $G_{1.2.4}$ विस्मरंते. — $^{c}$) $K_{1.3.4}$ $B_1$ Dc $D_{2.3.6}$ T $G_{1.4}$ संनिधा°. — $^{d}$) T $G_{1.2.4}$ $M_1$ तत्तप्यतीह (for गच्छत्यतीव).

**12** $M_2$ om. 12 (cf. v.l. 10). — $^{a}$) B Dn $D_{4.6}$ $G_3$ धनुर्धराग्र्यो (for मृदुर्वदान्यो). T $G_{1.2.4}$ $M_1$ मति° (for धृति°). K Dc $D_{1.2.5}$ मनस्वी (for यशस्वी). — $^{b}$) Dc $D_2$ तथैव (for नृवीरः). — $^{c}$) $K_1$ श्रुता (for भ्राता).

**13** $^{a}$) $K_{3.4}$ $D_1$ $G_{1.2.4}$ $M_1$ नैव (for वै न). $G_{1.2.4}$ कोपान्न (for कामा°). $K_3$ B Dc $D_2$ $T_1$ कोपात्; $G_{1.2.4}$ कामात्; $M_1$ मोहात् (for लोभात्). $T_2$ कदापि कोपान्न भिया न कामात्. — $^{b}$) $T_1$ धर्मं त्यजेन् (by transp.). Dc $D_{1.2}$ $G_4$ नानृशंस्यं; $Dn_{2.n3}$ $D_{3.4}$ $G_{2.3}$ न नृशंस्यं. — $^{d}$) $B_{2.3}$ M माद्रीसुतः; $D_1$ $T_1$ कुंतीपुत्रः. $B_2$ सहदेवः; Dc $D_{2.5}$ शत्रुसंघ-; $M_1$ शत्रुगण-.

**14** After $14^{ab}$, S (except $G_3$) ins.:

1212* बन्धुप्रियः शस्त्रभृतां वरिष्ठो
महाहवेष्वप्रतिवार्यवीर्यः ।

**15** $^{a}$) $D_1$ प्राणैर्गरीयान्पांडवानां महात्मा; T $G_{1.2.4}$ प्राणैर्गरीयान्समनुव्रतश्च. — After $15^{a}$, $D_1$ ins.:

1213* शूरः कृतज्ञो दृढसौहृदश्च ।
महाहवे यश्च रिपुप्रमाथी.

— $^{c}$) $K_4$ खड्गवेधी; $B_1$ संगयोधी. $K_3$ $B_2$ Dc $D_1$ यः खड्गहस्तो लघुचित्रयोधी. — $^{d}$) $K_{1.3}$ $B_1$ $Dc_2$ $D_1$ $T_1$ $G_{1.2}$ M मतो; $K_4$ मानी; $B_4$ $T_2$ $G_4$ मतौ च (for महांश्च). K B

य: खड्गयोधी लघुचित्रहस्तो
　महांश्च धीमान्सहदेवोऽद्वितीय: ॥ १५
यस्याद्य कर्म द्रक्ष्यसे मूढसत्त्व
　शतक्रतोर्वा दैत्यसेनासु संख्ये ।
शूर: कृतास्त्रो मतिमान्मनीषी
　प्रियंकरो धर्मसुतस्य राज्ञ: ॥ १६
य एष चन्द्रार्कसमानतेजा
　जघन्यज: पाण्डवानां प्रियश्च ।
बुद्ध्या समो यस्य नरो न विद्यते
　वक्ता तथा सत्सु विनिश्चयज्ञ: ॥ १७
स एष शूरो नित्यममर्षणश्च
　धीमान्प्राज्ञ: सहदेव: पतिर्मे ।
त्यजेत्प्राणान्प्रविशेद्धव्यवाहं
　न त्वेवैष व्याहरेद्धर्मबाह्यम् ।
सदा मनस्वी क्षत्रधर्मे निविष्ट:
　कुन्त्या: प्राणैरिष्टतमो नृवीर: ॥ १८
विशीर्यन्तीं नावमिवार्णवान्ते
　रत्नाभिपूर्णां मकरस्य पृष्ठे ।
सेनां तवेमां हतसर्वयोधां
　विक्षोभितां द्रक्ष्यसि पाण्डुपुत्रै: ॥ १९
इत्येते वै कथिता: पाण्डुपुत्रा
　यांस्त्वं मोहादवमन्य प्रवृत्त: ।
यद्येतैस्त्वं मुच्यसेऽरिष्टदेह:
　पुनर्जन्म प्राप्स्यसे जीव एव ॥ २०

वैशंपायन उवाच ।

तत: पार्था: पञ्च पञ्चेन्द्रकल्पा-
　स्त्यक्त्वा त्रस्तान्प्राञ्जलींस्तान्पदातीन् ।
रथानीकं शरवर्षान्धकारं
　चक्रु: क्रुद्धा: सर्वत: संनिगृह्य ॥ २१　　C. 3. 15715 B. 3. 270. 21 K. 3. 271. 22

इति श्रीमहाभारते आरण्यकपर्वणि चतु:पञ्चाशदधिकद्विशततमोऽध्याय: ॥ २५४ ॥

---

Dc D1. 3. 5. 6 G3 बलदेवो द्वि( K1 B4 °वाद् द्वि; K4 B3 Dc2 °वद्वि )तीय:.

**16** a) D5 M1 तस्याद्य; T2 G2. 4 यस्मात्; G1 तस्मात्. D1 द्रक्ष्यसि. Dc D2 मूढभाव:; G4 °सत्त्व:. — b) K4 om. वा. K1. 2 दैत्यसैन्यस्य; T2 मन्यसे साधु; G1 अद्य सेनासु; M1 दैत्यसैन्येषु. K1. 2 मध्ये; T1 G4 M संखे; G2 संघे. — c) K Dc2 D1. 2. 5 धृतिमान्. B D (except D1. 2. 5) G3 मनस्वी (for मनीषी). — d) T2 धर्मराजस्य.

**17** a) K1. 2. 4 Dc1 स एष; S (except G3) हुताश-.

**18** a) G1. 2. 4 य एष. — d) K4 न त्वैवेव; G1 न त्वेष वै; M2 न त्वैवैष. B1 धर्मवाक्यं; B3. 4 °राज्यं. — e) G1. 2. 4 मनीषी (for मनस्वी). G2 सत्यधर्मे. B2. 3 Dn D3. 4. 6 G3 रतश्च (for निविष्ट:).

**19** a) K3 G2 विशीर्यंती; B2 व्यशीर्यंतीं; B4 विशीर्यंतिर्; T1 वशीयतिर् (sic); G4 M2 विशीर्यंतीं. K1. 2. 4 T1 °र्णवांतरे (T1 °रं). — c) K1–3 D1 T1 G1. 2 M तथेमां. — d) T1 पश्यसि (for द्रक्ष्य°).

**20** a) K1. 3. 4 Dc2 D1. 2 T2 G1. 2. 4 इत्येवं ते; T1 इत्येवमेते; M इत्येते ते (for इत्येते वै). — b) T1 G1. 4 M1 ह्यवमत्य. — c) B2–4 Dn D3. 4. 6 G3 यद्येतेभ्यो (for °तैस्त्वं). K2 B3. 4 T1 G1 मुच्यते. K2 T2 [ऽ]निष्ट°. — d) K1–3 B1. 3 D1. 5 M2 प्राप्स्यसि. K2 जीव एष:; B1 सत्यमेव; T G1 M2 जीवितं च; G2. 4 जीवनं च; M1 जीवमान:.

**21** D5 G1. 2. 4 M2 om. the ref. — b) K3 द्विजातीन् (for पदा°). — c) D (except D1. 3) यथानीकं. — d) D1 संनिरुद्धा:; G1. 2. 4 ते निगृह्य.

Colophon. — *Major parvan:* K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K1. 3. 4 B D G3 M द्रौपदीप्रमाथ. — *Adhy. no.* (figures, words or both): Dn 268 (Dn3 269); D1 270; T G4 M (M2 *inf. lin.*) 258 (M2 orig. 260); G1 255; G2 257. — *Śloka no.:* Dn1. n2 21; Dn3 D1 22.

## 255

**1** a) T2 G1. 2. 4 M सं( G1 आ )तिष्ठध्वं (for °ष्ठत). — b) K1. 3. 4 Dc D1. 2. 5 द्रुतं; G1. 2. 4 M2 तूष्णीं (for तूर्णं). K2 द्रुवंति परि°; T2 तूर्णं न परि°. — c) K1 तस्मिन् (for इति). K1 स; B2 वै (for स्म). — d) K1 D5 सैनिकान् (for ताम्रपान्).

**2** a) B2. 4 Dn D3–6 G3 घोरतम:. — d) B1 ससैन्यान्

# २५५

C. 3. 15716
B. 3. 271. 1
K. 3. 272. 1

वैशंपायन उवाच।

संतिष्ठत प्रहरत तूर्णं विपरिधावत।
इति स्म सैन्धवो राजा चोदयामास तान्नृपान् ॥ १
ततो घोरतरः शब्दो रणे समभवत्तदा।
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ २
शिबिसिन्धुत्रिगर्तानां विषादश्चाप्यजायत।
तान्दृष्ट्वा पुरुषव्याघ्रान्व्याघ्रानिव बलोत्कटान् ॥ ३
हेमचित्रसमुत्सेधां सर्वशैक्यायसीं गदाम्।
प्रगृह्याभ्यद्रवद्भीमः सैन्धवं कालचोदितम् ॥ ४
तदन्तरमथावृत्य कोटिकाश्योऽभ्यहारयत्।
महता रथवंशेन परिवार्य वृकोदरम् ॥ ५
शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः।
कीर्यमाणोऽपि बहुभिर्न स्म भीमोऽभ्यकम्पत ॥ ६
गजं तु सगजारोहं पदातींश्च चतुर्दश।
जघान गदया भीमः सैन्धवध्वजिनीमुखे ॥ ७
पार्थः पञ्चशताञ्शूरान्पार्वतीयान्महारथान्।
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ॥ ८
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम्।
निमेषमात्रेण शतं जघान समरे तदा ॥ ९
ददृशे नकुलस्तत्र रथात्प्रस्कन्द्य खड्गधृक्।
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ॥ १०
सहदेवस्तु संयाय रथेन गजयोधिनः।
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ॥ ११
ततस्त्रिगर्तः सधनुरवतीर्य महारथात्।
गदया चतुरो वाहान्राज्ञस्तस्य तदावधीत् ॥ १२
तमभ्याशगतं राजा पदातिं कुन्तिनन्दनः।

---

(for सैन्यानां).

**3** $^a$) B Dn $D_{3-6}$ $G_3$ शिबिसौवीरसिंधूनां. — $^b$) $K_3$ $B_1$ $D_1$ चोपजायते; $B_2$ S (except $G_3$) समजायत. — $^c$) $K_4$ तान्दृष्ट्वा पुरुषाञ्शूरान्. — $^d$) $Dn_2$ अतीव च (for व्याघ्रानिव)! S (except $G_3$ $M_2$) मदो° (for बलो°).

**4** $^a$) $D_1$ हेमबिंदुसमु°; $T_1$ हेमबंधसमु°; $T_2$ $G_{1.2.4}$ हेमबिंदुं महोत्सेधां; M हेमबिंदुमयोत्सेधां. — $^b$) $K_{1.3.4}$ $B_{1.3}$ $D_3$ S (except $G_3$) °सैक्या°. — $^c$) $G_1$ प्राद्र° (for [अ]भ्यद्र°). — $^d$) K $D_1$ सैंधवं काममोहितं.

**5** $^a$) T $G_{1.2.4}$ तदंतरं समासाद्य ($T_1$ °विश्य); M तयोरं($M_2$ °तोनं)तरमासाद्य. — $^b$) $K_{1.2}$ कोटिकाश्वो; $K_{3.4}$ $B_1$ $Dn_1$ $D_{1.4-6}$ °कास्यो; $B_{2.3}$ Dc $D_{2.3}$ °काख्यो. $K_3$ व्यदाहरत्; $T_1$ ह्यधारयत्; $T_2$ $G_2$ ह्यवा°; $G_{1.4}$ न्यवा°; M [ऽ]भ्यवा°. — $^c$) $K_4$ महता शरवर्षेण.

**6** $^a$) $B_2$ यष्टि°. — $^d$) $K_1$ $D_1$ स; $K_4$ $G_1$ च (for स्म). $K_{1.3}$ $D_1$ $T_2$ $G_{2.4}$ व्यकंपत; Dc $D_2$ व्यकंपयत्; $T_1$ $G_1$ $M_1$ [ऽ]प्यकंपत.

**7** $^a$) $K_{1.2}$ $Dc_2$ $D_2$ $T_1$ $G_4$ च (for तु). — $^b$) $K_{1.3}$ $D_1$ पदातांश्च; Dc $D_2$ पादातांश्च. $M_1$ सहस्रशः (for चतुर्दश). — $^c$) $K_3$ T $G_{1.2.4}$ वीरः (for भीमः). — $^d$) $D_5$ सैंधवस्य महारणे.

**8** $K_{1.2}$ om. (hapl.) 8. — $^a$) $K_4$ पंचाशतं; $B_1$ पंचरथान्; M पंचशतं. $B_2$ T $G_{1.2.4}$ वीरान् (for शूरान्). — $^c$) $D_1$ $G_4$ परीप्समानान्. $K_4$ Dc $D_2$ $G_{1.4}$ सौवीरान्.

**9** $^a$) $K_{1.2}$ युधिष्ठिरः; $K_{3.4}$ Dc $D_{1.2}$ स्वयं राजा (by transp.). $K_{1.2}$ स (for सु-). — $^b$) $D_1$ प्रवीराणां. $B_1$ महीभुजां (for प्रहा°). — $^d$) $D_5$ शतं; $T_2$ तथा (for तदा). $G_1$ जघानाजौ युधिष्ठिरः.

**10** $^a$) T $G_{1.2.4}$ M नकुलोपि ($T_2$ $G_{2.4}$ °थ) तदा क्रुद्धो. — $^b$) $K_{1.2.4}$ Dc $D_{1.2}$ $T_1$ $G_2$ M खड्गभृत्; $K_3$ °वित्; $Dn_1$ $T_2$ °धृत्. — $^c$) $B_2$ (m as in text) शतानि (for शिरांसि). — $^d$) $B_1$ T $G_2$ M प्रावपन्; $G_1$ प्रावपद्. $G_1$ भुवि (for मुहुः).

**11** $^a$) $K_4$ $T_2$ $G_{1.2.4}$ M संवार्य; $B_2$ °जघ्ने; Dc $D_2$ °प्राप्य; $Dn_2$ $T_1$ °धाय; $D_1$ °भ्रामे (for °याय). — $^b$) $K_1$ शत° (for गज°).

**12** $^a$) $K_3$ $B_3$ $D_{1.3.5}$ M सु- (for स-). — $^b$) $K_{1.3.4}$ $D_1$ रथोत्तमात् (for महारथात्). — $^c$) $D_2$ वीरान् (for वाहान्). — $^d$) K $D_{1.5}$ सर्वान् (for तस्य). $T_1$ राज्ञस्तस्यावधीत्पुनः.

**13** $^a$) $K_1$ $D_3$ अभ्याशे गतं; $K_2$ $D_5$ अभ्यासे गतं; $K_{3.4}$ $B_3$ Dc $D_{1.2.4}$ अभ्यास°; $G_{2.4}$ अथाभ्या°. — $^b$) $B_{1.4}$

अर्धचन्द्रेण बाणेन विव्याधोरसि धर्मराट् ॥ १३
स भिन्नहृदयो वीरो वक्त्राच्छोणितमुद्वमन् ।
पपाताभिमुखः पार्थं छिन्नमूल इव द्रुमः ॥ १४
इन्द्रसेनद्वितीयस्तु रथात्प्रस्कन्द्य धर्मराट् ।
हताश्वः सहदेवस्य प्रतिपेदे महारथम् ॥ १५
नकुलं त्वभिसंधाय क्षेमंकरमहामुखौ ।
उभावुभयतस्तीक्ष्णैः शरवर्षैरवर्षताम् ॥ १६
तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ ।
एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥ १७
त्रिगर्तराजः सुरथस्तस्याथ रथधूर्गतः ।
रथमाक्षेपयामास गजेन गजयानवित् ॥ १८
नकुलस्त्वपभीस्तस्माद्रथाच्चर्मासिपाणिमान् ।
उद्भ्रान्तं स्थानमास्थाय तस्थौ गिरिरिवाचलः ॥ १९
सुरथस्तं गजवरं वधाय नकुलस्य तु ।
प्रेषयामास सक्रोधमभ्युच्छ्रितकरं ततः ॥ २०
नकुलस्तस्य नागस्य समीपपरिवर्तिनः ।
सविषाणं भुजं मूले खड्गेन निरकृन्तत ॥ २१
स विनद्य महानादं गजः कङ्कणभूषणः ।
पतन्नवाक्शिरा भूमौ हस्त्यारोहानपोथयत् ॥ २२
स तत्कर्म महत्कृत्वा शूरो माद्रवतीसुतः ।
भीमसेनरथं प्राप्य शर्म लेभे महारथः ॥ २३
भीमस्त्वापततो राज्ञः कोटिकाश्यस्य संगरे ।
सूतस्य नुदतो वाहान्क्षुरेणापाहरच्छिरः ॥ २४
न बुबोध हतं सूतं स राजा बाहुशालिना । C. 3. 15740 B. 3. 271. 25 K. 3. 272. 25

Dc पदातिः. K$_{1.3.4}$ D$_1$ पांडु° (for कुन्ति°).

**14** K$_4$ om. (hapl.) 14$^a$–15$^b$. — $^a$) K$_1$ धीरो. — $^b$) Dn$_1$. n$_2$ D$_{1.3}$ G$_3$ उद्वहन्. — $^c$) K$_3$ B$_4$ [अ]भिमुखं. K$_1$ तस्य (for पार्थ). T$_1$ पपात सहसा भूमौ; T$_2$ G$_{2.4}$ °भिमुखं प्राप्तश्च. — $^d$) = 4. 15. 9$^d$. M$_2$ जीर्णं° (for छिन्न°).

**15** K$_4$ om. 15$^{ab}$ (cf. v.l. 14). — $^c$) T$_1$ अथास्य; T$_2$ हताश्वात्.

**16** $^a$) K$_3$ B$_3$ D$_{3.6}$ G$_3$ त्वभिसंयाय (K$_3$ D$_3$ both marg. *sec. m.* as in text); Dc$_2$ D$_2$ त्वभिसंप्राप्य; T G$_{1.2.4}$ चापि संवार्य; M त्वभिसंवार्य. — $^b$) T$_2$ G$_2$ °सुमालवौ; G$_{1.2}$ °महामल्लौ. — $^d$) K$_{1.2}$ अवाकिरत् (for अवर्षताम्).

**17** $^a$) B Dn D$_{3.4.6}$ G$_3$ तोमरैर्; Dc D$_{2.5}$ तौ शराव्. K$_4$ G$_4$ अभिवर्षंतां. — $^b$) K$_4$ पार्थिवौ (for वार्षिकौ). — $^c$) D$_1$ एकैकेनैव बाणेन.

**18** M$_2$ om. (hapl.) 18$^a$–23$^b$. — $^b$) K$_{1.4}$ B$_1$ D$_5$ T$_1$ G$_4$ गजधूर्गतः; T$_2$ गजयूथपः. D$_1$ तत्पार्श्वगजधूर्गतः. — $^c$) G$_4$ आरोप° (for आक्षेप°). — $^d$) T$_2$ °न गजयूथवत्.

**19** M$_2$ om. 19 (cf. v.l. 18). — $^a$) K$_1$ D$_1$ तमभीस्; M$_1$ त्वपतत् (for त्वपभीस्). — $^b$) T$_2$ G$_{1.2.4}$ °खड्गधृक् (for °पाणिमान्). — $^c$) K B$_1$ Dc D$_{1.2}$ S (except G$_3$) उद्भ्राम्य; B$_4$ उद्भ्रांतः. — $^d$) 1. 179. 14$^d$; 181. 4$^d$: 4. 54. 13$^d$. Cf. Hopkins, *Great Epic*, App. A, No. 91 (p. 414).

**20** M$_2$ om. 20 (cf. v.l. 18). — $^a$) K$_{1.2}$ सुरथस्थं. — $^b$) T$_1$ रथाय (for वधाय). K$_4$ B$_1$ G$_1$ च (for तु). — $^c$) D$_1$ M$_1$ संक्रुद्धम्. — $^d$) K$_{1.2}$ B$_1$ Dn D$_{4.5}$ G$_1$ अत्यु° (for अभ्यु°). G$_1$ तदा; M$_1$ तथा.

**21** M$_2$ om. 21 (cf. v.l. 18). — $^a$) K$_3$ B$_1$ राज्ञस्य (for नाग°). — $^c$) D$_1$ परं (for भुजं). K$_1$ T$_2$ मूलं; K$_4$ मूलात्. — $^d$) B$_4$ निकृतं ततः; T$_1$ विनिकृंतत.

**22** M$_2$ om. 22 (cf. v.l. 18). — $^b$) K$_{1.2}$ किंकिणि°; K$_{3.4}$ B$_3$ कंटक°; B$_{2.4}$ Dc Dn$_1$ D$_{1.2.5}$ M$_1$ कंकट°; T$_1$ कनक°; T$_2$ G$_{1.2.4}$ घंटावि° (for कङ्कण°). — $^c$) T$_1$ पपाताथ (for पतन्नवाक्-). K D$_1$ राजन् (for भूमौ). — $^d$) T$_2$ दंतमोहाद्; G$_2$ हस्तिगोपान्; G$_4$ हस्तमोहाद्; M$_1$ हस्त्यारोहम्.

**23** M$_2$ om. 23$^{ab}$ (cf. v.l. 18). — $^a$) K$_{2–4}$ Dc D$_{1.2.5}$ स तत्कृत्वा महत्कर्म. — $^d$) B$_3$ परंतपः (for महा°).

**24** $^b$) K$_{1.2}$ कोटिकाश्वस्य; K$_4$ B$_1$ Dn D$_{1.4.5}$ °स्यस्य; B$_{2–4}$ Dc D$_{2.3}$ °ख्यस्य; D$_6$ G$_3$ °ख्येन. B$_1$ Dc D$_2$ S (except G$_3$) संयुगे. — $^c$) K$_1$ B$_3$ Dc$_2$ M तुदतो; K$_3$ B$_1$ T$_1$ G$_{1.2.4}$ तु ततो; B$_4$ नकुलो (for नुदतो). — $^d$) K$_1$ शरेण (for क्षुरेण). K$_{3.4}$ B$_1$ Dn$_2$. n$_3$ D$_3$ G$_1$ [अ]पहरच्. Dc D$_2$ क्षुरप्रेणाहरच्छिरः.

**25** $^a$) K$_4$ बुधोपहतं; T$_1$ प्रबोधहतं. — $^b$) Dc$_2$ G$_{2.4}$ M$_2$ बहुशालिना; T M$_1$ बा(T$_1$ ब)हुशालिनः. — $^c$) K$_{1.3.4}$ अश्वः. K$_1$ प्राद्रवत्; K$_{3.4}$ व्यद्रवत्; D$_1$ [अ]भ्याद्रवन्; T$_1$ ह्यद्रवन्; T$_2$ G$_2$ प्राद्रवन्; G$_{1.4}$ M$_1$ [अ]भ्यद्रवन्; M$_2$ भ्याद्रवन्. T$_1$ G$_{1.2}$ M संख्ये. — $^d$) K$_1$ Dc$_2$ D$_2$ हतस्ततः (for ततस्ततः). G$_{1.2.4}$ हतसूतरथास्ततः (G$_1$ °थे स्थितः).

C. 3. 15740 B. 3. 271. 25 K. 3 272. 25 तस्याश्वा व्यद्रवन्संख्ये हतसूतास्ततस्ततः ॥ २५
विमुखं हतसूतं तं भीमः प्रहरतां वरः ।
जघान तलयुक्तेन प्रासेनाभ्येत्य पाण्डवः ॥ २६
द्वादशानां तु सर्वेषां सौवीराणां धनंजयः ।
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ॥ २७
शिबीनिक्ष्वाकुमुख्यांश्च त्रिगर्तान्सैन्धवानपि ।
जघानातिरथः संख्ये बाणगोचरमागतान् ॥ २८
सादिताः प्रत्यदृश्यन्त बहवः सव्यसाचिना ।
सपताकाश्च मातङ्गाः सध्वजाश्च महारथाः ॥ २९
प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ३०
श्वगृध्रकङ्ककाकोलभासगोमायुवायसाः ।
अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः ॥ ३१
हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनपरोऽभवत् ॥ ३२
स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्य वै ।
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ॥ ३३
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ३४
ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे ।
आदिश्यादिश्य नाराचैराजघान वृकोदरः ॥ ३५
सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथम् ।
वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान् ॥ ३६

अर्जुन उवाच ।

यस्यापचारात्प्राप्तोऽयमस्मान्क्लेशो दुरासदः ।
तमस्मिन्समरोद्देशे न पश्यामि जयद्रथम् ॥ ३७

---

**26** a) S (except G3) विरथं (for °मुखं). — c) K1. 3. 4 D1 °मुक्तेन (for °युक्तेन). T2 G2. 4 निजघानातियत्नेन; G1 निजघान रथस्थेन. — d) T1 [आ]वृत्य (for [अ]भ्येत्य). — After 26, T1 ins.:

1214* तदा तु संप्रवृत्ते तु तुमुले योधसंक्षये ।
अङ्गारकः कुञ्जरश्च संजयो गुप्तकस्तथा ।
शत्रुंजयः सुप्रबुद्धो शुभकृद्भ्रमका अपि ।
शूरः पराकुः कुहको द्वादशैते महारथाः ।
सुबलाः सैन्धवाश्चैव त्रिगर्ताश्च महाबलाः । [5]
इक्ष्वाकुयोधाः प्रबला रथिनः सह यद् द्विपाः ।
कोटीकृत्य च पार्थं तु शरवर्षैरवाकिरन् ।
अर्जुनस्तु ततः क्रुद्धः शरवर्षं निहत्य च ।

**27** ab) K4 वीराणां (for सर्वेषां), and सर्वेषां वा (for सौवीराणां). — c) K1. 3. 4 D1 बाणैर्; G1. 2 फल्लैर्.

**28** a) S (except G3) °वीरांश्च (for °मुख्यांश्च). — c) K4 रथिनः (for [अ]तिरथः). S (as usual) संखे.

**29** a) K1 सागताः; T2 G1. 2 सूदिताः. — b) K1. 3. 4 Dc D2 S (except G3) बहुधा; D1 बलिना (for बहवः). — T1 om. 29d–30a.

**31** ab) K1 सगृध्रकंक°; K3 श्वगृध्रकंककोलोकभास°; K4 श्वगृध्रकंककाकोला भासागोमायु°; B1 श्वकंकगृध्राः पृथुला भास°; Dc D2 श्वगृध्रकंककाकोलश्येनगोमायु°; D5 श्वगृध्रकंकगोमायुकाकोलूकाः सवायसाः; T M श्वकंकगृध्रकाकोल°; G1. 2. 4 श्वकाकगृध्रकाकोल(G1 °गाकोलो)भास°. — After 31, T1 ins. a passage given in App. I (No. 26).

**32** d) B3. 4 Dn D4–6 G3 M °मना° (for °परो°). — After 32, T1 ins.:

1215* विद्राव्यमाने सैन्ये तु मकरैरर्णवो यथा ।

**33** a) K4 आकुले (for संकुले). — b) B1 अपहाय वै; B2. 3 Dn G2 अवतार्य तां; D5 T2 G1. 4 °र्य च. — d) K3 ये च; D3 (marg. *sec. m.*) वीरो; G2. 4 तत्र (for येन). K2 B2. 3 Dc2 D3 (marg. *sec. m.*) T2 G4 नराधिपः; G3 जनाधिपः. G1 वनायैव नराधिपः.

**34** b) M2 कृत्वा (for दृष्ट्वा). B2 °पुरःसरां. D1 धौम्यदृष्टिपुरस्कृतां. — c) D1 माद्रीसुतेन. — d) T2 G1. 2. 4 आरोहयत्. B1. 4 ततः (for तदा). — After 34, D1 ins. an addl. colophon (*adhy. no.:* 271).

**35** a) K3 B4 तं; D1 G1. 2. 4 तु (for तद्). K4 विहतं. — b) K1 उपयाते. — c) K1. 2 नाराचान्. — d) K1. 2 G1 निचखान; K3 B2 T2 निर्जघान; K4 Dc D1. 2 T1 G2. 4 M2 निजघान (for आजघान).

**37** a) K4 Dc D2 T2 G1. 4 M [अ]पराधात्. — b) K1 अस्मात्; D1–3. 6 अस्माः; G1 अस्मात् (for अस्मान्). G4 क्लेशोस्माकं (for अस्मान्क्लेशो). — c) K1 स तस्मिन्; Dc2 T2 G1. 4 एतस्मिन् (for तमस्मिन्). B1 शरणोद्देशे. — d) G4 पश्याम.

**38** a) D1. 3 अन्वेष; S (except G2. 3) अन्विच्छ — b) K4 नो; T2 G1 तैर् (for ते). — c) K3 अमानुषम्;

तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः ।
अनामिषमिदं कर्म कथं वा मन्यते भवान् ॥ ३८

वैशंपायन उवाच ।

इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता ।
युधिष्ठिरमभिप्रेक्ष्य वाग्मी वचनमब्रवीत् ॥ ३९
हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ४०
यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन्द्रौपदीं परिसान्त्वय ॥ ४१
न हि मे मोक्ष्यते जीवन्मूढः सैन्धवको नृपः ।
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ४२

युधिष्ठिर उवाच ।

न हन्तव्यो महाबाहो दुरात्मापि स सैन्धवः ।
दुःशलामभिसंस्मृत्य गान्धारीं च यशस्विनीम् ॥ ४३

वैशंपायन उवाच ।

तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ४४
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।
सैन्धवापसदः पापो दुर्मतिः कुलपांसनः ॥ ४५
भार्यामिहर्ता निर्वैरो यश्च राज्यहरो रिपुः ।
याचमानोऽपि संग्रामे न स जीवितुमर्हति ॥ ४६
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः ।
राजा निववृते कृष्णामादाय सपुरोहितः ॥ ४७
स प्रविश्याश्रमपदं व्यपविद्धबृसीघटम् ।
मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ४८
द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैः समागतैः ।
समियाय महाप्राज्ञः सभार्यो भ्रातृमध्यगः ॥ ४९
ते स्म तं मुदिता दृष्ट्वा पुनरभ्यागतं नृपम् ।　C. 3. 15765 B. 3. 271. 50 K. 3. 272. 58

---

$B_1$ अनामृष्यम्; $G_{1.2.4}$ अनार्याणाम् (for अनामिषम्). $T_2$ अनामकं कर्म कथं. — $^{d}$) $T_2$ कर्तुं वै (for कथं वा).

**39** $^{b}$) $D_5$ भारत (for धीमता). — Dc $D_2$ om. $39^{cd}$. — $^{c}$) $G_{2.4}$ अभिप्रेत्य. — $^{d}$) $K_3$ $Dn_2$ वाज्मी; $T_1$ इदं.

**40** Before 40, $M_1$ ins. भीमः. — $^{a}$) $T_1$ बहवो (for रिपवो). — $^{b}$) $T_2$ $G_{1.2.4}$ M भूयिष्ठं वि($T_2$ $G_4$ प्र)द्रुतं बलं. — $^{c}$) $T_1$ प्रगृह्य (for गृहीत्वा). — $^{d}$) $K_4$ Dc $D_2$ इति (for इतः).

**41** $^{b}$) $G_{1.2.4}$ तु (for च). — $^{d}$) $B_{3.4}$ परिसांत्वयन्.

**42** $^{a}$) $K_3$ मे मोक्षसे; Dc $D_2$ संमोक्ष्य($D_2$ °क्ष)ते; $D_5$ मोक्ष्यति मे. $K_{1.2}$ मूढो; $K_3$ वीर (for जीवन्). — $^{b}$) $K_{1.2}$ वीर (for मूढः). — $T_2$ om. $42^{cd}$. — $^{d}$) $G_1$ शक्रस्य (for शक्रोऽस्य).

**43** $K_4$ om. $43^{ab}$. — $^{b}$) $D_5$ T $G_{1.2.4}$ चापि (for [अ]पि स). — $^{c}$) $K_1$ $D_1$ अपि संस्मृत्य; $T_2$ $G_{1.4}$ अभि-($G_1$ भीम)संप्रेक्ष्य.

**44** $^{a}$) S (except $G_3$) साध्वी (for भीमम्). — $^{c}$) $K_{1-3}$ Dc $D_{2.5}$ बाला (for प्राज्ञा). $K_4$ $D_1$ कुपितांगी गतप्रज्ञा ($D_1$ नरव्याघ्र); $T_2$ कुपिता स्त्री महाप्राज्ञा.

**45** Before 45, $M_1$ ins. द्रौपदी. — $^{a}$) S (except $T_1$ $G_3$ $M_1$) हि (for चेत्). — $^{c}$) S (except $G_3$) °पशदः. — $^{d}$) K $D_1$ दुर्बुद्धिः (for दुर्मतिः).

**46** $^{a}$) $K_{1.2}$ $Dn_1$ $D_5$ भार्या विहर्ता; $K_3$ °र्या हि हर्ता; $B_{1.2}$ °पहर्ता; $T_1$ °भिमंता; $T_2$ $G_{2.4}$ M °वमंता; $G_1$ °र्या हि मंता. $B_1$ यः पापो; $B_2$ वै भीमो; $B_{3.4}$ D (except $D_{1.5}$) $G_3$ वैरी यो; $G_1$ निर्वीर्यो; $M_2$ निर्वीरो. — $^{d}$) $K_4$ B D न मोक्तव्यः कथंचन (Dc °च नः).

**47** Before 47, $M_1$ ins. वैशं°. — $^{b}$) $B_1$ पर्यतप्यत सैंधवः. — $^{c}$) $T_1$ निवर्तते.

**48** $^{a}$) $Dc_2$ $D_2$ विवेशा° (for प्रविश्या°). — $^{b}$) $K_{3.4}$ Dc $D_{1.2.5}$ °वृषी($K_4$ °बृशी)घटं; $B_{1.4}$ °वृषीमठं; $B_{2.3}$ $Dn_3$ $D_{3.6}$ $G_3$ विप्रविद्धवृषी($Dn_3$ $G_3$ °सी)मठं; $Dn_{1.n2}$ $D_4$ अपविद्धवृसी($D_4$ °षी)मठं; $T_1$ $G_{2.4}$ अपविद्धबृसीकटं; $T_2$ अप्रसिद्धवृषीमठं; $G_1$ ह्यपविद्धबृषीकटं. — $^{d}$) Dc $D_2$ अनुकीर्णैर्; $M_2$ अवकीर्णं. $K_4$ $D_1$ समंततः; $D_5$ सहस्रशः (for ददर्श ह).

**49** $^{b}$) $K_{1.2}$ समंततः; B Dn $D_{3.4.6}$ $T_1$ $G_3$ $M_2$ समाहितैः; Dc $D_2$ °हितः. — $^{c}$) $K_4$ S (except $T_2$ $G_3$) समेयाय. $K_1$ महाबाहुः; $K_4$ °प्राज्ञैः. — $^{d}$) $K_{1.2}$ भृत्यमध्यगः; $K_4$ धर्मनंदनः; $D_1$ भ्रातृनंदनः.

**50** $^{a}$) $K_3$ Dc $D_2$ $T_1$ $G_4$ तं मुदितं; $K_4$ प्रमुदिता; $D_3$ तां मुदितां. $K_1$ भृत्यैः सपदि तं दृष्ट्वा. — $^{b}$) $K_3$ B Dn $D_{3-6}$ $G_3$ प्रत्या° (for अभ्या°). — $^{c}$) S (except $T_2$ $G_3$) च (for तान्). — $^{d}$) S (except $T_2$) om. च. $T_2$ [आ]गतां (for [आ]हृतां).

C. 3. 15765 B. 3 271. 50 K. 3. 272. 58 जित्वा तान्सिन्धुसौवीरान्द्रौपदीं चाहृतां पुनः ॥ ५०
स तैः परिवृतो राजा तत्रैवोपविवेश ह ।
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भामिनी ॥ ५१
भीमार्जुनावपि श्रुत्वा क्रोशमात्रगतं रिपुम् ।
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम् ॥ ५२
इदमत्यद्भुतं चात्र चकार पुरुषोऽर्जुनः ।
क्रोशमात्रगतानश्वान्सैन्धवस्य जघान यत् ॥ ५३
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ।
अकरोद्दुष्करं कर्म शरैरस्त्रानुमन्त्रितैः ॥ ५४
ततोऽभ्यधावतां वीरावुभौ भीमधनंजयौ ।
हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसम् ॥ ५५
सैन्धवस्तु हतान्दृष्ट्वा तथाश्वान्स्वान्सुदुःखितः ।
दृष्ट्वा विक्रमकर्माणि कुर्वाणं च धनंजयम् ।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ५६
सैन्धवं त्वभिसंप्रेक्ष्य पराक्रान्तं पलायने ।
अनुयाय महाबाहुः फल्गुनो वाक्यमब्रवीत् ॥ ५७
अनेन वीर्येण कथं स्त्रियं प्रार्थयसे बलात् ।
राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ।
कथं चानुचरान्हित्वा शत्रुमध्ये पलायसे ॥ ५८
इत्युच्यमानः पार्थेन सैन्धवो न न्यवर्तत ।
तिष्ठ तिष्ठेति तं भीमः सहसाभ्यद्रवद्बली ।
मा वधीरिति पार्थस्तं दयावानभ्यभाषत ॥ ५९

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

---

**51** b) B1. 2. 4 D3 G3 च (for [ए]व). — d) B D (except D1. 5) G3 भाविनी.

**52** a) Dc D2 अपि श्रुत्य; D1 अभिक्रुद्धौ; D5 च संक्रुद्धौ. K4 B3 Dn D3. 4. 6 G3 भीमसेनार्जुनौ चापि. — b) K2. 4 B3 Dn D3–6 G3 श्रुत्वा क्रोशगतं रिपुं; Dc2 D2 क्रोशमात्रं रिपुं गतं. — c) T1 चोदयंतौ (for तुदन्तौ तौ). — d) K1. 3 [अ]थाभ्य°; G2 ह्यभ्य° (for [ए]वाभ्य°).

**53** b) B4 Dc D1. 2. 5 G1. 2. 4 [अ]तिरथो; T1 पुनर् (for पुरुषो). — After 53, T1 ins. 1216*.

**54** T1 om. 54a–56b. — b) K1. 3. 4 G1. 2 कृच्छ्र- (G1 कष्ट)कालेष्वसंभ्रमः; G4 M °ष्वसंभ्रमन्. — d) Dc D1. 2 M1 अस्त्राभिमंत्रितैः.

**55** T1 om. 55 (cf. v.l. 54). — a) Dc D2 दृष्ट्वा (for वीरौ). — d) T2 अवेक्ष्याकुल°.

**56** T1 om. 56ab (cf. v.l. 54). — b) K Dc2 D1. 2. 5 तान्सदश्वान्; B1. 4 T2 G1 M तत्राश्वान्स्वान्. G2. 4 तत्राश्वान्भृशदुःखितः. — T2 G1. 2. 4 M ins. after 56ab: T1 (which om. 54a–56b) ins. after 53:

1216* रथादवस्कन्द्य पद्भ्यां वै पलायनपरोऽभवत् ।

— c) K1. 3. 4 दृष्ट्वा विक्रम्य कर्माणि; K2 B D (except D1) अतिविक्रम(B4 °मानुष)कर्माणि. — f) B3 सैंधवं (for वै वनं). T1 प्राद्रवन्वै वनं ततः; G1 प्रायाद्येव (sic) वनं प्रति.

**57** c) K4 अनुज्ञाय; Dc D2 अन्वधावन्; S (except T1 G3) अनुयात्वा. Dc D2 महाप्राज्ञः. — d) N (except K1) T2 G3 फाल्गुनो.

**58** b) T1 transp. स्त्रियं and बलात्. — e) K4 वानु°; B2. 3 Dn D3. 4. 6 G3 ह्यनु°; M2 त्वानु (for चानु°). — f) G1. 2. 4 प्रधावसि (for पला°).

**59** After 59a, K4 ins.:

1217* अर्जुनेन च धीमता ।
सैन्धवोऽपि च पापात्मा.

— b) K4 यातीति (for सैन्धवो). B1. 4 Dc D2 नाभ्य°; T1 न नि° (for न न्य°). — d) K1 B3 प्राद्रवद् (for [अ]भ्यद्र°). — e) Dc मावधीद्. B1 S (except G3) तु (for तं). — f) K4 B1–3 Dc Dn D3. 4. 6 G2. 3 प्रत्य° (for अभ्य°).

Colophon. — *Major parvan:* K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K1. 3. 4 B1–3 D G3 M द्रौपदीप्रमाथ. — *Adhy. name:* B4 जयद्रथदर्शनं; T1 जयद्रथपलायनं. — *Adhy. no.* (figures, words or both): Dn 269 (Dn3 270); D1 272; T G4 M (M2 *inf. lin.*) 259 (M2 orig. 261); G1 256; G2 258. — *Śloka no.:* Dn1. n3 61; Dn2 60; D1 27.

## 256

**1** G4 om. the ref. K3 om. 1a–2b. — a) B1 संप्राप्य; B2 तं प्रेक्ष्य. — b) K1. 2 B2. 3 D (except Dc1 D1. 2) G3 °वुद्यतावुभौ. — c) K2 B1–3 Dn D3–6 G3 प्राधावत् (for प्राद्रा°). T1 आघूर्णौ (for अव्यग्रो). — After 1, T1 ins.:

# २५६

वैशंपायन उवाच ।
जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतायुधौ ।
प्राद्रवत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः ॥ १
तं भीमसेनो धावन्तमवतीर्य रथाद्बली ।
अभिद्रुत्य निजग्राह केशपक्षेऽत्यमर्षणः ॥ २
समुद्यम्य च तं रोषान्निष्पिपेष महीतले ।
गले गृहीत्वा राजानं ताडयामास चैव ह ॥ ३
पुनः संजीवमानस्य तस्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ४
तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ५
विरोषं भीमसेनं तु वारयामास फल्गुनः ।
दुःशलायाः कृते राजा यत्तदाहेति कौरव ॥ ६
भीमसेन उवाच ।
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
द्रौपद्यास्तदनर्हायाः परिक्लेष्टा नराधमः ॥ ७
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
त्वं च बालिशया बुद्ध्या सदैवास्मान्प्रबाधसे ॥ ८
एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः ।
अर्धचन्द्रेण बाणेन किंचिदब्रुवतस्तदा ॥ ९
विकल्पयित्वा राजानं ततः प्राह वृकोदरः ।
जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ १०　C. 3. 15786 B. 3. 272. 10 K. 3. 273. 11

---

1218* सलताभिः *संवृते किरीटं रत्नभास्वरम् ।
आपे विद्रव्य धावन्तं निलीयन्तं वनान्तरम् ।
भीमसेनस्तु तं कक्षे लीयमानं भयाकुलम् ।
मार्गमाणोऽवतीर्याशु रथाद्रत्नविभूषितात् ।

**2** K3 T1 om. $2^{ab}$ (for K3 cf. v.l. 1). — $^{c}$) K3 जयद्रथं च जग्राह ; D5 अभिद्रुत्याभिज° ; G2. 4 अभिद्रुतं तं ज°. — $^{d}$) B2–4 Dn D3. 4. 6 G3 °क्षे ह्यमर्षणः.

**3** $^{a}$) B D (except D1. 5) G3 भीमो (for रोषान्). — $^{c}$) B Dn D3. 4. 6 G3 शिरो (for गले). — D5 om. $3^{d}$–$5^{c}$. — $^{d}$) K1 त्रासयामास ; K2–4 Dc2 D1. 2 T1 भ्राम° ; T2 G2. 4 M पात° ; G1 पोथ°. K1. 2. 4 D1 G4 M2 चैव हि ; M2 (*sup. lin.*) भूतले.

**4** D5 om. 4 (cf. v.l. 3). — $^{a}$) T2 G2 पुनः स जीवमासाद्य. — $^{b}$) T2 G1. 2 सद्योत्पतितु° ; G4 सद्योत्पादितु°. — $^{d}$) B1. 3 प्राहनद्.

**5** D5 om. $5^{abc}$ (cf. v.l. 3). — $^{a}$) K Dc D2. 4. 6 G3. 4 जानु ; B2–4 Dn1 जानू. T1 तदा (for ददौ). — $^{b}$) K3 जघान (for जघ्ने च). B1 G1. 2. 4 चैवम्. K1. 2 जघ्ने चैवमरत्रिणा. — $^{c}$) G2. 4 राजन्. — $^{d}$) K4 °बल° ; S (except G3) °परि° (for °वर°).

**6** $^{a}$) K1 विज्ञप्तिं ; K2 विक्रोशं ; B1 विरोषो ; B2–4 Dc D2. 5 T G1. 2. 4 सरोषं. — $^{b}$) K B2 D1. 5 स्मार° (for वार°). N (except K1) G3 फाल्गुनः. — $^{d}$) K3. 4 D1. 5 S (except G3) त्वाम् (for तदा). B2 [उ]वाच (for [आ]हेति). T1 स (for [इ]ति). K1. 2 B2–4 G1. 2. 4 M कौरवः ; T1 धर्मराट्.

☞ Many of the following stanzas (up to 24) recur almost *verbatim* in an interpolated passage of the Virāṭaparvan (cf. App. I, No. 32 of that parvan).

**7** K3. 4 B2. 3 Dn2. n3 D4. 6 G3 भीम उ° ; T G1. 2. 4 M भीमः. — $^{b}$) T2 मर्त्यो ; G1 मुक्तो (for मत्तो). T1 भवितु° (for जीवितु°). — $^{c}$) B Dn D3. 4. 6 G3 कृष्णायास् (for द्रौपद्यास्). K4 M3 तव (M2 °म-) नार्हायाः ; Dc D2 यस्त्वनर्हायाः.

**8** $^{b}$) T1 स (for यद्). — $^{c}$) G1. 2. 4 तु (for च). — $^{d}$) K Dc D1. 2. 5 सततं स्म ; S (except G3) यततोस्मान्. K D1. 5 T1 प्रभाषसे.

**9** Before 9, K D1. 5 ins. वैशं° उ° (resp. वैशं°). — $^{a}$) K1. 3 D5 सटा. D5 चक्रे (for तस्य). — $^{b}$) D5 तस्य पंच वृको°. — $^{d}$) D1 न ब्रुवत° ; G1 उद्रवत° (for अब्रु°). T1 मुंडयित्वा शिरस्तथा.

**10** $^{a}$) K1. 2 विकल्पबुद्ध्या ; B Dn D3–6 G3 विकत्थ° ; M विरूप°. — $^{b}$) K4 त्वाह (for प्राह). — After $10^{ab}$, T1 ins. a corrupt variant of $13^{ab}$:

1219* तं तथा न विचेष्टन्तमबुध्वाप वृकोदरः ।

— $^{c}$) K1 T1 G4 M1 जीवितं ; K3 जीवित्वं. — $^{d}$) K3 ह्येतन् (for हेतुं). D5 वदतः.

**11** $^{a}$) B3 तथा (for त्वया). — $^{b}$) T1 सत्सु चैव (for

C. 3. 15787
B. 3. 272. 11
K. 3. 273 12

दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ॥ ११
एवमस्त्विति तं राजा कृच्छ्रप्राणो जयद्रथः ।
प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् ॥ १२
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुगुण्ठितम् ॥ १३
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ १४
दर्शयामास भीमस्तु तदवस्थं जयद्रथम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् ॥ १५
राजानं चाब्रवीद्भीमो द्रौपद्यै कथयेति वै ।
दासभावं गतो ह्येष पाण्डूनां पापचेतनः ॥ १६
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुञ्चैनमधमाचारं प्रमाणं यदि ते वयम् ॥ १७
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः ॥ १८
स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम् ।
ववन्दे विह्वलो राजा तांश्च सर्वान्मुनींस्तदा ॥ १९
तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिरः ।
तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना ॥ २०
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः क्वचित् ।
स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान् ।
एवंविधं हि कः कुर्यात्त्वदन्यः पुरुषाधमः ॥ २१
गतसत्त्वमिव ज्ञात्वा कर्तारमशुभस्य तम् ।
संप्रेक्ष्य भरतश्रेष्ठः कृपां चक्रे नराधिपः ॥ २२
धर्मे ते वर्धतां बुद्धिर्मा चाधर्मे मनः कृथाः ।
साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ ॥ २३
एवमुक्तस्तु सव्रीडं तूष्णीं किंचिदवाङ्मुखः ।

---

संसत्सु च). — c) $G_{2.4}$ चेज् (for ते). — d) $K_{1.3}$ ते युज्यते; $K_4$ $D_{3.5}$ $M_2$ युद्धजिते.

**12** b) $K_2$ $B_{1.3.4}$ Dn $D_{3.4.6}$ $G_3$ कृष्यमाणो; $K_4$ कृच्छ्रप्रासो. $K_1$ जितेंद्रियः (for जय°). — d) $K_2$ $Dn_2$ °शोभनं; $K_3$ $B_3$ $D_2$ °शोभितं. $G_1$ दासोहं वो वृकोदर.

**13** $K_1$ om. 13. — b) $B_3$ Dc $D_2$ पाशैर् (for पार्थो). — d) K ($K_1$ om.) Dc $D_5$ पांशुगुंठितं; S (except $G_3$) पांसुकुंठितं.

**14** b) $K_2$ Dc $D_{2.5}$ $T_2$ तथा. — c) $G_{2.4}$ अभ्ययम् (for अभ्येत्य).

**15** a) $G_{2-4}$ $M_2$ बीभत्सुस्. — b) $B_2$ (m as in text) युधिष्ठिरं (for जय°). — c) $K_3$ $B_4$ प्राह स दृष्ट्वा; $D_3$ $G_2$ प्राह संदृष्ट्वा; $D_5$ T $G_4$ प्रहसन्दृष्ट्वा. $M_2$ तं दृष्ट्वा प्राहसद्राजा.

**16** b) K $B_{1.3}$ (orig.) Dc $D_{1.2.5}$ $T_1$ द्रौपदी ($B_{1.3}$ °दीं) कथयस्विति; $B_{2.3m.4}$ Dn $D_{4.6}$ $G_3$ द्रौपद्याः कथ्यतामिति. — d) $K_{2.3}$ $D_1$ °चेतसः.

**17** a) $B_1$ युधां श्रेष्ठो; $D_5$ ततो हृष्टो. — b) $T_2$ राजा (for भ्राता). $D_3$ $M_1$ सं-; $T_1$ [अ]सौ (for स-). — c) B D (except $D_{1.5}$) $G_3$ मुंचेमम्. — d) B D (except $D_{1.3}$) $G_3$ प्रमाणा.

**18** b) K Dc $D_{1.2.5}$ अभिगम्य; $B_2$ °वीक्ष्य. — c) $T_1$ वि- (for ऽयं). $K_{3.4}$ $Dn_{2.3}$ राजन्; $T_1$ पापः (for राज्ञः). — d) $G_2$ पंचशिरः; $G_4$ °शिखः. $G_1$ त्वया पंचसटाः कृताः. — After 18, $T_1$ ins.:

1220* एवमुक्तः स भीमस्तु भ्रात्रा चैव च कृष्णया ।
मुमोच तं महापापं जयद्रथमचेतसम् ।;

while $G_1$ ins.:

1221* स मु[मो]चैवमुक्तस्तु भीमस्तं बन्धनात्तदा ।

**19** a) $T_2$ एवमुक्तो हि राजानम्. — c) $B_{2.3}$ Dn $D_{3.4.6}$ $T_2$ $G_3$ राजन् (for राजा). — d) B Dn $D_{4.6}$ $G_3$ दृष्ट्वा; T $G_1$ M सिद्धान्; $G_{2.4}$ वृद्धान् (for सर्वान्). Dc $D_{2.5}$ तथा (for तदा).

**21** a) $T_2$ $G_{2.4}$ अभीतो; $G_1$ अभितो (for अदासो). — b) $D_1$ त्विति (for क्वचित्). — c) B $D_2$ स्त्रीकामं च; Dn $D_{4.6}$ $G_3$ °कामं वा; $T_1$ °कामुका; $M_1$ °कामुकं. $K_{1.2}$ त्वा (for त्वां). — d) K $B_3$ $D_{1.3.5}$ $T_1$ $M_1$ क्षुद्रकर्म°; Dc $Dn_3$ $D_2$ क्षुद्रं क्षुद्र°; $Dn_2$ $D_{4.6}$ $M_2$ क्षुद्र क्षुद्र°; $T_2$ $G_{1.2.4}$ क्षुद्रक्षत्र°. — e) $B_1$ एवं विहिंसकः कुर्यात्. — f) $Dn_2$ $D_3$ $G_{2-4}$ पुरुषाधम. — After 21, $T_2$ $G_{1.2.4}$ $M_1$ ins.:

1222* कर्म धर्मविरुद्धं वै लोकदुष्टं च दुर्मते ।

**22** a) $B_1$ इति; $Dc_2$ $D_2$ इदं; $T_1$ अपि (for इव). — c) $T_1$ संप्रेष्य. Dc $D_{2.4}$ $M_1$ भरतश्रेष्ठ. — d) $K_4$ $D_4$ $G_4$ नराधिप; $B_4$ युधिष्ठिरः.

**23** a) K $B_1$ Dc $D_{1.2.5}$ $G_1$ $M_2$ वर्ततां; $M_1$ रमतां. — b) $K_{1.2}$ मतिं (for मनः). — d) $B_2$ तेस्तु (for गच्छ).

**24** a) $G_2$ M स (for तु). $K_{1.3.4}$ $B_{1.2.4}$ $Dc_2$

जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत ॥ २४
स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ २५
बलिं स्वयं प्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः ।
वरं चास्मै ददौ देवः स च जग्राह तच्छृणु ॥ २६
समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान् ।
इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत् ॥ २७
अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि ।
ऋतेऽर्जुनं महाबाहुं देवैरपि दुरासदम् ॥ २८
यमाहुरजितं देवं शङ्खचक्रगदाधरम् ।
प्रधानः सोऽस्त्रविदुषां तेन कृष्णेन रक्ष्यते ॥ २९
एवमुक्तस्तु नृपतिः स्वमेव भवनं ययौ ।
पाण्डवाश्च वने तस्मिन्न्यवसन्काम्यके तदा ॥ ३० C. 3. 15858 B. 3. 272. 81 K. 3. 273. 83

इति श्रीमहाभारते आरण्यकपर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

---

$D_{1.2}$ $T_1$ $G_{1.2.4}$ सव्रीडस; M तु व्रीळात्. — [b]) $B_3$ $T_1$ $G_2$ M अधोमुखः. — [c]) $K_4$ B Dn $D_{1.3.4.6}$ $G_3$ राजन् (for राजा).

**25** [a]) $K_4$ कृत्वा (for गत्वा). — After 25[ab], $T_1$ ins.:

1223* निराहारो जितक्रोधः पादाङ्गुष्ठाग्रविष्ठितः ।

— [d]) $B_4$ (m as in text) [ऽ]भवद्भवः; $T_2$ $G_{1.2.4}$ [ऽ]भवत्तदा (for वृष°).

**26** [a]) $D_1$ पूजां (for बलिं). — [c]) K Dc $D_{1.2}$ प्रीतः (for देवः). $K_4$ वरं चास्याददत्प्रीतः. — [d]) $K_2$ B D (except $Dc_2$ $D_{1.2}$) $T_1$ $G_3$ transp. च and जग्राह. $D_1$ S (except $T_1$ $G_3$) तं (for तत्).

**27** Before 27, $B_{3.4}$ $Dn_2$ $D_{3.4}$ $G_3$ ins. जयद्रथ उ°. — [d]) $T_2$ $G_{1.2.4}$ ततो (for तम्).

**28** Before 28, $K_3$ $G_{1.2.4}$ M ins. देवः; $B_{1.3.4}$ Dc महेश्वर उ°; $B_2$ शिव उ°; $D_{2.5}$ देवदेव उ°. — [b]) $K_1$ धार° (for वार°). Dc $D_2$ शृणु (for युधि). — After 28[c], B D (except $D_1$) $G_3$ ins.:

1224* नरं नाम सुरेश्वरम् ।
बदर्यां तप्ततपसं नारायणसहायकम् ।
अजितं सर्वलोकानां.

[(L. 1) $D_5$ देवैरपि सुदुःसहं. — (L. 2) $B_1$ °सहायवान्.] — [d]) K M दुरुत्सहं (for दुरासदम्). — After 28[d], B D (except $D_1$) $G_3$ ins. a passage given in App. I (No. 27). On the other hand, $K_{1.2.4}$ ins. after 28[d]:

1225* मम पाशुपतास्त्रेण गुप्तं सर्वत्र सर्वदा ।

**29** [a]) $K_2$ B Dn $D_{2-6}$ T $G_3$ M कृष्णं (for देवं). — After 29[ab], B D (except $D_1$) $G_3$ ins.:

1226* श्रीवत्सधारिणं देवं पीतकौशेयवाससम् ।

— [c]) $K_4$ B D $G_3$ $M_1$ प्रधानं श( $K_4$ $Dn_3$ $D_5$ °नं शा°; $B_{1.4}$ °नः श°; $M_1$ °नं सो)स्त्रविदुषां. — [d]) $B_2$ तेन कृष्णेति कीर्त्यते; $T_2$ तेन द्रक्ष्यसि रक्षितं. — After 29, B D (except $D_1$) $G_3$ ins.:

1227* सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः ।
समानस्यन्दने पार्थमास्थाय परवीरहा ।
न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः ।
कः पुनर्मानुषो भावो रणे पार्थं विजेष्यति ।
तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् ।
चतुरः पाण्डवान्राजन्दिनैकं जेष्यसे रिपून् ।
वैशंपायन उवाच ।
इत्येवमुक्त्वा नृपतिं सर्वपापहरो हरः ।
उमापतिः पशुपतिर्यज्ञहा त्रिपुरार्दनः ।
वामनैर्विकटैः कुब्जैरुग्रश्रवणदर्शनैः ।
वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ।
त्र्यम्बको राजशार्दूल भगनेत्रनिपातनः ।
उमासहायो भगवांस्तत्रैवान्तरधीयत ।

[(L. 3) $B_1$ स जेतुं वै (for तेन जेतुं). — (L. 4) $B_1$ कः पुमान्; $B_4$ किं पुनर्; Dc $D_2$ क एष (for कः पुनर्). — (L. 5) $B_1$ त्वया; Dc $D_2$ त्वं वै (for सर्वं). — (L. 7) Dc $D_2$ इत्युक्त्वा नृपतिं राजन् (for the prior half). — (L. 8) Dc $D_2$ त्रिपुरांतकः (for °रार्दनः). — (L. 9) Dc $D_2$ विकचैः; $D_5$ वङ्कैः (for विकटैः). Dc $D_2$ उग्रश्वरण° (for उग्रश्रवण°). — (L. 10) Dc $D_2$ परिषदैर् (for पारि°).] — On the other hand, $T_1$ ins. after 29:

1228* तस्मात्त्वं पार्थरहितान्पाण्डवान्वारयिष्यसि ।
एकदा पुरुषव्याघ्र मया दत्तं वरं तव ।

**30** [a]) B D (except $D_1$) $G_3$ जयद्रथोपि मंदात्मा. — [b]) $T_2$ स्वयमेव वनं ययौ. — [c]) $D_6$ च तदा; $T_2$ च हृते; $G_{2.4}$ विपिने (for च वने). — [d]) S (except $G_3$) transp. न्यवसन् and काम्यके. $B_3$ Dn $D_{3.4.6}$ $G_3$ तथा.

Colophon. — *Major parvan:* $K_2$ $Dn_2$ $G_{2.4}$ आरण्य.

# २५७

C. 3. 15859
B. 3 273. 1
K. 3. 274. 1

जनमेजय उवाच ।
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १
वैशंपायन उवाच ।
एवं कृष्णां मोक्षयित्वा विनिर्जित्य जयद्रथम् ।
आसांचक्रे मुनिगणैर्धर्मराजो युधिष्ठिरः ॥ २
तेषां मध्ये महर्षीणां शृण्वतामनुशोचताम् ।
मार्कण्डेयमिदं वाक्यमब्रवीत्पाण्डुनन्दनः ॥ ३
मन्ये कालश्च बलवान्दैवं च विधिनिर्मितम् ।
भवितव्यं च भूतानां यस्य नास्ति व्यतिक्रमः ॥ ४
कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम् ।
संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम् ॥ ५
न हि पापं कृतं किंचित्कर्म वा निन्दितं क्वचित् ।
द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो महान् ॥ ६
तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः ।
तस्याः संहरणात्प्राप्तः शिरसः केशवापनम् ।
पराजयं च संग्रामे ससहायः समाप्तवान् ॥ ७
प्रत्याहृता तथास्माभिर्हत्वा तत्सैन्धवं बलम् ।
तद्दारहरणं प्राप्तमस्माभिरवितर्कितम् ॥ ८
दुःखश्चायं वने वासो मृगयायां च जीविका ।

— *Sub-parvan:* N $G_3$ $M_1$ द्रौपदीप्रमाथ; to it the same MSS. (except $B_2$ $Dn_3$ $G_3$) add समाप्त. — *Adhy. name:* $B_4$ जयद्रथवरलम्भः; $T_1$ M जयद्रथसटा($T_1$ °टी)करणं; $G_1$ जयद्रथशिरोवपनं. — *Adhy. no.* (figures, words or both): Dn 270 ($Dn_3$ 271); $D_1$ 273; T $G_4$ M ($M_2$ *inf. lin.*) 260 ($M_2$ orig. 262); $G_1$ 257; $G_2$ 259. — *Śloka no.:* Dn 81; $D_1$ 31.

## 257

**1** $^a$) $K_{1.2}$ गतायां (for हृ°). — $^b$) $Dc_2$ $D_2$ प्राप्ताः (for प्राप्य). — $^d$) $K_3$ $B_{1.2}$ $D_{1-3}$ $T_1$ $G_1$ M अकुर्वंत (for °र्वत).

**2** $K_4$ om. $2^{ab}$. — $^{ab}$) $K_2$ $G_1$ मोच°; $Dc_2$ $D_2$ मोह° (for मोक्ष°). $B_{2.3}$ transp. मोक्ष° and विनि°.

**3** $^a$) T $G_{1.2.4}$ महर्षिणां मध्ये (by transp.). — After 3, B D (except $D_{1.5}$) $G_3$ ins.:

1229* युधिष्ठिर उवाच ।
भगवन्देवर्षीणां त्वं ख्यातो भूतभविष्यवित् ।
संशयं परिपृच्छामि छिन्धि मे हृदि संस्थितम् ।

[(L. 1) To improve the metre, $B_{3.4}$ देवर्षीणां त्वं प्रवरः (for the prior half). — (L. 2) $B_2$ तं छिंधि (for छिन्धि मे). $B_1$ तं मे छिंधि ह्रादि स्थितं; Dc $D_2$ छिंधि तं च ह्रादि स्थितं (for the posterior half).]

— B Dn $D_{3.4.6}$ $G_3$ cont.: Dc $D_2$ ins. after 5:

1230* द्रुपदस्य सुता ह्येषा वेदिमध्यात्समुत्थिता ।
अयोनिजा महाभागा स्नुषा पाण्डोर्महात्मनः ।

[(L. 1) $B_1$ ज्येष्ठा (for ह्येषा). $D_2$ दुहिता द्रुपदस्यैषा (for the prior half).]

**4** Before 4, $T_1$ $M_1$ ins. युधिष्ठिरः. — $^a$) T $G_{1.2.4}$ कालं च. $B_3$ Dn $D_{4.6}$ $G_3$ भगवान्; $T_2$ $G_{1.2.4}$ भगवन् (for बलवान्). — $^b$) $T_2$ विधिनिर्जितं; $G_{2.4}$ दुरतिक्रमं.

**5** $^a$) B $Dc_1$ Dn $D_{3.4.6}$ $G_3$ इमां (for कथं). — $^b$) $G_3$ पांचालीं (for धर्मज्ञां). $B_1$ धर्मभाविनी; $Dc_2$ $D_2$ °चारिणां. — $^d$) $Dc_2$ $D_2$ शुचीन्; $D_5$ $G_{2.4}$ शुचि. $B_{1.2}$ [अ]मृतं (for [अ]नृतम्). — After 5, Dc $D_2$ ins. 1230*.

**6** $^b$) Dc कर्मणा (for कर्म वा). $K_{1.2}$ $D_5$ निर्मितं (for निन्दितं). — $^c$) $G_{2.4}$ [ए]वं (for [ए]व).

**7** $^a$) $K_4$ स यत् (for बलाद्). K $Dc_2$ $D_{2.5}$ पापो; $D_1$ पुण्यां (for राजा). — $^c$) $K_1$ $M_2$ तस्य (for तस्याः). $K_1$ स्म; $K_3$ T $G_{1.2}$ स (for सं-). $B_1$ संहरणोपायः; $D_2$ संहरणार्थाय. K प्राप्तं; $B_{2-4}$ Dn $D_{3.4.6}$ $G_3$ पापः; $G_4$ पार्थाः (for प्राप्तः). — $^d$) B Dn $D_3$ (marg. *sec. m.* as in text). $_{4.6}$ °पातनं (for °वापनम्). — $^f$) $G_{2.4}$ ससहायैः. $K_3$ स आप्तवान्; $B_2$ स पांडवान्. $M_1$ सहायः समवाप्तवान्.

**8** $^a$) $T_1$ सहा°; $T_2$ तदा° (for तथा°). — $^b$) $G_{2.4}$ जित्वा (for हत्वा). — $^c$) $D_1$ तद्वीरग्रहणं; $T_1$ ततोनुग्रहणं; $G_{2.4}$ तत्तदा हरणं.

**9** $^b$) $K_{1.2}$ जीवनं (for जीविका). — $^d$) $G_4$ वनौको हि (for °कोभिर्). — $^f$) $K_2$ $Dn_{1.n2}$ इयं; Dc $D_2$ अपि (for अयम्).

हिंसा च मृगजातीनां वनौकोभिर्वनौकसाम् ।
ज्ञातिभिर्विप्रवासश्च मिथ्या व्यवसितैरयम् ॥ ९
अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत् ॥ १०

इति श्रीमहाभारते आरण्यकपर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

# २५८

मार्कण्डेय उवाच ।
प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा ॥ १
आश्रमाद्राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम् ॥ २
प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः ।
बद्ध्वा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः ॥ ३
युधिष्ठिर उवाच ।
कस्मिन्रामः कुले जातः किंवीर्यः किंपराक्रमः ।
रावणः कस्य वा पुत्रः किं वैरं तस्य तेन ह ॥ ४
एतन्मे भगवन्सर्वं सम्यगाख्यातुमर्हसि ।
श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्मणः ॥ ५
मार्कण्डेय उवाच ।
अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः ।
तस्य पुत्रो दशरथः शश्वत्स्वाध्यायवाञ्शुचिः ॥ ६
अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः ।
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥ ७
रामस्य माता कौसल्या कैकेयी भरतस्य तु । C. 3. 15879 B. 3. 274. 8 K. 3. 275. 8

---

**10** = (var.) 3. 49. $34^{abcd}$. — $^{a}$) S (except $T_1$ $G_3$) लोके (for नूनं). — $^{d}$) $K_{1-3}$ $D_1$ भवेदिति (for ऽपि वा भवेत्). S (except $G_3$) क्वचित् (for भवेत्).

Colophon om. in $B_4$. — *Major parvan:* $K_{1.2.4}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ $B_{1-3}$ Dc Dn $D_{2-6}$ $G_3$ (all om. sub-parvan name) mention only रामो($B_2$ श्रीरामो)पाख्यान; $M_2$, likewise, रामायणोपाख्यान. — *Adhy. no.* (figures, words or both): Dn 271 ($Dn_3$ 272); $D_1$ 274; T $G_4$ M ($M_2$ *inf. lin.*) 261 ($M_2$ orig. 263); $G_1$ 258; $G_2$ 260. — *Śloka no.:* Dn 13; $D_1$ 11.

## 258

**1** $^{a}$) $G_{2.4}$ मतिमता (for अप्रतिमं). $K_4$ रूपं (for दुःखं). — $^{b}$) $K_4$ दुःखं रामेण भारत; $T_1$ रामेणाक्लिष्टकर्मणा. — After $1^{ab}$, $K_2$ $D_5$ ins.:

1231* व्यसनं पितृशोकादि भार्याया हरणं महत् ।
पितुर्निदेशाद्वसतो वनेऽस्य स्वर्गतः पिता ।

**2** $^{a}$) $K_{1.2}$ रक्षसा तेन (for राक्षसेन्द्रेण). — $^{b}$) $B_{1.3.4}$ Dc Dn $D_{2-4.6}$ $G_3$ दुरात्मना; $B_2$ $D_5$ $G_2$ बलीयसा (for विहायसा).

**3** $^{a}$) $K_{1.2}$ राजन् (for रामः). — $^{c}$) $K_4$ समुद्रे स (for °द्रस्य). — After 3, $B_{3.4}$ Dc $D_{1.2}$ ins.:

1232* ततस्तं बलवान्रामो रिपुं भार्यापहारिणम् ।
सह वानरसैन्येन जघान रणमूर्धनि ।

**4** $^{c}$) B D (except $D_5$) G $M_2$ पुत्रो वा (by transp.). — $^{d}$) K $B_{1.3.4}$ $Dc_2$ $D_{2.5.6}$ $T_1$ च; $T_2$ $G_{1.2.4}$ M वै (for ह).

**5** After $5^{ab}$, $K_4$ ins.:

1233* त्वया प्रत्यक्षतो दृष्टं यथा सर्वमशेषतः ।

— $^{c}$) $G_1$ भगवन् (for चरितं).

**6** After the ref., $B_4$ $D_1$ ins.:

1234* शृणु राजन्पुरा वृत्तमितिहासं पुरातनम् ।
सभार्येण यथा प्राप्तं दुःखं रामेण भारत ।

— $^{b}$) $K_{1.2.4}$ $D_1$ °संभवः (for °वंशजः). — $^{d}$) $K_2$ Dc $D_{2.3}$ °तत्परः (for °वाञ्शुचिः).

**7** $^{b}$) $T_2$ $G_{1.2.4}$ °चारिणः; $M_1$ °वेदिनः; $M_2$ °वादिनः (for °कोविदाः). — $^{cd}$) $T_1$ $G_{1.2.4}$ $M_1$ °शत्रुघ्नभरता($G_{1.2}$ °त)श्च. $B_1$ $T_1$ $G_4$ M महाबलाः. $B_2$ रामलक्ष्मणभरतशत्रुघ्ना इति विश्रुताः.

**8** $^{a}$) Many N MSS. कौशल्या. — $^{b}$) $K_{1.2}$ $B_{1.4}$ Dc $D_{1.2.5}$ च (for तु). — $^{d}$) $K_{1.2}$ सुमित्रायां. K $D_{1.5}$

C 3 15879 B 3.274.8 K.3.275.8 सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परंतपौ ॥ ८
विदेहराजो जनकः सीता तस्यात्मजा विभो ।
यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ॥ ९
एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्तितम् ।
रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर ॥ १०
पितामहो रावणस्य साक्षाद्देवः प्रजापतिः ।
स्वयंभूः सर्वलोकानां प्रभुः स्रष्टा महातपाः ॥ ११
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः ।
तस्य वैश्रवणो नाम गवि पुत्रोऽभवत्प्रभुः ॥ १२
पितरं स समुत्सृज्य पितामहमुपस्थितः ।
तस्य कोपात्पिता राजन्ससर्जात्मानमात्मना ॥ १३
स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः ।
प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै ॥ १४
पितामहस्तु प्रीतात्मा ददौ वैश्रवणस्य ह ।
अमरत्वं धनेशत्वं लोकपालत्वमेव च ॥ १५
ईशानेन तथा सख्यं पुत्रं च नलकूबरम् ।
राजधानीनिवेशं च लङ्कां रक्षोगणान्विताम् ॥ १६

इति श्रीमहाभारते आरण्यकपर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

# २५९

मार्कण्डेय उवाच ।
पुलस्त्यस्य तु यः क्रोधादर्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ॥ १
बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः ।

---

बभूवतुः.

**9** $T_2$ om. $9^{ab}$. — $^{a}$) $T_1$ $G_4$ °राजा (for °राजो). — $^{b}$) K $B_2$ $D_1$ [अ]भवत् (for विभो). — $^{c}$) $D_3$ स्त्रियं (for स्वयं). $Dc_2$ $D_{1.2}$ स्रष्टा; T $G_1$ M तुष्टो; $G_{2.4}$ हृष्टो (for त्वष्टा). — $^{d}$) $T_2$ $G_{1.4}$ यो राम- (for रामस्य). Dc महिषी प्रिया.

**10** $^{a}$) $K_3$ जन्मासीत् (for ते जन्म). — $^{b}$) $B_1$ संप्रकी°; $T_2$ $G_{2.4}$ चापि की° (for च प्रकी°). — $^{c}$) $B_3$ $Dc_2$ च (for [अ]पि). — $^{d}$) $K_{1-3}$ $B_2$ नरेश्वर; $Dc_2$ $D_2$ विशेषतः (for जने°).

**11** Dc $D_2$ om. $11^{ab}$. — $^{b}$) $K_4$ $D_1$ पितामहः (for प्रजा°). — $^{c}$) $K_{1.2.4}$ $D_1$ °भूतानां (for °लोकानां). — $^{d}$) $D_5$ त्वष्टा; S (except $G_3$) ब्रह्मा (for स्रष्टा). $K_{1.2}$ प्रजापतिः (for महा°).

**12** $^{b}$) $K_4$ Dc $D_2$ $T_2$ मनसो (for मा°). $T_1$ विदितः (for दयितः). — $^{c}$) $K_3$ विश्रवसो; $G_4$ वैश्रवसो. — $^{d}$) $T_2$ $G_{1.2.4}$ ऋषेः; M ऋषिः (for गवि). $G_2$ पौत्रो.

**13** $^{a}$) $T_1$ स्वं (for स). — $^{b}$) $B_2$ उपाश्रितः; $G_4$ उपास्थितः. — $^{c}$) $T_1$ रोषात् (for कोपात्). — $^{d}$) $T_2$ $G_2$ विसृज्य; $G_4$ विनिंद्य (for ससर्ज).

**14** $^{a}$) $T_1$ संजज्ञे. — $^{b}$) $G_{1.2.4}$ तस्यार्धेन च ($G_2$ स); M तस्यैवार्धेन (for तस्यात्मार्धेन). — $T_2$ $G_{2.4}$ om. $14^{cd}$. — $^{c}$) K $D_{1.5}$ प्रतिकाराय. $K_4$ सक्रोधं; $G_1$ स क्रोधात्. — $^{d}$) $T_1$ तदा; $G_1$ M तस्माद् (for ततो). $B_2$ हि (for वै).

**15** $B_2$ om. (hapl.) $15^{ab}$. — $^{a}$) $B_1$ धर्मात्मा (for प्रीता°). — $^{b}$) $K_{3.4}$ Dc $D_{1.2}$ वैश्रवणाय. Dc $D_2$ च; $D_1$ $T_1$ $M_2$ वै (for ह).

**16** $^{b}$) $K_3$ पुत्रस्तु (for पुत्रं च). $K_{1.2}$ नड° (for नल°). — $^{c}$) $Dc_2$ T $G_{1.2}$ $M_2$ राजधानीं. — After 16, $B_{2.4}$ Dc $Dn_2$ $D_{1-3}$ ins.:

1235* विमानं पुष्पकं नाम कामगं च ददौ प्रभुः ।
यक्षाणामाधिपत्यं च राजराजत्वमेव च ।

Colophon. — *Major parvan:* $K_{1.2}$ $G_{2.4}$ आरण्य. — *Sub-parvan:* K B Dc $Dn_1$. $n_3$ $D_{1-6}$ $G_3$ (all om. sub-parvan name) mention only रामोपाख्यान; $T_1$, likewise, only श्रीरामायणोपाख्यान; and $G_1$ $M_1$, only रामायणो°. — *Adhy. name:* $B_4$ कुबेरवरप्रदानं. — *Adhy. no.* (figures, words or both): $Dn_1$ (*sup. lin. sec. m.*). $n_2$ 272; $Dn_3$ 273; $D_1$ 275; T $G_4$ M ($M_2$ *inf. lin.*) 262 ($M_2$ orig. 264); $G_1$ 259; $G_2$ 261. — *Śloka no.:* $Dn_1$. $n_3$ 16; $Dn_2$ 17; $D_1$ 19.

कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप ॥ २
स राजराजो लङ्कायां निवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥ ३
तास्तदा तं महात्मानं संतोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल नृत्तगीतविशारदाः ॥ ४
पुष्पोत्कटा च राका च मालिनी च विशां पते ।
अन्योन्यस्पर्धया राजञ्श्रेयस्कामाः सुमध्यमाः ॥ ५
तासां स भगवांस्तुष्टो महात्मा प्रददौ वरान् ।
लोकपालोपमान्पुत्रानेकैकस्या यथेप्सितान् ॥ ६
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥ ७
मालिनी जनयामास पुत्रमेकं विभीषणम् ।
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ॥ ८
विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत् ।
स बभूव महाभागो धर्मगोप्ता क्रियारतिः ॥ ९
दशग्रीवस्तु सर्वेषां ज्येष्ठो राक्षसपुंगवः ।
महोत्साहो महावीर्यो महासत्त्वपराक्रमः ॥ १०
कुम्भकर्णो बलेनासीत्सर्वेभ्योऽभ्यधिकस्तदा ।
मायावी रणशौण्डश्च रौद्रश्च रजनीचरः ॥ ११
खरो धनुषि विक्रान्तो ब्रह्मद्विट् पिशिताशनः ।
सिद्धविघ्नकरी चापि रौद्रा शूर्पणखा तथा ॥ १२
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
ऊषुः पित्रा सह रता गन्धमादनपर्वते ॥ १३
ततो वैश्रवणं तत्र ददृशुर्नरवाहनम् । C 3.15902 B 3.275.14 K.3.276.14

## 259

**1** a) D1 च (for तु). K4 कोपाद्; M2 क्रोधो (for क्रोधाद्). — b) B1 अर्धहेतो; T2 M2 दग्धदेहो (for अर्धदेहो).

**2** a) K1.2 D5 च (for तु). G2 सक्रोधः. — b) G3.4 °श्वरं (for °श्वरः). — K3 om. $2^d$–$4^a$ (up to तं). — d) S (except T2 G3) यतति स्म. K4 G1 तदा (for सदा). G4 नृपः (for नृप).

**3** K3 om. 3 (cf. v.l. 2). — b) K4 तोषयन्; Dc1 Dn D3.4 G1 न्यवसन् (for निवसन्). — c) Dn2 T1 राक्षस्यः (for °सीः). K1.2 विप्र (for तिस्रः). — d) T1 परिचारकाः; G1 °वारकाः.

**4** K3 om. up to तं (cf. v.l. 2). — a) Dn सदा(!); G1.4 M तथा (for तदा). T G1.2.4 वै (for तं). — d) N G3 नृत्य°.

**5** a) K1.3.4 च बा(K1 वा)का च; T G1.2.4 M बकाचेति (T1 M चैव) (for च राका च). — b) G1.4 [इ]ति (for च). — c) D5 T M1 अन्योन्यं स्प°. — d) K3 जयकामाः (for श्रेय°).

**6** a) B D (except D1.5) T2 G2.3 सं तासां (by transp.). — b) K3 वरं (for वरान्). — d) B1 एकैकस्यै; B2 °कस्यां.

**7** a) K1.2.4 D1.5 पुष्पोत्कटाया.

**8** D2 om. 8. — b) D1.3.4.6 एकं पुत्रं (by transp.). — c) K1.4 वाकाया; K2 D1.5.6 राकाया; K3 T2 G1.2.4 M2 बकायां; T1 बलायां. — d) K1.2 Dc D5 G1 शूर्पनखा; G2.4 M °णखी. G1.2 तदा (for तथा). T1 खरं शूर्पणखीं तथा.

**9** a) K1–3 D1 च (for तु). D5 धर्मात्मा (for रूपेण). — b) =(var.) $11^b$. D1 [ऽ]पि; G1 हि (for ऽभि-). G1.2.4 तदा (for [अ]भवत्). — cd) K D1.5 बभूव च (K1 ह and च; K4 स) (for स बभूव). T1 G4 °बाहो (for °भागो). Dc T2 G1.2.4 °रतः (for °रतिः). Dc D2 महाभागो धर्मगोप्ता स बभूव क्रियारतः (D2 °रतिः).

**10** b) K2 B Dn2.n3 D2.4.6 T2 G3 श्रेष्ठो (for ज्येष्ठो). — c) T2 G1.2.4 °बाहुर् (for °वीर्यो).

**11** a) D5 बले राजन्; S (except G3 M1) महानासीत् (for बलेना°). — G2 om. $11^b$–$12^d$. — b) =(var.) $9^b$. K4 D1 [ऽ]पि; G1 हि (for ऽभि-). K3.4 D1 T1 M तथा; B Dc Dn D2–4.6 G3 युधि; D5 [अ]भवत् (for तदा). — c) K D1.5 रणशूरश्च; Dc2 D2 युद्धशौंडश्च; T1 रणचंडश्च.

**12** G2 om. 12 (cf. v.l. 11). — a) T1 भयंकरोपि (for खरो धनुषि). — b) D2 ब्रह्मविद्-; D5 ब्रह्मर्षि-; G1 ब्रह्महा (for ब्रह्मद्विट्). — c) K1.2 D1 T1 सिद्धिविघ्न(D1 T1 °घ्न)करी. — d) B2.4 Dn D5 T1 M2 रौद्री. K1.2 Dc D5 G1 शूर्पनखा; B1 G4 M °णखी. K3.4 B Dc2 D2 सदा; Dc1 Dn D3–6 T2 G1.3 तदा (for तथा).

**13** b) K1–3 D5 T1 M च; G4 तु (for सु-). — c) G2 तदा (for रता). T1 ऊषुः पिता च सह ते. — d) Dc D2 °पर्वतं.

**14** c) K D1.3.5 अधा° (for समा°). — d) T1 च

C. 3. 15902
B. 3. 275 14
K. 3. 276. 14

पित्रा सार्धं समासीनमृद्ध्या परमया युतम् ॥ १४
जातस्पर्धास्ततस्ते तु तपसे धृतनिश्चयाः ।
ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा ॥ १५
अतिष्ठदेकपादेन सहस्रं परिवत्सरान् ।
वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः ॥ १६
अधःशायी कुम्भकर्णो यताहारो यतव्रतः ।
विभीषणः शीर्णपर्णमेकमभ्यवहारयत् ॥ १७
उपवासरतिर्धीमान्सदा जप्यपरायणः ।
तमेव कालमातिष्ठत्तीव्रं तप उदारधीः ॥ १८
खरः शूर्पणखा चैव तेषां वै तप्यतां तपः ।
परिचर्यां च रक्षां च चक्रतुर्हृष्टमानसौ ॥ १९
पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः ।
जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः ॥ २०
ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत् ।
प्रलोभ्य वरदानेन सर्वानेव पृथक्पृथक् ॥ २१

ब्रह्मोवाच ।

प्रीतोऽस्मि वो निवर्तध्वं वरान्वृणुत पुत्रकाः ।
यद्यदिष्टमृते त्वेकममरत्वं तथास्तु तत् ॥ २२
यद्यदग्नौ हुतं सर्वं शिरस्ते महदीप्सया ।
तथैव तानि ते देहे भविष्यन्ति यथेप्सितम् ॥ २३
वैरूप्यं च न ते देहे कामरूपधरस्तथा ।
भविष्यसि रणेऽरीणां विजेतासि न संशयः ॥ २४

रावण उवाच ।

गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा ।

---

परया (for परमया).

**15** $G_1$ om. 15–16. —$^a$) $K_4$ जातस्पर्शास्; B Dc Dn $D_{2.3}$ (before corr.)$_{.4.6}$ $G_3$ जातामर्षास्. $Dc_2$ तत्र (for ततस्). $G_{2.4}$ जातस्पर्धान्विताास्ते तु. —$^b$) $B_1$ $D_{1.5}$ $T_2$ $G_{1.2.4}$ कृत- (for धृत-). T $G_{1.2.4}$ $M_1$ -मानसाः (for -निश्चयाः).

**16** $G_1$ om. 16 (cf. v.l. 15). —$^b$) M सहस्र-. —$^d$) $K_2$ $B_{1.2.4}$ पंचाग्निसु-; $D_4$ पंचभिः सु-; $M_1$ पंचाग्निषु.

**17** $G_4$ om. 17. —$^b$) $K_4$ जिताहारो; Dc यताहारी. $K_1$ $G_2$ धृतव्रतः; $K_{2-4}$ $D_{1.5}$ दृढ°. —$^c$) $B_1$ °पत्रम् (for °पर्णम्). —$^d$) $B_4$ Dc $D_{1.4.5}$ $T_2$ $G_3$ $M_2$ °हारयन्; $G_2$ °हारवान्.

**18** $^a$) Dc °व्रती (for °रतिर्). —$^b$) $K_{1.2}$ अभूज् (for सदा). —$^d$) $K_{1.2}$ transp. तीव्रं and तपः.

**19** $^a$) $K_{1.2}$ Dc $D_5$ $G_1$ शूर्पनखा; T $G_{2.4}$ M °णखी. $G_{1.2.4}$ चापि (for चैव). —$^b$) $K_1$ पुनः (for तपः). —$^c$) $K_1$ रक्षसां (for च रक्षां). —$^d$) $G_1$ चक्राते (for चक्रतुर्). — After 19, $D_5$ ins.:

1236* विभीषणदशग्रीवौ तेपाते उत्तमं तपः ।
दश वर्षसहस्राणि वायुभक्षौ परंतपौ ।
सरके दश वर्षाणि अष्ट वर्षाणि सागरे ।
ऊषुर्वर्षसहस्राणि गोकर्णेऽस्मिंस्तपोवने ।
चेरतुस्तृणपर्णानि मृगैः सार्धमरिंदमौ । [5]
बादर्यास्त्वाश्रमे राजन्तेपाते परमं तपः ।
आराधयन्तौ शौचेन ब्रह्माणं सुतपस्विनौ ।

**20** $^a$) $G_1$ वर्षे (for वर्ष-). $K_1$ -सहस्रेण; $B_1$ -सहस्रेषु (for -सहस्रे तु). —$^c$) $K_{1.2}$ $B_4$ जुहाव (for जुहोति). K $D_{1.3.5}$ दशग्रीवस् (for दुराधर्षस्). —$^d$) $K_3$ $D_2$ तुष्यज् (for [अ]तुष्यज्). K $B_1$ $D_1$ जगत्पतिः; $D_3$ प्रजापतिः; $T_1$ M जगद्गुरुः; $T_1$ $G_{1.2.4}$ पितामहः.

**22** $K_{1-3}$ $D_5$ $T_1$ om. the ref. —$^a$) $K_{1-3}$ $B_1$ $D_{1.5}$ वि- (for वो). $K_4$ वरदोस्मि निव°. —$^b$) $G_1$ वरं. —$^d$) K $D_{1.5}$ $M_1$ वः (for तत्).

**23** $^a$) $B_3$ Dc $D_2$ यद्यच्चाग्नौ. B $Dc_2$ $D_{2.3.6}$ $G_3$ पूर्वं; $T_2$ $G_{1.2.4}$ सम्यक् (for सर्वं). K $D_{1.5}$ शिरांसि यानि पूर्वं ते. —$^b$) K $D_{1.5}$ हुतानि (for शिरस्ते). $K_4$ मदभीप्सया; $B_{1-3}$ Dc $D_{2-4.6}$ $T_1$ $G_3$ $M_2$ महदीप्सिता ($B_1$ $T_1$ °प्सितं; $D_{3.4.6}$ °प्सता). — $D_3$ om. 23$^{cd}$. —$^c$) $K_3$ देहे तु; $B_2$ वै देहे; $T_1$ ते देहाद्. $T_2$ $G_{1.2.4}$ $M_2$ देहे ते (by transp.); $M_1$ देहेस्मिन्. — $B_2$ om. (hapl.) 23$^d$–24$^a$. —$^d$) $B_{1.4}$ D (except $D_{1.5}$) $G_3$ यथेप्सया; $B_3$ यथेच्छया.

**24** $B_2$ om. 24$^a$ (cf. v.l. 23). —$^a$) K $B_{1.4}$ $Dc_2$ $D_{2.5}$ न च ते (by transp.). —$^c$) $K_3$ $Dc_2$ $D_{1.2}$ भविष्यति ($Dc_2$ °ष्यंति; $D_1$ °ष्यते). $Dc_2$ $D_2$ वीराः (for ऽरीणां). —$^d$) $K_{3.4}$ $B_4$ $Dn_1$ $D_{1.5}$ विजेता च न; $B_{1.3}$ Dc $Dn_{2}$. $n_3$ $D_{2-4.6}$ $G_3$ °ता न च. $B_2$ °ता नात्र; M °ता हि न (for °तासि न).

**25** $^b$) T $G_{1.2.4}$ °राक्षसयोस्तथा. —$^c$) K $D_{1.5}$ °नागेभ्यो.

**26** $^b$) $D_5$ [ए]तेभ्यो° (for तेभ्यो°). $B_2$ पराभवः (for भयं तव). —$^d$) $D_5$ तत्तथा (by transp.). $D_1$ ते (for तद्). $T_1$ $G_1$ M विदितं (for विहितं).

सर्पकिंनरभूतेभ्यो न मे भूयात्पराभवः ॥ २५

ब्रह्मोवाच ।

य एते कीर्तिताः सर्वे न तेभ्योऽस्ति भयं तव ।
ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया ॥ २६

मार्कण्डेय उवाच ।

एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा ।
अवमेने हि दुर्बुद्धिर्मनुष्यान्पुरुषादकः ॥ २७
कुम्भकर्णमथोवाच तथैव प्रपितामहः ।
स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः ॥ २८
तथा भविष्यतीत्युक्त्वा विभीषणमुवाच ह ।
वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनः पुनः ॥ २९

विभीषण उवाच ।

परमापद्गतस्यापि नाधर्मे मे मतिर्भवेत् ।
अशिक्षितं च भगवन्ब्रह्मास्त्रं प्रतिभातु मे ॥ ३०

ब्रह्मोवाच ।

यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ।
नाधर्मे रमते बुद्धिरमरत्वं ददामि ते ॥ ३१

मार्कण्डेय उवाच ।

राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशां पते ।
लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरम् ॥ ३२
हित्वा स भगवाँल्लङ्कामाविशद्गन्धमादनम् ।
गन्धर्वयक्षानुगतो रक्षःकिंपुरुषैः सह ॥ ३३
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः ।
शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ॥ ३४
यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति ।
अवमन्य गुरुं मां च क्षिप्रं त्वं न भविष्यसि ॥ ३५
विभीषणस्तु धर्मात्मा सतां धर्ममनुस्मरन् ।
अन्वगच्छन्महाराज श्रिया परमया युतः ॥ ३६
तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः ।
सेनापत्यं ददौ धीमान्यक्षराक्षससेनयोः ॥ ३७
राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः ।
सर्वे समेत्य राजानमभ्यषिञ्चन्दशाननम् ॥ ३८ C. 3. 15926 B. 3. 275. 38 K. 3. 276. 38

---

**27** K $B_1$ Dc $D_{1.2.5}$ S (except $G_3$ $M_1$) om. the ref. — $^{a}$) $G_4$ उक्ते (for उक्तो). — $^{b}$) $G_4$ संतुष्टः सोभवत्तदा. — $^{c}$) $K_{1-3}$ $D_1$ च (for हि). $D_5$ अधर्मेणैव दुर्बुद्धिर्.

**28** $K_4$ om. (hapl.) $28^{ab}$. — $K_4$ (which om. $28^{ab}$) ins. after 27 : $D_1$, after $28^{ab}$ :

1237* कुम्भकर्ण महाबाहो वरं वरय सुव्रत ।

S (except $G_3$) ins. after $28^{ab}$ :

1238* वरं वृणीष्व भद्रं ते प्रीतोऽस्मीति पुनः पुनः ।

— $^{c}$) $G_1$ वव्रे स (by transp.). — $^{d}$) K तपसा. K $D_5$ नष्टचेतनः.

**29** $^{c}$) $K_4$ पुत्रो वै (for पुत्र त्वं). — $^{d}$) $T_2$ $G_{2.4}$ पुनरेव च ($T_2$ तत्) (for [इ]ति पुनः पुनः).

**30** =(var.) Rām. 7. 10. $30^{cd}$–$31^{ab}$. — $^{b}$) $K_2$ $D_5$ माधर्मे मे ; $B_1$ धर्मे चैव ; $B_2$ धर्म एव (for नाधर्मे मे). $T_1$ $G_2$ रतिर् ; $M_1$ गतिर् (for मतिर्). — $^{cd}$) $B_2$ transp. भगवन् and ब्रह्मास्त्रं. $K_{1.2}$ $Dc_2$ $D_2$ $G_2$ $M_2$ प्रतिभाति.

**31** =(var.) Rām. 7. 10. $34^{cd}$–$35^{ab}$. — $^{a}$) $K_1$ तु ; $M_2$ हि (for ते). — $^{b}$) $K_{1.2}$ $B_{1.2.4}$ $D_{1.5}$ °मित्रकर्षण. — $^{c}$) B D (except $D_1$) $G_3$ $M_1$ धीयते (for रमते). — $^{d}$) $K_{1.2}$ $B_{1.4}$ $Dc_1$ $Dn_1$. $n_3$ $D_{3.4.6}$ $T_1$ $G_3$ M ददानि (for °मि).

**32** $^{ab}$) $K_4$ $D_1$ वरान् (for वरं). $M_2$ transp. वरं लब्ध्वा and दशग्रीवो. — $^{c}$) $T_2$ $G_{2.4}$ लंकायां वासयामास. — $^{d}$) S (except $G_{3.4}$) युद्धे (for युधि). $K_4$ जने° (for धने°).

**33** $^{a}$) $Dc_2$ $D_2$ जित्वा ; $D_1$ त्यक्त्वा (for हित्वा). — $^{b}$) $B_2$ $D_5$ प्रा($D_5$ प्र)विशद् (for आवि°). $M_2$ (*sup. lin.* as in text) गंधमादनमाविशत्. — $^{c}$) $T_1$ $G_{1.2.4}$ $M_1$ °रक्षो° ($T_1$ °रक्षा°) (for °यक्षा°). — $^{d}$) Dc $D_2$ $T_1$ $G_{1.2.4}$ $M_1$ यक्ष- (Dc $D_2$ यक्षः) (for रक्षः-). $K_4$ वृतः (for सह).

**34** $^{a}$) $T_1$ तस्य सहसा (for पुष्पकं तस्य). $K_{1.2}$ नाम ; $K_4$ चास्य (for तस्य). — $^{b}$) Dc $D_2$ राक्षसः (for रावणः). — $^{d}$) $D_1$ भवि° (for वहि°).

**35** $K_{1.2}$ $D_1$ $M_2$ om. (hapl.) $35^{ab}$ ; $K_4$ om. up to त्वं न. — $^{c}$) S (except $G_3$) °मत्य (for °मन्य).

**36** $^{b}$) B D (except $D_{1.5}$) $G_3$ मार्गम् ; $M_2$ धर्मान् (for धर्मम्). — $^{c}$) $K_{1.2.4}$ $G_4$ M °राजं (for °राज). — $^{d}$) $K_{2.3}$ $T_1$ $M_1$ युतं ; $B_2$ ज्वलन् (for युतः).

**37** $^{b}$) $G_4$ भ्रात्रे भ्राता (by transp.). — $^{c}$) B Dc $Dn_3$ $D_{4.6}$ $G_3$ $M_2$ सैना° (for सेना°). $K_4$ $B_{1.2}$ $G_2$ $M_1$

C. 3 15927
B. 3. 275. 39
K. 3. 276 39

दशग्रीवस्तु दैत्यानां देवानां च बलोत्कटः ।
आक्रम्य रत्नान्यहरत्कामरूपी विहंगमः ॥ ३९
रावयामास लोकान्यत्तस्माद्रावण उच्यते ।
दशग्रीवः कामबलो देवानां भयमादधत् ॥ ४०

इति श्रीमहाभारते आरण्यकपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

## २६०

मार्कण्डेय उवाच ।
ततो ब्रह्मर्षयः सिद्धा देवराजर्षयस्तथा ।
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ॥ १
अग्निरुवाच ।
यः स विश्रवसः पुत्रो दशग्रीवो महाबलः ।
अवध्यो वरदानेन कृतो भगवता पुरा ॥ २
स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः ।
ततो नस्त्रातु भगवन्नान्यस्त्राता हि विद्यते ॥ ३
ब्रह्मोवाच ।
न स देवासुरैः शक्यो युद्धे जेतुं विभावसो ।
विहितं तत्र यत्कार्यमभितस्तस्य निग्रहे ॥ ४
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः ।
विष्णुः प्रहरतां श्रेष्ठः स कर्मैतत्करिष्यति ॥ ५
मार्कण्डेय उवाच ।
पितामहस्ततस्तेषां संनिधौ वाक्यमब्रवीत् ।
सर्वैर्देवगणैः सार्धं संभवध्वं महीतले ॥ ६

श्रीमान् (for धी°).

**38** $^{d}$) $K_{1.4}$ $D_1$ $T_1$ अभिषिंचन्. $G_1$ नराधिपं (for दशा°).

**39** $^{ab}$) Dn $D_{3.4.6}$ $G_3$ M च (for तु). K $D_{1.5}$ transp. दैत्यानां and देवानां. $G_{2.4}$ दानवानां (for देवानां च). — $^{d}$) $T_1$ °रूपो (for °रूपी).

**40** $^{a}$) $Dn_3$ $D_8$ $T_1$ यस् (for यत्). — $^{c}$) $D_1$ °लोभाद्; $T_1$ °रूपो (for °बलो). — $^{d}$) $D_1$ $T_1$ आवहत्; $D_5$ आद्रवत् (for आदधत्).

Colophon. — *Major parvan:* $K_{1.2}$ $G_{2.4}$ आरण्य. — *Sub-parvan:* K B $Dc_1$ $Dn_{1}$. $n_2$ $D_{1-6}$ $G_3$ (all om. sub-parvan name) mention only रामो($K_2$ श्रीरामो)-पाख्यान; $T_1$ $G_1$ $M_1$, likewise, only रामायणोपाख्यान. — *Adhy. name:* $B_4$ रावणादिवरलंभः; $M_1$ लंकापहरणं. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 273; $Dn_3$ 274; $D_1$ 276; T $G_4$ M ($M_2$ *inf. lin.*) 263 ($M_2$ orig. 265); $G_1$ 260; $G_2$ 262. — *Śloka no.:* $Dn_1$ 41; $Dn_2$. $n_3$ 40.

## 260

**1** $^{ab}$) B Dc Dn $D_{2-4.6}$ $G_3$ ततो ब्रह्मर्षयः सर्वे सिद्धा देव($B_1$ ब्रह्म)र्षयस्तथा. $T_2$ $G_{2.4}$ देवाश्च मुनय($T_2$ ऋषय)-स्तथा (for $^{b}$). — For 1, $D_5$ subst.

1239* ततो देवाः समागम्य सर्वे शक्रपुरोगमाः ।
अग्नौ वाक्यं समाधाय ब्रह्मणे तेऽभ्यवादयन् ।
ततः कृशानुर्भगवान्भगवन्तं पितामहम् ।
प्रणम्योवाच लोकेशं कृताञ्जलिरिदं वचः ।

**2** $^{a}$) $K_3$ B Dc Dn $D_{2-4.6}$ $G_3$ $M_1$ योसौ; $D_5$ स च (for यः स). — $D_1$ om. (hapl.) $2^{c}$–$3^{b}$.

**3** $D_1$ om. $3^{ab}$ (cf. v.l. 2). — $^{d}$) Dc $D_2$ तु (for हि). $T_1$ $G_1$ M अन्यस्त्राता न विद्यते.

**4** $^{c}$) $B_3$ तस्य; $G_{1.2}$ M त्वत्र (for तत्र). $D_1$ तत्कार्यम्. — $^{d}$) $B_3m$ अचिरात्; $G_{2.4}$ अहितस् (for अभितस्). B D (except $D_{1.5}$) $G_3$ $M_2$ निग्रहः (for °हे).

**5** $^{d}$) B D (except $D_1$) $G_3$ तत्कर्म (for कर्मैतत्).

**6** $^{b}$) $K_4$ $B_{2.4}$ Dn $D_{3.4.6}$ $G_3$ शक्रम् (for वाक्यम्). — $^{c}$) $K_3$ सर्वे (for सर्वैर्). Dc $D_2$ यात देवाः सुरैः सर्वैः. — $^{d}$) $K_4$ $D_3$ (by corr.) संभवंतु; $B_1$ भवध्वं च; Dn $D_3$ (before corr.). $_{4.6}$ $G_3$ संभव त्वं (for संभवध्वं).

**7** $^{a}$) $K_{1.2}$ $M_1$ सहायाद् (for °यान्). $K_{1.2}$ ऋक्षेषु. — $^{b}$) $K_{1.2}$ वानरेषु च सर्वतः. — After 7, $B_{3.4}$ (om. line 2) $Dc_2$ $D_1$ ins.:

1240* ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
ससृजुर्देवगन्धर्वाः पुत्रान्वानररूपिणः ।

विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः ।
जनयध्वं सुतान्वीरान्कामरूपबलान्वितान् ॥ ७
ततो भागानुभागेन देवगन्धर्वदानवाः ।
अवतर्तुं महीं सर्वे रञ्जयामासुरञ्जसा ॥ ८
तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः ।
शशास वरदो देवो देवकार्यार्थसिद्धये ॥ ९
पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः ।
मन्थरा मानुषे लोके कुब्जा समभवत्तदा ॥ १०
शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः ।
वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ।
तेऽन्ववर्तन्पितॄन्सर्वे यशसा च बलेन च ॥ ११
भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः ।
वज्रसंहननाः सर्वे सर्वे चौघबलास्तथा ॥ १२
कामवीर्यधराश्चैव सर्वे युद्धविशारदाः ।
नागायुतसमप्राणा वायुवेगसमा जवे ।
यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः ॥ १३
एवं विधाय तत्सर्वं भगवाँल्लोकभावनः ।
मन्थरां बोधयामास यद्यत्कार्यं यथा यथा ॥ १४
सा तद्वचनमाज्ञाय तथा चक्रे मनोजवा ।
इतश्चेतश्च गच्छन्ती वैरसंधुक्षणे रता ॥ १५　C. 3. 15944 B. 3. 276. 16 K. 3. 277. 19

इति श्रीमहाभारते आरण्यकपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

---

which, in Dc2, is followed by lines 3–6 of 1241*.

**8** Dc2 om. 8. — a) T1 ततो भागेन भागेन; T2 G2. 4 वानरान्भागभागेन. — b) K D1 °पन्नगाः. — c) K1–3 B1 D1 M2 अवतेरुर्; T1 अवातरन् (for अवतर्तुं). K1. 2 सर्वाम्; K3 D1 स्वर्गाद् (for सर्वे). — d) K1. 2 अंशशः सर्वतः सुराः; K3 D1 अंशैश्च (D1 दशमः) सहिताः सुरैः. — B3 (marg.). 4 Dc1 D1. 2 ins. after 8: Dc2 (om. lines 1–2), after 1240*:

1241* ऋषयश्च महात्मानः सिद्धाश्च सह किंनरैः ।
चारणाश्चासृजन्घोरान्वानरान्वनचारिणः ।
ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः ।
अप्रमेयबलाः शूरा वानराः कामरूपिणः ।
यस्य देवस्य यद्रूपं वेषस्तेजश्च यद्विधम् ।　[5]
अजायन्त समास्तेन तस्य तस्य सुतास्तदा ।

[ (L. 2) D1 वानरान्° (for चारणाश्चा°), and बलिनो (for वानरान्). D2 बल° (for वन°). — (L. 3) D2 दश° (for बहु°). Dc1 D2 वृताः; Dc2 धृताः (for रताः). — (L. 4) Dc2 सर्वे (for शूरा). — (L. 5) B3. 4 वेश° (for वेष°). — (L. 6) Dc1 D2 सुतास् (for समास्). Dc2 तेन तस्य (for तस्य तस्य). ]

**9** a) K1. 2 गांधर्वीं; B D1. 2 गंधर्वां; G1 M1 गंधर्वीं. — b) G1 दुंदुभिर्. — c) D1 वरदां; T1 परतो (for वरदो). — d) K3 B Dn D3. 4. 6 T2 G3 गच्छ (for देव-). D1 देवानां कार्यसिद्धये.

**10** b) B2 Dn3 D5 T2 G1. 3. 4 दुंदुभिस्. D5 T2 G1. 4 तदा (for ततः). — d) K D1. 5 नामा° (for सम°).

**11** c) G1 ऋक्षवानरनारीषु. — e) K1 ते तु व°; K2 D1. 3 तेत्यव°; K3. 4 D5 तेभ्यव° (for तेऽन्वव°). S (except G3) ओजसा तेजसा युक्तान्.

**12** a) D1 भंक्तारो; T1 G4 भोक्ता°; G3 भर्ता° (for भेत्ता°). — b) K2–4 B2–4 Dc2 D1. 3. 5. 6 G3 शालताल° (as in text); T2 G2. 4 तालसाल°; the rest सालताल°. — c) D1 शूराः (for सर्वे). — d) K1. 2 Dn3 D3. 5. 6 [ऽ]मोघ°; T2 G1. 2 घोर°; G4 सार° (for चौघ°).

**13** a) K4 B D (except D1) G3. 4 °बलाः (for °धराः). G2. 4 सर्वे (for चैव). — b) K D5 T2 G4 M बुद्धि° (for युद्ध°). — c) D1 °बल° (for °सम°). — d) D3 °मनोजवाः (for °समा जवे). — e) K Dc D3. 5 T1 M1 यथेच्छक- (for यत्रेच्छक-). B Dc D3. 6 G3 T1 M -निपाताश्च (for -निवासाश्च). T2 केचिच्छकुनिपाताश्च; G1. 2. 4 यथेच्छविनि(G1 °क्रम)पाताश्च. — f) K G2. 4 M तत्र (for अत्र). D1 दिवौ° (for वनौ°).

**14** c) G4 चोद° (for बोध°). — d) G1 तया; G2. 4 त्वया (for the first यथा). K1. 4 Dc2 D2 T1 तथा; D5 G2 -तथं; G4 तदा (for the second यथा).

**15** a) B2 Dn D3. 4. 6 T2 G3 तद्वचः समाज्ञाय; D3 तदैव समाज्ञाय; T1 G1. 2. 4 M तद्वचनमास्थाय. — b) K3 यथा (for तथा). — c) D1 इतस्ततश्च. T1 धावंती (for गच्छन्ती).

Colophon. — *Major parvan:* K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* N G3 (all om. sub-parvan name) mention only रामो(K1 श्रीरामो)पाख्यान; G1 M1, likewise, only रामायणोपाख्यान. — *Adhy. name:* B4 अंशा-

# २६१

C. 3. 15945
B. 3. 277. 1
K. 3. 278. 1

युधिष्ठिर उवाच ।

उक्तं भगवता जन्म रामादीनां पृथक्पृथक् ।
प्रस्थानकारणं ब्रह्मञ्श्रोतुमिच्छामि कथ्यताम् ॥ १
कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रस्थापितौ वनं ब्रह्मन्मैथिली च यशस्विनी ॥ २

मार्कण्डेय उवाच ।

जातपुत्रो दशरथः प्रीतिमानभवन्नृपः ।
क्रियारतिर्धर्मपरः सततं वृद्धसेविता ॥ ३
क्रमेण चास्य ते पुत्रा व्यवर्धन्त महौजसः ।
वेदेषु सरहस्येषु धनुर्वेदे च पारगाः ॥ ४
चरितब्रह्मचर्यास्ते कृतदाराश्च पार्थिव ।
यदा तदा दशरथः प्रीतिमानभवत्सुखी ॥ ५
ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः ।
मनोहरतया धीमान्पितुर्हृदयतोषणः ॥ ६
ततः स राजा मतिमान्मत्वात्मानं वयोधिकम् ।
मन्त्रयामास सचिवैर्धर्मज्ञैश्च पुरोहितैः ॥ ७
अभिषेकाय रामस्य यौवराज्येन भारत ।
प्राप्तकालं च ते सर्वे मेनिरे मन्त्रिसत्तमाः ॥ ८
लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम् ।
दीर्घबाहुं महोरस्कं नीलकुञ्चितमूर्धजम् ॥ ९
दीप्यमानं श्रिया वीरं शक्रादनवमं बले ।
पारगं सर्वधर्माणां बृहस्पतिसमं मतौ ॥ १०
सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम् ।
जितेन्द्रियममित्राणामपि दृष्टिमनोहरम् ॥ ११

---

वतारः; $M_1$ देवावतारः. — *Adhy. no.* (figures, words or both): $Dn_1$ (*sup. lin. sec. m.*). $n_2$ 274; $Dn_3$ 275; $D_1$ 277; T $G_4$ M ($M_2$ *inf. lin.*) 264 ($M_2$ orig. 266); $G_1$ 261; $G_2$ 263. — *Śloka no.*: Dn 16; $D_1$ 16.

## 261

**1** [a]) $G_1$ ब्रह्मन् (for जन्म). — After $1^{ab}$, $G_1$ ins.:
1242* जन्मादि चरितं सर्वं विवाहादि मया श्रुतम् ।
— [c]) $T_1$ $G_{1.2.4}$ $M_2$ °गमने; $T_2$ °गमनं (for °कारणं). — [d]) $K_3$ तत्त्वतः; $K_4$ कारणं (for कथ्यताम्).

**2** [a]) Dc $D_2$ दाशरथौ (for °रथी). — [c]) B Dn $D_{3.4.6}$ $G_3$ $M_2$ संप्रस्थितौ (for प्रस्था°). $B_{1.3.4}$ Dn $D_{1.3.4.6}$ $G_3$ $M_2$ वने; $T_1$ $G_1$ कथं (for वनं). $K_{1.2}$ वीरौ (for ब्रह्मन्). — [d]) $K_{3.4}$ $D_5$ तप° (for यश°).

**3** After the ref., $D_1$ ins. (cf. Rām. 1. 7. 3):
1243* वृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः ।
अशोको धर्मपालश्च सुमन्त्रश्चाष्टमोऽभवत् ।
एतेष्टौ दशरथामात्याः ।
— [a]) $K_3$ M जातः पुत्रो; $T_1$ जाते पुत्रे (for जातपुत्रो). — [b]) $K_{1-3}$ B Dn $D_{3-6}$ $G_{1.3}$ $M_2$ नृप; $T_1$ पुनः (for नृपः). — [c]) $K_{1.2}$ $G_3$ °रतिः; $K_3$ B Dn $D_{3.4.6}$ $G_2$ $M_2$ °रतः (for °परः). — [d]) B $D_{3.6}$ $G_3$ धर्मसेविता; $T_2$ $G_{1.2.4}$ ब्रह्मसेवकः.

**4** [a]) $K_3$ ते चास्य (by transp.); $B_1$ राजन्ते; $G_{2.4}$ [ए]वास्य ते. — [b]) S (except $G_3$) [अ]मितौ° (for महौ°). — [c]) $K_3$ च (for स-). — [d]) $K_4$ B D (except $D_{1.2.5}$) $T_1$ $G_3$ धनुर्वेदेषु पा°.

**5** [a]) $B_4$ °व्रत° (for °ब्रह्म°). $D_1$ $G_1$ च (for ते). $T_2$ $G_{2.4}$ चरंति ब्रह्मचर्यं ते. — [b]) Dc $D_{2.5}$ पार्थिवाः. — [c]) $B_2$ यथा तथा; S (except $G_3$) दृष्ट्वा रामं (for यदा तदा).

**6** [a]) $K_1$ भवेत्; $T_1$ प्रजास् (for ऽभवत्). — [b]) S (except $G_3$) रंज° (for रम°). K Dc $D_{1.2.5}$ स प्रजाः; $T_1$ तेजसा (for हि प्रजाः). $B_1$ corrupt. — [c]) $T_2$ corrupt. Dc $D_2$ श्रीमान् (for धी°). — [d]) $B_2$ Dn $D_{3.4.6}$ $G_3$ °नंदनः; $D_1$ °तोषकः.

**7** [b]) $B_2$ दृष्ट्वा° (for मत्वा°). — [c]) $M_2$ विविधैर् (for सचिवैर्). — [d]) $K_2$ $D_5$ T $G_{1.4}$ $M_1$ मंत्र° (for धर्म°).

**8** $G_1$ om. $8^a$–$9^b$. — [b]) $K_{1.2}$ यौवराज्ये च; $T_2$ $G_{2.4}$ $M_1$ °राज्याय. — [d]) $K_{2.3}$ $D_1$ मंत्र° (for मन्त्रि°).

**9** [b]) $K_3$ -वारण- (for -मातङ्ग-). $B_2$ -विक्रमं (for -गामिनम्). — [c]) $M_1$ कंबुग्रीवं (for दीर्घं°).

**10** [a]) Dc $D_2$ जुष्टं (for वीरं). — [b]) $K_3$ अप्यधिकं बले; B Dn $D_{3.4.6}$ $G_3$ अनवरं रणे; $D_5$ अनुपमं बले. — [d]) $D_1$ $T_1$ नये (for मतौ).

**11** [a]) $T_2$ $G_2$ सदानु°. — [d]) $B_2$ °रथं; $T_1$ °रमं (for

नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ १२
पुत्रं राजा दशरथः कौसल्यानन्दवर्धनम् ।
संदृश्य परमां प्रीतिमगच्छत्कुरुनन्दन ॥ १३
चिन्तयंश्च महातेजा गुणान्रामस्य वीर्यवान् ।
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम् ॥ १४
अद्य पुष्यो निशि ब्रह्मन्पुण्यं योगमुपैष्यति ।
संभाराः संभ्रियन्तां मे रामश्चोपनिमन्त्र्यताम् ॥ १५
इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा ।
कैकेयीमभिगम्येदं काले वचनमब्रवीत् ॥ १६
अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत् ।
आशीविषस्त्वां संक्रुद्धश्चण्डो दशति दुर्भगे ॥ १७

सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् ॥ १८
सा तद्वचनमाज्ञाय सर्वाभरणभूषिता ।
वेदीविलग्नमध्येव बिभ्रती रूपमुत्तमम् ॥ १९
विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता ।
प्रणयं व्यञ्जयन्तीव मधुरं वाक्यमब्रवीत् ॥ २०
सत्यप्रतिज्ञ यन्मे त्वं काममेकं निसृष्टवान् ।
उपाकुरुष्व तद्राजंस्तस्मान्मुच्यस्व संकटात् ॥ २१

राजोवाच ।

वरं ददानि ते हन्त तद्गृहाण यदिच्छसि ।
अवध्यो वध्यतां कोऽद्य वध्यः कोऽद्य विमुच्यताम् ॥
धनं ददानि कस्याद्य ह्रियतां कस्य वा पुनः । C. 3. 15967 B. 3. 277. 23 K. 3. 278. 24

---

°हरम्).

**12** $^{a}$) $B_{1-3}$ निहंतारम्; $G_{2.4}$ नाशितारम्. — $^{c}$) $T_1$ महाद्युतिम्; $M_2$ मतिमंतम् (for धृतिमन्तम्). $T_2$ $G_{1.2.4}$ च दांतं च (for अनाधृष्यं).

**13** $^{b}$) N (except $K_1$ $D_{2.4}$) कौशल्या-. B Dc $Dn_1$ $D_{2-4.6}$ S (except $T_1$ $G_1$) -नंदि° (for -नन्द°). — $K_1$ om. $13^{c}$–$14^{b}$. — $^{c}$) $K_3$ संस्पृश्य (for °दृश्य). — $^{d}$) $K_3$ $Dc_2$ $D_2$ अगमत् (for अगच्छत्). K ($K_1$ om.) $D_{1.5}$ रघुनंदनः ($K_2$ °नं); Dc $D_2$ नृपसत्तमः; $G_{1.2.4}$ कुलनंदन ($G_2$ °नं).

**15** Before 15, $K_2$ $B_3$ ins. दशरथ उ°. — $^{a}$) $D_5$ पुष्ये निशि; $T_1$ पुण्यतिथिर्. — $^{b}$) $D_{1.2}$ $T_2$ $G_{2.4}$ पुण्य-योगम्; $T_1$ पुष्ययोगम्. $K_{1.2.4}$ $T_1$ $G_{1.4}$ $M_1$ उपेष्यति. — $^{c}$) Dc $Dn_1$ $D_2$ वै (for मे). $K_3$ संभारान्संश्रयंतां मे; $B_3$ संभ्रियंतां मे संभारा (by transp.). — $^{d}$) K Dc $D_{1.2.5}$ चैवोपम° (for चोपनिम°). — After 15, $B_{1.3}$ (marg.) Dc $D_{1.2}$ ins.:

1244* श्व एष पुष्यो भविता यत्र रामः सुतो मया ।
यौवराज्येऽभिषेक्तव्यः पौरैश्च सह मन्त्रिभिः ।

**16** $K_1$ om. $16^{a}$–$17^{b}$. Before 16, $B_4$ ins. मार्कण्डेय उ°. — $^{a}$) $G_1$ $M_2$ राम° (for राज°). — $^{c}$) $T_2$ $G_2$ °गम्यैवं; $G_4$ °संगम्य (for °गम्येदं).

**17** $K_1$ om. $17^{ab}$ (cf. v.l. 16). — $^{b}$) $K_2$ ज्ञापितं (for ख्या°). — $^{c}$) $K_{1-3}$ $T_1$ त्वा; $T_2$ तु (for त्वां). — $^{d}$) T $G_{1.2.4}$ छन्नो (for चण्डो). B D $G_3$ दशतु (for दशति).

**18** $^{ab}$) = (var.) Rām. 2. 8. $9^{ab}$. $B_2$ [अ]थ सु- (for खलु). Most N MSS. कौशल्या. K $B_{2.3}$ Dc $D_{1-6}$ [ऽ]भिषि($Dc_2$ $D_2$ °षे)च्यते (for ऽभिषेक्ष्यते). — $^{c}$) $T_1$ $G_1$ [ऽ]पि (for हि). S (except $G_3$) खलु (for तव).

**19** $^{a}$) $=24^{a}$. T एतद्वचनमास्था($T_1$ °ज्ञा)य. — $^{c}$) $K_{3.4}$ $G_4$ देवी (for वेदी-). $D_1$ च; $T_2$ सा (for [इ]व).

**20** $^{a}$) $K_2$ नतिमा°; $D_5$ तं समा° (for पतिमा°). — $^{b}$) $K_4$ हसंती च; $T_1$ $G_{2.4}$ M विहसंती; $T_2$ हसंतीह. $B_1$ सुवि-स्मिता; $D_1$ सुमध्यमा; $G_1$ भुवि स्थिता (for शुचि°). — $^{c}$) $T_2$ $G_{1.2.4}$ राजानं तर्जयंतीव.

**21** Before 21, $T_2$ ins. कैकेयी. — $^{a}$) $K_{1.2}$ यं (for यन्). $T_2$ पुरा मां प्रति यन्मे त्वं. — $^{b}$) $T_2$ वरम् (for कामम्). $K_1$ $M_1$ एवं (for एकं). $K_{3.4}$ B Dc $D_{1.2.5}$ $T_2$ $G_4$ वि° (for नि°). — $^{cd}$) $M_1$ अपा° (for उपा°). $K_{1.2}$ $D_1$ तं; $K_4$ मां (for तद्). K $B_3$ Dc $D_{1.2.5}$ कि-ल्बिषात्; $M_1$ संगरात् (for संकटात्). T $G_{1.2.4}$ $M_2$ तदद्य कुरु सत्यं मे वरं वरद भूपते.

**22** $K_{1.2}$ $T_2$ $G_{1.2.4}$ दशरथः (for राजा). — $^{a}$) $K_{3.4}$ $B_1$ $Dc_2$ $Dn_2$ $D_{1.2}$ $T_1$ $G_{2.4}$ ददामि. S (except $G_3$) भद्रे (for हन्त). — $^{b}$) $K_{3.4}$ $T_2$ M यदि; $D_5$ यम्; $G_2$ यथा (for यद्). — $22^{cd}$ = (var.) Rām. 2. 10. $33^{ab}$. — $^{c}$) $Dn_{1}$. $n_3$ $T_2$ $G_{1.3.4}$ अवध्यो वध्यतां. K $D_5$ कोत्र; Dc $D_2$ को नु (for कोऽद्य). $G_2$ अवध्यतां कोद्य वध्यः. — $^{d}$) $K_4$ $B_3$ $D_2$ बद्धः; Dc बंधः; $Dn_1$. $n_3$ $D_4$ $T_2$ G $M_1$ बध्यः (for वध्यः). $K_{1.2}$ कोत्र; $B_2$ वापि; Dc $D_2$ को नु; $T_1$ $G_{1.4}$ M चाद्य; $T_2$ $G_2$ को वा (for कोऽद्य). $B_1$ को वा वध्यो विमुच्यतां.

C. 3. 15967 B. 3. 277. 23 K. 3. 278. 24

ब्राह्मणस्वादिहान्यत्र यत्किंचिद्वित्तमस्ति मे ॥ २३

मार्कण्डेय उवाच ।

सा तद्वचनमाज्ञाय परिगृह्य नराधिपम् ।
आत्मनो बलमाज्ञाय तत एनमुवाच ह ॥ २४
आभिषेचनिकं यत्ते रामार्थमुपकल्पितम् ।
भरतस्तदवाप्नोतु वनं गच्छतु राघवः ॥ २५
स तद्राजा वचः श्रुत्वा विप्रियं दारुणोदयम् ।
दुःखार्तो भरतश्रेष्ठ न किंचिद्व्याजहार ह ॥ २६
ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान् ।
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति ॥ २७
तमन्वगच्छल्लक्ष्मीवान्धनुष्माँल्लक्ष्मणस्तदा ।
सीता च भार्या भद्रं ते वैदेही जनकात्मजा ॥ २८
ततो वनं गते रामे राजा दशरथस्तदा ।
समयुज्यत देहस्य कालपर्यायधर्मणा ॥ २९
रामं तु गतमाज्ञाय राजानं च तथागतम् ।
आनाय्य भरतं देवी कैकेयी वाक्यमब्रवीत् ॥ ३०
गतो दशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ ।
गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम् ॥ ३१
तामुवाच स धर्मात्मा नृशंसं बत ते कृतम् ।
पतिं हत्वा कुलं चेदमुत्साद्य धनलुब्धया ॥ ३२
अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसने ।
सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ॥ ३३
स चारित्रं विशोध्याथ सर्वप्रकृतिसंनिधौ ।
अन्वयाद्भ्रातरं रामं विनिवर्तनलालसः ॥ ३४
कौसल्यां च सुमित्रां च कैकेयीं च सुदुःखितः ।
अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितो ययौ ॥ ३५
वसिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः ।
पौरजानपदैः सार्धं रामानयनकाङ्क्षया ॥ ३६

---

**23** $^{a}$) $K_{3.4}$ $D_{1-3}$ $T_1$ $G_{1.2.4}$ ददामि. — $^{b}$) Dc क्रियतां; $T_2$ $G_2$ गृह्यतां (for ह्रियतां). $T_2$ $G_{1.2.4}$ धनं (for पुनः). $K_3$ कस्य वा ह्रियतां पुनः. — $^{c}$) $T_1$ $M_2$ °स्वानि चा° (for °स्वादिहा°). — After 23, N (except $K_{1.3.4}$) $G_3$ ins. :

1245* पृथिव्यां राजराजोऽस्मि चातुर्वर्ण्यस्य रक्षिता ।
यस्तेऽभिलषितः कामो ब्रूहि कल्याणि माचिरम् ।

**24** All MSS. (except K $D_{1.5}$) om. the ref. — $^{a}$) $=19^{a}$. T एतद् (for सा तद्). $K_2$ $M_2$ आस्थाय (for आज्ञाय). — $^{c}$) $G_{3.4}$ आस्थाय (for आज्ञाय).

**25** $^{a}$) $K_{3.4}$ $D_4$ $T_2$ $G_1$ अभि° (for आभि°). $D_5$ तु (for ते). — $^{d}$) $D_5$ व्रज° (for गच्छ°). — After 25, $B_{3.4}$ Dc $D_{1.2}$ ins. :

1246* नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।
चीराजिनजटाधारी रामो वसतु तापसः ।

**26** $^{a}$) $K_4$ स तु; M तस्या (for स तद्). $T_2$ $G_{2.4}$ वरं (for वचः). — $^{b}$) $D_5$ प्रियाया दुःसहं तदा. — $^{d}$) $D_5$ प्रत्युवाच (for व्याजहार). Dc $D_2$ च; $T_1$ सः (for ह).

**27** $^{a}$) $T_1$ तदवश्यं तु पितरं. — $^{d}$) M सत्यो राजा (by transp.).

**28** $^{b}$) $K_4$ वपु° (for धनु°). $K_{1.2}$ तथा; $K_3$ $D_1$ ततः (for तदा). — $K_4$ om. (hapl.) $28^{c}$–$29^{b}$. — $^{c}$) $M_1$ भार्या च (by transp.). $T_2$ रामं (for भार्या).

**29** $K_4$ om. $29^{ab}$ (cf. v.l. 28). — $^{a}$) N (except $K_2$ $Dn_1$ $D_3$; $K_4$ om.) $T_2$ वन- (for वनं). $G_1$ गतो रामो. — $^{c}$) $Dc_2$ $D_2$ देहोस्य; S (except $G_3$) धर्मात्मा (for देहस्य).

**30** $^{a}$) $B_2$ रामस्य मतमाज्ञाय; $T_1$ रामागमनमा°. — $^{b}$) $D_1$ (? gloss) मृतं (for -गतम्). — $^{c}$) $K_1$ आनय्य; $Dc_2$ $D_2$ आनद्य (for आनाय्य).

**32** $^{b}$) Dc वै; $D_{3.6}$ मे (for ते). — $^{c}$) $K_3$ हित्वा (for हत्वा). $K_4$ कुलं त्वेमम्; $T_1$ मूलछेदम् (for कुलं चेदम्).

**33** $^{b}$) $T_2$ मूढे (for मूर्ध्नि). $K_1$ $B_{1.3}$ $Dc_1$ $G_{2.4}$ $M_2$ कुलपांसनि; $K_4$ $Dc_2$ $D_2$ T $G_1$ $M_1$ पांसिनि. — $^{c}$) $M_2$ तात (for मातर्).

**34** $^{a}$) $G_{1.4}$ स्व- (for स). $B_1$ चापि तं; $B_3$ चारिज्यं. K Dc $D_{1.2.5}$ स चारित्र($D_{1.5}$ °त्र्य)विशुद्ध्यर्थं. — $^{b}$) $K_3$ $Dc_2$ $D_6$ सर्वं (for सर्व-). — After $34^{ab}$, $G_2$ ins. :

1247* संस्कृत्य पितरं वृत्तं भरतो धर्मवत्सलः ।

— $^{c}$) $T_2$ $G_{2.4}$ वीरं (for रामं). — $^{d}$) $B_{1.2.4}$ विनिर्वर्तन°; $T_1$ अभिवर्तन°; $T_2$ $G_{1.4}$ संनिवर्तन°.

**35** $^{a}$) N (except $K_1$ Dn) कौशल्यां. — $^{b}$) Dc $D_{1.2.6}$ $T_2$ $G_{1.2.4}$ सुदुःखितां. — $^{c}$) $T_1$ यानेन (for यानैः स). $K_4$ अग्रे प्रस्थापयामास. — $^{d}$) $K_2$ ययुः (for ययौ).

**36** $^{b}$) $D_5$ अन्यैर्विप्रैः (for विप्रै°). $T_2$ $G_{1.2.4}$ सम-

दद‍र्श चित्रकूटस्थं स रामं सहलक्ष्मणम् ।
तापसानामलंकारं धारयन्तं धनुर्धरम् ॥ ३७
विसर्जितः स रामेण पितुर्वचनकारिणा ।
नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ॥ ३८
रामस्तु पुनराशङ्क्य पौरजानपदागमम् ।
प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ॥ ३९
सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः ।
नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा ॥ ४०
वसतस्तस्य रामस्य ततः शूर्पणखाकृतम् ।
खरेणासीन्महद्वैरं जनस्थाननिवासिना ॥ ४१
रक्षार्थं तापसानां च राघवो धर्मवत्सलः ।
चतुर्दश सहस्राणि जघान भुवि रक्षसाम् ॥ ४२
दूषणं च खरं चैव निहत्य सुमहाबलौ ।
चक्रे क्षेमं पुनर्धीमान्धर्मारण्यं स राघवः ॥ ४३
हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः ।
ययौ निकृत्तनासोष्ठी लङ्कां भ्रातुर्निवेशनम् ॥ ४४
ततो रावणमभ्येत्य राक्षसी दुःखमूर्छिता ।
पपात पादयोर्भ्रातुः संशुष्करुधिरानना ॥ ४५
तां तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्छितः ।
उत्पपातासनात्क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ॥ ४६
स्वानमात्यान्विसृज्याथ विविक्ते तामुवाच सः ।
केनास्येवं कृता भद्रे मामचिन्त्यावमन्य च ॥ ४७ C 3. 15992 B. 3. 277. 48 K. 3. 278 54

न्वितः (for सह°). — $^{c}$) $D_3$ पौरैर् (for पौर-). — $^{d}$) $D_5$ $G_2$ °गमन- ; $M_2$ °नुनय- (for °नयन-). $B_1$ $Dc_2$ $D_2$ -काम्यया- (for -काङ्क्षया).

**37** $T_1$ om. $37^{c}$–$39^{d}$. — $K_4$ $D_1$ ins. after 37:

1248* उवाच प्राञ्जलिर्भूत्वा प्रणिपत्य रघूत्तमम् ।
शशंस मरणं राज्ञः सोऽनाथांश्चैव कोशलान् ।
नाथ त्वं प्रतिपद्यस्व स्वराज्यमिति चोक्तवान् ।
तस्य तद्वचनं श्रुत्वा रामः परमदुःखितः ।
चकार देवकल्पस्य पितुः स्नात्वोदकक्रियाम् । [5]
अब्रवीच्च तदा रामो भरतं भ्रातृवत्सलम् ।
पादुके मे भविष्येते राज्यगोप्ते परंतप ।
एवमस्त्विति तं प्राह भरतः प्रणतस्तदा ।

On the other hand, $T_1$ (which om. $37^{cd}$) ins. after $37^{ab}$: $G_{1.2.4}$, after 37:

1249* स रामो भरतं दृष्ट्वा श्रुत्वा स्वर्गगतिं पितुः ।
कृत्वा तस्योदकं सम्यगुवाच भ्रातरं प्रियम् ।
गच्छ तात प्रजा रक्ष सत्यं रक्षाम्यहं पितुः ।

**38** $T_1$ om. 38 (cf. v.l. 37); $K_3$ om. $38^{c}$–$39^{b}$. — $^{c}$) $K_1$ महद् (for ऽकरोद्). — $^{d}$) $B_3$ $D_5$ च; $Dc_1$ स (for [अ]स्य). Dc $D_2$ भारत (for पादुके).

**39** $T_1$ om. 39; $K_3$ om. $39^{ab}$ (cf. v.l. 37, 38). — $^{a}$) K ($K_3$ om.) $Dc_2$ $D_{1.2.5}$ M °शंकन् (for °शङ्क्य). — $^{b}$) $T_2$ $G_{1.2.4}$ °गतिं (for °गमम्). — $^{c}$) $M_2$ विवेश महदारण्यं.

**40** $^{a}$) $K_4$ च; Dc $D_{1.2}$ तु (for स). — $^{b}$) $D_5$ °वासिनः (for °माश्रितः). — $^{c}$) $K_2$ Dc नदी गोदावरी. $K_{1.2}$ नाम (for रम्याम्).

**41** $^{a}$) $K_{1-3}$ $Dc_2$ $D_2$ $M_1$ तत्र (for तस्य). — $^{b}$) $D_2$ यत्र; $T_1$ तत्र; $G_{2.4}$ वने (for ततः). Some N MSS. सूर्प°; $B_1$ S (except $G_3$) शूर्पणखीकृतं ($G_1$ °ते); $B_3$ शूर्पणखाकृते. — $^{c}$) $G_{2.4}$ खरेणाभून्. $K_{1.2}$ $T_1$ महावैरं; $D_1$ महद्युद्धं.

**42** $^{a}$) B Dn $D_{1.3-6}$ $T_2$ $G_3$ तु; M स (for च). — $^{b}$) $K_4$ $D_1$ भक्त° (for धर्म°). — $^{d}$) $D_5$ $T_1$ युधि; $G_4$ सह (for भुवि). $K_3$ $B_{1.2}$ Dn $D_{3.4.6}$ $G_3$ राक्षसान् (for रक्षसाम्).

**43** $^{a}$) $M_2$ transp. दूषणं and खरं. — $^{b}$) $G_1$ स निहत्य (for निहत्य सु-). $D_5$ $T_2$ $G_4$ स; $T_1$ च (for सु-). — $^{c}$) $K_2$ क्षेत्रं; $K_4$ क्षेम (for क्षेमं). — After 43, $D_1$ ins.:

1250* तेन शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश ।
हतानि युधि रामेण शरैस्तीक्ष्णैः पदातिना ।

**44** $^{b}$) Some N MSS. सूर्प°; $K_{1.2}$ Dc $D_5$ शूर्पनखा; S (except $G_3$) °णखी. — $^{c}$) $K_{1.2}$ $B_1$ Dc $D_5$ °नासौष्ठा; $D_3$ °नासोष्ठा. — $^{d}$) $T_1$ भ्रातृ- (for भ्रातुर्).

**45** $^{a}$) M आश्रित्य (for अभ्येत्य). $B_1$ अब्रवीद्रावणं सा तु. — $^{b}$) $K_{1.4}$ $D_5$ $G_1$ क्रोध° (for दुःख°). — $^{c}$) $G_{2.4}$ मूले (for भ्रातुः). — $^{d}$) $K_1$ °रुधिराशना; $K_4$ °हृदयानना; $B_2$ °रुधिरेक्षणा; $T_2$ °रुधिराप्लुता; $G_{1.2.4}$ °रुधिरा तदा.

**46** $^{a}$) $T_2$ $G_{1.4}$ तदा (for तथा). — $^{b}$) $K_{1.2}$ क्रोधवर्जितः. — $^{d}$) $D_1$ अनुस्पृशन्; $G_1$ उपस्पृशत्.

**47** $^{a}$) $M_2$ तान् (for स्वान्). — $^{b}$) $B_2$ $D_5$ $T_2$ $G_{1.2.4}$ ह (for सः). — $^{c}$) $K_4$ $T_1$ [अ]पि (for [अ]सि). — $^{d}$) $K_{1.2.4}$ $D_1$ अस्मृत्वा ($D_1$ °त्य) (for अचिन्त्य). T $G_{1.4}$ M [अ]वमत्य.

**48** $^{a}$) $T_1$ स (for कः). $B_3$ आक्रम्य (for आसाद्य). — $^{b}$) $T_2$ $G_{1.2.4}$ °गात्रेषु से° (for °गात्रैर्निषे°). — $^{c}$)

C. 3 15993
B. 3 277. 49
K 3. 278. 55

कः शूलं तीक्ष्णमासाद्य सर्वगात्रैर्निषेवते ।
कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखम् ॥ ४८
आशीविषं घोरतरं पादेन स्पृशतीह कः ।
सिंहं केसरिणं कश्च दंष्ट्रासु स्पृश्य तिष्ठति ॥ ४९
इत्येवं ब्रुवतस्तस्य स्रोतोभ्यस्तेजसोऽर्चिषः ।
निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ ५०
तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम् ।
खरदूषणसंयुक्तं राक्षसानां पराभवम् ॥ ५१
स निश्चित्य ततः कृत्यं स्वसारमुपसान्त्व्य च ।
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ॥ ५२
त्रिकूटं समतिक्रम्य कालपर्वतमेव च ।
ददर्श मकरावासं गम्भीरोदं महोदधिम् ॥ ५३
तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः ।
दयितं स्थानमव्यग्रं शूलपाणेर्महात्मनः ॥ ५४
तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः ।
पुरा रामभयादेव तापस्यं समुपाश्रितम् ॥ ५५

इति श्रीमहाभारते आरण्यकपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

# २६२

मार्कण्डेय उवाच ।
मारीचस्त्वथ संभ्रान्तो दृष्ट्वा रावणमागतम् ।
पूजयामास सत्कारैः फलमूलादिभिस्तथा ॥ १
विश्रान्तं चैनमासीनमन्वासीनः स राक्षसः ।

---

$K_{1.2}$ आदाय; $D_1$ आसाद्य (for आधाय). — $^d$) $T_2$ $G_{1.2.4}$ विस्रब्धः (for °श्वस्तः). $D_1$ सुखी (for सुखम्).

**49** $^a$) K $D_{1.5}$ M °विषं; B Dc $D_2$ °तमं (for °तरं). — $^b$) $T_1$ स्पर्शते. $K_{1.4}$ [इ]व कः; $K_2$ [इ]व च; $T_1$ हतः (for [इ]ह कः). — $^c$) $T_2$ $G_4$ सिंह- (for सिंहं). $K_2$ B केशरिणं. Dc $D_2$ शश्वद्; $T_2$ चैव; $G_1$ पंच; $G_{2.4}$ मत्तो (for कश्च). $K_4$ कश्चित्केसरिणो दंष्ट्रां. — $^d$) B Dn $D_{4.6}$ दंष्ट्रायां; Dc $D_{2.3}$ दंष्ट्रया. $K_4$ सुखं संस्पृश्य तिष्ठति; S (except $G_3$) स्पृष्ट्वा दंष्ट्रासु ति°.

**50** $^a$) $D_2$ $T_2$ वदतस् (for ब्रुवतस्). — $T_2$ om. from स्रोतो° up to स्वर-. — $^b$) $B_1$ वक्त्रे°; $D_1$ श्रोत्रे°; $G_{2.4}$ नेत्रे° (for स्रोतो°). — $^c$) Dc $D_{1.2}$ दह्यमानस्य; $T_1$ $G_1$ दह्यते रात्रौ. — $D_2$ om. $50^d$–$51^c$.

**51** $D_2$ om. $51^{abc}$ (cf. v.l. 50). — $^a$) $T_1$ सा तस्य (for तस्य तत्). $B_1$ पूर्वम् (for सर्वम्). — $^b$) $K_3$ भग्नी रामस्य विक्रमं. — $^c$) $K_{1.2}$ °युक्तानां (for °संयुक्तं). — $^d$) $T_1$ बलं हतं; $T_2$ $G_{1.2.4}$ $M_2$ भयावहं; $M_1$ वधं तथा (for पराभवम्). — After 51, $B_{2-4}$ Dc $D_{1.2}$ (Dc $D_2$ om. line 2) ins.:

1251* ततो ज्ञातिवधं श्रुत्वा रावणः कालनोदितः ।
रामस्य वधमाकाङ्क्षन्मारीचं मनसागमत् ।

[(L. 1) Dc $D_2$ ज्ञात्वा (for श्रुत्वा). — (L. 2) $B_3$ स्मरन् (for [अ]गमत्).]

**52** $^a$) $T_2$ $G_2$ तु तत्; $G_4$ स तत् (for ततः). $G_1$ स विनिश्चित्य तत्कृत्यं. — $^b$) $D_5$ अभि- (for उप-). $T_1$ $M_2$ सागरं बहुलाकारं ($T_1$ °कृतं); $T_2$ $G_{1.2.4}$ सागरं लवणाकारं ($G_4$ °र्णवं); $M_1$ आकाशं बहुलाकारं. — $^c$) $K_{1-3}$ $D_{1.5}$ $T_1$ $G_2$ राजन् (for राजा).

**53** $^c$) $T_2$ स ददर्श खगावासं. — $^d$) $D_3$ (by corr.) अंभोराशिं महोदधिं; $T_1$ $G_1$ $M_2$ सागरं बहुलाकारं (cf. v.l. 52); $T_2$ आकाशं बहुलारवं; $M_1$ सागरं सरितां पतिं.

**54** $^b$) $K_1$ अभि°; $G_1$ अभ्या° (for अभ्य°). — $^c$) $K_2$ Dc $D_2$ $T_1$ अत्युग्रं (for अव्यग्रं).

**55** $K_4$ om. (? hapl.) $55^{ab}$. — $^a$) $G_{2.4}$ $M_2$ ततोऽभ्यग°. — $^b$) $D_1$ स रावणः (for दशा°). — $^d$) $D_2$ तापसं; $D_5$ तपस्यां. Dc $D_2$ °श्रितः. T $G_{1.2.4}$ M तापसं ($G_2$ $M_2$ °स्यं) प्रिय($T_1$ चिर)जीवितं.

Colophon. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* K B Dc $Dn_1$. $n_3$ $D_{1-6}$ $G_3$ (all om. sub-parvan name) mention only रामो($K_{1.2}$ $B_2$ श्रीरामो)पाख्यान; $G_1$ M, likewise, only रामायणोपाख्यान. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg. *sec. m.*). $n_3$ 275; $Dn_3$ 276; $D_1$ 278; $T_1$ $G_4$ M ($M_2$ *inf. lin.*) 265 ($M_2$ orig. 267); $G_1$ 262; $G_2$ 264. — *Śloka no.:* Dn 56; $D_1$ 65.

उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् ।। २
न ते प्रकृतिमान्वर्णः कच्चित्क्षेमं पुरे तव ।
कच्चित्प्रकृतयः सर्वा भजन्ते त्वां यथा पुरा ।। ३
किमिहागमने चापि कार्यं ते राक्षसेश्वर ।
कृतमित्येव तद्विद्धि यद्यपि स्यात्सुदुष्करम् ।। ४
शशंस रावणस्तस्मै तत्सर्वं रामचेष्टितम् ।
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम् ।। ५
अलं ते राममासाद्य वीर्यज्ञो ह्यस्मि तस्य वै ।
बाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः ।। ६
प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः ।
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना ।। ७
तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन् ।
अकुर्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ।। ८
मारीचश्चिन्तयामास विशिष्टान्मरणं वरम् ।
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ।। ९
ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरम् ।
किं ते साह्यं मया कार्यं करिष्याम्यवशोऽपि तत् ।। १०
तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय ।
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः ।। ११
ध्रुवं सीता समालक्ष्य त्वां रामं चोदयिष्यति ।
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति ।। १२
तामादायापनेष्यामि ततः स न भविष्यति ।
भार्यावियोगाद्दुर्बुद्धिरेतत्साह्यं कुरुष्व मे ।। १३
इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः ।
रावणं पुरतो यान्तमन्वगच्छत्सुदुःखितः ।। १४
ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्मणः । C. 3. 16015 B. 3. 278. 15 K. 3. 279. 15

## 262

1 $^{a}$) D1 मारीचस्तमसंभ्रांतं. — $^{d}$) B Dn D3. 4. 6 G3 ततः; G1. 4 तदा (for तथा).

2 $^{a}$) B1 Dc2 D1. 2 T2 G1 चैवम् (for चैनम्). — $^{b}$) D1 तु (for स). G2 रावणं; G4 रावणः (for राक्षसः). T2 रावणं राक्षसाधिपं. — $^{c}$) B2–4 Dn D3–6 G3 प्रसृतं; T1 प्रांजलिर्; G4 प्रश्रुतं (for प्रश्रितं). — $^{d}$) K1. 2 वाक्यज्ञं; D2 वाक्यज्ञैर्. K1. 2. 4 B2 Dc D3. 5 वाक्यकोविदः.

3 Cf. Rām. 3. 35. 41$^{ab}$. — Before 3, G2. 4 ins. मारीचः. — $^{a}$) Dc2 D2 ते न (by transp.). — $^{d}$) D3 भजंति (corr. from भवंतं). S (except G3) च (for त्वां). G1. 2. 4 M2 -सुखं; M1 -पुरं (for पुरा).

4 $^{a}$) K2–4 Dc D1. 2. 5 °गमने चैव; B1. 3 °गमने वापि; T1 °गमनेनापि. — $^{b}$) M कृत्यं (for कार्यं).

5 Before 5, D1 ins. मार्कंडेय उ°. — After 5$^{ab}$, N (except K3 D1) G3 ins.:

1252* समासेनैव कार्याणि क्रोधामर्षसमन्वितः ।

6 $^{b}$) K4 Dc D2 G2 ह्यसि; T2 [ऽ]स्मि हि (by transp.). T1 वीर्यस्यास्य च तस्य वै. — $^{c}$) K2 बाणमेकं. D5 त्वस्य (for तस्य).

7 $^{a}$) K1. 2. 4 D5 T G1. 2 M2 प्रव्र(G2 °ब्रा)ज्याया; D1 प्रव्राज्यायां. — $^{b}$) A few MSS. पुरुषर्षभ.

8 $^{a}$) T1 G2 संक्रुद्धो (for सक्रोधो). — $^{b}$) D5 प्रति° (for परि°). — $^{c}$) K1. 2 मे; Dc D2 मद्- (for [ऽ]स्मद्-).

9 B2 om. 9$^{ab}$. — $^{b}$) Dc D2 ध्रुव (for वरम्). — $^{c}$) K1. 3. 4 अवश्य- (for °श्यं). — $^{d}$) B2 [अ]द्य (for [अ]स्य). K Dc D2. 5 यद्धितं (for यन्मतम्).

10 $^{b}$) B2 Dn D3. 4. 6 G3 रक्षसां वरं; Dc D2 राक्षसेश्वरः. — $^{c}$) B2–4 Dc2 Dn2 D4 सह्यं; T1 वाक्यान् (for साह्यं). B1 किं ते शक्यं मया कर्तुं; T2 G1. 2. 4 किं ते कार्यं दशग्रीव. — $^{d}$) K4 [अ]वशेषितं; T2 [अ]यशोपि तत्; D5 [अ]वशोपि ते.

11 $^{b}$) A few MSS. शीतां (for सीतां). G2. 4 विलोभय. — $^{c}$) D5 रत्नश्रृंगी. — $^{d}$) M1 °चित्रं °रुहं.

12 $^{a}$) K1. 2 एवं (for ध्रुवं). B4 समालोक्य; T2 G1 °वेक्ष्य; G2. 4 समीक्ष्य त्वां (for °लक्ष्य). — $^{b}$) G2. 4 राघवं (for त्वां रामं). Dc2 D2 नोद°; D1 प्रेर° (for चोद°). — $^{c}$) = Rām. 3. 40. 20$^{a}$, 22$^{a}$. K1. 2 T1 तु (for च). — $^{d}$) D1 नेतुमाशा (for सीता वश्या).

13 $^{a}$) B2 °यास्यामि (for °नेष्यामि). — $^{c}$) K4 भार्यायोगाच्च; D1 तस्या वियोगाद्; D5 भार्यावियोगी. — $^{d}$) K1 कार्यं; B1 शक्यं; B3 Dc Dn1. n2 D2. 6 सह्यं (for साह्यं).

14 $^{b}$) D1 कृत्वोदर्कम्; T1 कृत्वा रूपम्. — Dc D2 om. 14$^{cd}$. — $^{d}$) T1 अनु° (for अन्व°). K1 सुयोधनः (for सुदुः°).

15 $^{b}$) B4 °चेतसः; G1 °कारिणः (for °कर्मणः). — $^{c}$) K4 D2–4. 6 G3 तौ; G4 च (for तद्). B1 Dn D3. 4. 6

C. 3. 16016
B 3 278. 16
K. 3 279. 15

चक्रतुस्तत्तथा सर्वमुभौ यत्पूर्वमन्त्रितम् ॥ १५
रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक् ।
मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः ॥ १६
दर्शयामास वैदेहीं मारीचो मृगरूपधृक् ।
चोदयामास तस्यार्थे सा रामं विधिचोदिता ॥ १७
रामस्तस्याः प्रियं कुर्वन्धनुरादाय सत्वरः ।
रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया ॥ १८
स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ॥ १९
सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसो व्रजन् ।
चकर्ष महदध्वानं रामस्तं बुबुधे ततः ॥ २०
निशाचरं विदित्वा तं राघवः प्रतिभानवान् ।
अमोघं शरमादाय जघान मृगरूपिणम् ॥ २१
स रामबाणाभिहतः कृत्वा रामस्वरं तदा ।
हा सीते लक्ष्मणेत्येवं चुक्रोशार्तस्वरेण ह ॥ २२
शुश्राव तस्य वैदेही ततस्तां करुणां गिरम् ।
सा प्राद्रवद्यतः शब्दस्तामुवाचाथ लक्ष्मणः ॥ २३
अलं ते शङ्कया भीरु को रामं विषहिष्यति ।
मुहूर्ताद् द्रक्ष्यसे राममागतं त्वं शुचिस्मिते ॥ २४
इत्युक्ता सा प्ररुदती पर्यशङ्कत देवरम् ।
हता वै स्त्रीस्वभावेन शुद्धचारित्रभूषणम् ॥ २५
सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता ।
नैष कालो भवेन्मूढ यं त्वं प्रार्थयसे हृदा ॥ २६
अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना ।

---

$T_2$ यथा ; $G_4$ ततः (for तथा). — $^{d}$) $K_4$ तत् (for यत्). $M_1$ °माश्रितं (for °मन्त्रितम्).

**16** $^{b}$) $K_3$ मुंडमुंडी ; $K_4$ $Dc_2$ $D_2$ मुंडकुंडी ; $D_1$ मुंडमंडी. $K_{1.2}$ $G_1$ $M_1$ °भृत्; $K_3$ °धृत्; $B_4$ °भाक् ; $D_1$ $T_1$ °वान् (for °धृक्). — $^{c}$) $K_3$ $B_2$ Dc $D_2$ तु (for च). $G_{2.4}$ मृगो भूत्वा स मारीचस्.

**17** $^{ab}$) B D (except $D_5$) $T_1$ $G_{1.3}$ transp. वैदेहीं and मारीचो. $K_{1-3}$ $G_1$ मृगरूपधृत्; $D_2$ मृगपश्यते. — $^{c}$) $Dc_2$ $D_{1.2.5}$ नोद° (for चोद°). $K_4$ तत्पार्श्वे (for तस्यार्थे). — $^{d}$) $K_{3.4}$ $Dc_2$ $D_{1.2}$ °नोदिता (for °चोदिता).

**18** $^{c}$) K $B_2$ Dc $D_{1.5}$ रक्षार्थं. $M_2$ लक्ष्मणस्तस्य.

**19** $^{b}$) $K_1$ $G_{2.4}$ खड्गी ; Dc $D_2$ बद्ध- (for खड्ग-). — $K_4$ om. $19^{c}$–$20^{b}$. — $^{d}$) $K_{1.2}$ ऋतु° (for तारा°).

**20** $K_4$ om. $20^{ab}$ (cf. v.l. 19). — $^{a}$) K ($K_4$ om.) Dc $D_{1.2.5}$ तत° (for पुन°). — $^{b}$) $K_{1.2}$ $B_1$ Dc $Dn_2$ $D_{2.5}$ $T_1$ राक्षसोव्रजत्; $D_1$ °सोगमत्; $T_2$ °सो गतः; $G_1$ °साधमः; $G_{2.4}$ °सेश्वरः. — $K_1$ om. $20^{c}$–$21^{b}$. — $^{c}$) $K_{2.4}$ Dc $D_{1.2.5}$ दीर्घम् (for महद्). — $^{d}$) $K_4$ Dc $D_{2.3.5}$ तद् (for तं). Dc $D_2$ बुबुधेश्वरः.

**21** $K_1$ om. $21^{ab}$ (cf. v.l. 20). — $^{a}$) $K_4$ Dc $D_{2.3.5}$ तं विदित्वा (by transp.). — $^{b}$) $D_5$ रामस्तु (for राघवः). $B_2$ प्रणिधानवान्. — $B_1$ om. $21^{c}$–$24^{b}$. — $^{d}$) K $T_1$ (*inf. lin.* as in text) M बहु° (for मृग°).

**22** $B_1$ om. 22 (cf. v.l. 21). — $^{b}$) T $G_{1.4}$ चार्तस्वरं ($G_1$ °स्वनं; $G_4$ °रवं)(for राम°). $D_1$ तथा ; $G_{2.4}$ ततः (for तदा). — $22^{cd}$ = (var.) Rām. 3. 44. $24^{ab}$. — $^{c}$) $G_4$ $M_2$ °त्येव (for °त्येवं). — $^{d}$) K $D_{1.5}$ वै (for ह).

**23** $B_1$ om. 23 (cf. v.l. 21). — $^{a}$) $G_1$ श्रुत्वा तु (for शुश्राव). — $^{c}$) K $D_{1.5}$ संप्रधावद् ; $B_{2-4}$ स प्राधा($B_2$ °द्र)वद् ; Dc $D_2$ M सा प्राधा° ; $T_2$ $G_2$ सा पपात; $G_{1.4}$ सा प्रापतद्. $T_2$ $G_{1.2.4}$ ततः सीता (for यतः शब्दस्).

**24** $B_1$ om. $24^{ab}$ (cf. v.l. 21). — $^{a}$) $T_2$ $G_{1.2.4}$ देवि (for भीरु). — $^{b}$) $K_{1.2}$ $G_4$ विषहिष्यते; B ($B_1$ om.) D $G_3$ प्रहरि($D_1$ विहनि)ष्यति. — $^{d}$) $K_{1.3.4}$ आगतं त्वं; $B_2$ Dn $D_{3.4.6}$ $G_3$ भर्तारं त्वं. $G_{2.4}$ शुचिस्मितं. $B_1$ (m as in text). $_{3.4}$ Dc $D_2$ मातंगमिव शुष्मिणं.

**25** $^{a}$) $K_1$ शुचिदती ; $K_3$ सुरुदती ; $K_4$ $B_1$ $D_1$ M शुक्लद($B_1$ $D_1$ °दं)ती ; $T_1$ च रुदती ; $T_2$ $G_{1.2.4}$ तु रु°. — $^{b}$) B Dn $D_{3.4.6}$ $G_3$ °त लक्ष्मणं. — $^{c}$) $K_{1.3.4}$ $T_1$ $G_4$ $M_1$ हृता ; $T_2$ धृत्या ; $G_1$ भीता (for हता). — $^{d}$) B D (except $D_{1.5}$) $G_3$ शुक्ल- ; $T_2$ शुद्धा (for शुद्ध-). $K_{1-3}$ $B_3$ Dc $D_{2.5}$ $T_1$ $G_1$ M -भूषणं (as in text) ; $B_{1.3}$ -दूषणं ; the rest -दूषणा.

**26** $^{a}$) $T_2$ आस्थाय (for आरब्धा). $B_2$ सा तं परुषया वाचा. — $^{b}$) $T_2$ वाक्यं (for वक्तुं). $B_2$ व्रते स्थिता (for पति°). — $^{c}$) $B_{2-4}$ D (except $D_{1.5}$) $G_3$ $M_1$ नैष कामो ; $T_2$ $G_{2.4}$ नैव कालो. $G_{2.4}$ ह्ययं (for भवेन्). — $^{d}$) K $B_1$ $D_{1.3.4.6}$ $T_2$ $G_{1.4}$ यत् ; $Dn_2$. $n_3$ $D_6$ $M_1$ यस् (for यं). $K_1$ तदा ; $T_2$ $G_{1.2.4}$ वृथा (for हृदा).

**27** $^{c}$) Dc $D_2$ °शृंगेभ्यो (for °शृङ्गाद्वा). — After 27, $G_1$ ins.:

1253* पिबेयं वा विषं घोरं त्यजाम्यात्मानमद्य वै ।

पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनम् ॥ २७
रामं भर्तारमुत्सृज्य न त्वहं त्वां कथंचन ।
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा ॥ २८
एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघवः ।
पिधाय कर्णौ सद्वृत्तः प्रस्थितो येन राघवः ।
स रामस्य पदं गृह्य प्रससार धनुर्धरः ॥ २९
एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।
अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः ।
यतिवेषप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ॥ ३०
सा तमालक्ष्य संप्राप्तं धर्मज्ञा जनकात्मजा ।
निमन्त्रयामास तदा फलमूलाशनादिभिः ॥ ३१
अवमन्य स तत्सर्वं स्वरूपं प्रतिपद्य च ।
सान्त्वयामास वैदेहीमिति राक्षसपुंगवः ॥ ३२
सीते राक्षसराजोऽहं रावणो नाम विश्रुतः ।
मम लङ्का पुरी नाम्ना रम्या पारे महोदधेः ॥ ३३
तत्र त्वं वरनारीषु शोभिष्यसि मया सह ।
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ॥ ३४
एवमादीनि वाक्यानि श्रुत्वा सीताथ जानकी ।
पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः ॥ ३५
प्रपतेद् द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
शैत्यमग्निरियान्नाहं त्यजेयं रघुनन्दनम् ॥ ३६
कथं हि भिन्नकरटं पद्मिनं वनगोचरम् ।
उपस्थाय महानागं करेणुः सूकरं स्पृशेत् ॥ ३७
कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम् ।
लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरे ॥ ३८
इति सा तं समाभाष्य प्रविवेशाश्रमं पुनः । C. 3. 16041 B 3. 278. 41 K. 3. 279. 42

---

**28** $^{a}$) T1 आसाद्य (for उत्सृज्य). — $^{b}$) K1 G1 त्वा (for त्वां). K3 D1. 5 S (except G3) कदा° (for कथं°). — $^{c}$) K1. 2. 4 D1. 3. 4. 6 T1 न हीनम्; Dc Dn3 D2. 5 T2 G1. 2. 4 विहीनम्. K3 अपि; D1 अनु- (for उप-).

**29** $^{a}$) B1 सीतायाः स वचः श्रुत्वा; D5 T1 तादृशं वचनं श्रु°. — $^{b}$) T2 G1. 2. 4 राघवप्रियः (for प्रिय°). — $^{d}$) K1 प्रययौ; K3. 4 Dc2 D1. 2 T1 G1. 4 M प्रतस्थे (for प्रस्थितो). K1. 2 राक्षसः (for राघवः). — T1 om. 29$^{ef}$. — After 29, B3 (marg.) Dc Dn D1. 2 ins.:

1254* अवेक्षमाणो वैदेहीं प्रययौ लक्ष्मणस्तदा ।

[Dn अवीक्षमाणो। Dn D1 बिंबोष्ठीं (for वैदेहीं).]

**30** $^{a}$) T1 दुष्टो (for रक्षो). — 30$^{c}$=Rām. 3. 46. 9$^{c}$. — $^{e}$) A few MSS. -वेश- (for -वेष-). K4 B1 प्रविवेश प्रति°; D1 यतिवेषेण प्र°. — After 30, T2 G1. 2. 4 ins.:

1255* उपागच्छत्स वैदेहीं रावणः पापनिश्चयः।

**31** $^{ab}$) T2 G2. 4 आलोक्य (for आलक्ष्य). K1 transp. संप्राप्तं and धर्मज्ञा. T1 संभ्रांता (for संप्राप्तं). — $^{d}$) A few MSS. °लासनादिभिः.

**32** $^{a}$) G1. 2. 4 M अवमत्य (for °मन्य). K3 Dc D1. 2. 5 T2 G1. 2. 4 च तत्; B Dn D3. 4. 6 ततः (for स तत्). K4 अवमन्यत तत्सर्वं; T1 अथावमत्य तत्सर्वं; G3 अवमन्यत्ततः सर्वं. — $^{b}$) K2 स रूपं; B3 G4 M1 स्वं रूपं. B1. 2 Dc Dn2 D1. 2. 4 T2 G प्रत्यपद्यत. — $^{d}$) S (except G3) कामी (for इति).

**33** $^{b}$) K2 पुंगवः; B1. 3. 4 नामतः (for विश्रुतः). — $^{cd}$) =(var.) Rām. 3. 47. 29$^{ab}$; 48. 10$^{ab}$. B3 S (except G3) transp. नाम्ना and रम्या. K3 महोदधौ.

**34** $^{a}$) K B2 Dc D1. 2. 5 T1 व(B2 न)रनारीभिः; B1 Dn D3. 4. 6 T2 G3 M2 नरनारीषु; G2 वनराजीषु. — 34$^{c}$ =1. 67. 1$^{c}$: 3. 251. 18$^{a}$.

**35** For 35, D2 reads only एवमादि ब्रवीद्वचः. — $^{b}$) B Dn D3. 4. 6 G3 तस्याथ (for सीताथ). — 35$^{d}$=(var.) 1. 2. 186$^{a}$.

**36** After 36$^{ab}$, S (except G3) ins.:

1256* शुष्येत्तोयनिधौ तोयं चन्द्रः शीतांशुतां त्यजेत् ।
उष्णांशुत्वमथो जह्यादादित्यो वह्निरुष्णताम् ।

— $^{c}$) S (except G3) त्यक्त्वा शैत्यमिया(G2. 4 °त्यं भजे)न्नाहं.

**37** $^{a}$) G3 प्र- (for हि). G4 °करकं; M2 °करणं. — $^{b}$) T G1. 2. 4 पद्मिनी (for पद्मिनं). — $^{c}$) S (except G3) अपहाय (for उपस्थाय). — $^{d}$) K4 करभं; some N MSS. शूकरं (for सूकरं). Dc D2 S (except G3) व्रजेत् (for स्पृशेत्).

**38** Cf. Rām. 3. 47. 45$^{cd}$. — $^{a}$) D5 तु; M नु (for हि). T G3. 4 पीत्वा च; G1 पीत्वाथ (for हि पीत्वा). B1 भ्रमरो (for माध्वीकं). D1 कथं हि भुक्त्वा स्वादूनि. — $^{b}$) B1 हित्वा (for पीत्वा). D6 मधुमाधवं; T1 °माधवे; T2 G2. 4 °रासवं. — $^{c}$) K3 लोभं इतरपानेषु. — $^{d}$) K1. 2 स्मर; B3 Dc1 Dn1. n3 D2 स्मरेत्; G1. 4 स्मरेः.

C. 3. 16042
B. 3. 278. 42
K 3. 279. 43

तामनुद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत् ॥ ३९
भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनाम् ।
मूर्धजेषु निजग्राह खमुपाचक्रमे ततः ॥ ४०
तां ददर्श तदा गृध्रो जटायुर्गिरिगोचरः ।
रुदतीं राम रामेति ह्रियमाणां तपस्विनीम् ॥ ४१

इति श्रीमहाभारते आरण्यकपर्वणि द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

# २६३

मार्कण्डेय उवाच ।
सखा दशरथस्यासीज्जटायुररुणात्मजः ।
गृध्रराजो महावीर्यः संपातिर्यस्य सोदरः ॥ १
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् ।
क्रोधादभ्यद्रवत्पक्षी रावणं राक्षसेश्वरम् ॥ २
अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चेति मैथिलीम् ।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे वधूम् ॥ ३
उक्त्वैवं राक्षसेन्द्रं तं चकर्त नखरैर्भृशम् ।
पक्षतुण्डप्रहारैश्च बहुशो जर्जरीकृतः ।
चक्षार रुधिरं भूरि गिरिः प्रस्रवणैरिव ॥ ४
स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।

---

**39** a) B1 D5 सीता; T2 चाथ (for सा तं). T1 G2 M समालक्ष्य; T2 G4 °लोक्य. — b) K1. 2. 4 B1. 3. 4 D (except D1. 5) G3 ततः (for पुनः). — After 39ab, K2 B D (except D1) G3 ins.:

1257* क्रोधात्प्रस्फुरमाणौष्ठी विधुन्वाना करौ मुहुः ।

— c) B D (except D5) G3 अभिद्रुत्य; G1 अनुसृत्य. — d) K D1 °षेधत; B1 D5 °भाषत; B2 °धर्षयत् (for °षेधयत्).

**40** a) K1. 2 B Dc D2. 5 T1 च; K4 स; G2. 4 स्व- (for तु). K3 कात्स्न्यैन; D1 सुश्रोणीं; S (except G3) रूपेण (for रूक्षेण). — b) D1 रूक्षेण (for स्वरेण). — d) B Dn D3. 4. 6 G3 ऊर्ध्वमाचक्रमे. G1. 2. 4 M पुनः (for ततः).

**41** a) K3 B Dn D1–4. 6 G3 M2 ततो (for तदा). — b) K1. 2 वन° (for गिरि°). — c) K3. 4 Dc T1 G2. 4 M1 रुदंतीं (for रुदतीं).

Colophon. — *Major parvan:* K1. 2 G2. 4 आरण्य. — *Sub-parvan:* N G3 (all om. sub-parvan name) mention only रामोपाख्यान; G1 M, likewise, only रामायणोपाख्यान. — *Adhy. name:* B4 सीताहरणं; M2 सीतापहरणं. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 276; Dn3 277 (in words), and 270 (in figures); D1 279; T G4 M (M2 *inf. lin.*) 266 (M2 orig. 268); G1 (erroneously) 260; G2 265. — *Śloka no.:* Dn2 42; Dn3 43.

## 263

**1** a) T2 G1. 2. 4 [अ]पि (for [आ]सीज्). — c) Dn D3. 4. 6 G3 °वीरः (for °वीर्यः).

**2** a) G1. 2. 4 ततः (for तदा). — b) K B4 D1 रावणांकागतां. — c) B Dn D3. 4. 6 G3 सक्रोधो (for क्रोधाद्). K1. 2 अनु-; K3 Dc D1. 2. 5 अथ; K4 उप-; T1 M चैव (for अभि-).

**3** a) K1 क्रुद्धो; K4 क्षुद्रं; T2 G1. 2. 4 पक्षी (for गृध्रो). — b) K3 B2. 4 Dn D1. 3–6 G3 मुंचस्व; B1 मुंचाशु; B3 मुंचाद्य (for मुञ्चेति). — c) G2 जीव°; M1 ह्रिय° (for ध्रिय°). — d) K3 हनिष्यसि. D1 निशाकर. — e) D3 वीर्याद् (for जीवन्). — f) K4 B Dn D4 T1 G2 M2 नोत्सृज्यसे; G1 नोत्सहसे.

**4** a) G2. 4 राक्षसेंद्रस्य (for °द्रं तं). T G1 M1 स (for तं). — b) B1 तं चकर्त नखैर्भृशं. — c) D1 पक्षि°; G4 पंच° (for पक्ष°). B1 तु (for च). — d) B1. 2. 4 Dn D3. 4. 6 G1. 3 M1 शतशो (for बहुशो). K2 B2 Dn D1. 3–6 G3 °कृतं. — e) K3 D3. 6 सुस्राव; B1 D5 G2. 4 M2 चकार; B4 अक्षरद् (for चक्षार). G1 भूमौ (for भूरि). — f) G1 भूरि (for गिरिः). T2 G1. 2. 4 M1 प्रस्रवणानिव (T2 G4 °नि च).

खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः ॥ ५
निहत्य गृध्रराजं स छिन्नाभ्रशिखरोपमम् ।
ऊर्ध्वमाचक्रमे सीतां गृहीत्वाङ्केन राक्षसः ॥ ६
यत्र यत्र तु वैदेही पश्यत्याश्रममण्डलम् ।
सरो वा सरितं वापि तत्र मुञ्चति भूषणम् ॥ ७
सा ददर्श गिरिप्रस्थे पञ्च वानरपुंगवान् ।
तत्र वासो महद्दिव्यमुत्ससर्ज मनस्विनी ॥ ८
तत्तेषां वानरेन्द्राणां पपात पवनोद्धुतम् ।
मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ॥ ९
एवं हृतायां वैदेह्यां रामो हत्वा महामृगम् ।
निवृत्तो ददृशे धीमान्भ्रातरं लक्ष्मणं तदा ॥ १०
कथमुत्सृज्य वैदेहीं वने राक्षससेविते ।
इत्येवं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत् ॥ ११
मृगरूपधरेणाथ रक्षसा सोऽपकर्षणम् ।
भ्रातुरागमनं चैव चिन्तयन्पर्यतप्यत ॥ १२
गर्हयन्नेव रामस्तु त्वरितस्तं समासदत् ।
अपि जीवति वैदेही नेति पश्यामि लक्ष्मण ॥ १३
तस्य तत्सर्वमाचख्यौ सीताया लक्ष्मणो वचः ।
यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः ॥ १४
दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम् ।
स ददर्श तदा गृध्रं निहतं पर्वतोपमम् ॥ १५
राक्षसं शङ्कमानस्तु विकृष्य बलवद्धनुः । C. 3. 16063 B. 3. 279. 19 K 3. 280. 19

---

**5** After $5^{ab}$, $B_3$ Dc $D_{1.2}$ ins.:

1258* अभिदुद्राव संक्रुद्धः पतगेन्द्रं दशाननः ।

— $^{d}$) $D_1$ $T_2$ $G_{1.2.4}$ पक्षौ (for भुजौ).

**6** $T_2$ om. $6^{a}$–$8^{b}$. — $^{a}$) $G_{1.2.4}$ सं($G_1$ स)छिद्य (for निहत्य). $B_1$ °राजं तु; $G_4$ °राजानं (for °राजं स). — $^{b}$) $K_4$ $B_4$ छिन्नाभ्र-; $B_1$ संछिन्न-; $B_{2.3}$ भिन्नाभ्र-; Dn $D_{3.4.6}$ $G_3$ भिन्नाभ्र- (for छिन्नाभ्र-). $K_{1.2}$ -निचयो° (for -शिखरो°). — $^{d}$) K Dc $D_{1.2}$ प्रगृह्य (for गृहीत्वा). $K_4$ [अं]के च (for [अ]ङ्केन). $D_1$ $G_{1.2.4}$ रावणः (for राक्षसः).

**7** $T_2$ om. 7 (cf. v.l. 6). — $^{a}$) $T_1$ $M_1$ हि; $G_{1.2.4}$ $M_2$ च (for तु). — $^{c}$) B Dn $D_{3-6}$ $G_{2.3}$ सरितो (for °तं). — $^{d}$) $K_4$ दुःस्वरं (for भूषणम्).

**8** $T_2$ om. $8^{ab}$ (cf. v.l. 6). — $^{ab}$) = var. Rām. 3. 54. $1^{cd}$. $K_{1.2}$ °पृष्ठे (for °प्रस्थे). — $^{c}$) $M_1$ बहिर् (for महद्). — $^{d}$) $K_{1.2}$ तप° (for मन°).

**9** $^{a}$) $T_2$ $G_{1.2.4}$ तत्रैषां (for तत्तेषां). — $^{b}$) K $B_2$ D (except $D_{4.6}$) $T_1$ $G_2$ $M_2$ पवनोद्धुतं; $B_{3.4}$ $T_2$ $G_4$ °द्धूतं; $G_1$ °द्यतं. — $^{c}$) $K_{1.2}$ मुखेषु पीतं (for मध्ये सुपीतं). — $^{d}$) $D_5$ °न्मालांबरे (for °न्मेघान्तरे). $K_1$ तथा (for यथा). — After 9, $B_4$ Dc $D_{1.2}$ ins.:

1259* अथ लङ्केश्वरो मानी समुत्तीर्य महोदधिम् ।
सीतां निवेशयामास भवने नन्दनोपमे ।

[Line 2 = 3. 264. $41^{cd}$.]

$B_4$ Dc $D_2$ cont.: $B_{1-3}$ Dn $D_{3-6}$ $G_3$ ins. after 9:

1260* अचिरेणातिचक्राम खेचरः खे चरन्निव ।
ददर्शाथ पुरीं रम्यां बहुद्वारां मनोरमाम् ।
प्राकारवप्रसंबाधां निर्मितां विश्वकर्मणा ।
प्रविवेश पुरीं लङ्कां ससीतो राक्षसेश्वरः ।

[(L. 3) $B_{1.3}$ Dc $D_2$ °वर°; $B_2$ °पुर° (for °वप्र°).]

On the other hand, $G_1$ ins. after 9:

1261* एवं हृत्वा रामपत्नीं रावणोऽगात्स्वकां पुरीम् ।

**10** $^{a}$) $T_1$ (?gloss) सीतायां (for वैदेह्यां). — $^{b}$) $D_1$ हत्वा रामो (by transp.). — $^{c}$) $B_{1.4}$ निवर्तन् (for निवृत्तो). S (except $G_3$) दूराद् (for धीमान्). K Dc $D_{1.2.5}$ निवर्तमानो ददृशे. — $^{d}$) $G_{2.4}$ लक्ष्मणं भ्रातरं (by transp.). Dn $D_{3.4.6}$ $G_{3.4}$ $M_2$ तथा (for तदा).

**11** $^{c}$) $K_3$ B Dn $D_{2-4.6}$ $T_1$ $G_3$ तं ($B_1$ स) (for [ए]वं). $M_2$ लक्ष्मणं (for भ्रातरं). — $D_5$ om. $11^{d}$–$13^{c}$. — $^{d}$) $T_2$ $G_{1.2.4}$ संप्राप्तोसि (for प्राप्तोऽसीति). $K_1$ T विगर्हयन्; $K_2$ $G_2$ विगर्हयत्; $K_3$ विमर्शयन्; $D_{3.6}$ व्यगर्हन्; $G_{1.4}$ [इ]ति गर्हयन्.

**12** $D_5$ om. 12 (cf. v.l. 11). — $^{a}$) $G_{2.4}$ [अ]पि (for [अ]थ). — $^{b}$) $K_1$ $G_4$ चोप°; $B_1$ सोपि कर्षणं; Dc $D_2$ सोपकर्शितं; $D_1$ [आ]त्मोपकर्षणं; $T_2$ चाप°; $G_2$ पाप°.

**13** $D_5$ om. $13^{abc}$ (cf. v.l. 11). — $^{a}$) $T_1$ गर्हन्नेव तु (for °यन्नेव). — $^{b}$) $T_2$ $G_4$ त्वरितं स (for त्वरितस्तं). $K_1$ समाददत्; $D_{3.6}$ °सदन्. — $^{c}$) $B_{2.3}$ Dn $D_{3.4.6}$ $G_3$ वैदेहीम्. — $^{d}$) $B_{2.3}$ Dn $D_{3.4.6}$ $G_3$ इति; $D_1$ वैति (for नेति). $K_3$ लक्ष्मणः; $G_1$ °णं.

**14** $^{b}$) $K_4$ सीतां लक्ष्मणमेव च. — $B_2$ om. (hapl.) $14^{cd}$. — $^{d}$) $D_4$ वैदेह्या. $T_1$ परुषं (for पश्चिमं).

**15** $^{a}$) $D_1$ च (for तु). $K_4$ तदा (for हृदा). $T_1$ दह्यमाने तु हृदये. — $^{b}$) $B_2$ $D_6$ [ऽ]भ्यापतद्; $B_4$ [ऽ]भ्यागमद्; Dc $D_2$ [ऽ]भ्यायात्तदा; $T_1$ ह्यापतद्; $G_1$ ह्यप°. — After

C 3. 16063 B. 3. 279 19 K. 3. 280. 19

अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः ॥ १६
स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ ।
गृध्रराजोऽस्मि भद्रं वां सखा दशरथस्य ह ॥ १७
तस्य तद्वचनं श्रुत्वा संगृह्य धनुषी शुभे ।
कोऽयं पितरमस्माकं नाम्नाहेत्यूचतुश्च तौ ॥ १८
ततो ददृशतुस्तौ तं छिन्नपक्षद्वयं तथा ।
तयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् ॥ १९
अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः ।
तस्य गृध्रः शिरःकम्पैराचचक्षे ममार च ॥ २०
दक्षिणामिति काकुत्स्थो विदित्वास्य तदिङ्गितम् ।
संस्कारं लम्भयामास सखायं पूजयन्पितुः ॥ २१
ततो दृष्ट्वाश्रमपदं व्यपविद्धबृसीघटम् ।
विध्वस्तकलशं शून्यं गोमायुबलसेवितम् ॥ २२
दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ ।
जग्मतुर्दण्डकारण्यं दक्षिणेन परंतपौ ॥ २३
वने महति तस्मिंस्तु रामः सौमित्रिणा सह ।
ददर्श मृगयूथानि द्रवमाणानि सर्वशः ।
शब्दं च घोरं सत्त्वानां दावाग्नेरिव वर्धतः ॥ २४
अपश्येतां मुहूर्ताच्च कबन्धं घोरदर्शनम् ।
मेघपर्वतसंकाशं शालस्कन्धं महाभुजम् ।
उरोगतविशालाक्षं महोदरमहामुखम् ॥ २५
यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् ।
विषादमगमत्सद्यः सौमित्रिरथ भारत ॥ २६
स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम् ।

---

$15^{ab}$, D2 reads $22^{a}$–$24^{b}$ for the first time, *repeating* it in its proper place. — $^{c}$) T1 ततो (for तदा).

**16** $^{a}$) N (except K1. 2) T2 G3 तं (for तु).

**17** $^{c}$) K3 वै; B1. 3. 4 ते; Dc1 D2 मे; M2 वः (for वां). — $^{d}$) K Dc D1. 2. 5 T G1. 2 M2 च; B Dn D3. 4. 6 G3 वै (for ह).

**18** $^{b}$) K Dc D1. 2. 5 T1 संहृत्य (for °गृह्य). M1 उभे (for शुभे). — $^{c}$) Dc D2 सोयं (for कोऽयं). — $^{d}$) B2 स तौ; T2 G1. 2. 4 तदा (for च तौ).

**19** $^{a}$) K2–4 B4 Dc D2 T2 G1. 2. 4 तौ तु; B2 तं तौ (by transp.). — $^{b}$) K1 तदा; B D (except D1. 5) G3 M2 खगं (for तथा). M1 छिन्नपक्षं जटायुषं. — $^{cd}$) T2 G1. 2. 4 सीतार्थे स्वकीयं (for गृध्रस्तु सीतार्थे).

**20** $^{c}$) S (except G3 M1) शिरःक्षेपैर्. — $^{d}$) T1 आचष्ट स; M आचक्षन्स (for आचचक्षे). T1 M ह (for च).

**21** $^{a}$) S (except T2 G3) दक्षिणेनेति (for °णामिति). G2. 4 काकुत्स्थौ. — $^{b}$) T1 M तदेंगितं. K4 विदित्वाशां तदिंगितैः; Dc D2 विदित्वा तस्य चेंगितं. — $^{c}$) =1. 2. $225^{c}$. N (except K4 D1) T2 G3 सत्कारं (for संस्कारं). — $^{d}$) A few MSS. पूजयत्. — After 21, M ins.:

1262* अहो धन्यः सुभाग्योऽसौ जटायुरिति भारतीम् ।
दिवि शृण्वन्गतः सिद्धिं सिद्धानामपि दुर्लभाम् ।

**22** D2 repeats $22^{a}$–$24^{b}$ (cf. v.l. 15). — $^{b}$) K3 °बृषीघटः; K4 °बृशीघटं; B D4. 6 °बृषीमठं; Dc D1 °बृषीवटं; Dn G3 °बृसीमठं; D2 (first time) °बृषीपटं; D2 (second time). 3 °बृषीमकं; T G1. 2. 4 °बृसीकटं (for °बृसीघटम्). — $^{c}$) B2. 3 °कलसं; D2 (first time) °सकलं; T2 G3 °कुशलं. — $^{d}$) K1. 2 गोमायुरुतनादितं; K3. 4 °बलनादितं; B Dc Dn D2 (second time). 3. 4. 6 G3 °शतसंकुलं; D1 °मृगनादितं; D2 (first time). 5 °शतनादितं; T1 °बलसंकुलं.

**23** $^{a}$) K1. 2 °विद्धौ; D1 °युक्तौ. — $^{c}$) K4 D2 (first time) M2 दंडकारण्याद्.

**24** $^{a}$) Dc2 D2 (second time) G4 M2 च; T1 स (for तु). D1 वने तस्मिंश्च महति. — $^{cd}$) K1 transp. मृग° and द्रव°. D3. 4. 6 द्राव°; T2 भ्रम° (for द्रव°). — $^{e}$) S (except G3) शब्दश्च घोरः. K1. 2 आकर्ण्य; K3 Dc D2 शब्दानां (for सत्त्वानां). — $^{f}$) T2 दवाग्नेरिव. Dc D2 G2. 4 दह्यतः; T1 वर्तते (for वर्धतः). K2 दवाग्निरिव पर्वतः.

**25** $^{a}$) K1. 3. 4 B1. 3 Dc D1. 2. 5 अपश्यतां. D3 ते (for च). T2 अपश्यत्तन्मुहूर्ताद्वै. — $^{b}$) S (except T1 G3) भीम° (for घोर°). — $^{d}$) K1 S (except T2 G3) साल° (for शाल°). — $^{e}$) K1. 2 उरोगमं; Dc D2 तारागत- (for उरोगत-). Dc2 D2 -विशालाख्यं. — $^{f}$) T1 °भुजं (for °मुखम्).

**26** $^{a}$) D1. 2 T1 च; G4 तं (for [अ]थ). — $^{c}$) T1 तत्र; T2 रक्षः; G2. 4 तस्य (for सद्यः). — $^{d}$) K3 भाषत (for भारत).

**27** $^{b}$) K1 दृश्यंते; K2 दृश्यते; K3 कृष्यंते; K4 ह्रष्यते; B4 क्लिश्यते. K3 D4 तेन (for येन). — D2 om. from °ग्रामं in ($27^{c}$) up to पृथिवी- (in $29^{c}$). — $^{c}$) B4 विवर्णं° (for विषण्ण°). — $^{d}$) T1 महाभुज; G2. 4 इमामिति (for इमां मम).

विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम ॥ २७
हरणं चैव वैदेह्या मम चायमुपप्लवः ।
राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा ॥ २८
नाहं त्वां सह वैदेह्या समेतं कोसलागतम् ।
द्रक्ष्यामि पृथिवीराज्ये पितृपैतामहे स्थितम् ॥ २९
द्रक्ष्यन्त्यार्यस्य धन्या ये कुशलाजशमीलवैः ।
अभिषिक्तस्य वदनं सोमं साभ्रलवं यथा ॥ ३०
एवं बहुविधं धीमान्विललाप स लक्ष्मणः ।
तमुवाचाथ काकुत्स्थः संभ्रमेष्वप्यसंभ्रमः ॥ ३१
मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते ।
छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः ॥ ३२
इत्येवं वदता तस्य भुजो रामेण पातितः ।
खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ॥ ३३
ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान्बली ।
सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम् ॥ ३४
पुनरभ्याहनत्पार्श्वे तद्रक्षो लक्ष्मणो भृशम् ।
गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः ॥ ३५
तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः ।
ददृशे दिवमास्थाय दिवि सूर्य इव ज्वलन् ॥ ३६
पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः ।
कामया किमिदं चित्रमाश्चर्यं प्रतिभाति मे ॥ ३७
तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप ।
प्राप्तो ब्रह्मानुशापेन योनिं राक्षससेविताम् ॥ ३८
रावणेन हृता सीता राज्ञा लङ्कानिवासिना । C. 3. 16087 B. 3. 279. 43 K. 3. 280. 43

**28** $D_2$ om. 28 (cf. v.l. 27). — $^a$) $K_{1.3.4}$ Dc $D_{1.5}$ $G_4$ चापि (for चैव). — $^d$) $T_1$ पितुश्च (for तातस्य). $K_1$ यथा (for तथा).

**29** $D_2$ om. up to पृथिवी- (cf. v.l. 27). — $^a$) $K_3$ $G_{2.4}$ M त्वा (for त्वां). — $^b$) $K_{1.2}$ स्वां महीं गतं; $K_3$ Dc स्वां पुरीं गतं (Dc °तः); $B_{2.3}$ $D_{3.4.6}$ कोश($B_2$ °ष)-लागतं; $D_1$ स्वपुरीं गतं; $D_5$ स्वां पुरीं गतं; $T_2$ कोसलाधिपं. — $^c$) $T_1$ $G_4$ प्रथिते; $G_2$ प्रयतो (for पृथिवी-). — $^d$) $G_1$ पित्र्ये (for पितृ-).

**30** $^b$) $B_2$ (m as in text)$_{.4}$ $D_{1.3.6}$ °जलैः; $G_3$ °यवैः. — $^d$) $K_4$ भ्रातृलवं; B Dn $D_{3-6}$ $G_3$ शांतघनं; Dc $D_2$ साभ्रघनं; $T_1$ $G_{2.4}$ व्यभ्रमलं.

**31** $^a$) Dc $D_2$ श्रीमान् (for धी°). — $^b$) $T_2$ $G_1$ सुदुःखितः (for स लक्ष्मणः). — $^d$) Dc संग्रामेषु (for संभ्रमेषु). $K_3$ $D_3$ [अ]थ सं° (for [अ]प्यसं°). $D_5$ संभ्रमाकुलितेंद्रियः.

**32** $^a$) T $G_{1.2.4}$ विषादं (for विषीद). $T_2$ $G_1$ °श्रेष्ठ (for °व्याघ्र). — $^b$) =1. 140. 7$^b$. Dc $D_2$ नैव (for नैष). $T_2$ किंचिन् (for कश्चिन्). — After 32$^{ab}$, S (except $G_3$) ins.:

1263* शक्तो धर्षयितुं वीर सुमित्रानन्दिवर्धन ।

— $^d$) $K_1$ भिन्नः (for छिन्नः). $K_{1.3.4}$ $B_4$ $D_{1.5}$ T $G_4$ $M_2$ महा- (for मया).

**33** $^{ab}$) $K_3$ $B_1$ $Dc_2$ $D_2$ वदतस् (for वदता). S (except $G_3$) इत्येवमुक्त्वा रामस्तु भुजमस्य न्यपातयत्. — $^c$) $K_4$ च सुतीक्ष्णेन; Dc $D_2$ $G_1$ शितधारेण; $T_2$ शिततीक्ष्णेन. — $^d$) $T_1$ $G_{2.4}$ चकर्त; M निकृत्य (for निकृत्तस्). $T_1$ तिलखंडवत्.

**34** $^b$) $T_1$ $G_4$ वशी (for बली). — $^c$) $K_{1.3}$ $D_1$ अथ; $B_1$ चैव; $G_4$ अभि- (for अपि). — $^d$) $B_1$ राघवं तथा; $D_1$ रामसंस्थितं; $D_2$ राघवं स्थितः.

**35** $^a$) $B_{1.3.4}$ Dc $D_2$ अभ्य° (for अभ्या°). $B_2$ Dn $D_{3.4.6}$ $T_1$ $G_{2-4}$ $M_2$ पुनर्जघान पार्श्वे वै ($T_1$ $G_{2.4}$ $M_2$ पादेन); $T_2$ $G_1$ $M_1$ पुनराजघ्नतुः पद्भ्यां. — $^b$) $T_2$ $G_1$ M भृशं तौ (M तं) रामलक्ष्मणौ. — $^d$) $T_1$ $G_4$ तद्रक्षः (for कबन्धः). $K_{1-3}$ $D_5$ स; $T_2$ $G_{1.2}$ तु (for सु-). $T_1$ $G_4$ सुमहाबलः (for °हांस्ततः).

**36** $^a$) $K_{1-3}$ T $G_1$ $M_2$ विनिष्पत्य; $B_1$ $G_{2.4}$ °ष्क्रम्य; $M_1$ °र्गत्य (for विनिःसृत्य). — $^b$) $K_4$ °लक्षणः; $B_1$ °रूपधृक् (for °दर्शनः). — $^d$) $T_1$ दिवं; $T_2$ $G_{1.2.4}$ M स्थितः (for दिवि). $T_1$ $G_2$ इवोज्वलन्; $G_4$ इवोदितः.

**37** $^b$) $Dc_2$ तद्ब्रूहि; $T_1$ $G_4$ ब्रूहीति (for प्रब्रूहि). — $^c$) $K_{1.4}$ Dc $D_2$ काम्यया; $B_1$ कायस्य; $B_3$ $T_2$ कामाय; $D_1$ $G_1$ का माया; $T_1$ $G_{2.4}$ रामोहं; $M_2$ भो मया (for कामया). — $^d$) $K_1$ ह्याश्चर्यं; $G_{2.4}$ दर्शनं (for आश्चर्यं). $B_2$ मां; $D_5$ वै; $T_1$ मा (for मे).

**38** $^b$) $K_3$ $Dc_1$ $D_2$ $G_2$ नृपः; $D_1$ प्रभो (for नृप). — $^c$) $K_{1.2}$ $B_{2-4}$ D $G_3$ ब्राह्मण° (for ब्रह्मानु°). $G_{2.4}$ प्राप्तोस्मि ब्रह्मशापेन.

**39** $^b$) $B_2$ Dn $G_3$ $M_1$ लंकाधिवा°. $T_1$ $G_{1.2.4}$ लंकायां सं($T_1$ सा; $G_1$ सु-)निवेशिता. — $^c$) $B_1$ °युक्तश्च; $B_{3.4}$ $T_2$ G °गच्छ त्वं (for °गच्छस्व). — $^d$) $B_{3.4}$ Dc $D_{2.4}$ सह्यं; $T_1$ कार्यं (for साह्यं). $K_4$ स साहायं करिष्यति; $B_1$

C. 3 16087 B 3 279 43 K. 3. 280 43

सुग्रीवमभिगच्छस्व स ते साह्यं करिष्यति ॥ ३९
एषा पम्पा शिवजला हंसकारण्डवायुता ।
ऋश्यमूकस्य शैलस्य संनिकर्षे तटाकिनी ॥ ४०
संवसत्यत्र सुग्रीवश्चतुर्भिः सचिवैः सह ।
भ्राता वानरराजस्य वालिनो हेममालिनः ॥ ४१
एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम् ।
ध्रुवं वानरराजस्य विदितो रावणालयः ॥ ४२
इत्युक्त्वान्तर्हितो दिव्यः पुरुषः स महाप्रभः ।
विस्मयं जग्मतुश्चोभौ तौ वीरौ रामलक्ष्मणौ ॥ ४३

इति श्रीमहाभारते आरण्यकपर्वणि त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

# २६४

मार्कण्डेय उवाच ।
ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम् ।
सीताहरणदुःखार्तः पम्पां रामः समासदत् ॥ १
मारुतेन सुशीतेन सुखेनामृतगन्धिना ।
सेव्यमानो वने तस्मिञ्जगाम मनसा प्रियाम् ॥ २
विललाप स राजेन्द्रस्तत्र कान्तामनुस्मरन् ।
कामबाणाभिसंतप्तः सौमित्रिस्तमथाब्रवीत् ॥ ३
न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद ।
आत्मवन्तमिव व्याधिः पुरुषं वृद्धशीलिनम् ॥ ४
प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च ।

---

स ते सखा भविष्यति.

**40** $^{a}$) B1 ज्ञेया (for एषा). B1 बहु°; T2 G1. 2 M हिम°; G4 सित° (for शिव°). — $^{b}$) K4 D1 T1 °कारंडवैर्युता; G4 °सेविता. — $^{c}$) N T2 G3 ऋष्य° (for ऋश्य°). — $^{d}$) K1–3 Dn1 तडाकिनी; B Dc Dn2. n3 D1–6 तडागिनी. G2. 4 संनिकर्षतटा नदी.

**41** 41$^{ab}$ = (var.) Rām. 3. 72. 12$^{cd}$. — $^{a}$) B Dn D3. 4. 6 G3 वसते तत्र; T G1 M2 संपतत्यत्र. — $^{b}$) B1. 3. 4 वृतः (for सह). — $^{d}$) K1 हेमशालिनः. K4 सूर्यपुत्रस्य वालिनः. — After 41, N (except K1. 3. 4 D1) G3 ins.:

1264* तेन त्वं सह संगम्य दुःखमूलं निवेदय ।
समानशीलो भवतः साहाय्यं स करिष्यति ।

[(L. 1) B1. 3 तस्य (for तेन). B4 उप- (for सह).]

**42** $^{b}$) K D1 द्रक्ष्यसि; G2. 4 दृष्टाथ (for द्रष्टासि). B3 मैथिलीं (for जानकीम्). — $^{c}$) T1 G1. 2. 4 श्रुतो (G2 ध्रुवं) वानरराजेन. — $^{d}$) K3 विदिता रावणादयः.

**43** $^{ab}$) K3 B1 Dc D2 सु- (for स). G2. 4 इत्युक्त्वा दिव्यपुरुषस्तदा त्वंतर्हितोभवत्. — $^{c}$) B3 वीरौ; D1 तौ तु; G2. 4 उभौ (for चोभौ). — $^{d}$) K1. 2 B1 Dc D2. 5 वीरौ तौ (by transp.); K4 D1 भ्रातरौ; B2–4 Dn D3. 4. 6 G3 प्रवीरौ; G2 नृवीरौ; G4 नृवरौ.

Colophon. — *Major parvan:* K1. 2 Dn2 T1 G2. 4 आरण्य. — *Sub-parvan:* K1. 3. 4 B Dc Dn1. n3 D1–6 G3 (all om. sub-parvan name) mention only रामो- (B3 श्रीरामो-)पाख्यान; M1 श्रीरामायणो°; M2 रामायणो°. — *Adhy. name:* B4 M2 कबंधवधः. — *Adhy. no.* (figures, words or both): Dn 277 (Dn3 278); D1 280; T G4 M (M2 *inf. lin.*) 267 (M2 orig. 269); G1 264; G2 266. — *Śloka no.:* Dn 48; D1 47.

## 264

**1** $^{b}$) B1 °कुमुदोत्पलां; Dc D2 °कमलोद्भवां; M2 °मकरोत्पलां. — $^{c}$) Dc D2 °हारेण दुःखार्तः; T2 °हरणदुःखेन. — $^{d}$) D1 T2 रामः पंपां (by transp.).

**2** $^{a}$) K1–3 स मारुतेन शीतेन. — $^{d}$) D2 मनसि (for मनसा).

**3** $^{a}$) K1. 3 B4 D4. 6 T2 G1 राजेंद्र. — $^{b}$) B1 तां त्वां (for तत्र). — $^{c}$) K3. 4 B D1 T G1. 2. 4 °संतप्तं. — $^{d}$) T2 G1 ततो° (for अथा°).

**4** $^{a}$) B2 वीरः (for भावः). — $^{b}$) K Dc D1. 2 राघव (for मानद). — $^{c}$) T2 ह्याधिः (for व्याधिः). — $^{d}$) T1 G1. 2. 4 वृद्धसेविनं.

**5** $^{a}$) T G1 °लभ्या (for °लब्धा). — $^{b}$) S (except T2 G3) सीताया (for वैदेह्या). T1 G2. 4 रावणालये (for

तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ॥ ५
अभिगच्छाव सुग्रीवं शैलस्थं हरिपुंगवम् ।
मयि शिष्ये च भृत्ये च सहाये च समाश्वस ॥ ६
एवं बहुविधैर्वाक्यैर्लक्ष्मणेन स राघवः ।
उक्तः प्रकृतिमापेदे कार्ये चानन्तरोऽभवत् ॥ ७
निषेव्य वारि पम्पायास्तर्पयित्वा पितॄनपि ।
प्रतस्थतुरुभौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥ ८
तावृश्यमूकमभ्येत्य बहुमूलफलं गिरिम् ।
गिर्यग्रे वानरान्पञ्च वीरौ ददृशतुस्तदा ॥ ९
सुग्रीवः प्रेषयामास सचिवं वानरं तयोः ।
बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम् ॥ १०
तेन संभाष्य पूर्वं तौ सुग्रीवमभिजग्मतुः ।
सख्यं वानरराजेन चक्रे रामस्ततो नृप ॥ ११
तद्वासो दर्शयामासुस्तस्य कार्ये निवेदिते ।
वानराणां तु यत्सीता ह्रियमाणाभ्यवासृजत् ॥ १२
तत्प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपम् ।
पृथिव्यां वानरैश्वर्ये स्वयं रामोऽभ्यषेचयत् ॥ १३
प्रतिजज्ञे च काकुत्स्थः समरे वालिनो वधम् ।
सुग्रीवश्चापि वैदेह्याः पुनरानयनं नृप ॥ १४
इत्युक्त्वा समयं कृत्वा विश्वास्य च परस्परम् ।
अभ्येत्य सर्वे किष्किन्धां तस्थुर्युद्धाभिकाङ्क्षिणः ॥ १५
सुग्रीवः प्राप्य किष्किन्धां ननादौघनिभस्वनः ।
नास्य तन्ममृषे वाली तं तारा प्रत्यषेधयत् ॥ १६
यथा नदति सुग्रीवो बलवानेष वानरः ।
मन्ये चाश्रयवान्प्राप्तो न त्वं निर्गन्तुमर्हसि ॥ १७
हेममाली ततो वाली तारां ताराधिपाननाम् । C. 3. 16110 B. 3. 280. 18 K. 3. 281. 19

°णस्य च). — $^{c}$) D3 (by corr.) तत्त्वं; T2 तां तां; G1 तं तां (for तां त्वं). — $^{d}$) D3 बुद्ध्वा (for बुद्ध्या).

6 $^{b}$) T2 G1 शैलेस्मिन् (for शैलस्थं). — $^{c}$) G1 मया (for मयि). K1 नित्यं (for शिष्ये). K3 G2. 4 transp. शिष्ये and भृत्ये. — $^{d}$) T1 साहाय्ये. T1 समाह्वय; T2 G1 परंतप; M पराश्वस.

7 $^{c}$) B2 आपन्नः (for आपेदे). — $^{d}$) B2 कार्यस्य; D2 °षु (for कार्ये च). G2. 4 त्वरितो (for [अ]नन्तरो).

8 $^{a}$) K1. 3. 4 B1 Dc D2 T1 M2 पंपायां. — $^{b}$) B2 अथ (for अपि). — $^{c}$) G2 प्रतस्थेतुर् (for °स्थतुर्).

9 $^{a}$) N T1 G3 [ऋ]ष्य° (for [ऋ]श्य°). — $^{b}$) K1. 2 °फलं शिवं; B2 Dn D3. 4. 6 G3 °फलद्रुमं. — $^{d}$) K Dc D1. 2 M ततः; D5 च तौ (for तदा).

10 K1. 4 transp. 10$^{ab}$ and 10$^{cd}$. — $^{b}$) K1. 2 सचिवं वानरस्; M2 वानरं सचिवं (by transp.). — $^{d}$) K1 Dc1 D1. 5 G2. 4 स्थिरं (for स्थितम्).

11 $^{a}$) G4 तु (for तौ). — $^{b}$) K1 उप° (for अभि°). — $^{c}$) D2 °राजेंद्र (for °राजेन). — $^{d}$) K1. 2 रामेण च (for चक्रे रामस्). B Dn D3. 4. 6 T2 G1. 3. 4 तदा (for ततो). — D2 om. from ततो up to ह्रिय- (in 12$^{d}$). A few MSS. नृपः (for नृप). — After 11, G4 ins.:

1265* ततः सीतां हृतां श्रुत्वा सुग्रीवो वालिना कृतम् ।
दुःखमाख्यातवान्सर्वं रामायामिततेजसे ।

12 D2 om. up to ह्रिय- (cf. v.l. 11). — $^{a}$) B2-4 D1 G2. 4 °मास (for °मासुस्). B1 बुद्ध्या संदेशयामास. — $^{b}$) T1 तत्र (for तस्य). B1 कार्यं (for कार्ये). — $^{c}$) T G1. 2. 4 M वानरा यत्तदा (T1 G2. 4 °राय तदा) सीता. — $^{d}$) B Dn D3-6 T1 G3. 4 व्यपा(B3 D5 °वा)सृजत्.

13 $^{a}$) D1 एतत्प्रियकरं; T G1 तत्प्रत्ययतरं; M2 तत्प्रत्यक्षकरं. — $^{b}$) B1 S (except G3) वानरा° (for प्लवगा°). — $^{c}$) K3 D2 °श्वर्यैः (for °श्वर्ये). — $^{d}$) B2. 3 न्यवेश° (for ऽभ्यषेच°).

14 $^{a}$) Dc D2 T [ऽ]थ; G1 M1 स (for च). — $^{b}$) G1 वालिनः समरे (by transp.). D5 वधे. — $^{d}$) G1 पुनरानयने. K1. 2 प्रति; T1 ततः (for नृप).

15 $^{a}$) S (except T1 G3) इत्येवं (for इत्युक्त्वा). — $^{b}$) K1 विनिःश्वस्य; K4 D4 G2. 4 विश्वस्य च. B2 पुनः पुनः (for पर°). — K4 om. (hapl.) 15$^{d}$-16$^{a}$.

16 K4 om. 16$^{a}$ (cf. v.l. 15). — $^{b}$) K1 G2. 4 ननादाभ्रनिभस्वनः (K1 °नं); B2 T1 °द घननिस्वनः; Dn3 D3-6 °दोद्धत(D4. 5 °दोद्धत)निस्वनः; D1 °दोच्चैर्घनस्वनः; T2 °दाब्दनिभस्वनः. — $^{c}$) T1 तं (for तन्). — $^{d}$) B Dc1 Dn D3. 4. 6 G3 तारा तं (by transp.); D1 तं रामः. K1-3 प्रत्यबोधयत्.

17 $^{b}$) K4 एक-; G2. 4 त्वेष (for एष). — G2 om. 17$^{c}$-18$^{d}$. — $^{c}$) K1. 3 साश्रयतां; K4 [ऽ]पाश्रयतः; Dc D2 चाश्रयतां; B3 T2 G1. 4 M2 [ऽ]पा(T2 -प्या-; G1. 4 ह्या)श्रयवान् (for चाश्रयवान्). D1 सोन्यस्याश्रयतां प्राप्तो; M1 मन्ये-प्यपाश्रयात्प्राप्तो. — T2 om. (hapl.) 17$^{d}$-19$^{c}$. — $^{d}$) B Dn D3. 4. 6 T1 G3 M निष्क्रांतु° (for निर्गन्तु°).

C 3 16110 B. 3. 280 18 K 3. 281. 19

प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः ॥ १८
सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता ।
केनापाश्रयवान्प्राप्तो ममैष भ्रातृगन्धिकः ॥ १९
चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा ।
पतिमित्यब्रवीत्प्राज्ञा शृणु सर्वं कपीश्वर ॥ २०
हृतदारो महासत्त्वो रामो दशरथात्मजः ।
तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धरः ॥ २१
भ्राता चास्य महाबाहुः सौमित्रिरपराजितः ।
लक्ष्मणो नाम मेधावी स्थितः कार्यार्थसिद्धये ॥ २२
मैन्दश्च द्विविदश्चैव हनूमांश्चानिलात्मजः ।
जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिताः ॥ २३
सर्व एते महात्मानो बुद्धिमन्तो महाबलाः ।
अलं तव विनाशाय रामवीर्यव्यपाश्रयात् ॥ २४
तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः ।
पर्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम् ॥ २५
तारां परुषमुक्त्वा स निर्जगाम गुहामुखात् ।
स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोऽभ्यभाषत ॥ २६
असकृत्त्वं मया मूढ निर्जितो जीवितप्रियः ।
मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः ॥ २७
इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः ।
प्राप्तकालममित्रघ्नो रामं संबोधयन्निव ॥ २८
हृतदारस्य मे राजन्हृतराज्यस्य च त्वया ।
किं नु जीवितसामर्थ्यमिति विद्धि समागतम् ॥ २९
एवमुक्त्वा बहुविधं ततस्तौ संनिपेततुः ।
समरे वालिसुग्रीवौ शालतालशिलायुधौ ॥ ३०
उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः ।

---

**18** $T_2$ om. 18 (cf. v.l. 17). — $^{c}$) $M_2$ चपलं (for वचनं). $T_1$ स प्रोवाचाबलां स्रग्वी. — $^{d}$) $T_1$ $G_{1.4}$ M वानराधिपतिः पतिः.

**19** $T_2$ om. $19^{abc}$ (cf. v.l. 17); $T_1$ om. 19. — $^{a}$) $K_4$ $D_1$ °ऋतज्ञा; $G_1$ °स्य तज्ज्ञा (for °रुतज्ञा). $K_4$ तां (for त्वं). — $^{b}$) $K_4$ पश्यन्बुद्ध्या समन्वितां. — $^{c}$) $B_{1.4}$ $Dn_2$ $D_4$ $G_3$ केन चा°; $B_{2.3}$ $D_1$ केनाप्या°; Dc $D_2$ $G_4$ $M_2$ केन वा°; $G_2$ केन ह्या°; $M_1$ केनोपा° (for केनापा°). — $^{d}$) $K_1$ मामैष; $D_3$ मयैष; $G_{1.4}$ ममैव (for ममैष).

**20** $^{b}$) $K_3$ °धिपप्रभं; $G_1$ °धिपानना (cf. $18^{b}$). — $^{c}$) S (except $G_3$) राजन् (for प्राज्ञा). — $^{d}$) $K_1$ वाक्यं (for सर्वं). — After 20, $K_1$ ins. 1266*.

**21** $K_1$ om. 21. — $^{a}$) $T_1$ °राज (for °सत्त्वो). — $T_1$ om. (hapl.) $21^{c}$–$23^{b}$. — $^{c}$) $K_4$ $G_2$ तुल्यारिर्मित्रतां; $B_1$ एकारिमि°; $B_2$ सुग्रीवमि°. — $K_2$ ins. after 21: $K_1$ (which om. 21), after 20:

1266* श्रूयते दाशरथी रामो वने पितुरनुज्ञया ।
[ Prior half hypermetric ! ]

**23** $T_1$ om. $23^{ab}$ (cf. v.l. 21). — $^{a}$) $K_1$ द्विविधश्च; $K_2$ विविधश्च; $M_1$ विविदश्च. $B_2$ Dn $D_{3.4.6}$ $G_3$ चापि (for चैव). — $^{b}$) $B_1$ om. च. $T_2$ $G_{1.2.4}$ हनूमांश्चैव वानरः; M °श्चापराजितः. — $^{c}$) $Dc_2$ $D_{1.2}$ जांबुवान्. — $^{d}$) $T_1$ स्थिराः; $T_2$ $G_{1.2}$ तथा; $G_4$ तदा (for स्थिताः).

**24** $^{d}$) B °बलाश्रयाः; Dn $D_{3.4.6}$ $G_3$ °बलाश्रयात्; $T_2$ $G_{1.2.4}$ M °व्यपाश्रयाः.

**25** $^{c}$) $T_2$ वाली; $G_{1.2.4}$ ईर्ष्यात् (for ईर्षुः).

**26** $^{a}$) $K_1$ परुषवक्ता. $B_{2.4}$ Dn $D_{3.4.6}$ $G_3$ तु (for स). — $^{c}$) $M_2$ स्थितो. Most N MSS. °भ्यासे (for °भ्याशे).

**27** $^{a}$) $K_4$ असत्कृतं; $G_2$ असकृत्तु. $K_4$ त्वया (for मया). B Dn $D_{1.3-6}$ $G_3$ पूर्वं; T $G_{1.2.4}$ $M_1$ क्लीब (for मूढ). — $^{b}$) $B_{2-4}$ $T_1$ $G_2$ $M_2$ °प्रिय. — $^{c}$) $K_{1.2}$ ज्ञातिभिरज्ञात्वा; $B_{1.3}$ $M_1$ ज्ञातीति दुर्बुद्धे; T $G_{1.2.4}$ $M_2$ गच्छसि ($T_1$ $M_2$ गर्जसि) दुर्बुद्धे. — $^{d}$) Dc $D_{1.2}$ तव (for पुनः). T $G_{1.2.4}$ कथं घोरे ($T_1$ -कारं; $G_1$ कामो) रणे पुनः.

**28** $^{a}$) $T_1$ तेन (for प्राह). — For $28^{ab}$, $B_1$ subst.:

1267* इत्युक्तस्तु जहासोच्चैः सुग्रीवो भ्रातरं प्रति ।
हेतुमद्वचनं भ्रात्रे प्रोवाचेदं महात्मने ।

— $^{c}$) S (except $G_3$) अमित्रघ्नं.

**29** $^{ab}$) K $B_{1.3.4}$ Dc $Dn_1$ $D_{1.2.4.5}$ transp. °दारस्य and °राज्यस्य. $D_1$ मे (for च). — $^{c}$) $B_{2.4}$ Dn $D_{3.4}$ $G_3$ मे (for नु). — $^{d}$) $D_1$ बुद्ध्वा (for विद्धि). K $B_3$ Dc $D_{2.5}$ [इ]दमागतं; $D_1$ [अ]हमागतः; $T_1$ समागतः; $T_2$ $G_1$ तवागतं; $G_{2.4}$ कपीश्वर; $M_2$ स्वमागतं.

**30** $^{b}$) $K_1$ तौ ततः (by transp.). — $K_{1.2}$ $T_1$ om. (hapl.) $30^{c}$–$31^{b}$; $K_3$ om. $30^{c}$–$31^{d}$. — $^{d}$) S (except $G_3$; $T_1$ om.) साल- (for शाल-). $Dn_2$. $n_3$ $D_{3.4.6}$ $G_3$ °युधैः (for °युधौ).

उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः ॥ ३१
उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ ।
शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ ॥ ३२
न विशेषस्तयोर्युद्धे तदा कश्चन दृश्यते ।
सुग्रीवस्य तदा मालां हनूमान्कण्ठ आसजत् ॥ ३३
स मालया तदा वीरः शुशुभे कण्ठसक्तया ।
श्रीमानिव महाशैलो मलयो मेघमालया ॥ ३४
कृतचिह्नं तु सुग्रीवं रामो दृष्ट्वा महाधनुः ।
विचकर्ष धनुःश्रेष्ठं वालिमुद्दिश्य लक्ष्यवत् ॥ ३५
विस्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ ।
वितत्रास तदा वाली शरेणाभिहतो हृदि ॥ ३६
स भिन्नमर्माभिहतो वक्त्राच्छोणितमुद्वमन् ।
ददर्शावस्थितं राममारात्सौमित्रिणा सह ॥ ३७
गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्छितः ।
तारा ददर्श तं भूमौ तारापतिमिव च्युतम् ॥ ३८
हते वालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत ।
तां च तारापतिमुखीं तारां निपतितेश्वराम् ॥ ३९
रामस्तु चतुरो मासान्पृष्ठे माल्यवतः शुभे ।
निवासमकरोद्धीमान्सुग्रीवेणाभ्युपस्थितः ॥ ४०
रावणोऽपि पुरीं गत्वा लङ्कां कामबलात्कृतः ।
सीतां निवेशयामास भवने नन्दनोपमे ।
अशोकवनिकाभ्याशे तापसाश्रमसंनिभे ॥ ४१
भर्तृस्मरणतन्वङ्गी तापसीवेषधारिणी ।
उपवासतपःशीला तत्र सा पृथुलेक्षणा ।
उवास दुःखवसतीः फलमूलकृताशना ॥ ४२
दिदेश राक्षसीस्तत्र रक्षणे राक्षसाधिपः । C. 3. 16136 B. 3. 280. 44 K. 3. 281. 45

---

**31** K1. 2 T1 om. $31^{ab}$; K3 om. 31 (cf. v.l. 30). — a) Dc D2 जग्मतुर् (for जघ्नतुर्). — b) T2 G2. 4 उभौ तौ (T2 ते) संनिपेततुः; G1 उभौ तौ संनिवेशतुः. — D3 om. (? hapl.) $31^{cd}$. — d) T1 वि-; T2 G1. 2. 4 [अ]भि- (for नि-).

**32** a) K3 D1 M2 °संसक्तौ; K4 B2 G1. 2 °सिक्तांगौ; Dn2 °संयुक्तौ. — b) K3 Dc D1. 2 °क्षितौ. — c) K1. 4 M2 महावीरौ; T G1. 2. 4 M1 रुषा वीरौ (for तदा वीरौ). — d) K1 किंशुकाविव पर्वतौ; T1 M1 किंशुकाविव पुष्पितौ.

**33** b) K3 कश्चिन्न दृश्यते; D1 कश्चित्प्र°; G4 किंचन दृ°; M1 कश्चन विद्यते. — After $33^{ab}$, B3 Dc D2 ins.:

1268* प्रज्ञानार्थं तदा रामो निश्चित्य मनसा तदा ।

— d) K1–3 D1 कंठम् (for कण्ठ). K3 S (except G1. 3) आसृजत् (cf. $34^{b}$).

**34** a) S (except G3) मालया स (by transp.). K3. 4 D1 ततो; T G2 M2 तया (for तदा). D4 वीर. — d) S (except G1. 3) हेम° (for मेघ°).

**35** a) D6 च (for तु). — b) K3 महाहनुः; K4 °बलः; B1 धनुर्धरः; T2 G1. 2. 4 महद्धनुः. — c) D1 रोप्य लक्ष्यं; T2 G1. 2. 4 चकर्ष च (for विचकर्ष). K1 धनुः सक्तो; D1 प्रमुद्दिश्य; T1 धनुः सेषुं. — d) B2 लक्ष्यवित्; D6 T G1. 2 लक्षयन् (D6 °यत्); G4 लक्षणं (for लक्ष्यवत्). K Dc D2 लक्ष्यमुद्दिश्य वालिनं; D1 वालिनं हेममालिनं.

**36** b) K1 मंत्रस्येव; T2 G1. 2. 4 वज्रस्येव. — c) D1 नेपपात; G3 चिक्षेप च (for वितत्रास). K1. 3. 4 Dc D1. 2 ततो (for तदा). — d) K4 भृशं; B4 Dn1. n3 [उ]रसि (for हृदि).

**37** a) T2 G1. 2. 4 तेन (for भिन्न-). B1. 3. 4 T1 M °मर्माभि(B4 °वि)मुखो; B2 Dn D3. 4. 6 G3 °हृदयो वाली. — b) S (except G3) मुखा° (for वक्त्रा°). — c) K1 [अ]वसंथ; G2. 4 [अ]प्रस्थितं (for [अ]वस्थितं). — d) B1. 3 भ्रात्रा; B2. 4 Dn D3. 4. 6 G3 ततः (for आरात्).

**38** a) D1 विगर्हयित्वा (for गर्हयित्वा स). K1 G4 तु; K3. 4 Dc2 D2 च (for स). — d) K1 °मिवोद्यतं; K3m °मिव स्थितं; B2 Dn D3. 4. 6 G3 °समौजसं.

**39** c) K1. 3. 4 B1. 3. 4 Dc D1. 2 T1 G1. 2. 4 ताराधिपमुखीं (T2 G2. 4 °खां).

**40** d) K1. 2 °भ्युपेक्षितः; B1 °भिसंस्थितः; T1 °नुपस्थितः; T2 G1. 2. 4 °भ्यवस्थितः. — After 40, D1 T1 ins. an addl. colophon (*adhy. no.*: D1 281; T1 268).

**41** Before 41, D1 ins. मार्कंडेय उ°; T1 मार्कंडेयः. — ab) D1 [ऽ]थ (for ऽपि). S (except T2 G3) लंकां गत्वा (by transp.). K D1. 3m. 5 °र्दितः (for °त्कृतः). — e) Many N MSS. °भ्यासे; B1 °वासे.

**42** a) D1 °दुःखार्ता. — b) K1. 2 °वेश°. — c) D5 उपवासतनुः सीता. — d) K Dc D1. 2. 5 G2. 4 ततः सा; B1. 2. 4 Dn1. n3 D4 G3 तत्रास; G1 तपसा. K1. 2 पृष्टलक्षणा; B1. 3 T2 G2. 4 पृथुलोचना. — e) K4 दुःखा; D1 दुःखं (for दुःख-). K2 B2 Dc2 Dn1. n3 D5 G1. 2. 4 -वसतिं; Dn2 D2. 4 -वसतीं. — f) K Dc D1. 2. 5 °जला°

C 3 16136
B 3. 280. 44
K. 3. 281. 45

प्रासासिशूलपरशुमुद्गरालातधारिणीः ॥ ४३
द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम् ।
त्रिस्तनीमेकपादां च त्रिजटामेकलोचनाम् ॥ ४४
एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्धजाः ।
परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ४५
तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वनाः ।
तर्जयन्ति सदा रौद्राः परुषव्यञ्जनाक्षराः ॥ ४६
खादाम पाटयामैनां तिलशः प्रविभज्य ताम् ।
येयं भर्तारमस्माकमवमन्येह जीवति ॥ ४७
इत्येवं परिभर्त्सन्तीस्त्रास्यमाना पुनः पुनः ।
भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः ॥ ४८
आर्याः खादत मां शीघ्रं न मे लोभोऽस्ति जीविते ।
विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्धजम् ॥ ४९
अप्येवाहं निराहारा जीवितप्रियवर्जिता ।
शोषयिष्यामि गात्राणि व्याली तालगता यथा ॥ ५०
न त्वन्यमभिगच्छेयं पुमांसं राघवादृते ।
इति जानीत सत्यं मे क्रियतां यदनन्तरम् ॥ ५१
तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः ।
आख्यातुं राक्षसेन्द्राय जग्मुस्तत्सर्वमादितः ॥ ५२
गतासु तासु सर्वासु त्रिजटा नाम राक्षसी ।
सान्त्वयामास वैदेहीं धर्मज्ञा प्रियवादिनी ॥ ५३
सीते वक्ष्यामि ते किंचिद्विश्वासं कुरु मे सखि ।
भयं ते व्येतु वामोरु शृणु चेदं वचो मम ॥ ५४
अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुंगवः ।
स रामस्य हितान्वेषी त्वदर्थे हि स मावदत् ॥ ५५
सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च ।

---

(for °कृता°).

**43** $^{ab}$) $K_{1.2}$ transp. राक्षसीः and रक्षणे. $K_{1.2}$ तस्य; $K_{3.4}$ $B_{1-3}$ Dc $D_{1.2.5}$ तस्या; $B_4$ तस्यां (for तत्र). $D_5$ रक्षार्थं (for रक्षणे). $K_3$ $Dc_1$ $D_2$ रक्षसाधिपः; $T_2$ $G_{1.2.4}$ $M_2$ राक्षसेश्वरः.

**44** $^{a}$) K $D_5$ $T_1$ M स्वक्षीं (for द्व्यक्षीं). $D_6$ शंखीं (for त्र्यक्षीं). — $^{b}$) $K_4$ $Dn_2$ $D_1$ अजिह्वकां. — $^{c}$) $K_{1.3}$ $T_1$ M एकपादीं; $G_4$ चैकपादां (for एकपादां). — $^{d}$) $K_{1.2}$ तिग्म°; $G_4$ चैक° (for एक°).

**45** $^{b}$) $K_3$ °भोत्कर°; $T_1$ °भायत°; $T_2$ $G_{1.2.4}$ M °भोत्कच° (for °भोत्कट°). — $^{d}$) $G_{2.4}$ °रात्रिम् (for °रात्रम्). $B_1$ अनिद्रितां; $B_3$ अनिंदिताः; $M_2$ अनिद्रिताः (for अतन्द्रिताः).

**46** $^{a}$) K Dc $D_{2.5}$ स्म ताम्; $D_1$ सीताम् (for तु ताम्). — $^{b}$) N (except $K_{1.2}$ $D_5$) $G_3$ °स्वराः (for °स्वनाः). — $^{c}$) $T_2$ $G_{1.2.4}$ तर्जयंत्यः. $K_4$ महा-; T $G_{1.2.4}$ तदा (for सदा). $K_1$ रात्रौ (for रौद्राः). — $^{d}$) $K_1$ °व्यंजनक्षमाः; $K_4$ $G_{2.4}$ °व्यंजिताक्षराः; Dn $D_{3.4.6}$ $G_3$ व्यंजनस्वराः.

**47** $^{a}$) $K_{3.4}$ $M_1$ खादामः. $K_4$ पाटयामि; $G_1$ पातयाम (for पाटयाम). $T_1$ [ए]तां (for [ए]नां). — $^{c}$) $T_1$ सेयं (for येयं). — $^{d}$) $G_{1.2.4}$ °मत्येह; M °मत्यैव (for °मन्येह).

**48** $^{a}$) $K_{1.2}$ $D_1$ परिभर्त्स्योच्चैस्; $K_{3.4}$ $B_1$ Dc $D_2$ $G_{2.4}$ $M_1$ भर्त्स्यं($K_4$ °र्त्सं)ती; $B_{3.4}$ भर्त्स्यमाना सा. — $^{b}$) $K_{1.2}$ त्रासयंती; $K_4$ भ्राम्यमाणा; $B_1$ $D_{3.4}$ त्रासयानाः; $B_{2-4}$ $D_6$ $T_2$ $G_3$ त्रास्यमानाः; $G_{2.4}$ ताड्यमाना. Dc $D_2$ मुहुर्मुहुः (for पुनः पुनः). — $^{d}$) $K_4$ $G_{2.4}$ [ए]वम्; $T_2$ [ए]तद् (for [इ]दम्). $K_3$ सा; Dc $D_{2.5}$ ह (for ताः).

**49** $^{a}$) $K_3$ $M_2$ मा (for मां). — $^{b}$) $K_3$ Dc $D_{2.3.5.6}$ लाभो (for लोभो). $G_{2.4}$ जीवने (for जीविते). — $G_1$ om. $49^{cd}$. — $49^{d}$=(var.) 1. 96. $54^{b}$; 155. $42^{b}$.

**50** $^{a}$) $K_3$ $T_2$ $G_{1.2.4}$ अद्य; $D_{1.2}$ अथ (for अपि). — $^{b}$) $K_{1.2}$ जीवितं; S (except $T_2$ $G_3$) जीवंती (for जीवित-). $D_1$ °दर्शिताः (for °वर्जिता). — $^{d}$) S (except $G_3$) वल्ली (for व्याली). $D_1$ तालवने; $T_1$ कालगता; $T_2$ $G_2$ तल°. $K_3$ इव (for यथा).

**52** $^{b}$) $K_3$ $B_{3.4}$ Dc $D_{1.2}$ M °स्वराः (for °स्वनाः). $G_{2.4}$ राक्षस्यः खरनिस्वनाः. — $^{d}$) $T_1$ ताः (for तत्). The reading आदृताः of some printed ed. was not found in any MS. collated!

**53** $^{d}$) $K_4$ $B_1$ Dc $D_{2.5}$ धर्मज्ञां °वादिनीं.

**54** $^{c}$) $B_2$ Dn $D_{3.4.6}$ $G_3$ त्वं त्यज (for ते व्येतु).

**55** $^{a}$) $K_4$ $D_1$ अवंध्यो; $B_2$ अविंदो; $T_1$ $G_4$ अविध्यो; $T_2$ $G_{1.2}$ अवध्यो (for अविन्ध्यो). — $^{c}$) $K_1$ Dc स मां राम-; $K_{3.4}$ $D_5$ स राघव-; $D_{1.2}$ स च राम-; S (except $G_3$) सदा राम- (for स रामस्य). — $^{d}$) Dc त्वदर्थं. K $D_1$ $T_2$ $G_1$ मां ($K_3$ [ऽ]ति-); Dc $D_2$ मे; $G_{2.4}$ मा (for हि). K $D_1$ $T_2$ $G_1$ समासदत्; Dn स मां वदत् (!); $T_1$ $M_2$ समादधत्; $G_{2.4}$ अचूचुदत्; $M_1$ समादिशत् (for स मावदत्).

भर्ता ते कुशली रामो लक्ष्मणानुगतो बली ॥ ५६
सख्यं वानरराजेन शक्रप्रतिमतेजसा ।
कृतवान्राघवः श्रीमांस्त्वदर्थे च समुद्यतः ॥ ५७
मा च तेऽस्तु भयं भीरु रावणाल्लोकगर्हितात् ।
नलकूबरशापेन रक्षिता ह्यस्यनिन्दिते ॥ ५८
शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन् ।
न शक्तो विवशां नारीमुपैतुमजितेन्द्रियः ॥ ५९
क्षिप्रमेष्यति ते भर्ता सुग्रीवेणाभिरक्षितः ।
सौमित्रिसहितो धीमांस्त्वां चेतो मोक्षयिष्यति ॥ ६०
स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः ।
विनाशायास्य दुर्बुद्धेः पौलस्त्यकुलघातिनः ॥ ६१
दारुणो ह्येष दुष्टात्मा क्षुद्रकर्मा निशाचरः ।
स्वभावाच्छीलदोषेण सर्वेषां भयवर्धनः ॥ ६२
स्पर्धते सर्वदेवैर्यः कालोपहतचेतनः ।
मया विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ॥ ६३
तैलाभिषिक्तो विकचो मज्जन्पङ्के दशाननः ।
असकृत्खरयुक्ते तु रथे नृत्यन्निव स्थितः ॥ ६४
कुम्भकर्णादयश्चेमे नग्नाः पतितमूर्धजाः ।
कृष्यन्ते दक्षिणामाशां रक्तमाल्यानुलेपनाः ॥ ६५
श्वेतातपत्रः सोष्णीषः शुक्लमाल्यविभूषणः ।
श्वेतपर्वतमारूढ एक एव विभीषणः ॥ ६६
सचिवाश्चास्य चत्वारः शुक्लमाल्यानुलेपनाः ।
श्वेतपर्वतमारूढा मोक्ष्यन्तेऽस्मान्महाभयात् ॥ ६७
रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा ।
यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ॥ ६८
अस्थिसंचयमारूढो भुञ्जानो मधुपायसम् । C. 3. 16161 B. 3. 280. 70 K. 3. 281. 71

**56** $^{a}$) $Dn_2$ मद्वचसा; $G_1$ तद्वचनाद्. — $^{b}$) $B_1$ $T_2$ °साद्य (for °श्चास्य).

**57** $^{a}$) $K_1$ °राजेंद्र (for °राजेन). — $^{c}$) $B_{3.4}$ $T_1$ $G_1$ M गत° (for कृत°). — $^{d}$) $G_{2.4}$ कृतोद्यमः (for समु°).

**58** $^{a}$) S (except $T_2$ $G_3$) ते भूद् (for तेऽस्तु). — $^{d}$) $K_4$ $B_{1-3}$ Dn $D_{3.4.6}$ $G_{1.3}$ $M_1$ नंदिनि (for [अ]निन्दिते).

**59** $^{a}$) $K_1$ ह्येषां (for पापो). — $^{b}$) $K_{1.2}$ B $Dn_3$ $D_{4.6}$ °मृषन् ($D_4$ °मृशन् also as in text). — $^{c}$) B Dn $D_{4-6}$ $G_3$ न शक्नोत्यवशां; $D_3$ न शक्तोभ्यवशां; $T_1$ अशक्तोप्यवशां. — $^{d}$) $K_{1.4}$ $B_{3.4}$ Dc $D_{1.2}$ $G_2$ उपेतुम् (for उपै°). $D_1$ जीवितप्रियः (for अजितेन्द्रियः).

**60** $^{b}$) $T_1$ सुग्रीवसहितः प्रभुः; $T_2$ $G_{1.2.4}$ M सुग्रीवेण सह ($T_2$ सम) प्रभुः. — $^{c}$) S (except $G_3$) सौमित्रिणा च वीरेण. — $^{d}$) $T_1$ त्वामितो; $T_2$ $G_{1.2.4}$ M ततस्त्वां (for त्वां चेतो). $K_4$ मोच° (for मोक्ष°).

**61** $D_2$ om. $61^{a}$–$62^{b}$. — $^{a}$) $T_1$ स्वप्नो —°घोरो (for स्वप्ना —°घोरा). — $^{b}$) $K_1$ Dc दृष्ट्वा; $T_1$ दृष्टो (for दृष्टा). $K_1$ Dc $D_1$ घोर°; $K_4$ रौद्र°; $G_{2.4}$ [ऽ]रिष्ट° (for ऽनिष्ट°). $T_1$ -दर्शनः (for -दर्शनाः). — $^{c}$) $D_1$ नाशायास्य सुदुर्बुद्धेः. — $^{d}$) $T_1$ °पांसनः. $G_{2.4}$ पौलस्त्यस्य कुलस्य च.

**62** $D_2$ om. $62^{ab}$ (cf. v.l. 61). — $^{b}$) $K_1$ $D_1$ रौद्र°; $K_3$ क्षौद्र° (for क्षुद्र°). — $^{c}$) $K_4$ $G_{2.4}$ °वशील° (for °वाच्छील°).

**63** $K_3$ om. (hapl.) $63^{a}$–$64^{b}$. — $^{a}$) $T_2$ $G_1$ सर्व-($G_1$ सह)देवेभ्यः. — $^{d}$) $K_1$ स्वप्न-; $T_2$ सप्त (for स्वप्ने). $D_5$ च (for वै).

**64** $K_3$ om. $64^{ab}$ (cf. v.l. 63). — $^{a}$) $K_1$ $B_{3.4}$ Dc $D_{1.2}$ °वसिक्तो (for °भिषिक्तो). — $^{c}$) $K_1$ $B_1$ $D_1$ $G_{2.4}$ M °युक्ते च; Dc $D_{2.3}$ $T_1$ $G_1$ °युक्तेन (for °युक्ते तु). — $^{d}$) $G_1$ चरन् (for रथे). $G_{2.4}$ नृत्यम् (for नृत्यन्). $T_1$ $G_{2.4}$ $M_1$ अवस्थितः (for इव स्थितः).

**65** $^{a}$) $B_3$ चान्ये; S (except $G_3$) चैव (for चेमे). — $^{b}$) $K_1$ नागाः; $K_4$ मग्नाः; $D_1$ भग्नाः (for नग्नाः). $K_4$ पलित° (for पतित°). — $^{c}$) B D (except $D_{1.3.5}$) $G_3$ गच्छंति (for कृष्यन्ते).

**66** $K_1$ $M_1$ om. (hapl.) $66^{a}$–$67^{b}$. — $^{b}$) $K_4$ शुक्लमाल्यविभूषितः; $B_1$ $D_1$ $G_2$ °माल्यो बि($B_1$ °माल्यवि)भीषणः; $B_{2.3}$ Dc Dn $D_{2.5}$ $T_1$ $G_{1.3}$ °माल्यानुलेपनः. — $D_1$ om. (hapl.) $66^{cd}$; $G_4$ om. $66^{c}$–$67^{b}$. — $^{c}$) =(var.) $67^{c}$. $K_3$ श्वेतं पर्वतम्. $M_2$ आस्थाय (for आरूढ). — $G_2$ om. (hapl.) $66^{d}$–$67^{c}$.

**67** $K_1$ $T_2$ $G_4$ $M_1$ om. $67^{ab}$; $G_2$ om. $67^{abc}$ (cf. v.l. 66); $B_2$ om. 67. — $^{a}$) $K_4$ तस्य (for चास्य). — $^{c}$) =(var.) $66^{c}$. $K_{1.3}$ $T_2$ $G_4$ श्वेतं; $B_1$ शुक्ल- (for श्वेत-). — $^{d}$) A few N MSS. मोक्षंते. $B_1$ दृष्टाः स्वप्ने मयानघे. — After 67, $B_1$ ins.:

1269* मोक्षिता त्वां भयादस्माद्रामः शत्रुनिषूदनः ।

**68** $^{b}$) K Dc $D_{1.2.5}$ विनि° (for परि°). — $^{c}$) $K_4$ $T_1$ सर्वां (for कृत्स्नां).

**69** $^{a}$) $K_{1.2}$ $G_1$ अस्थिपर्वतमारूढो; T $G_4$ हस्तिसंचय°;

C 3 16161
B. 3 280 70
K. 3. 281. 71

लक्ष्मणश्च मया दृष्टो निरीक्षन्सर्वतो दिशः ॥ ६९
रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता ।
असकृत्त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ॥ ७०
हर्षमेष्यसि वैदेहि क्षिप्रं भर्तृसमन्विता ।
राघवेण सह भ्रात्रा सीते त्वमचिरादिव ॥ ७१
इति सा मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः ।
बभूवाशावती बाला पुनर्भर्तृसमागमे ॥ ७२
यावदभ्यागता रौद्राः पिशाच्यस्ताः सुदारुणाः ।
ददृशुस्तां त्रिजटया सहासीनां यथा पुरा ॥ ७३

इति श्रीमहाभारते आरण्यकपर्वणि चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

## २६५

### मार्कण्डेय उवाच ।

ततस्तां भर्तृशोकार्तां दीनां मलिनवाससम् ।
मणिशेषाभ्यलंकारां रुदतीं च पतिव्रताम् ॥ १
राक्षसीभिरुपास्यन्तीं समासीनां शिलातले ।
रावणः कामबाणार्तो ददर्शोपससर्प च ॥ २
देवदानवगन्धर्वयक्षकिंपुरुषैर्युधि ।
अजितोऽशोकवनिकां ययौ कन्दर्पमोहितः ॥ ३
दिव्याम्बरधरः श्रीमान्सुमृष्टमणिकुण्डलः ।
विचित्रमाल्यमुकुटो वसन्त इव मूर्तिमान् ॥ ४
स कल्पवृक्षसदृशो यत्नादपि विभूषितः ।

---

$G_{2}$ हस्तिस्कंधसमा°. — $^{b}$) Dc $D_{2}$ $T_{2}$ $G_{1.2.4}$ घृत° (for मधु°). — $^{d}$) B Dn $D_{3-6}$ $G_{3}$ दिधक्षुः; T $G_{1.2.4}$ M वि($T_{1}$ प्र)पश्यन् (for निरीक्षन्). $K_{4}$ B Dn $D_{1.3.4.6}$ $T_{1}$ $G_{1.4}$ -दिशं (for दिशः).

**70** $^{a}$) $B_{2}$ कर्षिता; $T_{1}$ $G_{4}$ रुदंती.

**71** $^{a}$) $D_{5}$ भोक्ष्यसि (for एष्यसि). — $^{b}$) B Dn $D_{3.4.6}$ $G_{3}$ M भर्त्रा (for भर्तृ-). — T $G_{2.4}$ om. $71^{cd}$. — $^{cd}$) $B_{2}$m लक्ष्मणेन (for राघवेण). K Dc $D_{1.2.5}$ लक्ष्मणेन च संयुक्ता सीते भर्तृहिते रता; $G_{1}$ M राघवेणेति वक्तव्या ($G_{1}$ °णाभिपत्तव्या) सीता भर्तृहिते रता.

**72** $^{a}$) $B_{1.3}$ इत्येवं; $B_{2.4}$ Dn $D_{3.4.6}$ $G_{3}$ इत्येतन् (for इति सा). — $^{c}$) $K_{4}$ बभूवाशाबला सा तु. — $^{d}$) S (except $G_{3}$) भर्तुरेव समागमे.

**73** $^{a}$) S (except $T_{2}$ $G_{3}$) तावद् (for यावद्). S (except $T_{1}$ $G_{3}$) रौद्यः (for रौद्राः). — $^{b}$) S (except $G_{3}$) महारवाः (for सुदारुणाः). — $^{c}$) $T_{1}$ $G_{2}$ तास्; $T_{2}$ हि (for तां). — $^{d}$) $K_{4}$ सह सीतां; $T_{1}$ सुखासीनां. S (except $G_{3}$) यथापुरं.

Colophon om. in $K_{1.2}$. — *Major parvan:* $Dn_{2}$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N ($K_{1.2}$ om.) $G_{3}$ (all om. sub-parvan name) mention only रामोपाख्यान; $M_{1}$, likewise, only रामायणोपाख्यान. — *Adhy. name:* $B_{4}$ त्रिजटास्वप्ननिवेदनं; $D_{1}$ त्रिजटावाक्यं; $M_{2}$ त्रिजटावाक्यसमाश्वासं. — *Adhy. no.* (figures, words or both): Dn 278 ($Dn_{3}$ 279); $D_{1}$ 282; $T_{1}$ 269; $T_{2}$ $G_{4}$ M ($M_{2}$ *inf. lin.*) 268 ($M_{2}$ orig. 270); $G_{1}$ 265; $G_{2}$ 267. — *Śloka no.:* Dn 74; $D_{1}$ 34.

**265**

**1** $^{b}$) $K_{2}$ सलिल- (for मलिन-). $K_{1.3}$ $Dc_{2}$ $D_{1.2}$ °वाससां; T $G_{4}$ M °वाससीं; $G_{2}$ °वासिनीं. — $^{d}$) $K_{1.3.4}$ $Dn_{3}$ $D_{1.2}$ रुदंतीं. S (except $G_{3}$) स्म (for च).

**2** $^{a}$) $B_{1}$ उपासतीं; Dc $D_{2}$ अपश्यंतीं (for उपास्यन्तीं).

**3** $^{ab}$) $K_{1.4}$ °गंधर्वैर् (for °गन्धर्व-). $T_{2}$ $G_{2}$ -पुरुषोरगैः (for -पुरुषैर्युधि). — $^{d}$) B Dn $D_{3-6}$ $G_{3}$ °पीडितः (for °मोहितः).

**4** $^{a}$) $B_{2}$ दिव्यायुधधरः. — $^{c}$) $T_{1}$ मरीचिमाला- (for विचित्रमाल्य-). S (except $G_{2.3}$) -मकुटो (for -मुकुटो). — $^{d}$) = Rām. 5. 22. $29^{b}$.

**5** = (var.) Rām. 5. 22. 29. — $^{a}$) $Dn_{1}$ $D_{5.6}$ $G_{2}$ न (for स). $G_{1}$ °सहितो (for °सदृशो). — $^{b}$) $D_{5}$ सु° (for वि°). — $^{c}$) $B_{2}$ °प्रतिमो (for °द्रुमवद्).

**6** $^{a}$) $K_{1.2}$ सुमनुष्यायाः (for तनु°). — $^{c}$) $T_{1}$ ददर्श (for ददृशे).

श्मशानचैत्यद्रुमवद्भूषितोऽपि भयंकरः ॥ ५
स तस्यास्तनुमध्यायाः समीपे रजनीचरः ।
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ॥ ६
स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः ।
इदमित्यब्रवीद्बालां त्रस्तां रौहीमिवाबलाम् ॥ ७
सीते पर्याप्तमेतावत्कृतो भर्तुरनुग्रहः ।
प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते ॥ ८
भजस्व मां वरारोहे महार्हाभरणाम्बरा ।
भव मे सर्वनारीणामुत्तमा वरवर्णिनि ॥ ९
सन्ति मे देवकन्याश्च राजर्षीणां तथाङ्गनाः ।
सन्ति दानवकन्याश्च दैत्यानां चापि योषितः ॥ १०
चतुर्दश पिशाचानां कोट्यो मे वचने स्थिताः ।
द्विस्तावत्पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ११
ततो मे त्रिगुणा यक्षा ये मद्वचनकारिणः ।
केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः ॥ १२
गन्धर्वाप्सरसो भद्रे मामापानगतं सदा ।
उपतिष्ठन्ति वामोरु यथैव भ्रातरं मम ॥ १३
पुत्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः ।
पञ्चमो लोकपालानामिति मे प्रथितं यशः ॥ १४
दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च ।
यथैव त्रिदशेशस्य तथैव मम भामिनि ॥ १५
क्षीयतां दुष्कृतं कर्म वनवासकृतं तव ।
भार्या मे भव सुश्रोणि यथा मन्दोदरी तथा ॥ १६
इत्युक्ता तेन वैदेही परिवृत्य शुभानना ।
तृणमन्तरतः कृत्वा तमुवाच निशाचरम् ॥ १७
अशिवेनातिवामोरूरजस्रं नेत्रवारिणा ।
स्तनावपतितौ बाला सहितावभिवर्षती ।
उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता ॥ १८
असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर ।
विषादयुक्तमेतत्ते मया श्रुतमभाग्यया ॥ १९ C. 3. 16185 B. 3. 281. 20 K. 3. 282. 20

**7** $^{c}$) $G_{1. 2. 4}$ M एत्य (for इति). Dn $D_{4. 6}$ वाक्यं (for बालां). — $^{d}$) K Dc $D_{1. 2. 5}$ त्रस्तां व्याकुललोचनां; $T_1$ संत्रस्तामिव रोहिणीं; T ($T_1$ orig.) $G_{1. 2. 3m. 4}$ त्रस्तां मृगवधूमिव.

**8** $^{b}$) $G_1$ M अनुक्रमः (for अनुग्रहः). — $^{c}$) $G_{1. 4}$ $M_2$ कुरु प्रसादं (by transp.). — $^{d}$) $K_{1. 3. 4}$ $B_{1. 3}$ $T_1$ $M_1$ प्रति° (for परि°). $K_1$ $D_1$ च (for ते).

**9** $^{d}$) $K_2$ $Dc_2$ $Dn_{2. n3}$ $D_1$ $T_1$ $G_1$ वरवर्णिनी.

**10** $^{a}$) S (except $G_3$) दानव° (for मे देव°). — $B_2$ om. (hapl.) $10^{bc}$. — $^{b}$) $K_{1. 2. 4}$ देव° (for राज°). $K_3$ B ($B_2$ om.) Dc Dn $D_{2-6}$ $G_3$ गंधर्वाणां च योषितः. — $K_3$ $G_4$ $M_2$ om. $10^{cd}$. — $^{cd}$) T $G_{1. 2}$ $M_1$ तासामद्य विशालाक्षि सर्वासां मे भवोत्तमा.

**11** $^{a}$) $B_2$ $T_1$ M पिशाचीनां. — $^{b}$) $T_2$ $G_{1. 4}$ M वचसि (for वचने). — $^{d}$) $K_{1. 2}$ भीमरूपिणां.

**12** $^{a}$) $K_{1. 2}$ तत्र (for ततो). $Dc_2$ $D_2$ $T_1$ द्वि° (for त्रि°). — $^{b}$) $T_2$ $G_{2. 4}$ मे (for मद्-).

**13** $^{a}$) $D_1$ यज्ञे (for भद्रे). — $^{b}$) $K_1$ $D_3$ (by corr.) मामासनगतं तदा ($D_3$ सदा); $D_1$ नानापानगतं सदा; $T_1$ मां विमानगतं सदा.

**14** $K_3$ om. $14^{a}$–$15^{b}$. — $^{b}$) $T_2$ मुनिः (for मुनेः). — $^{c}$) $D_1$ पंचमं.

**15** $K_3$ om. $15^{ab}$ (cf. v.l. 14). — $^{b}$) $D_3$ तु (for च). — $^{c}$) $K_1$ $B_1$ $D_1$ त्रिदिवेशस्य; Dc $D_2$ त्रिदशेंद्रस्य. — $^{d}$) $T_2$ $G_{2. 4}$ $M_2$ भज (for मम). $K_2$ B $Dc_2$ $Dn_{1. n3}$ $D_{2-6}$ भाविनि (for भामिनि).

**16** $^{a}$) $D_3$ दुष्करं (for दुष्कृतं). $T_1$ धर्मं (for कर्म). — $^{b}$) Dc $D_2$ °गतं (for °कृतं). $K_{1. 2}$ तथा (for तव). — $16^{c}$ = 1. 67. $1^{c}$ : 3. 251. $18^{a}$; 262. $34^{c}$; etc. — $^{d}$) $T_2$ $G_{2. 4}$ M मंडोदरी (for मन्दो°).

**17** $^{b}$) $K_1$ सुशोभना (for शुभा°). — $17^{cd}$ = (var.) Rām. 3. 56. $1^{cd}$ : 5. 21. $3^{ab}$.

**18** $^{a}$) $T_2$ अर्दितैवं; $G_1$ अशीतेन; $G_2$ अर्दितव्यं; $G_4$ अर्दितेन (for अशिवेन). $T_2$ $G_{2. 4}$ हि; $G_1$ [ए]व (for [अ]ति-). — $^{b}$) $T_2$ असकृन् (for अजस्रं). — $^{c}$) $K_{1. 3. 4}$ Dc $D_{1. 2}$ पीनौ (for बाला). — $^{d}$) $B_{2. 4}$ D (except $D_{1. 3}$) $G_1$ संहताव् (for सहिताव्). $D_1$ अपि (for अभि-). $B_2$ $D_1$ -वर्षति. — After $18^{cd}$, S (except $G_3$) ins.:

1270* व्यवस्थाप्य कथंचित्सा विषादादतिमोहिता ।

[$T_1$ $G_1$ M रुदती गिरं (for अतिमोहिता).]

— $^{c}$) T $G_{1. 2. 4}$ रावणं (for वाक्यं तं). $K_1$ क्रुद्धं (for क्षुद्रं).

**19** $^{b}$) $K_{2-4}$ $Dc_2$ $D_1$ राक्षसेश्वरः; $D_{3. 6}$ °सेरितं; $T_1$ °साधम; $G_1$ °सेश्वरं. — $^{c}$) $K_4$ अधर्म-; $T_1$ न याचे; M विवाद- (for विषाद-). — $^{d}$) $K_3$ क्षणम्; $G_1$ चैवम् (for

C. 3 16185 B. 3 281. 20 K. 3 282 20 तद्भद्रमुख भद्रं ते मानसं विनिवर्त्यताम् ।
परदारास्म्यलभ्या च सततं च पतिव्रता ॥ २०
न चैवोपयिकी भार्या मानुषी कृपणा तव ।
विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि ॥ २१
प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ।
न च पालयसे धर्मं लोकपालसमः कथम् ॥ २२
भ्रातरं राजराजानं महेश्वरसखं प्रभुम् ।
धनेश्वरं व्यपदिशन्कथं त्विह न लज्जसे ॥ २३
इत्युक्त्वा प्रारुदत्सीता कम्पयन्ती पयोधरौ ।
शिरोधरां च तन्वङ्गी मुखं प्रच्छाद्य वाससा ॥ २४
तस्या रुदत्या भामिन्या दीर्घा वेणी सुसंयता ।
ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्धनि ॥ २५
तच्छ्रुत्वा रावणो वाक्यं सीतयोक्तं सुनिष्ठुरम् ।
प्रत्याख्यातोऽपि दुर्मेधाः पुनरेवाब्रवीद्वचः ॥ २६
काममङ्गानि मे सीते दुनोतु मकरध्वजः ।
न त्वामकामां सुश्रोणीं समेष्ये चारुहासिनीम् ॥ २७
किं नु शक्यं मया कर्तुं यत्त्वमद्यापि मानुषम् ।
आहारभूतमस्माकं राममेवानुरुध्यसे ॥ २८
इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसगणेश्वरः ।
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम् ॥ २९
राक्षसीभिः परिवृता वैदेही शोककर्शिता ।
सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

---

श्रुतम्). $K_1$ अनार्यया; $D_1$ अयोग्यया (for अभाग्यया).

**20** a) $K_{3.4}$ $B_1$ $T_2$ $G_{2.4}$ M °मुख (for °सुख). — b) $K_1$ $D_2$ $G_1$ विनिवर्ततां; $G_2$ °वृत्यतां. — c) $K_{1.2}$ $D_1$ न; $G_{2.4}$ $M_2$ हि (for [अ]स्मि). $K_{1.2}$ $D_1$ [अ]स्मि (for च). — d) $D_3$ $M_2$ संततं.

**21** a) $K_1$ चैव पावकी; $K_2$ चैवैतादृशी; $K_{3.4}$ $Dc_1$ $D_{3.6}$ $T_2$ चैवोपयिकी; $B_2$ चैवौपायिकी; $B_4$ चैवौपयिका; $Dc_2$ चैवापायिकी; $D_2$ एवोपयिकी. — b) $G_1$ मनुष्या (for मानुषी). $K_4$ कृपणा तथा; $G_{2.4}$ तव राक्षस (for कृपणा तव). — c) K Dc $D_{1.2}$ मां; $B_3$ तु (for च). $T_2$ विहर्षां धर्मयित्वा च. — d) $G_1$ शांतिम् (for प्रीतिम्).

**22** c) $T_2$ $G_2$ त्वं (for च). $B_1$ सर्वं (for धर्मं). — d) $K_{1.3.4}$ $Dc_2$ $D_{1.2.5}$ °पालोपमः (for °पालसमः).

**23** a) $K_1$ राजराजत्वे; $K_3$ °राजत्वं; $D_1$ यक्षराजं तं; T $G_{1.2.4}$ राजराजं च; M °राजं त्वं. — b) $K_1$ °समं विभुं; $B_1$ °समप्रभं; $Dc_1$ °समं प्रभुं; $Dc_2$ $D_2$ °समं प्रभं (for °सखं प्रभुम्). — d) $K_{1.2}$ इत्थं; $K_3$ Dc $D_{1.2.5}$ हि त्वं; $K_4$ त्वं हि; $D_3$ त्वं ह (for त्विह).

**24** a) $B_4$ सारुदत्; $Dc_2$ $G_1$ $M_2$ प्ररुदत्. — b) Dc $D_2$ कंपयंती. — d) $K_4$ $D_1$ पाणिना (for वाससा).

**25** a) $T_2$ तस्यां. K $B_1$ Dc $Dn_2$. $n_3$ $D_{2.3}$ $T_1$ $G_1$ M रुदंत्या; $T_2$ रुदत्यां. B D (except $Dn_1$) $G_2$ $M_1$ भाविन्या; $T_2$ भामिन्यां. — b) $K_{3.4}$ $B_{1.3}$ Dc $D_2$ $G_4$ $M_2$ दीर्घ- (for दीर्घा). $B_1$ -वेगा (for वेणी). $K_{1.2}$ सुशोभना; $B_1$ समुद्यता; $Dn_2$ $D_2$ सुसंयुता. — c) Dc $D_2$ स्थगिता; $D_3$ त्वसिता; $T_2$ सविषा; $G_{1.2.4}$ $M_2$ सासिता (for स्व°). — d) $Dc_2$ $Dn_3$ कला; $T_2$ कृष्णा (for काली). $G_{1.2.4}$ M व्याली कालीव (by transp.).

**26** a) B Dn $D_{3.4.6}$ $G_3$ $M_1$ श्रुत्वा तद् (by transp.) — b) $K_{1.3.4}$ $D_1$ T $G_{2.4}$ M अनि°; $G_1$ तु नि° (for सुनि°).

**27** b) $K_3$ धुनोतु; $Dn_3$ $D_{1.5}$ S (except $G_3$) दुनोति. — c) $K_{1.4}$ $B_{1.3.4}$ Dc $Dn_2$. $n_3$ $D_{1.2.4}$ $T_1$ $G_1$ M सुश्रोणि. — d) $K_{1.4}$ $B_{1.3.4}$ $Dc_1$ $D_2$ $T_2$ M °हासिनि.

**28** a) $K_1$ न; $K_3$ $Dc_2$ $T_1$ $G_3$ M तु (for नु). — b) $D_1$ मानुषीं. — c) $D_1$ आहारभूताम्. — d) $B_1$ [अ]नुबुध्यसे; $D_1$ °राध्यसे.

**29** a) $B_1$ इत्युक्त्वा चानवद्यांगीं. — b) $K_3$ B $Dc_1$ Dn $D_{2-4.6}$ $G_3$ M °महेश्वरः; $G_1$ °जनेश्वरः. — c) $G_2$ [अं]तरितो (for [अ]न्तर्हितो). — d) $B_2$ जगामाभीप्सितां दिशं; Dc °माभिहतं शुभं; $D_2$ °माभिहितं शुभे.

**30** b) $K_1$ जानकी (for वैदेही). $K_{1-3}$ $B_{1.2.4}$ $Dn_2$. $n_3$ शोककर्षिता. — c) $B_4$ सांत्व्य° (for सेव्य°). — d) $D_{3.4}$ $G_3$ तया (for तदा).

Colophon. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N $G_3$ (all om. sub-parvan name) mention only रामो($K_2$ $B_2$ श्रीरामो)पाख्यान; $M_2$, likewise, only रामायणोपाख्यान. — *Adhy. name:* $M_2$ सीताप्रार्थनं. — *Adhy. no.* (figures, words or both): Dn 279 ($Dn_3$ 280); $D_1$ 283; $T_1$ 270; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 269 ($M_2$ orig. 271); $G_1$ 266; $G_2$ 268. — *Śloka no.:* $Dn_1$. $n_3$ $D_1$ 31.

# २६६

मार्कण्डेय उवाच ।
राघवस्तु ससौमित्रिः सुग्रीवेणाभिपालितः ।
वसन्माल्यवतः पृष्ठे ददर्श विमलं नभः ॥ १
स दृष्ट्वा विमले व्योम्नि निर्मलं शशलक्षणम् ।
ग्रहनक्षत्रताराभिरनुयातममित्रहा ॥ २
कुमुदोत्पलपद्मानां गन्धमादाय वायुना ।
महीधरस्थः शीतेन सहसा प्रतिबोधितः ॥ ३
प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्मनाः ।
सीतां संस्मृत्य धर्मात्मा रुद्धां राक्षसवेश्मनि ॥ ४
गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरम् ।
प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम् ॥ ५
योऽसौ कुलाधमो मूढो मया राज्येऽभिषेचितः ।
सर्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै ॥ ६
यदर्थं निहतो वाली मया रघुकुलोद्वह ।
त्वया सह महाबाहो किष्किन्धोपवने तदा ॥ ७
कृतघ्नं तमहं मन्ये वानरापसदं भुवि ।
यो मामेवंगतो मूढो न जानीतेऽद्य लक्ष्मण ॥ ८
असौ मन्ये न जानीते समयप्रतिपादनम् ।
कृतोपकारं मां नूनमवमन्याल्पया धिया ॥ ९
यदि तावदनुद्युक्तः शेते कामसुखात्मकः ।
नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया ॥ १०
अथापि घटतेऽस्माकमर्थे वानरपुंगवः ।
तमादायैहि काकुत्स्थ त्वरावान्भव मा चिरम् ॥ ११
इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते रतः । C. 3. 16208 B. 3. 282. 12 K. 3. 283. 12

## 266

**1** K4 T2 G1 om. the ref. — a) B1-3 Dn D3. 4. 6 G3 M1 सहसौ° (for तु ससौ°). — c) =(var.) 61d. K1 °पूजितः. — c) = Rām. 4. 28. 1c. — d) B1. 2. 4 Dn1. n3 D1. 4-6 M1 ददृशे (for ददर्श).

**2** a) B1. 3 विपुले; T1 G1 विमलं (for विमले). — b) K1. 3. 4 Dc D1. 2 विमलं (for निर्मलं). B2 S (except G3) शशलांछनं; D1. 3 (by corr.) शशिलक्षणं.

**3** a) T2 G1. 2. 4 M2 °गंधेन. — b) K3. 4 Dc D1. 2 गंधान् (for गन्धम्). G1. 2 गंधमादनवायुना. — cd) Dn3 T2 महीधरस्थ; T1 °धरः स. Dc D2 पीतेन (for शी°). G1. 2 M2 transp. शीतेन and सहसा.

**4** b) G1 दुःखितः (for दुर्मनाः). — c) B2 तां संस्मृत्य च ध°.

**5** a) K1. 2 गच्छ जानीहि सौमित्रे. — c) K1. 4 Dc D1. 2 प्रसक्तं (for प्रमत्तं). K4 °धर्मेण (for °धर्मेषु). — D4 om. 5d-21d. — d) Dc D2 प्रसक्तं (for कृतघ्नं).

**6** D4 om. 6 (cf. v.l. 5). — b) K1 [अ]रण्ये (for राज्ये). — c) K1. 2 Dc D1 G1. 2. 4 M2 सर्वे (for सर्व-). — d) D2 ये मृषा च; T2 G2. 4 M2 ऋक्षाश्चैनं (for यमृक्षाश्च). K Dc D1. 2. 5 [अ]पि भेजिरे (for भजन्ति वै).

**7** D4 om. 7 (cf. v.l. 5). — a) K4 धीमान् (for वाली). — d) D1 M1 तथा; G2. 4 M2 पुरा (for तदा).

**8** D4 om. 8 (cf. v.l. 5). — a) K1 तदहं (for तमहं). — b) K2 S (except G3) वानरापशदं. — c) K1. 4 G4 M2 °गतं; Dc D2 T1 °गते (for °गतो). — d) K1. 2 जानाति (for जानीते); cf. v.l. 9.

**9** D4 om. 9 (cf. v.l. 5). — a) K D1. 5 व्यतिरिक्तं; B3 Dc D2 T G2. 4 योसौ मन्ये (for असौ मन्ये). K1-3 D1 न जानाति; cf. v. l. 8. — b) B Dc Dn D2. 3. 6 G3 °प्रतिपालनं. — c) K2 Dc2 D2 मा (for मां). — d) S (except T2 G3) अवमत्य. B1 [आ]त्मपौरुषः; B3. 4 T1 [अ]ल्पमेधया (for [अ]ल्पया धिया).

**10** D4 om. 10 (cf. v.l. 5). — a) T2 अनायत्तः (for अनुद्युक्तः). — b) K1 Dc D2 कामवशानुगः; K3. 4 °वशात्मकः; B2 °सुखाशया. — d) K4 Dc2 T1 M1 °गतिस् (for °गतिं). K4 स्वयं (for त्वया). K3 °गतं तदा; D1 °गतेन वै.

**11** D4 om. 11 (cf. v.l. 5). — a) K Dc D1-3. 5 T1 G1 अथ वा; B4 तथापि (for अथापि). D3 चेष्ट°; G1 त्वर° (for घट°). — b) K1. 3 D1 कुले (for अर्थे). — c) K2 B1. 2. 4 Dn D3. 5. 6 T1 G3 °यैव; B3 M1 °य हि (for °यैहि).

**12** D4 om. 12 (cf. v.l. 5). — b) K1 ततो वाक्यैः; K2 गुरुवाक्ये. — K3 om. (hapl.) 12cdef. — d) T G1. 2. 4 °गणं (for °गुणं). — f) K1 [अ]निवेदितः (for [अ]नि-

C 3. 16208 B 3 282. 12 K. 3. 283. 12

प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः ।
किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः ॥ १२
सक्रोध इति तं मत्वा राजा प्रत्युद्ययौ हरिः ।
तं सदारो विनीतात्मा सुग्रीवः प्लवगाधिपः ।
पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया ॥ १३
तमब्रवीद्रामवचः सौमित्रिरकुतोभयः ।
स तत्सर्वमशेषेण श्रुत्वा प्रह्वः कृताञ्जलिः ॥ १४
सभृत्यदारो राजेन्द्र सुग्रीवो वानराधिपः ।
इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरम् ॥ १५
नास्मि लक्ष्मण दुर्मेधा न कृतघ्नो न निर्घृणः ।
श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः ॥ १६
दिशः प्रस्थापिताः सर्वे विनीता हरयो मया ।
सर्वेषां च कृतः कालो मासेनागमनं पुनः ॥ १७
यैरियं सवना साद्रिः सपुरा सागराम्बरा ।
विचेतव्या मही वीर सग्रामनगराकरा ॥ १८
स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति ।
ततः श्रोष्यसि रामेण सहितः सुमहत्प्रियम् ॥ १९
इत्युक्तो लक्ष्मणस्तेन वानरेन्द्रेण धीमता ।
त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्यपूजयत् ॥ २०
स रामं सहसुग्रीवो माल्यवत्पृष्ठमास्थितम् ।
अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् ॥ २१
इत्येवं वानरेन्द्रास्ते समाजग्मुः सहस्रशः ।
दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः ॥ २२
आचख्युस्ते तु रामाय महीं सागरमेखलाम् ।
विचितां न तु वैदेह्या दर्शनं रावणस्य वा ॥ २३
गतास्तु दक्षिणामाशां ये वै वानरपुंगवाः ।

---

वारितः).

**13** $D_4$ om. 13 (cf. v.l. 5). — [a]) $Dn_{2.\,n3}$ $D_{3.\,6}$ $T_1$ $G_3$ $M_1$ इव (for इति). $K_{1.\,2}$ तं लक्ष्य; $D_1$ मत्वा स (for तं मत्वा). — [d]) $B_2$ $T_2$ प्लवगेश्वरः; $G_{1.\,2.\,4}$ °गोत्तमः. — [f]) $D_5$ तदा ह्रिया (for तदर्हया).

**14** $D_4$ om. 14 (cf. v.l. 5); $D_1$ om. $14^a$–$15^b$. — $14^b$=3. 267. $16^d$. — [c]) $K_1$ पूर्वम् (for सर्वम्). $T_1$ विशेषेण. — [d]) $K_1$ प्राह (for प्रह्वः). S (except $G_3$) शुश्राव हरिपुंगवः.

**15** $D_4$ om. 15; $D_1$ om. $15^{ab}$ (cf. v.l 5, 14). — [ab]) $B_2$ वानरेश्वरः (for °राधिपः). S (except $G_3$) सभृत्यस्तं तदा प्रह्वः स वानरगणाधिपः. — [d]) $B_{1.\,2}$ नरपुंगव; T $G_{2.\,4}$ M वानरर्षभः; $G_1$ कपिपुंगवः.

**16** $D_4$ om. 16 (cf. v.l. 5). — [b]) B Dn $D_{3.\,5.\,6}$ $G_3$ नाकृतज्ञो (for न कृतघ्नो). — [d]) $K_1$ सीतापर्यक्षणे रतः; $G_1$ °न्वेषणकौतुकः.

**17** $D_4$ om. 17 (cf. v.l. 5). — [a]) $M_1$ सर्वाः (for सर्वे). — [b]) S (except $G_3$ $M_2$) समर्था (for विनीता). — [d]) S (except $G_3$) मासोभ्या($T_1$ $G_1$ °सो ह्या)गमने पुनः.

**18** [a]) $D_5$ तैर् (for यैर्). K $D_{1.\,5}$ सनगा; $M_1$ ससरित्; $M_2$ सपुरा (for सवना). — [b]) M सवना (for सपुरा). — [c]) $K_{1.\,3.\,4}$ $Dc_2$ $D_{1.\,2}$ मही सर्वा; $G_{2.\,4}$ महावीर. — [d]) $K_4$ समग्र°.

**19** $D_4$ om. 19 (cf. v.l. 5). — [c]) $T_1$ $M_2$ तत्र (for ततः).

**20** $D_4$ om. 20 (cf. v.l. 5). — [ab]) $T_2$ $G_{2.\,4}$ transp. लक्ष्मण° and वानरे°.

**21** $D_4$ om. 21 (cf. v.l. 5). — [b]) $K_{1.\,2}$ हिम° (for माल्य°). $K_1$ $B_2$ $G_4$ -पृष्ठमाश्रितं; $K_{3.\,4}$ Dc $D_{1.\,2.\,5}$ $G_1$ M -पृष्ठ($D_1$ -प्रस्थ)वासिनं. $T_1$ गिरिपृष्ठनिवासिनं. — [c]) $B_2$ कार्यं (for तस्य). $T_2$ $G_{2.\,4}$ $M_2$ अभिगम्येदमंतस्थं.

**22** [a]) K Dc $D_{1.\,2.\,5}$ अत्रांतरे वानरेंद्राः; T $G_{1.\,2.\,4}$ इत्येवं वादिन($T_1$ वदत)स्तस्य; M इत्येवं ते वानरेंद्राः. — After $22^a$, $G_1$ ins.:

1271* आयाता वानरास्तदा ।
दिशस्तिस्रो वानरेन्द्राः.

— [b]) $T_1$ वानरेंद्राः (for समा°). $T_2$ $G_{2.\,4}$ आयाता वानरास्तदा ($T_2$ °था) (=line 1 of 1271*). — [c]) $K_4$ विविच्याथ; $B_1$ विहृत्याथ. — [d]) $Dc_2$ $D_{1.\,2.\,4}$ च (for तु). $T_1$ दिशं (for गताः).

**23** $D_4$ om. 23–31. — [a]) $B_4$ $Dc_2$ $D_2$ आचक्षुस. $K_1$ $Dc_2$ $D_2$ तेथ; $K_2$ $B_{1-3}$ $Dc_1$ Dn $D_{3.\,5.\,6}$ $G_3$ तत्र; $K_4$ तेत्र; $D_1$ T $G_{2.\,4}$ ते च; $G_1$ तेपि (for ते तु). $K_1$ रामस्य. — [b]) $Dc_2$ $D_{1.\,3}$ $T_1$ $G_1$ मही °मेखला ($Dc_2$ $D_1$ °मेखलां). — [c]) $D_3$ T $G_{1.\,4}$ विचिता; $D_5$ निचितां. $K_{1.\,3.\,4}$ Dc $D_{1.\,2}$ S (except $G_3$ $M_1$) च (for तु). — [d]) $K_{1.\,2.\,4}$ $D_5$ च (for वा).

**24** $D_4$ om. 24 (cf. v.l. 23). — [a]) $B_1$ वै; $Dc_2$

आशावांस्तेषु काकुत्स्थः प्राणानार्तोऽप्यधारयत् ॥ २४
द्विमासोपरमे काले व्यतीते प्लवगास्ततः ।
सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् ॥ २५
रक्षितं वालिना यत्तत्स्फीतं मधुवनं महत् ।
त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः ॥ २६
वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः ।
विचेतुं दक्षिणामाशां राजन्प्रस्थापितास्त्वया ॥ २७
तेषां तं प्रणयं श्रुत्वा मेने स कृतकृत्यताम् ।
कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितम् ॥ २८
स तद्रामाय मेधावी शशंस प्लवगर्षभः ।
रामश्चाप्यनुमानेन मेने दृष्टां तु मैथिलीम् ॥ २९
हनूमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवंगमाः ।
अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसंनिधौ ॥ ३०
गतिं च मुखवर्णं च दृष्ट्वा रामो हनूमतः ।
अगमत्प्रत्ययं भूयो दृष्टा सीतेति भारत ॥ ३१
हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः ।
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा ॥ ३२
तानुवाचागतान्रामः प्रगृह्य सशरं धनुः ।
अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता ॥ ३३
अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः ।
निहत्य समरे शत्रूनाहृत्य जनकात्मजाम् ॥ ३४
अमोक्षयित्वा वैदेहीमहत्वा च रिपून्रणे ।
हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे ॥ ३५
इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः ।
प्रियमाख्यामि ते राम दृष्टा सा जानकी मया ॥ ३६
विचित्य दक्षिणामाशां सपर्वतवनाकराम् ।
श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहाम् ॥ ३७
प्रविशामो वयं तां तु बहुयोजनमायताम् । C. 3. 16235 B. 3. 282. 39 K. 3. 283. 39

---

$D_2$ ते (for तु). — [c]) $K_{1.3.4}$ $B_1$ तेन (for तेषु). — [d]) $K_3$ [S]घ°; $K_4$ $D_1$ $T_2$ $G_{1.2.4}$ $M_2$ व्य°; $B_4$ Dn $D_{3.6}$ $T_1$ $G_3$ [S]भ्य° (for ऽप्य°).

**25** $D_4$ om. 25 (cf. v.l. 23); $K_2$ om. $25^a$–$26^b$. — [a]) K ($K_2$ om.) $D_1$ $T_2$ $G_2$ M द्विमासपरमे; $T_1$ $G_1$ °से परमे. — [b]) $K_1$ वानरा° (for प्लवगा°). — [c]) $G_1$ °गत्वा (for °गम्य). — [d]) Dc $D_2$ $G_1$ त्वरितं (for °ता).

**26** $D_4$ om. 26; $K_2$ om. $26^{ab}$ (cf. v.l. 23, 25). — [a]) $M_2$ यत्ते (for यत्तत्). — [c]) $T_2$ वानर° (for प्लवग°).

**27** $D_4$ om. 27 (cf. v.l. 23). — [b]) $K_2$ प्लवगेश्वराः; $T_1$ °गर्षभ. — [c]) $T_1$ विचेरुर् (for विचेतुं).

**28** $D_4$ om. 28 (cf. v.l. 23). — [a]) $Dn_3$ $T_2$ $G_3$ तत्प्रणयं; $Dn_1$. $n_2$ $D_1$ अ($D_1$ त्व)पनयं; $T_1$ $G_{1.2.4}$ M सप्रणयं. $G_1$ वाक्यं (for श्रुत्वा). — [b]) T $G_{2.4}$ M स मेने (by transp.). $K_{1.2}$ तत् (for स). $G_1$ श्रुत्वा मेने कृतार्थतां. — [c]) $K_4$ भद्रानाम् (for भृत्यानाम्). — [d]) $M_1$ जीवति (for भवति).

**29** $D_4$ om. 29 (cf. v.l. 23). — [d]) $T_1$ दृष्टां मेने (by transp.). K $D_{1.5}$ दृष्टा (for दृष्टां). K $D_1$ M स्म; $T_2$ $G_{1.2.4}$ च (for तु). $D_{3.5}$ मैथिली.

**30** $D_4$ om. 30 (cf. v.l. 23). — [a]) = (var.) $32^a$. Some MSS. हनुमत्°. — [b]) $T_2$ $G_{1.2.4}$ विश्रुता° (for विश्रान्ता°). — [c]) $K_{1.3.4}$ Dc $D_{1.2}$ प्रति°; M उप° (for अभि°). Dc $D_2$ हरीन् तं; $T_1$ गिरींद्रं; $G_{2.4}$ हरीशं; $M_1$ हरींद्रास् (for हरीन्द्रं). $K_4$ Dc $D_2$ तु; S (except $G_3$) ते (for तं).

**31** $D_4$ om. 31 (cf. v.l. 23). — [b]) S (except $G_3$) रामो दृष्ट्वा (by transp.). — [c]) $K_{1.3}$ $D_1$ अगच्छत् (for अगमत्).

**32** $T_1$ om. 32. — [a]) = (var.) $30^a$. $K_1$ हरींद्र°; some MSS. हनुमत्° (for हनूमत्°). — [c]) $B_{1-3}$ $G_1$ M रामे (for रामं). — [d]) $Dc_2$ $D_2$ $G_2$ तदा (for तथा). $B_{1-3}$ $T_2$ $G_1$ $M_2$ सुग्रीवे लक्ष्मणे तथा ($T_2$ $G_1$ तदा).

**33** [a]) $K_3$ $Dc_2$ तम् (for तान्). K Dc $D_{1-3.5}$ ततो; $Dn_1$. $n_3$ [आ]नतान् (for [आ]गतान्). — [b]) $T_2$ $G_{1.2.4}$ रुचिरं (for सशरं).

**34** [c]) $K_{1-3}$ $D_5$ $T_1$ M शत्रुम् (for शत्रून्).

**35** [b]) $K_{1-3}$ रिपुं रणे; B D $G_3$ रणे रिपून् ($D_3$ °पुं) (by transp.). $K_4$ अहित्वाचरितं रणे; $G_4$ हत्वा मम रिपून्रणे.

**36** [c]) $B_{1.2}$ प्रियामाख्याति ते राम. — [d]) $K_{1.3}$ $D_5$ $G_{1.2.4}$ M [आ]र्या (for सा). $T_2$ दृष्ट्वार्यां जानकीमहं.

**37** [a]) $K_4$ विविच्य (for विचित्य). — [c]) $G_1$ तु (for स्म). — [d]) $T_1$ महीं शुभां; $T_2$ $G_{1.2.4}$ महीगुहां.

**38** [a]) $B_1$ प्राविशाम; $T_2$ $G_2$ M विशामश्च; $G_1$ विशांतश्च; $G_4$ विश्राम्य च. S (except $G_3$) स्म (for तु). — [c]) $G_{1.2.4}$

C. 3. 16235 B. 3 282 39 K. 3 283 39 अन्धकारां सुविपिनां गहनां कीटसेविताम् ॥ ३८
गत्वा सुमहदध्वानमादित्यस्य प्रभां ततः ।
दृष्टवन्तः स्म तत्रैव भवनं दिव्यमन्तरा ॥ ३९
मयस्य किल दैत्यस्य तदासीद्वेश्म राघव ।
तत्र प्रभावती नाम तपोऽतप्यत तापसी ॥ ४०
तया दत्तानि भोज्यानि पानानि विविधानि च ।
भुक्त्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ॥ ४१
निर्याय तस्मादुद्देशात्पश्यामो लवणाम्भसः ।
समीपे सह्यमलयौ दर्दुरं च महागिरिम् ॥ ४२
ततो मलयमारुह्य पश्यन्तो वरुणालयम् ।
विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम् ॥ ४३
अनेकशतविस्तीर्णं योजनानां महोदधिम् ।
तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ॥ ४४
तत्रानशनसंकल्पं कृत्वासीना वयं तदा ।
ततः कथान्ते गृध्रस्य जटायोरभवत्कथा ॥ ४५
ततः पर्वतशृङ्गाभं घोररूपं भयावहम् ।
पक्षिणं दृष्टवन्तः स्म वैनतेयमिवापरम् ॥ ४६
सोऽस्मानतर्कयद्भोक्तुमथाभ्येत्य वचोऽब्रवीत् ।
भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम् ॥ ४७
संपातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः ।
अन्योन्यस्पर्धयारूढावावामादित्यसंसदम् ॥ ४८
ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः ।
तदा मे चिरदृष्टः स भ्राता गृध्रपतिः प्रियः ।
निर्दग्धपक्षः पतितो ह्यहमस्मिन्महागिरौ ॥ ४९
तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः ।
व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितम् ॥ ५०
स संपातिस्तदा राजञ्श्रुत्वा सुमहदप्रियम् ।
विषण्णचेताः पप्रच्छ पुनरस्मानरिंदम ॥ ५१
कः स रामः कथं सीता जटायुश्च कथं हतः ।
इच्छामि सर्वमेवैतच्छ्रोतुं प्लवगसत्तमाः ॥ ५२

---

$M_1$ सांधकारां (for अन्ध°). $T_1$ $M_1$ सुविपुलां.

**39** $^{a}$) $G_1$ गत्वा सह महध्वानं. — $^{c}$) $K_4$ $D_{1.3}$ च (for स्म).

**40** $^{b}$) $Dn_3$ $D_{1.4}$ $G_1$ तदा सद्वेश्म रा°. — $^{d}$) $K_4$ तपस्तप्यति.

**41** $^{b}$) $T_1$ फलानि (for पानानि). — $^{c}$) $K_4$ चैव (for सन्तस्). — $^{d}$) $K_4$ $D_3$ गताः (for ततः).

**42** $^{b}$) S (except $G_3$) पश्याम (for °मो). $Dc_1$ $T_1$ लवणांभसं. — $^{c}$) $B_{2.4}$ सह्यमलयोर्; $G_2$ ह्यस्य मलयौ. — $^{d}$) $K_1$ दुंदुरं; Dc $D_2$ दर्दुरश्च; $D_1$ दुर्धरं; S (except $G_3$ $M_2$) दर्दरं. $K_{1.2}$ तथा (for महा-).

**43** $^{c}$) $K_{1.2}$ क्षुण्णा; $K_4$ भिन्ना (for खिन्ना). — $^{d}$) $K_1$ जीविते भवान्; $K_2$ $D_1$ °तेभवन्; $K_3$ °तेभवं; $D_5$ °ते ध्रुवं; $G_1$ °ते वयं (for °ते भृशम्).

**44** $^{c}$) $G_{2.4}$ °झषाकीर्णं.

**45** $^{a}$) $K_3$ $B_1$ अत्र; $T_1$ तदा (for तत्र). — $^{b}$) $K_{1.3.4}$ Dc $D_{1.2}$ तदा (Dc $D_2$ °तो) वयं; $T_2$ $G_{1.2.4}$ वयं ततः (for वयं तदा). — $^{c}$) S (except $G_3$ $M_2$) भवत्- (for ततः). $T_2$ $G_{2.4}$ -कथायां (for कथान्ते).

**46** $^{a}$) $K_{1.2}$ Dc $D_2$ °संकाशं; $B_2$ °शृंगाभिर्; $Dn_3$ °शृंगाभ्यां. — $^{c}$) $K_4$ च (for स्म).

**47** $^{b}$) $K_4$ अथोपेत्य; $G_2$ अत्याभ्येत्य (for अथाभ्येत्य). $T_1$ च सो (for वचो). $K_1$ अहं त्यक्तमितोब्रवीत्; $K_3$ Dc $D_{1.2}$ अथैत्य ($D_1$ °तान्) कुपितो°. — $K_3$ om. $47^{c}$–$48^{d}$.

**48** $K_3$ om. 48 (cf. v.l. 47). — $^{b}$) $B_1$ भ्राता ज्येष्ठः (by transp.). — $^{c}$) $B_1$ मूढौ; $D_3$ -नूढौ (*sup. lin.* रूतौ) (for [आ]रूढौ). — $^{d}$) $K_1$ आदित्यसंपदां; $K_2$ Dc $D_2$ $M_1$ °संपदं; $K_4$ $D_{1.3m}$ $T_1$ °मंडलं; $B_4$ °सत्पदं; $D_3$ °सत्तमं; $D_5$ °संक्षयं.

**49** $^{a}$) T $G_{1.2.4}$ तदा (for ततो). — $^{b}$) $K_4$ च; $Dc_2$ $D_2$ तौ (for तु). — $^{c}$) $D_1$ तस्य; $T_2$ $G_{1.2.4}$ तस्मान् (for तदा). S (except $G_3$) तु (for स). — $^{d}$) $B_3$ ततो (for भ्राता). $K_4$ स्वयं (for प्रियः). — $^{e}$) $K_3$ निदग्ध°. — $^{f}$) $D_1$ अहम्; $T_1$ [अ]प्यहम् (for ह्यहम्). — After 49, S (except $G_3$) ins.:

1272* द्रष्टुं वीरं न शक्नोमि भ्रातरं वै जटायुषम् ।

**50** $^{a}$) $K_1$ भ्रातुर् (for [अ]स्माभिर्).

**51** $^{a}$) S (except $T_1$ $G_3$) संपातिस्तु (for स संपातिस्). $T_1$ ततो (for तदा). — $^{b}$) = 1. 1. $95^{b}$; 44. $2^{b}$. $K_{1.4}$ $G_1$ स; $T_1$ तु (for सु-) .$B_1$ विधिवद् (for सुमहद्). — $^{c}$) $D_1$ विखिन्नचेताः. — $^{d}$) $K_3$ $Dc_2$ $T_1$ $G_{1.2}$ °दमः (for °दम).

**52** $^{a}$) $K_1$ Dc $D_{2.5}$ कस्य; $K_4$ $D_1$ T कश्च; $B_{1.2.4}$ यः स; $B_3$ कथं (for कः स). $K_3$ कथं सीता जटायुश्च. — $K_4$ om. $52^{c}$–$53^{b}$. — $^{c}$) $K_1$ [इ]दं (for [ए]तत्). — $^{d}$) $G_{2.4}$

तस्याहं सर्वमेवैतं भवतो व्यसनागमम् ।
प्रायोपवेशने चैव हेतुं विस्तरतोऽब्रुवम् ॥ ५३
सोऽस्मानुत्थापयामास वाक्येनानेन पक्षिराट् ।
रावणो विदितो मह्यं लङ्का चास्य महापुरी ॥ ५४
दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे ।
भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा ॥ ५५
इति तस्य वचः श्रुत्वा वयमुत्थाय सत्वराः ।
सागरप्लवने मन्त्रं मन्त्रयामः परंतप ॥ ५६
नाध्यवस्यद्यदा कश्चित्सागरस्य विलङ्घने ।
ततः पितरमाविश्य पुप्लुवेऽहं महार्णवम् ।
शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ॥ ५७
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
उपवासतपःशीला भर्तृदर्शनलालसा ।
जटिला मलदिग्धाङ्गी कृशा दीना तपस्विनी ॥ ५८
निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः ।
उपसृत्याब्रुवं चार्यामभिगम्य रहोगताम् ॥ ५९
सीते रामस्य दूतोऽहं वानरो मारुतात्मजः ।
त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो विहायसा ॥ ६०
राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ।
सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ ॥ ६१
कुशलं त्वाब्रवीद्रामः सीते सौमित्रिणा सह ।
सखिभावाच्च सुग्रीवः कुशलं त्वानुपृच्छति ॥ ६२
क्षिप्रमेष्यति ते भर्ता सर्वशाखामृगैः सह ।
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ॥ ६३
मुहूर्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह ।
अवैमि त्वां हनूमन्तमविन्ध्यवचनादहम् ॥ ६४
अविन्ध्यो हि महाबाहो राक्षसो वृद्धसंमतः ।
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः ॥ ६५ C. 3. 16264 B. 3. 282. 68 K. 3. 283. 67

---

°पुंगवाः (for °सत्तमाः). B1 श्रोतुं व्यसनमागतं.

**53** K4 B1 om. $53^{ab}$ (for K4 cf. v.l. 52). — $^{a}$) K1. 2 M2 [इ]मं; K3 Dc D1. 2. 5 T1 G1 M1 [इ]दं; B (B1 om.) Dn D3. 4. 6 G3 [ए]तद्; T2 [इ]ह (for [ए]तं). — $^{c}$) T2 वापि; G1. 2. 4 चापि (for चैव). — $^{d}$) B Dn D3. 4. 6 G3 विस्तरशो (for °तो). K4 B4 Dc D2 ध्रुवं (for ऽब्रुवम्).

**54** $^{a}$) T2 G1. 2. 4 आश्वासया° (for उत्थापया°). — $^{b}$) Dn2 G1. 3 [अ]न्येन (for [अ]नेन).

**55** $^{c}$) T1 वसती; G4 भवती (for भवित्री). — $^{d}$) K Dc D1. 2. 5 [ऽ]त्रास्ति (for ऽस्त्यत्र).

**56** $^{a}$) K1. 3. 4 Dc D1. 2 ततस् (for इति). — $^{b}$) T1 सादराः (for सत्वराः). M2 वयमुत्थापयस्त्वराः. — $^{c}$) K2 B1 D (except D1) G3 सागरक्रमणे; K3 °राप्रवणे; K4 B2-4 °राक्रमणे. — $^{d}$) S (except T2 G3) मंत्रयाम. B4 D5 परस्परं (for परंतप).

**57** $^{a}$) K D1. 5 T2 नाध्यगच्छद्; B4 नाध्यवस्यद् (for नाध्य°). K1-3 D5 T1 तदा; B1. 2 मुदा (for यदा). — $^{b}$) K1-3 [अ]ति-; Dc D2 [ए]व; D1 [अ]पि (for वि-). N G3 -लंघनं. K4 सागरस्यास्य वै भिलं (sic). — $^{c}$) K2. 3 D5 तदा (for ततः). B1. 2. 4 Dc D2 उद्दिश्य (for आविश्य). — $^{d}$) B1 सुस्तुवे (for पुप्लुवे). K1 °बलं (for °र्णवम्). T1 पुप्लुवे लवणार्णवं. — $^{e}$) G2 °विस्तीर्णां.

**58** $^{ab}$) = Rām. 5. 65. $11^{cd}$. D1 स्थिता (for सती). — $58^{d}$ = (var.) 3. 61. $118^{f}$.

**59** $^{b}$) B1 तपस्विनीं (for पृथग्विधैः). — $^{c}$) M2 °गम्य (for °सृत्य). Dc2 D2 [अ]ब्रवं; T1 G2 M1 [अ]ब्रुवन्; G4 [अ]ब्रवीन्; M2 [अ]ब्रवन् (for [अ]ब्रुवं). K2 D1. 5 वाक्यम्; B1 पादाव्; T1 आर्याम् (om. च); T2 G2. 4 M2 न्यायाद्; G1 स्वार्याम्; M1 आयाद् (for चार्याम्). Dc D2 उपसृत्याब्रुवंत्यायाद्. — $^{d}$) K2 Dc D1 °वाद्य (for °गम्य).

**60** $^{b}$) T1 मारुतात्मजवानरः. — $^{cd}$) T2 transp. अभि- and इह.

**62** $^{a}$) Dc2 D2 त्वां ब्र°; D1 T2 G1. 2. 4 चाब्र° (for त्वाब्र°). — $^{d}$) D1 T2 G1 चा° (for त्वा°).

**63** $^{a}$) K1. 2. 4 Dc2 D1. 5 आगमिष्यति (for क्षिप्रमेष्यति). — $^{b}$) S (except G3 M2) वृतः (for सह). — T2 G2. 4 om. (hapl.) $63^{c}$–$65^{d}$. — $^{c}$) M विश्वासं (for प्रत्ययं). — $^{d}$) K1 T1 [ऽ]हं (for ऽस्मि).

**64** T2 G2. 4 om. 64 (cf. v.l. 63). — $^{a}$) K1. 3 Dc2 D2 G1 तु; K4 B2-4 D1. 3 G3 M2 तद्; B1 मां; T1 सा (for च). — $^{c}$) T1 M2 अवैहि. K3 M त्वा (for त्वां). — $^{d}$) K1 D3 T1 अविध्य°; K4 अवंध्य°; G1 अवध्य° (for अविन्ध्य°). T1 इह (for अहम्).

**65** T2 G2. 4 om. 65 (cf. v.l. 63). — $^{a}$) K4 G1 अवध्यो; D3 अविध्यो; T1 अरण्ये (for अविन्ध्यो). K2. 3 D1 T1 °भागो (for °बाहो). — $^{c}$) G1 अधीत° (for

C. 3. 16264
B 3 282 68
K. 3. 283. 68

गम्यतामिति चोक्त्वा मां सीता प्रादादिमं मणिम् ।
धारिता येन वैदेही कालमेतमनिन्दिता ॥ ६६
प्रत्ययार्थं कथां चेमां कथयामास जानकी ।
क्षिप्तामिषीकां काकस्य चित्रकूटे महागिरौ ।
भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ॥ ६७
श्रावयित्वा तदात्मानं ततो दग्ध्वा च तां पुरीम् ।
संप्राप्त इति तं रामः प्रियवादिनमर्चयत् ॥ ६८

इति श्रीमहाभारते आरण्यकपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

# २६७

मार्कण्डेय उवाच ।
ततस्तत्रैव रामस्य समासीनस्य तैः सह ।
समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा ॥ १
वृतः कोटिसहस्रेण वानराणां तरस्विनाम् ।
श्वशुरो वालिनः श्रीमान्सुषेणो राममभ्ययात् ॥ २
कोटीशतवृतौ चापि गजो गवय एव च ।
वानरेन्द्रौ महावीर्यौ पृथक्पृथगदृश्यताम् ॥ ३
षष्टिकोटिसहस्राणि प्रकर्षन्प्रत्यदृश्यत ।
गोलाङ्गूलो महाराज गवाक्षो भीमदर्शनः ॥ ४
गन्धमादनवासी तु प्रथितो गन्धमादनः ।

---

कथित°). — $^d$) $G_1$ त्वद्विधः. $T_1$ सह (for वृतः).

**66** $^a$) $G_2$ मां सीता (for चोक्त्वा मां). $K_{1.3}$ मा (for मां). — $Dc_1$ om. (hapl.) $66^b$–$67^a$. — $^b$) $G_2$ तदा (for सीता). M इदं (for इमं). — $^c$) $Dn_3$ [अ]नेन (for येन). — $^d$) $B_{1.3}$ $Dc_2$ $D_2$ $G_1$ एतद्; $G_{2.4}$ एनम् (for एतम्).

**67** $Dc_1$ om. $67^a$ (cf. v.l. 66). — $^a$) $K_4$ चैनां; $D_1$ वै मां (for चेमां). — $^b$) $B_1$ कार° (for कथ°). — $^c$) $B_{2.4}$ Dn $D_{1.3.6}$ $G_{1.3}$ काकाय; $D_2$ काकुस्त (for काकस्य). — $^d$) $T_2$ चित्रकूटगिरौ तदा. — $^e$) $G_{2.4}$ ममांके (for भवता). — After 67, S (except $G_3$) ins.:

1273* एकाक्षी विकलः काकः सुदुष्टात्मा कृतश्च वै ।

**68** $^a$) $T_1$ $M_2$ महा°; $M_1$ [अ]हमा° (for तदा°). K Dc $D_{1.2.5}$ अथात्मानं श्राह(K$_{1.2}$ दर्श)यित्वा; B Dn $D_{3.4.6}$ $G_3$ श्राहयित्वाहमा($B_4$ °त्वा महा)त्मानं. — $^b$) K Dc $D_{1.2.5}$ दग्ध्वा तां च पुरीं ततः ($K_{1.2}$ पुनः). — $^c$) $G_{2.4}$ संप्राप्तोस्मीति. — $^d$) $K_{1-3}$ B Dc $D_6$ °दिनमा($B_1$ °दी सम)र्चयत्.

Colophon. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{1.3}$ B D $G_3$ $M_2$ (all om. sub-parvan name) mention only रामो($M_2$ रामायणो)-पाख्यान. — *Adhy. name:* $B_4$ हनूमद्वाक्यं. — *Adhy. no.* (figures, words or both): Dn 280 ($Dn_3$ 281); $D_1$ 284; $T_1$ 271; $T_2$ $G_4$ M ($M_2$ after corr.) 270 ($M_2$ orig. 272); $G_1$ 267; $G_2$ 269. — *Śloka no.:* Dn 71; $D_1$ 70.

## 267

**1** $T_2$ om. the ref. — $^a$) $T_1$ $G_{1.2.4}$ तस्य (for तत्र). — $^{cd}$) $G_{1.2.4}$ कपिवराः (for °श्रेष्ठाः), and ततः (for तदा).

**2** $^a$) K D (except $Dn_2$ $D_{1.2}$) $G_3$ $M_2$ कोटी° (for कोटि°). — $^b$) $K_3$ B $Dn_2$ $D_{2.3.6}$ $T_2$ $G_3$ तप° (for तर°). — $^c$) $G_{2.4}$ वानरः (for वालिनः). — $^d$) Dc $D_2$ $G_{2.4}$ अभ्यगात्.

**3** $^a$) $K_3$ $B_2$ Dn $D_6$ °शतवृतो; $K_4$ °समावृतश्च. $K_3$ $B_2$ Dc Dn $D_{2.6}$ वा (for च). — $^b$) $K_{1-3}$ $B_{1.3.4}$ Dc $D_2$ गयो (for गजो). — $^c$) $T_2$ $G_{1.2.4}$ महाबाहू. — $^d$) $K_{1.2}$ $D_1$ [अ]दृश्येतां पृथक्पृथक्. — After 3, $T_1$ ins.:

1274* कुमुदोऽपि महावीर्यः प्लवगर्षभसत्तम ।

**4** $^a$) $K_{1.2.4}$ $B_{1.3.4}$ Dc $D_2$ $T_1$ $G_1$ M षष्टिं कोटिसहस्राणि (M °णां). — $^b$) $B_4$ कर्षन्स (for प्रकर्षन्). — $^c$) $T_1$ महारूपो (for °राज). — $^d$) $K_{1-3}$ $D_1$ भीमविक्रमः; $D_5$ नाम वानरः.

**5** $^a$) K Dc $D_{1.5}$ $M_2$ च (for तु). — $^b$) $K_2$ $D_5$ प्रस्थितो. — $^c$) $K_3$ कोटीसहस्रमुख्यानां; B Dc Dn $D_{2-4.6}$

कोटीसहस्रमुग्राणां हरीणां समकर्षत ॥ ५
पनसो नाम मेधावी वानरः सुमहाबलः ।
कोटीर्दश द्वादश च त्रिंशत्पञ्च प्रकर्षति ॥ ६
श्रीमान्दधिमुखो नाम हरिवृद्धोऽपि वीर्यवान् ।
प्रचकर्ष महत्सैन्यं हरीणां भीमतेजसाम् ॥ ७
कृष्णानां मुखपुण्ड्राणामृक्षाणां भीमकर्मणाम् ।
कोटीशतसहस्रेण जाम्बवान्प्रत्यदृश्यत ॥ ८
एते चान्ये च बहवो हरियूथपयूथपाः ।
असंख्येया महाराज समीयू रामकरणात् ॥ ९
शिरीषकुसुमाभानां सिंहानामिव नर्दताम् ।
श्रूयते तुमुलः शब्दस्तत्र तत्र प्रधावताम् ॥ १०
गिरिकूटनिभाः केचित्केचिन्महिषसंनिभाः ।
शरदभ्रप्रतीकाशाः पिष्टहिङ्गुलकाननाः ॥ ११
उत्पतन्तः पतन्तश्च प्लवमानाश्च वानराः ।
उद्धुन्वन्तोऽपरे रेणून्समाजग्मुः समन्ततः ॥ १२
स वानरमहालोकः पूर्णसागरसंनिभः ।
निवेशमकरोत्तत्र सुग्रीवानुमते तदा ॥ १३
ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः ।
तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चाभिपूजिते ॥ १४
तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव ।
प्रययौ राघवः श्रीमान्सुग्रीवसहितस्तदा ॥ १५
मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः ।
जघनं पालयामास सौमित्रिरकुतोभयः ॥ १६
बद्धगोधाङ्गुलित्राणौ राघवौ तत्र रेजतुः ।
वृतौ हरिमहामात्रैश्चन्द्रसूर्यौ ग्रहैरिव ॥ १७
प्रबभौ हरिसैन्यं तच्छालतालशिलायुधम् ।
सुमहच्छालिभवनं यथा सूर्योदयं प्रति ॥ १८
नलनीलाङ्गदक्राथमैन्दद्विविदपालिता । C. 3. 16287 B. 3. 283. 19 K. 3. 284. 19

कोटी($D_{c}$ $D_{2}$ °टीः; $D_{3}$ °टिं)शतसहस्राणां ($D_{n}$ $D_{6}$ °णि); $D_{5}$ °सहस्राण्युग्राणां.

**6** b) $T_{1}$ समदृश्यत (for सुमहा°). — c) $K_{3}$ $B_{2}$ $D_{c}$ कोटिर्; T $G_{1}$ M कोट्यो (for कोटीर्). $G_{2.4}$ कोट्यो द्विर्द्वादशत्रिंशत्. — d) $K_{2-4}$ $D_{c1}$ $D_{5}$ T $G_{1}$ M त्रिंशत्पंच च कर्षति ($K_{3}$ °त). $B_{2}$ $D_{n2.n3}$ $D_{1.3}$ त्रिंशतश्च ($D_{n2.n3}$ °तं च) प्रकर्षति; $T_{1}$ त्रिशतं च महाबलः; $G_{2.4}$ पंच पंच च कर्षति.

**7** b) $K_{2}$ $B_{2.3}$ $D_{n}$ $D_{3-6}$ $G_{3}$ [ऽ]ति- (for ऽपि). — c) $B_{1}$ प्रकर्षयन् (for प्रचकर्ष). $K_{2}$ $B_{1.2.4}$ D $G_{3}$ महा- (for महत्).

**8** a) $K_{1.4}$ $D_{c}$ $D_{2}$ $G_{1.2.4}$ मुखपांडूनाम्; $B_{2}$ सुरपुत्राणाम्; $D_{1}$ मुखमुद्राणाम्. — b) $K_{1}$ कपीनां; $B_{1}$ $T_{1}$ $G_{2.4}$ मृगाणां; $G_{1}$ हरीणां (for ऋक्षाणां). — c) $B_{2}$ °सहस्राणां; $T_{2}$ °सहस्राणि. — d) $D_{c2}$ $D_{2}$ जांबुवान्.

**9** d) $K_{3.4}$ $D_{c2}$ $D_{5}$ समेयू; $D_{1}$ सर्वे ते (for समीयू). $K_{1.2}$ समीपे राममभ्ययुः ($K_{2}$ °भ्ययात्).

**10** a) B D (except $D_{1.5}$) $G_{3}$ गिरिकूटनिभांगानां; $T_{2}$ शिरीषकुसुमाभासां. — b) $D_{2}$ अपि (for इव). $K_{1.2}$ B $D_{2.4.6}$ $G_{3}$ गर्जतां; $D_{1}$ दर्श° (for नर्द°).

**11** a) $B_{4}$ महागज°; $D_{1}$ गिरीगूढ°. — b) $T_{1}$ केचिज्जलधरोपमाः. — c) $K_{1.2.4}$ $D_{5}$ शरगर्भप्रकाशाश्च; $D_{1}$ $G_{2}$ M शारदाभ्र°. — d) B D (except $D_{1.5}$) $T_{1}$ $G_{3}$ केचिद्धिंगुल($T_{1}$ °लि)काननाः; $T_{2}$ $G_{1.2.4}$ पिष्ट($G_{1}$ पृष्ट-; M पिलु)-हिंगुलि°.

**12** a) $G_{2.4}$ उत्प्लवंतः प्लवंतश्च. — c) $K_{1}$ उद्धवंतो; $K_{3}$ $D_{1.4}$ $G_{2.4}$ M उद्धून्वंतो; $D_{c}$ $D_{2}$ उद्भ्रमंतो (for उद्धुन्वन्तो). $D_{c}$ $D_{2}$ पुरे; $T_{1}$ वने; $T_{2}$ $G_{1.2.4}$ रणे (for ऽपरे). $K_{1.3.4}$ $D_{c2}$ $D_{1.2}$ S (except $G_{3}$) रेणुं (for रेणून्). — d) $D_{c}$ $D_{2}$ सहस्रशः (for सम°).

**13** a) $B_{4}$ तद्- (for स). B $D_{c}$ $D_{n}$ $D_{1}$ (*inf. lin.* as in text). 2. 3 °महासैन्यः ($B_{1.4}$ °न्यं). — b) $B_{1.4}$ °सागरसंनिभं; $G_{1}$ पूर्वसागरसंनिभः. — c) $M_{2}$ निवासम् (for निवेशम्). — d) $K_{3}$ ततः (for तदा).

**14** b) $M_{2}$ °वर्तेषु (for °वृत्तेषु). — d) $T_{1}$ वा (for च). $K_{1.2}$ चापि शोभने; $D_{1}$ चाभिपूजने; S (except $T_{2}$ $G_{3}$) चापि पूजिते.

**16** a) $M_{2}$ मुख आ° (for मुखमा°). $B_{2}$ $D_{1}$ च (for तु). — b) $K_{3.4}$ $D_{c}$ $D_{n3}$ $D_{1.2}$ हनुमान्. — $16^{d}$ = 3. 266. $14^{b}$.

**17** b) B $D_{n}$ $D_{3.4.6}$ $T_{2}$ G जग्मतुः (for रेजतुः). — c) $K_{1.4}$ °मात्यैश्च; $D_{c2}$ $D_{2}$ °मंत्रैश्च.

**18** a) $B_{1}$ तु (for तत्). — b) $K_{4}$ B $D_{n1.n3}$ $D_{1.3}$ शालताल° (as in text); *the rest* सालताल°. — c) $K_{4}$ $D_{c2}$ $D_{2}$ सुमहान् (for सुमहत्). $T_{2}$ $G_{3}$ वारि° (for शालि°).

**19** cd) $K_{4}$ T $G_{1.2.4}$ सा (for सु-). M ततः प्रतस्थे

C 3. 16287 B 3. 283. 19 K. 3 284. 19 ययौ सुमहती सेना राघवस्यार्थसिद्धये ॥ १९
विधिवत्सुप्रशस्तेषु बहुमूलफलेषु च ।
प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च ॥ २०
निवसन्ती निराबाधा तथैव गिरिसानुषु ।
उपायाद्धरिसेना सा क्षारोदमथ सागरम् ॥ २१
द्वितीयसागरनिभं तद्बलं बहुलध्वजम् ।
वेलावनं समासाद्य निवासमकरोत्तदा ॥ २२
ततो दाशरथिः श्रीमान्सुग्रीवं प्रत्यभाषत ।
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ २३
उपायः को नु भवतां मतः सागरलङ्घने ।
इयं च महती सेना सागरश्चापि दुस्तरः ॥ २४
तत्रान्ये व्याहरन्ति स्म वानराः पटुमानिनः ।
समर्था लङ्घने सिन्धोर्न तु कृत्स्नस्य वानराः ॥ २५
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैः प्लवैः ।
नेति रामश्च तान्सर्वान्सान्त्वयन्प्रत्यभाषत ॥ २६
शतयोजनविस्तारं न शक्ताः सर्ववानराः ।
क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः ॥ २७
नावो न सन्ति सेनाया बह्व्यस्तारयितुं तथा ।
वणिजामुपघातं च कथमस्मद्विधश्चरेत् ॥ २८
विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेषु वै परः ।
प्लवोडुपप्रतारश्च नैवात्र मम रोचते ॥ २९
अहं त्विमं जलनिधिं समारप्स्याम्युपायतः ।
प्रतिशेष्याम्युपवसन्दर्शयिष्यति मां ततः ॥ ३०
न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः ।
महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः ॥ ३१
इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः ।

त्वरिता ($M_{2}$ परितो) वानराणां महाचमूः.

**20** $^{a}$) $K_{4}$ B D (except $D_{1.5}$) $G_{3}$ विविधेषु (for विधिवत्सु-). — $^{b}$) $K_{1.2}$ $D_{1.5}$ मधुमूल°. — $^{d}$) $M_{2}$ वारिशीतशिलेषु च

**21** $^{a}$) $K_{1.2}$ विवसंति; $D_{1}$ निवसंतो; $D_{2}$ $G_{2.4}$ निवसं-($D_{2}$ °स)ति. $D_{1}$ $G_{2.4}$ निराबाधस्. — $^{b}$) $B_{4}$ गिरिसंधिषु. — $^{c}$) $D_{1}$ हरिसैन्यं तत् (for हरिसेना सा). — $^{d}$) $D_{2.5}$ S (except $M_{2}$) क्षीरोदम्. $B_{1}$ अधि; S (except $M_{2}$) इव (for अथ).

**22** $^{a}$) $K_{1.2}$ $T_{1}$ $M_{2}$ द्वितीयं (for द्वितीय-). — $^{b}$) $D_{3}$ बहुलध्वनिं. — $^{d}$) S (except $G_{3}$ M) निवेशम् (for निवासम्).

**24** $^{a}$) Dc $D_{1.2}$ [ऽ]त्र (for नु). $K_{3}$ $D_{2}$ $G_{4}$ भवता; $T_{2}$ $G_{3}$ भवतो. — $^{b}$) $T_{1}$ $G_{2.4}$ मम (for मतः). — $^{c}$) B Dn $D_{3.4.6}$ $G_{1.3}$ हि (for च). — $^{d}$) $B_{2.4}$ Dn $D_{3.4.6}$ $G_{3}$ [अ]ति- (for[अ]पि). Dc $D_{1}$ दुश्चराः ($Dc_{1}$ °रः); $G_{4}$ दुःसहः (for दुस्तरः).

**25** $^{a}$) $D_{1}$ तस्मादेवं व्याहरंति; $T_{1}$ तत्र ह्येषां हरंति स्म. — $^{b}$) $K_{4}$ $B_{2.3}$ Dn $D_{3.4.6}$ $G_{3}$ बहुमानिनः; $D_{1}$ युद्ध°; $D_{5}$ पटुभाषिणः; $T_{1}$ बलमानिनः; $T_{2}$ पर°. — $^{d}$) $T_{2}$ [ए]तत् (for तु). N न तु तत्कृत्स्नकारकं ($K_{4}$ कृत्स्नं च सागरं); $T_{1}$ न तु कृत्स्नास्तु ($T_{2}$ °श्च) वानराः.

**26** $^{a}$) $K_{1}$ $D_{1}$ व्यवस्यंतः; $K_{2}$ °सतः; $K_{3}$ विमिस्त्यंति. — $^{b}$) $B_{4}$ विविध- (for विविधैः). $K_{4}$ तरैः (for प्लवैः). — $^{c}$) $K_{2}$ $B_{1-3}$ Dn $D_{3-6}$ $G_{3}$ तु (for च).

**27** $^{b}$) $G_{1}$ अशक्ताः सर्ववानराः; $G_{2.4}$ शक्ताः सर्वे च (? read न) वानराः.

**28** $^{a}$) $K_{3}$ $M_{2}$ नावा (for नावो). $K_{3}$ $D_{5}$ $T_{2}$ $G_{3}$ सेनायां; Dc $D_{2}$ नैवात्र; $Dn_{2}$ च तथा (for सेनाया). — $^{b}$) $K_{1.2}$ तदा (for तथा). — $^{c}$) $K_{1}$ उपघातश्च; $K_{4}$ अनुयातं; $B_{1}$ $Dn_{3}$ उपयातं (for उपघातं). $Dn_{3}$ तत् (for च).

**29** $^{a}$) $G_{4}$ तत् (for नः). $T_{1}$ सर्वं (for सैन्यं). $K_{4}$ विस्तीर्णं च महत्सैन्यं; $G_{1}$ प्रविस्तीर्णं च नः सैन्यं. — $^{b}$) B D (except $Dc_{2}$ $D_{2}$) $G_{3}$ छिद्रेण. $D_{1}$ $G_{1}$ वा परः; $G_{2.4}$ चापरः.

**30** $^{a}$) $G_{2.4}$ चेमं (for त्विमं). — $K_{3}$ om. (hapl.) $30^{b}$–$32^{c}$. — $^{b}$) $Dc_{2}$ समारप्सा°; $T_{2}$ समवाप्स्या°; $G_{2.3}$ समाराध्या°. — $^{c}$) $K_{1}$ $B_{1}$ प्रतिशोषामि; $K_{2}$ Dn $D_{5.6}$ $G_{1.3}$ °शेष्यापि; $D_{3}$ $M_{1}$ °शोष्यामि; $D_{4}$ °स्येषामि. (for °शेष्यामि). $T_{1}$ प्रतिशेष्यमुपवसे. — $^{d}$) $K_{4}$ मार्णवः; $G_{1}$ मामतः (for मां ततः).

**31** $K_{3}$ om. 31 (cf. v.l. 30). — $^{a}$) $K_{4}$ $D_{5}$ च (for चेद्). — $^{b}$) $B_{1}$ वक्ष्याम्येनम्; $D_{1}$ शोषयिष्यामि; $D_{5}$ (*sup. lin.* as in text) बध्नाम्येनम् (for धक्ष्याम्येनम्). — $^{c}$) K ($K_{3}$ om.) $B_{4}$ अत्यग्निज्वलनो($K_{4}$ $B_{4}$ °पवनो)पमैः; $B_{1}$ अत्यग्निपरमोज्वलैः; Dc $D_{1.5}$ अर्काग्निपवनो($D_{1}$ °वपनो)पमैः.

**32** $K_{3}$ om. $32^{abc}$ (cf. v.l. 30). — $^{a}$) $G_{1}$ °सौमित्रिम्. — $^{b}$) $K_{4}$ अपस्पृश्याथ; $D_{1}$ उपविश्या°. — $^{c}$) K ($K_{3}$ om.) B D (except $Dn_{2}$ $D_{4}$) $T_{2}$ $G_{1-3}$ $M_{2}$ प्रतिशिष्ये. — $^{d}$) $B_{1}$ देव°; $G_{2.4}$ दर्भं° (for कुश°).

प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे ॥ ३२
सागरस्तु ततः स्वप्ने दर्शयामास राघवम् ।
देवो नदनदीभर्ता श्रीमान्यादोगणैर्वृतः ॥ ३३
कौसल्यामातरित्येवमाभाष्य मधुरं वचः ।
इदमित्याह रत्नानामाकरैः शतशो वृतः ॥ ३४
ब्रूहि किं ते करोम्यत्र साहाय्यं पुरुषर्षभ ।
इक्ष्वाकुरस्मि ते ज्ञातिरिति रामस्तमब्रवीत् ॥ ३५
मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते ।
येन गत्वा दशग्रीवं हन्यां पौलस्त्यपांसनम् ॥ ३६
यद्येवं याचतो मार्गं न प्रदास्यति मे भवान् ।
शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः ॥ ३७
इत्येवं ब्रुवतः श्रुत्वा रामस्य वरुणालयः ।
उवाच व्यथितो वाक्यमिति बद्धाञ्जलिः स्थितः ॥ ३८
नेच्छामि प्रतिघातं ते नास्मि विघ्नकरस्तव ।
शृणु चेदं वचो राम श्रुत्वा कर्तव्यमाचर ॥ ३९
यदि दास्यामि ते मार्गं सैन्यस्य व्रजतोऽऽज्ञया ।
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात् ॥ ४०
अस्ति त्वत्र नलो नाम वानरः शिल्पिसंमतः ।
त्वष्टुर्देवस्य तनयो बलवान्विश्वकर्मणः ॥ ४१
स यत्काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि ।
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ॥ ४२
इत्युक्त्वान्तर्हिते तस्मिन्रामो नलमुवाच ह ।
कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम ॥ ४३
तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत् ।
दशयोजनविस्तारमायतं शतयोजनम् ॥ ४४
नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि ।
रामस्याज्ञां पुरस्कृत्य धार्यते गिरिसंनिभः ॥ ४५
तत्रस्थं स तु धर्मात्मा समागच्छद्विभीषणः । C. 3. 16314 B. 3. 283. 46 K. 3. 284. 46

**33** [a]) $T_2$ तप्तो; $G_{2.4}$ सुप्तं (for स्वप्ने). — [c]) Dc $D_2$ °कर्ता (for °भर्ता). — [d]) $B_3$ युतः (for वृतः).

**34** [a]) Most N MSS. कौशल्या°. — [c]) $M_2$ ददामीत्याह (for इदमित्याह). $T_2$ $G_{1.2.4}$ मतिमान् (for रत्नानाम्). — [d]) $B_4$ $T_2$ $G_1$ मकरैः ($B_4$ °रः); $G_{2.4}$ वानरैः (for आकरैः). $G_{2.4}$ वृतं.

**35** $D_2$ om. 35. — [a]) $K_{1.4}$ $D_5$ $T_2$ $G_{1.2}$ [अ]द्य (for [अ]त्र). — [c]) $K_{1.3}$ $B_{1.3.4}$ $Dn_{2}$. $n_3$ $D_{1.3.4.6}$ $G_3$ ऐक्ष्वाकुः; $B_2$ $Dn_1$ $G_{1.2.4}$ ऐक्ष्वाकः; $T_2$ M इक्ष्वाकः (for इक्ष्वाकुः). $K_{3.4}$ $B_{1.2.4}$ Dc Dn $D_{3.4.6}$ $G_3$ M ह्यस्मि; $T_2$ $G_{1.2.4}$ [अ]स्मि च (for अस्मि). $K_3$ $Dc_2$ जातिर्; S (except $T_1$ $G_3$) ज्ञाती (for ज्ञातिर्). — [d]) $D_5$ अब्रुवन् (for अब्रवीत्). S (except $G_3$) रामः सत्यपराक्रमः. — After 35, S (except $G_3$) ins.:

1275* एवमुक्तः समुद्रेण रामो वाक्यमथाब्रवीत् ।

**36** [d]) $K_1$ हत्वा (for हन्यां). T $G_1$ M वै कुल° (for पौलस्त्य°). $G_{2.4}$ हन्याम कुलपांसनं. — After 36, S (except $G_3$) ins.:

1276* राक्षसं सानुबन्धं तु मम भार्यापहारिणम् ।

**37** [a]) K $D_{1.2}$ $G_{1.4}$ याचितो; $Dn_2$. $n_3$ $G_2$ याचते (for °तो). — [b]) $K_{1-3}$ $D_1$ नो (for मे). — [c]) $K_3$ M त्वा (for त्वां). $D_4$ शेष° (for शोष°). — [d]) $T_1$ °प्रतिमैः शितैः.

**38** [a]) K Dc $D_{1-3.5}$ वदतः (for ब्रुवतः). — [c]) $T_1$ व्यग्रम् (for वाक्यम्). — [d]) T $G_{1.4}$ इदं (for इति).

**39** [a]) $Dc_2$ $D_2$ नेष्यामि (for नेच्छामि). — [b]) S (except $G_3$) नाहं (for नास्मि).

**40** [b]) $T_1$ मया; $G_1$ यथा (for ऽऽज्ञया). — [d]) $T_1$ मानुषा (for धनुषो).

**41** [a]) $K_4$ [ए]व तु (for त्वत्र). — [b]) $B_4$ $T_2$ $G_1$ $M_2$ शिल्पसंमतः; $D_{1.5}$ $T_1$ $G_{2.4}$ शिल्पिसत्तमः. — [c]) $T_2$ $G_{1.2.4}$ त्वष्टुः काकुत्स्थ तनयो.

**42** [a]) Dc $D_2$ यद् (for स). — [b]) $K_4$ यत्; $G_{2.4}$ प्र- (for वा). — [c]) $T_1$ सर्वं तं; $G_{2.4}$ समस्तं (for सर्वं तद्). $K_1$ सर्वमुद्धार°.

**43** [b]) $K_3$ (m as in text) नडम् (for नलम्). $G_{2.4}$ अथाब्रवीत् (for उवाच ह). — [c]) $K_{1.2}$ समुद्रस्य; $D_1$ समुद्रे तु (for °द्रे त्वं).

**44** [cd]) = (var.) Rām. 6. 22. 72[ab]. $K_1$ $T_1$ °विस्तीर्णम्.

**45** [a]) $G_4$ शतयोजनविस्तारो (cf. 44[c]). — [c]) $T_2$ $G_{1.2.4}$ स रामाज्ञां (for रामस्याज्ञां). — [d]) B Dc $Dn_1$. $n_2$ $D_{2.4}$ $G_3$ निर्यातो (for धार्यते). $B_1$ गुरु° (for गिरि°); $T_1$ corrupt.

**46** [a]) $K_{1.2}$ ततस्तस्य तु; $K_{3.4}$ $Dc_2$ $D_{1.2.5}$ तत्रस्थस्य तु ($K_4$ च). $T_2$ $G_{2.4}$ तत्रैव स तु ($G_2$ by transp. तु स). — [c]) $T_1$ स भ्राता; $T_2$ $G_{1.2.4}$ भ्राता तु (for भ्राता वै). $K_{1.3.4}$ भ्राता राक्षसराजस्य. — [d]) $K_4$ वानरैः सह; $G_2$ सह

C 3. 16314 B 3. 283 46 K 3. 284 46

भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ॥ ४६
प्रतिजग्राह रामस्तं स्वागतेन महामनाः ।
सुग्रीवस्य तु शङ्काभूत्प्रणिधिः स्यादिति स्म ह ॥ ४७
राघवस्तस्य चेष्टाभिः सम्यक्च चरितेङ्गितैः ।
यदा तत्त्वेन तुष्टोऽभूत्तत एनमपूजयत् ॥ ४८
सर्वराक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणम् ।
चक्रे च मन्त्रानुचरं सुहृदं लक्ष्मणस्य च ॥ ४९
विभीषणमते चैव सोऽत्यक्रामन्महार्णवम् ।
ससैन्यः सेतुना तेन मासेनैव नराधिप ॥ ५०
ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः ।
भेदयामास कपिभिर्महान्ति च बहूनि च ॥ ५१
तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ ।
चारौ वानररूपेण तौ जग्राह विभीषणः ॥ ५२
प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ ।
दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ॥ ५३
निवेश्योपवने सैन्यं तच्छूरः प्राज्ञवानरम् ।
प्रेषयामास दौत्येन रावणस्य ततोऽङ्गदम् ॥ ५४

इति श्रीमहाभारते आरण्यकपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

## २६८

मार्कण्डेय उवाच ।
प्रभूताम्बोदके तस्मिन्बहुमूलफले वने ।
सेनां निवेश्य काकुत्स्थो विधिवत्पर्यरक्षत ॥ १
रावणश्च विधिं चक्रे लङ्कायां शास्त्रनिर्मितम् ।

मंत्रिभिः; G4 सह राक्षसैः (for सचिवैः सह).

**47** b) K2–4 B2 Dc1 D1. 3. 5 G2. 4 महात्मना (D3 °नः). — c) B1 संभूतः (for शङ्काभूत्)

**48** a) B1 राघवस्य तु चे°; B2–4 Dn D3–6 T1 राघवः सत्यचे°; Dc D2 वायवः सत्यचे°. — b) K4 B3 सु- (for च). Dc D2 सम्यक्सुचरितव्रतैः (D2 °जैः). — c) B2 D1 तदा; G3 यथा (for यदा). K3 तुष्टेन (for तत्त्वेन). K3 तत्वो; B2 शिष्टो; T2 G2. 4 हृष्टो (for तुष्टो). — d) K1. 2 तदैनं प्रत्यपूजयत्; K3 Dc तदैनमभि°; D1. 2. 5 तदेनमभि° (D1 °भ्य°).

**49** ab) K4 B4 Dc1 वा; D5 [ऽ]थ (for च). K2–4 B4 Dn2. n3 [अ]प्यभिषिंचद्; B1 [अ]प्यभिषिच्य; G2. 4 अभ्यषिंचद् (for [अ]प्यभ्य°). — c) K1. 2 सुहृदं मंत्रे; K3 D4 मंत्रावरजं; K4 D5 बुद्धिसचिवं; B4 मंत्रात्रचरं; Dc Dn D2. 6 मंत्रसचिवं; D1 तं सुसचिवं; T G2. 4 मंत्रिप्रवरं; G3 सचिवं तं तु (for मन्त्रानुचरं). — d) K1. 2 सचिवं (for सुहृदं).

**50** a) B1 Dc D1 T1 °मतेनैव. — b) B4 Dc D1 सोभ्यक्रामन्; T2 सोत्यगात्तं. K1. 2 महोदधिं (for महार्णवम्). — d) B4 मार्गेणैव. B3 Dc D1. 2 T G2. 4 M नराधिपः.

**51** b) D1. 5 सर्वशः (for [अ]नेकशः). — c) T1 बलिभिर् (for कपिभिर्).

**52** a) K1. 2 ततश्च; K3 ततस्तां; B D (except D1. 5) G3 ततस्तौ (for तत्रास्तां). — b) =Rām. 6. 25. 9b, 26b. K3 B D (except Dc2 D1. 2) मंत्रिणौ (for राक्षसौ). K2. 3 °सारिणौ. — After 52ab, K3 ins.:

1277* द्रष्टुं सेनामनुप्राप्तौ रावणप्रियकारिणौ ।

— c) K D1 वीरौ; B Dc Dn D2. 3 T2 G3 चरौ; D4 वनौ (for चारौ). — d) G4 गृहीत्वा (for जग्राह).

**53** b) K1. 4 D1 राक्षसौ तौ; S (except G3) हन्यमानौ (for राक्षसं तौ). — c) S (except G3) तदा (for ततः). — T1 om. (hapl.) 53d–54a. — d) K1 सैन्याद् (for पश्चाद्). B1. 4 अपासृजत् (for अवा°).

**54** T1 om. 54a (cf. v.l. 53). — b) K B3 Dc D1. 2. 5 M तच्छूर- (K4 °रं); Dn D3. 4. 6 G3 तत्पुरः (for तच्छूरः). T1 तच्छूरं वानरर्षभं. — T2 G2. 4 om. 54cd. — c) K4 दूत्येन.

Colophon. — *Major parvan:* K1. 2 Dc1 Dn2 T1 G2. 4 आरण्य. — *Sub-parvan:* K B1. 3. 4 D G3 M2 (all om. sub-parvan name) mention only रामो (K3 श्रीरामो-; M2 रामायणो)पाख्यान. — *Adhy. name:* B2 सेतुबंधनं; B3 अंगददौत्यं. — *Adhy. no.* (figures, words or both): Dn 281 (Dn2 282); D1 285; T1 272; T2 G4 M (M2 *inf. lin.*) 271 (M2 orig. 273); G1 268; G2 270. — *Śloka no.:* Dn1. n3 D1 54; Dn2 53.

प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणा ॥ २
अगाधतोयाः परिखा मीननक्रसमाकुलाः ।
बभूवुः सप्त दुर्धर्षाः खादिरैः शङ्कुभिश्चिताः ॥ ३
कर्णाट्टयन्त्रदुर्धर्षा बभूवुः सहुडोपलाः ।
साशीविषघटायोधाः ससर्जरसपांसवः ॥ ४
मुसलालातनाराचतोमरासिपरश्वधैः ।
अन्विताश्च शतघ्नीभिः समधूच्छिष्टमुद्गराः ॥ ५
पुरद्वारेषु सर्वेषु गुल्माः स्थावरजङ्गमाः ।
बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ॥ ६
अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः ।
विदितो राक्षसेन्द्रस्य प्रविवेश गतव्यथः ॥ ७
मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः ।
शुशुभे मेघमालाभिरादित्य इव संवृतः ॥ ८
स समासाद्य पौलस्त्यममात्यैरभिसंवृतम् ।
रामसंदेशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ॥ ९
आह त्वां राघवो राजन्कोसलेन्द्रो महायशाः ।
प्राप्तकालमिदं वाक्यं तदादत्स्व कुरुष्व च ॥ १०
अकृतात्मानमासाद्य राजानमनये रतम् ।
विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ॥ ११
त्वयैकेनापराद्धं मे सीतामाहरता बलात् ।
वधायानपराद्धानामन्येषां तद्भविष्यति ॥ १२
ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः ।
ऋषयो हिंसिताः पूर्वं देवाश्चाप्यवमानिताः ॥ १३
राजर्षयश्च निहता रुदन्त्यश्चाहृताः स्त्रियः । C 3. 16336 B. 3. 284. 14 K. 3. 285. 14

## 268

**2** a) $K_{1.4}$ $B_2$ $Dc_1$ $Dn_2$. $n_3$ $D_4$ रावणः संविधं; $B_1$ $G_2$ °णस्य ($G_2$ °णस्तु) विधिं; $B_{3.4}$ $Dc_2$ $Dn_1$ $D_{2.3}$ (before corr.) $G_3$ °णः संविधिं; $T_2$ °णश्च द्विधा. — b) D (except Dc $D_5$) शास्त्रनिर्मितां. — c) $K_{1.2}$ Dc च दुर्धर्षा; $K_3$ सुदुर्धर्षा; $D_{1.2}$ तु दुर्धर्षा (for दुरा°). — $K_2$ om. $2^{d}$–$3^{c}$.

**3** $K_2$ om. $3^{abc}$ (cf. v.l. 2). — a) $K_1$ अगाधतोयः परिखा; $K_{3.4}$ $Dn_2$. $n_3$ $D_{4-6}$ °तोया परिखा; $D_1$ $G_2$ °तोयपरिखा; T $M_1$ °तोया गंभीरा; $G_{1.4}$ $M_2$ °तोयगंभीरा. — b) $K_{1.3}$ Dc $D_2$ $T_1$ M °झषाकुलाः; $K_4$ °झषाकुला; $D_1$ $T_2$ भीमनक्रझषा($T_2$ °समा)कुलाः. — c) $T_1$ $G_2$ परिघाः; $G_4$ M परिखाः (for दुर्धर्षाः). $D_1$ बभूव सातिदुर्धर्षा; $T_2$ बभूवुः सुसपरिघाः. — d) K $D_{1.3.5}$ $G_3$ transp. खादिरैः and शङ्कुभिः. $K_3$ सिताः; $K_4$ च ताः; $B_1$ चितैः; $B_2$ तथा; $D_5$ युताः (for चिताः).

**4** a) $K_1$ कर्णाट्टयत°; $K_2$ कगाटयंत्र°; $K_3$ कर्नाटयंत्र°; $K_4$ $B_1$ Dc $D_{2.6}$ कर्णाटयंत्र°; Dn $D_{1.5}$ कपाट($D_1$ °टा)यंत्र°; $D_3$ अट्टालयंत्र°. — b) $D_{1.3}$ बभूव (for बभूवुः). $K_4$ $B_3$m M सुहुलोपलाः; $B_{1-3}$ Dc $D_{1.2.6}$ $G_3$ सगुडो°; $B_4$ सहतो°; $D_3$ बहुविस्तराः; $T_1$ बहुलोपलाः; $T_2$ $G_2$ बहुधो°; $G_1$ सहुषो°; $G_4$ बहुशो°. — c) $K_2$ °घटायुक्ताः; $T_2$ °गणायोधाः; $G_1$ °गुणोयौधाः; $G_2$ °गुणायोधाः; M °गुणायौधाः. — d) A few MSS. °पांशवः.

**5** a) A few MSS. मुशल- (for मुसल-). $K_{1.2}$ -नाराचैस्; $G_{1.4}$ -नाराचास्. — b) A few MSS. -परश्वधैः. T -तोमराणि ($T_2$ °शि-) परश्वधैः; $G_{1.4}$ तोमराणि परश्वथाः; $M_2$ -तोमरासिपरश्वधाः. — d) $K_4$ $D_1$ °मुद्गरा; $B_1$ समुच्छिष्टाश्च मुद्गराः; $T_1$ पट्टसैश्च समुद्गराः.

**6** d) $Dn_2$. $n_3$ प्रभूता (for प्रभूत-). $K_{1.2}$ -वाहनाः (for -वाजिनः).

**7** b) $T_1$ द्वारदेश (for द्वारदेशम्). $D_1$ अथागमत् (for उपागतः). — c) $T_1$ राक्षसेंद्रेण.

**8** b) $G_2$ बलिनां (for बह्वीनां). $D_1$ $T_1$ $G_4$ स (for सु-). — c) $T_1$ मेघपटलैर्; $G_2$ °जालाभिर्.

**9** $K_2$ $D_3$ om. $9^{ab}$. — b) $K_3$ सामात्यैर्; $T_2$ $G_{1.2.4}$ राक्षसैर् (for अमात्यैर्). $D_5$ बहुभिर्वृतं (for अभिसंवृतम्). — c) $G_{2.4}$ आगम्य (for आमन्त्र्य).

**10** a) $K_{1.2}$ $G_{1.4}$ M त्वा (for त्वां). $D_5$ $T_1$ राजा (for राजन्). — b) $K_{2.4}$ B D (except $Dn_2$) कोश°; $K_3$ कौश°; $T_2$ $G_{1.4}$ कौस° (for कोस°). $D_1$ °मनाः; $T_2$ $G_{1.2.4}$ °बलः; M °तपाः (for °यशाः). — d) $K_4$ कुरुद्वह; S सुदुर्मते ($G_3$ कुरुष्व ह) (for कुरुष्व च).

**12** a) $T_1$ $G_{1.2.4}$ [अ]पराधेन (for [अ]पराद्धं मे). — b) K $D_{1.5}$ $M_1$ वनात् (for बलात्). $G_{1.2.4}$ सीता ह्युपहृता बलात्. — c) $K_{1-3}$ $G_4$ वधायानपराधानाम्; $B_1$ वधमनपराद्धानाम्; $B_4$ वधायानपकाराणाम्.

**13** a) $K_{1-3}$ Dc $T_1$ यत् (for ये). $T_2$ $G_{2.4}$ °दर्पाणाम् (for °दर्पाभ्याम्). — b) $M_2$ वने वने (for °चराः). — After $13^{ab}$, $K_3$ *repeats* $11^{a}$–$13^{b}$. — d) $G_4$ देवताश्चापि मानिताः.

**14** $K_4$ om. $14^{a}$–$15^{b}$. — b) $K_{1.2}$ $Dn_3$ $D_6$ रुदत्यश्च; $B_4$ महतां च (for रुदन्त्यश्च). $B_{3.4}$ $D_1$ $G_3$ हताः (for

C. 3. 16336 B 3. 284 14 K. 3. 285 14

तदिदं समनुप्राप्तं फलं तस्यानयस्य ते ॥ १४
हन्तास्मि त्वां सहामात्यं युध्यस्व पुरुषो भव ।
पश्य मे धनुषो वीर्यं मानुषस्य निशाचर ॥ १५
मुच्यतां जानकी सीता न मे मोक्ष्यसि कर्हिचित् ।
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ॥ १६
इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः ।
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्छितः ॥ १७
इङ्गितज्ञास्ततो भर्तुश्चत्वारो रजनीचराः ।
चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः ॥ १८
तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान् ।
आदायैव खमुत्पत्य प्रासादतलमाविशत् ॥ १९
वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः ।
भुवि संभिन्नहृदया प्रहारपरिपीडिताः ॥ २०
स मुक्तो हर्म्यशिखरात्तस्मात्पुनरवापतत् ।
लङ्घयित्वा पुरीं लङ्कां स्वबलस्य समीपतः ॥ २१
कोसलेन्द्रमथाभ्येत्य सर्वमावेद्य चाङ्गदः ।
विशश्राम स तेजस्वी राघवेणाभिनन्दितः ॥ २२
ततः सर्वाभिसारेण हरीणां वातरंहसाम् ।
भेदयामास लङ्कायाः प्राकारं रघुनन्दनः ॥ २३
बिभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः ।
दक्षिणं नगरद्वारमवामृद्नाद्दुरासदम् ॥ २४
करभारुणगात्राणां हरीणां युद्धशालिनाम् ।
कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा ॥ २५
उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः ।
नादृश्यत तदा सूर्यो रजसा नाशितप्रभः ॥ २६
शालिप्रसूनसदृशैः शिरीषकुसुमप्रभैः ।
तरुणादित्यसदृशैः शरगौरैश्च वानरैः ॥ २७
प्राकारं ददृशुस्ते तु समन्तात्कपिलीकृतम् ।

---

[आ]हृताः). — c) K3 Dn3 यद्; D1 तम् (for तद्).

**15** K4 om. $15^{ab}$ (cf. v.l. 14). — a) Dc2 D3 M त्वा (for त्वां). B2–4 Dn D3–6 G3 सहामात्यैर्. — d) D5 मानुष्यं च (for मानुषस्य). G4 corrupt.

**16** a) G1 मुंच तां; G2. 4 मुंचैतां (for मुच्यतां). K3 G4 जानकीं. K3 सीतां; S (except G3) मा वा (for सीता). — b) K D1. 5 चेन्; Dc2 D2 च; G4 वै (for मे). G4 मोक्षाय (for मोक्ष्यसि). T1 न मे जीवन्हि मोक्ष्यसे. — $16^{cd}$ = Rām. 6. 41. $67^{ab}$.

**17** G1 om. $17^{ab}$. — b) T1 रामस्य (for दूत°).

**19** a) D5 तदा° (for तथा°). G4 युक्तानाम् (for संसक्तान्). — K3 om. (hapl.) $19^{c}$–$20^{b}$. — c) D1 आदाय च; M °याशु (for °यैव). T2 समुत्पत्य; G2 खमुत्प्लुत्य.

**20** K3 om. $20^{ab}$ (cf. v.l. 19). — a) Dc D2 वेगेनोत्पतमानस्य; T2 G1 M वेगेन तु ततस्तस्य. — d) K B Dc Dn D2–4. 6 प्रहारज्वर-; D1 प्रहारेणैव; D5 प्रहारेणापि.

**21** a) B1. 2 Dn D3. 4. 6 G3 संसक्तो; T2 विमुक्तो (for स मुक्तो). — b) B4 °तरत् (for °पतत्). — c) S (except G2. 3) रम्यां (for लङ्कां).

**22** a) Many N MSS. with G3 कोशलेंद्रम्; T2 G1. 4 कौसलेंद्रम्. B Dn D3. 4. 6 G3 [आ]गम्य; Dc [आ]मंत्र्य (for [अ]भ्येत्य). — b) B2 Dn D3. 4. 6 G3 वानरः (for चाङ्गदः). — c) K Dc2 D2. 5 T1 [अ]थ; D1 [इ]व (for स). T2 G1. 2. 4. M2 transp. विशश्राम and स.

**24** a) B1 बिभीषणं ऋक्षपतिं; T1 बिभीषणं रक्षोधिपतिं (hypermetric). — d) K1. 2 M1 उ(M1 अ)पामृद्नाद्; B4 अवामृद्नन्; D1 उपासृत्य; T2 अमर्त्यानां; G2 अमात्यानां G4 अमृद्नाच्च (for अवामृद्नाद्). K3 दुरात्मनः.

**25** a) K3 करभारुणया त्वंधा; K4 B1. 3 Dc D2 °या च त्वा; B4 Dn1 घोरदंष्ट्रानला(Dn1 °ना)क्षाणां; Dn2. n3 D3. 6 करभारुणपांडुनां; D1 दारुणारुणरूपाणां; D4. 5 दारुणारुणया चम्वो; G3 करभारुणपादानां. — b) K4 वातरंहसां (for युद्ध°). — c) K1. 2 कोटिशत-. S (except G3) -सहस्राणि. — d) K4 B1 T G1. 2. 4 M °पतंस्ततः (K4 °था; B1 M °दा). — After 25, B2–4 D (except D1. 5) G3 ins.:

1278* प्रलम्बबाहूरुकरजङ्घान्तरविलम्बिनाम् ।
ऋक्षाणां धूम्रवर्णानां तिस्रः कोट्यो व्यवस्थिताः ।

[(L. 1) B2 प्रलंबबाहूरुकंठ-; B4 °बाहूकंठश्च; Dc1 D3 °बाहूरुकरं. — (L. 2) Dc D2 लक्ष्मणं (for ऋक्षाणां).]

**26** a) D5 तु (for च). — b) Dc D2 विपतद्भिश्च; D1 प्रकारस्थै°; M2 निवर्तद्भि°. D5 तु (for च). — c) D1 आवृतश्च; D3 व्यदृश्यत (for नादृश्यत).

**27** a) K2 शालपुष्पस्य सदृशैः; K4 D1 शालप्रसून°. — b) T1 शिरोभिः कुसुम°. — c) K Dc D1. 2. 5 M1 °संकाशैः. — d) K4 शिरौ गौरैश्च (sic); B1. 2. 4 D3. 4 G3 शणगौरैश्च; Dc D2 सरागैरिव; M2 शशगौरैश्च.

राक्षसा विस्मिता राजन्सस्त्रीवृद्धाः समन्ततः ॥ २८
बिभिदुस्ते मणिस्तम्भान्कर्णाट्टशिखराणि च ।
भग्नोन्मथितवेगानि यन्त्राणि च विचिक्षिपुः ॥ २९
परिगृह्य शतघ्नीश्च सचक्राः सहुडोपलाः ।
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महाबलाः ॥ ३०
प्राकारस्थाश्च ये केचिन्निशाचरगणास्तदा ।
प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः ॥ ३१
ततस्तु राजवचनाद्राक्षसाः कामरूपिणः ।
निर्ययुर्विकृताकाराः सहस्रशतसंघशः ॥ ३२
शस्त्रवर्षाणि वर्षन्तो द्रावयन्तो वनौकसः ।
प्राकारं शोधयन्तस्ते परं विक्रममास्थिताः ॥ ३३
स माषराशिसदृशैर्बभूव क्षणदाचरैः ।
कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ॥ ३४
पेतुः शूलविभिन्नाङ्गा बहवो वानरर्षभाः ।
स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ॥ ३५
केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह ।
नखैर्दन्तैश्च वीराणां खादतां वै परस्परम् ॥ ३६
निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः ।
हता निपतिता भूमौ न मुञ्चन्ति परस्परम् ॥ ३७
रामस्तु शरजालानि ववर्ष जलदो यथा ।
तानि लङ्कां समासाद्य जघ्नुस्तान्रजनीचरान् ॥ ३८
सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः ।
आदिश्यादिश्य दुर्गस्थान्पातयामास राक्षसान् ॥ ३९
ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया ।
कृते विमर्दे लङ्कायां लब्धलक्षो जयोत्तरः ॥ ४० C 3. 16363 B 3. 284. 41 K. 3. 285. 41

इति श्रीमहाभारते आरण्यकपर्वणि अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

---

**28** a) T1 प्रासादं ((for प्राकारं). K B2. 3 Dc D5 T1 M स्म (for तु). — b) K4 वानरैः (for समन्तात्). T2 कबली° (for कपिली°). — c) T2 G2 [अ]धिष्ठिता; G4 विष्ठिता (for विस्मिता). S (except T1 G3) चासन् (for राजन्). — d) T1 संनिवृत्ताः (for सस्त्रीवृद्धाः).

**29** D2 om. $29^b$–$30^a$. — b) K2–4 B1 कर्णाट°; Dc2 कर्णादि°; D1. 5 कपाट°. — c) B D (D2 om.) G3 °शृंगाणि.

**30** Dc2 om. $30^{ab}$; D2 om. $30^a$ (cf. v.l. 29). — b) B3 D (Dc2 om.) G3 सगुडो(D2 °डौ)पलाः; T1 बहुलो°; T2 G1. 2. 4 M सहुलो°. K3 सचक्रा सायुधानि च; D5 सचक्रमुशलोपलाः. — d) B Dn D3. 6 G3 °स्वनाः (for °बलाः).

**31** b) B Dc Dn D3. 4. 6 G3 तथा; D1 ततः (for तदा). — c) K Dc D1. 2 वि-; M1 प्रा- (for प्र-). K Dc D2. 5 च (for ते). — d) G2 समनुद्रुताः.

**32** a) K Dc D1. 2. 5 ते (for तु). D5 °भवनाद् (for °वचनाद्). — c) T G1. 2. 4 विविधा° (for विकृता°). — d) D5 °संहताः.

**33** K3 om. $33^{ab}$. — a) T1 G1. 2. 4 M2 अस्त्र° (for शस्त्र°). — b) B1. 2 Dn D4. 6 द्रावयित्वा; D3 G3 द्रावयंति. — c) K1. 2 प्राकाराच्; B4 प्राकारे. K3 B Dn D3–6 G2. 4 शोभ° (B4 योध°); Dc D2 दर्श°; T1 गोप° (for शोध°). — d) T2 G1. 2. 4 विस्मयम् (for विक्रमम्). T2 आगताः (for आस्थिताः).

**34** a) K4 B2 Dn3 D1 मांस-; B3 मेघ- (for माष-). K3 -सदृशो; G1 -सहितैर् (for -सदृशैर्).

**35** a) K D5 शरविभिन्नांगा; Dc D2 शरविभिन्नाश्च; S (except G3) शू(T2 शी)लविनिर्भिन्ना. D1 निपेतुः शरभिन्नांगा. — c) T1 समंताद्रणभग्नाश्च.

**36** d) S (except G3) च (for वै).

**37** a) K1 निघ्नंतस्ते; K4 B3 D1. 3m. 5 निस्वनंतो; B1 निसूदंतो (for निष्टनन्तो). Dc2 D2 प्रभयतस्; M2 [ऽ]भ्युभयतस् (for ह्युभयतस्). T2 G1 निविष्टनंतो ह्युभयास् (T2 °ये). — b) K2 D5 तत्र राक्षसवानराः. — d) K2 न मुंचंत; S (except G3) नैवामुंचन्.

**39** c) T2 दूर° (for दुर्ग°).

**40** c) K1. 2. 4 T G1. 2 कृतेवमर्दे; M2 कृतोपमर्दे. — d) B1. 3. 4 Dn1 लब्धलक्ष्यो; T1 M लब्ध्वा लक्षं. K3 जयोत्तमः; Dc D2 °त्सवः; T G1. 2. 4 °भवत्; M2 °त्तरं.

Colophon. — *Major parvan:* K1. 2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K1. 3. 4 B Dc Dn1. n3 D1–6 G3 M (all om. sub-parvan name) mention only रामो(M रामायणो)पाख्यान. — *Adhy. name:* M2 अंगदप्रेषणं. — *Adhy. no.* (figures, words or both): Dn1 (*sup. lin.*). n2 282; Dn3 283; D1 286; T1 M2 (orig.)

# २६९

C. 3 16364 B. 3 285 1 K. 3. 286 1 मार्कण्डेय उवाच ।
ततो निविशमानांस्तान्सैनिकान्रावणानुगाः ।
अभिजग्मुर्गणानेके पिशाचक्षुद्ररक्षसाम् ॥ १
पर्वणः पूतनो जम्भः खरः क्रोधवशो हरिः ।
प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः ॥ २
ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् ।
अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥ ३
ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः ।
निहताः सर्वशो राजन्महीं जग्मुर्गतासवः ॥ ४
अमृष्यमाणः सबलो रावणो निर्ययावथ ।
व्यूह्य चौशनसं व्यूहं हरीन्सर्वानहारयत् ॥ ५
राघवस्त्वभिनिर्याय व्यूढानीकं दशाननम् ।
बार्हस्पत्यं विधिं कृत्वा प्रत्यव्यूहन्निशाचरम् ॥ ६
समेत्य युयुधे तत्र ततो रामेण रावणः ।
युयुधे लक्ष्मणश्चैव तथैवेन्द्रजिता सह ॥ ७
विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः ।
तुण्डेन च नलस्तत्र पटुशः पनसेन च ॥ ८
विषह्यं यं हि यो मेने स स तेन समेयिवान् ।

---

274; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 272; $G_1$ 269; $G_2$ 271. — *Śloka no.*: Dn 41; $D_1$ 40.

## 269

**1** $^{a}$) $B_3$ निवस°; $Dc_2$ निर्विश्य°; $D_2$ निविश्य°; $T_1$ निवर्त° (for निविशमानान्). $B_3$ ते (for तान्). — $^{b}$) $K_4$ (m as in text) वानरान् (for सैनिकान्). $G_1$ रावणाज्ञया. — $^{c}$) $K_1$ गणानीकैः; $K_2$ गुणानीके; $K_4$ गणानीकाः; $T_2$ $G_4$ M °नेकाः; $G_1$ °नैकाः; $G_2$ °नैकां (for गणानेके). $T_1$ अनुजग्मुर्महात्मानं. — $^{d}$) $K_1$ °राक्षसान्; $K_3$ $B_4$ °राक्षसाः; $D_3$ T °रक्षसाः. $K_4$ पिशाचा यक्षराक्षसाः.

**2** $^{a}$) Dc पर्वतः; $D_5$ पवनः. $B_{1.3}$ पृतनो; $B_{2.4}$ Dn पतनो; $G_1$ पूतना (for पूतनो). $K_3$ भंजः; $B_{3.4}$ जंबः; $Dc_2$ $G_{1.2}$ जृंभः. — $^{b}$) $K_2$ $G_{1.2}$ खर- (for खरः). — $^{c}$) $K_2$ $B_{3.4}$ $Dc_1$ $T_1$ पुरुज°; $K_3$ M पूरुज°; $K_4$ अरुज°; $Dc_2$ $D_2$ पुरंज° (for प्ररुज°). $B_3$ पुरु° (for [अ]रुज°). — $^{d}$) $B_4$ विघषश्च; Dc प्रघशश्च; T $G_{1.2.4}$ $M_1$ प्रहस्तश्च; $G_3$ $M_2$ प्रहसश्च (for प्रघसश्च). S (except $T_1$ $G_3$) चैव मानदः (for चैवमादयः).

**3** $^{a}$) $K_2$ [ऽ]भ्यपतितां; $Dn_2$ [ऽ]पि पततां (for ऽभिपततां). — $^{b}$) $B_1$ सदृश्यानां; $D_1$ अधृष्यानां; $G_2$ दृश्यमानां (for अदृश्यानां). K Dc $D_{2.5}$ महौजसां; $T_1$ दुरात्मवान् (for दुरात्मनाम्). — $^{c}$) $K_1$ स्वज्ञश्च; $B_1$ तेषां; $D_5$ ज्ञात्वा; $T_2$ $G_{1.2.4}$ तत्र (for तज्ज्ञश्च).

**4** $^{ab}$) $T_2$ दह्य° (for दृश्य°). Dc $D_2$ $T_2$ transp. हरिभिर् and बलिभिर्. Dc $D_{1.2.5}$ जितकाशिभिः; $T_2$ शूलपाणयः; M दूरपातिनः. — $^{c}$) $Dc_2$ $D_2$ शतशो; T $G_{2.4}$ सर्वतो (for सर्वशो). — $^{d}$) $T_2$ $G_1$ अभि- (for महीं).

**5** $^{b}$) $T_1$ राक्षसो (for रावणो). — After $5^{ab}$, N $G_3$ ins.:

1279* राक्षसानां बलैर्घोरैः पिशाचानां च संवृतः ।
युद्धशास्त्रविधानज्ञ उशना इव चापरः ।

[(L. 1) $K_1$ घनैर्; $K_{2-4}$ $D_5$ गणैर् (for बलैर्). $K_4$ सु- (for च).]

— $^{c}$) $K_4$ transp. व्यूह्य and व्यूहं. — $^{d}$) K $B_{3.4}$ $Dn_1$. $n_2$ $D_{1.2.6}$ हरीनभ्यवहारयत्; S (except $G_3$) हरीन्सर्वान($G_{2.4}$ °न् न्य)वारयत्.

**6** $^{a}$) K $B_4$ $D_5$ त्वभि($K_3$ °थ)निर्याते; $B_{1-3}$ Dn $D_{3.4.6}$ $G_3$ तु विनिर्यां($B_3$ $D_3$ °र्या)तं; Dc $D_{1.2}$ त्वभि($D_1$ °पि)निर्यातो; $T_2$ $G_{1.2.4}$ त्वथ निर्याय. — $^{b}$) K $B_{1.2}$ Dc $D_{1.5}$ व्यूढानीके ($B_{1.2}$ Dc °कैर्). K $D_{1.5}$ दशानने; $T_1$ ददर्श ह. — $^{d}$) $K_{2.3}$ प्रत्यव्यूहि ($K_3$ °हं); Dc $D_2$ पर्यव्यूह्य; $T_1$ $G_{2.4}$ प्रतिव्यूह्य (for प्रत्यव्यूहन्). $T_2$ स्वकं बलं; $G_1$ महाबलः; $G_{2.4}$ व्यदृश्यत (for निशाचरम्).

**7** $^{b}$) S (except $G_3$) रामेण सह रावणः. — $D_2$ om. (hapl.) $7^{c}$–$9^{b}$. — $^{c}$) B Dn $D_{3.4.6}$ $G_3$ चापि (for चैव). — $^{d}$) $G_{1.2.4}$ तस्थौ च (for तथैव).

**8** $D_2$ om. 8 (cf. v.l. 7). — $^{b}$) $K_3$ सतारेण; $B_{3.4}$ तारेणैव (for तारेण च). $K_{1.2.4}$ निख($K_4$ °ष)र्वदः; $D_1$ विकर्षतः (for निखर्वटः). $T_1$ तारेण निचखर्वटः; $T_2$ $G_4$ तारेणाटनिखर्वटः ($G_4$ °णः); $G_1$ तारेयेण निघर्वटः. — $^{c}$) $K_4$ कुंडेन; S (except $G_3$) पौंड्रेण (for तुण्डेन). $G_1$ नख° (for नल°). — $^{d}$) $K_{1.4}$ पट($K_4$ °न)सः; $K_{2.3}$ $D_{1.5}$ T पट($D_{1.5}$ °ट्टि-; $T_1$ °र)शः; $G_{1.2}$ पुटा($G_2$ °ट)शः. $K_4$

युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ।। ९
स संप्रहारो ववृधे भीरूणां भयवर्धनः ।
लोमसंहर्षणो घोरः पुरा देवासुरे यथा ।। १०
रावणो राममानर्छच्छक्तिशूलासिवृष्टिभिः ।
निशितैरायसैस्तीक्ष्णै रावणं चापि राघवः ।। ११
तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्मभेदिभिः ।
इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः ।। १२
विभीषणः प्रहस्तं च प्रहस्तश्च विभीषणम् ।
खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः ।। १३
तेषां बलवतामासीन्महास्त्राणां समागमः ।
विव्यथुः सकला येन त्रयो लोकाश्चराचराः ।। १४

इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

# २७०

मार्कण्डेय उवाच ।
ततः प्रहस्तः सहसा समभ्येत्य विभीषणम् ।
गदया ताडयामास विनद्य रणकर्कशः ।। १
स तयाभिहतो धीमान्गदया भीमवेगया ।
नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः ।। २
ततः प्रगृह्य विपुलां शतघण्टां विभीषणः । C. 3. 16381 B. 3. 286. 3 K. 3. 287. 3

---

प्रघ°; G4 पान° (for पन°).

**9** D2 om. 9$^{ab}$ (cf. v.l. 7). — $^{a}$) K3. 4 Dc2 यो हि यं (K3 तं); T1 विस्मयं; G2 आत्मनो (for यं हि यो). K1. 2 अविषह्यं ह्ययं (K2 हि यं) मेने; D5 विषजंघो हि जंघेन; T2 G4 विषह्यमात्मनो यं स. — $^{b}$) D5 T1 G1. 2 सह; M2 स तु (for स स). K1 Dc2 समी° (for समे°). — $^{c}$) K1. 2 हनूमान् (for युयुधे). B1 (corrupt) युधि युद्धवतोपेतः.

**10** $^{a}$) K3. 4 D1 ववृते; D5 विपुलो (for ववृधे). — $^{b}$) K2 भ्रातॄणां (for भीरूणां). — D1 om. 10$^{c}$–11$^{b}$. — $^{c}$) B3 G2 रोमसंघर्षणो; T2 G1. 4 M रोमसंह°.

**11** D1 om. 11$^{ab}$ (cf. v.l. 10). — $^{a}$) T2 आगच्छच्च; G1. 4 आनर्चच्च (for आनर्छच्च). D5 रावणो वानरानर्छच्च. — $^{b}$) K1. 3. 4 शूलं (K4 शूल-)शक्त्यसि°.

**12** $^{a}$) S (except G3) यत्तो (for यत्तं). — $^{d}$) D5 चिच्छेद (for बिभेद). K Dc D5 दशभिः; D2 शरभिः; T2 G1. 3. 4 निशितैः (for बहुभिः).

**13** D5 om. 13. — $^{ab}$) B3. 4 तु (for the second च). K1. 2 G1 विभीषणं प्रहस्तश्च प्रहस्तं च विभीषणः. — $^{c}$) B4 खर°; D3 स्वर्ण°; T2 G1. 2 कंक° (for खग°). B1 सुतीक्ष्णाग्रैर् (for शरैस्तीक्ष्णैर्). — $^{d}$) K2 अत्यवर्षद्; D1 अन्ववर्षद्; G2. 4 प्रत्यविध्यद्.

**14** $^{a}$) D5 चासीन् (for आसीन्). — $^{c}$) K4 विव्यथे सकलो येन. — $^{d}$) K4 लोकोयं सचराचरः; S (except G3) लोका वै सचराचराः.

Colophon. — *Major parvan:* K1. 2 T2 G2. 4 आरण्य. — *Sub-parvan:* K1. 3. 4 B Dc Dn1. n3 D1–6 G3 M (all om. sub-parvan name) mention only रामो(M रामायणो)पाख्यान. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n3 283; Dn3 284; D1 287; T1 M2 (orig.) 275; T2 G4 M (M2 *inf. lin.*) 273; G1 270; G2 272. — *Śloka no.:* Dn 15; D1 14.

## 270

**1** K3 T2 om. the ref. — $^{a}$) K Dc D5 T G1 M तरसा; D1 तु तथा (for सहसा). — $^{c}$) M पोथ° (for ताड°). — $^{d}$) D1 विनदन् (for विनद्य). K1–3 Dc D1 रणमूर्धनि; G2. 4 रणकर्कशं.

**2** $^{a}$) K3. 4 B2–4 Dc2 D1. 2. 5 T1 G3 तथा; T2 G1 तदा (for तया). K4 [अ]भिहितो; D1 निहतो (for [अ]भिहतो). — $^{b}$) K4 गदयातिसुवेगया. — $^{d}$) K B1 T2 G1. 3. 4 M2 सुस्थितः.

**3** K4 *repeats* (with v.l.) 3$^{a}$–7$^{b}$ after 7$^{ab}$. — $^{b}$) B1. 3 शतघ्नीं च; Dc D2 °घ्नीश्च (for °घण्टां). — $^{c}$) N (except K4) T2 G3 अनु° (for अभि°). T1 ततः (for महा-). — $^{d}$) T1 प्रहस्तस्य (for चिक्षेपास्य).

C 3.16381
B 3 286 3
K. 3.287 3

अभिमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ॥ ३
पतन्त्या स तया वेगाद्राक्षसोऽशनिनादया ।
हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ॥ ४
तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरम् ।
अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ॥ ५
तस्य मेघोपमं सैन्यमापतद्भीमदर्शनम् ।
दृष्ट्वैव सहसा दीर्णा रणे वानरपुंगवाः ॥ ६
ततस्तान्सहसा दीर्णान्दृष्ट्वा वानरपुंगवान् ।
निर्याय कपिशार्दूलो हनूमान्पर्यवस्थितः ॥ ७
तं दृष्ट्वावस्थितं संख्ये हरयः पवनात्मजम् ।
वेगेन महता राजन्संन्यवर्तन्त सर्वशः ॥ ८
ततः शब्दो महानासीत्तुमुलो लोमहर्षणः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ ९
तस्मिन्प्रवृत्ते संग्रामे घोरे रुधिरकर्दमे ।
धूम्राक्षः कपिसैन्यं तद् द्रावयामास पत्रिभिः ॥ १०
तं राक्षसमहामात्रमापतन्तं सपत्नजित् ।
तरसा प्रतिजग्राह हनूमान्पवनात्मजः ॥ ११
तयोर्युद्धमभूद्घोरं हरिराक्षसवीरयोः ।
जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव ॥ १२
गदाभिः परिघैश्चैव राक्षसो जघ्निवान्कपिम् ।
कपिश्च जघ्निवान्रक्षः सस्कन्धविटपैर्द्रुमैः ॥ १३
ततस्तमतिकायेन साश्वं सरथसारथिम् ।

---

**4** $^{a}$) $Dc_2$ $D_1$ $T_2$ तथा (for तया). $T_1$ वीरो (for वेगाद्). — $^{b}$) B Dc Dn $D_{2-4. 6}$ $T_1$ $G_3$ °शनिवेगया; $T_2$ $G_{1. 2. 4}$ $M_1$ °शनिना यथा. — $^{c}$) $B_3$ $Dc_2$ कृत्तोत्तमांगो; M हृतोत्तमांगे. — $^{d}$) $K_{3. 4}$ (second time) वातभग्न. — After 4, $D_2$ ins.:

1280* कृत्तोत्तमाङ्गं सह्यं तदनयानुगतासवाम् ।
पपात रक्षः सहसा वातरुग्ण इव द्रुमः ।
[(L. 2) Posterior half = $4^{d}$.]

**5** $^{a}$) $T_1$ M संखे; $G_{2. 4}$ संघे (for संख्ये). — $^{b}$) $G_1$ वाहिनीपतिं (for क्षण°). — $^{cd}$) $M_1$ transp. धूम्राक्षो and वेगेन. K ($K_4$ second time) Dc $D_{1. 2. 5}$ नदन्; $G_1$ हरीन् (for कपीन्).

**6** $^{b}$) $G_{1. 2. 4}$ उत्पतद् (for आपतद्).

**7** $T_1$ om. $7^{ab}$. — $^{a}$) $K_{1. 2}$ चीर्णान् (for दीर्णान्). — After $7^{ab}$, $K_4$ *repeats* (with v.l.) $3^{a}$–$7^{b}$. — $^{c}$) K $D_{1. 5}$ निवार्य; B Dc Dn $D_{2-4. 6}$ $G_{3. 4}$ निर्ययौ (for निर्याय). — $^{d}$) $K_4$ $D_{1. 5}$ हनुमान्. $B_2$ Dn $D_{3. 4. 6}$ मारुतात्मजः (for पर्यव°).

**8** $^{a}$) $D_1$ सैन्ये; $T_1$ M संखे; $G_{2. 4}$ संघे (for संख्ये). — $^{c}$) $B_{1-3}$ D (except $D_{1. 5}$) महत्या त्वरया राजन्. — $^{d}$) $K_1$ $B_4$ $D_{1. 5}$ अभ्यवर्त($K_{1. 2}$ °र्तं)त (for संन्य°). $K_1$ सर्वतः; $K_2$ सर्वदा.

**9** $^{a}$) $D_5$ तस्य (for ततः). — $^{b}$) $K_4$ $Dc_2$ तुमलो. $K_2$ S (except $T_2$ $G_{2. 3}$) रोम° (for लोम°).

**10** $^{c}$) $B_1$ तु (for तद्). — $^{d}$) S (except $G_3$) वीर्यवान् (for पत्रिभिः).

**11** $^{a}$) B Dn $D_{3. 4. 6}$ $G_3$ स रक्षो (for राक्षस-). — $^{b}$) $G_{2. 4}$ द्रावयंतं (for आपतन्तं). — $^{cd}$) $K_3$ $Dc_1$ $D_{1. 5}$ $T_2$ M हनुमान् (for हनू°). $B_{1. 3. 4}$ $D_5$ T $G_{1. 2. 4}$ M मारुता° (for पवना°). $B_2$ Dn $D_{3. 4. 6}$ $G_3$ प्रतिजग्राह हनुमांस्तरसा पव°. — $11^{d}$ = (var.) $14^{d}$.

**12** $^{a}$) $T_2$ महद् (for अभूद्). K Dc $D_2$ तयोः समभवद्युद्धं. — $^{b}$) $K_{1. 2}$ कपिराक्षस°; $T_1$ हरिराक्षसवीर्ययोः; $G_{1. 2. 4}$ °सैन्ययोः. — $^{c}$) $K_2$ जिगीषितोर्; Dc $D_2$ °र्षयोर्; $G_2$ जिहीर्षतोर्; $G_4$ जिगीर्षतोर्. $Dc_2$ $D_2$ $T_1$ $G_{1. 2. 4}$ यथा°; M अथा° (for युधा°). — $^{d}$) $K_{3. 4}$ $Dc_1$ $D_{2. 3. 6}$ इंद्रप्रह्लादयोरिव; $Dn_2$ शक्रप्रह्लाद°.

**13** $^{a}$) Dc $D_2$ पट्टिशैश्चैव; $T_1$ परिघाभिश्च; $G_1$ परिघैश्चापि. — $^{d}$) $K_{1. 2}$ सकर्ष($K_2$ °कंद)विटपद्रुमैः; $M_1$ सुस्कंधविटपैर्द्रुमैः. — After 13, $B_{2-4}$ Dc $D_{2. 5}$ ins.:

1281* शिरस्यभ्यहनत्पूर्वं कालया च पुनः पुनः ।
तृणराजेन महता लोहसारथिभेदिना ।
[(L. 1) $B_{2-4}$ शिरसा (for शिरसि). $D_5$ [अ]भिहतः (for [अ]भ्यहनत्). $B_2$ गदया; $B_3$ लीलया; $B_4$ $D_5$ कीलया (for कालया).]

**14** $D_3$ om. 14. — $^{a}$) $K_{1. 2}$ अतिकायोपि; B अति($B_{1. 2}$ °भि)कोपेन (for अतिकायेन). — $^{c}$) $K_1$ Dc $D_1$ प्राज्ञो; $K_2$ B $D_{4. 6}$ क्रुद्धो; $K_{3. 4}$ $D_2$ राजन्; $D_5$ प्राज्ञो (for धीमान्). $T_2$ धूम्राक्षमाजघानाशु. — $^{d}$) = (var.) $11^{d}$. $K_3$ Dc $D_{1. 5}$ हनुमान्; $T_2$ $G_{1. 2. 4}$ द्रुमेण (for हनूमान्). S (except $G_3$) पवना° (for मारुता°); cf. v.l. 11. — After 14, $Dc_2$ *repeats* $12^{ab}$. $Dc_2$ cont.: $B_{3. 4}$ ins. after 14:

1282* वेगेन महताविष्टो राक्षसानां महद्बलम् ।
योधयामास राजेन्द्र शिलावर्षैः समन्ततः ।

धूम्राक्षमवधीद्धीमान्हनूमान्मारुतात्मजः ॥ १४
ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमम् ।
हरयो जातविस्रम्भा जघ्नुरभ्येत्य सैनिकान् ॥ १५
ते वध्यमाना बलिभिर्हरिभिर्जितकाशिभिः ।
राक्षसा भग्नसंकल्पा लङ्कामभ्यपतन्भयात् ॥ १६
तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः ।
सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ॥ १७
श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि ।
धूम्राक्षं च महेष्वासं ससैन्यं वानरर्षभैः ॥ १८
सुदीर्घमिव निःश्वस्य समुत्पत्य वरासनात् ।
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः ॥ १९
इत्येवमुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः ।
शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् ॥ २०
प्रबोध्य महता चैनं यत्नेनागतसाध्वसः ।
स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः ।
ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् ॥ २१
धन्योऽसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी ।
य इमं दारुणं कालं न जानीषे महाभयम् ॥ २२
एष तीर्त्वार्णवं रामः सेतुना हरिभिः सह ।
अवमन्येह नः सर्वान्करोति कदनं महत् ॥ २३
मया ह्यपहृता भार्या सीता नामास्य जानकी ।
तां मोक्षयिषुरायातो बद्ध्वा सेतुं महार्णवे ॥ २४
तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः ।
तस्य नान्यो निहन्तास्ति त्वदृते शत्रुकर्शन ॥ २५
स दंशितोऽभिनिर्याय त्वमद्य बलिनां वर ।
रामादीन्समरे सर्वाञ्जहि शत्रूनरिंदम ॥ २६ C 3. 16405 B. 3. 286. 27 K. 3. 287. 26

---

[ (L. 2) $Dc_2$ वेगवान्पवनात्मजः ( for the posterior half ). ] Thereafter $B_{3.4}$ *repeat* $12^{ab}$ ( v.l. °सेनयोः for °वीरयोः ).

**15** $^a$) $B_4$ निसृतं ( for निहतं ). — $^b$) $K_{3.4}$ $B_4$ $D_1$ S ( except $T_1$ $G_3$ ) राक्षसात्मजं ; $D_5$ राक्षसं युधि ( for राक्षसो° ). — $^c$) $K_{2.4}$ Dc जातविश्रंभा ; $D_5$ °संरंभा. — $^d$) $K_3$ $B_1$ $Dc_1$ अन्योन्य- ; $B_{2.4}$ अन्येस्य ; $D_{2.4-6}$ $G_3$ अन्ये च ; $T_2$ $G_{1.2.4}$ तस्य हि ; M तस्यानु- ( for अभ्येत्य ). $T_1$ निजघ्नुस्तस्य सैनिकान्.

**16** $^{ab}$) $K_{1.2}$ B D ( except Dc $D_{1.2}$ ) $T_2$ $G_{1.3}$ transp. बलिभिर् and हरिभिर्.

**17** $^a$) $B_2$ प्राप्य ; $D_3$ भीमा ( for भग्ना ). — $^c$) $T_1$ सर्वैं ; $G_2$ °र्वा ( for °र्वं ).

**18** $^a$) K Dc $D_2$ च ( for तु ). — $^d$) K $D_5$ सहसैन्यं वनक्षयैः ; $D_1$ स(ह)सैन्यं प्लवगैर्हतं ; S ( except $G_3$ ) ससैन्यं सह राक्षसैः.

**19** $^a$) $K_2$ स दीर्घम् ; $T_1$ M अशीत ; $T_2$ $G_{1.2.4}$ अभीत ( for सुदीर्घम् ). $D_5$ अथ ( for इव ). — $^b$) $K_4$ समुत्प्लुत्य.

**20** $^c$) $B_1$ Dc $D_2$ अतिनिद्रांधं ; $G_{1.2.4}$ अपि निद्रालुं. — $^d$) $D_1$ महाबलं ( for अबोधयत् ).

**21** $D_1$ om. 21. — $^b$) $K_2$ नागतो यत्नसाध्वसः ; $T_1$ $G_{1.2.4}$ यत्नेन गत° ; $T_2$ यत्नेनैव स°. — $^d$) $K_4$ अनिद्रं ; $T_2$ अरिघ्नं ( for विनिद्रं ). $K_{1.2}$ राक्षसेश्वरः ; $T_2$ राक्षसाधिपं. — $^f$) Dc $D_2$ महाबलः.

**22** $^a$) $T_2$ सेव्यते ( for यस्य ते ). — $^b$) $M_2$ यद् ( for [इ]यम् ). — $^c$) $K_2$ इदं मे ; $D_5$ $G_4$ $M_1$ य इदं ( for य इमं ). B Dn $D_{3.4.6}$ $G_3$ य इदं दारुणाकारं. — $D_3$ om. $22^d$–$24^b$. — $^d$) S ( except $G_3$ ) भयावहं ( for महाभयम् ).

**23** $D_3$ om. 23 (cf. v.l. 22). — $^a$) $B_2$ एषभीर्दुस्तरं रामः. — $^c$) $T_1$ M अवमत्येह ; $G_{1.2.4}$ अभिपत्ये°. Dc $D_2$ श्रीमान् ( for सर्वान् ).

**24** $D_3$ om. $24^{ab}$ ( cf. v.l. 22 ). — $^a$) $K_1$ $T_1$ [अ]प्यापहृता ; $K_2$ [अ]स्यापि हृता ; $K_4$ ह्यपकृता ; $B_3$ D ( except $D_{1-3.5}$ ) $G_3$ त्वपहृता. — $^b$) $K_{1.2}$ $B_1$ रामस्य ( for नामास्य ). $G_1$ नाम्ना सीतास्य जानकी. — $^c$) $K_{1.3.4}$ Dc $D_2$ मोचयिष्णुर् ( $K_3$ $Dc_1$ °षुर् ; $Dc_2$ $D_2$ °तुर् ) ; $K_2$ $D_1$ $G_{1.2.4}$ मोच( $G_{1.2.4}$ °क्ष )यितुम् ; B Dn $D_{4-6}$ $T_2$ $G_3$ नेतुं स इह.

**25** $^a$) $K_{1-3}$ चैष ( for चैव ). $K_4$ प्रहस्तो यो ; $B_1$ $D_1$ प्रहस्ताद्या ( for °स्तादिर् ). — $^b$) $T_1$ महांश्च ( for महान्नः ). $B_1$ $D_1$ महांतः स्वजना हताः ; $B_4$ महात्मा सुजनो हतः. — $^c$) $T_1$ हि ( for नि- ). — $^d$) $K_4$ B Dn $D_{4.6}$ $G_3$ त्वामृते. $K_1$ शत्रुकर्षन ; $K_2$ B $D_{1.3.5}$ °कर्षण.

**26** $^a$) $K_{1.2}$ $T_1$ M स दंसितो ; $D_3$ तद्दंशितो ; $T_2$ दंशितोपि ; $G_{1.2.4}$ दंसितो हि ( for स दंशितो ). $K_{1.2}$ $D_3$ विनिर्याहि ; $K_3$ विनिर्यात्वा ; $K_4$ Dc $D_{1.2.5}$ विनिर्याय ; $B_{3.4}$ $G_{2.4}$ [ऽ]भिनिर्याहि ; $T_2$ $G_1$ [ऽ]त्र ( $G_1$ °द्य ) निर्याहि ( for ऽभिनिर्याय ). — $^b$) $K_{1-3}$ Dc $D_{1.5}$ बलेन ; $B_4$ त्वमस्य ; $D_3$ जवेन ; $T_1$ त्वदन्य ( for त्वमद्य ). $K_1$ Dc $D_{1.2}$ वरः. $G_1$ कुंभकर्ण महाबल. — $^{cd}$) $K_{1-3}$ $Dc_2$ $D_{1-3.5}$ transp. सर्वान् and शत्रून्. $K_4$ रामादीन्समरे शत्रून्सर्वाञ्जहि अरिमर्दन.

C. 3. 16405 B 3. 286 27 K. 3. 287. 27 दूषणावरजौ चैव वज्रवेगप्रमाथिनौ ।
तौ त्वां बलेन महता सहितावनुयास्यतः ॥ २७
इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम् ।
संदिदेशेतिकर्तव्ये वज्रवेगप्रमाथिनौ ॥ २८
तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ ।
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

# २७१

मार्कण्डेय उवाच ।
ततो विनिर्याय पुरात्कुम्भकर्णः सहानुगः ।
अपश्यत्कपिसैन्यं तज्जितकाश्यग्रतः स्थितम् ॥ १
तमभ्येत्याशु हरयः परिवार्य समन्ततः ।
अभ्यघ्नंश्च महाकायैर्बहुभिर्जगतीरुहैः ।
करजैरतुदंश्चान्ये विहाय भयमुत्तमम् ॥ २
बहुधा युध्यमानास्ते युद्धमार्गैः प्लवंगमाः ।
नानाप्रहरणैर्भीमं राक्षसेन्द्रमताडयन् ॥ ३
स ताड्यमानः प्रहसन्भक्षयामास वानरान् ।
पनसं च गवाक्षं च वज्रबाहुं च वानरम् ॥ ४

**27** [a]) K Dc2 Dn2 D1. 2. 5 चापि; G2 एतौ (for चैव). — [b]) =28[d]. Dc2 Dn2 चक्र°; D2 वक्र°. — B1 D1 T G1 M om. (hapl.) 27[c]–28[d]. — [c]) G2. 4 सैन्येन (for बलेन).
**28** B1 D1 T G1 M om. 28 (cf. v.l. 27). — [a]) K4 उक्त्वा रक्षःपतिः काले. — [b]) K1. 2 महाबलं (for तर°). — [c]) K B (B1 om.) Dc D5 °कर्तव्यं. — 28[d] =27[b].
**29** [a]) K1. 2 ततो; K4 च तौ (for तु तौ). — [b]) B2 दूषणात्मजौ. — [d]) K3 तूर्णीं; G3 तूर्यं (for तूर्णं).

Colophon. — *Major parvan:* K2 T G2. 4 आरण्य. — *Sub-parvan:* N G3 (all om. sub-parvan name) mention only रामो (K2 श्रीरामो)पाख्यान. — *Adhy. name:* M2 प्रहस्तधूम्राक्षवधः. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 284; Dn3 285; D1 288; T1 M2 (orig.) 276; T2 G4 M (M2 *inf. lin.*) 274; G1 271; G2 273. — *Śloka no.:* Dn1. n2 29; Dn3 30; D1 27.

## 271

**1** [a]) Dc D2 T G1. 2. 4 M [ऽ]भिनिर्याय. B Dn D3. 4. 6 G3 ततो निर्याय स्व (B4 स)पुरात्; D1 ततो विनिर्ययौ गत्वा. — [b]) Dc D1. 3 सहानुजः. — [c]) K1. 2 स; B1 तु (for तज्). — [d]) K Dc D1. 2. 5 [अ]भितः (for [अ]ग्रतः). — After 1, N (except K2) G1. 3 ins.:
1282a* स वीक्षमाणस्तत्सैन्यं रामदर्शनकाङ्क्षया ।
अपश्यच्चापि सौमित्रिं धनुष्पाणिं व्यवस्थितम् ।
[(L. 1) K3. 4 B Dc Dn1. n2 D2. 3. 5 स वीक्ष्य°; D1 समीक्ष्य°. — (L. 2) K1. 3 Dc D2. 5 °दारात्; K4 °ह्राजन्; B1 °दपि; D1 °दग्रे (for °च्चापि). K1. 4 Dc D1. 2. 5 अव° (for व्यव°).]
**2** [a]) K1. 3. 4 B3 D1. 3 [अ]थ (for [आ]शु). Dc D1 कपयः (for हरयः). — [b]) K2 °वक्रः; B D (except D1) G3 °वव्रुः (for °वार्य). — After 2[ab], S (except G3) ins.:
1283* शैलवृक्षायुधा नादानमुञ्चन्भीषणास्ततः ।
[T2 अतिभीषणान् (for भीषणास्ततः).]
— [c]) K1 D1 महाकायं; K2 °कार्यं; D3 °कार्यैर् (for °कायैर्). — [d]) D1 धरणीधरैः (for जगती°). — [e]) K4 करजैश्च रदैश्चान्ये; B1 करजैरहनंश्चापि. — [f]) T1 विहसायुधमुत्तमं.
**3** [a]) K3 G1 युध्यमानस्; B4 G2. 4 वध्यमानास्. — [c]) K3 B Dn D1. 3. 4. 6 G3 भीमै (for भीमं).
**4** M1 om. (hapl). 4[b]–9[a]. — [b]) T1 ताड° (for भक्ष°). — [c]) K1. 2 वनषंडं; K3 Dc D1 वनं चंडं; K4 D5 M2 वनचंडं; B3. 4 चलं चंडं; D3 बलं चंडं; T1 उरुचंडं (for पनसं च). K Dc D1. 5 वनाक्षं; B3. 4 चलाख्यं; D3 बलाख्यं (for गवाक्षं). B1. 2 Dn D4. 6 G3 बलं चंडबलाख्यं च; D2 घनं चंडत्वनाक्षं च. — [d]) K4 वेत्र°; D1 बहु°; G4 °मुष्टिं (for वज्र°).
**5** M1 om. 5 (cf. v.l. 4). — [a]) K3 Dc D3 T1 M2 तं; T2 G1. 2. 4 ते (for तद्). K4 व्यथितं; D1 विषमं; T1 ह्यधिकं; G1. 2. 4 व्यथिताः (for व्यथनं). — [b]) G1. 2. 4 धीमतः (for रक्षसः). — [c]) T1 °भ्रांतास् (for °त्रस्तास्).

तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य रक्षसः ।
उदक्रोशन्परित्रस्तास्तारप्रभृतयस्तदा ॥ ५
तं तारमुच्चैः क्रोशन्तमन्यांश्च हरियूथपान् ।
अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः ॥ ६
ततोऽभिपत्य वेगेन कुम्भकर्णं महामनाः ।
शालेन जघ्निवान्मूर्ध्नि बलेन कपिकुञ्जरः ॥ ७
स महात्मा महावेगः कुम्भकर्णस्य मूर्धनि ।
बिभेद शालं सुग्रीवो न चैवाव्यथयत्कपिः ॥ ८
ततो विनद्य प्रहसञ्शालस्पर्शविबोधितः ।
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् ॥ ९
ह्रियमाणं तु सुग्रीवं कुम्भकर्णेन रक्षसा ।
अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः ॥ १०
सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम् ।
प्राहिणोत्कुम्भकर्णाय लक्ष्मणः परवीरहा ॥ ११
स तस्य देहावरणं भित्त्वा देहं च सायकः ।
जगाम दारयन्भूमिं रुधिरेण समुक्षितः ॥ १२
तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरम् ।
कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः ।
अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् ॥ १३
तस्याभिद्रवतस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ ।
चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ॥ १४
तानप्यस्य भुजान्सर्वान्प्रगृहीतशिलायुधान् । C. 3. 16425 B. 3. 287. 17 K. 3. 288. 18

---

— $^{d}$) $G_{1.4}$ ताराप्रभृतयस्. K $B_{1.3}$ Dc $D_{1.2.5}$ $T_1$ $M_2$ ततः; $B_4$ तथा (for तदा).

**6** $M_1$ om. 6 (cf. v.l. 4). — $^{a}$) $B_2$ Dn $D_{3.4.6}$ $G_3$ तानुच्चैः क्रोशतः ($D_4$ °शगः) सैन्यात्. — $^{b}$) $B_2$ Dn $D_{4.6}$ $G_3$ श्रुत्वा स (for अन्यांश्च). $Dn_3$ °यूथपः. — $^{c}$) $K_{1-3}$ श्रुत्वा (for [अ]भि-).

**7** $M_1$ om. 7 (cf. v.l. 4). — $^{a}$) $B_{1.4}$ Dn $D_6$ $T_1$ $G_3$ निपत्य (for ऽभिपत्य). — $^{b}$) $Dn_2$ कुंभकर्णौ. — $^{c}$) $K_{1.2}$ $B_3$ $T_1$ $G_{1.2.4}$ $M_2$ सलेन; $T_2$ तलेन (for शालेन). $B_2$ $Dn_1$. $n_2$ $D_6$ [आ]जघ्निवान्. — $^{d}$) $T_1$ तरुणेन स वानरः; $T_2$ $G_{2.4}$ तरुणा स च वानरः; $G_1$ तरुणा वानराधिपः.

**8** $M_1$ om. 8 (cf. v.l. 4). — $^{a}$) K $B_{1.3}$ Dc $D_{1.2}$ $M_2$ महावेगं. — $D_4$ om. (hapl.) $8^{b}$–$9^{c}$. — $^{c}$) $K_1$ $B_{2.3}$ S (except $G_3$) सालं; Dc $D_2$ गात्रं (for शालं). — $^{d}$) Dc $D_2$ चिराद्; $D_3$ $T_1$ चैनं (for चैव). $K_4$ व्यचलत्; Dc व्यथयत् (for [अ]व्यथयत्). $B_{1.3}$ क्वचित् (for कपिः).

**9** $M_1$ om. $9^{a}$ (cf. v.l. 4); $D_4$ om. $9^{abc}$ (cf. v.l. 8). — $^{a}$) $K_2$ B Dn $D_6$ $G_3$ सहसा (for प्रहसन्). — $^{b}$) $B_3$ S (except $G_3$) सालस्पर्श-. $T_1$ -निबोधितः; $M_2$ -विपोथितः. — $^{d}$) $K_1$ महद्; $G_4$ [ऽ]हनद् (for ऽहरद्).

**10** $^{b}$) $K_4$ दृष्ट्वा वायुसुतो बली. — After $10^{ab}$, $K_4$ $D_2$ ins.:

1284* गच्छन्संबोधयामास प्रहारेणाल्पचेतसम् ।
ततः संलब्धसंज्ञस्तु हृत्वा कर्णोष्ठनासिकाम् ।
सुग्रीवः कुम्भकर्णस्य जगाम हरिवाहिनीम् ।
अथ क्रुद्धः कुम्भकर्णो मिश्रितान्हरिराक्षसान् ।
भक्षयामास बलवान्ममर्द पदयोरपि । [5]
भक्ष्यमाणान्हरीन्सर्वान्कुम्भकर्णेन रक्षसा ।

— $^{c}$) $B_{1-3}$ T $G_1$ M अभ्यपतद् (for अभ्यद्रवद्). $K_2$ वीर. — $^{d}$) MSS. °नंदन, °मर्दनः, °नंदनं also (for °नन्दनः).

**11** $^{a}$) $D_5$ °गम्य (for °पत्य). — $^{b}$) $K_3$ वज्र° (for रुक्म°). — $^{c}$) $D_4$ प्रहिणोत्.

**12** $^{a}$) $B_4$ देहाभरणं; $M_2$ वेगावरणं. — $^{b}$) $D_1$ स (for च). — $^{c}$) $G_1$ प्रजवाद् (for जगाम). $B_3$ उर्वीं (for भूमिं). $T_2$ जवाददारयन्भूमिं; $G_{2.3}$ जवाद्व्यदारयन्भूमिं.

**13** $^{a}$) K Dc $D_{1.2.5}$ $G_3$ transp. तथा and स. $Dn_1$ $T_1$ $M_1$ तथा संभिन्न°; $T_2$ $G_{1.2.4}$ तदा संभिन्न°. — $^{b}$) $G_1$ हरी° (for कपी°). — After $13^{ab}$, S (except $G_3$) ins.:

1285* वेगेन महताविष्टस्तिष्ठ तिष्ठेति चाब्रवीत् ।

— $D_5$ om. (hapl.) $13^{e}$–$15^{b}$. — $^{f}$) $T_1$ प्रगृह्य (for उद्यम्य).

**14** $D_5$ om. 14 (cf. v.l. 13). — $^{a}$) B Dn $D_{3.4.6}$ $G_3$ अभि($B_2$ °पि)पततस् (for °द्रवतस्). — $^{b}$) $T_1$ $G_1$ शरा° (for क्षुरा°). K Dc $D_{1.2}$ भुजौ (for करौ). — $^{c}$) $D_1$ $T_2$ $G_{1.2.4}$ निशिताभ्यां स ($D_1$ °भ्यां च; $G_4$ °भ्यासः) (for °ग्राभ्यां).

**15** $D_5$ om. $15^{ab}$ (cf. v.l. 13). — $^{a}$) $K_4$ तानपश्य; T $G_{1.2.4}$ ततो ह्यस्य (for तानप्यस्य). — $^{b}$) $D_1$ प्रसृतोग्र-शिला°. — $^{cd}$) K Dc $D_{1.2}$ शरै° (for क्षुरै°). S (except $T_2$ $G_3$) लब्धलक्षः. K $B_2$ Dc $D_{1.2}$ transp. लब्धलक्षं and सौमित्रिः. $K_2$ प्रत्यदर्शन (sic); $T_1$ प्रियदर्शनः; $T_2$ $G_{2.4}$ प्रविदर्शयन्; $G_1$ संप्र°.

**16** $^{a}$) $D_3$ बभूव च (for स बभूव). — After $16^{ab}$, $G_1$ ins.:

C. 3. 16425 B 3 287 17 K 3. 288 18 क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् ॥ १५
स बभूवातिकायश्च बहुपादशिरोभुजः ।
तं ब्रह्मास्त्रेण सौमित्रिर्ददाहाद्रिचयोपमम् ॥ १६
स पपात महावीर्यो दिव्यास्त्राभिहतो रणे ।
महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ॥ १७
तं दृष्ट्वा वृत्रसंकाशं कुम्भकर्णं तरस्विनम् ।
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन्भयात् ॥ १८
तथा तान्द्रवतो योधान्दृष्ट्वा तौ दूषणानुजौ ।
अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावताम् ॥ १९
तावाद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ ।
प्रतिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः ॥ २०
ततः सुतुमुलं युद्धमभवल्लोमहर्षणम् ।
दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः ॥ २१
महता शरवर्षेण राक्षसौ सोऽभ्यवर्षत ।
तौ चापि वीरौ संक्रुद्धावुभौ तौ समवर्षताम् ॥ २२
मुहूर्तमेवमभवद्वज्रवेगप्रमाथिनोः ।
सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः ॥ २३
अथाद्रिशृङ्गमादाय हनूमान्मारुतात्मजः ।
अभिद्रुत्याददे प्राणान्वज्रवेगस्य रक्षसः ॥ २४
नीलश्च महता ग्राव्णा दूषणावरजं हरिः ।
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः ॥ २५
ततः प्रावर्तत पुनः संग्रामः कटुकोदयः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ २६
शतशो नैर्ऋतान्वन्या जघ्नुर्वन्यांश्च नैर्ऋताः ।
नैर्ऋतास्तत्र वध्यन्ते प्रायशो न तु वानराः ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

---

1286* सौमित्रिरद्भुतं दृष्ट्वा क्रूरः समरकोविदः ।

— $^{d}$) K1. 2 जघान परमास्त्रवित्; K3. 4 दुःस(K4 ददा)हाद्रिचयोपमं; B1 अविध्यत्पर्वतो°; B2. 3 Dc D2–4. 6 ददारा(Dc D2 °हा)द्रिवरो°; B4 Dn ददाराद्रिचयो°; D5 ददाहायश्चयो°; G2. 4 ददाह त्रिपुरो°.

**17** K1. 2 om. 17$^{a}$–19$^{b}$. — $^{a}$) T2 G1. 2. 4 बभूव (for पपात). — $^{b}$) Dn2 दिव्यास्त्रनिहतो. — $^{c}$) K4 D1 महानशनिनिर्द(D1 °संद)ग्धः. — $^{d}$) K3 पादपोवाव (read °प)-तद्भुवि.

**18** K1. 2 om. 18 (cf. v.l. 17). — $^{a}$) D1 मत्वा (for दृष्ट्वा). Dc वज्र° (for वृत्र°).

**19** K1. 2 om. 19$^{ab}$ (cf. v.l. 17). — $^{a}$) K4 Dc D1. 2. 5 T1 G1 M ततस् (for तथा). G1 तं (for तान्). T1 G1 M सैन्यान् (for योधान्). T2 G2. 4 ततस्तद्विद्रुतं (T2 °त्रासितं) सैन्यं. — $^{b}$) K3 B2 (m as in text). 3 Dc दूषणात्मजौ. — $^{c}$) K4 [अ]त्र; T2 G1. 2. 4 च (for [अ]थ). K1. 2 दूषणावरजौ चाथ.

**20** $^{a}$) K1 तावभिवेगः सक्रुद्धौ; K2 तावभिवेगसं°; D1 ततो द्रवंतौ सं°; T2 G1. 2. 4 द्रवं(T2 °वि)तौ सहसा क्रुद्धौ. — $^{c}$) B1. 2 Dn D4. 6 G3 अभिजग्राह. — $^{d}$) K4 D1 कृतोद्योगः; B1. 2. 4 D3. 4 वितु(B4 °त्त)दंतौ; Dc वितुद्योभौ; T2 G2. 4 वध्यमानः; G1 कृत्वा नादं (for विनद्योभौ).

**21** 21$^{ab}$ = (var.) Rām. 3. 25. 34$^{cd}$. — $^{a}$) K4 D1 तु तुम(D1 °मु)लं; D2 सुतुमलं; T2 G1. 2. 4 समभवद् (for सुतुमुलं). — $^{b}$) T1 सुमहद्रोम°; T2 G1. 2. 4 तुमुलं रोम°; M2 अभवद्रोम°.

**22** $^{b}$) K1 राक्षसो; G4 महता (for राक्षसौ). D1 सोभ्यवर्षयत्; D3 °वर्षतां; T2 M1 °वर्तत (for °वर्षत). G1 राक्षसेभ्योववर्षत. — $^{d}$) T2 G1. 2. 4 transp. उभौ and तौ. B1 तु; B3 D3. 4. 6 T1 M तं; Dc2 D2 तां; D5 स (for तौ). K1. 3. 4 समभिवर्षतां; K2 D1 संपर्यवर्षतां (for तौ सम°). B2 शरवर्ष°; B4 समकर्ष°; D5 प्रतिवर्ष°; T1 M प्रत्यवर्ष°; T2 अभ्यवर्ष°; G1. 2. 4 संप्रवर्ष° (for समवर्ष°).

**23** $^{a}$) B1 मुहुर्तमभवद्युद्धं. — $^{c}$) Some MSS. महाबाहो. B1 प्रतिजग्राह सौमित्रिः.

**24** $^{b}$) K4 B (B1 damaged) Dc Dn2 D1. 2. 5. 6 T2 G1. 3 हनु° (for हनू°). — $^{c}$) T1 G1. 2. 4 [अ]हन(G1 °र)द्वीरो (for [आ]ददे प्राणान्). — $^{d}$) T2 G1. 2. 4 वज्रवेगं महाबलं.

**25** K1 transp. 25$^{ab}$ and 25$^{cd}$. — $^{a}$) B1 नीलस्तु सुमहाग्राव्णा; S (except G3) नीलश्च सहसा गृह्य. — $^{b}$) G1 गिरिं (for हरिः). — $^{c}$) T2 अनु° (for अभि°).

**26** K1 om. 26; K4 om. 26$^{ab}$. — $^{b}$) G1 कंटको° (for कटुको°).

**27** T1 om. 27$^{cd}$. — $^{d}$) B2. 3 Dn D3. 4. 6 G3 प्रायेण (for °यशो). K2 [ऽ]नंत- (for न तु).

# २७२

मार्कण्डेय उवाच ।
ततः श्रुत्वा हतं संख्ये कुम्भकर्णं सहानुगम् ।
प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम् ॥ १
पुत्रमिन्द्रजितं शूरं रावणः प्रत्यभाषत ।
जहि राममित्रघ्न सुग्रीवं च सलक्ष्मणम् ॥ २
त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम् ।
जित्वा वज्रधरं संख्ये सहस्राक्षं शचीपतिम् ॥ ३
अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः ।
जहि शत्रूनमित्रघ्न मम शस्त्रभृतां वर ॥ ४
रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ ।
समर्थाः प्रतिसंसोढुं कुतस्तदनुयायिनः ॥ ५
अकृता या प्रहस्तेन कुम्भकर्णेन चानघ ।
खरस्यापचितिः संख्ये तां गच्छस्व महाभुज ॥ ६
त्वमद्य निशितैर्बाणैर्हत्वा शत्रून्ससैनिकान् ।
प्रतिनन्दय मां पुत्र पुरा बद्ध्वेव वासवम् ॥ ७
इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशितः ।
प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं प्रति ॥ ८
तत्र विश्राव्य विस्पष्टं नाम राक्षसपुंगवः ।
आह्वयामास समरे लक्ष्मणं शुभलक्षणम् ॥ ९
तं लक्ष्मणोऽप्यभ्यधावत्प्रगृह्य सशरं धनुः ।
त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगं यथा ॥ १०
तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः । C. 3. 16448 B. 3. 288. 11 K. 3. 289. 11

---

Colophon. — *Major parvan:* K1. 2 Dn2 T2 G2. 4 आरण्य. — *Sub-parvan:* K1. 3. 4 B D G1. 3 M1 (all om. sub-parvan name) mention only रामो(G1 M1 रामायणो)पाख्यान. — *Adhy. name:* B4 G1 M2 कुंभकर्णवधः. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 285; Dn3 286; D1 289; T1 M2 (orig.) 277; T2 G4 M (M2 *inf. lin.*) 275; G1 272; G2 274. — *Śloka no.:* Dn D1 29.

## 272

**1** ab) K B1 Dc D1. 2. 5 महाबलं (for सहा°). S (except G3) कुंभकर्णं हतं श्रुत्वा सानुगं (T1 °जं) राक्षसाधिपः. — c) B4 प्रमुखं (for प्रहस्तं). — d) Dc D2 om. च. B4 धूम्रमत्तोतिते°; M2 धूम्राक्षं चामितौजसं.

**2** a) B Dn D4. 6 G1. 3 वीरं (for शूरं). — c) K4 हरिं (for जहि). B4 वज्रधरं (for अमित्रघ्न). — d) Dc1 D1 सहलक्ष्मणं (for च सलक्ष्म°).

**3** a) G1 पुत्रेण (for सत्पुत्र). — c) S (except T2 G3) संखे.

**4** a) K2. 3 °र्हित- (for °र्हितः). K4 प्रकाशं त्वं (for °शो वा). — b) K1. 2 अस्त्र° (for दत्त°). — c) K2. 4 B1. 3 Dc D1. 2. 5 शत्रुम् (for शत्रून्). — d) D5 सर्व- for मम).

**5** b) T1 न वा; T2 G2. 4 [ऽ]पि च (for ऽनघ). — c) B1. 2 Dn D3. 4. 6 G3 प्रतिसोढुं च; Dc1 °संबाढुं; T2 °संवोढुं.

**6** a) K1. 3 B Dn3 D4. 6 G3 अगता या; K2 Dc Dn1. n2 D2. 3 आगता या; K4 अपयातः; D5 न गता या. — c) K1. 2 वीरस्य; K4 वैदग्ध्य-; D5 वैरस्य; G4 परस्य (for खरस्य). — d) N G3 गच्छ त्वं (for गच्छस्व).

**7** a) S (except G3) तम् (for त्वम्). — b) S (except G3) हत्वा शत्रुं ससैनिकं. — c) D5 प्रतिनंदस्व. — d) B4 येन (for पुरा). B1. 2. 4 Dn D3. 4. 6 G3 जित्वेव (for बद्ध्वेव).

**8** b) K1 आदाय (for आस्थाय). B1 दंशितैः; S (except T2 G3) दंसितः. — c) K4 [इं]द्रसदृशः (for [इ]न्द्रजिद्राजन्).

**9** a) K2 B D (except D1) T2 G3 ततो (for तत्र). K3 om. from विस्पष्टं up to 10b. K4 तत्र गत्वा महेश्वासो. — b) K (K3 om.) रामं (for नाम).

**10** K3 om. 10ab (cf. v.l. 9). — a) K4 T G1 [ऽ]प्यधावत्स; B2 Dn D1. 3. 4. 6 G3 [ऽ]भ्यधावच्च; G2. 4 ह्यभ्यधावत् (for [ऽ]प्यभ्यधावत्). B1 तं लक्ष्मणोभ्यापतत्तूर्णं; B4 तं लक्ष्मणोप्यभ्यधावंत (both hypermetric). — d) K1. 2 क्षुद्रमृगा; B1. 2 Dn G3 °मृगान्; D5 क्रुद्धो मृगं (for क्षुद्रमृगं).

**11** b) T1 उभयोर्; G4 तुमुलं (for सुमहज्). K1 °गृद्धिणैः; K2 D5 °गृद्धिणोः; D1 °गर्द्धिनोः; G1 °गृध्नुनोः.

C 3 16418
B. 3. 288. 11
K. 3. 289. 11

दिव्यास्त्रविदुषोस्तीव्रमन्योन्यस्पर्धिनोस्तदा ॥ ११
रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः ॥ १२
तत एनं महावेगैरर्दयामास तोमरैः ।
तानागतान्स चिच्छेद सौमित्रिर्निशितैः शरैः ।
ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन्वसुधातले ॥ १३
तमङ्गदो वालिसुतः श्रीमानुद्यम्य पादपम् ।
अभिद्रुत्य महावेगस्ताडयामास मूर्धनि ॥ १४
तस्येन्द्रजिदसंभ्रान्तः प्रासेनोरसि वीर्यवान् ।
प्रहर्तुमैच्छत्तं चास्य प्रासं चिच्छेद लक्ष्मणः ॥ १५
तमभ्याशगतं वीरमङ्गदं रावणात्मजः ।
गदयाताडयत्सव्ये पार्श्वे वानरपुंगवम् ॥ १६
तमचिन्त्य प्रहारं स बलवान्वालिनः सुतः ।
ससर्जेन्द्रजितः क्रोधाच्छालस्कन्धममित्रजित् ॥ १७
सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः ।
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् ॥ १८
ततो हताश्वात्प्रस्कन्द्य रथात्स हतसारथिः ।
तत्रैवान्तर्दधे राजन्मायया रावणात्मजः ॥ १९
अन्तर्हितं विदित्वा तं बहुमायं च राक्षसम् ।
रामस्तं देशमागम्य तत्सैन्यं पर्यरक्षत ॥ २०
स राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा ।
विव्याध सर्वगात्रेषु लक्ष्मणं च महारथम् ॥ २१
तमदृश्यं शरैः शूरौ माययान्तर्हितं तदा ।
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ ॥ २२
स रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः ।
व्यसृजत्सायकान्भूयः शतशोऽथ सहस्रशः ॥ २३
तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान् ।
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः ॥ २४

— $^{c}$) $G_1$ तूर्णम् (for तीव्रम्). — $^{d}$) $K_{1-3}$ $D_1$ $G_1$ तथा; Dc $D_2$ यथा (for तदा).

**12** $^{a}$) $K_3$ Dc $D_2$ रावण°; $B_4$ राघव° (for रावणि°). $B_1$ च (for तु). $B_1$ D (except Dc $D_{1.5}$) नैवं (for नैनं). — $^{b}$) $G_1$ विशोधयति. — $^{d}$) M अतिष्ठन् (for आतिष्ठद्).

**13** $^{a}$) $K_{1.2}$ तत्र त्वेनं; Dc $D_2$ तं पतंतं; Dc तत एवं; $T_2$ ततश्चैनं (for तत एनं). — $^{b}$) $D_5$ दारयामास. $B_1$ Dc S (except $T_1$ $G_3$) सायकैः (for तोमरैः). — $^{f}$) $K_4$ निपेतुर्; $D_1$ व्यतन्वन् (for न्यपतन्). $K_4$ $Dn_2$. $n_3$ $D_{3.4.6}$ $G_3$ धरणीतले. — After 13, S (except $G_3$) ins.:

1287* सायका रावणेराजौ शतशः शकलीकृताः ।

[ $T_1$ तोमरा (for सायका). $T_2$ रावणे राजन् (for °राजौ).]

**14** $^{a}$) $T_1$ ततोंगदो. M बालिसुतः. — $^{c}$) $K_1$ $B_{1-3}$ $D_2$ महावेगं.

**15** $^{a}$) S (except $G_3$ $M_1$) तम् (for तस्य). $G_{2.4}$ सुसंभ्रांतः. — $^{c}$) $G_1$ चास्य (for चापि).

**16** $^{a}$) $K_{1.2}$ अभ्याशे ($K_1$ by corr. °से) गतं; $K_{3.4}$ $B_{3.4}$ Dc $D_{1.4}$ अभ्यास°; $G_4$ अभ्याशाशतं. — $^{c}$) $B_1$ $D_3$m $T_2$ M ताडयामास; $D_3$ ताडयन्सव्ये.

**17** $^{a}$) $K_{1.2}$ सोभिचिंत्य; $D_1$ सोविचिंत्य. $K_{1.2}$ प्रहारे; $K_4$ $T_2$ प्रभावं. $K_{1.2}$ $D_1$ तं (for स). — $^{b}$) $G_1$ वालिनंदनः; M बालिनः सुतः. — $^{c}$) $T_2$ स तथा (for ससर्ज). $K_3$ $G_{1.2.4}$ [इं]द्रजितं; $D_1$ $T_1$ [इं]द्रजिति. Dc $D_2$ कोपात्; $G_1$ घोरं (for क्रोधात्). — $^{d}$) $K_2$ $D_4$ S (except $G_3$) सालस्कंदम्; $K_3$ तालस्कंधम्. B $D_{3.6}$ तथांगदः (for अमित्रजित्).

**18** $^{a}$) $K_{1.2}$ समुत्सृष्टो; $K_3$ वृषो°; $B_4$ $T_1$ रुषा सृष्टो. — $^{b}$) $K_{1.2}$ तदा; $K_{3.4}$ Dc $D_{1.2}$ ततः (for तरुः).

**19** $^{a}$) $K_{1.2}$ $B_3$ हताश्वः (for °श्वात्). — $^{b}$) $D_1$ हतसारथेः. — $^{c}$) $K_4$ च (for [ए]व).

**20** $^{a}$) $K_{1.2.4}$ Dc $D_2$ तु (for तं). — $^{b}$) K $D_5$ स (for च). — $^{c}$) $K_{1.2}$ आगत्य (for आगम्य).

**21** $^{a}$) $K_1$ (*sup. lin.* as in text) शतैस्; $G_{2.4}$ शितैस् (for शरैस्). — $^{b}$) $K_4$ Dc $D_2$ तथा; $G_{2.4}$ शरैः (for तदा). — $^{d}$) B Dn $D_{3.4.6}$ $G_3$ °बलं; $T_2$ $G_{2.4}$ $M_1$ °रथः; $G_1$ °बलः (for °रथम्).

**22** $^{a}$) $K_4$ S (except $T_1$ $G_3$) उद्दिश्य (for अदृश्यं). $K_{2.4}$ (m as in text) शूलं; S (except $G_3$) तीक्ष्णैर् (for शूरौ). — $D_1$ om. $22^{c}$–$26^{b}$. — $^{c}$) $G_2$ पोथ°; $G_4$ बोध°; $M_1$ रोध° (for योध°)

**23** $D_1$ om. 23 (cf. v.l. 22). — $^{c}$) $K_{2.3}$ व्य($K_3$ वि)सृजन्; $B_4$ असृजत्. $B_1$ भीमः (for भूयः).

**24** $D_1$ om. 24 (cf. v.l. 22). — $^{a}$) $K_2$ अदृश्ये (for अदृश्यं). Dc विचिन्वंतं. — $^{c}$) $K_1$ व्यविशुर् (for विविशुर्). $B_1$ व्योम्नि. — $^{d}$) Dc $D_2$ महतीर्गृह्य वै शिलाः.

तांश्च तौ चाप्यदृश्यः स शरैर्विव्याध राक्षसः ।
स भृशं ताडयन्वीरो रावणिर्मायया वृतः ॥ २५

तौ शरैराचितौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
पेततुर्गगनाद्भूमिं सूर्याचन्द्रमसाविव ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

# २७३

मार्कण्डेय उवाच ।

तावुभौ पतितौ दृष्ट्वा भ्रातरावमितौजसौ ।
बबन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा ॥ १
तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे ।
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे ॥ २
तौ दृष्ट्वा पतितौ भूमौ शतशः सायकैश्चितौ ।
सुग्रीवः कपिभिः सार्धं परिवार्य ततः स्थितः ॥ ३
सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च ।
हनूमन्नीलतारैश्च नलेन च कपीश्वरः ॥ ४
ततस्तं देशमागम्य कृतकर्मा विभीषणः ।
बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रबोधितौ ॥ ५
विशल्यौ चापि सुग्रीवः क्षणेनोभौ चकार तौ । C. 3. 16470 B 3. 289. 6 K. 3. 290. 6

---

**25** $D_1$ om. 25 (cf. v.l. 22). — $^a$) $K_1$ (orig.). $_2$ [अ]दृश्यंतः; $K_1$ (marg. *sec. m.*) $Dc_2$ $D_2$ [अ]दृश्यं स (for [अ]दृश्यः स). $T_2$ सञ् (for स). — $^b$) $K_1$ (by corr.). $_2$ राक्षसैः. — $^c$) $T_1$ M सु- (for स). $K_{1-3}$ $B_{1. 2}$ D (except $D_{3. 4}$; $D_1$ om.) ताडयामास; $K_4$ S (except $T_2$ $G_3$) पीडयन्वीरो.

**26** $D_1$ om. $26^{ab}$ (cf. v.l. 22). — $^a$) Dc तैः (for तौ). $K_4$ आयतौ; $G_{2. 4}$ अर्दितौ; $M_1$ आवृतौ (for आचितौ). K $D_5$ शूरौ; Dc भूयो (for वीरौ). — $^c$) $K_3$ भूमौ.

Colophon. — *Major parvan:* $K_{1. 2}$ $T_2$ $G_{2. 4}$ आरण्य. — *Sub-parvan:* $K_{1. 3. 4}$ B Dc $Dn_1$. $n_3$ $D_{1-6}$ $G_3$ $M_1$ (all om. sub-parvan name) mention only रामो($M_1$ रामायणो)पाख्यान. — *Adhy. name:* $M_2$ इंद्रजिद्युद्धं. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 286; $Dn_3$ 287; $D_1$ 290; $T_1$ $M_2$ (orig.) 278; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 276; $G_1$ 273; $G_2$ 275. — *Śloka no.:* Dn 26; $D_1$ 23.

## 273

**1** $^a$) $K_{1-3}$ Dc $D_{2. 5}$ सहितौ (for पतितौ). — $^b$) $K_2$ B Dn $D_{3. 4. 6}$ $T_1$ रामलक्ष्मणौ; $D_5$ [अ]तितेजसौ (for [अ]मितौजसौ).

**2** $^a$) B Dn $D_{3. 6}$ $G_3$ शरबंधेन; $D_4$ सारबंधेन. — $^d$) $G_1$ शकुना° (for शकुन्ता°).

**3** $^a$) T $G_{1. 2. 4}$ M दृष्ट्वा निपतितौ भूमौ ($G_1$ वीरौ). — $^b$) $K_{1. 2}$ शितैः (for चितौ). S (except $G_3$) सर्वांगेषु शराचितौ. — $^d$) $K_{1. 2. 4}$ Dc $D_{1. 2}$ व्यतिष्ठत; $K_3$ $D_5$ [अ]वतिष्ठत; $D_3$ (before corr.) [उ]पतिष्ठतः (by corr. इति स्थितः); $T_1$ $M_2$ [अ]वतस्थिवान्; $T_2$ $G_{1. 2. 4}$ [उ]पतस्थिवान्; $M_1$ [अ]भितः स्थितः (for ततः स्थितः).

**4** $^a$) $K_2$ °मैंद्रविविधैः; M °मैंदविविधैः. — $^c$) $K_{1. 2. 4}$ $B_{1. 2}$ Dc $Dn_1$. $n_2$ $D_{1. 2. 5. 6}$ T $G_{1. 3}$ हनुम($K_1$ $D_4$ °मा)न्नील°; $M_1$ हनूमान्नील°. — $^d$) K हरी($K_1$ °रे)श्वरः; S (except $G_3$) महात्मना. — After 4, $K_4$ $Dc_2$ $D_{1. 2}$ ins.:

1288* ततः समीरवचनाद्रामाध्यातः खगेश्वरः ।
आगम्यामोचयद्वीरौ सर्पबन्धात्सुदारुणात् ।

[(L. 1) $Dc_2$ $D_2$ अथायातः (for रामाध्यातः).]

$Dc_2$ $D_{1. 2}$ cont.:

1289* क्षणेन गरुडस्तात पतत्री समदृश्यत ।
दर्शनात्पक्षिराजस्य पन्नगाश्च प्रदुद्रुवुः ।
स चागत्य महापक्षी तावुभौ रामलक्ष्मणौ ।
परामृज्य करेणाथ ययौ येन पथागतः ।

**5** $^a$) $K_4$ $D_1$ आगत्य (for आगम्य). — $^b$) $K_4$ कृतवर्मा. — $^d$) $K_3$ दिव्यास्त्रेण; $G_{2. 4}$ ब्रह्मा°. $K_3$ $D_1$ विमोहितौ; $T_1$ $G_{1. 2. 4}$ M प्रमोहितौ.

**6** $^b$) $K_1$ B Dn $D_{4. 6}$ $G_3$ [ए]तौ; $K_4$ [ए]व; $D_5$ च (for [उ]भौ). $K_1$ (marg. *sec. m.* as in text) B Dn $D_{3. 4. 6}$ $G_3$ ह; $D_1$ सः (for तौ). — $^c$) $T_1$ तौ विशल्यौ (for विशल्यया).

3. 16470
3. 289 6
3. 290 6
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥ ६
तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठताम् ।
गततन्द्रीक्लमौ चास्तां क्षणेनोभौ महारथौ ॥ ७
ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनम् ।
उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ॥ ८
अयमम्भो गृहीत्वा तु राजराजस्य शासनात् ।
गुह्यकोऽभ्यागतः श्वेतात्त्वत्सकाशमरिंदम ॥ ९
इदमम्भः कुबेरस्ते महाराजः प्रयच्छति ।
अन्तर्हितानां भूतानां दर्शनार्थं परंतप ॥ १०
अनेन स्पृष्टनयनो भूतान्यन्तर्हितान्युत ।
भवान्द्रक्ष्यति यस्मै च भवानेतत्प्रदास्यति ॥ ११
तथेति रामस्तद्वारि प्रतिगृह्याथ सत्कृतम् ।
चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः ॥ १२
सुग्रीवजाम्बवन्तौ च हनूमानङ्गदस्तथा ।
मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः ॥ १३
तथा समभवच्चापि यदुवाच विभीषणः ।
क्षणेनातीन्द्रियाण्येषां चक्षूंष्यासन्युधिष्ठिर ॥ १४
इन्द्रजित्कृतकर्मा तु पित्रे कर्म तदात्मनः ।
निवेद्य पुनरागच्छत्त्वरयाजिशिरः प्रति ॥ १५
तमापतन्तं संक्रुद्धं पुनरेव युयुत्सया ।
अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः ॥ १६
अकृताह्निकमेवैनं जिघांसुर्जितकाशिनम् ।
शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः ॥ १७
तयोः समभवद्युद्धं तदान्योन्यं जिगीषतोः ।
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव ॥ १८
अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः ।

---

**7** $^c$) $K_3$ वाततंद्रागतौ; Dc $D_2$ गततंद्राक्लमौ; $D_5$ गत-तंद्रि°. $K_4$ $B_4$ $D_1$ आस्तां; $B_{1-3}$ Dn $D_{3.4.6}$ चापि (for चास्तां). — $^d$) $B_{1.2.4}$ $D_{1.3.4.6}$ $G_3$ [ए]तौ; $G_{2.4}$ [ई]शौ (for [उ]भौ).

**8** $^a$) $G_1$ तयोर् (for ततो). $T_1$ वीक्ष्य (for पार्थ). — $^c$) $K_4$ उवाच विशदं वाग्मी.

**9** $^a$) B $Dc_1$ Dn $D_{3.4.6}$ $G_3$ इदम् (for अयम्). $B_1$ अस्रो (for अम्भो). $B_1$ $M_1$ गृहीत्वाशु (for °त्वा तु). — $^b$) $B_1$ महाराजस्य. — $^c$) $K_1$ (marg. *sec. m.*) त्वेतत्; $K_3$ श्वेतु; $K_4$ चैतान्; $T_1$ M श्वेतस्; $T_2$ $G_{1.2.4}$ चैव (for श्वेतात्). — $^d$) $D_{2.5}$ अरिंदमः.

**10** $K_4$ om. 10. — $^b$) K ($K_4$ om.) $B_{2.3}$ Dc $D_{1.2.5}$ $T_1$ $G_{1.2.4}$ राजराजः; Dn $D_{4.6}$ महाराज; $D_3$ महाराजं.

**11** $^a$) B Dn $D_{3.4.6}$ $G_3$ मृष्टनयनो; $D_5$ स्पृष्टवदनो. — $^b$) $B_2$ Dc $D_1$ च; $B_4$ [अ]पि (for [उ]त). $K_2$ भूतान्यं-तर्हितान्हतः. — $^c$) $K_{1.2}$ यदा; $K_3$ सदा (for भवान्). $K_{1.2}$ यस्यैष; Dc यस्यैव (for यस्मै च). — $^d$) $B_2$ Dn $D_{3.4}$ $G_3$ प्रदास्यति नरः स तु.

**12** $^a$) $M_1$ वाक्यं (for वारि). — $^b$) $K_{1.2.4}$ $D_1$ परिगृह्य. K Dc $D_{1.2.5}$ [अ]थ सत्वरः; $B_1$ [अ]थ तत्कृतं; $B_2$ [अ]तिसत्कृतं; Dn $D_{3.4.6}$ $T_1$ $G_3$ [अ]भिसंस्कृतं; M [अ]भिसत्कृतं.

**13** $^a$) $K_3$ $D_2$ सुग्रीवं जांब($D_2$ °बु)वंतं च. — $^b$) $K_1$ $B_2$ $Dc_2$ $D_{5.6}$ $T_2$ $G_3$ हनुमान्. $K_1$ $Dc_1$ तदा (for तथा). — $^c$) $K_2$ मैंदद्विविध°. — $^d$) $K_3$ सर्वे (for प्रायः).

**14** $^a$) $G_1$ तदा (for तथा). — After 14, $D_1$ ins.:

1290* ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
पौलस्त्यमेतदालक्ष्य प्राप मूर्छां स लक्ष्मणः ।
अवहारं ततः कृत्वा राघवः सर्ववानरान् ।
वाक्यमित्यब्रवीद्दीनं तन्मे निगदतः श्रृणु ।
राज्यभङ्गो वने वासः सीता नीता पिता मृतः । [5]
लक्ष्मणो मोहमापन्नः किं नो दुःखमतः परम् ।
बिभीषणो हनुमता रामस्तं बोध्य बुद्धिमान् ।
आनाय्यौषधयो दिव्या लक्ष्मणं समजीवयत् ।

**15** $^a$) $B_{2.4}$ Dn $D_{3.4.6}$ $G_3$ च (for तु). — $^b$) $B_3$ पित्रे तत्कर्म चात्मनः. — $^d$) $K_3$ त्वरया शिबिरं; S (except $G_3$) स्वयमाजिशिरः.

**16** $^a$) $G_{1.2.4}$ आगतं तु (for आपतन्तं).

**17** $^a$) $K_2$ अकृताम्रिकमेवैनं; $T_2$ $G_{3.4}$ कृताह्निकमथैवैनं. — $^b$) $D_5$ $T_2$ $G_{1.2.4}$ जिघांसुं. $M_2$ जय° (for जित°).

**18** $^a$) $G_{1.2.4}$ ततः (for तयोः). — $^b$) $T_1$ $G_{2.4}$ ततो (for तदा). $D_1$ अन्योन्य- (for अन्योन्यं). $K_1$ जि-घांसतः; $K_2$ जिघांसतोः; $K_3$ जिगीषया; $G_{1.2.4}$ जिगी($G_1$ °ही)षंतोः. — $^d$) $K_{3.4}$ $D_{2.3}$ शक्रप्रह्लाद°.

**19** $^a$) $K_4$ अव्यध्यद्; S (except $G_3$) सोवि° (for अविध्यद्). — $^b$) Dc $D_2$ मर्मभेदिनः. — $^c$) $B_3$ [अ]शनि° (for [अ]नल°). — $^d$) $T_1$ राक्षसेश्वरं (for रावणिं शरैः).

सौमित्रिश्चानलस्पर्शैर्विव्यद्रावणिं शरैः ॥ १९
सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्छितः ।
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ २०
तस्याग्न्पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः ।
यथा निरहरद्वीरस्तन्मे निगदतः शृणु ॥ २१
एकेनास्य धनुष्मन्तं बाहुं देहादपातयत् ।
द्वितीयेन सनाराचं भुजं भूमौ न्यपातयत् ॥ २२
तृतीयेन तु बाणेन पृथुधारेण भास्वता ।
जहार सुनसं चारु शिरो भ्राजिष्णुकुण्डलम् ॥ २३
विनिकृत्तभुजस्कन्धं कबन्धं भीमदर्शनम् ।
तं हत्वा सूतमप्यस्त्रैर्जघान बलिनां वरः ॥ २४
लङ्कां प्रवेशयामासुर्वाजिनस्तं रथं तदा ।
ददर्श रावणस्तं च रथं पुत्रविनाकृतम् ॥ २५
स पुत्रं निहतं दृष्ट्वा त्रासात्संभ्रान्तलोचनः ।
रावणः शोकमोहार्तो वैदेहीं हन्तुमुद्यतः ॥ २६
अशोकवनिकास्थां तां रामदर्शनलालसाम् ।
खड्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ २७
तं दृष्ट्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम् ।
शमयामास संक्रुद्धं श्रूयतां येन हेतुना ॥ २८
महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि ।
हतैवैषा यदा स्त्री च बन्धनस्था च ते गृहे ॥ २९
न चैषा देहभेदेन हता स्यादिति मे मतिः ।
जहि भर्तारमेवास्या हते तस्मिन्हता भवेत् ॥ ३०
न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः ।　C. 3. 16495 B. 3. 289. 31 K. 3. 290. 32

**20** $^a$) $D_4$ सौमित्रिसार°. — $^b$) $K_2$ om. from क्रोधमूर्छितः up to सौमित्रिः in $21^b$. — $^c$) $T_1$ $G_{1.2}$ M व्यसृजल्; $G_4$ विसृज्य (for असृजल्). $K_1$ [अ]सौ (for [अ]ष्टौ). — After 20, $D_1$ ins.:

1291* तांश्चिच्छेद * सौमित्रिः शरानष्टावनागतान् ।,

while $M_1$ ins.:

1292* तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद रघुनन्दनः ।

**21** $D_2$ om. up to सौमित्रिः in $21^b$ (cf. v.l. 20). — $^a$) $K_1$ [अ]थ; $K_3$ [आ]सन्; $G_{1.2.4}$ [इ]षून् (for [अ]सून्). $K_4$ तस्यास्तन्पाकसंस्पर्शैः. — After $21^{ab}$, S (except $G_3$) ins.:

1293* वारयामास नाराचैः सौमित्रिर्मित्रनन्दनः ।
असृजल्लक्ष्मणश्चाष्टौ राक्षसाय शरान्पुनः ।

— $^c$) $K_3$ न्यरहरद्; $T_2$ $G_{2.4}$ तं न्यहनद्; $G_1$ तमहनद् (for निरहरद्). $K_4$ $B_{2-4}$ $Dn_2$ $D_5$ वीर (for वीरस्).

**22** $K_2$ om. (hapl.) $22^{cd}$. — $^c$) S (except $G_3$) तु बाणेन (for सनाराचं). — $^d$) S (except $G_3$) अन्यम् (for भूमौ). K $B_{1.3}$ Dc $D_2$ S (except $G_3$) अपातयत् (for न्यपात°).

**23** $^a$) $B_1$ °येन च कौंतेय. — $^b$) $Dc_2$ $D_2$ तीक्ष्ण°; $T_2$ $G_{1.2.4}$ शित° (for पृथु°). $K_2$ भूयसा (for भास्वता). — $^c$) $T_2$ $G_{1.2.4}$ जघान (for जहार). $B_1$ रुचिरं (for सुनसं). $B_{1.2.4}$ D (except Dc $D_2$) चापि (for चारु). — $^d$) $G_4$ ज्वलित° (for भ्राजिष्णु°).

**24** $^a$) $K_{2-4}$ $D_{1.5}$ विनिकृत्तशिरःस्कंधं ($D_5$ °स्कंधात्); $Dc_1$ $Dn_2$ $D_{4.6}$ विनिकृत्य भुजस्कंधं; T $G_{1.2.4}$ M विनिवृत्त($T_1$ M °कृत्त)शिरःस्कंधः. — $^b$) $D_3$ (marg. *sec. m.*) रावणिं (for कबन्धं). K $D_{1.5}$ भीमदर्शनदर्शनं; S (except $G_3$) कबंधाकृतिदर्शनः. — After $24^{ab}$, S (except $G_3$) ins.:

1294* पपात वसुधायां तु छिन्नमूल इव द्रुमः ।

— $^c$) $K_{3.4}$ $D_{1.5}$ कृत्वा (for हत्वा). $K_1$ $B_{1.3.4}$ Dc $D_{1.2.5}$ $G_1$ सूतमप्याशु; $T_1$ °पुत्रं च; $T_2$ $G_{2.4}$ °मप्यस्य.

**25** $^b$) $B_2$ Dn $D_{3.4.6}$ $G_3$ तं रथं वाजिनस्तदा. — $K_3$ om. $25^c$–$26^b$. — $^{cd}$) Dc $D_2$ सरथं (for ददर्श), and पुत्रविनाशनं.

**26** $K_3$ om. $26^{ab}$ (cf. v.l. 25). — $^a$) $D_4$ सु- (for स). $D_4$ विनितं (for निहतं). $K_{1.2}$ Dc $D_{2.5}$ $T_2$ $G_{2.4}$ श्रुत्वा; $T_1$ M ज्ञात्वा (for दृष्ट्वा). — $^b$) Dc $D_2$ रामात् (for त्रासात्). B Dn $D_{3.4.6}$ $G_3$ सं($D_3$ स)भ्रांतमानसः.

**27** $^a$) $D_5$ °वनिकां सीतां; $T_1$ °वनिकासंस्थां. — $^d$) $D_1$ वेगेन (for जवेन). $D_5$ °ससार (for °पपात).

**28** $^a$) $B_4$ बुद्ध्वा (for दृष्ट्वा). $B_1$ चास्य (for तस्य). $D_5$ दुर्बुद्धिर्. $K_4$ $D_1$ अवंध्यः; $B_4$ अचिंत्य; $T_1$ अविध्यः; $T_2$ $G_{1.2.4}$ अवध्यः (for अविन्ध्यः). — $^d$) $T_1$ सूक्ष्मयुक्तेन हेतुना.

**29** $^a$) $T_1$ महाराज्य°. $T_1$ दीपे; $G_{1.2.4}$ दीप्तो. — $^c$) $D_3$ $G_4$ हता चैषा; $M_1$ हतेवैषा. $K_2$ यदि. — $^d$) B Dc Dn $D_{2.3}$ m (m as in text also). $_{4.6}$ $G_3$ च ते ($B_1$ वने) वशे ($D_3$ orig. भविष्यति) (for च ते गृहे).

**30** $^c$) $K_2$ एतस्या; $G_4$ M एवास्य (for एवास्या).

**31** $^a$) $G_4$ मे (for ते). — $^b$) K $D_{1.2.5}$ शचीपतिः

C. 3. 16495
B. 3. 289. 31
K. 3. 290. 32

असकृद्धि त्वया सेन्द्रास्त्रासितास्त्रिदशा युधि ॥ ३१
एवं बहुविधैर्वाक्यैरविन्ध्यो रावणं तदा ।
क्रुद्धं संशमयामास जगृहे च स तद्वचः ॥ ३२
निर्याणे स मतिं कृत्वा निधायासिं क्षपाचरः ।
आज्ञापयामास तदा रथो मे कल्प्यतामिति ॥ ३३

इति श्रीमहाभारते आरण्यकपर्वणि त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

# २७४

मार्कण्डेय उवाच ।
ततः क्रुद्धो दशग्रीवः प्रिये पुत्रे निपातिते ।
निर्ययौ रथमास्थाय हेमरत्नविभूषितम् ॥ १
संवृतो राक्षसैर्घोरैर्विविधायुधपाणिभिः ।
अभिदुद्राव रामं स पोथयन्हरियूथपान् ॥ २
तमाद्रवन्तं संक्रुद्धं मैन्दनीलनलाङ्गदाः ।
हनूमाञ्जाम्बवांश्चैव ससैन्याः पर्यवारयन् ॥ ३
ते दशग्रीवसैन्यं तदृक्षवानरयूथपाः ।
द्रुमैर्विध्वंसयांचक्रुर्दशग्रीवस्य पश्यतः ॥ ४
ततः स्वसैन्यमालोक्य वध्यमानमरातिभिः ।
मायावी व्यदधान्मायां रावणो राक्षसेश्वरः ॥ ५
तस्य देहाद्विनिष्क्रान्ताः शतशोऽथ सहस्रशः ।
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ॥ ६
तान्रामो जघ्निवान्सर्वान्दिव्येनास्त्रेण राक्षसान् ।

(for शत°). — $^{c}$) $G_1$ वै (for हि). — $^{d}$) S (except $G_3$) निर्जिता° (for त्रासिता°). $G_1$ (before corr.) अपि (for युधि).

**32** $^{b}$) $B_2$ अर्विधो; T $G_{1.2.4}$ अव($T_1$ °वि)ध्यो (for अविन्ध्यो). $K_4$ अवंध्यो राक्षसेश्वरः. — $^{c}$) M संक्रुद्धं शम($M_1$ संश)यामास. — $^{d}$) $K_{3.4}$ $T_1$ $M_1$ transp. च and स. $T_1$ स च जग्राह तद्वचः.

**33** $^{b}$) $K_2$ निधायास्यं; $D_1$ पिधायासिं; $T_2$ $G_{1.2.4}$ नियंतारं; M निरस्यासिं. K Dc $D_{2.5}$ निशाचरः. — $^{d}$) S (except $G_3$) युज्य° (for कल्प्य°).

Colophon. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N $G_{1.3}$ (all om. sub-parvan name) mention only रामो($K_2$ श्रीरामो°; $G_1$ रामायणो)पाख्यान. — *Adhy. name:* $B_4$ अविंध्यवाक्यं; $G_1$ $M_2$ इंद्रजिद्वधः. — *Adhy. no.* (figures, words or both): Dn 287 ($Dn_3$ 288); $D_1$ 291; $T_1$ $M_2$ (orig.) 279; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 277; $G_1$ 274; $G_2$ 276. — *Śloka no.:* Dn 33; $D_1$ 40.

## 274

**1** $^{a}$) =Rām. 6. 95. 50$^{a}$. $K_{1.2}$ दशशिराः. — $^{b}$) $G_4$ निषूदिते (for निपा°). — $^{c}$) $G_2$ निर्याय.

**2** $^{a}$) $Dn_2$. $n_3$ $D_{1.3-6}$ $G_{3.4}$ स वृतो; $T_1$ वृतो वै. — $^{d}$) B Dn $D_{3.4.6}$ $G_3$ योध°; Dc $D_2$ बोध° (for पोथ°). $G_2$ °वाहिनीं (for °यूथपान्). $K_4$ पोथयामास यूथपान्.

**3** $^{a}$) $K_{1.2}$ Dc $D_{1.2.5}$ M आपतंतं (for आद्रवन्तं). — $^{b}$) $B_1$ मैंदनीलांगदास्तथा. — $^{c}$) $K_4$ $D_1$ हनुमाञ्; Dc $D_2$ हनुवाञ्. $D_{1.2}$ जांबुवान्. — $^{d}$) $G_1$ सैन्यास्ते; $G_2$ तत्सैन्यं; $G_4$ ससैन्यं.

**4** $^{b}$) $B_{1.2}$ $D_{1.3.4.6}$ $G_3$ ऋक्षवानरपुंगवाः; T $G_{1.2.4}$ M दृष्ट्वा वानरयूथपाः ($T_1$ °पुंगवाः).

**5** $^{a}$) $K_{1.2}$ $B_{2.3}$ Dc Dn $D_{1.2}$ T $G_3$ स (for स्व-). $K_4$ ततः सैन्यं समालोक्य. — $^{b}$) T $G_{1.2.4}$ महात्मभिः (for अरातिभिः). $B_1$ लोभ्यमानं स शत्रुभिः. — $^{c}$) $K_{1.2}$ व्यदधन्; $B_{2.4}$ $D_{3.4.6}$ $G_3$ चासृजन्; Dc $D_2$ व्यसृजन्; $D_5$ विदधन्; $T_1$ विदधे (for व्यदधान्). $T_2$ $G_2$ मायावीर्योप्यधान्मायां; $G_4$ मायामादाय युयुधे. — $^{d}$) B Dn $D_{1.3.4.6}$ $G_3$ राक्षसाधिपः (cf. 7 and v.l.).

**6** $T_1$ om. 6–7. — $^{a}$) $B_{1.2.4}$ $D_{3.4.6}$ $G_3$ देहविनिष्क्रांताः; $D_1$ देहाद्विनिःसृत्य.

**7** $T_1$ om. 7 (cf. v.l. 6). — $^{b}$) $M_1$ दिव्यास्त्रेणैव. $T_2$ $G_{2.4}$ वीर्यवान् (for राक्षसान्). — $^{d}$) Dc $D_{1.2}$ व्यदधद्. $K_{1.2}$ $T_2$ $G_{1.2.4}$ राक्षसेश्वरः (cf. 5 and v.l.).

**8** $^{b}$) $K_4$ धीमतः; $G_{2.4}$ वीर्यवान् (for भारत). — $D_2$

अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः ॥ ७
कृत्वा रामस्य रूपाणि लक्ष्मणस्य च भारत ।
अभिदुद्राव रामं च लक्ष्मणं च दशाननः ॥ ८
ततस्ते राममर्छन्तो लक्ष्मणं च क्षपाचराः ।
अभिपेतुस्तदा राजन्प्रगृहीतोच्चकार्मुकाः ॥ ९
तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः ।
उवाच रामं सौमित्रिरसंभ्रान्तो बृहद्वचः ॥ १०
जहीमान्राक्षसान्पापानात्मनः प्रतिरूपकान् ।
जघान रामस्तांश्चान्यानात्मनः प्रतिरूपकान् ॥ ११
ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा ।
उपतस्थे रणे रामं मातलिः शक्रसारथिः ॥ १२

मातलिरुवाच ।

अयं हर्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः ।
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ।
शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान् ॥ १३
तदनेन नरव्याघ्र मया यत्तेन संयुगे ।
स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः ॥ १४
इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः ।
मायेयं राक्षसस्येति तमुवाच विभीषणः ॥ १५
नेयं माया नरव्याघ्र रावणस्य दुरात्मनः ।
तदातिष्ठ रथं शीघ्रमिममैन्द्रं महाद्युते ॥ १६
ततः प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणम् ।
रथेनाभिपपाताशु दशग्रीवं रुषान्वितः ॥ १७
हाहाकृतानि भूतानि रावणे समभिद्रुते ।
सिंहनादाः सपटहा दिवि दिव्याश्च नानदन् ॥ १८
स रामाय महाघोरं विससर्ज निशाचरः । C. 3 16517 B. 3. 290. 20 K. 3. 291. 21

---

om. (hapl.) $8^c$–$9^b$. — $^c$) $K_4$ $T_1$ $G_{1.2.4}$ स (for च). — After 8, $D_1$ reads (for the first time) $10^{cd}$ and *repeats* thereafter $8^{ab}$.

**9** $D_2$ om. $9^{ab}$ (cf. v.l. 8); $D_1$ om. $9^a$–$10^b$. — $^a$) $K_{3.4}$ $D_5$ आर्छंतो; $T_1$ आनर्छंन्; $T_2$ $G_{1.2.4}$ आगच्छन्; $G_3$ अर्स्संतो; $M_1$ आनर्चंन्; $M_2$ आनर्छंन् (for अर्छन्तो). — $^b$) $K_3$ $B_1$ $G_{2.4}$ निशाचराः; $G_1$ क्षपाकराः. — $^c$) $K_1$ ततो (for तदा). B Dn $D_{3.4.6}$ $G_3$ रामं (for राजन्). — $^d$) B Dn $D_{3.4.6}$ $G_3$ प्रगृहीतशरासनाः; T $G_{1.2.4}$ °तेषुकार्मुकाः.

**10** $D_1$ om. $10^{ab}$ (cf. v.l. 9). — $^c$) K $D_{1.5}$ $G_{1.2.4}$ उवाच रामः ($G_{1.2.4}$ वाक्यं) सौमित्रिम्. — $^d$) K Dc $D_{1.2.5}$ $G_{1.2.4}$ महद्; $T_1$ [S]ब्रवीद् (for बृहद्).

**11** $^b$) $G_4$ प्रतिरूपितान्. — After $11^{ab}$, $G_{1.2}$ ins.:

1295* इत्युक्तो लक्ष्मणं पार्थ तदा गन्तुं समुद्यतः ।

— $^{cd}$) $K_{1.2}$ T $G_{1.2.4}$ om. (hapl.) $11^{cd}$. $M_1$ चापि ह्यात्मनः; $M_2$ चापि नात्मनः (for चान्यानात्मनः).

**12** $^c$) Dc $D_2$ तदा (for रणे). — $^d$) $K_4$ प्रांजलिः (for मातलिः).

**13** $G_1$ $M_2$ om. the ref. — $^a$) S (except $G_3$) राम (for जैत्रो). — $^b$) $T_1$ $G_{1.2.4}$ (with hiatus) अमोघः (for मघोनः). — After $13^{ab}$, S (except $G_3$) ins.:

1296* त्वदर्थमिह संप्राप्तः संदेशाद्वै शतक्रतोः ।

— $^c$) $B_3$ स युद्धे (for शतशः).

**14** $^a$) $D_1$ तस्मात्त्वं पुरुषव्याघ्र. — $^b$) $K_3$ S (except $G_3$) दत्तेन; $B_1$ युक्तेन (for यत्तेन).

**15** Before 15, $D_2$ ins. मार्कण्डेय उ°. — $^a$) $T_2$ $G_{1.2.4}$ transp. राघवः and मातलेः (in $^b$). $K_{1.2}$ इ($K_2$ य)त्यूचे मातलिस्तथ्यं. — $^b$) K $D_1$ ततो (for वचो). $K_4$ $Dn_3$ $D_5$ मातलिं (for मातलेः). — $^c$) $B_2$ Dn $D_{1.3.4.6}$ $G_3$ मायैषा (for मायेयं). $G_{1.2.4}$ राक्षसेंद्रस्य (for °सस्येति).

**16** $^c$) Dc $D_2$ उपातिष्ठ (for तदा°). K Dc $D_{1.2}$ दिव्यम्; $B_1$ इमम् (for शीघ्रम्). $T_2$ तदातिष्ठाभिदिष्ट्येनं; $G_{1.2.4}$ M तदा($G_1$ °मा-; $G_4$ °था)तिष्ठाभिनंद्यैनं. — $^d$) $B_1$ शीघ्रम्; S (except $G_3$) रथम् (for इमम्).

**17** $^c$) $B_2$ Dn $D_{3.4.6}$ $G_3$ °भिपपाताथ.

**18** After $18^{ab}$, $K_2$ *repeats* $17^a$–$18^b$. — $^c$) $B_2$ $G_2$ सिंहनादः. $T_1$ $G_{1.2.4}$ च पटहा. — $^d$) $B_1$ देवास्त्र (for दिव्याश्च). $K_1$ Dc तदा; $K_2$ Dn $D_{4-6}$ $G_3$ तथानदन्; $B_1$ $D_3$ त्वथा°; $D_1$ ततो° (for च ना°). $T_1$ $G_1$ नादयन् (for नानदन्). — After 18, $B_{1.3.4}$ Dc $D_2$ ins.:

1297* ततः प्रववृते युद्धं रामरावणयोर्महत् ।

$B_4$ cont.: $B_2$ Dn $D_{3.4.6}$ $G_3$ ins. after 18:

1298* दशकन्धरराजसून्वोस्तथा युद्धमभून्महत् ।

$B_{1.3}$ Dc $D_2$ ins. after 1297*: $B_{2.4}$ Dn $D_{3.4.6}$ $G_3$, after 1298*:

1299* अलब्धोपममन्यत्र तयोरेव तथाभवत् ।

[For 1298* (hypermetric!) and 1299*, cf. Rām. 6. 107. $51^{cd}$–$52^{ab}$, and Jacobi, *Das Rāmāyaṇa*, pp. 14, 74.

C 3 16518 B 3. 290. 21 K. 3. 291. 21 शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम् ॥ १९
तच्छूलमन्तरा रामश्चिच्छेद निशितैः शरैः ।
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत् ॥ २०
ततः क्रुद्धः ससर्जाशु दशग्रीवः शिताञ्शरान् ।
सहस्रायुतशो रामे शस्त्राणि विविधानि च ॥ २१
ततो भुशुण्डीः शूलांश्च मुसलानि परश्वधान् ।
शक्तीश्च विविधाकाराः शतघ्नीश्च शितक्षुराः ॥ २२
तां मायां विकृतां दृष्ट्वा दशग्रीवस्य रक्षसः ।
भयात्प्रदुद्रुवुः सर्वे वानराः सर्वतोदिशम् ॥ २३
ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम् ।
तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह ॥ २४
तं बाणवर्यं रामेण ब्रह्मास्त्रेणाभिमन्त्रितम् ।
जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः ॥ २५
अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः ।
ब्रह्मास्त्रोदीरणाच्छत्रोर्देवगन्धर्वकिंनराः ॥ २६
ततः ससर्ज तं रामः शरमप्रतिमौजसम् ।
रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम् ॥ २७
स तेन राक्षसश्रेष्ठः सरथः साश्वसारथिः ।
प्रजज्वाल महाज्वालेनाग्निनाभिपरिष्कृतः ॥ २८
ततः प्रहृष्टास्त्रिदशाः सगन्धर्वाः सचारणाः ।
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ २९
तत्यजुस्तं महाभागं पञ्च भूतानि रावणम् ।

— Dc $D_2$ यथा (for तथा). Dc भवेत् (for [अ]भवत्). ]

**19** $^a$) $T_1$ मायामयं (for स रामाय). $B_1$ °तेजा (for °घोरं). — $^c$) $K_1$ °स्पष्टं; $K_2$ °स्पर्शं (for °प्रख्यं). $T_1$ शूलं चाशनिसंप्रख्यं. — $^d$) =$27^d$. $G_1$ यमदंडम्.

**20** $^a$) $K_3$ अंतराद्; B D (except $D_{1.5}$) $G_3$ $M_1$ सत्वरं (for अन्तरा). $T_2$ $G_{1.2.4}$ तच्छूलमथ रामस्तु.

**21** $^b$) $K_2$ वरान् (for शरान्). — $^c$) $D_1$ रक्षः (for रामे).

**22** $^a$) K Dc $D_{1.2.5}$ गदा (for ततो). $K_{1.2}$ भुसुंडीः; $K_3$ भुशुंडाः; $K_4$ मुखंठीः; B $D_{3.4.6}$ $G_3$ भुषुंडीः; Dc भूषंडीः; $D_1$ भृशुंढीः; $G_{1.2.4}$ मुसंठीः; M मुसृंठीः. $K_{1.2}$ शूलाद्यान्; $K_3$ $B_{2-4}$ $D_{3.4.6}$ $G_3$ शूलानि (for शूलांश्च). $T_1$ ततो मुसंठिकाः शूलाः. — $^b$) Many MSS. मुशलानि. $K_{3.4}$ Dc $D_{1.4.5}$ परस्वधान्; $G_{1.2.4}$ परश्वथान्. — $^d$) $K_1$ M शतक्षुराः; $K_4$ $B_{2-4}$ Dc $D_4$ $T_2$ $G_{1.2.4}$ शि($K_4$ सि)-तान्क्षुरान्; Dn $D_6$ $G_3$ शिताः क्षुराः; $D_5$ शतान्शरान्; $T_1$ शितान्शरान्.

**23** $^a$) S (except $G_3$) विविधां (for विकृतां). — $^c$) $M_2$ विदुद्रुवुः. — $^d$) $G_{1.2.4}$ सैनिकाः (for वानराः). $D_{3.5}$ $T_1$ °दिशः.

**24** $^a$) $K_4$ $D_5$ $T_2$ सपत्रं. — $^b$) $D_1$ दीप्यमानं (for हेम°). — $^c$) $K_4$ शत्रून् (for तूणाद्).

**25** In $D_4$, the portion of the text from 25 up to $48^c$ of the next adhy. is lost on missing fol. (401–402). — $^a$) $K_1$ बाणवीर्यं; $K_{2-4}$ $B_2$ $Dn_1$. $n_2$ $D_{2.3}$ बाणवर्षं; $G_{2.4}$ प्रेक्ष्य बाणं. — $^b$) $B_{1.5}$ $Dc_1$ Dn $D_6$ $G_3$ [अ]नुमंत्रितं; $B_{2.4}$ सुमंत्रितं. — $^c$) $K_3$ $G_{1.4}$ जहर्षुर् (for जहृषुर्). $Dn_2$ तेन (for देव-). — $^d$) $Dn_2$ देव° (for शक्र°).

**26** $D_4$ missing (cf. v.l. 25). — $^b$) $K_{1.4}$ $G_4$ राक्षसः; $D_1$ राक्षसं. — $^c$) S (except $G_3$) ब्रह्मास्त्रे योजिते तस्मिन्. — $^d$) B Dn $D_6$ $G_3$ °दानवकिंनराः; $G_{2.4}$ °गंधर्व-दानवाः.

**27** $D_4$ missing (cf. v.l. 25). $D_1$ om. $27^{ab}$. — $^a$) $T_2$ $G_{1.2.4}$ तस्मिन् (for ततः). — $^d$) =$19^d$. $D_1$ [उ]दितं (for [उ]द्यतम्). — After 27, $B_{2-4}$ D (except $Dc_1$ $D_3$; $D_4$ missing) $G_3$ ins.:

1300* मुक्तमात्रेण रामेण दूराकृष्टेन भारत ।

On the other hand, $G_1$ ins. after 27:

1301* अमोघमविषह्यं च स देवासुरपन्नगैः ।
भासयन्तं दिशः सर्वाः स्वया दीप्त्या महाप्रभा ।

**28** $D_4$ missing (cf. v.l. 25). — $^{cd}$) $B_1$ °पुरष्कृतः; $B_{3.4}$ Dc Dn $D_{2.4}$ $G_3$ °परिप्लुतः (for °परिष्कृतः). $T_1$ प्रजज्वाल महाज्वालो तया (sic) चापि परिप्लुतः; $G_{2.4}$ जज्वाल स ($G_4$ सु-) महाज्वालो अ($G_4$ ह्य)ग्निनाभिपरिष्कृतः.

**29** $D_4$ missing (cf. v.l. 25). — $^b$) B $Dc_1$ Dn $D_6$ $G_3$ सहगंधर्वचारणाः.

**30** $D_4$ missing (cf. v.l. 25). — $^a$) $K_1$ $T_2$ महाबाहुं. — $^b$) $T_2$ भूताश्च (for °नि). — $^c$) $K_{1.2}$ सर्वलोकेभ्यः. — $^d$) $G_{2.4}$ ब्रह्मास्त्रेणामितौजसा.

**31** $D_4$ missing (cf. v.l. 25). — $^a$) $K_4$ तु; S (except $G_3$) [ऽ]पि (for हि). — $^c$) $K_{1.2}$ तेन; $T_1$ देहं (for नेशुर्). $K_{1.2}$ $T_1$ °निर्दग्धं. — $^d$) $K_{1.2}$ Dc $D_2$ स; T $G_{1.2.4}$ हि (for च). $K_{1.2}$ Dc $D_{1.2}$ भस्म प्रदृश्यत

भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्रतेजसा ॥ ३०
शरीरधातवो ह्यस्य मांसं रुधिरमेव च ।
नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ॥ ३१

इति श्रीमहाभारते आरण्यकपर्वणि चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

# २७५

मार्कण्डेय उवाच ।
स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुरद्विषम् ।
बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह ॥ १
ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः ।
आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजम् ॥ २
रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः ।
गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ॥ ३
पूजयित्वा यथा रामं प्रतिजग्मुर्यथागतम् ।
तन्महोत्सवसंकाशमासीदाकाशमच्युत ॥ ४
ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः ।
विभीषणाय प्रददौ प्रभुः परपुरंजयः ॥ ५
ततः सीतां पुरस्कृत्य विभीषणपुरस्कृताम् ।
अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ॥ ६
उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितम् ।
प्रतीच्छ देवीं सद्वृत्तां महात्मञ्जानकीमिति ॥ ७
एतच्छ्रुत्वा वचस्तस्मादवतीर्य रथोत्तमात् । C. 3. 16538 B. 3. 291. 8 K. 3. 292. 8

---

($D_1$ °ते); $K_4$ भस्मापि दृश्यते; $B_2$ भस्मान्यदृश्यत. M निशा तस्माद्यदृश्यत.

Colophon. $D_4$ missing. — *Major parvan:* $K_{1.2}$ $Dn_2$ $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N ($D_4$ missing) $T_1$ $G_{1.3}$ (all om. sub-parvan name) mention only रामो($K_2$ श्रीरामो°; $T_1$ श्रीरामायणो°; $G_1$ रामायणो)°पाख्यान. — *Adhy. name:* $B_4$ $Dn_2$ $D_{1.6}$ $G_{1.3}$ $M_2$ रावणवधः. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 288; $Dn_3$ 289; $D_1$ 292; $T_1$ $M_3$ (orig.) 280; $T_2$ $G_4$ M ($M_3$ *inf. lin.*) 278; $G_1$ 275; $G_2$ 277. — *Śloka no.:* $Dn_1$ 34; $Dn_2$. $n_3$ 33; $D_1$ 30.

## 275

☞ $D_4$ missing up to 48$^{c}$ (cf. v.l. 3. 274. 25); the MS. is mostly ignored up to the end of the lacuna.

1 $^{a}$) $K_{1.2}$ राक्षसं (for रावणं). $K_{1.2}$ T $G_{2.4}$ क्रुद्धं; $G_1$ संख्ये (for क्षुद्रं). — $^{b}$) $K_{1.2}$ दशग्रीवं; $T_2$ राक्षसेशं (for °सेन्द्रं). $B_4$ युधिष्ठिर (for सुर°). — $^{c}$) $Dn_3$ सुमहद्; $G_1$ सुसुहृद्. $D_1$ corrupt.

2 $^{a}$) M तस्मिन् (for ततो). $B_1$ दशग्रीवे हते तस्मिन्. — $^{b}$) $B_{3.4}$ सर्वे पुरो°; $G_{2.4}$ सर्षिगणास्तथा. — $^{d}$) $D_3$ $T_1$ ते (for तं). $Dc_1$ $D_2$ सहानुजं (for महाभुजम्).

3 $^{b}$) $K_4$ $B_{1-3}$ वनदेवताः. — $^{d}$) $K_{3.4}$ $D_3$ त्रिदिवालयाः; $M_2$ त्रिदशस्त्रियः. $B_4$ ववर्षुस्ताः सुरालयाः.

4 $^{a}$) K $B_1$ Dc $D_{1.2.5.6}$ तथा; $D_3$ ततो; $T_1$ $M_1$ तु ते; $T_2$ G रणे (for यथा). — $^{b}$) $Dc_1$ °र्यथागताः. — $^{c}$) S (except $G_3$) गतोत्सव° (for महोत्सव°). — $^{d}$) $K_{1.2.4}$ अप्युत (for अच्युत).

5 $^{b}$) M राज्यं (for लङ्कां). $B_1$ महाबलः. — $^{d}$) $T_1$ पुनः (for प्रभुः). $K_3$ °पुरंजय.

6 $T_1$ om. 6$^{b}$. — $^{b}$) $K_{1-3}$ $D_5$ °पुरःसरां; $K_4$ °पुरःसरः; Dc $D_{1.2}$ °पुरःसराः; $D_3$ °पुरःसरं; $T_2$ °पुरस्कृतः. — $^{c}$) $K_4$ $T_2$ $G_{1.2.4}$ अवध्यो; $B_1$ अविंदो; $D_1$ $T_1$ अविध्यो. $K_3$ $D_{3.5}$ $G_1$ (by corr.). $_{2.4}$ M सुप्राज्ञो; $G_1$ (before corr.) °प्रीतो (for °प्रज्ञो). — $^{d}$) $G_{1.2.4}$ वृद्धोमात्यो. M [ऽ]भिनिर्ययौ. $T_1$ वृद्धो मान्यो हि निर्ययौ.

7 $^{a}$) $D_1$ स (for च). $B_2$ महाघोरं (m °प्रज्ञं); $T_1$ °प्राज्ञं. — $^{b}$) $K_1$ दैत्यनाशनं; $K_2$ °माश्रितः; $K_4$ चेत्यमाश्रितं (sic); B Dn $D_6$ $T_2$ $G_3$ $M_2$ दैन्यमास्थितः. — $^{c}$) $D_6$ प्रतीक्ष.

8 $^{a}$) $T_1$ रामोवाच (for एतच्छ्रुत्वा). — $^{b}$) $G_{2.4}$ महारथात् (for रथो°). — $^{c}$) $B_4$ रूपेण (for बाष्पेण). $K_{1.2}$ [अ]भिहतां; $K_4$ $B_{3.4}$ $D_1$ $G_3$ M [अ]पिहितः; Dc $D_2$ [अ]भिहितः; $D_3$ [अ]भिहिता; $D_5$ $G_4$ [अ]पिहतः; $T_2$ $G_{1.2.4}$

C. 3. 16538 B. 3. 291. 8 K. 3. 292. 8

बाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः ॥ ८
तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् ।
मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ ९
उवाच रामो वैदेहीं परामर्शविशङ्कितः ।
गच्छ वैदेहि मुक्ता त्वं यत्कार्यं तन्मया कृतम् ॥ १०
मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि ।
जरां व्रजेथा इति मे निहतोऽसौ निशाचरः ॥ ११
कथं ह्यस्मद्विधो जातु जानन्धर्मविनिश्चयम् ।
परहस्तगतां नारीं मुहूर्तमपि धारयेत् ॥ १२
सुवृत्तामसुवृत्तां वाप्यहं त्वामद्य मैथिलि ।
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ॥ १३
ततः सा सहसा बाला तच्छ्रुत्वा दारुणं वचः ।
पपात देवी व्यथिता निकृत्ता कदली यथा ॥ १४
यो ह्यस्या हर्षसंभूतो मुखरागस्तदाभवत् ।
क्षणेन स पुनर्भ्रष्टो निःश्वासादिव दर्पणे ॥ १५
ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम् ।
गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः ॥ १६
ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः ।
पितामहो जगत्स्रष्टा दर्शयामास राघवम् ॥ १७
शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च ।
यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः ॥ १८
राजा दशरथश्चैव दिव्यभास्वरमूर्तिमान् ।
विमानेन महार्हेण हंसयुक्तेन भास्वता ॥ १९
ततोऽन्तरिक्षं तत्सर्वं देवगन्धर्वसंकुलम् ।
शुशुभे तारकाचित्रं शरदीव नभस्तलम् ॥ २०
तत उत्थाय वैदेही तेषां मध्ये यशस्विनी ।
उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ॥ २१
राजपुत्र न ते कोपं करोमि विदिता हि मे ।

---

[अ]भिहतः.

**9** $^{b}$) $K_3$ ध्यानस्थां; $B_4$ वन°; $G_1$ यून°. $K_{1.2.4}$ $B_{1.2.4}$ $Dn_2$ $D_5$ शोककर्षितां. — $^{d}$) $K_2$ म्लिष्टवाससं; $K_4$ क्लिष्टवाससां; $B_4$ T कृष्णवाससीं; Dc $D_{1-3}$ $G_1$ कृष्णवाससां. $G_{1.2.4}$ ध्यानशोकपरायणां.

**10** $^{a}$) $K_1$ (before corr.) जटिलां (for वैदेहीं). — $^{b}$) $K_2$ B $Dc_1$ $Dn_2$. $n_3$ परामर्ष°. — After $10^{ab}$, $G_{1.2.4}$ read $60^{ab}$. — $^{c}$) $D_5$ transp. गच्छ and वैदेहि. K Dc $D_{1-3}$ [अ]सि (for त्वं). — $^{d}$) K Dc $D_{1-3}$ transp. मया and कृतं. S (except $G_3$) एतत्कार्यं मया तव.

**11** $^{d}$) $Dn_3$ मे; $D_1$ च (for [अ]सौ). $K_{1.2}$ निह-($K_1$ °हि)तो राक्षसेश्वरः.

**12** $^{a}$) $K_2$ $T_1$ अस्मद्-; $B_1$ त्वस्मद्-; $G_3$ त्वस्मद्- (for ह्यस्मद्-). $T_2$ $G_{1.2.4}$ M कस्माद($G_1$ तस्माद-; $M_1$ कस्माद्धु-य)-स्मद्विधो जातु. — $^{b}$) T $G_{1.2.4}$ M जानन्धर्मार्थनिश्चयान् ($G_{2.4}$ °यं).

**13** $^{a}$) $G_{1.4}$ सद्वृत्ताम् (for सुवृत्ताम्). $K_1$ च (for वा). $T_2$ $G_2$ असद्वृत्तां सुवृत्तां वा. — $^{c}$) $T_2$ °भोग्यां च; $G_1$ °भोगाच्च (for °भोगाय).

**14** $M_2$ om. (hapl.) $14^{b}$–$16^{a}$. — $^{c}$) $M_1$ transp. देवी and व्यथिता.

**15** $M_2$ om. 15 (cf. v.l. 14). — $^{a}$) B Dn $D_6$ [ऽ]पि (for हि). $K_4$ मुखसंभूतो; $T_1$ हर्षसंभ्रांतो; $T_2$ भव-संभूतो. — $^{b}$) $T_1$ मुखे (for मुख-). S (except $G_3$; $M_2$ om.) पुरा (for तदा). — $^{c}$) K $D_{3.5}$ परिभ्रष्टो; B $D_6$ $G_{2.3}$ $M_1$ पुनर्नष्टो; Dc $D_{1.2}$ परिभ्रष्टा; $T_2$ $G_{1.4}$ पुनर्दृष्टो. — $^{d}$) B Dc Dn $D_2$ $M_1$ निःश्वास इव. $K_{1.2.4}$ $D_{1.5}$ दर्पणः.

**16** $M_2$ om. $16^{a}$ (cf. v.l. 14). — $^{b}$) $K_1$ रामभाषणं. — $^{d}$) $T_2$ $G_{2.4}$ बभूवुः शुभलक्षणाः; $G_1$ °व शुभलक्षणा. — After 16, Dc $D_2$ ins. a passage given in App. I (No. 28).

**17** Before 17, $D_{1.2}$ ins: मार्कंडेय उ°. — $^{b}$) $T_1$ विनयेन; $G_4$ विमाने च. — $^{c}$) B $D_6$ $G_3$ पद्मयोनिर् (for पिता°).

**18** $^{d}$) Dc $D_2$ ब्रह्मर्षयो (for सप्तर्षयो).

**19** $^{a}$) $D_1$ नाम (for चैव). — $^{b}$) $K_2$ $D_1$ °भास्कर°; Dc $D_2$ °भासुर°.

**20** $^{a}$) $B_{2.3}$ [अं]तरीक्षं; $M_1$ [अं]तरिक्षे. — $^{b}$) Dc $D_2$ °दानव° (for °गन्धर्व°). — $B_4$ om. $20^{cd}$. — $^{d}$) $T_1$ $G_{1.2.4}$ नभस्थलं.

**21** $^{b}$) Dc $D_2$ transp. तेषां and मध्ये.

**22** $^{a}$) $T_2$ ततः (for न ते). $K_3$ कार्यं; $B_{1-3}$ Dn $D_6$ $T_1$ $G_3$ दोषं (for कोपं). — $^{b}$) $K_4$ तव; B Dc Dn $D_{2.6}$ $G_3$ हि ते ($B_1$ च मे) (for हि मे).

**23** =(var.) 3. 75. 7. — $^{a}$) $T_1$ भूतात्मा (for °नां).

गतिः स्त्रीणां नराणां च शृणु चेदं वचो मम ॥ २२
अन्तश्चरति भूतानां मातरिश्वा सदागतिः ।
स मे विमुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ २३
अग्निरापस्तथाकाशं पृथिवी वायुरेव च ।
विमुञ्चन्तु मम प्राणान्यदि पापं चराम्यहम् ॥ २४
ततोऽन्तरिक्षे वागासीत्सर्वा विश्रावयन्दिशः ।
पुण्या संहर्षणी तेषां वानराणां महात्मनाम् ॥ २५

वायुरुवाच ।

भो भो राघव सत्यं वै वायुरस्मि सदागतिः ।
अपापा मैथिली राजन्संगच्छ सह भार्यया ॥ २६

अग्निरुवाच ।

अहमन्तःशरीरस्थो भूतानां रघुनन्दन ।
सुसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति ॥ २७

वरुण उवाच ।

रसा वै मत्प्रसूता हि भूतदेहेषु राघव ।
अहं वै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यताम् ॥ २८

ब्रह्मोवाच ।

पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मिणि ।
साधो सद्वृत्तमार्गस्थे शृणु चेदं वचो मम ॥ २९
शत्रुरेष त्वया वीर देवगन्धर्वभोगिनाम् ।
यक्षाणां दानवानां च महर्षीणां च पातितः ॥ ३०
अवध्यः सर्वभूतानां मत्प्रसादात्पुराभवत् ।
कस्माच्चित्कारणात्पापः कंचित्कालमुपेक्षितः ॥ ३१
वधार्थमात्मनस्तेन हृता सीता दुरात्मना ।
नलकूबरशापेन रक्षा चास्याः कृता मया ॥ ३२
यदि ह्यकामामासेवेत्स्त्रियमन्यामपि ध्रुवम् । C. 3. 16564 B. 3. 291. 34 K. 3. 292. 35

---

— $23^{cd}$ = (var.) $24^{cd}$. — $^{c}$) S (except $G_3$) transp. मे and विमुंचतु.

**24** $T_1$ $G_{2.4}$ om. (hapl.) 24. — $24^{cd}$ = (var.) $23^{cd}$. — $^{c}$) K $D_{1.3}$ विमुचंतु यथातत्वं ($K_{1.2}$ °थ्यं). — $^{d}$) $K_{1.3.4}$ $D_{1.3}$ एते वा($K_3$ $D_3$ चा)द्य त्यजंतु मां; $K_2$ तमेवादि त्यजंतु मां. — After 24, N ($D_4$ missing) $T_1$ $G_3$ ins.:

1302* यथाहं त्वद्दते वीर नान्यं स्वप्नेऽप्यचिन्तयम् ।
तथा मे देवनिर्दिष्टस्त्वमेव हि पतिर्भव ।

[(L. 1) Dc $D_2$ हि (for [अ]हं). $K_2$ व्यचिंतयं; $T_1$ ह्यचिंतयं. — (L. 2) $B_2$ यथा (for तथा). $K_3$ $D_{1.3.5}$ [इ]ह (for हि). $T_1$ गतिर् (for पतिर्).]

**25** $^{b}$) $K_{1.2}$ श्रा($K_2$ छा)वयंत्यखिला दिशः; $K_3$ Dc $D_{1.2}$ सुस्वरा लोकसाक्षिणी.

**26** $^{a}$) $K_4$ $D_3$ $M_1$ ते (for वै). — $^{c}$) $B_1$ न पापा (for अपापा). — $^{d}$) $D_1$ गच्छस्व (for संगच्छ). S (except $G_3$) सीतया (for भार्यया).

**27** S (except $T_1$ $G_3$) om. the ref. — $^{d}$) $K_1$ $D_{3.5}$ नापराध्यते; $K_3$ प्रतिगृह्यतां.

**28** $^{a}$) K Dc $D_{1-3.5}$ रसाः सर्वे मत्प्रसूता; $B_1$ रसा मम प्रसूता हि; $T_1$ रसानि मत्प्रसूतानि; $T_2$ समंतस्थः प्रसूते हि; $G_1$ रसं मत्तः प्रसूतं हि; $G_2$ सर्वमंतश्चरो वेत्ति. — $^{b}$) $K_4$ $D_2$ देहे देहेषु; Dc देहिदेहेषु; $T_1$ हितो देवेषु; $T_2$ सर्वदेवेषु (for भूतदेहेषु). — $^{c}$) $K_{1.2}$ च त्वां; $K_3$ Dc $D_{1-3.5}$ $T_1$ M त्वां वै (by transp.). $T_1$ ब्रवीमीह; $G_{2.4}$ ब्रवीम्येतन् (for प्रब्रवीमि). — $^{d}$) $K_{1.2}$ जानकी (for मैथिली). — After 28, $D_1$ ins:

1303* पारं परं त्वमेवासीर्विष्णुब्रह्मात्मरूपवान् ।
अपारपारोऽसि हरे पारेभ्योऽपि परः सदा ।
ब्रह्मपारोऽसि विश्वेश परपारनयस्तथा ।
पराणां च परास्यसि पारः पारः सदैव सः ।
सर्वभूतनिवासी च भूमन्स परमस्तथा ।;

while $T_1$ $G_1$ M ins.:

1304* यमः ।
धर्मराजोऽसि काकुत्स्थ साक्षी लोकस्य कर्मणाम् ।
शुभाशुभानां सीतेयमपापा प्रतिगृह्यताम् ।

[$G_1$ धर्मः (for यमः). — (L. 1) $G_1$ धर्मोहमस्मि (for धर्मराजोऽसि).]

**29** $^{a}$) $T_2$ $G_{1.2}$ अत्र (for पुत्र). — $^{b}$) $K_{1.2}$ सद्वृत्तधर्मिणि; some MSS. राजर्षिधर्मिणि. — $^{c}$) $K_{1.4}$ $B_{3.4}$ $Dn_1$ $D_{3.5}$ $G_3$ साधौ. $K_2$ $T_2$ $G_4$ -मार्गस्ते; $Dc_1$ $Dn_{2}$. $n_3$ $D_{2.6}$ काकुत्स्थ; $Dc_2$ $T_1$ -मार्गस्थः; $G_1$ $M_1$ -मार्गस्थ.

**30** $D_2$ om. $30^{a}$. — $^{a}$) $T_2$ एषां (for एष). $K_{1.2}$ धीर (for वीर). — $^{d}$) $D_1$ मानवानां निपातितः.

**31** $^{a}$) $K_3$ $D_5$ °सत्वानां; $B_1$ °शत्रूनां (for °भूतानां). — $K_{1.2}$ om. $31^{c}$–$32^{b}$. — $^{d}$) $Dc_2$ $D_3$ $G_4$ किंचित् (for कंचित्).

**32** $K_{1.2}$ om. $32^{ab}$ (cf. v.l. 31). — $^{c}$) $K_{1.2}$ नड-कूबर°. — $^{d}$) $D_1$ हि; $T_2$ वा (for च). S (except $G_3$ $M_1$) transp. कृता and मया.

C 3 16564 B 3.291.34 K.3 292 35 शतधास्य फलेद्देह इत्युक्तः सोऽभवत्पुरा ॥ ३३
नात्र शङ्का त्वया कार्या प्रतीच्छेमां महाद्युते ।
कृतं त्वया महत्कार्यं देवानाममरप्रभ ॥ ३४

दशरथ उवाच ।

प्रीतोऽस्मि वत्स भद्रं ते पिता दशरथोऽस्मि ते ।
अनुजानामि राज्यं च प्रशाधि पुरुषोत्तम ॥ ३५

राम उवाच ।

अभिवादये त्वां राजेन्द्र यदि त्वं जनको मम ।
गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ॥ ३६

मार्कण्डेय उवाच ।

तमुवाच पिता भूयः प्रहृष्टो मनुजाधिप ।
गच्छायोध्यां प्रशाधि त्वं राम रक्तान्तलोचन ॥ ३७
ततो देवान्नमस्कृत्य सुहृद्भिरभिनन्दितः ।
महेन्द्र इव पौलोम्या भार्यया स समेयिवान् ॥ ३८
ततो वरं ददौ तस्मै अविन्ध्याय परंतपः ।
त्रिजटां चार्थमानाभ्यां योजयामास राक्षसीम् ॥ ३९
तमुवाच ततो ब्रह्मा देवैः शक्रमुखैर्वृतः ।
कौसल्यामातरिष्टांस्ते वरानद्य ददानि कान् ॥ ४०
वव्रे रामः स्थितिं धर्मे शत्रुभिश्चापराजयम् ।
राक्षसैर्निहतानां च वानराणां समुद्भवम् ॥ ४१
ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा ।
समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ ४२
सीता चापि महाभागा वरं हनुमते ददौ ।
रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ॥ ४३
दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा ।
उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन ॥ ४४

---

**33** $K_3$ om. 33. — [a]) $K_{1.4}$ $D_{1.3}$ आसीदेत्; $B_{1.2}$ $Dn_3$ सेवेत; $D_5$ आसीदे; $T_2$ $G_{1.2.4}$ सीतां वा; $M_1$ मन्येत; $M_2$ आसीत (for आसेवेत्). — [b]) $K_{1.2}$ प्रियाम् (for स्त्रियम्). $K_{1.2}$ इति (for अपि). $K_2$ ब्रुवन् (for ध्रुवम्). — [c]) $K_{1.2}$ पतेद्; $D_1$ भवेद् (for फलेद्). B $Dc_1$ Dn $D_6$ मूर्धा (for देह). — [d]) $K_{1.2}$ इत्युक्तोसौ पुराभवत्.

**34** [a]) $T_2$ $G_{1.2.4}$ तु (for [अ]त्र). — [b]) Dc $D_2$ $G_2$ महामते (for °द्युते). $K_{1.2}$ $D_1$ संगच्छ सह भार्यया. — [c]) $M_1$ कर्म (for कार्यं). — [d]) $K_{1.2}$ अमरप्रभो; $Dc_1$ $D_2$ °प्रभः; $G_4$ अमितप्रभः.

**35** [a]) $D_5$ S (except $G_3$) तव (for वत्स). — [b]) $K_{1.2}$ तव; $T_2$ $G_4$ [अ]स्म्यहं (for [अ]स्मि ते). — [c]) $K_1$ Dc $D_{1-3.5}$ $T_1$ ते राज्यं; $T_2$ $G_{1.2.4}$ राज्यं स्वं (for राज्यं च).

**36** [a]) Hypermetric ! $K_2$ $D_3$ $G_1$ $M_2$ त्वा. — [b]) $G_{2.4}$ पिता मे जनको यदि.

**37** $T_1$ om. 37–39 (with मार्कण्डेय उ°); $T_2$ $G_{1.2.4}$ M om. the ref. — [b]) B Dn $D_6$ $G_3$ भरतर्षभ; $T_2$ $G_{1.2.4}$ मनुजर्षभ. M प्रहृष्टेनांतरात्मना. — [c]) B Dc Dn $D_6$ $G_3$ [इ]ति (for त्वं). — [d]) B Dc Dn $D_{2.6}$ $G_3$ रामं रक्तांतलोचनं. — After 37, N ($D_4$ missing) $G_3$ ins. :

1305* संपूर्णानि हि वर्षाणि चतुर्दश महाद्युते ।

[ $K_4$ च; $B_{2.3}$ Dn $D_{1.4-6}$ [इ]ह (for हि). ]

**38** $T_1$ om. 38 (cf. v.l. 37). — [b]) $G_2$ अभिसंवृतः. — [d]) $K_{3.4}$ $D_{3.5}$ वैदेह्या; $G_1$ सीतया (for भार्यया). $K_{1.2}$ भार्यया समुपेयिवान्; $T_2$ सभार्यः पुरमेयिवान्; $G_{2.4}$ भार्यया सह सीतया.

**39** $T_1$ om. 39 (cf. v.l. 37). — [ab]) Dc $D_2$ तयोर् (for ततो). $M_1$ transp. वरं and ददौ. $K_{2.3}$ Dc $D_2$ $T_2$ तस्मा; $D_1$ M तस्माद् (for तस्मै). $K_3$ Dc $D_{2.3}$ अ($K_3$ य)विध्याय; $K_4$ अवंध्याय; B Dn $D_{5.6}$ $G_3$ ह्यविंध्याय; $T_2$ $G_{1.2.4}$ अवध्याय (for अविन्ध्याय). $K_3$ $Dc_1$ $D_{1.3}$ परंतप. — [c]) $B_1$ चानुमानाभ्यां; $B_3$ $D_1$ दान°; $G_{1.2.4}$ M चार्थकामाभ्यां.

**40** [b]) B Dn $D_6$ $G_3$ (before corr.) शक्रपुरोगमः (for °मुखैर्वृतः). — [c]) N (except $K_1$ $Dn_2$; $D_4$ missing) कौशल्या-. $T_1$ कौशल्यापुत्र ते राम. — [d]) T $G_{1.2.4}$ अन्यान् (for अद्य). $K_4$ $Dn_2$ $D_3$ $G_{2.4}$ ददामि.

**42** [a]) $T_2$ $G_{1.2.4}$ तथेति (for ततस्ते). $K_1$ सर्वे (for प्रोक्ते). — [b]) $T_2$ $G_{2.3}$ ततस्तद्-; $G_1$ $M_1$ ततस्ते; $M_2$ तथेव (for तथेति). $K_{1.4}$ $T_2$ $G_{1.2.4}$ वचनात् (for वचने). $K_3$ $Dc_2$ $D_2$ तथा (for तदा). — [d]) $K_{1.2}$ लब्धचेतनाः.

**43** [a]) $T_1$ चैव (for चापि). $T_1$ महाभाग. — [b]) $M_1$ हनुमतो. — [c]) $T_2$ रामकीर्ति-. $T_1$ वत्स (for पुत्र).

**44** [a]) $D_5$ च सुख° (for त्वामुप°). — [b]) $T_2$ $G_{1.2.4}$ -प्रसादात् (for -प्रसाद-). S (except $G_3$) तथा (for सदा). — [d]) $D_5$ नित्यं (for इति).

**45** [a]) $T_2$ $G_{1.2.4}$ तत्; M तु (for ते). $K_4$ $D_3$ ततः संप्रेक्ष्य($D_3$ °क्ष)माणानां. — [b]) $K_4$ $D_3$ $G_{1.2.4}$ °कारिणां

ततस्ते प्रेक्षमाणानां तेषामक्लिष्टकर्मणाम् ।
अन्तर्धानं ययुर्देवाः सर्वे शक्रपुरोगमाः ॥ ४५
दृष्ट्वा तु रामं जानक्या समेतं शक्रसारथिः ।
उवाच परमप्रीतः सुहृन्मध्य इदं वचः ॥ ४६
देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम् ।
अपनीतं त्वया दुःखमिदं सत्यपराक्रम ॥ ४७
सदेवासुरगन्धर्वा यक्षराक्षसपन्नगाः ।
कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति ॥ ४८
इत्येवमुक्त्वानुज्ञाप्य रामं शस्त्रभृतां वरम् ।
संपूज्यापाक्रमत्तेन रथेनादित्यवर्चसा ॥ ४९
ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह ।
सुग्रीवप्रमुखैश्चैव सहितः सर्ववानरैः ॥ ५०
विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः ।
संततार पुनस्तेन सेतुना मकरालयम् ॥ ५१
पुष्पकेण विमानेन खेचरेण विराजता ।
कामगेन यथा मुख्यैरमात्यैः संवृतो वशी ॥ ५२
ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः ।
तत्रैवोवास धर्मात्मा सहितः सर्ववानरैः ॥ ५३
अथैनान्राघवः काले समानीयाभिपूज्य च ।
विसर्जयामास तदा रत्नैः संतोष्य सर्वशः ॥ ५४
गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च ।
सुग्रीवसहितो रामः किष्किन्धां पुनरागमत् ॥ ५५
विभीषणेनानुगतः सुग्रीवसहितस्तदा ।
पुष्पकेण विमानेन वैदेह्या दर्शयन्वनम् ॥ ५६
किष्किन्धां तु समासाद्य रामः प्रहरतां वरः ।
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ॥ ५७
ततस्तैरेव सहितो रामः सौमित्रिणा सह ।
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ॥ ५८
अयोध्यां स समासाद्य पुरीं राष्ट्रपतिस्ततः ।
भरताय हनूमन्तं दूतं प्रस्थापयत्तदा ॥ ५९ C. 3. 16591 B. 3. 291. 61 K. 3. 292. 61

---

(for °कर्मणाम्). — $^{cd}$) K $D_{2.3.5}$ transp. देवाः and सर्वे.

**46** $^{ab}$) B Dn $D_{3.6}$ $G_{3}$ transp. तु and रामं, and read संगतं ($B_{1}$ °मं) (for समेतं). — $^{c}$) $K_{2.3}$ $D_{2.3.5.6}$ $T_{1}$ परमः; $B_{1}$ परमं. — $^{d}$) $K_{3}$ सुरमध्य (for सुहृन्मध्य).

**47** $^{b}$) $K_{1-3}$ $D_{1.3.5}$ मनुष्योरगरक्षसां; $K_{4}$ मानुषासुररक्षसां; $B_{1}$ राक्षसानां च भोगिनां; Dc $D_{2}$ मनुष्योरगभोगिनां; $G_{2.4}$ मनुष्यासुर°. — $^{d}$) $T_{1}$ इति (for इदं).

**48** $^{a}$) $K_{1}$ $B_{4}$ °गंधर्व-. — $^{b}$) K $B_{1.4}$ Dc $D_{1-3.5}$ °राक्षसकिंनराः; T $G_{1.2}$ M °किंनरपन्नगाः; $G_{4}$ °गंधर्वपन्नगाः. — $^{c}$) $T_{2}$ $G_{1.2.4}$ लोके (for लोकास्). — $D_{4}$ resumes from $48^{d}$. — $^{d}$) $M_{1}$ भविष्यति (for धरि°).

**49** $^{c}$) $K_{4}$ $D_{1.3}$ $T_{1}$ प्राक्रमत्; $T_{2}$ $G_{2}$ [अ]पक्रमत् (for [अ]पाक्रमत्).

**50** $^{c}$) S (except $G_{3}$) चापि (for चैव).

**51** $^{a}$) S (except $T_{2}$ $G_{3}$) लंकाया. — $^{c}$) K Dc $D_{1-3.5}$ उत्ततार; $B_{4}$ S (except $G_{3}$ $M_{2}$) स ततार. $K_{3}$ $G_{2}$ पुर°; $T_{2}$ रघु° (for पुन°). $B_{1}$ तं तु (for तेन).

**52** $^{a}$) $K_{4}$ Dc $D_{1.2.4.5}$ पुष्पकेन. — $^{b}$) $K_{2}$ $B_{1.2}$ $D_{5}$ $T_{2}$ $G_{1}$ M खचरेण. $K_{1}$ पुरस्कृता; $K_{2}$ विराजिता. — $^{d}$) $K_{1}$ $D_{3}$ स ($D_{3}$ सु-) वृतो. $K_{1.2.4}$ Dc $D_{1}$ बली (for वशी).

**53** $K_{4}$ om. 53–55. — $^{b}$) $K_{1.2.4}$ $B_{2.3}$ Dc $D_{1.2}$ शिष्ये. $K_{1.2}$ $M_{2}$ राघवः (for पार्थिवः). — $^{c}$) $T_{2}$ $G_{1}$ यत्रै° (for तत्रै°). — $^{d}$) $B_{1-3}$ Dn $D_{5}$ तत्र (for सर्व-).

**54** $K_{3}$ om. 54 (cf. v l. 53). — $^{a}$) $K_{4}$ $B_{3}$ [ए]तान् (for [ए]नान्). — $^{c}$) $B_{3}$ हरीन् (for तदा). — $^{d}$) S (except $T_{2}$ $G_{3}$) संपूज्य (for °तोष्य).

**55** $K_{3}$ om. 55 (cf. v.l. 53). — $^{a}$) $T_{1}$ गंधर्व- (for गतेषु). Dn $D_{5}$ $G_{3}$ तेषु सर्वेषु (for वानरे°). — $^{b}$) $G_{1.2.4}$ गोपुच्छेषु च (for गोपुच्छ°). $D_{5}$ $G_{2.4}$ सर्वशः (for तेषु च). — $^{d}$) $K_{1.2}$ किष्किंदां; $K_{4}$ $D_{2.5}$ किष्किंध्यां. K ($K_{3}$ om.) Dc $D_{2}$ पुनराव्रजत्; $G_{3.4}$ समुपागमत्.

**56** $^{a}$) $K_{1.2}$ °मतः (for °गतः). — $^{b}$) $G_{4}$ ततः (for तदा). — $^{c}$) $=52^{a}$. K $B_{2.3}$ Dc $D_{2.3.5}$ पुष्पकेन.

**57** $^{a}$) $K_{1.2}$ किष्किंदां; $K_{4}$ किष्किंध्यां. $T_{2}$ $G_{1.2.4}$ च (for तु). — $^{b}$) $B_{1}$ शस्त्रभृतां (for प्रहरतां). $K_{2}$ वर. — $^{d}$) $D_{3}$ °भिषिंचयत्; T $G_{1.4}$ $M_{1}$ °भिषेचयत्.

**58** $^{d}$) $T_{1}$ जगाम वसतिं प्रति.

**59** $^{a}$) $B_{1}$ च; S (except $G_{3}$) तु (for स). — $^{b}$) $Dc_{1}$ राष्ट्रे परं ततः; $Dc_{2}$ $D_{2}$ राष्ट्र($Dc_{2}$ राष्ट्रे)परंतपः. — $^{c}$) Dc हनुमंतं। — $^{d}$) $T_{1}$ इरात् (for दूतं). B $Dn_{2}$. $n_{3}$ $D_{1.2.4.6}$ $M_{1}$ प्रास्थापयत्. $T_{2}$ $G_{1}$ रघुः; $G_{2.4}$ द्रुतं (for तदा).

**60** $T_{2}$ om. $60^{ab}$. $G_{1.2.4}$ read $60^{ab}$ after $10^{ab}$. — $^{a}$) $K_{3.4}$ Dc $D_{1-3.5}$ $T_{1}$ $G_{1}$ M [इं]गितैः (for [इं]गितं). $T_{1}$ $G_{1}$ सर्वैः. — $^{b}$) $T_{1}$ $G_{1.2.4}$ सर्वं (for तस्मै). $K_{3}$ $B_{2.3}$

C. 3 16591
B. 3. 291. 61
K 3 292. 62

लक्षयित्वेङ्गितं सर्वं प्रियं तस्मै निवेद्य च ।
वायुपुत्रे पुनः प्राप्ते नन्दिग्राममुपागमत् ॥ ६०
स तत्र मलदिग्धाङ्गं भरतं चीरवाससम् ।
अग्रतः पादुके कृत्वा ददर्शासीनमासने ॥ ६१
समेत्य भरतेनाथ शत्रुघ्नेन च वीर्यवान् ।
राघवः सहसौमित्रिर्मुमुदे भरतर्षभ ॥ ६२
तथा भरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ॥ ६३
तस्मै तद्भरतो राज्यमागतायाभिसत्कृतम् ।
न्यासं निर्यातयामास युक्तः परमया मुदा ॥ ६४
ततस्तं वैष्णवे शूरं नक्षत्रेऽभिमतेऽहनि ।
वसिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् ॥ ६५
सोऽभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम् ।
विभीषणं च पौलस्त्यमन्वजानाद्गृहान्प्रति ॥ ६६
अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तौ मुदा युतौ ।
समाधायेतिकर्तव्यं दुःखेन विससर्ज ह ॥ ६७
पुष्पकं च विमानं तत्पूजयित्वा स राघवः ।
प्रादाद्वैश्रवणायैव प्रीत्या स रघुनन्दनः ॥ ६८
ततो देवर्षिसहितः सरितं गोमतीमनु ।
दशाश्वमेधानाजह्रे जारूथ्यान्स निरर्गलान् ॥ ६९

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

---

Dn $D_{4.6}$ वै; $B_1$ तत्; $G_{2.4}$ सः (for च). — $^{c}$) $B_1$ $T_1$ $G_1$ ततः (for पुनः). $T_2$ $G_{2.4}$ वायुपुत्रस्ततः प्राप्तः. — $^{d}$) Dc $D_{2.5}$ उपागतः ($D_5$ °तं); $Dn_1$ पुरागमत्; $T_2$ $G_{1.2.4}$ उपाविशत् (for उपागमत्).

**61** $^{b}$) $T_1$ जटिलं (for भरतं). — After $61^{ab}$, $G_{2.4}$ ins.:

1306* नन्दिग्रामगतं रामः सशत्रुघ्नं स राघवः ।

**62** $^{a}$) $B_{2-4}$ Dn $D_{4.6}$ $G_3$ संगतो (for समेत्य). — Dc om. $62^{c}$–$64^{d}$. — $^{d}$) $G_1$ मुदितो (for मुमुदे).

**63** Dc om. 63 (cf. v.l. 62). — $^{a}$) B Dn $D_{4.6}$ $G_3$ ततो; $T_2$ $G_{2.4}$ तदा (for तथा). — $^{b}$) $G_4$ मुमुदे (for समेतौ). — $^{c}$) $B_1$ $T_2$ $G_{1.4}$ $M_2$ दर्शने चो° (for दर्शनेनो°).

**64** Dc om. 64 (cf. v.l. 62). — $^{b}$) $K_2$ °भिसंकृतं; $K_3$ °भिसत्कृता; $B_{1.4}$ Dn $D_{4.6}$ °तिसत्कृतं; $D_{1.2}$ $T_1$ $G_3$ °भि($D_3$ $G_3$ °ति)संस्कृतं. — $^{d}$) $G_{1.2.4}$ संयुक्तं परया मुदा ($G_1$ तदा).

**65** $^{a}$) $K_{1.2}$ $M_2$ राघवं; $B_{2.4}$ वैष्णवं. $B_1$ ततस्तं वै महाशूरं. — $^{b}$) $K_4$ नक्षत्रेभिहते; Dc $D_2$ °भिजिते; $D_1$ $G_{2.4}$ °त्रे महि($D_1$ मह)ते. — $^{c}$) $B_{2.3}$ वशिष्ठो. — $^{d}$) $K_{1.4}$ [अ]भिषिंचतां.

**66** $^{a}$) $T_2$ $G_{1.2.4}$ वसिष्ठेन (for कपिश्रेष्ठं). — $^{b}$) $G_1$ ससुहृद्गणं; $G_2$ सुसुहृज्जनं. — $^{c}$) $G_2$ धर्मज्ञम् (for पौलस्त्यम्). — $^{d}$) Dc $D_2$ अनुजानाद्; $T_1$ अभ्यजानाद् (for अन्वजानाद्). $B_1$ पुरीन्; $G_1$ गृहं (for गृहान्). $G_4$ बली (for प्रति).

**67** $^{a}$) $B_{2.3}$ Dn $D_{4.6}$ $G_3$ भोगैः (for रत्नैः). — $^{b}$) $K_{1.2}$ $D_1$ $T_1$ $G_1$ $M_1$ मुदान्वितौ (for मुदा युतौ). — $^{c}$) $K_3$ समाधीय; $K_4$ °ध्याय; $D_{1.3}$ (*sup. lin.* as in text) °दाय (for °धाय). — $^{d}$) $K_{1.2}$ तौ दुःखेन ससर्ज ह.

**68** $^{a}$) $B_{1.3}$ $G_1$ तु; $D_3$ तद् (for च). $K_{3.4}$ $D_{3.5}$ $T_1$ च (for तत्). — $^{b}$) $T_2$ $G_1$ M [अ]थ (for स). — $^{d}$) $D_1$ प्रीतः (for प्रीत्या). $K_4$ $D_3$ वै; $D_5$ च (for स). S (except $G_3$) प्रीत्या परमया युतः.

**69** $^{c}$) $G_{1.2.4}$ शताश्व°. — $^{d}$) $K_{1.2}$ ह्ययोध्यां; $B_1$ $D_1$ $M_1$ जारूथ्यां; $T_1$ हैरण्यान्; $T_2$ जानक्या (for जारूथ्यान्). ❀ Cn: जारूथ्यान् त्रिगुणदक्षिणानित्यर्जुनमिश्रः। ❀ — After 69, $D_1$ ins.:

1307* दश वर्षसहस्राणि दश वर्षशतानि च ।
राज्यं कारितवान्रामः पश्चात्स त्रिदिवं गतः ।

Colophon. — *Major parvan:* $K_{1.2}$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{1.4}$ B D $G_1$ $M_2$ (all om. sub-parvan name) mention only रामो($G_1$ श्रीरामायणो-; $M_2$ रामायणो)पाख्यान; to it $Dn_2$ adds समाप्त. — *Adhy. name:* $K_3$ अभ्युदयिकं; $B_4$ सुग्रीवादिविसर्जनं; $G_1$ श्रीरघुनाथपट्टाभिषेकः; $M_2$ रामाभिषेकः. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 289; $Dn_3$ 290; $D_1$ 294; $T_1$ $M_2$ (orig.) 281; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 279; $G_1$ 276; $G_2$ 278. — *Śloka no.:* Dn 72; $D_1$ 58.

## 276

**1** $^{a}$) $T_1$ महाप्राज्ञ (for महाबाहो). — $^{b}$) $D_1$ राघवेणामितौजसा. — $^{d}$) $D_1$ वने (for वन-). Dc $D_2$ पुनः (for पुरा). — After 1, $G_1$ ins.:

# २७६

मार्कण्डेय उवाच ।

एवमेतन्महाबाहो रामेणामिततेजसा ।
प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ॥ १
मा शुचः पुरुषव्याघ्र क्षत्रियोऽसि परंतप ।
बाहुवीर्याश्रये मार्गे वर्तसे दीप्तनिर्णये ॥ २
न हि ते वृजिनं किंचिद्दृश्यते परमण्वपि ।
अस्मिन्मार्गे विषीदेयुः सेन्द्रा अपि सुरासुराः ॥ ३
संहत्य निहतो वृत्रो मरुद्भिर्वज्रपाणिना ।
नमुचिश्चैव दुर्धर्षो दीर्घजिह्वा च राक्षसी ॥ ४
सहायवति सर्वार्थाः संतिष्ठन्तीह सर्वशः ।
किं नु तस्याजितं संख्ये भ्राता यस्य धनंजयः ॥ ५
अयं च बलिनां श्रेष्ठो भीमो भीमपराक्रमः ।
युवानौ च महेष्वासौ यमौ माद्रवतीसुतौ ।
एभिः सहायैः कस्मात्त्वं विषीदसि परंतप ॥ ६
य इमे वज्रिणः सेनां जयेयुः समरुद्गणाम् ।
त्वमप्येभिर्महेष्वासैः सहायैर्देवरूपिभिः ।
विजेष्यसि रणे सर्वानमित्रान्भरतर्षभ ॥ ७
इतश्च त्वमिमां पश्य सैन्धवेन दुरात्मना ।
बलिना वीर्यमत्तेन हृतामेभिर्महात्मभिः ॥ ८
आनीतां द्रौपदीं कृष्णां कृत्वा कर्म सुदुष्करम् ।
जयद्रथं च राजानं विजितं वशमागतम् ॥ ९
असहायेन रामेण वैदेही पुनराहृता ।
हत्वा संख्ये दशग्रीवं राक्षसं भीमविक्रमम् ॥ १०
यस्य शाखामृगा मित्रा ऋक्षाः कालमुखास्तथा । C. 3. 16613 B. 3. 292. 12 K. 3. 293. 12

---

1308* तदुक्तं भवतां सर्वं रामायणमनुत्तमम् ।
आयुष्यमिदमाख्यानं शृण्वतामघनाशनम् ।
पुत्रपौत्रप्रदं पुंसामायुरारोग्यवर्धनम् ।
तस्मात्त्वमपि राजेन्द्र भ्रातृभिः सह धर्मज ।

**2** $^{a}$) $D_5$ भरत° (for पुरुष°). — $^{b}$) $Dn_3$ परंतपः. — $^{c}$) $B_{2-4}$ D (except $D_{1.3.5}$) $G_3$ °श्रिते (for °श्रये). — $^{d}$) $B_1$ प्राप्तनिर्णये; $M_1$ दीप्तिनिर्णये.

**3** $^{b}$) B $Dc_1$ Dn $D_{4.6}$ $G_3$ M वर्तते (for दृश्यते). $K_4$ परमाण्वपि; $G_1$ परमावपि. — $^{c}$) $T_1$ तस्मिन् (for अस्मिन्). $K_3$ B D (except $D_{1.3}$) निषी($B_1$ °षे)देयुः. — $^{d}$) $B_{1.3}$ सेंद्रापि ससुरासुराः.

**4** $^{a}$) $T_1$ संहत्याभिहते वृत्रे. — $^{b}$) $G_4$ मन्युभिर् (for मरुद्भिर्). — $^{c}$) K Dc $D_{1-3.5}$ च ($D_1$ स) महावीर्यो (for चैव दुर्धर्षो). — $^{d}$) $G_1$ दीप्तजिह्वा; $G_{2.4}$ दीर्घजंघा.

**5** $^{a}$) Dc $D_2$ ते सर्वाः (for सर्वार्थाः). — $^{b}$) $K_4$ Dc $D_2$ संतिष्ठंते. $K_3$ $D_{3.5}$ च; Dc $D_{1.2}$ हि (for [इ]ह). $K_{1.2}$ सर्वतः; $B_{1.3.4}$ S (except $G_3$) नित्यशः. — $^{c}$) $K_3$ $D_5$ न; $Dc_2$ $D_3$ $T_1$ $G_{1.3}$ तु (for नु). $D_5$ स्वर्गे; T $G_4$ M संख्ये; $G_1$ युद्धे; $G_2$ संघे (for संख्ये). — $^{d}$) B Dn $D_{4.6}$ $G_3$ transp. भ्राता and यस्य.

**6** $^{a}$) $G_{2.4}$ तु (for च). — $6^{b}$ =1. 2. $184^{b}$; 114. $9^{d}$; 141. $18^{b}$; etc., etc. — $^{c}$) $K_1$ अयुवानो; $K_3$ सुवीणौ च; $D_{1.3}$ योद्धारौ च (for युवानौ च). — $^{d}$) B D (except $D_{1.3.5}$) $G_3$ वीरौ; $M_1$ इमौ; $M_2$ विमौ (for यमौ). — $^{f}$) $G_4$ नराधिप (for परं°).

**7** $^{a}$) $K_4$ $D_3$ य एते; $Dc_2$ $D_2$ यदिमे (for य इमे). $G_1$ पत्रिणः (for वज्रिणः). Dc सेंद्रा (for सेनां). — $^{b}$) $K_{1-3}$ $D_{1.5}$ दहेयुः. $K_1$ Dc $D_2$ समरुद्गणाः; $K_3$ $D_5$ $G_1$ °द्गणान्; $D_{1.4}$ °द्गणं. — $^{c}$) $T_2$ [ए]तैर् (for [ए]भिर्). — $^{e}$) $K_4$ विजेष्यसे. $B_2$ कुरून् (for रणे).

**8** $^{a}$) $K_1$ Dc $D_{1-3.5}$ भ्रातृभिश्चापि पश्येतां.

**9** $K_1$ om. $9^{ab}$. — $^{a}$) Dc $D_2$ $T_1$ $G_{1.4}$ आनीता द्रौपदी कृष्णा. — $^{b}$) =1. 1. $82^{d}$; 147. $13^{d}$. $K_2$ सुदुष्कृतं — After $9^{ab}$, $K_1$ *repeats* $7^{cd}$. — $^{d}$) $D_1$ च समागतं; $D_3$ च सहानुगं (for वशमा°).

**10** $^{a}$) $B_1$ सहसा येन रा°. — $^{c}$) $T_1$ $G_{2.4}$ M संखे; $G_1$ संघे. — $^{d}$) $K_{1.2}$ Dc $D_{1.2}$ भीमदर्शनं.

**11** $^{ab}$) $K_{1.2.4}$ $B_{1.4}$ Dn $D_{3.5.6}$ मित्राण्यृक्षाः; $D_1$ T $G_{2.4}$ मित्रमृक्षाः; $G_1$ ऋक्षा मित्राः (by transp.). S (except $G_3$) कृष्ण° (for काल°). — $^{c}$) $K_{1.2}$ °गतान्; $G_2$ °कृता (for °गता). — $^{d}$) $K_1$ एतान्; S (except $G_3$) इति (for एतद्). $K_{1.2.4}$ $D_{1.3}$ विचारय; $K_3$ $Dn_1$ $D_5$ $T_1$ विचिंतय; Dc $D_2$ विचिंत्यतां; $G_1$ [अ]नुचिंत्य च (for [अ]नुचिन्तय).

C. 3. 16613
B. 3. 292. 12
K. 3. 293. 12

जात्यन्तरगता राजन्नेतद्बुद्ध्यानुचिन्तय ॥ ११
तस्मात्त्वं कुरुशार्दूल मा शुचो भरतर्षभ ।
त्वद्विधा हि महात्मानो न शोचन्ति परंतप ॥ १२

वैशंपायन उवाच ।
एवमाश्वासितो राजा मार्कण्डेयेन धीमता ।
त्यक्त्वा दुःखमदीनात्मा पुनरेवेदमब्रवीत् ॥ १३

इति श्रीमहाभारते आरण्यकपर्वणि षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

# २७७

युधिष्ठिर उवाच ।
नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १
द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनादपहृता बलात् ॥ २
अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाथ वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३

मार्कण्डेय उवाच ।
शृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ॥ ४

---

**12** $^{a}$) Dc $D_2$ एतस्मात् (for तस्मात्त्वं). $G_3$ वै कुरुश्रेष्ठ (for कुरु°). $B_{2.4}$ Dn $D_{4.6}$ तस्मात्स त्वं ($B_2$ Dn सर्वं) कुरुश्रेष्ठ. — $^{c}$) $K_1$ तद्विधाय (for त्वद्विधा हि). $K_{1.2}$ महाबाहो (for °त्मानो). — After 12, $K_{1.2}$ ins. a passage of 14 lines given in App. I (No. 29).

**13** $^{a}$) $D_3$ राजन् (for राजा). — $^{b}$) $K_1$ मार्कंडेयेन. — $^{c}$) $D_5$ दैन्यम् (for दुःखम्). — $^{d}$) $B_{1.2}$ अप्येवम्; $B_{3.4}$ Dn $D_{4.6}$ $G_3$ अप्येनम् (for एवेदम्). — For 13$^{cd}$, $G_1$ subst.:

1309* श्रुत्वा रामायणं सर्वं त्यक्त्वा दुःखं युधिष्ठिरः ।
मार्कण्डेयं पुनः प्राह भ्रातृभिः सह संमतैः ।

Colophon. In $K_3$, the portion of the text from this colophon up to 3. 278. 19$^{ab}$ is lost on a missing fol. — *Major parvan:* $K_{1.2}$ $Dn_2$ $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{1.2.4}$ B Dc $Dn_1$. $n_3$ $D_{1-6}$ $T_1$ G M (all om. sub-parvan name) mention only रामो ($K_2$ श्रीरामो°; $T_1$ $G_2$ $M_2$ श्रीरामायणो°; $G_1$ $M_1$ रामायणो) पाख्यान; to it all these (except $B_3$) add समाप्त. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 290; $Dn_3$ 291; $D_1$ 295; $T_1$ $M_2$ (orig.) 282; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 280; $G_1$ 277; $G_2$ 279. — *Śloka no.:* Dn $D_1$ 14.

**277**

☞ Here begins what is perhaps the most celebrated of all the episodes of the Great Epic, namely, the Sāvitrī episode. The episode occurs also in the Skanda Purāṇa (7. 1. 166); many lines and pādas of our text recur *verbatim* in the Purāṇa text. — This adhy. is missing in $K_3$ (cf. v.l. 3. 276. 13).

**1** 1$^{a}$=3. 281. 92$^{a}$. — $^{b}$) $K_{1.2}$ transp. नेमान् and भ्रातॄन्. K ($K_3$ missing) $D_{1.3}$ $T_2$ $G_4$ M तथा मुने; $T_1$ परंतप (for महामुने).

**2** $^{a}$) $D_3$ $T_1$ $M_1$ क्लिष्टा; $G_{1.2.4}$ क्लिष्टां. — $^{b}$) $T_1$ $G_{1.2.4}$ $M_2$ क्लिष्टया (for कृष्णया). $D_3$ कृष्णेयं तापिता वयं; $M_1$ क्लिष्टया तारितं वनं. — $^{c}$) $T_1$ बलाद् (for पुनर्). — $^{d}$) Dc $D_2$ $T_2$ $G_{1.2.4}$ बलाद्; $T_1$ वने (for वनाद्). $B_1$ अपहृतं; $B_{2-4}$ D (except $D_{1.5}$) $G_3$ चापि हृता; $T_1$ चापहृता. $Dc_2$ $D_2$ वनात्; $T_1$ पुनः; $T_2$ $G_{2.4}$ [अ]बला (for बलात्).

**3** Cf. 3. 49. 34$^{abcd}$. — $^{b}$) $K_2$ $G_4$ यथा; $B_2$ Dn $D_{3-6}$ $G_3$ [अ]पि वा (for [अ]थ वा). — $^{d}$) $T_2$ $G_{1.2.4}$ यथैव.

**4** $K_1$ मार्कंडेयः; $M_2$ श्रीमार्कंडेयः. — $^{a}$) Dc $D_2$ वरस्त्रीणां; $D_1$ कुरु°. — $^{c}$) $K_2$ यथाप्राप्तं; $M_2$ यथावृत्तं.

**5** $^{a}$) $B_{2-4}$ मंत्रेषु; $G_1$ मात्रेषु. — $^{c}$) $B_{2.3}$ Dn $D_{4.6}$ $G_3$ महात्मा च; $T_2$ $G_{1.2.4}$ कृतज्ञश्च (for शूर°). — $^{d}$) $Dc_1$ सत्यवान्संयतेंद्रियः.

**6** $G_3$ om. (hapl.) 6$^{a}$–7$^{b}$; $Dc_1$ om. 6. — $^{a}$) $K_1$ दानमतिर्. $D_5$ दांतः (for दक्षः). — 6$^{d}$=1. 8. 4$^{d}$;

आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च शरण्यश्च सत्यसंधो जितेन्द्रियः ॥ ५
यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ६
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ॥ ७
अपत्योत्पादनार्थं स तीव्रं नियममास्थितः ।
काले परिमिताहारो ब्रह्मचारी जितेन्द्रियः ॥ ८
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ९
एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ।
स्वरूपिणी तदा राजन्दर्शयामास तं नृपम् ॥ १०
अग्निहोत्रात्समुत्थाय हर्षेण महतान्विता ।
उवाच चैनं वरदा वचनं पार्थिवं तदा ॥ ११
ब्रह्मचर्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च मद्भक्त्या तुष्टास्मि तव पार्थिव ॥ १२
वरं वृणीष्वाश्वपते मद्रराज यथेप्सितम् ।
न प्रमादश्च धर्मेषु कर्तव्यस्ते कथंचन ॥ १३

अश्वपतिरुवाच ।

अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः ॥ १४
तुष्टासि यदि मे देवि काममेतं वृणोम्यहम् ।
संतानं हि परो धर्म इत्याहुर्मां द्विजातयः ॥ १५

सावित्र्युवाच ।

पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै तव हेतोः पितामहः ॥ १६
प्रसादाच्चैव तस्मात्ते स्वयंभुविहिताद्भुवि । C. 3. 16682 B. 3. 293. 17 K. 3. 294. 18

---

61. $53^{d}$; 92. $1^{b}$; 110. $10^{d}$; etc.

**7** $G_3$ om. $7^{ab}$ (cf. v.l. 6); $M_2$ om. $7^{a}$–$8^{b}$. — $^{b}$) Dc $D_2$ सत्यवान्. $B_{1.3}$ Dc $D_2$ S ($G_3$ $M_2$ om.) संय($Dc_2$ $D_2$ °जि)तेंद्रियः; $D_5$ यो जितेंद्रियः (for विजि°). K ($K_3$ missing) वेदवेदांगपारगः. — $D_6$ om. (hapl.) $7^{c}$–$8^{d}$. — $^{c}$) $T_1$ मनसा (for वयसा). — $^{d}$) $T_1$ इव (for उप-).

**8** $D_6$ om. 8; $M_2$ om. $8^{ab}$ (cf. v.l. 7). — $^{a}$) B D (except $D_{1.3}$) $G_3$ °नार्थं च; $T_2$ $G_{1.2.4}$ °नार्थाय. — $^{d}$) S (except $G_3$) बभूव ह (for जितेन्द्रियः).

**9** $^{a}$) $K_{1.2}$ हुत्वा शतसहस्र्यां स; $T_1$ हुताशनसहस्रं स. — $^{b}$) $Dc_1$ $D_{3.5}$ $T_1$ °सत्तमः. $K_{1.2}$ सावित्र्यां °सत्तमः. — $^{c}$) $G_{2.4}$ गते; $M_2$ यथा (for तदा). $B_2$ षष्ठे काले तदा राजन्.

**10** $^{a}$) $D_4$ यतेन (for एतेन). — $^{b}$) $T_1$ च; $T_2$ $G_4$ $M_2$ ह; $G_{1.2}$ $M_1$ हि (for तु). $K_{1.2}$ $D_{1.5}$ वर्षाणि दश चाष्ट च; $Dc_2$ $D_2$ वर्षाण्यष्टौ दशैव तु. — $^{d}$) $D_3$ तोषम् (for तुष्टिम्). $K_{1.2}$ $D_5$ सावित्री तं समभ्यया($D_5$ °गा)त्; $K_4$ °त्री तोषमभ्ययात्. — $^{e}$) B D (except $D_{1.3.5}$) $G_3$ रूपिणी तु (for स्वरू°). K ($K_3$ missing) $D_{1.3.5}$ हि सावित्री (for तदा राजन्).

**11** $^{a}$) S (except $G_3$) समुत्पन्ना (for °स्थाय). — $^{b}$) K ($K_3$ missing) $D_{1.3.5}$ सौम्येन वपुषान्विता. — $^{c}$) $K_1$ वपुषा (for वरदा). — After 11, S (except $G_3$) ins.:

1310* सा तमश्वपतिं राजन्सावित्री नियमस्थितम् ।

**12** Before 12, N (except $K_1$; $K_3$ missing) $T_2$ G ins. सावित्र्युवाच (resp. सावित्री). — $^{b}$) $B_{1.3.4}$ Dc $D_{1.2}$ transp. दमेन and नियमेन. K ($K_3$ missing) $D_{3.5}$ नियमेन च तेनघ. — $^{c}$) B D (except $D_{1.3.5}$) $G_3$ भक्त्या च (for मद्भक्त्या).

**13** $^{b}$) $B_{1.2.4}$ Dn $D_{4.6}$ $T_2$ $G_{2-4}$ यदीप्सितं; $G_1$ यदिच्छसि. — $^{c}$) $D_5$ च कर्तव्यस्; $T_1$ $G_1$ तु ($G_1$ च) ते धर्मे; $G_{2.4}$ स्वधर्मेषु. — $^{d}$) K ($K_3$ missing) $D_{1.3}$ कदाचन. $D_5$ त्वया धर्मे कदाचन.

**14** $^{a}$) $K_{1.2}$ $B_3$ $D_{3.5}$ $T_1$ $G_1$ M अपत्यार्थं. — $^{b}$) $T_2$ $G_{2.4}$ ततो (for कृतो). — $^{c}$) $T_1$ बहुला (for बहवो). — $^{d}$) $B_2$ कुलपावनाः; $T_1$ $G_2$ °वर्धनाः.

**15** $^{a}$) $K_4$ $D_{3.5}$ तुष्टा च; M तुष्टा तु. — $^{b}$) B $Dc_1$ Dn $D_{1.4.6}$ $G_3$ वरम् (for कामम्). $Dn_3$ $G_3$ एनं; $T_1$ एतद्; $T_2$ $G_{1.2.4}$ एवं. — $^{c}$) $B_{1.3}$ संतानः. $K_1$ हि वृणो; B Dn $D_{4.6}$ $G_3$ परमो; $D_5$ $G_4$ हि परं; $T_2$ हि पुरो. $D_5$ धर्मस्. — After 15, B ins.:

1311* एवमुक्त्वा तु सावित्री प्रत्युवाच च तं नृपम् ।

**16** $^{b}$) $K_4$ $T_1$ $G_{1.2}$ $M_2$ इदं (for इमं). — $D_1$ om. $16^{cd}$. — $^{d}$) B D (except $D_{3.5}$; $D_1$ om.) $G_3$ भगवांस्ते (for तव हेतोः).

C 3.16633 B 3.293 17 K. 3.294 18 कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ १७
उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन ।
पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ॥ १८

मार्कण्डेय उवाच ।

स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेव भवेदिति ॥ १९
अन्तर्हितायां सावित्र्यां जगाम स्वगृहं नृपः ।
स्वराज्ये चावसत्प्रीतः प्रजा धर्मेण पालयन् ॥ २०
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ २१
राजपुत्र्यां तु गर्भः स मालव्यां भरतर्षभ ।
व्यवर्धत यथा शुक्ले तारापतिरिवाम्बरे ॥ २२
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे स नृपतिस्तदा ॥ २३
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ २४
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ २५
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ २६
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ २७
अथोपोष्य शिरःस्नाता दैवतान्यभिगम्य सा ।
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि ॥ २८
ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।
पितुः सकाशमगमद्देवी श्रीरिव रूपिणी ॥ २९
साभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता ॥ ३०

---

**17** a) M प्रसादं चैव. $T_1$ दत्ता (for तस्मात्). — b) $B_1$ स्वयं तु; $B_8$ $Dn_{1}$. $n_2$ स्वयंभू° (for स्वयंभु°). $D_5$ नृप (for भुवि). $K_{1.2.4}$ $D_{1.3}$ $T_1$ स्वयंभु($K_4$ °भू)विहितानघ; $T_2$ $G_{1.2.4}$ M स्वयं विहितवत्यहं. — c) $K_4$ $B_2$ M सौम्या; $T_2$ $G_{1.2.4}$ नाम.

**18** a) $K_4$ $D_8$ नेह; $G_{1.2.4}$ न च (by transp.). — b) $G_1$ व्याहर्तं वै. — c) $K_{1.2}$ °विसर्गेण; $T_2$ $G_{1.2.4}$ °नियोगेन.

**19** $B_4$ $G_1$ $M_2$ om. the ref. $K_1$ मार्कंडेय. — a) $M_1$ तथैव. — b) K ($K_3$ missing) Dc $D_{1.2.5}$ नृप. — c) $B_2$ तदा (for पुनः). $T_1$ प्रसादादेव नोवाच. — d) $K_{1.4}$ $D_1$ एवं; $D_5$ एतद्; $T_2$ चैव; $G_1$ त्वेतद् (for एव). B Dc Dn $D_{2.4.6}$ $G_3$ क्षिप्रमेतद्भविष्यति; $T_1$ पुत्रार्थे किंचिदुत्तरं.

**20** b) K ($K_3$ missing) $D_8$ स्वगृहान्; B Dn $D_{4.6}$ $G_3$ स्वपुरं. $K_{1.2}$ $D_1$ नृप; Dc $D_2$ पुनः. — c) M स्वं राज्यं. B Dn $D_{4.6}$ $G_3$ वीरः (for प्रीतः). $T_2$ $G_{1.2.4}$ स राजोपावसत्प्रीतः. — d) $K_4$ प्रजां.

**21** c) K ($K_3$ missing) $D_{1.3.5}$ श्रेष्ठायां. — d) S (except $G_3$) आदधत्.

**22** a) $B_2$ Dn $D_{4.6}$ T $G_{2-4}$ राजपुत्र्यास्; $D_1$ $G_1$ °पत्न्यां. $K_{1.2}$ $M_1$ transp. तु and स. $B_1$ राजपुत्र्यामभूद्गर्भो. — b) Cf. 3. 281. $58^{cd}$. B Dn $D_{4.6}$ मानव्या ($B_{3.4}$ °व्यां); $D_1$ मालव्य; $D_5$ ह्यालंभ्य; T $G_3$ मालव्या; $G_{2.4}$ कालेन. — c) B Dn $D_{4.6}$ $T_1$ $G_3$ M तदा; $T_2$ $G_{1.2.4}$ महाब्ज् (for यथा). — d) $G_4$ ताराधिप इवांबरे.

**23** a) $Dc_2$ $D_3$ प्राप्तकाले. $T_1$ [अ]जनयत् (for सुषुवे). — b) $G_1$ (? gloss) कमल° (for राजीव°). — c) $T_2$ $G_{1.2.4}$ नृपति° (for मुदित°). — d) B Dn $D_{4.6}$ $G_3$ चक्रे च ($B_{3.4}$ स) नृपसत्तमः; $D_5$ चक्रे च नृपतिस्तथा; $T_2$ $G_{1.2.4}$ चक्रे स ($G_1$ सु-) मुदितस्तदा.

**24** b) $D_1$ गतया (for हु°). K ($K_3$ missing) Dc $D_{1.2.5}$ स्वपि; $B_1$ स्विति (for ह्यपि). — c) $D_5$ $T_2$ $G_{1.2.4}$ च (for [ए]व).

**25** a) $K_4$ $B_{1.2.4}$ श्री. $Dc_2$ सावित्री विग्रहवती; $D_2$ सावित्रीग्रवती च श्री (sic). — c) $K_{1.2}$ [ए]व तु; $D_1$ नाति (for चापि). $D_1$ कन्या सा (by transp.).

**26** c) $K_2$ प्राप्तेयं देवि कस्येति. — d) $K_4$ $B_1$ S (except $G_3$) तां (for सं-).

**27** b) $D_5$ दीप्यंती° (for ज्वलन्ती°). — d) Dc $Dn_2$. $n_3$ प्रतिबाधितः; $D_4$ $G_3$ °बोधितः; $D_5$ °भासितां.

**28** a) $B_4$ अथोपास्य. $B_1$ $M_2$ °स्नात्वा. — b) B Dc Dn $D_{2.4.6}$ $G_3$ देवताम(Dc $D_2$ °न)भि°.

**29** b) Dc $D_2$ प्रतिपूज्य. — c) B Dn $D_{4.6}$ $G_3$ समीप° (for सकाश°). — d) Cf. 1. 92. $2^b$. $D_1$ $G_4$ देवश्रीवर($G_4$ °रिव)रू°.

**30** a) $D_1$ om. सा. — b) $K_1$ शेषां पूर्वं; $K_2$ $Dc_1$ शेषा

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ ३१

राजोवाच ।

पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ ३२
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३३
श्रुतं हि धर्मशास्त्रे मे पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ३४
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३५
इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३६

मार्कण्डेय उवाच ।

एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतामित्यचोदयत् ॥ ३७
साभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३८
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३९
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ४०
एवं सर्वेषु तीर्थेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥ ४१ C 3. 16657 B. 3. 293. 41 K. 3. 294. 42

इति श्रीमहाभारते आरण्यकपर्वणि सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

---

पूर्वं. $D_4$ $G_3$ नियम्य (for निवेद्य). — [d]) B Dn $D_{4.6}$ $T_2$ $G_3$ पार्श्वमास्थि($B_{1.3}$ °ग)ता; $D_5$ अग्रतः स्थिता.

**31** [a]) $D_3$ स तां; $T_1$ सुतां (for तु तां). — [b]) $D_1$ $G_{1.4}$ स्व- (for स्वां). — [c]) $D_5$ M तु (for च). $K_{1.2}$ $M_2$ परैर्; $G_{1.2.4}$ नरैर् (for वरैर्).

**32** $K_{1.2}$ अश्वपतिः (for राजो°.) — [a]) $K_2$ पुत्र; $B_2$ प्रति (for पुत्रि). — [c]) $K_2$ अन्वेच्छ; Dc $D_2$ अन्विष्य; $T_2$ $G_{1.2.4}$ $M_2$ इच्छस्व.

**33** [a]) $K_{1.2}$ प्राकृतः; $T_2$ $G_{1.2.4}$ पार्थिवः. — [b]) $G_4$ संनिवेद्यस्. $K_{1.2}$ $D_{1.3.5}$ त्वयानघे. — [c]) K ($K_3$ missing) $B_2$ $Dc_2$ Dn $D_{2.3.6}$ $G_3$ विमृष्याहं. — [d]) $B_1$ वरयध्वं; $D_5$ °स्व; $T_2$ $G_1$ वरं तव; $G_{2.4}$ त्वां वराय; $G_3$ वरयेस्त्वं; M वराय त्वां. Dc $D_2$ यथेच्छसि.

**34** [a]) K ($K_3$ missing) $D_{1.3.5}$ च (for हि). $K_{1.2}$ धर्मशास्त्रं ते; $K_4$ B D $G_3$ °शास्त्रेषु; $G_1$ सर्वशास्त्रे मे. — [b]) $T_2$ $G_{2.4}$ पठ्यमाने; $G_1$ °मानैर्. $D_1$ द्विजातिषु. — [c]) $G_{2.4}$ यथा (for तथा).

**35** =(var.) Manu. 9. 4. — [a]) $K_{1.2}$ याच्यो; $D_3$ वाह्यो; M याप्यो. — [b]) $K_1$ $D_3$ (*sup. lin.* as in text) याच्या($D_3$ °त्या)श्चा°; $K_2$ याच्योश्चा° (sic); $D_5$ वाच्याश्चा°; M याप्यश्चा°. — [c]) S (except $G_{1.3}$) मृते पितरि पुत्रस्तु. — [d]) $K_{1.2}$ याच्यो; $D_3$ (*sup. lin.* as in text) यात्यो; M याप्यो.

**36** [b]) $G_{2.4}$ कुरु (for त्वर). — [c]) $K_{1.2}$ $D_3$ (*sup. lin.* as in text) याच्यो; M याप्यो.

**37** $K_1$ S (except $G_3$ $M_1$) om. the ref. — [a]) $Dc_2$ $D_2$ तु दुहितां (for दुहितरं). — [b]) $K_2$ $Dc_2$ $D_{2.3}$ यथा. $T_2$ धर्मिणः (for मन्त्रिणः). — [c]) $K_1$ °यात्रे च; $B_1$ °यातं च; Dc $D_2$ °यातांश्च; $D_5$ °यात्रं तु; $G_1$ °यात्रां च. — [d]) $K_4$ (marg. *sec. m.* as in text) व्रियताम् (for गम्यताम्). $K_{1.2}$ $B_{2-4}$ D (except $D_{1.3}$) $G_3$ चेति; $K_4$ चापि (for इति). $K_4$ $D_1$ [अ]नोदयत्.

**38** [a]) $G_1$ ततः (for पितुः). — [b]) $K_{2.4}$ B D (except $D_{1.3}$) $G_3$ तप° (for मन°). — [c]) $D_1$ आदाय (for आज्ञाय). — [d]) $D_3$ [अ]निवारिता; T [अ]विचार्य सा ($T_2$ च); $G_1$ $M_1$ विचार्यं च; $G_{2.4}$ विमृश्य च; $M_2$ [अ]विचारयन् (for [अ]विचारितम्).

**39** [a]) $K_2$ $D_5$ हैमरथम्. $T_1$ $G_{2.4}$ हैमं रथं समास्थाय. — [b]) T $G_{1.2.4}$ transp. स्थविरैः and सचिवैः. — [c]) $Dc_2$ $D_2$ वन्यानि (for रम्याणि). — [d]) $T_1$ $G_{2.4}$ सा (for ह).

**40** $K_1$ om. (hapl.) 40–41. — [a]) $B_3$ $Dc_2$ $D_{2.3}$ (*sup. lin.* as in text) वन्यानां (for मा°). — [b]) =(var.) 3. 278. 3[d]. $B_{1.2}$ $Dn_3$ $T_2$ $G_3$ °वादनं (for °वन्दनम्). — [c]) $K_{2.4}$ Dc $D_{1.2.5}$ तानि; M तत्र (for तात). — [d]) $K_2$ $D_5$ अन्व°; Dc $D_{2.3}$ M अभि° (for अभ्य°).

**41** $K_1$ om. 41 (cf. v.l. 40). — [a]) B Dn $D_{3.4.6}$ $T_1$ $G_3$ M (by transp.) तीर्थेषु सर्वेषु; $Dc_2$ (marg. *sec. m.*) व्रनेषु सर्व्रेषु. — [b]) $K_4$ $B_4$ Dc $D_2$ वनोत्सर्गं; $Dc_2$ (by corr.) विचरंती. — [c]) $K_2$ $Dn_2$ कुर्वंती. $K_2$ $D_5$ ऋषि° (for द्विज°). $T_2$ $G_{1.2.4}$ M कुर्व($G_1$ °र्वं)ती द्विजमुख्येषु.

# २७८

C. 3. 16658
B. 3. 294. 1
K. 3. 295. 1

मार्कण्डेय उवाच ।

अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २
नारदेन सहासीनं दृष्ट्वा सा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवन्दनम् ॥ ३

नारद उवाच ।

क्व गताभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि ॥ ४

अश्वपतिरुवाच ।

कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
तदस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ५

मार्कण्डेय उवाच ।

सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ॥ ६
आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ॥ ७
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ८

---

— [d]) K2 D6 तं देशं सा (for तं तं देशं).

Colophon. K3 missing. — *Major parvan:* K1. 2 T2 G3. 4 आरण्य. — *Sub-parvan:* N (K3 missing) T G1. 3 M (all om. sub-parvan name) mention only साविश्यु(D3 °श्यो)पाख्यान. — *Adhy. name:* D5 वरान्वेषणं; M2 सावित्रीजन्मकथनं. — *Adhy. no.* (figures, words or both): Dn 291 (Dn3 292); D1 296; T1 M3 (orig.) 283; T2 G4 M (M3 *inf. lin.*) 281; G1 278; G2 280. — *Śloka no.:* Dn1. n2 40; Dn3 D1 41.

## 278

**1** In K3, 1[a]–19[b] are missing (cf. v.l. 3. 276. 13). K1 मार्कंडेयः; M2 श्रीमार्कंडेयः. — [a]) D1 राजन्.

**2** K3 missing (cf. v.l. 1). — [a]) M2 [ऽ]धिगम्य. — [b]) K1 D5 T1 सर्वान् (for सर्वाणि). B2 च (for [ए]व). B3. 4 च सा; T2 G3. 4 तदा (for तथा). — In D3, the portion from 2[cd] up to 3. 279. 7 is lost on a missing fol. — [c]) K (K3 missing) Dc D1. 2. 5 पुनर् (for पितुर्). — [d]) K1. 2 °श्री च समन्विता.

**3** K3 D3 missing (cf. v.l. 1, 2). — [a]) K1 B3. 4 Dc D2 G2–4 समासीनं. — [b]) B Dn D1. 2. 4. 6 G3 transp. दृष्ट्वा and सा. K1. 2 तं (for सा). K1 शुभम्; D1. 5 तदा. — [d]) =(var.) 3. 277. 40[b]. B2–4 D (except Dc D1; D3 missing) T2 G3 M2 °वादनं (for °वन्दनम्).

**4** K3 D3 missing (cf. v.l. 1, 2). — [a]) K1. 2 गतासीत्; T2 [आ]गताभूत्. — [b]) K1. 2 पुनः (for नृप). — [c]) K1 B2. 3 भद्रे; K2 भद्रं; T2 G1. 2. 4 भद्र (for भर्त्रे). — [d]) K (K3 missing) D1. 5 T2 G1 M चेमां (for चैनां). G4 त्वं (for सं°).

**5** K3 D3 missing (cf. v.l. 1, 2). D1 राजा उ°. — [a]) K1 तेन (for [अ]नेन). — [b]) T2 G1. 2. 4 समागता (for [ए]व चागता). — [c]) B2. 4 Dn D1. 4. 6 G3 एतस्याः; T2 ततोस्याः. T2 विप्रर्षे. — [d]) K4 Dc D2. 5 भर्ता वै (D2 च); D1 भर्तृत्वे (for भर्तारं). T1 M1 वृतं. K1. 2 भर्ता यो वै नराधिपः; T2 भर्तारं येन सा वृता.

**6** K3 D3 missing (cf. v.l. 1, 2). K1 मार्कंडेय; M2 श्रीमार्कं°. — [a]) G1 पितरेणेति (for विस्त°). — [b]) D1 संनोदिता; D5 संबोधिता. T1 सती; T2 G1. 2. 4 M तदा (for शुभा). — [c]) B2. 4 Dn2. n3 तदैव तस्य (for दैवतस्येव). B1 D1 T1 G1 M2 [ए]व; D6 [इ]ति (for [इ]व).

**7** K3 D3 missing (cf. v.l. 1, 2). Before 7, all MSS. (except T2 M; K3 D3 missing) ins. साविश्युवाच (resp. सावित्री). — [a]) K1. 2 S (except T1) आसीत्साल्वेषु. — [d]) B1. 2. 4 Dn D4. 6 G3 चांधो; T G2. 4 M त्वंधो (for अन्धो). K (K3 missing) B2 M सः (for ह).

**8** K3 D3 missing (cf. v.l. 1, 2). — [a]) T2 G1. 2. 4 विचक्षुषस्तदा तस्य. — [b]) T1 साल्व° (for बाल°). — [c]) K (K3 missing) Dc1 D1. 5 सामंतेन; B2 सामात्येन (for सामीप्येन). T1 सामीप्येपहृतं राज्यं. — [d]) B1 वैरिणा किल (for पूर्ववैरिणा).

स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यगतश्चापि तपस्तेपे महाव्रतः ॥ ९
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १०

नारद उवाच ।

अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान्सत्यवान्वृतः ॥ ११
सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
ततोऽस्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति ॥ १२
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान् ।
चित्रेऽपि च लिखत्यश्वांश्चित्राश्व इति चोच्यते ॥ १३

राजोवाच ।

अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान्पितृनन्दनः ॥ १४

नारद उवाच ।

विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव शूरश्च वसुधेव क्षमान्वितः ॥ १५

अश्वपतिरुवाच ।

अपि राजात्मजो दाता ब्रह्मण्यो वापि सत्यवान् ।
रूपवानप्युदारो वाप्यथ वा प्रियदर्शनः ॥ १६

नारद उवाच ।

साङ्कृते रन्तिदेवस्य स शक्त्या दानतः समः ।
ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ १७
ययातिरिव चोदारः सोमवत्प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १८
स दान्तः स मृदुः शूरः स सत्यः स जितेन्द्रियः । C. 3. 16676 B. 3. 294. 19 K. 3. 295. 19

---

**9** $K_3$ $D_3$ missing (cf. v.l. 1, 2). — $^{c}$) B D (except $D_5$; $D_3$ missing) महारण्यं. — $^{d}$) $T_1$ सुदारुणं (for महा°).

**10** $K_3$ $D_3$ missing (cf. v.l. 1, 2). $M_2$ om. 10–11. — $^{a}$) $D_1$ अस्य (for तस्य). $K_{1.2}$ पुनर् (for पुरे). — $^{c}$) Dc $D_2$ वै; $T_2$ [ऽ]सौ (for मे). $G_1$ सत्यवान्मेनुरूपश्च. — $^{d}$) $T_2$ मे भर्तेति समावृतः.

**11** $K_3$ $D_3$ missing (cf. v.l. 1, 2). $M_2$ om. 11 (cf. v.l. 10). — $^{a}$) K ($K_3$ missing) $D_1$ $T_1$ कष्टं (for पापं). — $^{c}$) $B_{2-4}$ $T_1$ $M_1$ अजानत्या. $T_1$ तनयया (for यदनया). — $^{d}$) $B_1$ $D_6$ सत्यवान्गुणवान् (by transp.).

**12** $K_3$ $D_3$ missing (cf. v.l. 1, 2). — $^{b}$) $G_{2.4}$ माता सत्यं (by transp.). $D_6$ [अ]व- (for प्र-). — $^{c}$) $K_4$ $B_{1.2}$ Dn $D_{4.6}$ $G_3$ तथा; $T_2$ तेन (for ततो).

**13** $K_3$ $D_3$ missing (cf. v.l. 1, 2). — $^{a}$) Dc $D_2$ तस्य; $D_1$ चैव; M चासन् (for चास्य). — $^{b}$) $T_2$ $G_{1.2.4}$ स (for च), and मृण्म° (for मृन्म°). — $^{c}$) $T_1$ चित्रे च; $G_1$ पित्रे च (for चित्रेऽपि). $B_2$ Dn $D_{4.6}$ $G_3$ विलिख°; $G_1$ तालिँख°; M चालिख° (for च लिख°). — $^{d}$) $B_4$ तेन (for इति). $D_1$ कीर्त्यते (for चोच्य°).

**14** $K_3$ $D_3$ missing (cf. v.l. 1, 2). $T_1$ om. the ref. $K_{1.2}$ अश्वपतिः (for राजो°). — $^{b}$) $B_2$ $D_1$ स; $T_2$ $G_{1.2.4}$ वै (for वा). $K_{1.2}$ बृहस्पतिसमो मतौ (=15$^{b}$). — $^{c}$) $Dc_2$ $D_5$ शूरश्च (for वा शूरः). $K_{1.2}$ महेंद्र इव शूरश्च (=15$^{c}$). — $^{d}$) B Dc Dn $D_{2.4.6}$ $T_1$ $G_3$ पितृवत्सलः; $D_1$ नृपनंदनः; $G_4$ मित्रनंदनः. $D_5$ त्वया दोषो न दर्शितः.

**15** $K_3$ $D_3$ missing (cf. v.l. 1, 2). — $^{a}$) M आदित्य इव तें°. — $^{c}$) B Dn $D_{1.4-6}$ $G_3$ वीर° (for शूर°).

**16** $K_3$ $D_3$ missing (cf. v.l. 1, 2). $K_4$ $D_{1.5}$ S (except $G_3$) राजा ($D_{1.5}$ add उ°). — $^{a}$) $B_1$ वापि (for दाता). — $^{b}$) B D (except $D_{1.5}$) $G_3$ चापि (for वापि). K ($K_3$ missing) $B_{1.3.4}$ Dc $D_{1.5}$ वीर्यं° (for सत्य°). — $^{cd}$) $Dc_1$ $D_2$ $T_1$ $G_1$ om. (the *second*) [अ]पि (leaving hiatus !).

**17** $K_3$ $D_3$ missing (cf. v.l. 1, 2). $M_2$ om. the ref. — $^{a}$) $K_1$ संकृते; $K_2$ संस्कृते; $K_4$ आकृते. — $^{b}$) B Dc Dn $D_{2.4.6}$ $G_3$ स्व- (for स). $D_5$ $G_1$ शक्त्या दानरतः समः. — $^{c}$) $T_2$ सत्यसंधश्च (for °वादी).

**18** $K_3$ $D_3$ missing (cf. v.l. 1, 2). — $^{c}$) Dc °प्रतिमो (for °न्यतमो). — For 18$^{d}$, cf. 3. 50. 1$^{b}$. — After 18, S (except $G_3$) ins.:

1312* स वदान्यः स तेजस्वी स धीमान्स क्षमान्वितः ।

**19** $D_3$ missing (cf. v.l. 2). 19$^{ab}$ missing in $K_3$ (cf. v.l. 1). — $^{a}$) $K_{1.2}$ सौम्यः (for शूरः). Dc (marg. *sec. m.*) सदा दांतः समृद्धश्च. — M om. 19$^{b}$–20$^{c}$. — $^{b}$) $B_1$ T $G_{1.2.4}$ सत्यसंधो; $Dc_2$ शूरः सत्यो (for स सत्यः स). $B_{2-4}$ $Dc_1$ Dn $D_{1.4.6}$ $G_3$ संय($B_3$ °जि)तेंद्रियः (for स जितेन्द्रियः). — $^{c}$) $G_{2.4}$ सन्मैत्रः. $Dc_2$

C 3. 16676
B. 3 294 19
K. 3. 295 19

स मैत्रः सोऽनसूयश्च स ह्रीमान्धृतिमांश्च सः ॥ १९
नित्यशश्चार्जवं तस्मिन्स्थितिस्तस्यैव च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ २०
अश्वपतिरुवाच ।
गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१
नारद उवाच ।
एको दोषोऽस्य नान्योऽस्ति सोऽद्य प्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ २२
राजोवाच ।
एहि सावित्रि गच्छ त्वमन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य तिष्ठति ॥ २३
यथा मे भगवानाह नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ २४
सावित्र्युवाच ।
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ २५
दीर्घायुरथ वाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ २६
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥ २७
नारद उवाच ।
स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा चालयितुं शक्या धर्मादस्मात्कथंचन ॥ २८

---

(marg. *sec. m.*) सोमसूर्यश्च ; $T_2$ $G_{1.2.4}$ चानसूय($G_{2.4}$ °यु)श्च. — $^{d}$) $D_1$ धीमान्स ; $T_1$ स धीमान् (for स ह्रीमान्). $B_{1.2.4}$ Dn $D_6$ द्युतिमांश्च ; $D_5$ कीर्तिमांश्च.

**20** $D_3$ missing (cf. v.l. 2). M om. $20^{abc}$ (cf. v.l. 19). — $^{a}$) $T_2$ $G_2$ चार्जवस्. $K_3$ तस्य ; $T_2$ तं च (for तस्मिन्). — $^{b}$) $T_2$ $G_2$ धृतिस् ; $G_1$ रतिस् (for स्थितिस्). T $G_{1.2}$ तत्रैव. $G_4$ धृतिश्चैव त्रपा ध्रुवा. — $^{c}$) $K_3$ स दमेन ; $T_1$ स शिक्षितस् (for संक्षेपतस्). $K_4$ $D_{1.5}$ $T_2$ $G_1$ ततो ; $G_2$ तथा ; $G_4$ तदा (for तपो-). — $^{d}$) $B_3$ M शीलवृत्तै°. $K_{1-3}$ स (for च). $K_4$ (marg. *sec. m.* as in text) बालवृद्धैः स कथ्यते.

**21** $D_3$ missing (cf. v.l. 2). $K_{3.4}$ $D_{1.5}$ S (except $G_3$) राजोवाच (resp. राजा). — $^{a}$) $T_1$ सर्वैस्त्वं ; $T_2$ $G_{1.2.4}$ भगवन्. — $^{b}$) K Dc $D_{1.2.5}$ M भगवान्. $K_{1.4}$ $B_{1.3.4}$ $D_{1.5}$ $M_1$ प्रब्रवीति ; $K_2$ °मि ; $K_3$ $T_1$ °हि ; Dc $D_2$ °तु. $T_2$ $G_{1.2.4}$ सत्यवंतं ब्रवीषि मे. — $^{c}$) $B_2$ दोषानप्येष. $K_{1.2.4}$ $D_1$ वै (for मे).

**22** $D_3$ missing (cf. v.l. 2). After the ref., $K_3$ $B_{2-4}$ D (except $D_{1.5}$) $G_3$ ins. :

1313* एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन न शक्यमतिवर्तितुम् ।
[ For line 1, cf. $23^{cd}$. ]

— $^{a}$) $K_{1.2}$ Dn $D_{4.6}$ $G_3$ [ऽ]स्ति ; $K_3$ $B_2$ $D_5$ $G_1$ हि (for ऽस्य). $B_2$ Dn $D_{1.4.6}$ $G_3$ नान्योस्य. — $22^{cd}$ =(var.) $24^{cd}$. — $^{c}$) =Matsyapurāṇa 208. $13^{a}$. $T_2$ $G_{1.2.4}$ सोल्पायुर् (for क्षीणायुर्). — $D_4$ om. $22^{d}$–$23^{c}$. — $^{d}$) $K_4$ $D_5$ देहत्यागं ; $M_1$ °न्यायं.

**23** $D_3$ missing (cf. v.l. 2). $K_{1.2.4}$ $T_1$ om. (hapl.) 23–24 ; $D_4$ om. $23^{abc}$ (cf. v.l. 22). $B_3$ अश्वपतिरुवाच. — $^{a}$) B $Dc_1$ Dn $D_6$ $G_3$ गच्छस्व. — $^{d}$) $B_{1.2}$ Dn $D_{4.6}$ $G_3$ च ($B_1$ हि) स्थितः (for तिष्ठति) ; cf. 1313* (line 1).

**24** $D_3$ missing (cf. v.l. 2). $K_{1.2.4}$ $T_1$ om. 24 (cf. v.l. 23). — $^{a}$) $K_3$ Dc $D_{1.2.5}$ मां (for मे). — $^{b}$) Dc $D_2$ देवसत्तमः. — $24^{cd}$ =(var.) $22^{cd}$. — $^{d}$) $Dn_{2.}n_3$ $D_5$ $G_1$ देहत्यागं.

**25** =(var.) Manu. 9. 47. — $D_3$ missing (cf. v.l. 2). — $^{a}$) $K_2$ $M_1$ निपतितः. $K_3$ सकृज्जल्पंति भूमीशाः. — $^{c}$) $K_4$ सकृच्चाहं. $K_4$ $D_1$ ददामीति. — $^{d}$) $K_{1-3}$ $D_5$ सतां (for the *first* सकृत्), the Manusmṛti variant !

**26** $D_3$ missing (cf. v.l. 2). — $^{a}$) $K_{1.2}$ स्वल्पायुः (for वा°). — $^{c}$) $T_2$ भक्त्या (for भर्ता).

**27** $D_3$ missing (cf. v.l. 2). — $^{a}$) $K_{1.2}$ मनसो. $G_4$ निश्चितं. — $^{b}$) Dc $Dn_{2.}n_3$ $D_2$ वाचा विधी° ; $T_1$ वाग्वाभिधी° ; $T_2$ $G_1$ वागभिधी°. — $^{c}$) Dc transp. क्रियते and कर्मणा.

**28** $D_3$ missing (cf. v.l. 2). $T_2$ $G_{2.4}$ om. (hapl.) 28–30. — $^{a}$) $B_1$ °नृपश्रेष्ठ. — After $28^{ab}$, $K_{1.2}$ ins. :

1314* विलम्बो नात्र कर्तव्यो निश्चिते कर्मणि ध्रुवम् ।

— $K_{1.2}$ $D_4$ om. (hapl.) $28^{c}$–$29^{d}$ ; $G_3$ om. $28^{cd}$. — $^{c}$) $K_4$ पाल° ; B Dc Dn $D_{2.6}$ वार° (for चाल°).

नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ २९

राजोवाच ।

अविचार्यमेतदुक्तं हि तथ्यं भगवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ॥ ३०

नारद उवाच ।

अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्यामहे तावत्सर्वेषां भद्रमस्तु वः ॥ ३१

मार्कण्डेय उवाच ।

एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सर्वं वैवाहिकमकारयत् ॥ ३२

इति श्रीमहाभारते आरण्यकपर्वणि अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

# २७९

मार्कण्डेय उवाच ।

अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ १

ततो वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान् ।
समाहूय तिथौ पुण्ये प्रययौ सह कन्यया ॥ २

मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः । C. 3. 16693 B. 3. 295. 3 K. 3. 296. 3

---

**29** $D_8$ missing (cf. v.l. 2). $K_{1.2}$ $D_4$ $T_2$ $G_{2.4}$ om. 29 (cf. v.l. 28). — c) $D_5$ प्रदानमेतत्तस्मात्ते.

**30** $D_8$ missing (cf. v.l. 2). $T_2$ $G_{2.4}$ om. 30 (cf. v.l. 29). $K_{1.2}$ अश्वपतिः (for राजो°). — a) Hypermetric! M यत् (for हि). $K_{3.4}$ B Dc Dn $D_{1.2.4.6}$ $G_3$ अविचार्यमेतदुक्तं; $D_5$ अवश्यमेतदुक्तं हि; $T_1$ अविचार्यं मे तावदुक्तं (hypermetric); $G_1$ अविचार्यं तदुक्तं यत्. — b) $K_4$ M भगवतो. $K_3$ $B_{1-3}$ Dn $D_{4.6}$ $T_1$ $G_3$ तथ्यं च ($K_3$ हि तथ्यं; $T_1$ यत्तथ्यं) भवता वचः. — c) $K_1$ तदैवैवं; $K_2$ तदैवेतं; $K_{3.4}$ Dc $D_{1.2}$ तदेवं वै; $B_3$ [ए]तदेवाहं; $D_5$ $T_1$ M [ए]तदेवं हि (M वै); $G_1$ [ए]तदेवेह. — d) $T_1$ त्वं गुरुर् (for गुरुर्हि).

**31** $D_8$ missing (cf. v.l. 2). — b) Dc $D_{2.5}$ प्रदानं. — c) $K_{1.2}$ $B_2$ Dn °ष्याम्यहं तावत्; $K_4$ °ष्यामहे तात; $D_1$ $T_1$ °ष्यामि हे तात; $G_4$ °ष्यामि भोस्तावत्. — d) $K_{1.2}$ प्रदाने (for सर्वेषां).

**32** $D_8$ missing (cf. v.l. 2). $D_1$ om. 32. T $G_{2.4}$ $M_2$ om. the ref. $K_1$ मार्कंडेय. — a) $B_1$ Dn $D_{4.6}$ $G_3$ समु° (for खमु°). — b) S (except $G_3$) ययौ (for गतः). — c) K तु; $G_{2.4}$ च (for [अ]पि). $B_2$ Dn $D_{4.6}$ $G_3$ सज्जं (for सर्वं). — d) $D_5$ °मथाकरोत्.

Colophon om. in $D_1$. $D_8$ missing. $G_1$ partly broken. — *Major parvan:* $K_{1.2}$ $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ B D ($D_1$ om.; $D_8$ missing) $G_{1.3}$ M (all om. sub-parvan name) mention only सावित्र्युपाख्यान. — *Adhy. name:* $B_4$ नारदवाक्यं; $M_2$ सावित्रीस्वयंवरकथनं. — *Adhy. no.* (figures, words or both): $Dn_1$ (*sup. lin.*). $n_2$ 292; $Dn_3$ 293; $T_1$ $M_2$ (orig.) 284; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 282; $G_1$ 279; $G_2$ 281. — *Śloka no.:* Dn 33.

## 279

**1** In $D_8$, st. 1–7 are missing (cf. v.l. 3. 278. 2). $K_1$ मार्कंडेयः; $M_2$ श्रीमार्कंडेयः. — a) $K_{1.2.4}$ Dc $D_{1.2.5}$ °प्रदानाय; S (except $T_1$ $G_3$) °प्रदानेन (for °प्रदाने स). — b) $K_4$ Dc वैवाहिकमचिंतयत्. — d) $K_3$ $D_{1.5}$ नृप; Dc $D_2$ ततः (for नृपः).

**2** $D_8$ missing (cf. v.l. 1). — a) $T_2$ वृद्धद्विजान्. — b) $T_2$ $G_2$ $M_2$ ऋत्विग्भिः; $G_1$ °गभ्यः; $T_2$ $G_{1.2.4}$ चं (for स-). Dc ऋत्विजः सपुरोहितः; $T_1$ ऋत्विक्सभ्यपुरोगमान् (*inf. lin.* °हितान्). — c) $K_{1.2}$ M समानीय. B Dn $D_{4.6}$ $G_3$ दिने (for तिथौ). — d) $D_1$ (by transp.) कन्यया सह.

**3** $D_8$ missing (cf. v.l. 1). — a) $K_{1.2}$ $Dc_2$ $D_1$ मेधारण्यं. $T_1$ M तु; $G_{2.4}$ [अ]थ (for च). — b) $B_2$ द्युमत्सेनात्मजं. $K_{1.2}$ ततः; $B_1$ $G_2$ प्रति; $T_2$ पुरः; $G_{1.2}$

C. 3. 16693
B. 3. 295. 3
K. 3. 296. 3

पद्भ्यामेव द्विजैः सार्धं राजर्षिं तमुपागमत् ॥ ३
तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४
स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५
तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ६
तस्य सर्वमभिप्रायमितिकर्तव्यतां च ताम् ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७

अश्वपतिरुवाच ।

सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे ॥ ८

द्युमत्सेन उवाच ।

च्युताः स्म राज्याद्वनवासमाश्रिता-
श्चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे
सहिष्यते क्लेशमिमं सुता तव ॥ ९

अश्वपतिरुवाच ।

सुखं च दुःखं च भवाभवात्मकं
यदा विजानाति सुताहमेव च ।
न मद्विधे युज्यति वाक्यमीदृशं
विनिश्चयेनाभिगतोऽस्मि ते नृप ॥ १०
आशां नार्हसि मे हन्तुं सौहृदात्प्रणयेन च ।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि ॥ ११
अनुरूपो हि संयोगे त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतः सुताम् ॥ १२

द्युमत्सेन उवाच ।

पूर्वमेवाभिलषितः संबन्धो मे त्वया सह ।

---

(*sup. lin.*). $_4$ पुनः (for नृपः). — $^{c}$) $G_4$ [अ]थ तैः (for द्विजैः). — $^{d}$) $K_4$ Dc $D_{1.2}$ S (except $T_1$ $G_3$) राजर्षिस्. $K_1$ उपागतं.

**4** $D_3$ missing (cf. v.l. 1). — $^{a}$) Dc $T_1$ °न्महास्मानं. — $^{b}$) $K_{1.2}$ S (except $T_2$ $G_3$) सालवृक्षम्. $B_1$ Dc $D_4$ अपाश्रितं; $B_3$ अवा°; $Dn_2$ समा°. — $^{c}$) $K_2$ कौस्यां. $K_{1-3}$ $Dn_2$. $n_3$ $D_6$ $G_1$ M वृस्यां; $K_4$ वृश्यां; $B_{2-4}$ $Dc_1$ $D_1$ बृष्यां; $Dc_2$ $Dn_1$ $D_{2.5}$ वृष्यां; $D_4$ बृश्यां; $T_2$ $G_{2-4}$ बस्यां. $G_4$ उपा° (for समा°). — $^{d}$) $Dc_1$. $c_2$ (before corr.) $D_2$ चक्षुहीनं.

**5** $D_3$ missing (cf. v.l. 1). — $^{b}$) $T_2$ $G_{1.2.4}$ चक्रे (for कृत्वा). K Dc $D_{1.2}$ यथाविधि.

**6** $D_3$ missing (cf. v.l. 1). — $^{a}$) $Dc_2$ $D_5$ तस्यार्घम्; $D_1$ °र्धम्; $G_{2.4}$ °र्हम्. $K_4$ $Dc_1$ मानसं (for आसनं). — $^{b}$) $K_4$ आवेद्य; $B_1$ निवेद्य (for चा°). $T_2$ $G_{1.2.4}$ पाद्यं चा- ($G_{2.4}$ °द्यमा)वेद्य धर्म°. — $^{c}$) K S (except $T_2$ $G_3$) इत्येव.

**7** $D_3$ missing (cf. v.l. 1). — $^{a}$) $D_5$ राजा (for ). $D_{1.5}$ पूर्वं° (for सर्वं°). — $^{b}$) $K_{3.4}$ Dc $D_{2.5}$ प्रति; $B_{1.4}$ S (except $G_3$) च सः (for च ताम्). $K_{1.2}$ इतिकर्तव्यसंयुतं.

**8** $B_{1.3.4}$ S (except $M_1$) om. the ref. — $^{c}$) $B_1$ धर्मात्मन् (for धर्मज्ञ). — In $D_1$, the portion of the text from 8$^{d}$ up to 3. 284. 26 is lost on missing fol. — $^{d}$) K Dc $D_2$ $G_{2.4}$ स्नुषार्थं. $G_{2.4}$ सं- (for त्वं).

**9** $D_1$ missing (cf. v.l. 8). $K_4$ राजा उ°. — $^{a}$) S (except $G_3$ $M_2$) च (for स्म). — $^{c}$) $Dc_2$ ह्यनर्हा (for त्व°). $D_3$ $G_4$ आश्रिता (for आश्रमे). — $^{d}$) B Dn $D_{4.6}$ $G_3$ निवत्स्यते; $T_2$ $G_{1.2.4}$ सहिष्यति; M विशक्ष्यति.

**10** $D_1$ missing (cf. v.l. 8). $D_5$ राजोवाच. — $^{a}$) Dc नु (for the *second* च). $D_5$ भवात्मकं यदा (for भवाभवात्मकं). — $^{b}$) $K_4$ Dc $D_{2.3}$ सदा; $D_5$ पुरा; S (except $G_3$) यथा (for यदा). $K_{1.2}$ सुता मम; $T_1$ सुखाहम् (for सुताहम्). $D_3$ वा (for च). — $^{c}$) $G_4$ मद्विधो. $D_5$ तिष्ठति (for युज्यति). — $^{d}$) $K_3$ Dc $D_{2.3}$ $T_1$ M °नाधिगतो(Dc $D_2$ °नाभिगता)स्मि ते नृप; $T_2$ $G_{2.4}$ नाहमिहागतो नृप.

**11** $D_1$ missing (cf. v.l. 8). — $^{a}$) $K_{1.2}$ छेत्तुं (for हन्तुं). — $^{b}$) N (except $D_3$; $D_1$ missing) $G_3$ प्रणतस्य (for °येन). — $^{c}$) $B_3$ Dc $D_2$ स्वागतं; $T_2$ $G_{2.4}$ चागतः. $B_2$ प्रेप्सुः; $D_5$ $T_2$ प्रीत्या (for प्रेम्णा). — $^{d}$) $K_4$ च नार्हसि (for न मार्हसि).

**12** $D_1$ missing (cf. v.l. 8). — $^{a}$) $K_4$ अभि° (for अनु°). $K_{1.2}$ $G_1$ [ऽ]सि; Dc $D_2$ [ऽ]पि (for हि). $K_4$ $D_{3.5}$ $T_1$ संयोगस्; B Dc Dn $D_{2.4.6}$ $G_3$ युक्तश्च; $T_2$ $G_1$ संयोक्ता; $G_{2.4}$ M संयुक्तः ($G_4$ °क्ता). — $^{b}$) $T_2$ क्षमो मे चैव वै तव; $G_{1.2.4}$ M त्वं ममाहं च वै तव. — $^{c}$) $D_1$ $G_3$

भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ १३
अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः ।
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ॥ १४

मार्कण्डेय उवाच ।

ततः सर्वान्समानीय द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १५
दत्त्वा त्वश्वपतिः कन्यां यथार्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६
सत्यवानपि भार्यां तां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १७
गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १८
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमावहत् ॥ १९
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवकार्यैश्च वाचः संयमनेन च ॥ २०
तथैव प्रियवादेन नैपुणेन शमेन च ।
रहश्चैवोपचारेण भर्तारं पर्यतोषयत् ॥ २१
एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदतिचक्राम भारत ॥ २२
सावित्र्यास्तु शयानायास्तिष्ठन्त्याश्च दिवानिशम् ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ २३　C. 3. 16713 B. 3. 295. 23 K. 3. 296. 23

इति श्रीमहाभारते आरण्यकपर्वणि एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

---

प्रतीक्ष. G1 [इ]मां (for मे). — $^{d}$) K1. 2 कृते; K3 B3. 4 Dn D4–6 G3 सतः; K4 शुभां; B1 ततः; B2 सुतः; T1 स तां. Dc D2 भार्यार्थं भवतः सुतः; D3 यथार्हं च परिच्छदं (=16$^{b}$).

**13** D1 missing (cf. v.l. 8). K2 om. 13$^{a}$–14$^{b}$. — $^{c}$) M हृत° (for भ्रष्ट°). T1 भ्रष्टराज्योहमिति च. — $^{d}$) B2 तत्र यत्र (for तत एतद्).

**14** D1 missing (cf. v.l. 8). K2 om. 14$^{ab}$ (cf. v.l. 13). — $^{a}$) K (K2 om.) Dc D2. 3. 5 transp. [अ]यं and यो. T1 [अ]थ (for [अ]यं). T1 मेयं; T2 G1 वै मे; G2. 4 वै ते; M मे यः (for यो मे). B2 °प्रायस्त्वदीया मे. — In K3, the portion of the text from 14$^{b}$ up to 3. 284. 33$^{a}$ is lost on missing fol. — $^{b}$) D5 तु (for [अ]भि-). — $^{c}$) B2 Dn1 निवर्ततु; D3 प्रवर्ततु; D5 प्रजातस्तु. K1 संनिवर्तितुमद्यैव; K2 स निर्वर्ततुमद्यैव; K4 स प्रवर्ततु अद्यैव; Dc D2 स निवृत्तस्त्वयाद्यैव; T1 G1 स ते निर्वर्त्यतामद्य (G1 °तां सद्यः); T2 G2. 4 सद्यो निर्वर्त्यतां सत्यः; M स मे (M2 ते) निवर्ततां सद्यः. — $^{d}$) M2 मतः (for ऽतिथिः). T1 corrupt.

**15** K3 D1 missing (cf. v.l. 14, 8). B Dc Dn D2. 4 S (except G3 M1) om. the ref. K1 मार्कंडेय. — $^{a}$) B2 Dn D4. 6 G3 समानाय्य. — $^{c}$) K4 समुद्धारं.

**16** K3 D1 missing (cf. v.l. 14, 8). — $^{a}$) T1 ददौ (for दत्त्वा). B1. 2 Dn D4. 6 G3 सोश्व°; B4 T G1. 2. 4 चाश्व° (for त्वश्व°). — $^{b}$) K (K3 missing) B1. 2 Dn D4–6 G3 स- (for च). K1. 2 -परिच्छदां. — $^{c}$) T1 ददौ (for ययौ).

**17** K3 D1 missing (cf. v.l. 14, 8). — $^{a}$) B Dn D4–6 G3 transp. भार्यां and तां. — $^{c}$) K (K3 missing) Dc D2. 3 सापि (for सा च). K1. 2 लब्ध्वा तं (by transp.).

**18** K3 D1 missing (cf. v.l. 14, 8). — $^{ab}$) G2. 4 transp. सर्वाणि and संन्यस्य. B3 T1 G1 M1 च (for सा). — $^{c}$) K4 D3 जग्राह.

**19** K3 D1 missing (cf. v.l. 14, 8). T1 om. (hapl.) 19–20. — $^{a}$) T2 G2. 4 देवी; G1 चापि; M एव (for चैव). — $^{b}$) D5 प्रशस्तेन. D3 नयेन (for दमेन). — T2 G2. 4 om. (hapl.) 19$^{c}$–21$^{b}$. — $^{c}$) G1 सा च (for सर्व-). — $^{d}$) K4 पुष्टिम्; B1 प्रीतिम्. B Dn D4–6 G1. 3 M1 आदधे; M2 आदधत् (for आवहत्).

**20** K3 D1 missing (cf. v.l. 14, 8). T G2. 4 om. 20 (cf. v.l. 19). — $^{a}$) K (K3 missing) B1. 3 D3. 5 M1 °संस्कारैः (for °सत्कारैः). — $^{b}$) K1. 2 सर्वैरुत्सादनानि च (K2 °दिभिः). — $^{c}$) B1. 3. 4 D (except D3. 5; D1 missing) G3 देवसत्कारैर्.

**21** K3 D1 missing (cf. v.l. 14, 8). T2 G2. 4 om. 21$^{ab}$ (cf. v.l. 19); K1. 2 om. (hapl.) 21$^{ab}$. — $^{b}$) K4 Dn2 D3. 5 नैपुण्येन; Dc D2 निपुणेन. Dc D2 समेन; D1 द° (for श°). — $^{d}$) B1 सम° (for पर्य°).

**22** K3 D1 missing (cf. v.l. 14, 8). — $^{b}$) K4 B2 Dc D2. 3 सदा; S (except G2. 3) तथा (for तदा). — $^{c}$) T1 किंचिद्. — $^{d}$) B1 अभिचक्राम; B2–4 Dn D4. 6 G3 अपाक्रामत; Dc D2 T1 अतिक्रामत; T2 व्यतिचक्राम; M इति चक्राम.

# २८०

C. 3 16714
B. 3 296. 1
K. 3. 297 1

मार्कण्डेय उवाच ।

ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ।
प्राप्तः स कालो मर्तव्यं यत्र सत्यवता नृप ॥ १
गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते ।
तद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः ॥ २
चतुर्थेऽहनि मर्तव्यमिति संचिन्त्य भामिनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताभवत् ॥ ३
तं श्रुत्वा नियमं दुःखं वध्वा दुःखान्वितो नृपः ।
उत्थाय वाक्यं सावित्रीमब्रवीत्परिसान्त्वयन् ॥ ४
अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे ।
तिसृणां वसतीनां हि स्थानं परमदुष्करम् ॥ ५

सावित्र्युवाच ।

न कार्यस्तात संतापः पारयिष्याम्यहं व्रतम् ।
व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ६

द्युमत्सेन उवाच ।

व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथंचन ।
पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ७

मार्कण्डेय उवाच ।

एवमुक्त्वा द्युमत्सेनो विरराम महामनाः ।
तिष्ठन्ती चापि सावित्री काष्ठभूतेव लक्ष्यते ॥ ८
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत ॥ ९

---

**23** $K_3$ $D_1$ missing (cf. v.l. 14, 8). — $^{a}$) $K_4$ T $G_{1.2.4}$ $M_1$ च; $B_{2-4}$ स्म (for तु). $B_1$ Dn $D_{4.6}$ $G_3$ साविञ्या श्लाघमानायास्. — $^{b}$) B Dn $D_{4.6}$ $G_3$ च (for तु). — After 23, $G_1$ ins.:

1315* तदा प्रभृति सावित्री गणयामास वासरान् ।

Colophon om. in $K_{1.2}$. $K_3$ $D_1$ missing. — *Major parvan:* $T_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_4$ B D ($D_1$ missing) $T_1$ $G_{1.3}$ (all om. sub-parvan name) mention only साविञ्यु($D_3$ °ञ्यो)पाख्यान. — *Adhy. name:* $M_2$ सावित्रीप्रदानं. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 293; $Dn_3$ 294; $T_1$ $M_2$ (orig.) 285; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 283; $G_1$ 280; $G_2$ 282. — *Śloka no.:* Dn 23.

## 280

☞ This adhy. is missing in $K_3$ $D_1$ (cf. v.l. 3. 279. 14, 8); the MSS. are mostly ignored here.

**1** K ($K_3$ missing) om. the ref. $M_2$ श्रीमार्कंडेय. — $^{a}$) $T_1$ तस्य काले बहुतिथौ; $T_2$ $G_{1.2.4}$ काले बहुतिथे ($T_2$ °थौ) तस्य. — $^{c}$) $T_1$ मर्तव्यो. — $^{d}$) $T_1$ M सत्यवतो.

**2** $^{a}$) $M_1$ गणयंत्या च. — $^{c}$) B Dn $D_{4.6}$ $G_3$ यद्वाक्यं.

**3** $K_2$ om. $3^{ab}$. — $^{a}$) $T_2$ $G_{2.4}$ संप्राप्त (for मर्तव्यम्). — $^{b}$) $D_5$ $G_{2.4}$ निश्चित्य (for संचिन्त्य). B D (except $D_3$) $G_3$ भाविनी.

**4** $^{a}$) $K_{1.2}$ तत् (for तं). $K_{1.2}$ बद्धं; B Dn $D_3$ (marg. *sec. m.*) $_{4.6}$ $G_3$ तस्या; $G_1$ M वध्वा (for दुःखं). $T_2$ $G_{2.4}$ तां श्रुत्वा नियतिं वध्वा. — $^{b}$) B Dn $D_3$ (marg. *sec. m.*). $_{4.6}$ $G_3$ भृशं; $T_2$ $G_{1.2.4}$ नित्यं; M तदा (for वध्वा). — $^{d}$) $K_2$ $D_5$ सोब्रवीत्; $B_1$ उवाच (for अब्रवीत्).

**5** Before 5, all MSS. (except $D_5$; $D_3$ marg. *sec. m.*; $K_3$ $D_1$ missing) ins. द्युमत्सेन उ°. — $^{a}$) $B_1$ अतिव्रतो. $T_1$ समारंभस्; $G_2$ यथा°; $G_4$ व्रता° (for [अ]यमारम्भस्). — $^{b}$) Dc $D_2$ त्वया प्राप्तो. — $^{c}$) $Dn_2$ $T_1$ $M_1$ तिसृणां. $K_4$ (marg. *sec. m.* as in text) वासतेयीनां (for वसतीनां हि). — $^{d}$) B D (except $D_{3.5}$) $G_3$ °दुश्चरं.

**7** $^{a}$) M त्वा (for त्वां). $D_5$ व्रतं सिध्यति व्यक्तं त्वां; $T_2$ व्रतं ते मेति वक्तुं त्वां; $G_2$ व्रतं तेनेति वा वक्तुं; $G_4$ व्रतं नेति ममावक्तुं. — After $7^{ab}$, $K_2$ reads $8^{cdab}$. — $^{d}$) $T_1$ corrupt.

**8** $K_2$ transp. $8^{ab}$ and $8^{cd}$ and reads the st. after $7^{ab}$. — $^{c}$) B Dn $D_{4.6}$ $G_3$ चैव (for चापि). $G_4$ गायत्री (for सावित्री)! — $^{d}$) $K_{1.2}$ स्म (for [इ]व). G दृश्यते.

**9** $G_4$ om. $9^{cd}$. — $^{d}$) $D_5$ सा रात्रि; $M_1$ सा निशा; $M_2$ साविञ्या. $K_1$ व्यभिवर्तत; $B_1$ Dc $D_2$ पर्यं°; $B_3$ अत्य°; $B_4$ व्यत्यवर्तते; $D_5$ संन्यवर्तत.

**10** $^{a}$) $B_4$ तं (for तद्). Dc $D_2$ दिवसश्च. $B_3$ प्राप्तं

अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १०
ततः सर्वान्द्विजान्वृद्धाञ्श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥ ११
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२
एवमस्त्विति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् ॥ १३
तं कालं च मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ॥ १४
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तस्थामिदं वाक्यं प्रीत्या भरतसत्तम ॥ १५

श्वशुरावूचतुः ।

व्रतो यथोपदिष्टोऽयं यथावत्पारितस्त्वया ।
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् ॥ १६

सावित्र्युवाच ।

अस्तं गते मयादित्ये भोक्तव्यं कृतकामया ।
एष मे हृदि संकल्पः समयश्च कृतो मया ॥ १७

मार्कण्डेय उवाच ।

एवं संभाषमाणायाः सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् ॥ १८
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
सह त्वयागमिष्यामि न हि त्वां हातुमुत्सहे ॥ १९

सत्यवानुवाच ।

वनं न गतपूर्वं ते दुःखः पन्थाश्च भामिनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ २०

सावित्र्युवाच ।

उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः । C. 3. 16734 B. 3. 296. 21 K. 3. 297. 22

---

(for चेति). K ($K_3$ missing) $D_{3.5}$ अद्या($D_3$ °प्य)सौ दिवसश्चेति; S (except $G_3$) अद्य वै तद्दिनं चेति. — $^{b}$) K ($K_3$ missing) Dc $D_{2.3.5}$ शीघ्रं (for दीप्तं). — $^{d}$) Epic tag. Cf. Hopkins, *Great Epic*, p. 409, No. 49. $K_{1.2}$ Dn $D_{3.5}$ $G_3$ पूर्वाह्णिकीः; $K_4$ Dc $D_2$ पूर्वाह्णिकीः ($K_4$ °कीं); $T_2$ $G_{2.4}$ पौर्वाह्णिकीं. $K_4$ $T_2$ $G_{2.4}$ क्रियां. — After 10, $G_1$ ins.:

1316* व्रतं समाप्य सावित्री स्नात्वा शुद्धा यशस्विनी ।

**11** $^{a}$) $G_1$ सर्वद्विजान्. $B_1$ श्वश्रूं (for वृद्धान्). — $^{b}$) $B_1$ तथा (for श्वश्रूं). — $^{c}$) $K_{2.4}$ $Dc_2$ $D_{2.3}$ °पूर्वेण. — $^{d}$) M प्रणता (for नियता).

**12** $^{a}$) $B_4$ $T_1$ °शिषं. $K_1$ तेस्तु. — $^{b}$) K ($K_3$ missing) $D_{3.5}$ संवृत्या($K_2$ °ता-; $D_3$ °त्य-; $D_5$ °ध्य)र्थं; $B_4$ साविञ्यार्थे; $T_1$ $G_{1.2.4}$ M संप्रीत्यर्थं; $T_2$ सममेव.. $D_5$ हितां शुभां; $T_1$ गिरः शुभाः.

**13** $^{b}$) K ($K_3$ missing) Dc $D_{2.3.5}$ एकांते (Dc $D_{2.3}$ एकांत-; $D_5$ त्वेकांत-) ध्यानमास्थिता; $G_{1.2}$ ध्यानशोकपरायणा. — $^{c}$) $T_1$ सा (for ता). A few MSS. सर्वा. — $^{d}$) $B_3$ $G_{2.4}$ तपस्विनी; $G_1$ मनस्विनी.

**14** $^{a}$) B D (except $D_{3.5}$) $G_3$ तं (for the *second* च). — $^{b}$) $K_1$ तु विस्मिता; $K_2$ शुचिस्मिता (for नृपा°).

**15** $K_1$ om. $15^{ab}$. — $^{a}$) $K_4$ $D_3$ $G_{1.2.4}$ च (for तु). $T_2$ तौ श्वश्रूश्वशुरौ बंधू. — $^{b}$) $G_{2.4}$ तौ (for तां). $G_1$ अनिंदितां (for नृपा°). — $^{c}$) B Dn $D_{4.6}$ $G_3$ एकांतमास्थितां वाक्यं. — $^{d}$) $D_5$ प्रीतौ.

**16** $K_2$ $T_2$ $G_{1.2.4}$ M om. the ref. $K_1$ श्वश्रूश्वशुरावूचतुः; $K_4$ $D_{3.5}$ $T_1$ श्वशुर उवाच. — $^{a}$) $T_1$ व्रतं. $T_2$ $G_{1.2.4}$ [ऽ]पि (for ऽयं). $K_4$ B Dc Dn $D_{2.4-6}$ $G_3$ व्रतं यथोपदिष्टं तु ($K_4$ $D_5$ वै; $B_{1-3}$ यद्; $B_4$ $Dn_3$ ते; $Dn_{1.n2}$ $D_{4.6}$ तद्). — $^{b}$) $K_4$ $D_5$ पारितं; $T_1$ धारितस्; $T_2$ $G_{1.2.4}$ चरितस् (for पारितस्). B Dc Dn $D_{2.4.6}$ $G_3$ तथा तत्पारि($B_1$ °लि)तं त्वया. — $^{c}$) K ($K_3$ missing) $D_{3.5}$ प्राप्तस्ते (for संप्राप्तः). — $^{d}$) $B_1$ $T_2$ $G_{2.4}$ तदनंतरं.

**17** $T_2$ om. the ref. — $^{b}$) $K_2$ Dc $D_{2.4.5}$ $G_{2.3}$ कृतकाम्यया. — $K_{1.2}$ $T_2$ $G_{2.4}$ om. (hapl.) $17^{cd}$. — $^{c}$) Dc $D_2$ एवं (for एष).

**18** $T_2$ om. the ref. $K_1$ माकांडेयः. — $^{a}$) $K_{1.2}$ $B_4$ संभाष्य($B_4$ °ष)मानायाः; $K_4$ $B_{1.3}$ Dc $D_{2.3}$ $T_2$ $M_1$ °षमाणायां. — $^{b}$) $K_4$ B (except $B_2$) $T_2$ $M_1$ साविञ्यां. — $^{c}$) $B_3$ $G_1$ आधाय. — $G_1$ (om. $18^{d}$) ins. after $18^{abc}$:

1317* कठिनं च तथा करे ।
खनित्रं सत्यवान्गृह्य प्रस्थितश्च वनं प्रति ।
तं प्रणम्याब्रवीत्साध्वी नारदोक्तं वशानुगा ।

**19** $^{a}$) $Dc_2$ $D_2$ $T_2$ $G_{2.4}$ सावित्रीत्वाह; $G_1$ साविञ्याह च. — $^{b}$) $Dn_3$ नैव त्वं. — $T_2$ $G_{2.4}$ om. (hapl.) $19^{c}$–$21^{d}$. — $^{c}$) $K_{1.2}$ सार्धं त्वया°; $D_5$ त्वया सहा°. — $^{d}$)

C. 3. 16734
B. 3. 296. 21
K 3. 297. 22

गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि ॥ २१

सत्यवानुवाच ।

यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।
मम त्वामन्त्रय गुरून्न मां दोषः स्पृशेदयम् ॥ २२

मार्कण्डेय उवाच ।

साभिगम्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ २३
इच्छेयमभ्यनुज्ञातुमार्यया श्वशुरेण च ।
अनेन सह निर्गन्तुं न हि मे विरहः क्षमः ॥ २४
गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव ।
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् ॥ २५
संवत्सरः किंचिदूनो न निष्क्रान्ताहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ २६

द्युमत्सेन उवाच ।

यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ २७
तदेषा लभतां कामं यथाभिलषितं वधूः ।
अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि ॥ २८

मार्कण्डेय उवाच ।

उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ २९
सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूररवघुष्टानि ददर्श विपुलेक्षणा ॥ ३०
नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्रीं मधुराक्षरम् ॥ ३१
निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता ।

---

K1. 2 नाहं (for न हि). K1 T1 त्वा (for त्वां). K1. 2 त्यक्तु°; T1 [अ]सितु° (for हातु°).

**20** T2 G2. 4 om. 20 (cf. v. 19). — b) K1. 4 Dc1 D2. 3 दुःखपंथाश्च. B Dc Dn D2. 4–6 G3 भाविनि. — c) K (K3 missing) D3 °ग्लाना च; T1 °संक्षामा; M2 °कामा च (for °क्षामा च).

**21** T2 G2. 4 om. 21 (cf. v.l. 19). K1 om. the ref. — a) T1 G1 M उपवासेन (for °सान्न). — b) T1 M नापि (for चापि). G1 नास्ति नाथ त्वया सह. — c) G1 अनुग्रहस्त्वया कार्यः. — d) K4 न चार्हसि; Dc D2 च नार्हसि.

**22** T2 G4 om. the ref. — c) Dc1 Dn1 D4. 5 गुरू (for गुरून्). — d) T1 G2. 4 मे; M2 मा (for मां).

**23** K1 मार्कंडेयः; M2 श्रीमार्कंडेयः. — a) B D (except D3) T1 G3 साभिवाद्य; T2 सा हि गत्वा (for साभिगम्य). K1. 2 [आ]ह तच् (for [अ]ब्रवीच्). — b) B3 पतिव्रता (for महा°). — c) B4 स्वयं. Dc D2 भर्ता मे (by transp.). — d) T1 फलान्वेषी. G1 महद्वनं.

**24** a) K2. 4 इच्छेहम्. B1. 4 Dc D2. 3 °ज्ञातम्; B2. 3 Dn D4. 6 G3 °ज्ञाता (for °ज्ञातुम्). T2 G1. 2. 4 इच्छाम्यहमनुज्ञातुम्. — b) K4 B1–3 Dn D4. 6 G3 ह (for च). B4 Dc D2 आर्यायाः श्वशुरस्य ह. — c) K (K3 missing) Dc D2. 3. 5 T1 गच्छेयं; G1 निर्यातुं. — d) B Dn D4. 6 G3 मेद्य; D5 हि तं (for हि मे). T2 G2. 4 प्रियः (for क्षमः).

**25** a) K1. 2 Dc D2 °होत्रस्य कृते. — b) T2 G1. 2. 4 [अ]यं (for च). K1. 2 प्रस्थितस्य सुतस्य ते. — c) B3. 4 हि वार्यो (for निवार्यो).

**26** a) B3. 4 D5 T2 संवत्सरं किंचिदूनं; Dc2 D2 °त्सरः किं दूरं नो. — b) G1 महाश्र°; G4 ममाश्र° (for [अ]हमाश्र°).

**27** a) S (except T2 G3) यदा (for यतः). — b) K2 D3 दत्ता पित्रा (by transp.). — c) G1 ननु याद्यात्मनो युक्तम्. — d) D5 पूर्वमुक्तं; T1 M वचः किंचित् (for उक्तपूर्वं).

**28** d) K1. 2 पतिसत्य°; Dc D2 पुत्रि सत्यवता.

**29** T1 G1 om. the ref. K1 मार्कंडेयः; M2 श्रीमार्कंडेयः. — a) Dc D2 अप्य° (for अभ्य°). — b) T1 तप°; G1 मन° (for यश°). — d) K1. 2 विधूयता; B1. 2 M च दूयता; T1 [अ]वदूयता.

**30** c) B Dn D4. 6 G3 मयूरगणजुष्टानि; T1 °परिघुष्टानि; G1 °वरघुष्टानि. — d) D3 T1 G1. 2. 4 विमले° (for विपुले°).

**31** a) K1. 2 D2 नदी; G2. 4 नदीं. B4 D3. 5 T G1. 2. 4 M पुष्पवहाश्च (G2. 4 °हां); Dc1 D2 पुण्यवहां. — d) K1. 2 मधुरस्वनां; K4 °स्वरं; B1. 2 Dn D4. 6 G3 मधुरं वचः; B3. 4 Dc D2. 3 मधुरस्वरां; D5 मधुरं स्वरं.

**32** a) K1. 2 B4 Dn1. n2 D2. 5 निरीक्ष्य°; T1 सा पश्यमाना; G1. 2. 4 M सा वीक्षमाणा. — b) D5 सर्वावस्थास्वनिंदिता; G2. 4 °स्थमतंद्रिता. — c) T1 हत° (for मृत°). B2 Dn D4. 6 G3 हि भर्तारं; T1 M पतिं मेने (for हि तं मेने). — d) M1 [अ]स्मरत् (for स्मरन्). K1. 2 स्मरंती वचनं मुनेः!

**33** a) Hypermetric! K1 अनुवर्ती तु भर्तारं; K4 B2. 3 Dn D3–6 G3 अनुव्रजंती भ°; B4 भर्तारमनुवर्तंती; Dc D2

मृतमेव हि तं मेने काले मुनिवचः स्मरन् ॥ ३२
अनुवर्तती तु भर्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥ ३३

इति श्रीमहाभारते आरण्यकपर्वणि अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

# २८१

मार्कण्डेय उवाच ।
अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काष्ठान्यपाटयत् ॥ १
तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ २
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ ३
अङ्गानि चैव सावित्रि हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ४
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
तत्स्वप्तमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ ५
समासाद्याथ सावित्री भर्तारमुपगूह्य च ।
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥ ६
ततः सा नारदवचो विमृशन्ती तपस्विनी । C. 3. 16753 B. 3. 297. 7 K. 3. 298. 7

अनुवर्तती भ॰; T1 (hypermetric) अनुवर्तमाना भ॰; T2 G1. 2. 4 आवर्जयंतीव पतिं; M (hypermetric) अनुवर्तती सा तु (M2 तु नु-) पतिं. — b) K1. 2 मृदुवाहि(K2 ॰दि)नी. M सर्वावस्थमनिंदिता (=32b). — c) K1 D3 T2 G2 द्विधैव. K2 द्विधैव मनसा हृत्वा; D5 हृदयं च द्विधा कृत्वा. — d) K1. 4 अवेक्षत; K2 D3 अवैक्षत; D2 अवेक्ष्यती; D5 अवेक्ष्य च; T1 अवेक्ष्य सा; T2 G1. 2. 4 प्रतीक्षती. M तं कालं च प्रतीक्षते (M2 ॰ता).

Colophon om. in D5. K3 D1 missing. — *Major parvan:* K1. 2 Dn2 T2 G2. 4 आरण्य. — *Sub-parvan:* K4 B D T1 G1. 3 (all om. sub-parvan name) mention only सावित्र्यु(D3 ॰त्र्यो)पाख्यान. — *Adhy. name:* M2 सावित्र्यानुगमनं. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 294; Dn3 295; T1 M2 (orig.) 286; T2 G4 M (M2 *inf. lin.*) 284; G1 281; G2 283. — *Śloka no.:* Dn1. n2 32; Dn3 33.

## 281

☞ This adhy. is missing in K3 D1 (cf. v.l. 3. 279. 14, 8); the MSS. are mostly ignored here.

1 K1 मार्कंडेयः; M2 श्रीमार्कंडेयः. — c) K1. 2 जठरं (for कठिनं). T1 पाठ॰ (for पूर॰). — d) K1. 2 B1. 4 G3 [अ]पातयत्. T G1. 2. 4 M ततः काष्ठं समा(T1 ॰ह्युपा)-हरत्.

2 a) B1. 4 Dc D2 G1. 4 M ततः (for तस्य). K1. 2 पातयतः. — c) D5 कृतेन (for च तेन).

3 K1. 2. 4 om. (hapl.) 3. Before 3cd, B Dn D4. 6 G3 ins. सत्यवानुवाच. — c) T G1. 2. 4 M व्यायामेन च (T1 M1 हि) मे भीरु. — d) Dc D2 जज्ञे.

4 b) Dc D2 दह्यतीव च; D5 दूयते हि मे; T1 G4 च विदूयते; T2 च प्रदूयते; G1. 2 चैव दूयते; M चापि दूयते (for दूयतीव च). — c) K2 अंतस्थ॰ (for अस्वस्थ॰). — d) K2 लक्ष्यसे. T2 G1. 2. 4 मृदु॰ (for मित॰).

5 c) B2 अस्वस्थमेव कल्याणि; S (except G1. 3) स्वप्तुमिच्छामि क॰. — After 5, K1. 2 ins.:

1318* भ्रमतीव दिशः सर्वाश्चक्रारूढं मनो मम ।

6 a) B2 Dn D4. 6 G3 सा समासाद्य सावित्री; T1 सहसाप्यथ सा॰; M तमासाद्य तु सा॰. — b) Cf. 69a. K1 D2 T1 उपगुह्य; K2 उप*ह्य; K4 B3 Dc T2 G1. 4 ॰गृह्य; B1. 2. 4 Dn D4. 6 G3 ॰गम्य; only D3. 5 G2 M as in text. — c) K1. 2 उत्संगे च; B2 ॰गस्य; Dc1 D2 ॰गेस्याः; G2. 4 ॰गे सा. — d) D5 शुभानना (for मही॰).

7 b) K1 D5 विमृष्यंती; K2 B1. 3. 4 Dn2. n2 D4 विमृषंती. K1. 2 T2 मनस्विनी. — c) M मुहूर्तं च (M2 ल-) क्षणं वेलां. — After 7, S (except G3) ins.:

1319* हन्त प्राप्तः स कालोऽयमिति चिन्तापरा सती ।

C. 3. 16753 B. 3 297. 7 K. 3 298. 7

तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ७
मुहूर्तादिव चापश्यत्पुरुषं पीतवाससम् ।
बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ८
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥ ९
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपता ॥ १०
दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि मे देव कस्त्वं किं च चिकीर्षसि ॥ ११

यम उवाच ।

पतिव्रतासि सावित्रि तथैव च तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ॥ १२
अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्याम्येनमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् ॥ १३

मार्कण्डेय उवाच ।

इत्युक्त्वा पितृराजस्तां भगवान्स्वं चिकीर्षितम् ।
यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥ १४
अयं हि धर्मसंयुक्तो रूपवान्गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः ॥ १५
ततः सत्यवतः कायात्पाशबद्धं वशं गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ १६
ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १७
यमस्तु तं तथा बद्ध्वा प्रयातो दक्षिणामुखः ।

---

**8** $^{a}$) $B_{2.3}$ D (except $D_{3.5}$) $G_{1.3}$ मुहूर्तादेव. S (except $G_{1.3}$) सा° (for चा°). — $^{b}$) $Dc_1$ $D_2$ मुहूर्तं (for पुरुषं). B D (except $D_{3.5}$) $G_3$ रक्त° (for पीत°). — $T_1$ $M_2$ om. $8^{cd}$. $T_2$ $G_{1.2.4}$ $M_1$ transp. $8^{cd}$ and $9^{ab}$. — $^{c}$) $K_2$ उद्ध°; $K_4$ चंद्र° (for बद्ध°). — $^{d}$) = 1. 114. $25^{b}$. $D_3$ °त्यसमतेजसा; $T_2$ $G_{1.2.4}$ $M_1$ °त्यमि($M_1$ °त्य इ)व तेजसा.

**9** $T_2$ $G_{1.2.4}$ $M_1$ transp. $8^{cd}$ and $9^{ab}$. — $^{a}$) $K_2$ श्यामावदांतं. $D_5$ चक्राक्षं. — $^{d}$) $T_2$ $G_{1.2.4}$ निरीक्षंती.

**10** $^{b}$) $T_1$ M transp. शनैः and शिरः. — $^{c}$) $B_3$ (m as in text) उवाचेदं; $G_2$ अथोवाच; $G_4$ उवाचाथ (for उवाचार्ता). — $^{d}$) $K_4$ विदूयता; B D (except $D_5$) $G_3$ प्रवेपती; $T_2$ $G_{2.4}$ प्रवेपिता.

**11** Before 11, $B_{2.3}$ Dn $D_{4.6}$ S (except $M_1$) ins. सावित्र्युवाच (S MSS. om. उवाच). — $^{a}$) $K_{1.2}$ दैवस्त्वं. $T_2$ $G_{1.2.4}$ चाभि°; $M_1$ त्वां वि°; $M_2$ त्वावि° (for त्वाभि°). — $^{b}$) $K_1$ ह्येतद् (for एतद्). $K_4$ Dc $D_{2.5}$ $T_2$ $G_{2.4}$ अमा° (om. हि); $T_1$ न मा° (for ह्यमा°). — $^{c}$) $K_{1.2}$ काम्यया; $T_1$ कामये; $G_1$ काम्यायाया; $G_{2.4}$ कामाया. B Dn $D_{4.6}$ $G_3$ देवेश; $T_2$ $G_4$ मे कस्त्वं; $G_1$ कस्त्वं हि; $G_2$ मे सत्यं (for मे देव). $K_4$ $D_3$ को हि देवोसि मे ब्रूहि. — $^{d}$) $D_5$ देव त्वं किं; $T_2$ $G_{1.2.4}$ किं च कर्म (for कस्त्वं किं च).

**12** $K_2$ श्रीयमः. — $^{a}$) $T_1$ $G_1$ °व्रता च. — $^{b}$) $T_2$ तथैव तपसान्विता. — $^{c}$) K ($K_3$ missing) $D_3$ ततस्त्वाम्. Dc $D_2$ $T_2$ अभिजानामि; $G_{2.4}$ न हि भीषामि. — $^{d}$) $D_4$ मा (for मां). $G_{2.4}$ च (for त्वं).

**13** $^{a}$) $G_1$ अयं ते तु पतिः शांतः. — $T_1$ om. $13^{cd}$. — $^{c}$) $K_{1.2}$ [ए]तम्; B Dn $D_{4.6}$ $G_3$ तम्; $D_3$ [ए]वम् (for [ए]नम्). — $^{d}$) $Dc_2$ $D_3$ तन् (for [ए]तन्). — After 13, Dn $D_6$ $G_3$ ins.:

1320* सावित्र्युवाच ।
श्रूयते भगवन्दूतास्तवागच्छन्ति मानवान् ।
नेतुं किल भवान्कस्मादागतोऽसि स्वयं प्रभो ।

**14** $K_4$ $B_4$ $D_{3.5}$ $T_1$ $G_1$ om. the ref. $K_1$ मार्कंडेयः. M reads $14^{ab}$ after 15. — $^{a}$) $K_4$ Dn $D_6$ इत्युक्तः. M त्वां (for तां). — $^{b}$) K $B_{1-3}$ Dn $D_{3.6}$ स्व-; $G_1$ सं- (for स्वं). — M om. $14^{cd}$. — $^{c}$) $T_1$ $G_2$ स यथावत्समाख्यातुं.

**15** Before 15, $D_4$ $T_2$ G ins. यमः. — $^{a}$) B Dn $D_{4.6}$ $G_3$ अयं च; $G_1$ सत्यवान् (for अयं हि).

**16** Cited (with v.l.) as "smṛti" in Śaṁkara's Bhāṣya on the Vedānta Sūtra 1. 3. 24; also in the Tantravārttika of Kumārila on Jaim. Sūtra 2. 1. 5. — $^{b}$) $Dc_1$ $G_{2.4}$ M पाशबद्धवशं गतं; $D_4$ $G_3$ पाशबद्ध ($G_3$ °द्धं) च संगतं; $T_1$ पाशबंधम**स्तं; $G_1$ पाशहस्तवशं गतं.

**17** $^{b}$) $K_4$ $D_{3.5}$ गतसत्त्वं. T $G_{1.2.4}$ गतप्रभं. — $^{c}$) $D_2$ विनिश्चेष्टं. $G_2$ शरीरं तं; $M_2$ वशं [? read शवं] तत्तु.

**18** $^{a}$) $D_3$ यमश्च. $K_{1.4}$ B Dn $D_{4.6}$ $G_3$ ततो; Dc $D_2$ महा- (sic); $G_1$ तदा (for तथा). — $^{b}$) $K_{1.2}$ °मुखं; $D_3$ °मुखे. — $^{c}$) B Dn $D_{4.6}$ $G_3$ चैव; M सापि. — $^{d}$) Dc $D_2$ $T_2$ $G_{1.2.4}$ [अ]न्वपद्यत. $T_1$ स्वयं वा यत्र गच्छती. — After $18^{cd}$, S (except $G_3$) ins.:

1321* भर्तुः शरीररक्षां च विधाय हि तपस्विनी ।

सावित्री चापि दुःखार्ता यममेवान्वगच्छत ।
नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ १८

यम उवाच ।

निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम् ।
कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया ॥ १९

सावित्र्युवाच ।

यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मयापि तत्र गन्तव्यमेष धर्मः सनातनः ॥ २०
तपसा गुरुवृत्त्या च भर्तुः स्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ २१
प्राहुः सप्तपदं मित्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ २२
नानात्मवन्तस्तु वने चरन्ति
धर्मं च वासं च परिश्रमं च ।
विज्ञानतो धर्ममुदाहरन्ति
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २३
एकस्य धर्मेण सतां मतेन
सर्वे स्म तं मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीयं च वाञ्छे
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २४

यम उवाच ।

निवर्त तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं
ददानि ते सर्वमनिन्दिते वरम् ॥ २५

सावित्र्युवाच ।

च्युतः स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसंनिभः ॥ २६

यम उवाच ।

ददानि ते सर्वमनिन्दिते वरं　　C. 3. 16775 / B. 3. 297. 28 / K. 3. 298. 29

---

भर्तारमनुगच्छन्ती तथावस्थं सुमध्यमा ।

[ $T_1$ transp. lines 1 and 2. — (L. 2) $T_1$ तथावृत्तं. ] — $^e$) K ($K_3$ missing) Dc $D_{2.3.5}$ °संपन्ना. — $^f$) $K_{2.4}$ $B_3$ $D_{4.6}$ यतव्रता (for पति°).

**19** $K_2$ श्रीयमः. — $^a$) $T_2$ $G_4$ निवर्त्य. — $^b$) K ($K_3$ missing) $D_5$ $T_2$ कुरुष्वास्यौर्ध्वदैहिकं; Dc $D_{2.3}$ °ष्वास्योर्ध्वदे($D_{2.3}$ °दै)हिकं. — After 19, $D_3$ ins.:

1322* एष मार्गो विशालाक्षि न केनाप्यनुगम्यते ।

**20** $^a$) $Dc_2$ (marg. *sec. m.*) एष (for यत्र). Dc नियमे (for नीयते). — $^c$) B Dn $D_{4.6}$ $T_2$ $G_3$ मया च (for मयापि). — $20^d$=1. 113. $13^d$ : 4. 50. $7^d$; etc., etc.

**21** $^a$) $K_4$ B D (except $D_{3.5}$) $T_1$ $G_3$ गुरुभक्त्या. — $^b$) $K_2$ $Dc_1$ $D_{2.3.5}$ $G_4$ भर्तृस्नेहाद्; $T_1$ M भर्तृस्नेह°. — $^c$) $G_2$ तवैव च (for तव चैव).

**22** $^a$) =(var.) 3. 246. $35^a$. $K_4$ $B_4$ Dn $D_{3.4.6}$ $G_3$ $M_1$ साप्तपदं. $K_{1.4}$ $B_{2-4}$ D (except $D_{3.5}$) $G_3$ $M_1$ मैत्रं. — $^b$) $D_3$ वृद्धास् (for बुधास्). $G_4$ न्यायार्थं° (for तत्त्वार्थ°). — $^c$) =3. 246. $35^c$. $K_{1.4}$ $B_{3.4}$ $D_5$ $T_1$ तु; $K_2$ तत्; $D_3$ ते (for च). — $^d$) $D_3$ ते (for तत्).

**23** Before 23, $T_1$ ins. सावित्री. — $^a$) $B_4$ नानार्थंवंतस्. K ($K_3$ missing) Dc $D_{2.3.5}$ हि; $T_1$ M च (for तु). — $^b$) K ($K_3$ missing) Dc $D_{2.3.5}$ सत्यं (for वासं). B Cnp (!) प्रतिश्रयं; $Dn_1.n_2$ परिश्रयं; $Dn_3$ प्रतिश्रमं. — $^c$) $D_5$ M विजानतो; T $G_{1.2.4}$ विजा($T_1$ °ज्ञा)नंतो. — $^d$) = $24^d$. $B_2$ तस्यां वसंतो; $T_1$ तद्वै संतो (for तस्मात्सन्तो).

**24** $K_{1.2.4}$ $D_2$ om. (hapl.) 24. — $^a$) $G_1$ एतस्य. Dc $D_{3.5}$ S (except $G_3$) धर्मस्य. — $^b$) $D_3$ स्म तन्; $D_5$ सतां; $T_1$ स्वतन् (sic); $T_2$ $G_{1.2.4}$ मतं; $M_2$ स्म सन् (for स्म तं). — $^c$) Dc om. वै. $D_5$ om. the second मा. $B_3$ Dc Dn $D_{4.5}$ च वांछेत्; S (except $G_3$) चतुर्थं. — $24^d$=$23^d$.

**25** $K_2$ श्रीयमः. — $^a$) $B_2$ गच्छस्व (for तुष्टोऽस्मि). — $^b$) $B_4$ सुधाक्षर°; $G_4$ स्फुटाक्षर°. — $^c$) $M_1$ वृणीष्वेव. $G_1$ विनाद्य. — $^d$) =$27^a$. $K_4$ $Dc_2$ $D_{2.3}$ $G_{1.2}$ ददामि. K ($K_3$ missing) $D_3$ सम्यग्; $M_1$ धर्मम्; $M_2$ धर्म्यम् (for सर्वम्).

**26** $^a$) $K_2$ $D_5$ $G_{1.4}$ स राज्याद्; $D_4$ $G_3$ स्वराष्ट्राद्; $T_1$ च राज्याद्. — $^d$) $B_4$ °नार्कसप्रभ.

**27** $K_2$ श्रीयमः. — $^a$) =$25^d$. $K_4$ $D_3$ $G_{2.4}$ ददामि. $B_2$ Dn $D_{4.6}$ $G_3$ [ऽ]हं तम् (for सर्वम्). — $^b$) Dc $D_2$ transp. यथा and त्वया. — $^c$) $K_{1.4}$ Dc $D_{2.3}$ T तवा($T_1$ °था)ध्वनि. $T_1$ क्लेश°; $G_{1.2.4}$ क्लांति° (for ग्लानि°).

C. 3. 16775
B. 3. 297. 28
K 3 298 29

यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ २७

सावित्र्युवाच ।

कुतः श्रमो भर्तृसमीपतो हि मे
यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः
सुरेश भूयश्च वचो निबोध मे ॥ २८
सतां सकृत्संगतमीप्सितं परं
ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं
ततः सतां संनिवसेत्समागमे ॥ २९

यम उवाच ।

मनोनुकूलं बुधबुद्धिवर्धनं
त्वयाहमुक्तो वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं द्वितीयं वरयस्व भामिनि ॥ ३०

सावित्र्युवाच ।

हृतं पुरा मे श्वशुरस्य धीमतः
स्वमेव राज्यं स लभेत पार्थिवः ।
जह्यात्स्वधर्मं न च मे गुरुर्यथा
द्वितीयमेतं वरयामि ते वरम् ॥ ३१

यम उवाच ।

स्वमेव राज्यं प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ३२

सावित्र्युवाच ।

प्रजास्त्वयेमा नियमेन संयता
नियम्य चैता नयसे न कामया ।
अतो यमत्वं तव देव विश्रुतं
निबोध चेमां गिरमीरितां मया ॥ ३३
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ ३४

---

**28** a) B Dn $D_{4. 6}$ $T_1$ $G_3$ M transp. कुतः and श्रमः. K ($K_3$ missing) Dc $D_{2. 5}$ [अ]द्य; $D_3$ च (for हि). — b) $D_3$ गतिर्ध्रुवं. — d) $K_4$ $D_{2. 3}$ सुरेश भूयोपि; Dc स्वरेण भूयश्च; $T_1$ सुरोत्तमान्यच्च.

**29** a) $B_3$ °त्संगमम् (for °त्संगतम्). $Dn_3$ वरं; S (except $G_3$) मतं (for परं). $K_4$ सकृत्सतां संगतमीप्सितं वरं. — c) $K_4$ S (except $G_3$) सत्पुरुषेषु. — d) $K_4$ $D_3$ (marg. *sec. m.*) ततः सतां संगतमेव मन्ये.

**30** $K_2$ श्रीयमः. — a) $K_4$ बत; $Dc_2$ बहु-; $D_2$ $G_2$ M बल- (for बुध-). — b) $K_{1. 2}$ त्वयेदमुक्तं; B Dn $D_{4-6}$ $G_3$ त्वया यदुक्तं. — $30^c = 36^c$. — d) $B_{3. 4}$ Dc $D_{2. 5}$ भाविनि (for भामिनि).

**31** $T_1$ om. the ref. — a) $M_1$ परैर् (for पुरा). T $G_{1. 2. 4}$ हृतं हि राज्यं श्वशुरस्य मे परैः. — b) $K_2$ प्रतिपत्स्यते-चिरात् (cf. $32^a$); $K_4$ B D (except $D_5$) $G_3$ लभतां स पार्थिवः. — c) $B_{1-3}$ Dn $D_{4. 6}$ $G_3$ स्वधर्मान्. $T_2$ $G_{2. 4}$ ransp. न and च. $G_1$ M यम (for यथा). $K_{1. 2. 4}$ Dc $D_{2. 3. 5}$ न च स्वधर्मं प्र($K_4$ वि)जहीत मे गुरुर्. — d) $B_{1. 2. 4}$ Dn $D_{4. 6}$ $T_1$ $G_3$ एतद्; Dc $D_{2. 5}$ $G_{2. 4}$ $M_2$ एवं; $T_2$ $G_1$ एनं (for एतं).

**32** a) $B_4$ पुनः स्वराज्यं. $K_4$ स हि लप्स्यते; $D_3$ प्रति-लप्स्यते; $G_1$ प्रतिपद्यते. — b) $K_2$ प्रतिहास्यते; $K_4$ परिहार्यते; $T_1$ $G_{1. 2. 4}$ $M_1$ परिहीयते.

**33** a) $K_4$ प्रजा त्वयेयं; $B_{1-3}$ D (except $D_{3. 5}$; $D_1$ missing) $G_3$ प्रजास्त्वयैता. $T_1$ प्रजास्त्वमेतां च नियम्य चैव. — b) $K_4$ नियम्य चैतां; $D_3$ °म्य चैतान्; $D_5$ °म्य चैना; $T_1$ त्वमेव सर्वा; $T_2$ नियम्यते ता; $G_1$ °म्य चेतो; $G_{2. 4}$ °म्य चैवं. K ($K_3$ missing) $B_3$ Dc $Dn_2$ $D_{2. 3. 5}$ $G_3$ न काम्यया; $B_{1. 2}$ $Dn_1$ Cn निकामया; $G_1$ $M_1$ न कामतः; Cnp न कामया (as in text). ❀ Cn: निकामया कामितेनार्थेन । ❀ — c) B Dn $D_{4. 6}$ $G_{2. 3}$ ततो (for अतो).

**34** a) $D_5$ सर्वभूतानां.

**35** b) $B_{2. 4}$ $Dn_1$ (*sup. lin.* as in text). $n_3$ $D_4$ $G_3$ Cnp (see below) भक्ति°; $G_1$ शांति° (for शक्ति°). ❀ Cn: अशक्तिपेशलाः शक्तिकौशलहीनाः । पाठान्तरे भक्तिः श्रद्धा कौशलं च ताभ्यां हीनाः । संधिरार्षः । ❀ — c) $K_{1. 2. 4}$ Dc $D_{2. 3. 5}$ संतस्त्वपि ह्यमित्रेषु; $Dn_3$ °स्ते चाप्य°; $T_2$ $G_{1. 2. 4}$ संतः स्वेष्वप्य($G_2$ °पि)मित्रेषु.

एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३५

यम उवाच ।

पिपासितस्येव यथा भवेत्पय-
स्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं वृणीष्वेह शुभे यदिच्छसि ॥ ३६

सावित्र्युवाच ।

ममानपत्यः पृथिवीपतिः पिता
भवेत्पितुः पुत्रशतं ममौरसम् ।
कुलस्य संतानकरं च यद्भवे-
त्तृतीयमेतं वरयामि ते वरम् ॥ ३७

यम उवाच ।

कुलस्य संतानकरं सुवर्चसं
शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ ३८

सावित्र्युवाच ।

न दूरमेतन्मम भर्तृसंनिधौ
मनो हि मे दूरतरं प्रधावति ।
तथा व्रजन्नेव गिरं समुद्यतां
मयोच्यमानां शृणु भूय एव च ॥ ३९
विवस्वतस्त्वं तनयः प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः ।
शमेन धर्मेण च रञ्जिताः प्रजा-
स्ततस्तवेहेश्वर धर्मराजता ॥ ४०
आत्मन्यपि न विश्वासस्तावान्भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ ४१
सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ४२

यम उवाच ।

उदाहृतं ते वचनं यदङ्गने
शुभे न तादृक्त्वदृते मया श्रुतम् ।
अनेन तुष्टोऽस्मि विनास्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च ॥ ४३

सावित्र्युवाच ।

ममात्मजं सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत्कुलोद्वहम् । C. 3. 16792 B. 3. 297. 45 K. 3. 298. 46

---

**36** $K_2$ श्रीयम उ°. — [a]) $K_{1.2}$ $T_1$ $G_4$ °स्यैव (for °स्येव). $B_{1-3}$ Dn $D_{4-6}$ $G_3$ transp. यथा and भवेत्. $T_2$ $G_{1.2.4}$ जलं (for पयस्). — [b]) $D_5$ मया चाहम् (for त्वया वाक्यम्). — [c]) =30[c]. $T_2$ $G_{1.4}$ °तो हि (for °तोऽस्य). $K_4$ जीविताद्. — [d]) $K_4$ $D_3$ सुते (for शुभे). $K_{1.2}$ $T_1$ M यमिच्छसि; $K_4$ यमीप्ससि; $B_{2.3}$ $D_{3.5}$ $T_2$ $G_2$ यदीच्छसि. $B_4$ वरं तृतीयं वरयस्व भाविनि.

**37** [b]) B ($B_3$m as in text) Dn $D_{4.6}$ $T_2$ $G_3$ तथौ° (for ममौ°). — [c]) $T_1$ न (? read नु); $G_2$ हि (for च). $K_{1.2}$ $D_{3.5}$ S (except $G_3$) तद् (for यद्). — [d]) B Dn $D_{4.6}$ $T_1$ $G_3$ एतद्; $D_5$ $T_2$ $G_{1.2.4}$ एनं (for एतं).

**38** $K_2$ श्रीयमः. — [a]) $K_{1.4}$ $Dc_1$ $D_{2.3.5}$ $G_1$ M सुवर्चसां; $K_2$ च तद्भवेत् (cf. 37[c]); $T_2$ समुच्चयं. — [d]) =45[d]. $D_5$ पथं; $T_2$ $G_2$ पतिं; $G_{1.4}$ पथि. Dc $D_2$ त्वयागता.

**39** [c]) $K_{1.2}$ T $G_1$ यथा; $B_{1-3}$ Dn $D_{4.6}$ $G_3$ अथ; $B_4$ $G_{2.4}$ पथा; $D_5$ परि- (for तथा). $T_1$ व्रजंस्यैव. — [d]) $K_{1.2}$ $B_4$ $D_{3.5}$ $T_1$ हि; $K_4$ $Dc_2$ $D_2$ ह; $B_2$ तत् (for च).

**40** [b]) K ($K_3$ missing) $D_3$ $T_1$ M अतोसि; $B_3$ ततोसि (for ततो हि). $B_4$ Dc $Dn_2$ $D_2$ $G_{1.2}$ उच्यते. — [c]) $K_4$ $B_{1.2.4}$ D (except $D_5$; $D_1$ missing) समेन; $T_2$ $G_{1.4}$ श्रमेण (for शमेन). $B_{1.2.4}$ Dn $D_6$ $G_3$ M चरंति ताः; $G_{2.4}$ चिरं जिताः (for च रञ्जिताः). — [d]) $D_5$ ततः स वेदेत्र च धर्मराजः.

**41** [b]) $K_{1.2}$ $T_1$ तावद्; B Dn $D_{4.6}$ $G_3$ तथा; $D_5$ स वै (for तावान्). $K_{1.2}$ संमतः (for सत्सु यः). — [c]) =42[c]. $K_{1.2}$ यस्मात्. — [d]) T $G_{1.2.4}$ सर्वः प्रणयते नरः ($T_1$ °यते जनः; $G_2$ °मते नरः).

**42** [b]) $B_4$ विश्वास उपजायते. — $K_4$ om. 42[cd]. — [c]) =41[c]. $D_3$ S (except $G_3$) सत्सु तस्माद् (by transp.).

**43** $K_2$ श्रीयमः. — [a]) $T_2$ तव (for ते). $T_1$ उदाहृतं यद्वचनं त्वयांगन. — [b]) K ($K_3$ missing) Dc $D_{2.3.5}$ शुभं. $G_{2.4}$ तावत् (for तादृक्). $B_{1.2}$ Dn $D_{4.6}$ $G_3$ श्रुतं

C. 3. 16792
B. 3. 297. 45
K. 3. 298. 46

शतं सुतानां बलवीर्यशालिना-
मिदं चतुर्थं वरयामि ते वरम् ॥ ४४

यम उवाच ।

शतं सुतानां बलवीर्यशालिनां
भविष्यति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ ४५

सावित्र्युवाच ।

सतां सदा शाश्वती धर्मवृत्तिः
सन्तो न सीदन्ति न च व्यथन्ति ।
सतां सद्भिर्नाफलः संगमोऽस्ति
सद्भ्यो भयं नानुवर्तन्ति सन्तः ॥ ४६
सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राज-
न्सतां मध्ये नावसीदन्ति सन्तः ॥ ४७
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम् ॥ ४८
न च प्रसादः सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं
तस्मात्सन्तो रक्षितारो भवन्ति ॥ ४९

यम उवाच ।

यथा यथा भाषसि धर्मसंहितं
मनोनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं यतव्रते ॥ ५०

सावित्र्युवाच ।

न तेऽपवर्गः सुकृताद्विनाकृत-
स्तथा यथान्येषु वरेषु मानद ।

---

मया (by transp.). — $^d$) $K_1$ च वक्तुं (for चतुर्थं).

**44** $T_2$ om. (hapl.) 44–45. — $^a$) $G_1$ मदात्मजं सत्यवतस्तदौरसं. — $^b$) $B_{2.3}$ इति; Dc $D_2$ अपि (for इह). — $^c$) =45$^a$. K ($K_3$ missing) $B_4$ Dc $D_{2.3.5}$ बलिनां महात्मनाम् (for बलवीर्य°). — $^d$) K ($K_3$ missing) Dc $D_{2.3.5}$ इमं (for इदं). $T_1$ $G_1$ M चतुर्थमेकं ($T_1$ °मेतद्; $G_1$ °मेनं) वरयामि ते वरं. — For 44, $G_{2.4}$ subst.:

1323* वरं वृणे सत्यवतो मयि प्रभो
भवेत्सुतानां शतमेतदीप्सितम् ।
[Cf. 1324*.]

**45** $T_2$ om. 45 (cf. v.l. 44). — $^a$) =44$^c$. $B_2$ एवं (for शतं). $T_1$ M कुल° (for बल°). — $^b$) $K_4$ तथा; Dc तदा (for तव). — $^c$) $K_4$ $D_3$ भविता (for न भवेन्). — 45$^d$=38$^d$. — For 45, $G_{2.4}$ subst.:

1324* तथास्तु ते पुत्रशतं शुभानने
द्रुतं निवर्तस्व परिश्रमो न ते ।
[Cf. 1323*.]

**46** $^a$) K ($K_3$ missing) Dc $D_{2.3.5}$ हिता (for सदा). B Dn $D_{4.6}$ $G_3$ शाश्वत- (for शाश्वती). — $^b$) $K_{1.2}$ $B_4$ Dc $D_{2.5}$ S (except $G_3$) व्यथंते. — $^c$) $T_2$ $G_{1.2.4}$ संगमो ($T_2$ $G_1$ °तो) नाफलो (for नाफलः संगमो). — $^d$) K ($K_3$ missing) Dc $D_{2.3.5}$ नानुभवंति; $G_2$ नानुपश्यंति.

**47** $K_{1.2}$ om. (hapl.) 47. — $^a$) $G_4$ सत्यो हि. Dc $D_2$ भवंति शूराः (for नयन्ति सूर्यं). — $^b$) $K_4$ $D_3$ $G_2$ संतो हि भूमिं; Dc $D_2$ सतां भूमिं. $G_4$ संतो हि भूमिं तपसा चरंति. — $^c$) $K_4$ $D_4$ $G_3$ $T_1$ °भवस्य (for °भव्यस्य). — $^d$) Dc $D_2$ न विषीदंति (for नावसी°).

**48** $^a$) $K_{1.2}$ आर्यवृत्तम्; Dc $D_2$ °दृष्टम्. — $^d$) $B_{1-3}$ Dn $D_{4.6}$ $G_3$ नावेक्षंति; $T_2$ $G_{1.2.4}$ नापेक्षंते. $B_{1.2}$ Dn $D_{4.6}$ $G_3$ M परस्परं (for प्रति°).

**49** $^a$) $D_5$ न सत्-; $T_1$ नराः (for न च). $B_2$ $Dn_2$ $D_4$ सत्पुरुषेण; $D_3$ सत्यभाषेषु; S पुरुषेषु ($G_3$ °ण). $T_1$ सत्सु (for मोघो). $K_4$ न प्रमादः (sic) सत्यभाषिषु मोघो [marg. *sec. m.* न च प्रमादः (sic) सत्पुरुषेष्वमोघो]. — $^b$) $T_1$ न चाप्यनर्थो. $K_4$ $D_3$ नश्यते. $K_4$ $D_5$ नाभिमानः; $B_2$ नापमानः; $B_4$ वापि मानः. — $^c$) $B_{2.3}$ तस्मादेतन्; $Dc_2$ $D_2$ यस्मादेनं; $D_3$ यस्मादेव; $G_1$ यस्मादेतं.

**50** $K_2$ श्रीयमः. — $^a$) $G_1$ भाषिणि (for भाषसि). — $^b$) Dc $D_2$ स्व- (for सु-). — $^c$) $D_5$ च (for मे). — $^d$) B D (except $D_3$; $D_1$ missing) $G_3$ पति° (for यत°).

**51** $^a$) $K_{1.2}$ तेस्ति किंचित् (for तेऽपवर्गः). $D_5$ न तेपवर्गः सुकृतां तथा कृतो; $T_1$ न मे स्वर्गः सत्यवताकृतो यथा; $G_1$ न मेपवर्गः सुकृताद्विनाकृतास्. — $^b$) $K_4$ $D_{3.5}$ यथा (for तथा). $T_1$ [अ]हम°; $G_1$ [अ]यम° (for यथा°). — $^d$)

वरं वृणे जीवतु सत्यवानयं
यथा मृता ह्येवमहं विना पतिम् ॥ ५१
न कामये भर्तृविनाकृता सुखं
न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं
न भर्तृहीना व्यवसामि जीवितुम् ॥ ५२
वरातिसर्गः शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं
तवैव सत्यं वचनं भविष्यति ॥ ५३

मार्कण्डेय उवाच ।

तथेत्युक्त्वा तु तान्पाशान्मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ५४
एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
अरोगस्तव नेयश्च सिद्धार्थश्च भविष्यति ॥ ५५
चतुर्वर्षशतं चायुस्त्वया सार्धमवाप्स्यति ।
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ॥ ५६
त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति ।
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ।
ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः ॥ ५७
पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः ।
भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ॥ ५८
एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ ५९
सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्या भर्तुः शावं कलेवरम् ॥ ६०
सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगूह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ ६१
संज्ञां च सत्यवाँल्लब्ध्वा सावित्रीमभ्यभाषत । C. 3. 16811 B. 3. 297. 64 K. 3. 298. 65

$K_{1.2}$ ह्येनमहं; $G_{2.4}$ [अ]स्म्येवमहं. $B_2$ Dn $D_{4.6}$ $T_1$ $G_3$ M transp. विना and पतिम्.

**52** $T_2$ om. $52^{ab}$. $Dn_2$ transp. the lines of the stanza. — $^{b}$) $B_{3.4}$ श्रियं (for दिवम्). — $^{c}$) Dc $D_2$ भर्तृविनाकृतं. $B_4$ दिवं; Dc $D_{2.3}$ प्रियं (for श्रियं). — $^{d}$) $K_{1.2}$ $D_5$ [अ]ध्यवसामि (for व्यव°).

**53** $^{a}$) $T_1$ वरातिसर्गे. — $^{b}$) $K_2$ $B_{1.2}$ $T_1$ $G_{1.2}$ $M_1$ दत्ता; $M_2$ यत्ता (for दत्तो). T $G_{1.2.4}$ म्रियते (for ह्रि°). — $^{d}$) $G_1$ तथैव; $G_4$ स्वयैव. — After 53, $K_4$ $D_3$ ins. (an addl.) colophon.

**54** $K_{1.2}$ $T_1$ om. the ref. $M_2$ श्रीमार्कंडेयः. — $^{a}$) $K_4$ $D_3$ च (for तु). B Dn $D_{4.5}$ $G_3$ तं पाशं; Dc $D_2$ वै पाशान्. — $^{b}$) S (except $G_3$) सत्यवतो (for वैवस्वतो).

**55** Before 55, $B_4$ $D_{4.6}$ $G_3$ ins. यम उ°; $M_1$ धर्मः. — $^{a}$) $T_2$ $G_{1.2}$ एहि; $G_4$ एवं (for एष). Dc $D_2$ भर्ता (for भद्रे). — $^{b}$) $Dc_2$ $D_2$ कुलवर्णिनि; $T_2$ (m as in text) वरवर्णिनि. — After $55^{ab}$, S (except $G_3$) ins.:

1325* तोषितेन त्वया साध्वी वाक्यैर्धर्मार्थसंहितैः ।
[$G_{2.4}$ तोषितोहं. $T_2$ M साध्वि.]

— $^{c}$) $K_2$ आरोग्यस्तव. $K_1$ नीयश्च; $K_2$ नोजाश्च; $T_2$ $G_{1.2.4}$ देहश्च. — $^{d}$) Dn $D_{4.6}$ $G_3$ स (for च).

**56** $K_1$ om. (hapl.) $56^{a}$–$57^{b}$. — $^{a}$) $B_2$ Dn $D_{4.6}$ $G_3$ चतुर्वर्षशतायुश्च. — $^{b}$) $K_2$ तव; $Dc_2$ $D_2$ तया (for त्वया). $K_2$ $Dc_2$ $D_2$ अवाप्स्यसि; $K_4$ $D_3$ उपेष्यति. — $^{c}$) $T_1$ यज्ञांश्च. — $^{d}$) S (except $G_3$) transp. ख्यातिं and लोके. $K_2$ गमिष्यसि.

**57** = (var.) Matsyapurāṇa 213. $14$–$15^{ab}$. $K_1$ om. $57^{ab}$ (cf. v.l. 56). — $^{a}$) $K_{2.4}$ Dc $D_{2.3.5}$ $T_1$ चापि (for चैव). — $K_{1.2}$ $T_1$ M om. (hapl.) $57^{e}$–$58^{d}$. — $^{e}$) $K_4$ $D_{3.5}$ °न्नामपुत्राख्या; Dc $D_2$ °न्नामका पुत्रा; $T_2$ $G_{1.2.4}$ °न्नामधेयाख्या. — $^{f}$) $K_4$ $D_{3.5}$ [इ]ति (for [इ]ह).

**58** = Matsyapurāṇa 213. $15^{cd}$–16. $K_{1.2}$ $T_1$ M om. $58^{abcd}$ (cf. v.l. 57). — $^{b}$) $D_5$ भविष्यत् (for भविता). — $^{c}$) Cf. 3. 277. $22^{b}$. $T_2$ °व्यां मालवानां च.

**59** Before 59, $M_1$ ins. मार्कंडेयः. — $^{a}$) Dc $D_{2.3.5}$ वरान् (for वरं). — $^{c}$) $D_5$ निवर्त्य चैव सावित्री.

**60** $^{b}$) M ह (for च). — $^{cd}$) $Dc_2$ $D_2$ यत्रासा; $D_{4-6}$ यत्रास्य. T $G_{1.2.4}$ M जगाम यत्र तच्छापं ($T_1$ °च्चापं; $G_1$ °च्छावं) भर्तुस्तस्य विचेतनं.

**61** $^{a}$) $K_4$ $D_3$ भूमौ संप्रेक्ष्य भर्तारं. — $^{b}$) $K_4$ Dc $D_{2.3.5}$ [अ]भि° (for [उ]प°). N (except $K_{1.2}$ $D_5$; $K_3$ $D_1$ missing) $T_2$ G [उ]पगृह्य (for °गूह्य). — $^{c}$) $K_{1.2}$ उत्संगेस्य शिरः स्थाप्य.

**62** $^{a}$) $T_1$ $G_1$ स संज्ञां (for संज्ञां च). B Dn $D_{4.6}$ $G_3$

C. 3. 16811 B. 3. 297. 64 K. 3. 298. 65

प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ॥ ६२
सत्यवानुवाच ।
सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषः श्यामो योऽसौ मां संचकर्ष ह ॥ ६३
सावित्र्युवाच ।
सुचिरं बत सुप्तोऽसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देवः प्रजासंयमनो यमः ॥ ६४
विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ६५
मार्कण्डेय उवाच ।
उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् ॥ ६६
फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाभवत् ॥ ६७
शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवन् ।
तवोत्सङ्गे प्रसुप्तोऽहमिति सर्वं स्मरे शुभे ॥ ६८
त्वयोपगूढस्य च मे निद्रयापहृतं मनः ।
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम् ॥ ६९
तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नो मे यदि वा दृष्टो यदि वा सत्यमेव तत् ॥ ७०
तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ ७१
उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ॥ ७२
नक्तंचराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः ।
श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने ॥ ७३
एताः शिवा घोरनादा दिशं दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ॥ ७४
सत्यवानुवाच ।
वनं प्रतिभयाकारं घनेन तमसा वृतम् ।

---

स पुनर् (for सत्यवान्). — b) $T_1$ $G_{2.4}$ M प्रत्य° (for अभ्य°). — d) $K_4$ उदैक्षत.

**63** $M_2$ om. the ref. — a) $D_5$ तव (for बत). $K_4$ सुप्तोहं. — b) $K_4$ वानि° (for नाव°). — c) $T_2$ वा स; $G_{2.4}$ वासौ (for चासौ). — d) $K_1$ यो मां; $K_2$ यो मा; T $G_{1.2.4}$ योद्य (for योऽसौ). $K_{1.2}$ संप्रचकर्ष ह; $K_4$ मां संप्रकर्षितः; $D_3$ S (except $G_3$) मां संप्रकर्षति; $D_5$ मां विचकर्ष ह.

**64** a) $K_2$ तव; B D (except $D_3$) $G_3$ त्वं प्र- (for बत). — b) $K_{1.2}$ ममांगे.

**65** a) Dc $D_2$ विश्रांतश्च; $T_2$ विरुजश्च. — c) $K_1$ $D_5$ सत्वं; $K_2$ S (except $G_3$) सह्यं; $D_3$ शक्यः. — d) $D_5$ विशालां; $T_1$ $G_1$ विगाढं.

**66** $K_{1.2.4}$ $D_3$ om. the ref. — a) M पुनः (for ततः). — b) $B_2$ सोथ (for सुख-). — c) $K_1$ $D_5$ दिगंतांश्च; a few MSS. वनांताश्च.

**67** Before 67, $M_1$ ins. सत्यवान्. — a) $K_{1.2}$ [ऽ]स्मि विश्रांतस्; $B_4$ $T_1$ [ऽ]सि निष्क्रांतस्; $T_2$ [ऽ]भिनि°; $G_{1.2}$ हि नि°; $G_4$ विनि°. — d) $G_4$ रुजो°.

**68** $K_4$ om. 68–70. — a) $K_{1.2}$ °तापसंयुक्तः. — b) $M_2$ स्थातुं चाशक्नुवन्पुनः. — cd) $B_2$ ततोत्संगे. $B_{1.3.4}$ Dn $D_{4.6}$ $G_3$ प्रसुप्तोस्मि इति (with hiatus!).

**69** $K_4$ om. 69 (cf. v.l. 68). — c) $K_{1.2}$ तदा; $T_2$ $G_{2.4}$ अहं (for तमो). — d) $K_{1.2}$ सु- (for च).

**70** $K_4$ om. 70 (cf. v l. 68). — a) $T_1$ $G_{1.2.4}$ तं (for तद्). — b) $Dc_2$ $D_2$ किंचिद् (for किं तद्). — c) $K_{1.2}$ स्वप्नो न; $B_{2.3}$ Dn $D_{4.6}$ स्वप्नेन; Dc $D_2$ स्वप्ने तु; $D_3$ स्वप्नोत्र; $D_5$ स्वप्नोयं; T G स्वप्नो हि; $M_1$ स्वप्नोद्य; $M_2$ स्वप्नोस्य; only $B_{1.4}$ as in text! $K_{1.2}$ Dc $D_{2.3.5}$ स मया (for यदि वा). — d) Dn $D_4$ मयि (for यदि). $K_{1.2}$ $D_5$ तथ्यम्; Dc $D_2$ [ऽ]स्वप्नम् (for सत्यम्). $B_2$ तु (for तत्).

**71** Before 71, S (except $G_3$) ins. मार्कंडेयः. — b) $K_4$ Dc $D_2$ व्यवगाहत; $T_1$ $G_1$ ह्यवगाहते. — c) $K_1$ सुप्ते; $K_2$ स्वप्ने (for श्वस्ते). — d) $B_3$ व्याख्यास्यामि.

**72** b) S (except $G_3$) पितरं पश्य सुव्रतं. — c) $G_4$ चैव.

**73** a) $G_1$ °श्च दृश्यंते. — b) $D_5$ $G_{2.4}$ दुष्टाः; $G_1$ घृष्टाः (for हृष्टाः). — c) $B_2$ संतु°; $D_3$ $G_{2.4}$ पूर्ण°; M वर्ण° (for पर्ण°).

**74** a) K ($K_3$ missing) Dc $D_{2.3}$ घोररूपा. B Dn $D_{4.6}$ एतान्घोरान् ($B_{1.4}$ °ता घोरं; $B_3$ °ता घोरान्) शिवा नादान्. — c) $K_4$ अह्नाय (for आस्थाय). $K_4$ विचरंत्युग्राः; Dc $D_2$ विब्रुवं°. — d) A few MSS. कंपयंतो.

**75** a) $M_2$ °घोरं (for °कारं). — b) K ($K_3$ missing)

न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्ष्यसि ॥ ७५

सावित्र्युवाच ।

अस्मिन्नद्य वने दग्धे शुष्कवृक्षः स्थितो ज्वलन् ।
वायुना धम्यमानोऽग्निर्दृश्यतेऽत्र क्वचित्क्वचित् ॥ ७६
ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः ।
काष्ठानीमानि सन्तीह जहि संतापमात्मनः ॥ ७७
यदि नोत्सहसे गन्तुं सरुजं त्वाभिलक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥ ७८
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेतां रुचितं यदि तेऽनघ ॥ ७९

सत्यवानुवाच ।

शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि संगमं त्वत्प्रसादजम् ॥ ८०
न कदाचिद्विकाले हि गतपूर्वो मयाश्रमः ।
अनागतायां संध्यायां माता मे प्ररुणद्धि माम् ॥ ८१
दिवापि मयि निष्क्रान्ते संतप्येते गुरू मम ।
विचिनोति च मां तातः सहैवाश्रमवासिभिः ॥ ८२
मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा ।
उपालब्धः सुबहुशश्चिरेणागच्छसीति ह ॥ ८३
का त्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद्दुःखं भविष्यति ॥ ८४
पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ ।
भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ॥ ८५
त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक । C. 3. 16835 B. 3. 297. 88 K. 3. 298. 89

---

Dc D$_{2.3}$ घोरेण (for घनेन). — [c]) T G$_{1.2.4}$ M$_1$ विज्ञास्यामि; M$_2$ °स्यति. — [d]) K$_2$ सक्ष्यति; B$_3$ शक्ष्यसे; Dc D$_2$ शक्यसे; T$_1$ G$_{1.2.4}$ M शक्यते; T$_2$ शक्ष्यते.

**76** T$_2$ om. 76–77. — [b]) K$_{1.2.4}$ D$_3$ G$_2$ शुष्क(K$_1$ °ष्के)वृक्षे; D$_5$ शुष्को वृक्षः. — [c]) T$_1$ G$_{1.2.4}$ धूय°; M$_1$ धाम्य°. B D (except D$_{3.5}$) G$_3$ [ऽ]त्र (for ऽग्निर्). — [d]) K (K$_3$ missing) D$_3$ तु; K$_4$ (marg. *sec. m.*) D$_5$ च; B Dc Dn D$_{2.4.6}$ G$_3$ [ऽ]ग्निः; M$_2$ हि (for ऽत्र). K$_4$ (marg. *sec. m.* as in text) पृथक् पृथक् (for क्वचित्क्वचित्).

**77** T$_2$ om. 77 (cf. v.l. 76). — [a]) K$_4$ D$_5$ S (except G$_3$; T$_2$ om.) अतो (for ततो). K$_{1.2}$ °यत्वेह; D$_3$ °यित्वेदं; G$_1$ °यित्वाहं; G$_{2.4}$ °यस्वेह. — [b]) K$_{1.2}$ D$_4$ ज्वल°. K (K$_3$ missing) D$_{3.5}$ पावकं; Dc$_1$ D$_2$ T$_1$ G$_{1.2.4}$ सर्वशः.

**78** Before 78, T$_2$ ins. सावित्री. — [b]) B Dc Dn D$_{2.4.6}$ G$_3$ त्वां हि; D$_5$ चोप-; T$_1$ G$_1$ चापि; T$_2$ चाभि-. — [c]) K$_4$ विज्ञास्यसि; B$_3$ च जानासि. — [d]) D$_5$ संवृते पथि; T$_2$ °ते तु वै; G$_{2.4}$ °तेन वै (for °ते वने).

**79** [a]) T G$_{1.2.4}$ प्रभाते तु (for श्वः प्रभाते). — [b]) K (K$_3$ missing) D$_5$ यास्यामो. — [c]) K$_{2.4}$ Dc D$_2$ वसामे- (K$_4$ °मी)ह. K$_4$ B Dn D$_{3-6}$ G$_3$ M$_2$ एकां; T$_2$ एतद् (for एतां). — [d]) T G$_{1.2.4}$ उचितं; M$_1$ रुचिरं. K$_4$ विभो (for ऽनघ).

**80** [a]) M$_1$ विवर्ता (for निवृत्ता). — [d]) S (except G$_3$ M$_2$) संयोगं (for संगमं).

**81** [a]) K$_{1.2}$ च काले; B$_{1.4}$ Dn (Dn$_3$ before corr.) D$_6$ G$_3$ विकालं; B$_{2.3}$ D$_3$ हि काले; Dc D$_2$ विकालो; Dn$_3$ (after corr.) D$_4$ हि कालं. D$_5$ च; T$_2$ [ऽ]पि (for हि). — [b]) K$_4$ गतपूर्वोयमाश्रमः; B$_3$ T$_2$ G$_{2.4}$ M °र्वोहमाश्रमात्; T$_1$ G$_1$ °र्वो मयाश्रमात्. — [d]) D$_3$ वै (for मे). K (K$_3$ missing) Dc D$_{2.3.5}$ माता वै संरुण(Dc$_2$ D$_2$ संरुजा-; D$_3$ प्ररुण)द्धि मां; S (except G$_3$) रुणद्ध्यबा हि मां सदा.

**82** [c]) K$_4$ B D (except D$_{3.5}$) G$_3$ हि (for च). Dc D$_2$ मे (for मां). K (K$_3$ missing) Dc D$_{2.3.5}$ माता (for तातः). — [d]) Dc D$_2$ सहेत्याश्रम°.

**83** [a]) A few MSS. माता- (for मात्रा). Dc D$_2$ तु (for च). T$_2$ G$_{2.4}$ मातापितृभ्यां सुभृशं. — [c]) T$_1$ उपालभ्य. B$_{1.4}$ Dn D$_{4.6}$ G$_3$ च (for सु-). — [d]) K$_{1.2}$ B$_{1.2.4}$ Dn D$_{4.6}$ G$_3$ हि; K$_4$ T G$_{1.2.4}$ च (for ह).

**84** [a]) S (except T$_2$ G$_3$) न्ववस्था. — [c]) B$_3$ transp. मयि and च. K (K$_3$ missing) Dc D$_{2.3.5}$ अदृश्ये मयि ताभ्यां हि.

**85** [b]) K$_4$ रात्रावश्रायमानकौ (marg. *sec. m.* राऽयावस्थानमागतं); D$_3$ °वाश्राय°; T G$_{1.2.4}$ °वाघ्रा(T$_1$ °वाह्वा-; G$_4$ °व्याघ्रा)य मां तदा; M °वास्रायमाणकौ. — [c]) K (K$_3$ missing) D$_{3.5}$ सुभृशं (for भृशं सु-). — [d]) T$_1$ G$_1$ बहुशः प्रतिसंयतौ.

**86** [a]) K$_4$ (marg. *sec. m.* as in text) दीनौ (for हीनौ). K$_{1.2.4}$ (marg. *sec. m.* as in text) B$_2$ Dc$_1$ D$_5$ M$_2$ जीवेव; B$_{3.4}$ D$_3$ T$_1$ G$_{1.2.4}$ जीवावो; Dc$_2$ D$_2$ जीवेद्य (for जीवाव). — [b]) K$_{1.2}$ इव (for अपि). — [c]) K$_4$ (marg. *sec. m.* as in text) त्वरिष्यते; T$_1$ G$_{1.4}$ धरि-

C. 3. 16835 B. 3. 297. 88 K. 3. 298 89 यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ॥ ८६
वृद्धयोरन्धयोर्यष्टिस्त्वयि वंशः प्रतिष्ठितः ।
त्वयि पिण्डश्च कीर्तिश्च संतानं चावयोरिति ॥ ८७
माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ॥ ८८
निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम ।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी ॥ ८९
अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः ।
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे ॥ ९०
व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम ।
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम् ॥ ९१
नात्मानमनुशोचामि यथाहं पितरं शुभे ।
भर्तारं चाप्यनुगतां मातरं परिदुर्बलाम् ॥ ९२
मत्कृतेन हि तावद्य संतापं परमेष्यतः ।
जीवन्तावनुजीवामि भर्तव्यौ तौ मयेति ह ।
तयोः प्रियं मे कर्तव्यमिति जीवामि चाप्यहम् ॥ ९३

मार्कण्डेय उवाच ।

एवमुक्त्वा स धर्मात्मा गुरुवर्ती गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्तः सस्वरं प्ररुरोद ह ॥ ९४
ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्शितम् ।
प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी ॥ ९५
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रूश्वशुरभर्तॄणां मम पुण्यास्तु शर्वरी ॥ ९६
न स्मराम्युक्तपूर्वां वै स्वैरेष्वप्यनृतां गिरम् ।

---

ष्यते. — $^d$) $K_{1.2}$ Dc $D_5$ $G_4$ तावन्नो.

**87** $^a$) $D_5$ $G_1$ आवयोर्; $M_1$ अंतयोर् (for अन्धयोर्). $K_1$ (by corr.) $B_4$ Dn $T_2$ $M_1$ दृष्टिस् (for यष्टिस्). — $^b$) T $G_{1.2.4}$ प्राणः; $M_1$ वत्स (for वंशः). — $^d$) $T_1$ $G_{2.4}$ $M_2$ संतानश्च. $K_4$ अपि; $D_5$ त्वयि (for इति).

**88** $^a$) $K_1$ (*sup. lin. sec. m.*). $_2$ त्वंधस्; $K_4$ Dc $D_{2.3.5}$ [अ]प्यंधस् (for वृद्धस्). $T_1$ $G_1$ वृद्धौ च मातापितरौ; $T_2$ $G_{2.4}$ माता पिता च वृद्धौ च. — $^c$) S (except $G_3$) पुत्रं (for रात्रौ).

**89** $^a$) $K_{1.2.4}$ (marg. *sec. m.*) निद्रामेवाभ्य($K_2$ °भि)सूयामि; $K_4$ (orig.) Dc $D_{2.3.5}$ $T_1$ $G_1$ $M_1$ निद्रां चैवा($Dc_2$ $D_2$ °व)भ्य°. — $^b$) $K_2$ यस्यां; $T_1$ $G_{1.2.4}$ यस्य. — $G_1$ om. (hapl.) $89^c$–$91^b$. — $^c$) $D_4$ प्राप. — $^d$) $K_{1.2}$ त्वत्कृते च सुमध्यमे; $T_2$ मत्कृतेनोपका°; $G_4$ मत्कृतेनापि का°.

**90** $G_1$ om. 90 (cf. v.l. 89). — $^b$) $G_4$ $M_1$ (*sup. lin.* as in text) कृच्छ्रादा°. — $^c$) K ($K_3$ missing) Dc $D_{2.3.5}$ रहितो (for हि विना).

**91** $G_1$ om. $91^{ab}$ (cf. v.l. 89). — $^a$) Dc $D_2$ व्यक्त्याम् (for व्यक्तम्). — $^d$) $B_{3.4}$ Dc $Dn_3$ $D_2$ M °वासिनां; $T_1$ $G_{1.2.4}$ °वासिनः; $T_2$ °वासिभिः.

**92** $92^a$ = 3. 277. $1^a$. — $^d$) $K_{1.2}$ चैव दुर्बलां; T $G_1$ भृशदु°; $G_{2.4}$ भृशदुःखितां; M प्रति दुर्बलां.

**93** $^a$) T $G_{1.2.4}$ मत्कृते पितरावद्य; $M_1$ °ते चापि ता°; $M_2$ °तेपि च ता°. — $^b$) $G_{2.4}$ भृशम् (for परम्). — $^c$) $D_5$ यावत्तौ; $G_1$ एवं तौ (for जीवन्तौ). $B_3$ [अ]नुपश्यामि. — $^d$) Dc $D_2$ ममेति च; T $G_{1.2.4}$ मया त्विति (for मयेति ह). $B_4$ मृतावनुम्रियेच तौ. — $^e$) $K_4$ $T_2$ तथा (for तयोः). K ($K_3$ missing) $D_3$ च (for मे). — $^f$) $B_{1.2.4}$ D (except $D_3$) $T_2$ $G_3$ इति जानामि; $B_3$ अतिजीवामि. $D_5$ नापरं; $G_4$ वाप्यहं. — After 93, S (except $G_3$) ins.:

1326* परमं दैवतं तौ मे पूजनीयौ सदा मया ।

[M मम (for मया).]

T $G_{1.2.4}$ cont.: $K_{1.2}$ ins. after 93:

1327* तयोस्तु मे सदास्त्येवं व्रतमेतत्पुरातनम् ।

[$K_1$ तयोर्हितमवास्थेयं; $K_2$ तयोर्हि मे ममास्थेयं; $T_1$ तयोर्हीमे तथास्त्येत्रं; $T_2$ ततो हि मे यथा सेव्यं; $G_1$ तयोः सकाशं गच्छामि.]

**94** K ($K_3$ missing) $D_3$ $T_1$ $G_1$ $M_2$ om. the ref. — $^a$) $K_1$ $D_3$ तु; $K_4$ च (for स). — $^b$) B Dn $D_{4.6}$ $G_3$ गुरुभक्तो; $Dc_2$ $D_2$ °वृत्ति; $D_5$ °धर्मं (for °वर्ती). T $G_{1.2.4}$ गुरुप्रियहिते रतः. — $^c$) $K_1$ $D_3$ उत्सृज्य; $B_{1.4}$ $D_5$ $G_{1.2.4}$ उद्धृत्य. $Dn_{2.n3}$ चाह (for बाहू). — $^d$) = 3. 73. $25^d$. $K_{1.4}$ $B_{1.2}$ $Dc_2$ Dn $D_{2.3.5.6}$ $G_3$ सुस्वरं; $D_2$ सस्वनं.

**95** Before 95, K ($K_3$ missing) $D_{3.5}$ ins. मार्कं°. — $^a$) $T_2$ $G_{1.2.4}$ तदा (for तथा). — $^b$) K ($K_3$ missing) Dc $D_{2.3.5}$ शोकपीडितं; B Dn $D_{4.6}$ °कर्षितं. — $^c$) $K_4$ Dc $D_2$ वि- (for प्र-). $D_5$ $T_2$ $G_2$ M पाणिभ्यां; $T_1$ $G_{1.4}$ बाहुभ्यां.

**96** Before 96, $M_1$ ins. सावित्री. — $^a$) $T_1$ $G_1$ मेद्य (for मेऽस्ति). — $^b$) $T_2$ भवेत् (for the second यदि). — $^d$) K ($K_3$ missing) Dc $D_2$ क्षेमास्तु; $M_1$ रम्या° (for

तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ ९७

सत्यवानुवाच ।

कामये दर्शनं पित्रोर्याहि सावित्रि माचिरम् ।
पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम् ।
न जीविष्ये वरारोहे सत्येनात्मानमालभे ॥ ९८
यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि ।
मम प्रियं वा कर्तव्यं गच्छस्वाश्रममन्तिकात् ॥ ९९

मार्कण्डेय उवाच ।

सावित्री तत उत्थाय केशान्संयम्य भामिनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १००
उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
दिशः सर्वाः समालोक्य कठिने दृष्टिमादधे ॥ १०१
तमुवाचाथ सावित्री श्वः फलानीह नेष्यसि ।
योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहम् ॥ १०२
कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्तुः सकाशं पुनरागमत् ॥ १०३
वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य सा ।
दक्षिणेन परिष्वज्य जगाम मृदुगामिनी ॥ १०४

सत्यवानुवाच ।

अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ १०५
आगतौ स्वः पथा येन फलान्यवचितानि च ।
यथागतं शुभे गच्छ पन्थानं मा विचारय ॥ १०६
पलाशषण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा । C. 3. 16855 B. 3. 297. 110 K. 3. 298. 112

---

पुण्या°). D5 अस्तु क्षेमाशु शर्वरी; T G1. 2. 4 स्वस्थ(G2. 4 °स्थो)भावो भवत्युत.

**97** a) B D (except D3. 5; D1 missing) T1 G1 [उ]क्तपूर्वं. — b) G4 [अ]हितां (for [अ]नृतां). — d) Dc D2 म्रियेतां; B2 भवेतां. K1. 2 म्रियतां श्वशुरो मम.

**98** a) T1 माचिरं (for दर्शनं). — b) K1. 2 यावत् (for याहि). — After 98ab, S (except G3) ins.:

1328* अपि नाम गुरू तौ हि पश्येयं ध्रियमाणकौ ।
[G4 प्रपश्येद् (for पश्येयं).]

— T1 om. 98c–99d. — d) Cf. 1. 205. 29d.

**99** T1 om. 99 (cf. v.l. 98). — a) D5 चेद्भक्तिर्मे; S (except G3; T1 om.) च(G4 क)तुं धर्मं (for यदि धर्मे). T2 मे (for ते). — b) D2. 4 मा (for मां). K (K3 missing) B3 Dc D2. 3. 5 G1 च जी(K4 D3 संजी-; B3 G1 चेज्जी)वितुम् (for चेज्जीवन्तम्). — c) K (K3 missing) चेत्; D5 च (for वा). — d) K4 B1. 3. 4 Dc1 Dn D3. 4. 6 T2 गच्छाव; B2 Dc2 गच्छ च; D2. 5 गच्छ वा. K (K3 missing) D3. 5 [आ]श्रममंडलं; Dc D2 °मुत्तमं.

**100** K4 T1 G1 om. the ref. K1 मार्कंडेयः; M2 श्रीमार्कंडेयः. — a) K4 D3 सावित्री तं स(D3 च त)मादाय; S (except G3) तत उत्थाय सावित्री. — b) B D (except D3) G3 भाविनी. — d) D3 तं (for वै).

**101** D2 om. 101. — b) T1 G1. 2. 4 वि- (for प्र-). — c) Dn D4. 6 G3 transp. दिशः and सर्वाः.

**102** b) K4 D5 ह नेष्यसि (K4 marg. *sec. m.* [आ]-हरिष्यसि); B Dn D4. 6 G3 हरिष्यसि; T G1. 2. 4 [इ]ह चेष्यसि. — c) K1. 2 B1. 3. 4 Dn1 D2 एतं (for एतत्). — d) S (except G3) दास्यामि (for नेष्यामि). K4 (marg. *sec. m.*) शुभम् (for त्वहम्).

**103** b) B2 वृक्षमूला°. — d) B2 Dn D4. 6 G3 सकाशे; T1 समीपं.

**104** a) K4 वामस्कंधे. B3 स्कंधेन (for स्कन्धे तु). K1. 2 तु वामूरू (K2 °रूर्); K4 सुवामोरुर्; Dc तु वामोरू; D3 G4 [ऽ]थ वामोरु(G4 °रू)र्. — b) K1. 2 निवेद्य. B Dn D4. 6 G3 च (for सा). — c) K4 परिगृह्य. — d) K (K3 missing) D3 मृदुभाषिणी; B Dn D4. 6 G3 गजगामिनी.

**105** a) K1. 2. 4 (marg. *sec. m.*) D3. 5 नित्याभ्या-(K4 orig. °भि)गमनाद्. — b) K1. 2 [ऽ]धिगता (for विदिता). — c) K1. 2 वृक्षारामालोकितया; K4 वृक्षांतरालोकनया (marg. *sec. m.* वृक्षांतरालानि·तथा). — d) G2. 4 transp. च and अपि. K (K3 missing) Dc D2. 3. 5 चोपलक्षये; T2 चापि लक्ष्यसे; M1 चाभिलक्षये.

**106** a) K1. 4 D2. 3 स्व (for स्वः). S (except G3) [अ]नेन (for येन). — b) T2 G1. 2. 4 फलान्यप(G4 पि)-चितानि च; M फलान्युपचितान्यतः. — d) T2 G2. 4 अ- (for मा).

**107** a) K2. 4 D (D1 missing) G3 °खंडे (for °षण्डे). B2. 4 Dc D2 वा; M1 हि (for च). — c) T G1. 2. 4 अस्य; M अत्र (for तस्य). — d) G4 तेन गच्छस्व च त्वरा. — e) T G1 चास्मि (for अस्मि).

**108** All MSS. except M1 (K3 D1 missing) om. the ref. — a) K1 B Dc1 Dn1. n2 T G ध्रुवमेव. K1

C. 3 16856
B. 3 297. 110
K. 3. 298. 112

तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च ।
स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ॥ १०७

मार्कण्डेय उवाच ।
ब्रुवन्नेवं त्वरायुक्तः स प्रायादाश्रमं प्रति ॥ १०८

इति श्रीमहाभारते आरण्यकपर्वणि एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

# २८२

मार्कण्डेय उवाच ।
एतस्मिन्नेव काले तु द्युमत्सेनो महावने ।
लब्धचक्षुः प्रसन्नात्मा दृष्ट्या सर्वं ददर्श ह ॥ १
स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया ।
पुत्रहेतोः परामार्तिं जगाम मनुजर्षभ ॥ २
तावाश्रमान्नदीश्चैव वनानि च सरांसि च ।
तांस्तान्देशान्विचिन्वन्तौ दंपती परिजग्मतुः ॥ ३
श्रुत्वा शब्दं तु यत्किंचिदुन्मुखौ सुतशङ्कया ।
सावित्रीसहितोऽभ्येति सत्यवानित्यधावताम् ॥ ४
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः ।
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ॥ ५
ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः ।
परिवार्य समाश्वास्य समानीतौ स्वमाश्रमम् ॥ ६
तत्र भार्यासहायः स वृतो वृद्धैस्तपोधनैः ।

$Dn_2$ त्वया युक्तः; $Dc_1$ तया युक्तः; $Dc_2$ $D_2$ तथा युक्तः (for त्वरा°). — $^b$) $B_{1.2.4}$ D (except $D_5$) $G_3$ संप्रायाद्; $G_1$ संप्रयाता; $G_4$ संप्रदाद् (for स प्रायाद्). M यतः (for प्रति). — After 108, $M_1$ ins.:

1329* सावित्रीसहितः श्रीमान्सत्यवान्संशितव्रतः ।

Colophon. $K_3$ $D_1$ missing. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* N ($K_3$ $D_1$ missing) $T_1$ $G_{1.3}$ $M_1$ (all om. sub-parvan name) mention only साविञ्युपाख्यान. — *Adhy. name:* $M_2$ सावित्रीवरप्रसादः. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 295; $Dn_3$ 296; $T_1$ $G_1$ 282; $T_2$ M ($M_2$ *inf. lin.*) 285 ($M_2$ orig. 287); $G_2$ 284; $G_4$ corrupt. — *Śloka no.:* $Dn_{1}$. $n_2$ 108; $Dn_3$ 111.

## 822

☞ This adhy. is missing in $K_3$ $D_1$ (cf. v.l. 3. 279. 14, 8); the MSS. are mostly ignored here.

**1** $G_4$ om. the ref. $K_1$ मार्कांडेयः; $M_2$ श्रीमार्कंडेयः. — $^a$) Standing phrase! Cf. Hopkins, *Great Epic*, p. 406 (No. 31). $T_2$ $G_4$ तस्मिन्नेव तु काले वै. — $^b$) B Dc Dn $D_{2.4-6}$ $G_3$ महाबलः ($B_{1.4}$ °बले) (for °वने). — $^c$) B Dn $D_{4-6}$ $G_3$ $M_2$ प्रसन्नायां (for °त्मा). Dc $D_{2.3}$ प्रसन्नया लब्धचक्षुः. — $^d$) $K_{1.2}$ सर्वंदृष्ट्या; $K_4$ $D_3$ सर्वं दृष्ट्या; $B_{1.3.4}$ दृष्ट्यां सर्वां; $B_2$ Dn $D_{4.6}$ $G_3$ दृष्ट्यां सर्वं; Dc $D_2$ सर्वं दृष्ट्वा; $D_5$ सर्वंदृष्ट्यां; $T_1$ दृष्ट्वा सर्वं; $T_2$ भूत्वा सर्वं; $G_{2.4}$ दृष्ट्या सर्वान्. $D_3$ सः (for ह).

**2** $^b$) B $D_{3.4}$ सैब्यया (for शै°). — $^d$) B $Dc_1$ Dn $D_{4.6}$ $G_3$ भरतर्षभ; $Dc_2$ $D_2$ पुरुष°; $D_5$ $T_1$ $G_1$ मनुजर्षभः.

**3** $^a$) $T_2$ तानाश्रमान्. — $^c$) B D (except $D_{3.5}$; $D_1$ missing) $G_3$ तस्यां निशि (for तांस्तान्देशान्). — $^d$) $D_5$ परिमार्गतुः.

**4** $^a$) S (except $G_3$) च (for तु). $K_{1.2}$ B Dc Dn $D_{2.4.6}$ $G_3$ $M_2$ यं (for यत्). K ($K_3$ missing) $B_{3.4}$ Dn $D_{4.6}$ $G_3$ $M_2$ कंचिद् (for किंचिद्). — $^c$) $K_4$ $D_5$ $T_1$ °भ्येत्य (for °भ्येति). — $^d$) K ($K_3$ missing) $M_1$ इति धावतां; B Dc Dn $D_{2.3}$ (marg. *sec. m.*). $_{4.6}$ $G_3$ इत्यभाषतां; $D_3$ अभ्यधावतां.

**5** $^a$) K ($K_3$ missing) पुरुषैः. $M_1$ प्रासैः (for पादैः). — $^b$) $K_1$ (corrupt) सव्रणैः शोणितैः क्षणैः; $G_2$ सव्रणौ शौणितोक्षितौ. — $^c$) K ($K_3$ missing) $D_5$ °दिग्धांगाव्. — $^d$) S (except $G_3$) धावतां.

**6** $^a$) T $G_{1.2.4}$ [ऽ]भिगम्य ($T_1$ °त्य). $M_1$ सर्वैः (for विप्रैः). — $^b$) $M_1$ द्विजैर् (for सर्वैर्). — $^d$) B Dn $D_{4.6}$ $T_2$ $G_3$ तावानीतौ (for समा°).

**7** $^a$) $T_1$ $G_{1.2.4}$ ततो (for तत्र). — $^b$) $K_4$ $D_3$ वृद्धो (for वृतो). — $^c$) $Dn_1$ $G_3$ आश्वासितोपि चित्रार्थैः; $T_2$ °तौ पवित्रार्थैः. — $^d$) $K_4$ पूर्वराज्ञां कथानकैः; $T_2$

आश्वासितो विचित्रार्थैः पूर्वराज्ञां कथाश्रयैः ॥ ७
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्ये वृत्तानि पुत्रस्य स्मरन्तौ भृशदुःखितौ ॥ ८
पुनरुक्त्वा च करुणां वाचं तौ शोककर्शितौ ।
हा पुत्र हा साध्वि वधूः क्वासि क्वासीत्यरोदताम् ॥ ९

सुवर्चा उवाच ।

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १०

गौतम उवाच ।

वेदाः साङ्गा मयाधीतास्तपो मे संचितं महत् ।
कौमारं ब्रह्मचर्यं मे गुरवोऽग्निश्च तोषिताः ॥ ११
समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे ।
वायुभक्षोपवासश्च कुशलानि च यानि मे ॥ १२
अनेन तपसा वेद्मि सर्वं परिचिकीर्षितम् ।
सत्यमेतन्निबोध त्वं ध्रियते सत्यवानिति ॥ १३

शिष्य उवाच ।

उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् ।
नैतज्जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ १४

ऋषय ऊचुः ।

यथास्य भार्या सावित्री सर्वैरेव सुलक्षणैः ।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ १५

भारद्वाज उवाच ।

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १६

दाल्भ्य उवाच ।

यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताहारमकृत्वा च तथा जीवति सत्यवान् ॥ १७

माण्डव्य उवाच ।

यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः ।
पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान् ॥ १८ C. 3. 16876 B. 3. 298. 18 K. 3. 299. 18

---

$G_{2.4}$ पूर्वराजकथाश्रयैः.

**8** $^{ab}$) $D_5$ °स्वस्थौ (for °श्वस्तौ). $T_2$ दंपती तौ ततः संतौ दृष्टौ पुत्र°. — $^{c}$) $K_1$ Dc $D_2$ बाल्य- (for बाल्ये). $B_3$ transp. वृत्तानि and पुत्रस्य. — After $8^{c}$, $T_2$ $G_{2.4}$ ins.:

1330* सावित्र्या दर्शनानि च ।
शोकं जग्मतुरन्योन्यं.

**9** $^{a}$) K ($K_3$ missing) $D_3$ स- (for च). S (except $G_3$) पुनश्च करुणां वाचं. — $^{b}$) $T_1$ $G_{1.2.4}$ M वदंतौ; $T_2$ स्मरंतौ (for वाचं तौ). $K_{1.2}$ $B_{2.4}$ Dn $D_{4.6}$ °कर्षितौ. — $^{c}$) $K_4$ पुत्रि (for पुत्र). S (except $G_3$) (by transp.) वधूः साध्वि ($T_1$ साध्वी). K ($K_3$ missing) $Dc_2$ $D_{2.3}$ वधु; $B_4$ $Dc_1$ वधू (for वधूः, Vocative !). — $^{d}$) $K_{1.2}$ $B_3$ [अ]द्य रोदतां; $K_4$ [इ]ति रोदतां; $D_5$ [इ]त्यवोचतां (for [इ]त्यरोदताम्). Dc $D_2$ क्वापि क्वासित्यवाद($Dc_1$ °सीत्यवादि)- तां. — After 9, B Dn $D_{4.6}$ $G_3$ ins.:

1331* ब्राह्मणः सत्यवाक्तेषामुवाचेदं तयोर्वचः ।

**10** =16. $K_1$ सुवर्चः; $K_2$ सुवर्णः; $Dc_2$ ब्राह्मण उ°; $D_3$ सुवर्चोवाच; S (except $G_3$) ब्राह्मणाः. — $^{a}$) $=15^{a}$. $K_1$ यथासि भार्या; Dc $D_2$ $T_1$ $G_1$ अथास्य भार्या. $10^{d}=14^{d}$, etc.

**11** $^{a}$) $K_{1.2}$ वेदाः सांगाश्च या गीतास्; $D_5$ $T_2$ $G_{2.4}$ M वेदः सांगो मयाधीतस्. — $^{c}$) $D_5$ $G_4$ कौमार-; $M_1$ कौमार्यं. $B_2$ Dn $D_{4.6}$ $G_{2-4}$ च (for मे).

**12** $^{b}$) Dc $D_2$ $G_1$ च; T $G_{2.4}$ वै (for मे). — $K_{1.2}$ om. (hapl.) $12^{cd}$. — $^{d}$) B Dn $D_{4.6}$ $G_3$ कृतो मे विधिवत्सदा.

**13** $^{b}$) $B_2$ D (except $D_3$; $D_1$ missing) $T_1$ $G_3$ M सर्वं पर°; $B_3$ सत्यं प्रिय°. — $^{c}$) T $G_{1.2.4}$ मम (for एतन्). $B_4$ निबोधस्व; Dn $D_{4.6}$ $G_3$ M निबोधध्वं.

**14** $^{a}$) $K_2$ यद् (for मे). $T_1$ $G_1$ वाक्याद् (for वक्त्राद्). — $^{b}$) $K_{1.2}$ विनिर्गतं. — $^{c}$) B Dn $D_{4.6}$ $G_3$ नैव (for नैतज्). — $14^{d}=10^{d}$, $15^{d}$, $16^{d}$, $17^{d}$, $18^{d}$, $19^{d}$.

**15** $T_2$ om. (hapl.) 15–17; $G_3$ (hapl.) om. 15–16. — $^{a}$) $=16^{a}$. $D_{4.6}$ यथा च (for यथास्य). $K_1$ भार्यासि; $K_4$ $D_3$ भार्यास्य (by transp.). — $Dc_1$ $D_2$ om. (hapl.) $15^{b}$–$16^{a}$. — $^{b}$) $K_4$ $D_{3.5}$ $T_1$ $G_1$ M स्व- (for सु-). $D_4$ तपसा च दमेन च ($=16^{b}$). — $^{c}$) $D_4$ आचारेण च संयुक्ता ($=16^{c}$). — After 15, $K_2$ reads 18, *repeating* the stanza in its proper place.

**16** =10. $K_{1.2}$ $T_2$ $G_3$ om. 16; $Dc_1$ $D_2$ om. $16^{a}$ (cf. v.l. 15). $K_4$ $B_{3.4}$ $Dn_1$. $n_2$ $D_3$ $G_{1.2}$ M भरद्वाज उ° ($G_{1.2}$ M om. उ°). — $^{a}$) $=15^{a}$. $K_4$ यथा भार्या च सावित्री.

**17** $T_2$ om. 17 (cf. v.l. 15). — $^{c}$) $T_1$ $G_{1.2.4}$ [ए]व (for च).

C. 3. 16876
B. 3. 298. 19
K. 3. 299. 19

धौम्य उवाच ।
सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः ।
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ॥ १९
मार्कण्डेय उवाच ।
एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान्विगणयन्नर्थानवस्थित इवाभवत् ॥ २०
ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१
ब्राह्मणा ऊचुः ।
पुत्रेण संगतं त्वाद्य चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वयं वै पृच्छामो वृद्धिं ते पृथिवीपते ॥ २२
समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे ॥ २३
सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः ।
भूयो भूयश्च वृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २४
मार्कण्डेय उवाच ।
ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व एव हि ।
उपासांचक्रिरे पार्थ द्युमत्सेनं महीपतिम् ॥ २५
शैब्या च सत्यवांश्चैव सावित्री चैकतः स्थिताः ।
सर्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन् ॥ २६
ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।
जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ २७
प्रागेव नागतं कस्मात्सभार्येण त्वया विभो ।
विरात्रे चागतं कस्मात्कोऽनुबन्धश्च तेऽभवत् ॥ २८
संतापितः पिता माता वयं चैव नृपात्मज ।
नाकस्मादिति जानीमस्तत्सर्वं वक्तुमर्हसि ॥ २९

---

**18** $K_{2}$ reads 18 after 15, *repeating* it here. $K_{4}$ B Dn $D_{4.6}$ $G_{3}$ आपस्तंब उ°; T $G_{1.2.4}$ वामदेवः; M पांक्त्येयः. — $^{a}$) Dc $D_{2}$ $G_{2}$ वदति; $T_{2}$ वै दिशि (for वदन्ति). — $^{b}$) $D_{3}$ $T_{2}$ वदंति (for दिशि वै). — $^{c}$) $D_{5}$ पार्थिवी च वृत्तिस्तेन; $T_{2}$ $G_{1.2.4}$ पार्थिवीं चैव वृद्धिं ते; M पार्थिवी चैव वृद्धिस्ते.

**19** $K_{1}$ om. (hapl.) 19. — $^{b}$) T $G_{2.4}$ M द्विजप्रियः; $G_{1}$ द्विजोत्तमः (for जन°).

**20** $K_{1}$ मार्कांडेयः; $M_{2}$ श्रीमार्कंडेयः. — $^{a}$) $B_{3.4}$ च; S (except $T_{1}$ $G_{3}$) तैः (for तु). $D_{5}$ एवमाश्वासितौ तौ तु. — $^{c}$) $B_{1.2.4}$ Dn $D_{4.6}$ $G_{3}$ सर्वान् (for अर्थान्). — $^{d}$) B Dn $D_{6}$ ततः ($B_{4}$ °त्र) स्थिर; Dc $D_{2}$ अवस्थिर; $D_{4}$ $G_{3}$ ततः शिष्य (for अवस्थित). $T_{2}$ इह (for इव).

**21** $^{b}$) S (except $G_{3}$) सह सत्यवता तदा. — $^{d}$) $K_{1}$ प्रविष्टः; $T_{1}$ $G_{1.2}$ $M_{2}$ प्रविष्टा. — After 21, T $G_{2.4}$ $M_{1}$ ins.:

1332* दृष्ट्वा चोत्पतिताः सर्वे हर्षं जग्मुश्च ते द्विजाः ।
कण्ठं माता पिता चास्य समालिङ्ग्याभ्यरोदताम् ।

**22** $K_{1.2}$ Dc $D_{2}$ ब्राह्मण उ°. — $^{a}$) $B_{1.2}$ Dn $D_{4.6}$ $G_{3}$ त्वां तु; $B_{4}$ त्वं च; $G_{1}$ त्वद्य (for त्वाद्य). — $^{c}$) $K_{4}$ (marg. *sec. m.*) वै यच्छामो; T $G_{1.2.4}$ हि पश्या° (for वै पृच्छा°). — $^{d}$) $B_{1.2}$ Dn $D_{4.6}$ $G_{3}$ वै (for ते).

**23** $^{b}$) $M_{1}$ °श्यागमनेन च. — $^{d}$) S (except $G_{3}$) [अ]भि- (for वि-).

**24** $^{a}$) $D_{5}$ च (for यत्). $T_{1}$ $G_{1.4}$ यथा सर्वैर्मुदाप्युक्तं; $T_{2}$ $G_{2}$ यथा सर्वे मुदा युक्तास्. — $^{b}$) Dc $D_{2.3}$ तत्तथा नात्र; $D_{5}$ यत्तथा तत्र (for तथा तन्नात्र). — $^{c}$) $B_{1.4}$ Dn $D_{4.6}$ $G_{3}$ समृद्धि°; $B_{2}$ संवृद्धि° (for च वृद्धि°). — $^{d}$) $Dn_{2}$ $D_{2.3}$ गमि° (for भवि°).

**25** N (except $K_{2}$ $B_{3}$; $K_{3}$ $D_{1}$ missing) $T_{1}$ $G_{3}$ om. the ref. $M_{2}$ श्रीमार्कंडेयः. — $^{a}$) $B_{2}$ तथा (for ततो). $K_{2}$ प्रज्वाल्य. $T_{2}$ $G_{2}$ ततोग्निं ते समुज्वाल्य; $G_{4}$ ततोग्निहोत्रं सं°. — $^{b}$) $T_{2}$ ब्राह्मणाः (for द्विजास्ते). $D_{5}$ $M_{1}$ ह (for हि). — $^{d}$) नराधिपं (for मही°).

**26** $^{b}$) $K_{1}$ $G_{1}$ चैकता; $G_{2.4}$ च ततस्. K ($K_{3}$ missing) Dn $D_{3.4.6}$ $T_{1}$ $G_{1}$ स्थिता; $G_{2.4}$ तथा. — $^{d}$) K ($K_{3}$ missing) विशोका °विशत्.

**27** $^{a}$) $D_{3}$ $G_{1.2.4}$ $M_{2}$ समासीनाः. — $^{c}$) $K_{4}$ सर्वे (for पार्थ).

**28** Before 28, B D (except $D_{3.5}$; $D_{1}$ missing) $G_{3}$ ins. ऋषय ऊ°. — $^{a}$) $G_{1}$ प्रागेवानागतं. — $^{b}$) $K_{1.2}$ त्वयानघ (for त्वया विभो). — $^{c}$) $T_{2}$ विरात्रौ चागतं; $G_{3}$ चिराच्चैवागतं. K ($K_{3}$ missing) $T_{1}$ $G_{1}$ चागतः; $B_{1}$ वागतं; $Dn_{1}$ वागमः. — $^{d}$) $K_{1}$ को विरस्त्वं च; $K_{2}$ को विलंबश्च; $K_{4}$ को नु विघ्न°; $B_{3}$ क्व च बाधा°; $M_{1}$ को वा बंधा°. $B_{1.2}$ Dn $D_{4.6}$ $G_{3}$ तव (for च ते). $B_{4}$ सभार्येण त्वया विभो (marg. कोनुबंधस्तवाभवत्).

**29** $^{a}$) $B_{3}$ संतापिता; $T_{2}$ °पिताः. — $^{b}$) Dc $D_{2}$ तथा नृप; M [अ]नुतापिताः. — $^{c}$) $K_{1.2}$ Dc $D_{2}$ T $G_{1.2.4}$ न कस्माद् (for नाकस्माद्). $T_{1}$ $G_{1}$ M एव (for इति). B

सत्यवानुवाच ।

पित्राहमभ्यनुज्ञातः सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ॥ ३०
सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं च न मया सुप्तपूर्वं कदाचन ॥ ३१
सर्वेषामेव भवतां संतापो मा भवेदिति ।
अतो विरात्रागमनं नान्यदस्तीह कारणम् ॥ ३२

गौतम उवाच ।

अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्थ सावित्री वक्तुमर्हति ॥ ३३
श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम् ।
त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ॥ ३४
त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ॥ ३५

सावित्र्युवाच ।

एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।
न च किंचिद्रहस्यं मे श्रूयतां तथ्यमत्र यत् ॥ ३६
मृत्युर्मे भर्तुराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ३७
सुप्तं चैनं यमः साक्षादुपागच्छत्सकिंकरः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ३८
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ३९
चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणामात्मनः शतम् ॥ ४०
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं स्थिरं व्रतम् ॥ ४१
एतत्सत्यं मयाख्यातं कारणं विस्तरेण वः ।　C. 3. 16899 B. 3. 298. 42 K. 3. 299. 43

---

Dn D$_{4.6}$ G$_3$ कस्मादिति न जा°. — d) K$_{1.2}$ सर्वं वक्तुमिहार्हसि.

**30** c) D$_3$ (marg. *sec. m.*) अद्य (for अथ). — d) K (K$_3$ missing) D$_3$ (marg. *sec. m.* as in text). $_5$ कुर्वतः; T G$_{1.2}$ भिद्यतः; M छिंदतः.

**31** c) K$_{1.2}$ -काले (for -कालं). K$_1$ B Dn D$_3$ (*sup. lin. sec. m.*). $_{4.6}$ G$_3$ transp. च and न. — d) K$_1$ कथंचन.

**32** b) D$_3$ न (for मा). — c) K$_1$ अतश्चिराभ्यागमने; K$_2$ अतो विरात्रगमनं; G$_2$ अतो विराज्या°; G$_4$ अतो विरात्राव-गमं. — d) B$_3$ Dc D$_2$ [इ]ति (for [इ]ह).

**33** a) T$_2$ M नाक° (for अक°). — c) B$_3$ नान्यत्; T$_1$ G$_1$ न स (for नास्य). B D (except D$_5$; D$_1$ missing) T$_1$ G$_{1.3}$ वेत्सि (for वेत्थ). — d) D$_5$ वेत्तुम्.

**34** a) M इच्छाम. — b) K$_2$ परापरं. — c) D$_2$ त्वा (for त्वां). K$_4$ B$_4$ D$_3$ G$_{1.2.4}$ त्वां हि जानीम; M$_1$ त्वाभिजानाम; M$_2$ त्वां विजानाम. — d) K$_{1.2}$ °त्रीमेव.

**35** a) S (except G$_3$) त्वामत्र. T$_1$ G$_{1.2.4}$ M जानीमस्; T$_2$ जानामि (for जानीषे). — b) S (except G$_3$) सर्वं (for सत्यं). K$_2$ निरुच्यतां. — c) K$_{1.2}$ transp. रहस्यं and यदि. — d) M किंचिदेव. D$_5$ ब्रवीहि नः.

**36** a) D$_3$ एवमेव. G$_4$ चेत्थं; M वित्त (for वेत्थ). — b) M$_1$ [अ]पि (for हि). — c) B Dc Dn D$_{2.4.6}$ G$_3$ हि (for च). Dc D$_2$ च (for मे). — d) T G$_{1.2.4}$ कृतम् (for तथ्यम्). B$_{1.2}$ Dn D$_{4.6}$ G$_3$ एव; B$_3$ अस्य (for अत्र).

**37** a) B Dc$_1$ Dn D$_{4.6}$ T$_2$ G$_3$ पत्युर् (for भर्तुर्). — b) K (K$_3$ missing) Dc D$_{2.3}$ °न महर्षिणा. — c) K (K$_3$ missing) D$_3$ स चास्य. G$_4$ दिव्यं संप्राप्तस्. — d) B$_3$ मैनं; G$_4$ नैतं (for नैनं).

**38** a) G$_4$ चैतं. — b) G$_2$ उपगच्छत्. — c) T$_1$ G$_{1.2.4}$ चैनम् (for एनम्). G$_1$ आनयद्. T$_2$ स वै चैनं यमो बध्वा.

**39** a) D$_5$ व्यतोषयम्; T G$_{1.2.4}$ अतोषयम् (for अस्तौषं तम्). — b) K$_2$ विभुः; G$_4$ भुवम्. — c) S (except G$_3$) transp. वै and मे. K$_1$ पंच चैतेन; B$_{1.3}$ पंचैव तेन; B$_4$ पंचायतेन; D$_5$ पंच तेनैव (for पञ्च वै तेन). B$_{3.4}$ transp. मे and दत्ता. — d) K$_1$ Dc D$_2$ G$_2$ M$_2$ वरान्. K$_2$ ता मम; D$_6$ चात्मना; G$_1$ तानिह (for तान्मम).

**40** a) K (K$_3$ missing) D$_{3.5}$ चक्षुष्मत्ता (D$_3$ °तां; D$_5$ °त्तां); Dc D$_2$ चक्षुष्मंतं (for चक्षुषी च). — c) K$_{1.2}$ पित्रोः (for पितुः). — d) B$_{1.2.4}$ Dn D$_{4.6}$ G$_3$ चात्मनः.

**41** b) K$_{1.2}$ लब्धं (K$_1$ °ब्धां) भर्ता; K$_4$ Dc D$_{2.3.5}$ लब्धो भर्ता (by transp.). — c) K (K$_3$ missing) D$_{3.5}$ जीवितार्थाय; Dc D$_2$ जीवनार्थाय (for °र्थं तु). B$_3$ हि; M तन् (for तु). — d) K$_{1.2}$ G$_2$ (by transp.) व्रतं स्थिरं;

C. 3. 16899
B. 3. 298. 42
K. 3. 299. 43
यथा वृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ४२

ऋषय ऊचुः ।

निमज्जमानं व्यसनैरभिद्रुतं
कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीले धृतधर्मपुण्यया
समुद्धृतं साध्वि पुनः कुलीनया ॥ ४३

मार्कण्डेय उवाच ।

तथा प्रशस्य ह्यभिपूज्य चैव ते
वरस्त्रियं तामृषयः समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा
शिवेन जग्मुर्मुदिताः स्वमालयम् ॥ ४४

इति श्रीमहाभारते आरण्यकपर्वणि द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

# २८३

मार्कण्डेय उवाच ।

तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपूर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ १
तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः ॥ २
ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप ।
आचख्युर्निहतं चैव स्वेनामात्येन तं नृपम् ॥ ३
तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवम् ।

---

B1. 2. 4 Dn D4. 6 G3 स्विदं व्रतं.

**42** a) B Dn D4. 6 T G3 M सर्वं (for सत्यं). K (K3 missing) B3 D3 M समा° (for मया°). — b) K4 D2. 3. 5 च (for वः). — d) T G1. 2. 4 मह(°म)र्षयः; M महन्मया.

**43** G1 om. the ref. M2 ऋषिः. — a) Some MSS. निमज्यमानं. B3 उपद्रुतं; D5 अभिप्लुतं. — c) K (K3 missing) Dc D2. 3. 5 सुशीलव्रतधर्मयुक्त(Dc °नित्य)या; B Dn D4. 6 G3 सुशीलव्रतपुण्यया कुलं (B3 °चर्यया); T2 सुशीले धृतपुण्यधर्मया; G1 सुशीलधृतधर्मं°.

**44** K (K3 missing) S (except G3 M2) om. the ref. — a) B1 ततः. K1. 2 प्रशंस्य; T G1 M प्रशस्याम्; G2. 4 प्रशस्ताम्. K1 हृदि पूज्य; B1. 4 ह्यतिपूज्य; S (except G3) अभिपूज्य (for ह्यभि°). B1. 2. 4 Dn D3. 4. 6 G3 om. ते. — b) K (K3 missing) D3. 5 M तां मुनयः; T1 ता ऋषयः. — c) K (K3 missing) D3. 5 transp. नरेन्द्रम् and सपुत्रम्. — d) S (except G3) शुभेन जग्मुर्मुदिता यथालयं.

Colophon. K3 D1 missing. — *Major parvan:* K1. 2 T2 G2. 4 आरण्य. — *Sub-parvan:* K4 B D (D1 missing) T1 M (all om. sub-parvan name) mention only सावित्र्युपाख्यान; G3 °त्र्युवाच (sic). — *Adhy. name:* M2 आश्रमप्रवेशः. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 296; Dn3 297; T1 G1 283; T2 G4 M (M2 *inf. lin.*) 286 (M2 orig. 288); G2 285. — *Śloka no.:* Dn 44.

## 283

☞ This adhy. is missing in K3 D1 (cf. v.l. 3. 279. 14, 8); the MSS. are mostly ignored here.

**1** K1 मार्कं°; M2 श्रीमार्कं°. — a) T G1. 2. 4 ततो (for तस्यां). — c) K4 Dc D2–4 T1 °पूर्वाह्णिकाः; Dn2 T2 G3 M °पौर्वाह्णिकाः. — d) K (K3 missing) B3. 4 Dc D2. 3. 5 समीयुस्.

**2** a) K1. 2 तदेवं. — b) B3. 4 -महो भाग्यं; Dc M2 माहा°; T1 माहात्म्यं च.

**3** b) K2. 4 D3 G1. 2. 4 M साल्वेभ्यो. K1. 2 D3. 5 [ऽ]भ्यागमन्; K4 [ऽ]भ्यगमन्; Dc D2 G2 M2 [ऽ]भ्यागतान्. K (K3 missing) B3 T G1. 2. 4 नृपं. — K1 om. (hapl.) $3^{cd}$. — c) G4 आचरेन् (for आचख्युर्). — d) B1–3 Dn D4. 6 G1. 3 द्विषं (for नृपम्).

**4** a) K1. 2 D3 ते (for तं). S (except G3) प्रोच्य (for श्रुत्वा). — b) G1. 2 -सहायं सहबांधवं. — T2 om. $4^{cd}$. — c) K1. 2 B1. 2 Dn D4. 6 G3 यथावृत्तं (for °तत्त्वं).

न्यवेदयन्यथातत्त्वं विद्रुतं च द्विषद्बलम् ॥ ४
ऐकमत्यं च सर्वस्य जनस्याथ नृपं प्रति ।
सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५
अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।
प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम् ॥ ६
प्रयाहि राजन्भद्रं ते घुष्टस्ते नगरे जयः ।
अध्यास्स्व चिररात्राय पितृपैतामहं पदम् ॥ ७
चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषान्वितम् ।
मूर्धभिः पतिताः सर्वे विस्मयोत्फुल्ललोचनाः ॥ ८
ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ ९
शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृता ॥ १०
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ ११
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ १२
भ्रातॄणां सोदराणां च तथैवास्याभवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहाबलम् ॥ १३
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ॥ १४
तथैवैषापि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना ॥ १५

वैशंपायन उवाच ।

एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन्काम्यके न्यवसत्तदा ॥ १६ C. 3. 16917 B. 3. 299 16 K. 3. 300 16

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥ समाप्तं द्रौपदीहरणपर्व ॥

— [d]) D3 विहतं. K2 तद् (for च).

5 [a]) T1 G1 ऐकमत्येन (for °मत्यं च). — [b]) K1. 2 जनस्यासुं; K4 D3 °स्यास्य; B3 D3 T M °स्य त्वां (T2 त्वा); Dc D2 °स्यासीन्. G1 सांत्वयन्नृपतिं प्रति. — [c]) K2 वापि चक्षुर् (for वाप्यचक्षुर्). B3 अचक्षुर्वा सचक्षुर्वा. — [d]) K1. 2 भवेदिति; K4 Dc2 D2 भविष्यति.

6 [a]) M1 अनेन व्यवसायेन. — [b]) T2 सर्वे (for वयं).

7 [b]) Dc2 D2 नगरं. — [c]) Almost all MSS. अध्यास्व. D5 चिरराज्याय.

8 Before 8, B3 S (except T2 G3) ins. मार्कंडेयः (M2 श्रीमार्कं°). — [a]) Dc D2 तु (for च). K4 D3 ते (for तं). — [b]) D3 राजानं च स्वपान्वितं. — [c]) K4 मूर्ध्नाभिपतिताः; B Dc Dn D2–4. 6 G3 मूर्ध्ना निप°.

9 [a]) K1. 2 विप्रान् (for वृद्धान्). — [b]) K1. 2 वृद्धान् (for द्विजान्). D5 ये चाश्रमनिवासिनः. — [cd]) B3. 4 T2 G2. 4 M चापि (for चाभि-). Dc2 D2 ते चाभि(D2 चापि)-पूजिताः सर्वैः. K (K3 missing) D3. 5 प्रययौ स्वपुरं हृष्टैः सर्वैरभिपूजितः.

10 [a]) B4 देव्या (for शैब्या). T2 [अ]पि (for च). — [b]) T2 स्वास्तीर्णैः सुरवर्चसा. — [c]) K4 नाग° (for नर°). — [d]) B3 M सेनया वृतः; T1 G1 सह सेनया; T2 G2. 4 सेनाया सह.

11 [a]) G2 अतो. D5 T1 °सिषिचुः. D5 प्रीता; S (except G3) सर्वे. — [b]) K1. 2 D3 नराधिपं (for पुरो°). — [c]) T G1. 2. 4 महाभागं (for °हात्मानं). — [d]) T1 G1 [ऽ]भिषेचयन्.

13 K1. 2 om. 13. — [b]) S (except T2 G3) °वाप्या° (for °वास्या°). — [c]) Dc D2 यत्राधिगम्याश्व (D2 °श्व-) पतिर्. — [d]) B2 Dn D4. 6 G3 सुमहद्बलं.

14 [a]) Dc D2 चैव (for माता).

15 [a]) K4 D3. 6 G3 हि; D5 च (for [अ]पि). — [b]) K1. 2 B4 D2 °संपदा (for °संमता).

16 G1 om. 16[ab]. — [ab]) K (K3 missing) D3 स्वनु- (for अनु-). T2 एवं ते पांडवास्तेन अनुनीता महा°. — [c]) K4 G2. 4 राजा (for राजन्). T2 विशोका विज्वरा राजन्. — [d]) K4 न्यवसत्काम्यके तदा; T2 काम्यके न्यवसंस्तदा. — After 16, B D (except D3) G2–4 ins. (the *phalaśruti*):

1333* यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ।

[(L. 2) G2 दीर्घमायुरवाप्नुयात् (for the posterior half). — This stanza occurs (with v.l.) also in *one* MS. of the Matsyapurāṇa (214. 23).]

Colophon. K3 D1 missing. — *Major parvan:* K1. 2 G2. 4 आरण्य. — *Sub-parvan:* N (K3 D1 missing)

# २८४

C. 3. 16919
B. 3. 300. 1
K. 3. 301. 1

जनमेजय उवाच ।
यत्तत्तदा महाब्रह्मँल्लोमशो वाक्यमब्रवीत् ।
इन्द्रस्य वचनादेत्य पाण्डुपुत्रं युधिष्ठिरम् ॥ १
यच्चापि ते भयं तीव्रं न च कीर्तयसे क्वचित् ।
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते ॥ २
किं नु तद्विदुषां श्रेष्ठ कर्णं प्रति महद्भयम् ।
आसीन्न च स धर्मात्मा कथयामास कस्यचित् ॥ ३
वैशंपायन उवाच ।
अहं ते राजशार्दूल कथयामि कथामिमाम् ।
पृच्छते भरतश्रेष्ठ शुश्रूषस्व गिरं मम ॥ ४
द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे ।
पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ॥ ५
अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः ।
कुण्डलार्थे महाराज सूर्यः कर्णमुपागमत् ॥ ६
महार्हे शयने वीरं स्पर्ध्यास्तरणसंवृते ।
शयानमभिविश्वस्तं ब्रह्मण्यं सत्यवादिनम् ॥ ७
स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ।
कृपया परयाविष्टः पुत्रस्नेहाच्च भारत ॥ ८
ब्राह्मणो वेदविद्भूत्वा सूर्यो योगाद्धि रूपवान् ।
हितार्थमब्रवीत्कर्णं सान्त्वपूर्वमिदं वचः ॥ ९

---

$T_1$ G M (all om. sub-parvan name) mention only साविञ्यु($D_3$ °ञ्यो)पाख्यान ($G_4$ साविञ्याख्यान), followed by समाप्त in all these MSS. (except $B_2$). — *Adhy. name:* $M_2$ राज्यप्राप्तिः. — *Adhy. no.* (figures, words or both): Dn 297 ($Dn_3$ 298); $T_1$ $G_1$ 284; $T_2$ $G_4$ M ($M_2$ *inf. lin.*) 287 ($M_2$ orig. 289); $G_2$ 286. — *Śloka no.:* $Dn_{1.\,n2}$ 17; $Dn_3$ 16.

## 284

**1** Stanzas 1–$33^a$ in $K_3$ and 1–26 in $D_1$ are lost on missing fol. (cf. v.l. 3. 279. 8, 14). — $^a$) Dc $D_2$ यत्तदाह; T $G_{1.\,2.\,4}$ यत्तदा स. B Dn $D_{4.\,6}$ $G_3$ महद्ब्रह्मन्; T $G_{1.\,2.\,4}$ महाभागो. — $^c$) $B_{1.\,4}$ Dn $D_{4.\,6}$ $G_3$ एव; $B_2$ $D_5$ एतत् (for एत्य).

**2** $K_3$ $D_1$ missing (cf. v.l. 1). — $^a$) S (except $G_3$) किंचिन् (for तीव्रं). — $^b$) K ($K_3$ missing) Dc $D_{2.\,3.\,5}$ [ऽ]नघ (for क्वचित्). — $^c$) $B_{1.\,3.\,4}$ Dc $D_2$ तत्त-वाप°; S (except $G_3$) तदप्यप° (for तच्चाप्यप°). — $^d$) K ($K_3$ missing) Dc $D_{2.\,3.\,5}$ सव्यसाचिन्यतो गते; B Dn $D_{4.\,6}$ $G_3$ धनंजय इतोगते.

**3** $K_3$ $D_1$ missing (cf. v.l. 1). — $^a$) $Dn_1$ $D_{3.\,5}$ $T_2$ तु (for नु). $B_3$ यज् (for तद्). B $Dn_{1.\,n3}$ $D_{4.\,6}$ $G_3$ जपतां; Dc $Dn_2$ $D_2$ जयतां (for विदुषां). — $^b$) $K_1$ शुश्रूषस्व गिरं मम (=$4^d$). — $K_1$ reads $3^{cd}$ after $5^{ab}$. — $^c$) $K_{1.\,2}$ स च न; $B_2$ न स च (by transp.); $T_2$ $G_2$ नैव स.

**4** $K_3$ $D_1$ missing (cf. v.l. 1). — $^a$) B Dc Dn $D_{2.\,6}$ M अयं; $D_4$ $G_3$ अथ; $D_5$ हंत (for अहं). — $^c$) $K_1$ B Dn $D_{4–6}$ $T_2$ $G_3$ पृच्छतो. — $^d$) $K_{1.\,2}$ गिरा; Dc $D_2$ परं (for गिरं). T $G_{1.\,2.\,4}$ शुश्रूषुस्त्वं हि मे मतः.

**5** $K_3$ $D_1$ missing (cf. v.l. 1). — $^b$) $Dc_2$ $D_2$ ऽप्राप्ते वर्षे (for वर्षे प्राप्ते). — After $5^{ab}$, $K_1$ reads $3^{cd}$.

**6** $K_3$ $D_1$ missing (cf. v.l. 1). — $^a$) $D_5$ अहो; T $G_{1.\,2.\,4}$ ततो (for अथो). — $^c$) K ($K_3$ missing) Dc $D_{2.\,3}$ कुंडलार्थं. $K_{1.\,2}$ महाभाग. — $^d$) K ($K_3$ missing) $D_{3.\,5}$ transp. सूर्यः and कर्णम्. S (except $G_3$) ततः (for सूर्यः). $K_4$ उपासत; $B_{1.\,2}$ Dn $D_{4.\,6}$ $G_{1.\,3}$ उपागतः.

**7** $K_3$ $D_1$ missing (cf. v.l. 1). — $^a$) $K_4$ Dc $T_1$ $G_1$ महार्ह- (for °र्हे). $D_{4.\,5}$ $G_3$ वीर; S (except $G_3$) चैनं (for वीरं). — $^b$) $K_2$ $D_{2–4.\,6}$ स्पर्धास्तरण-; $T_1$ $G_1$ साध्वा°; $G_2$ स्वस्त्या° (for स्पर्ध्या°). $K_{1.\,2}$ -संयते; $K_4$ -संसृते; $D_{3.\,5}$ -संस्तृते; $G_4$ -संयुते (for -संवृते). — $^c$) $K_{1.\,4}$ B D (except $D_3$; $D_1$ missing) $G_3$ अति-; $K_2$ इति (for अभि-).

**8** $K_3$ $D_1$ missing (cf. v.l. 1). — $^a$) K ($K_3$ missing) $D_{3.\,5}$ स्वप्नांते तं महाबाहुं. — $^b$) $B_{2.\,4}$ $D_5$ $T_1$ $G_1$ M रश्मिमान्. — $M_2$ om. $8^c$–$9^d$. — $^d$) $D_5$ °स्नेहात्तु; $G_4$ °स्नेहेन.

**9** $K_3$ $D_1$ missing (cf. v.l. 1). $M_2$ om. 9 (cf. v.l. 8). — $^b$) $K_{1.\,2}$ योगाद् द्वि($K_2$ °गाद्धि)रूपधृत्; $K_4$ $B_{3.\,4}$ Dc $D_{2.\,4}$ योगाद्धि($K_4$ °गाद् द्वि)रूपवान्; Dn $D_6$ $T_2$ $G_3$ योगार्धि($Dn_3$ योगादि)रूपवान्; $T_1$ $G_1$ योगविरूपधृक् ($G_1$ °धृत्). — $^c$)

कर्ण मद्वचनं तात शृणु सत्यभृतां वर ।
ब्रुवतोऽद्य महाबाहो सौहृदात्परमं हितम् ॥ १०
उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया ।
ब्राह्मणच्छद्मना कर्ण कुण्डलापजिहीर्षया ॥ ११
विदितं तेन शीलं ते सर्वस्य जगतस्तथा ।
यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे ॥ १२
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितः ।
वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कर्हिचित् ॥ १३
तं त्वामेवंविधं ज्ञात्वा स्वयं वै पाकशासनः ।
आगन्ता कुण्डलार्थाय कवचं चैव भिक्षितुम् ॥ १४
तस्मै प्रयाचमानाय न देये कुण्डले त्वया ।
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् ॥ १५
कुण्डलार्थे ब्रुवंस्तात कारणैर्बहुभिस्त्वया ।
अन्यैर्बहुविधैर्वित्तैः स निवार्यः पुनः पुनः ॥ १६
रत्नैः स्त्रीभिस्तथा भोगैर्धनैर्बहुविधैरपि ।
निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरंदरः ॥ १७
यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे ।
आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपेष्यसि ॥ १८
कवचेन च संयुक्तः कुण्डलाभ्यां च मानद ।
अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ॥ १९
अमृतादुत्थितं ह्येतदुभयं रत्नसंभवम् ।
तस्माद्रक्ष्यं त्वया कर्ण जीवितं चेत्प्रियं तव ॥ २०
कर्ण उवाच ।
को मामेवं भवान्प्राह दर्शयन्सौहृदं परम् । C. 3. 16939 B. 3. 300. 21 K. 3. 301. 21

$B_3$ Dc $D_2$ T $G_{1.2.4}$ $M_1$ काले (for कर्ण).

**10** $K_3$ $D_1$ missing (cf. v.l. 1). Before 10, $G_{2.4}$ ins. ब्राह्मणः, $M_1$ सूर्यः. — a) $M_1$ मद्वचनात्. T $G_{1.2.4}$ $M_2$ तावत् (for तात). — b) K ($K_3$ missing) $D_{3.5}$ धर्म°; T $G_{1.2.4}$ शस्त्र° (for सत्य°). M शृणु सत्यपराक्रम. — c) $D_{2.5}$ [ऽ]थ (for [ऽ]द्य).

**11** $K_3$ $D_1$ missing (cf. v.l. 1). — a) $K_{1.2}$ $Dn_1$ S (except $T_2$ $G_3$) उप° (for उपा°). M त्वा (for त्वां). — c) $T_1$ $G_{1.2.4}$ °छद्मना चैव; $T_2$ °छद्मरूपेण. — d) $K_4$ $B_{1.4}$ Dn $D_3$ $T_1$ $G_3$ M कुंडलोप- (for °लाप-). $B_2$ $T_1$ -जिगीषया (for -जिहीर्षया). $D_5$ न प्रत्याख्यासि कर्हिचित् (=13d).

**12** $K_3$ $D_1$ missing (cf. v.l. 1).). — a) $T_1$ $G_{1.2.4}$ ह्येव; $T_2$ चैव; M तस्य (for तेन). $T_2$ मे; $G_{2.4}$ तु (for ते). K ($K_3$ missing) Dc $D_{2.3}$ त्वच्छीलं विदितं तस्य. — b) T $G_{2.4}$ तव (for तथा). — c) $G_2$ यदा (for यथा). — d) $G_1$ दास्येव न तु याचसे; $G_4$ दास्यस्येव न याचते.

**13** $K_3$ $D_1$ missing (cf. v.l. 1). — a) $G_{2.4}$ दाता (for तात). $T_1$ $G_{1.2.4}$ [ए]वं (for [ए]व). — b) B Dc Dn $D_{2.4.6}$ $T_1$ $G_{1.3}$ प्रयाचितं. — c) $D_5$ विप्रं (for वित्तं). $G_2$ [अ]प्यन्यद् (by transp.). — d) $K_4$ प्रत्याख्यातु; $G_1$ °ख्याहि. $K_{1.2}$ $B_{1-3}$ Dn $D_{4-6}$ $G_3$ कस्य° (for कर्हि°). $T_2$ $G_{2.4}$ $M_1$ प्रत्याख्यातं न ($M_1$ °ख्यासीह) कर्हिचित्.

**14** $K_3$ $D_1$ missing (cf. v.l. 1). — a) K ($K_3$ missing) Dc $D_{2.3}$ स त्वामे°; B Dn $D_{4.6}$ $G_3$ त्वां तु चै°; $D_5$ सर्वमे°; $T_1$ तत्त्वामे° (for तं त्वामे°). $K_{1.2}$ Dc $D_{2.3.5}$ M जानन्; $K_4$ राजन् (for ज्ञात्वा). — $D_2$ om. 14d–16a.

**15** $K_3$ $D_1$ missing (cf. v.l. 1). $D_2$ om. 15 (cf. v.l. 14). — c) $K_{1.2}$ अनेन यः; $B_{1.2}$ अनुनीय (for अनुनेयः). — d) $D_{4.6}$ हितं; $M_1$ हि वै (for हि ते). $T_2$ $G_4$ वरं (for परम्).

**16** $K_3$ $D_1$ missing (cf. v.l. 1). $D_2$ om. 16a (cf. v.l. 14). — a) K ($K_3$ missing) $D_3$ कुंडलार्थं. $K_{1.2}$ Dc ध्रुवं (for ब्रुवन्). — b) $K_1$ करणे; $K_2$ कारणे; Dc कुंडलैर् (for कारणैर्). $Dc_2$ तथा; $D_5$ सदा (for त्वया). — c) $T_2$ °वरैर् (for °विधैर्). $D_5$ चित्रैः; $T_2$ वीर (for वित्तैः). — d) B Dn $D_{2.4.6}$ $T_2$ $G_3$ M सं- (for स). $K_1$ निवार्यात्; $B_{2-4}$ $Dc_2$ $D_3$ निवार्यं (for °र्यः).

**17** $K_3$ $D_1$ missing (cf. v.l. 1). — a) $D_5$ यथा (for तथा). B Dc Dn $D_{2.4.6}$ $G_3$ गोभिर्; $D_5$ योगैर् (for भोगैर्). — b) $K_{1.2}$ तथा (for अपि).

**18** $K_3$ $D_1$ missing (cf. v.l. 1). — a) $K_{1.2}$ Dc $D_2$ दास्यति. — b) K ($K_3$ missing) $Dc_2$ $D_{2.3.5}$ कुंडले सहजे (by transp.). $B_3$ त्वया (for शुभे). — c) $K_{1.2}$ $B_{1-3}$ Dc $D_{2.3.5}$ T $G_{2.4}$ कृत्वा (for गत्वा). — d) B D (except $D_3$; $D_1$ missing) $G_3$ उपैष्यसि (for उपे°).

**19** $K_3$ $D_1$ missing (cf. v.l. 1). — a) K ($K_3$ missing) Dc $D_{2.5}$ हि संयुक्तः; B Dn $D_{4.6}$ $G_3$ समायुक्तः (for च सं°). — d) $T_2$ सत्यं (for विद्धि).

**20** $K_3$ $D_1$ missing (cf. v.l. 1). — a) $D_5$ उद्धृतं (for उत्थितं). $K_{1.2}$ एतद्; T $G_{1.2.4}$ इदम् (for ह्येतद्). — b) S (except $G_3$) °संमितं (for °संभवम्). — c) $K_{1.2}$

C. 3. 16939 B. 3. 300. 21 K. 3. 301 21 कामया भगवन्ब्रूहि को भवान्द्विजवेषधृक् ॥ २१

ब्राह्मण उवाच ।

अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये ।
कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते ॥ २२

कर्ण उवाच ।

श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः ।
प्रवक्ताद्य हितान्वेषी शृणु चेदं वचो मम ॥ २३
प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहम् ।
न निवार्यो व्रतादस्मादहं यद्यस्मि ते प्रियः ॥ २४
व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नो विभावसो ।
यथाहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवम् ॥ २५
यद्यागच्छति शक्रो मां ब्राह्मणच्छद्मनावृतः ।
हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम् ॥ २६
दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम् ।
न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता ॥ २७
मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम् ।
युक्तं हि यशसा युक्तं मरणं लोकसंमतम् ॥ २८
सोऽहमिन्द्राय दास्यामि कुण्डले सह वर्मणा ।
यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति ॥ २९
हितार्थं पाण्डुपुत्राणां कुण्डले मे प्रयाचितुम् ।
तन्मे कीर्तिकरं लोके तस्याकीर्तिर्भविष्यति ॥ ३०
वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन् ।
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति ॥ ३१
कीर्तिर्हि पुरुषं लोके संजीवयति मातृवत् ।
अकीर्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः ॥ ३२
अयं पुराणः श्लोको हि स्वयं गीतो विभावसो ।

रक्ष्ये (for रक्ष्यं).

**21** $K_3$ $D_1$ missing (cf. v.l. 1). — $^{a}$) $K_1$ विधिं; $K_{2.4}$ $D_{3.5}$ -विधं (for भवान्). — $^{b}$) $B_3$ सौहृदं दर्शयन् (by transp.). Dc $D_2$ मम (for परम्). $T_2$ वचनं शुभदं परं. — $^{c}$) K ($K_3$ missing) Dc $D_{2.3.5}$ $T_2$ $G_{2.4}$ काम्यया (for कामया). — $^{d}$) $K_{1.2}$ द्विजवेशभृत्; $B_3$ इह वेशधृक्.

**22** $K_3$ $D_1$ missing (cf. v.l. 1). — $^{a}$) S (except $G_3$) कर्ण (for तात). — $^{b}$) $G_1$ तु; $M_2$ त्वा (for त्वां). Dc $D_2$ हि दर्शये; $G_2$ निवेदये (for निदर्शये). — $^{c}$) Dc $D_2$ मह्यम् (for मे त्वम्). — $^{d}$) $K_4$ प्रियं परं; $D_3$ प्रियं हि ते.

**23** $K_3$ $D_1$ missing (cf. v.l. 1). — $^{a}$) $K_{1.2}$ एवं (for एव). $D_5$ [आ]यातं (for [अ]त्यन्तं). — $^{c}$) $K_{1.2.4}$ Dc $D_{2.3.5}$ प्रसन्नो हि ($K_4$ $D_{2.3}$ °न्नोद्य); $B_3$ प्रवक्ता हि. $T_1$ $G_{1.2.4}$ M भवान्हितार्थमुद्युक्तः; $T_2$ भो हितार्थं समुद्युक्तः. — $^{d}$) S (except $G_3$) श्रूयतां तु (for शृणु चेदं).

**24** $K_3$ $D_1$ missing (cf. v.l. 1). — $^{a}$) $K_{1.2}$ M प्रसाद्य वै त्वा (for °दये त्वां). K ($K_3$ missing) Dc $D_{2.3}$ M वरद. — $^{b}$) K ($K_3$ missing) Dc $D_{2.3.5}$ प्र-; S (except $G_3$) यद् (for च). — $^{d}$) $Dc_2$ $D_2$ अयं (for अहं).

**25** $K_3$ $D_1$ missing (cf. v.l. 1). — $^{b}$) $K_{1.2.4}$ $B_{1.3}$ Dc Dn $D_{2.4.6}$ $T_1$ $G_3$ कृत्स्नं (for कृत्स्नो). — $^{c}$) $K_4$ $D_3$ $G_2$ यदहं (for यथा°). — $^{d}$) $B_3$ प्राणम् (for प्राणान्).

**26** $K_3$ $D_1$ missing (cf. v.l. 1). — $^{a}$) $K_1$ यद्वा°; Dc $D_2$ अभ्या° (for यद्या°). B Dn $D_{4.6}$ $G_3$ मां शक्रो (by transp.). — $^{c}$) =30$^{a}$. $G_1$ सुतार्थं; $M_1$ हितार्थे. — $^{d}$) $K_4$ खेचरो वर्म; $B_3$ खचरोत्तम.

**27** $K_3$ missing (cf. v.l. 1). $D_1$ resumes. — $^{b}$) $T_2$ $G_{1.2.4}$ कवचो° (for वर्म चो°).

**28** $K_3$ missing (cf. v.l. 1). — $^{a}$) $K_1$ $T_2$ $G_3$ यशस्यं (for [अ]यशस्यं). $K_{1.2}$ च (for हि). — $^{b}$) $K_1$ °धारणं (for °रक्षणम्). — $^{c}$) $K_4$ $D_3$ एकं हि (for युक्तं हि). $K_4$ सहसा (for यशसा). — $^{d}$) $K_{1.2}$ °विश्रुतं (for °संमतम्).

**29** $K_3$ missing (cf. v.l. 1). — $^{b}$) $K_{1.2}$ कुंडलं (for कुण्डले). $K_1$ मम (for सह). — $^{c}$) $T_2$ $G_{2.4}$ वा (for मां).

**30** $K_3$ missing (cf. v.l. 1). — $^{a}$) =26$^{c}$. $K_{1.2}$ हिताय (for °र्थं). S (except $G_3$) यदि पार्थानां (for पाण्डुपुत्राणां). — $^{b}$) $B_3$ च (for मे). S (except $G_3$) °चते (for °चितुम्). — $^{d}$) $T_1$ $G_1$ तस्य कीर्तिर्; $T_2$ $G_{2.4}$ तच्च कीर्तिर् (for तस्याकीर्तिर्).

**31** $K_3$ missing (cf. v.l. 1). — $^{a}$) K ($K_3$ missing) $D_3$ S (except $G_{3.4}$) [ऽ]स्मिन् (for हि). — $^{b}$) Dc $D_{1.2}$ जीवितादपि (for °तेनापि). $D_1$ [अ]नुत्तमां (for भानुमन्). — $^{d}$) K ($K_3$ missing) $D_{1.3}$ नष्ट-; $G_1$ न हि (for हीन-). Dc $D_{2.5}$ च; $Dn_2$. $n_3$ $D_6$ हि (for तु).

**32** $K_3$ missing (cf. v.l. 1). — $^{a}$) $K_{1.2}$ S (except $G_3$) तु (for हि). — $^{c}$) $D_3$ वृणामि कीर्तिं लोकेस्मिन् (cf. 31$^{a}$). — $^{d}$) Some MSS. जीवितो(*or* °ते)पि. $G_4$ शरीरिणं.

धात्रा लोकेश्वर यथा कीर्तिरायुर्नरस्य वै ।। ३३
पुरुषस्य परे लोके कीर्तिरेव परायणम् ।
इह लोके विशुद्धा च कीर्तिरायुर्विवर्धनी ।। ३४
सोऽहं शरीरजे दत्त्वा कीर्तिं प्राप्स्यामि शाश्वतीम् ।
दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ।। ३५
हुत्वा शरीरं संग्रामे कृत्वा कर्म सुदुष्करम् ।
विजित्य वा परानाजौ यशः प्राप्स्यामि केवलम् ।। ३६
भीतानामभयं दत्त्वा संग्रामे जीवितार्थिनाम् ।
वृद्धान्बालान्द्विजातींश्च मोक्षयित्वा महाभयात् ।। ३७
प्राप्स्यामि परमं लोके यशः स्वर्भानुसूदन ।
जीवितेनापि मे रक्ष्या कीर्तिस्तद्विद्धि मे व्रतम् ।। ३८
सोऽहं दत्त्वा मघवते भिक्षामेतामनुत्तमाम् ।
ब्राह्मणच्छद्मिने देव लोके गन्ता परां गतिम् ।। ३९

इति श्रीमहाभारते आरण्यकपर्वणि चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

## २८५

सूर्य उवाच ।
माहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा ।
पुत्राणामथ भार्याणामथो मातुरथो पितुः ।। १
शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर ।
इष्यते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिरा ।। २
यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम् । C. 3. 16960 B. 3. 301. 3 K. 3. 302. 3

---

**33** $K_3$ missing up to 33$^{a}$ (cf. v.l. 1). — $^{a}$) $K_4$ $G_{1.2.4}$ पुराणश्लोको. $T_2$ $G_{2.4}$ M वै (for हि). — $^{c}$) $T_1$ $G_1$ °श्वरेणाथ (for °श्वर यथा). — $^{d}$) $B_2$ Dn $D_{4.6}$ $T_1$ $G_3$ ह (for वै).

**34** $^{c}$) $K_2$ परत्रे च; Dc $D_2$ चरित्वा च; $D_1$ विशुद्धैव; T $G_{1.2.4}$ विशुद्धायाः; M चैव तथा (for विशुद्धा च). — $^{d}$) $K_{3.4}$ Dc $D_{2.3}$ °र्विवर्धिनी; $D_1$ °र्विधीयते. S (except $G_3$) कीर्तिवर्धनमायुषः.

**35** $^{b}$) $D_5$ आप्स्यामि; T $G_{1.2.4}$ लप्स्यामि (for प्रा°).

**36** $^{a}$) $D_5$ दत्वा; T $G_{1.2.4}$ मुक्त्वा (for हुत्वा). — $^{b}$) K $D_{1.3.5}$ कीर्तिमेवाद्य कामये. — $^{c}$) T $G_{1.2.4}$ निहत्य (for विजित्य). K Dc $D_{1-3.5}$ $T_1$ $G_1$ M वा (for च). — $^{d}$) $D_{1.5}$ जयं (for यशः).

**37** $^{a}$) $D_1$ चाभयं (for अभयं). — $^{b}$) $T_1$ $G_1$ °त्मनां (for °र्थिनाम्).

**38** $^{a}$) $K_{1.2}$ यास्यामि (for प्राप्स्यामि). — $^{b}$) B D (except $D_{1.3.5}$) $G_3$ यशः स्वर्ग्यं(Dc $D_2$ °र्गे)मनुत्तमं. — $^{c}$) $D_5$ °ते वापि (for °तेनापि). $K_3$ रक्ष्या वै (for मे रक्ष्या). — $^{d}$) $K_3$ त्वं; $B_2$ मे (for तद्).

**39** $^{a}$) Dc भग° (for मघ°). — $^{b}$) $Dn_3$ T $G_{1.2.4}$ एनाम् (for एताम्). $D_5$ सुरोत्तम (for अनुत्तमाम्). — $G_4$ om. 39$^{cd}$. — $^{c}$) K $D_{2.3}$ °च्छद्मने; Dc °च्छद्मना (for °च्छद्मिने). T $G_{1.2}$ ब्रह्मरूपधरो देव ($G_2$ °धरे देवे). — $^{d}$) $D_{4.6}$ $G_3$ गत्वा (for गन्ता). $K_{1.3.4}$ $D_3$ कथां (for गतिम्).

Colophon om. in $K_{1.3}$. — *Major parvan:* $K_2$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{2.4}$ B Dc $Dn_{1.}$ $n_3$ $D_{1-6}$ $G_3$ M कुंडला($D_5$ °लाभि)हरण. — *Adhy. name:* $D_1$ कर्णवाक्यं; M सूर्यदर्शनं. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 298; $Dn_3$ 299; $D_1$ 303; $T_1$ $G_1$ 285; $T_2$ $G_4$ $M_{1.2}$ (*inf. lin.*) 288; $G_2$ 287; $M_2$ (orig.) 290. — *Śloka no.:* Dn $D_1$ 39.

## 285

**1** $K_2$ श्रीसूर्यः; $T_2$ भास्वान्; $G_{2.4}$ विवस्वान् (for सूर्यः). — $^{b}$) $K_{2.3}$ $Dc_1$ $D_1$ °दांस्तथा; $D_2$ °दां तदा; $T_1$ $G_1$ °दस्तथा (for °दां तथा). — $^{d}$) T $G_{1.2.4}$ अथ (for the first अथो).

**2** $D_3$ om. (hapl.) 2$^{b}$–3$^{a}$. — $^{b}$) $T_2$ $M_2$ °द्वरः (for °द्वर). $K_{1-3}$ Dc $D_{1.2.5}$ प्राणिभिः प्राणिनां वर. — $^{c}$) T $G_1$ इष्यसे. — $^{d}$) $T_2$ $G_4$ स्थिता (for स्थिरा).

**3** $D_3$ om. 3$^{a}$ (cf. v.l. 2). — $^{a}$) $K_{1.2}$ यस्त्वं; S (except $T_2$ $G_3$) स त्वं. $K_3$ Dn $D_6$ प्राणावि° (for प्राणवि°). — $^{d}$) S (except $G_3$) यमक्षयं (for न संशयः).

C 3.16960 B. 3.301.3 K. 3.302.3 सा ते प्राणान्समादाय गमिष्यति न संशयः ॥ ३
जीवतां कुरुते कार्यं पिता माता सुतास्तथा ।
ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन्पुरुषर्षभ ।
राजानश्च नरव्याघ्र पौरुषेण निबोध तत् ॥ ४
कीर्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते ।
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः ।
मृतः कीर्तिं न जानाति जीवन्कीर्तिं समश्नुते ॥ ५
मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः ।
अहं तु त्वां ब्रवीम्येतद्भक्तोऽसीति हितेप्सया ॥ ६
भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना ।
भक्तोऽयं परया भक्त्या मामित्येव महाभुज ।
ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम ॥ ७
अस्ति चात्र परं किंचिदध्यात्मं देवनिर्मितम् ।
अतश्च त्वां ब्रवीम्येतत्क्रियतामविशङ्कया ॥ ८
देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ ।
तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् ॥ ९
पुनरुक्तं च वक्ष्यामि त्वं राधेय निबोध तत् ।
मास्मै ते कुण्डले दद्या भिक्षवे वज्रपाणये ॥ १०
शोभसे कुण्डलाभ्यां हि रुचिराभ्यां महाद्युते ।
विशाखयोर्मध्यगतः शशीव विमलो दिवि ॥ ११
कीर्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत् ।
प्रत्याख्येयस्त्वया तात कुण्डलार्थे पुरंदरः ॥ १२
शक्या बहुविधैर्वाक्यैः कुण्डलेप्सा त्वयानघ ।
विहन्तुं देवराजस्य हेतुयुक्तैः पुनः पुनः ॥ १३
उपपत्त्युपपन्नार्थैर्माधुर्यकृतभूषणैः ।
पुरंदरस्य कर्ण त्वं बुद्धिमेतामपानुद ॥ १४
त्वं हि नित्यं नरव्याघ्र स्पर्धसे सव्यसाचिना ।
सव्यसाची त्वया चैव युधि शूरः समेष्यति ॥ १५

---

**4** $^{a}$) $K_{1.2}$ $B_4$ $D_5$ जीवतः; $K_{3.4}$ Dc $D_{1-3}$ जीवता. $K_3$ क्रियते; T $G_{1.2.4}$ कुर्वते (for कुरुते). — $^{b}$) $B_{3.4}$ Dc $D_{2.5}$ $T_2$ $G_{1.2.4}$ सुतस्तथा; M तथा सुताः (by transp.). — $^{f}$) $K_{3.4}$ $D_{1.3}$ पुरुषेण ($K_4$m हृदयेन); S (except $G_3$) पुरुषाणां (for पौरुषेण).

**5** $5^{ab}$ = (var.) $12^{ab}$. — $^{a}$) $K_3$ $T_1$ $G_{1.4}$ जीवितः (for जीवतः). — $^{e}$) B Dn $D_{1.2.4.6}$ $T_1$ $G_3$ जानीते (for जानाति).

**6** $^{c}$) $K_{1.2}$ हि (for तु). $K_2$ $Dn_1$ M त्वा (for त्वां). $D_1$ ततो; $T_1$ त्वां प्र- (for तु त्वां). M [ए]वं (for [ए]तद्). — $^{d}$) Dc $D_2$ भोक्ता° (for भक्तो°). $D_{4.6}$ $G_3$ हि ते मया (for °प्सया).

**7** $^{a}$) $K_{1.2}$ रक्ष्याश्च; $D_5$ $G_{2.4}$ ते रक्ष्या (for मे र°). — $^{b}$) K Dc $D_{2.3.5}$ $G_{2.4}$ [अ]नेन (for [ए]तेन). — $^{c}$) $K_{1.2}$ यः; Dc $D_1$ [ऽ]सि (for ऽयं). — $^{d}$) $D_1$ $G_2$ [ए]वं (for [ए]व). — $^{f}$) $K_1$ $M_1$ सत्यं; $B_3$ सर्वं (for स त्वं).

**8** $^{a}$) $K_{1.2}$ नात्र; S (except $T_2$ $G_3$) चापि (for चात्र). — $^{b}$) Dn $D_{3.4.6}$ T $G_2$ दैव°; $D_1$ वेद° (for देव°). — $^{c}$) $K_{2.3}$ $D_3$ तत° (for अत°). $K_{1-3}$ $M_1$ त्वा; $T_1$ $G_1$ [अ]हं (for त्वां). — $^{d}$) $D_1$ चाविशंकया; $D_5$ मा विचारय.

**9** $^{a}$) $T_2$ च यज् (for त्वया). $D_5$ ख्यातुं (for ज्ञातुं).

**10** $^{b}$) Dc $D_{2.3}$ त्वां (for त्वं). T $G_{1.2.4}$ मे (for तत्). — $^{c}$) $K_{1.2}$ मा स्म ते; $K_3$ मा चास्मै; T $G_{1.2.4}$ मास्मै (for मास्मै ते). K Dc $D_{1-3.5}$ दास्त्वं; $B_{2.3}$ दद्याद्; $D_{4.6}$ $G_3$ देये (for दद्या). — $^{d}$) $K_{1-3}$ $D_{3.5}$ M भिक्षते; B Dc Dn $D_{1.2.4.6}$ $G_3$ भिक्षिते (for भिक्षवे). $K_3$ $D_2$ वज्रपाणिने; B Dc Dn $D_{4.6}$ $G_3$ °पाणिना.

**11** $^{a}$) $K_{1.2}$ त्वं; B D (except $D_3$) $G_3$ च (for हि). — $^{b}$) $D_5$ मुखं तु ते (for महा°). — $^{c}$) $D_3$ मूर्ध्नि (for मध्य-). — $^{d}$) $K_4$ $B_{1.2.4}$ D (except $D_{1.5}$) $G_3$ विमले दिवि; T $G_{1.2.4}$ M विमलोदितः.

**12** $12^{ab}$ = (var.) $5^{ab}$. — $^{a}$) $K_2$ जीविता; $K_3$ सास्वतः; $D_1$ $G_4$ जीवितः (for जीवतः). — $^{b}$) $K_{1.2.4}$ °स्येव; $T_1$ $G_{1.2.4}$ °स्येह (for °स्येति). — $^{c}$) K $D_3$ तदा ($K_3$ पुरा) (for त्वया). — $^{d}$) K $D_{3.5}$ कुंडलाभ्यां; $D_1$ °लार्थी. B Dn $D_{2.4.6}$ $G_3$ सुरेश्वरः (for पुरं°). — After 12, T $G_{1.2.4}$ ins.:

1334* पाण्डवानां हिते युक्तो भिक्षन्ब्राह्मणवेषधृक् ।

**13** $^{a}$) Dc शक्त्या; $D_5$ शक्यं (for शक्या). — $^{b}$) $D_1$ कुंडलेच्छा. — Dc $D_2$ om. $13^{c}$–$15^{d}$. — $^{c}$) $K_{1.2}$ विहर्तुं (for विहन्तुं).

**14** Dc $D_2$ om. 14 (cf. v.l. 13). — $^{a}$) B ($B_3$ marg.) Dn $D_{4.6}$ $G_3$ हेतुमदुपपन्नार्थैर्. — $^{b}$) $K_3$ °भूषितैः; S (except $G_3$) °लक्षणैः. — $^{c}$) S (except $G_3$) सुरेश्वरस्य (for पुरं°). $K_{1.2}$ कार्यं (for कर्ण). — $^{d}$) $G_{2.4}$ एतां बुद्धिम् (by transp.). $B_2$ $D_{1.3.6}$ $G_1$ उपानुद (for अपा°).

न तु त्वामर्जुनः शक्तः कुण्डलाभ्यां समन्वितम् ।
विजेतुं युधि यद्यस्य स्वयमिन्द्रः शरो भवेत् ॥ १६
तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे ।
संग्रामे यदि निर्जेतुं कर्ण कामयसेऽर्जुनम् ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

# २८६

कर्ण उवाच ।
भगवन्तमहं भक्तो यथा मां वेत्थ गोपते ।
तथा परमतिग्मांशो नान्यं देवं कथंचन ॥ १
न मे दारा न मे पुत्रा न चात्मा सुहृदो न च ।
तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम ॥ २
इष्टानां च महात्मानो भक्तानां च न संशयः ।
कुर्वन्ति भक्तिमिष्टां च जानीषे त्वं च भास्कर ॥ ३
इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि ।
जानीत इति वै कृत्वा भगवानाह मद्धितम् ॥ ४
भूयश्च शिरसा याचे प्रसाद्य च पुनः पुनः ।
इति ब्रवीमि तिग्मांशो त्वं तु मे क्षन्तुमर्हसि ॥ ५
बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम् ।
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम् ।
प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा ॥ ६
यच्च मामात्थ देव त्वं पाण्डवं फल्गुनं प्रति ।
व्येतु संतापजं दुःखं तव भास्कर मानसम् । C. 3. 16984 B. 3. 302. 8 K. 3. 303. 8

---

**15** Dc D2 om. 15 (cf. v.l. 13). — b) K1. 2 सव्यसाचिनं. — c) K1. 2 धनंजयस्- (for सव्य°). B Dn D4. 6 G3 चेह; D1 शूर (for चैव). — d) T G1. 2. 4 युद्धे (for युधि). D1 चैव (for शूरः).

**16** a) T1 G1. 2. 4 न च; M2 तत्र (for न तु). M त्वां नार्जुनः (for त्वामर्जुनः). — b) B2 विराजितं (for सम°). — c) M निर्जेतुं (for विजेतुं). — d) K1 G1 शिरो; K3. 4 B D (except D5) G3 सखा (for शरो).

**17** a) G4 देयं (for देये). B3 शक्रस्य. — b) Dc D2. 5 त्वयैतत्-. K1. 2 कर्ण कुंडले (for कुण्डले शुभे).

Colophon om. in K1. 3. 4. — *Major parvan:* K2 Dn2 G2. 4 आरण्य. — *Sub-parvan:* K2 B D G3 कुंडला- (D5 °लाभि)हरण. — *Adhy. name:* B4 M सूर्यवाक्यं. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 299; Dn3 300; T1 G1 286; T2 G4 M1. 2 (*inf. lin.*) 289; G2 288; M2 (orig.) 291. — *Śloka no.:* Dn 18.

## 286

**1** a) B1 G2 भगवंस्त्वाम् (for भगवन्तम्). D1 अहो (for अहं). K4 (m as in text) G4 शक्तो (for भक्तो). — b) K3 Dc D2. 4 M यथा मा; T G1. 2. 4 यथार्थं. Dc D2 आत्थ (for वेत्थ). — c) Dc D2 यथा (for तथा). T G1. 2. 4 परं हि (for परम-). — d) B Dn D4. 6 G3 नास्त्यदेयं; T1 G1 नान्यद्दैवं (G1 °द्दैवं); T2 G4 नान्यदेवं (for नान्यं देवं). K1. 2 कदा° (for कथं°).

**2** a) K1. 2 न मे माता न च पिता. — c) K1. 2 तथेष्टो वै; Dc D2 अथेष्टा वै; T G1. 2. 4 तथैवेष्टाः. Dc D2 यथा (for सदा). — d) Dc D2 तथा (for यथा).

**3** c) T1 मिष्टां भक्तिं (for भक्तिमिष्टां). K1 इष्टानां; B4 इष्टं च (for इष्टां च). — d) B3 खेचर; D5 भारत (for भास्कर).

**4** c) Dc D2 अधीत (for जानीत).

**5** a) D1 चैव; S (except G3) देवं (for याचे). — c) S (except G3) इदं (for इति). — d) K1. 2 तत्त्वं; K3 D1. 5 T1 G1 M तत्तु; K4 तं तु; T2 G2. 4 कर्तुं (for त्वं तु).

**6** a) K D1. 3. 5 न बिभेमि (by transp.). — b) K1. 2 D1 यथासत्याद्बिभेम्यहं; G4 यथाहो ह्यनृतादहं. — e) T G2. 4 प्रदाता; G1 प्रदातुं (for प्रदाने).

**7** b) N (except K1. 3) G3 फाल्गुनं (for फ°). — d) T2 G1. 2. 4 मानसे (for °सम्). D5 तव संग्रामसंभवं. — e) Dc D2. 5 अर्जुनं प्रतियोत्स्यामि; G2 M अर्जुनप्रतिमं चापि (M2 चैव).

**8** a) K4 (m as in text) तथा वा; D5 तथा हि; G4

C. 3. 16984 B. 3. 302. 8 K. 3. 303. 8 अर्जुनं प्रति मां चैव विजेष्यामि रणेऽर्जुनम् ॥ ७
तवापि विदितं देव ममाप्यस्त्रबलं महत् ।
जामदग्न्यादुपात्तं यत्तथा द्रोणान्महात्मनः ॥ ८
इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम ।
भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः ॥ ९

सूर्य उवाच ।

यदि तात ददास्येते वज्रिणे कुण्डले शुभे ।
त्वमप्येनमथो ब्रूया विजयार्थं महाबल ॥ १०
नियमेन प्रदद्यास्त्वं कुण्डले वै शतक्रतोः ।
अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ॥ ११
अर्जुनेन विनाशं हि तव दानवसूदनः ।
प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति ॥ १२
स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः ।
अभ्यर्थयेथा देवेशममोघार्थं पुरंदरम् ॥ १३
अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम् ।
दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमम् ॥ १४
इत्येवं नियमेन त्वं दद्याः शक्राय कुण्डले ।
तया त्वं कर्ण संग्रामे हनिष्यसि रणे रिपून् ॥ १५
नाहत्वा हि महाबाहो शत्रूनेति करं पुनः ।
सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः ॥ १६

वैशंपायन उवाच ।

एवमुक्त्वा सहस्रांशुः सहसान्तरधीयत ।
ततः सूर्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत् ॥ १७
यथादृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि ।

---

तथापि (for तवापि). — $^{b}$) $K_{1.2}$ °त्यस्त्र° (for °प्यस्त्र°). — $^{c}$) $K_{4}$ $T_{2}$ च (for यत्).

**9** $D_{3}$ om. (hapl.) 9. — $^{b}$) $D_{1}$ वचो (for व्रतं). — $^{c}$) $K_{3}$ Dc $Dn_{2}$ $D_{1.2}$ भिक्षिते; $K_{4}$ $T_{2}$ $G_{2.4}$ भिक्षवे; $B_{3}$ भिक्षंते; $M_{2}$ भिक्षिणे. — $^{d}$) $B_{4}$ पथि; S (except $G_{3}$) अहं (for अपि).

**10** $T_{1}$ $G_{1}$ M om. the ref. — $^{a}$) $T_{2}$ दाता; M तावद् (for तात). T $G_{1}$ M [ए]व (for [ए]ते). $K_{1.2.4}$ $D_{1.3}$ दद्यास्त्वं यदि वा($D_{3}$ चा)पीमे; $K_{3}$ दद्यास्त्वं याचितेनेव; Dc $D_{5}$ दद्यास्त्वं यदि तातेमे; $D_{2}$ इच्छा त्वं यदि तातेमे; $G_{2.4}$ यदि तद्दास्यसे कर्ण. — $^{b}$) $T_{1}$ $G_{1}$ transp. वज्रिणे and कुण्डले. — $^{c}$) $B_{4}$ [ए]वम्; $D_{5}$ [ए]तम् (for [ए]नम्). $D_{1}$ अथ (for अथो). — $^{d}$) $Dn_{1}$ $T_{2}$ $G_{2}$ M विजयार्थे; $G_{4}$ °र्थो. $K_{1.2.4}$ B D (except $D_{1.5.6}$) $G_{3}$ महाबलं.

**11** $^{a}$) $M_{2}$ समयेन (for नियमेन). $B_{2.3}$ Dn $D_{2}$ $G_{3}$ प्रदद्यां ते; $D_{3}$ प्रदद्यांस्ते; $D_{4.6}$ प्रदेये ये. — After $11^{a}$, $D_{1}$ reads $13^{d}$, 14, $12^{cd}$, $13^{abc}$, 11, $12^{ab}$, $15^{acd}$. — $^{b}$) $K_{4}$ कुंडलेन (m as in text); $B_{3}$ दंडने वै. $K_{2}$ B Dn $D_{1.3.6}$ $G_{2.3}$ शतक्रतो ($B_{3}$ °प्रभो).

**12** For sequence of $D_{1}$, cf. v.l. 11. — $^{b}$) $K_{4}$ $D_{5}$ $G_{4}$ M °सूदन. $D_{1}$ इत्येवं नियमेन च (cf. $15^{a}$). — $^{d}$) $K_{1}$ विजिहीर्षति; $K_{2}$ ते हरिष्यति.

**13** For sequence of $D_{1}$, cf. v.l. 11. — $^{a}$) $T_{2}$ स त्वमेनं समाराध्य. — $^{c}$) $D_{5}$ अभ्यर्थयस्व. — $^{d}$) $K_{3}$ $T_{1}$ $G_{1}$ अमोघास्त्रं; $B_{4}$ आत्मार्थं च; M °घार्थे. $D_{1}$ अमोघां शक्तिमुत्तमां.

**14** For sequence of $D_{1}$, cf. v.l. 11. — $^{a}$) $K_{4}$ मां (m मे as in text). — $^{b}$) $K_{1.2}$ ममामित्रनिबर्हि($K_{2}$ °र्हे)णीं; $K_{4}$ अमित्रवरब°; B Dn $D_{3.4.6}$ °निबर्हणीं; Dc $D_{2.5}$ सर्वशत्रुनिबर्हणीं; $T_{1}$ $G_{1.4}$ °निबर्हणां. — $^{d}$) T $G_{1}$ मम; $G_{2.4}$ तव (for वर्म). $K_{1}$ चोत्तरं; T $G_{1.2.4}$ चोत्तमे.

**15** For sequence of $D_{1}$, cf. v.l. 11. — $^{a}$) $B_{2}$ $D_{1.4.6}$ $G_{3}$ [ए]व (for [ए]वं). $K_{1}$ निश्चयेन (for नियमेन). $D_{1}$ च (for त्वं). — $D_{1}$ om. $15^{b}$. — $^{c}$) $Dn_{1}$ T $G_{2.4}$ तथा (for तया). — $^{d}$) Dc $D_{2.5}$ बहून् (for रणे). T $G_{1.2.4}$ रिपून्वै नि($G_{2}$ स)हनिष्यसि.

**16** $^{a}$) $D_{1}$ [इ]यं; $M_{2}$ [अ]पि (for हि). — $^{b}$) $K_{1.2}$ शत्रुं नैति (for शत्रूनेति). $B_{3}$ प्रति (for पुनः).

**17** $^{a}$) $K_{3.4}$ $B_{1.3.4}$ Dc $D_{1-3}$ $M_{1}$ तु तिग्मांशुः (for सह°). — After $17^{ab}$, S (except $G_{3}$ $M_{2}$) ins.:

1335* कर्णस्तु बुबुधे राजन्स्वप्नान्ते प्रत्यथश्चिव ।
प्रतिबुद्धस्तु राधेयः स्वप्नं संचिन्त्य भारत ।
चकार निश्चयं राजञ्शक्त्यर्थं वदतां वर ।
यदि मामिन्द्र आयाति कुण्डलार्थं परंतपः ।
शक्त्या तस्मै प्रदास्यामि कुण्डले वर्म चैव ह ।
स कृत्वा प्रातरुत्थाय कार्याणि भरतर्षभ ।
ब्राह्मणान्वाचयित्वा च यथाकार्यमुपाक्रमत् ।
विधिना राजशार्दूल मुहूर्तमजपत्ततः ।

— $^{c}$) $D_{1}$ स्वप्नांते (for जप्यान्ते). — $^{d}$) $T_{1}$ $G_{1}$ निवेदयत्.

**18** $^{a}$) $K_{4}$ $B_{4}$ $D_{3}$ तथातत्वं (for यथा°). — $^{c}$) $K_{2.3}$ $D_{3}$ आ($K_{2}$ अ)नुपूर्वेण. — $^{d}$) $K_{1}$ S (except $G_{3}$) वृषा तथा (M तदा); $B_{3}$ वृषस्तथा.

तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा ॥ १८
तच्छ्रुत्वा भगवान्देवो भानुः स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्यः स्मयन्निव ॥ १९
ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा ।
शक्तिमेवाभिकाङ्क्षन्वै वासवं प्रत्यपालयत् ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

# २८७

जनमेजय उवाच ।
किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना ।
कीदृशे कुण्डले ते च कवचं चैव कीदृशम् ॥ १
कुतश्च कवचं तस्य कुण्डले चैव सत्तम ।
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ २
वैशंपायन उवाच ।
अयं राजन्ब्रवीम्येतद्यत्तद्गुह्यं विभावसोः ।
यादृशे कुण्डले चैव कवचं चैव यादृशम् ॥ ३
कुन्तिभोजं पुरा राजन्ब्राह्मणः समुपस्थितः ।
तिग्मतेजा महाप्रांशुः श्मश्रुदण्डजटाधरः ॥ ४
दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव ।
मधुपिङ्गो मधुरवाक्तपःस्वाध्यायभूषणः ॥ ५
स राजानं कुन्तिभोजमब्रवीत्सुमहातपाः ।
भिक्षामिच्छाम्यहं भोक्तुं तव गेहे विमत्सर ॥ ६
न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः ।
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ७ C. 3. 17004 B 3. 303. 7 K. 3. 304. 7

**19** $^{c}$) $K_{1.2}$ S (except $G_3$) तत् (for तं). Dc $D_2$ $G_{2.4}$ M [ए]वं (for [ए]व). — $^{d}$) $K_{1.2}$ सूर्यः कर्णं (by transp.); $D_5$ कर्णः सूर्यं.

**20** $^{a}$) $K_1$ तथा (for ततस्). T $G_{1.2.4}$ सत्यम् (for तत्त्वम्).

Colophon. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{3.4}$ B Dc $Dn_1$. $n_3$ $D_{1-6}$ $G_3$ M कुंडला( $K_3$ $D_5$ °लाभि)हरण. — *Adhy. no.* (figures, words or both): $Dn_1$ (*sup. lin.*). $n_2$. 300; $Dn_3$ 301; $D_1$ 304; $T_1$ 286 (as in text!); $T_2$ $G_4$ $M_{1.2}$ (*inf. lin.*) 290; $G_1$ 287; $G_2$ 289; $M_2$ (orig.) 292. — *Śloka no.:* Dn 21.

## 287

**1** $^{a}$) S (except $G_3$) नु (for तद्). — $^{b}$) $K_3$ [अ]तीक्ष्ण°; $K_4$ $D_1$ [ए]वोष्ण°; $B_{1.2}$ $D_3$ [इ]वोष्ण° (for [इ]होष्ण°). — For $1^{cd}$, cf. $3^{cd}$. — $^{c}$) $K_4$ Dc $D_{1.2}$ T $G_{1.2.4}$ चैव (for ते च).

**2** $^{c}$) K Dc $D_{1-3.5}$ विज्ञातुं (for [अ]हं श्रोतुं). — After 2, M ins.:

1336* यत्तद्विवस्वतो गुह्यं यादृशे कुण्डले च ते ।
उभयं तद्यथा ब्रह्मंस्तन्ममाचक्ष्व सत्तम ।

**3** $^{a}$) $B_3$ T $G_{1.2.4}$ अहं (for अयं). — $^{b}$). K Dc $D_{1-3.5}$ गुह्यं तेहं; B Dn $D_{4.6}$ $G_3$ तस्य गुह्यं (for यत्तद्गुह्यं). — For $3^{cd}$, cf. $1^{cd}$. — $^{c}$) B Dn $D_{4.6}$ $G_3$ ते च (for चैव). — $^{d}$) $B_4$ चैव तादृशं; $M_2$ च तथाविधं.

☞ Cf. versions of this story in Ādi 104.

**4** $^{a}$) $K_{1.2.4}$ $D_{1.3}$ महाराजं ($K_4$ °ज); $Dn_1$. $n_2$ $D_4$ $G_3$ तदा राजन्; $M_2$ यथा रा°. — $^{b}$) B Dn $D_{4.6}$ $G_3$ पर्युपस्थितः; $T_2$ शंसितव्रतः. — $^{c}$) $K_{1-3}$ T $G_{1.2.4}$ महान्प्रांशुः. — $^{d}$) K Dc $D_{1-3.5}$ चीर°.

**5** $^{c}$) M (hypermetric) °पिंगलो (for °पिङ्गो). — $^{d}$) Dc $D_2$ शुचि° (for तपः°).

**6** $^{b}$) Dc $D_2$ स; $D_4$ च (for सु-). — Before $6^{cd}$, $B_{3.4}$ ins. ब्राह्मण उ°. — $^{c}$) B Dn $D_{4.6}$ $G_3$ वै (for [अ]हं). $K_{1.2}$ स्थातुं (for भोक्तुं). — $^{d}$) $D_5$ भवद्- (for तव). K Dc $D_{1-3.5}$ विमत्सरः; T $G_{1.2.4}$ [ऽ]नुवत्सरं; $M_1$ च वत्सरं; $M_2$ विमत्सरं.

**7** $^{b}$) $K_3$ $D_3$ त्वया वै; $K_4$ तवापि (for त्वया वा). $B_2$ $T_2$ $G_{1.2}$ वा° (for चा°). $K_{1.2}$ $D_{1.5}$ त्वया चैव ($K_2$ वै च) तवानुगैः. — $^{d}$) $K_4$ रोचते यदि तेनघ.

**8** $^{a}$) $D_3$ तु (for च). — $^{b}$) $D_5$ तिष्ठेयं च यथेच्छया.

C. 3. 17005 B. 3. 303. 8 K. 3. 304. 8 यथाकामं च गच्छेयमागच्छेयं तथैव च ।
शय्यासने च मे राजन्नापराध्येत कश्चन ॥ ८
तमब्रवीत्कुन्तिभोजः प्रीतियुक्तमिदं वचः ।
एवमस्तु परं चेति पुनश्चैनमथाब्रवीत् ॥ ९
मम कन्या महाब्रह्मन्पृथा नाम यशस्विनी ।
शीलवृत्तान्विता साध्वी नियता न च मानिनी ॥ १०
उपस्थास्यति सा त्वां वै पूजयानवमन्य च ।
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ॥ ११
एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि ।
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम् ॥ १२
अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति ।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् ॥ १३
त्वयि वत्से पराश्वस्य ब्राह्मणस्याभिराधनम् ।
तन्मे वाक्यं न मिथ्या त्वं कर्तुमर्हसि कर्हिचित् ॥ १४
अयं तपस्वी भगवान्स्वाध्यायनियतो द्विजः ।
यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात् ॥ १५
ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः ।
ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते ॥ १६
अमानयन्हि मानार्हान्वातापिश्च महासुरः ।
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ॥ १७
सोऽयं वत्से महाभार आहितस्त्वयि सांप्रतम् ।
त्वं सदा नियता कुर्या ब्राह्मणस्याभिराधनम् ॥ १८
जानामि प्रणिधानं ते बाल्यात्प्रभृति नन्दिनि ।
ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह ॥ १९
तथा प्रेष्येषु सर्वेषु मित्रसंबन्धिमातृषु ।
मयि चैव यथावत्त्वं सर्वमादृत्य वर्तसे ॥ २०

---

— $^{d}$) $K_{1.2}$ नापराध्यति; T $G_{1.2.4}$ नावरुध्येत.

**9** $^{b}$) $T_2$ प्रीतियुक्तः प्रियं वचः. — $^{c}$) T वरं (for परं). — $^{d}$) $K_4$ $B_4$ $Dc_2$ चैवम् (for चैनम्).

**10** $^{a}$) B D (except $D_{1.3.5}$) $G_3$ °प्राज्ञ (for ब्रह्मन्). — In $D_3$, the portion of the text from $10^{c}$ up to 3. 299. $26^{d}$ is lost on a missing fol. — $^{d}$) K Dc $D_{1.2.5}$ नाति($K_{1.2}$ $D_5$ °भि)मानिनी; B Dn $D_{4.6}$ $G_3$ चैव भाविनी; $G_4$ न मनस्विनी (for न च मा°).

**11** $D_3$ missing (cf. v.l. 10). — $^{a}$) $K_{1.2}$ $D_2$ त्वा (for त्वां). — $^{b}$) $D_{4.6}$ नाव° (for [अ]नव°). $K_{3.4}$ Dc $D_{1.2.5}$ ह; $B_3$ वै (for च). $K_1$ पूजया नावमन्यत; $K_2$ °यामास मन्यत; $T_1$ °या मनसापि भो; $T_2$ $G_{2.4}$ °याना महाविभो; $G_1$ °या न मया विभो; M °यानवमत्य ह. — $^{c}$) $T_1$ $G_1$ तु (for च). — $^{d}$) Dc $D_2$ प्रीतिं (for तुष्टिं). $K_4$ $B_{1.2}$ Dc $D_2$ °यास्यति.

**12** $D_3$ missing (cf. v.l. 10). — $^{a}$) $K_{1-3}$ $D_5$ च (for तु). — $^{b}$) S (except $G_3$ $M_1$) प्रति° (for अभि°).

**13** $D_3$ missing (cf. v.l. 10). — $^{a}$) $T_1$ $G_1$ वै सुमहा° (for वत्से महा°). — $^{d}$) $K_{1.2}$ $D_{4.6}$ $T_2$ [ए]व; $D_1$ [अ]ति- (for [ए]वं).

**14** $D_3$ missing (cf. v.l. 10). — $^{a}$) $K_{1.2}$ तव (for त्वयि). $T_2$ $G_{2.4}$ °यत्तं; $M_2$ °श्वास्य (for °श्वस्य). — $^{c}$) B Dn $D_{4.6}$ $G_3$ अमिथ्या (for न मिथ्या). — $^{d}$) $K_{1.2}$ वै क्वचित्; $B_2$ $G_2$ कस्यचित् (for कर्हि°).

**15** $D_3$ missing (cf. v.l. 10). — $^{b}$) $B_{3.4}$ S (except $G_3$) °निरतः (for °नियतः). $T_1$ $G_1$ शुचिः (for द्विजः). K Dc $D_{1.2.5}$ सदा ($K_{1.2}$ मुनिः) सुनियतेंद्रियः ($K_3$ $D_2$ °तो द्विजः). — $^{d}$) $K_{1.2}$ M अमत्सरं (for °त्सरात्).

**16** $D_3$ missing (cf. v.l. 10). — $^{a}$) $K_4$ B Dn $D_{4.6}$ $G_3$ M ब्राह्मणो हि. $K_4$ $B_4$ महातेजो; $B_3$ परं तेजा. — $^{b}$) B Dn $D_{4.6}$ $G_3$ M ब्राह्मणो. $K_{3.4}$ $B_4$ Dc $D_{2.5}$ परमं (for हि परं). — $^{c}$) $K_{1.2}$ नमस्कारात्.

**17** $D_3$ missing (cf. v.l. 10). — $^{a}$) $K_{1.2}$ हि मां($K_1$ मं)डव्यो; $K_{3.4}$ $D_1$ हि दांडि($K_3$ °ड)क्यो; $D_5$ विदर्भायां; T $G_{1.2.4}$ M तान् दांड($T_1$ वार्त-; $G_1$ बास्त-; $G_{2.4}$ दंडि)क्यो (for हि मानार्हान्). — $^{b}$) $K_{1.2}$ °बलः (for °सुरः). — $^{d}$) $K_{1.2}$ ज्वलज्जंघा° (for तालजङ्घ°).

**18** $D_3$ missing (cf. v.l. 10). — $^{a}$) $K_{3.4}$ M मया (for महा-). $B_1$ $T_2$ $G_2$ -भाग; $B_2$ -भारम्; $G_4$ -भागे (for -भार). — $^{b}$) $K_{2.3}$ आहृत° (for आहित°). — $^{c}$) Dc $D_2$ नियतः; T $G_{1.2.4}$ M निभृ($T_2$ °र)ता (for नियता). Dc $G_1$ कुर्याद् (for कुर्या).

**19** $D_3$ missing (cf. v.l 10). — $^{b}$) T $G_{1.2.4}$ भामिनि (for नन्दिनि). — $^{c}$) S (except $G_3$) [अ]पि (for [इ]ह). — $^{d}$) $T_1$ $G_{1.2}$ हि (for ह).

**20** $D_3$ missing (cf. v.l. 10). — $^{a}$) $D_5$ तव (for तथा). — $^{b}$) $T_2$ $G_{2.4}$ वीर- (for मित्र-). $D_5$ -भ्रातृषु; $T_2$ $G_{2.4}$ -बंधुषु (for -मातृषु). — $^{c}$) $K_{1.4}$ $B_4$ $Dc_2$ $D_{1.2}$ M °तत्त्वं; $K_3$ °वत्तं; $B_3$ °वृत्तं (for °वत्त्वं). — $^{d}$) $K_1$ B Dn

न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते ।
सम्यग्वृत्त्यानवद्याङ्गि तव भृत्यजनेष्वपि ॥ २१
संदेष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति ।
पृथे बालेति कृत्वा वै सुता चासि ममेति च ॥ २२
वृष्णीनां त्वं कुले जाता शूरस्य दयिता सुता ।
दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम् ॥ २३
वसुदेवस्य भगिनी सुतानां प्रवरा मम ।
अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ॥ २४
तादृशे हि कुले जाता कुले चैव विवर्धिता ।
सुखात्सुखमनुप्राप्ता ह्रदाद्ध्रदमिवागता ॥ २५
दौष्कुलेया विशेषेण कथंचित्प्रग्रहं गताः ।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे ॥ २६
पृथे राजकुले जन्म रूपं चाद्भुतदर्शनम् ।
तेन तेनासि संपन्ना समुपेता च भामिनी ॥ २७
सा त्वं दर्पं परित्यज्य दम्भं मानं च भामिनि ।
आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ २८
एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम् ।
कोपिते तु द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् ॥ २९ C. 3. 17026 B. 3. 303. 29 K. 3. 304 29

इति श्रीमहाभारते आरण्यकपर्वणि सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

---

D1. 6 T G आवृत्य (for आदृत्य).

**21** D8 missing (cf. v.l. 10). — a) T G1 दुष्टो (for [अ]तुष्टो). Dc जलो; D5 नरो (for जनो). — b) Dc D2. 4 वा (for the first च). Dc D2 °पुरेषु च (for °पुरे च ते). — c) Dc D2 T1 G1. 2 °ग्वृत्ता; D5 °ग्दृष्ट्वा; T2 °ग्धृत्या (for °ग्वृत्त्या). — d) K4 न च (for तव).

**22** D8 missing (cf. v.l. 10). — a) B2 Dc D2 T1 संदेष्टव्या; G1 °ष्टव्यां. D5 च (for तु). B4 संदिष्टव्यां तु मंतव्यां; T2 सजेष्वप्यानुमन्ये त्वां. — b) B4 Dc द्विजाति- (for °तिं). K3 भोजनं (for कोपनं). — c) K3 पृथु- (for पृथे). — d) K1 सुते चासि; K4 श्रुता चासि; T2 G2. 4 M सुते (M1 °तै-; M2 ता) वासि. B4 ममापि च; T G1. 2. 4 M ममैव हि (T2 G1 ह; M च, (for ममेति च).

**23** D8 missing (cf. v.l. 10). — a) K B3. 4 Dc D2. 5 T2 G2. 4 M त्वं (for च). D5 कुलपतेः (for कुले जाता). — T2 G2. 4 om. (hapl.) 23b–25a. — b) K4 °स्य दुहिता शुभा. — d) G1 [अ]पि सा (for पुरा).

**24** D8 missing (cf. v.l. 10). T2 G2. 4 om. 24 (cf. v.l. 23). D1 transp. 24ab and 24cd. — b) T1 G1 सुता त्वं (for सुतानां). — c) = 1. 104. 2c. Dc2 D2 T1 G1 M अग्रम्; D4 अग्राम्; D5 अभ्याम् (for अग्र्यम्). — d) K1. 2 तेनास्य (for °सि).

**25** D8 missing (cf. v.l. 10). T2 G2. 4 om. 25a (cf. v.l. 23). — a) K4 यादृशे. D1. 5 च; T1 M [ऽ]सि (for हि). — b) K3. 4 D1. 5 चेह; T G1. 2. 4 मम (for चैव). Dc D2 महति (for चैव वि-). — d) T G1 M [आ]पगा (for [आ]गता).

**26** D8 missing (cf. v.l. 10). — b) K Dc D1. 2. 5 कदा° (for कथं°). D1 परिगृह्य तां (for प्रग्रहं गताः). — c) K1 हि; D5 प्र- (for वि-). — d) K1–3 D1. 5 तु वै (for शुभे).

**27** D8 missing (cf. v.l. 10). — b) B Dn D4–6 रूपं चापि तवाद्भुतं. — c) K1. 2 T G1. 2 [अ]पि; K4 [अ]भि- (for [अ]सि). — d) Dc D2 ससमेता (sic) (for समुपेता). Dc D1. 2 [अ]सि; T G1 हि; G2. 4 [अ]पि (for च). B D (except D1; D8 missing) भाविनी; T G1. 2. 4 [अ]निंदिते (T1 G1 °ता); M नंदिनी.

**28** D8 missing (cf. v.l. 10). — K2 om. (hapl.) 28ab. — a) S (except G3) मानं (for दर्पं). — b) T2 G1. 2 M डंभं; G4 संगं (for दम्भं). D1 मोहं; S (except G3) दर्पं (for मानं). B D (except D1) भाविनि (Dc Dn2 D2 °नी). — c) K1. 2 देवं (for विप्रं). — d) K1. 2. 4 T1 G1 शुभे (for पृथे). D5 corrupt.

**29** D8 missing (cf. v.l. 10). — a) K1. 2 कल्याणं; K3 Dc2 D2 G2 °णी (for °णि). — b) K1. 2 पृथे त्वम् (for कल्याणम्). D1 मनसि स्थितं (for अनघे ध्रुवम्). K4 शुभे (for ध्रुवम्). — c) B Dn D4. 6 G3 च (for तु). G1 M2 द्विजश्रेष्ठः. — d) T G1. 2. 4 सर्वं; M1 क्षिप्रं (for कृत्स्नं).

Colophon. D8 missing. — *Major parvan:* K1. 2 T1 G2. 4 आरण्य. — *Sub-parvan:* K B Dc Dn1. n2 D1. 2. 4–6 G3 कुंडला (D1. 5 °लाभि) हरण. — *Adhy. name:* B4 कुंतिभोजवाक्यं; M पृथानियोगः. — *Adhy. no.* (figures, words or both): Dn1 (marg.), n2 301; Dn3 302; D1 305; T1 287 (as in text!); T2 G4 M1. 2 (*inf. lin.*) 291; G1 288; G2 290; M2 (orig.) 293. — *Śloka no.:* Dn D1 29.

# २८८

C. 3. 17027
B 3. 304 1
K. 3. 305. 1

कुन्त्युवाच ।

ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया ।
यथाप्रतिज्ञं राजेन्द्र न च मिथ्या ब्रवीम्यहम् ॥ १
एष चैव स्वभावो मे पूजयेयं द्विजानिति ।
तव चैव प्रियं कार्यं श्रेयश्चैतत्परं मम ॥ २
यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि ।
यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ॥ ३
लाभो ममैष राजेन्द्र यद्वै पूजयती द्विजान् ।
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ॥ ४
विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः ।
वसन्प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ५
यत्प्रियं च द्विजस्यास्य हितं चैव तवानघ ।
यतिष्यामि तथा राजन्व्येतु ते मानसो ज्वरः ॥ ६
ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते ।
तारणाय समर्थाः स्युर्विपरीते वधाय च ॥ ७
साहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् ।
न मत्कृते व्यथां राजन्प्राप्स्यसि द्विजसत्तमात् ॥ ८
अपराधे हि राजेन्द्र राज्ञामश्रेयसे द्विजाः ।
भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा ॥ ९
नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम् ।
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ १०

राजोवाच ।

एवमेतत्त्वया भद्रे कर्तव्यमविशङ्कया ।
मद्धितार्थं कुलार्थं च तथात्मार्थं च नन्दिनि ॥ ११

---

## 288

☞ In $D_3$ this adhy. is lost on a missing fol.; the MS. is mostly ignored here.

**1** $^{a}$) Dc $D_2$ T $G_{1.2.4}$ यंत्रितं (for °ता). — $^{c}$) $K_{1.4}$ °प्रतिज्ञां; $K_3$ $T_1$ $G_1$ °प्रतिज्ञा; $B_4$ $Dc_2$ °प्रतिज्ञ. — $^{d}$) S (except $G_3$) ते (for च). K Dc $D_{1.2.5}$ न मिथ्या प्रब्रवीम्यहं.

**2** $^{c}$) $K_{1.2}$ चैतत् (for चैव). $B_2$ कीर्तिं (for कार्यं). — $^{d}$) B Dn $D_{4.6}$ $G_3$ परमं (for [ए]तत्परं). T $G_{1.2.4}$ प्रियं (for परं).

**3** $^{a}$) $K_4$ यदा; T $G_{1.2.4}$ अद्य (for यदि). $K_1$ राजेंद्र (for सायाह्ने). $B_2$ यद्यद्रक्ष्यति सायाह्ने. — $^{c}$) $K_1$ °रात्रौ (for °रात्रे). — $^{d}$) $D_1$ हि (for मे).

**4** $^{a}$) $G_{2.4}$ [ऽ]यं मम (for ममैष). — $K_3$ $D_1$ om. (hapl.) $4^{b}$–$5^{a}$. — $^{b}$) $B_4$ संपूजयेद्; $T_1$ $M_1$ पूजयति; $T_2$ °यसि; $G_{2.4}$ °यितुं (for °यती). Dc $D_{2.5}$ द्विजं (for द्विजान्). — $^{d}$) K ($K_3$ om.) पूज($K_4$ तोष)यिष्ये द्विजोत्तमं.

**5** $K_3$ $D_1$ om. $5^{a}$ (cf. v.l. 4). — $^{a}$) Some N MSS. विश्रब्धो. — $^{b}$) MSS. द्विजोतम, °माः, °मे also. — $^{c}$) $B_3$ वसन्प्राप्यति; $T_1$ $G_{2.4}$ स संप्राप्स्य($G_2$ °प्य)ति; $T_2$ $G_1$ न संप्राप्य($G_1$ °प्स्य)ति. $K_4$ गेहे ते (by transp.); $B_3$ $T_2$ मे गेहे.

**6** $^{b}$) $K_3$ $D_{4.5}$ तथा° (for तवा°). — $^{c}$) S (except $G_3$) यतिष्ये तदहं कर्तुं. — $6^{d}$=1. 48. $17^{d}$: 4. 3. $7^{d}$: etc.

**8** $^{a}$) $T_1$ $G_{2.4}$ विजानाना; $T_2$ $M_1$ विजानामि; $G_1$ द्विजन्मानं (for विजानन्ती). — $T_1$ om. (hapl.) $8^{c}$–$10^{b}$. — $^{c}$) $G_{1.2.4}$ M मत्कृते न (by transp.). $M_1$ कांचित् (for राजन्). — $^{d}$) $K_{3.4}$ $B_4$ Dc $D_{2.5}$ प्राप्स्यसे.

**9** $T_1$ om. 9 (cf. v.l. 8). — $^{a}$) S (except $G_3$; $T_1$ om.) अपराधो. $B_{1.2}$ Dn $D_{4.6}$ $G_3$ [ऽ]पि (for हि). S (except $G_3$; $T_1$ om.) परं (for द्विजाः). — $^{c}$) $T_2$ $G_{1.2.4}$ भवति. $G_{1.2.4}$ M च्यवनाद् (for °नो).

**10** $T_1$ om. $10^{ab}$ (cf. v.l. 8). — $^{b}$) $K_1$ समुत्थास्ये (for उपस्थास्ये). — After 10, N ($D_3$ missing) $G_3$ ins.:

1337* एवं ब्रुवन्तीं बहुशः परिष्वज्य समर्थ्य च ।
इति चेति च कर्तव्यं राजा सर्वमथादिशत् ।

[(L. 1) $B_3$ प्रशंस्य (for समर्थ्य). — (L. 2) $B_3$ वक्तव्यं (for कर्तव्यं). $K_{1.2}$ चेदम् (for सर्वम्). $B_2$ यथातथ्यमिदं वचः (for the posterior half).]

**11** $B_4$ om. 11–12. — $^{a}$) $B_2$ श्रिया (for त्वया). — $^{cd}$) $D_1$ transp. मद्धितार्थं and कुलार्थं. B ($B_4$ om.) $D_6$ अ($D_5$ त्व)निंदते; Dc $D_2$ च भाविनि (for च नन्दिनि). Dn $D_{4.6}$ $G_3$ मद्धितार्थं तथात्मार्थं कुलार्थं चाप्यनिंदिते; T

वैशंपायन उवाच ।
एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः ।
पृथां परिददौ तस्मै द्विजाय सुतवत्सलः ॥ १२
इयं ब्रह्मन्मम सुता बाला सुखविवर्धिता ।
अपराध्येत यत्किंचिन्न तत्कार्यं हृदि त्वया ॥ १३
द्विजातयो महाभागा वृद्धबालतपस्विषु ।
भवन्त्यक्रोधनाः प्रायो विरुद्धेष्वपि नित्यदा ॥ १४
सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः ।
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ॥ १५
तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः ।
हंसचन्द्रांशुसंकाशं गृहमस्य न्यवेदयत् ॥ १६
तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत् ।
आहारादि च सर्वं तत्तथैव प्रत्यवेदयत् ॥ १७
निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च ।
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने ॥ १८
तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती ।
विधिवत्परिचाराहं देववत्पर्यतोषयत् ॥ १९ C. 3. 17046 B. 3. 304. 20 K. 3. 305. 20

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

G1. 2. 4 M मद्धितार्थे कुलार्थे च त्वमा( M तथा )त्मार्थे च नंदिनि (T2 G4 त्वदर्थे यदुनंदिनि ).

**12** B Dn D1. 4. 6 S (except M1) om. the ref. B4 om. 12 (cf. v.l. 11). — b) A few MSS. कुंतीभोजो. K D1. 5 °मनाः (for °यशाः). — d) B D (except D1. 5) T1 G3 द्विज° (for सुत°).

**13** a) K1 मम सुता ब्रह्मन् (by transp.). — c) T1 G1 °राध्यति (for °राध्येत). — d) K3 Dc D1. 2. 5 तत्र (for न तत्). K1. 2 हृदि कार्यं न तत्त्वया; B Dn D4. 6 G3 न कार्यं हृदि तत्त्वया.

**14** b) D1 बालवृद्ध- (by transp.); G2 वृद्धा बालास्. Dc D2 ° तपस्विनः. — d) B1–3 Dn D4. 6 G3 ह्यप( Dn2. n3 D4 अप )राद्धेषु (for विरुद्धेष्वपि). T2 च (for [अ]पि).

**15** D4 om. 15. — b) S (except G3) क्षमा कार्या. K D1. 5 विजानता; S (except G3) द्विजोत्तम. — K1. 2. 4 om. $15^{cd}$. — d) K3 Dc D1. 2. 5 विजानता; S (except G3) द्विजातिना (for द्विजो°).

**16** a) K Dc D1. 2 [उ]क्तः (K3 °क्तं) (for [उ]क्ते). — b) K1–3 Dc D1. 2. 4 T1 G1. 2 M2 प्रीति° (for प्रीत°). — c) K Dc D1. 2. 5 हंसचंद्रप्रतीकाशं. — d) K1. 2 B Dn D4. 6 G3 अस्मै; T1 M2 अन्यन् (for अस्य). D5 गृहे तस्मै न्यवेशयत्.

**17** K1. 2 om. (hapl.) 17. — a) Dc D2 T1 G1 तस्य; G4 ततो (for तत्र). K3 Dc D1. 2 G4 °शरणं. T2 कामम् (for क्लृप्तम्). — c) B4 तु (for च). K3. 4 D1. 5 तत्सर्वं (by transp.). Dc D2 तु; D4 तं; T1 वै; G1 च (for तत्).

**18** a) B3 T G1. 2. 4 च; D1 M सा (for तु). — b) K1. 2 Dn3 D4 तंद्री-; B3 तंद्रां; D5 तद्धि; T2 कुंती (for तन्द्रीं). — c) M2 आतस्थौ. S (except G3) परया प्रीत्या (for परमं यत्नं). — d) S (except G3) °राधनं.

**19** a) S (except G3) तं तु (for तत्र). K Dc D1. 2. 5 ब्राह्मणं राजन्; B4 °णं ज्ञात्वा; S (except G3) °णश्रेष्ठं. — b) K1 ब्राह्मणे संशितव्रते; S (except G3) उपचारेण कन्यका. — K1 ins. after $19^{ab}$: K2, after 3. 289. $1^{ab}$:

1338* परिचर्यापरा राजन् कुं[? read नक्तं]दिनमतन्द्रिता ।, followed in K1 by 3. 289. $2^{ab}$, which is omitted there. — d) G2 M2 परि° (for पर्य°).

Colophon om. in K1. 2. D3 missing. — *Major parvan:* Dn2 G2. 4 आरण्य. — *Sub-parvan:* K3. 4 B Dc Dn1. n3 D1. 2. 4–6 G3 M2 कुंडला( D1. 5 °लाभि )हरण. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 302; Dn3 303; D1 306; T1 288 (as is text!); T2 G4 M1. 2 (*inf. lin.*) 292 (M2 orig. 294); G1 289; G2 291. — *Śloka no.:* Dn1. n3 20; Dn2 D1 19.

## 289

☞ In D3 this adhy. is lost on a missing fol.; the MS. is mostly ignored here.

**1** a) T G1. 2 °भागं; G4 °भागा (for °राज). — b) K4 Dn1. n3 शंसित° (for संशित°). — K1. 2 read $1^{cd}$ after 9. — cd) K4 युक्तेन (for शुक्लेन). K3. 4 शंसितव्रतं (K3 °ता); D4. 6 G3 संशितव्रतं. — After $1^{ab}$, K2 ins.

# २८९

C. 3 17047
B. 3 305 1
K. 3 306. 1

वैशंपायन उवाच ।

सा तु कन्या महाराज ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ १
प्रातरायास्य इत्युक्त्वा कदाचिद्द्विजसत्तमः ।
तत आयाति राजेन्द्र सायं रात्रावथो पुनः ॥ २
तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः ।
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ॥ ३
अन्नादिसमुदाचारः शय्यासनकृतस्तथा ।
दिवसे दिवसे तस्य वर्धते न तु हीयते ॥ ४
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तदा ॥ ५
व्यस्ते काले पुनश्चैति न चैति बहुशो द्विजः ।
दुर्लभ्यमपि चैवान्नं दीयतामिति सोऽब्रवीत् ॥ ६
कृतमेव च तत्सर्वं पृथा तस्मै न्यवेदयत् ।
शिष्यवत्पुत्रवच्चैव स्वसृवच्च सुसंयता ॥ ७
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा ।
प्रीतिमुत्पादयामास कन्या यत्नैरनिन्दिता ॥ ८
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः ।
अवधानेन भूयोऽस्य परं यत्नमथाकरोत् ॥ ९
तां प्रभाते च सायें च पिता पप्रच्छ भारत ।
अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्यया ॥ १०
तं सा परममित्येव प्रत्युवाच यशस्विनी ।
ततः प्रीतिमवाप्याग्र्यां कुन्तिभोजो महामनाः ॥ ११
ततः संवत्सरे पूर्णे यदासौ जपतां वरः ।

---

1338*.

**2** K1 reads $2^{ab}$ after 1338*. — a) K B3. 4 Dc D1. 2. 5 प्रातरेष्य इति ह्यु( B3. 4 D2 इतीत्यु )क्त्वा; B1. 2 Dn D4. 6 G3 प्रातरेष्याम्यथेत्युक्त्वा. — b) A few MSS. द्विजसत्तम. — c) D4. 5 तत्र (for तत). — d) N (D3 missing) T2 G3 सायं; G2. 4 सोर्ध- (for सायें). B4 पुरः; S (except T2 G3) मुनिः (for पुनः).

**3** a) G2. 4 वेलासु सर्वासु (by transp.). — b) K1. 2 भक्ष्यभोज्यैः; D5 भोज्यचोष्य- (for भक्ष्यभोज्य-). K D1. 5 M -प्रति( K1 D1 -परि )ग्रहैः. — c) M1 वै (for सा). — d) K B1 Dc D2. 5 वर्धमानेन ( K2 °ने च ); B3 वर्तमानेन; D1 वर्धमानेव; T1 damaged; T2 वर्धमाने हि; G1 M1 वर्धमानैर्हि; G2. 4 M2 वर्तमानैर्हि. K D5 वर्चसा; B1 Dc D2 नित्यदा; B2 सा तदा (for सर्वदा).

**4** a) D5 अन्नानि (for अन्नादि-). K1. 2 -समुदाचार-. — b) K Dc D1. 2 °विधि°; D5 °विधे° (for °कृत°). D1. 5 तदा (for तथा). — c) K1 चैव (for तस्य). — d) K1. 2 D1 च; K4 [ए]व; S (except G3) प्र- (for तु). K3 Dc D2. 5 वर्धत्येव न हीयते.

**5** a) B1. 4 निर्भर्त्सैन (for निर्भर्त्सन-). K D1. 2. 5 -[अ]पदेशैः (for -[अ]पवादैः). Cnp अपदेशः ( = व्याजः). — b) D5 च (for [ए]व). — K1 om. $5^{cd}$.

**6** a) K1 प्रासे (*sup. lin.* as in text); T1 G1. 2. 4 M स्वस-; T2 सस-; G3 व्यस्त- (for व्यस्ते). K4 B1. 4 Dn1. n3 D4 T2 G3 चेति; D2 चैव (for चैति). — b) B1. 4 Dn चेति (for चैति). Dc D2 नृप (for द्विजः). — c) K1. 2. 4 D1 दुष्प्राप( D1 °प्य )म् (for दुर्लभ्यम्). M2 इति (for अपि). B Dc Dn D2. 4. 6 G3 सुदुर्लभमपि ( B2 °मिदं ) ह्यन्नं ( D4. 6 G3 ह्यर्थं ). — d) B3 अपि (for इति).

**7** a) T G1. 2. 4 इत्येव; M1 एवेति (for एव च). — b) B1 Dn3 G3 यथा; Dn1. n3 D4 तथा (for पृथा). — d) T1 G1 सुहृच्चैव (for स्वसृवच्च). K Dc D2. 5 चैव संमता ( K4 च वशं गता ); D1 चैव संमतं; T2 च स्मृतं यथा (for च सुसंयता).

**8** d) T1 G1 अतंद्रिता (for अनिन्दिता). K1. 2 कन्या यत्नेन निर्मितां; B Dc Dn D2. 4–6 G3 कन्यारत्नमनिंदिता.

**9** a) K1. 2 स; K3 स्व-; K4 Dc D1. 5 च (for तु). — c) B2. 3 (m as in text) D6 G3 अवधाने च; M आराधने च. B2. 3 Dn D4. 6 T G1. 3. 4 [ऽ]स्याः (for ऽस्य). — After 9, K1. 2 read $1^{cd}$ (v.l. K2 यत्नेन for शुद्धेन).

**10** a) G2. 4 प्रभातेपि (for °ते च). N (except K3; D3 missing) G3 सायं च; T2 G2 सायेपि; G4 सायाह्ने for सायें च).

**11** a) B4 [ए]वं (for [ए]व). Dc D2 तं च सा परमित्येवं. — b) K1. 2 Dn2. n3 तप° (for यश°). — d) K

नापश्यद्दुष्कृतं किंचित्पृथायाः सौहृदे रतः ॥ १२

ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत् ।
प्रीतोऽस्मि परमं भद्रे परिचारेण ते शुभे ॥ १३

वरान्वृणीष्व कल्याणि दुरापान्मानुषैरिह ।
यैस्त्वं सीमन्तिनीः सर्वा यशसाभिभविष्यसि ॥ १४

कुन्त्युवाच ।

कृतानि मम सर्वाणि यस्या मे वेदवित्तम ।
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ १५

ब्राह्मण उवाच ।

यदि नेच्छसि भद्रे त्वं वरं मत्तः शुचिस्मिते ।
इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम् ॥ १६

यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तेन तेन वशे भद्रे स्थातव्यं ते भविष्यति ॥ १७

अकामो वा सकामो वा न स नैष्यति ते वशम् ।
विबुधो मन्त्रसंशान्तो वाक्ये भृत्य इवानतः ॥ १८

वैशंपायन उवाच ।

न शशाक द्वितीयं सा प्रत्याख्यातुमनिन्दिता ।
तं वै द्विजातिप्रवरं तदा शापभयान्नृप ॥ १९

ततस्तामनवद्याङ्गीं ग्राहयामास वै द्विजः ।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम् ॥ २०

तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह ।
उषितोऽस्मि सुखं राजन्कन्यया परितोषितः ॥ २१

तव गेहे सुविहितः सदा सुप्रतिपूजितः ।
साधयिष्यामहे तावदित्युक्त्वान्तरधीयत ॥ २२

स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा ।
बभूव विस्मयाविष्टः पृथां च समपूजयत् ॥ २३

C 3 17069
B 3. 305. 23
K. 3. 306. 23

इति श्रीमहाभारते आरण्यकपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

---

$Dc$ $D_{1.2.5}$ °यशाः (for °मनाः).

**12** $^{b}$) $Dc$ $D_2$ यत्र; $D_5$ $T_1$ यदि; $T_2$ यथा (for यदा). $D_{1.4.6}$ जयतां (for जपतां). — $^{d}$) $K_4$ °देन सः; $Dc$ $D_2$ °देन च (for °दे रतः).

**13** $G_1$ om. 13–14. — $^{b}$) $B_1$ स च मां; $B_4$ कन्यां स; $D_5$ स च तां (for स एनां). — Before $13^{cd}$, $M_1$ ins. ब्राह्मणः. — $T_2$ om. (hapl.) $13^{d}$–$17^{c}$. — $^{d}$) $G_{2.4}$ मे (for ते).

**14** $T_2$ $G_1$ om. 14 (cf. v l. 13). — $^{a}$) $D_5$ वरं (for वरान्). — $^{b}$) $D_5$ दुरापं मानुषैरपि. — $^{c}$) $K_{1.2}$ अन्या (for सर्वा). — $^{d}$) $G_4$ च (for [अ]भि-) $K_4$ $Dc$ $D_2$ $G_4$ °ष्यति (for °ष्यसि).

**15** $T_2$ om. 15 (cf. v.l. 14). — $^{b}$) $G_{2.4}$ यस्मान् (for यस्या). K $D_{1.2.4.5}$ $G_3$ $M_1$ वेदवित्तमः ($K_4$ द्विजसत्तम). — $^{d}$) $B_4$ कृतार्थं प्रवरैर्मम; M ह्येष एव वरो मम.

**16** $T_2$ om. 16 (cf. v l. 14). K $D_1$ ऋषिः; $B_4$ दुर्वासाः; $D_5$ मुनिः (for ब्राह्मणः). — $^{a}$) $B_{1.2}$ Dn $D_{4.6}$ $G_3$ मत्तस्त्वं; $D_1$ $G_{2.4}$ भद्रं ते (for भद्रे त्वं). — $^{b}$) $B_{1.2}$ Dn $D_{4.6}$ $G_3$ भद्रे (for मत्तः). — $^{c}$) $T_1$ $G_{1.2.4}$ इदं (for इमं).

**17** $T_2$ om. $17^{abc}$ (cf. v.l. 14). $17^{ab}$ =1. 104. $7^{ab}$; 113. $35^{ab}$. — $^{cd}$) $T_2$ स्वातंत्र्यं (for स्थातव्यं). K $B_3m$ $Dc$ $D_{1.2.5}$ तस्य तस्य प्रसादात्ते ($B_3m$ °देन) राज्ञि पुत्रो भविष्यति ($K_{1.2}$ भवेदिति).

**18** $18^{ab}$=(var.) 1. 113. $35^{cd}$. — $^{a}$) $K_4$ अकामश्च. — $^{b}$) K न स नेष्यति ($K_4$ समेष्यति हि); B Dn $D_{4.6}$ $G_3$ स समेष्यति; $Dc$ $D_2$ वशमेष्यति. $K_{1.2}$ वरं; $Dc$ $D_2$ शुभे; Dn $D_{4.6}$ $G_3$ वशे (for वशम्). — $^{c}$) $Dn_3$ °संयत्तो; $D_1$ T $G_{1.2.4}$ °संभ्रांतो (for °संशान्तो). — $^{d}$) B $Dc$ Dn $D_{2.4.6}$ $G_3$ भवेद्; T $G_{1.2.4}$ वाक्यैर् (for वाक्ये). $T_2$ ह्व्य (for भृत्य). T $G_{1.2.4}$ [अ]नुगः (for [आ]नतः).

**19** $K_{1.3.4}$ $D_1$ S (except $G_3$) om. the ref. — $^{a}$) $K_4$ द्वितीया सा; $D_1$ द्वितीयस्य; $T_2$ $G_4$ द्विजातिं च (for द्वितीयं सा). — $^{c}$) $B_4$ तद्वै; $D_1$ न वै (for तं वै).

**20** $^{b}$) B Dn $D_{4.6}$ $G_3$ स (for वै). — $^{c}$) $K_{1.2}$ $T_2$ तथा; $M_2$ ततो (for तदा). — $^{d}$) $D_1$ अथर्वांगिरसि. $Dc$ $D_2$ T $G_{1.2.4}$ स्थितं (for श्रुतम्).

**21** $^{a}$) $G_{2.4}$ सं- (for तं). — $^{b}$) $K_4$ सः (for ह).

**22** $^{a}$) B Dn $D_{4.6}$ $G_3$ गेहेषु (for गेहे सु-). $K_4$ -विहिते (for -विहितः). — $^{b}$) $K_{1.2}$ तथा; $Dc_2$ $D_2$ $G_4$ तदा (for सदा). $T_2$ सुप्रीति°; $G_1$ संप्रीति° (for सुप्रति°). — $^{c}$) $K_{1.2.4}$ $B_3$ $Dc$ $D_{1.2}$ °ष्यहं (for °महे). $Dc$ $D_2$ राजन् (for तावद्).

**23** $^{a}$) S (except $G_3$) च (for तु). — $^{b}$) $T_1$ $G_{1.2.4}$ तथै° (for तत्रै°). — $^{d}$) $K_{1.2}$ प्रति°; T $G_{1.2.5}$ [इ]माम° (for सम°).

C. 3. 17214
B 3. 310 37
K. 3. 311. 38

दृष्ट्वा कर्णं शस्त्रसंकृत्तगात्रं
मुहुश्चापि स्मयमानं नृवीरम् ॥ ३७
ततश्छित्वा कवचं दिव्यमङ्गा-
त्तथैवार्द्रं प्रददौ वासवाय ।
तथोत्कृत्य प्रददौ कुण्डले ते
वैकर्तनः कर्मणा तेन कर्णः ॥ ३८
ततः शक्रः प्रहसन्वञ्चयित्वा
कर्णं लोके यशसा योजयित्वा ।
कृतं कार्यं पाण्डवानां हि मेने
ततः पश्चाद्दिवमेवोत्पपात ॥ ३९
श्रुत्वा कर्णं मुषितं धार्तराष्ट्रा
दीनाः सर्वे भग्नदर्पा इवासन् ।
तां चावस्थां गमितं सूतपुत्रं
श्रुत्वा पार्था जहृषुः काननस्थाः ॥ ४०

जनमेजय उवाच ।
कस्था वीराः पाण्डवास्ते बभूवुः
कुतश्चैतच्छ्रुतवन्तः प्रियं ते ।
किं वाकार्षुर्द्वादशेऽब्दे व्यतीते
तन्मे सर्वं भगवान्व्याकरोतु ॥ ४१
वैशंपायन उवाच ।
लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा
विप्रैः सार्धं काम्यकादाश्रमात्ते ।
मार्कण्डेयाच्छ्रुतवन्तः पुराणं
देवर्षीणां चरितं विस्तरेण ॥ ४२
प्रत्याजग्मुः सरथाः सानुयात्राः
सर्वैः सार्धं सूदपौरोगवैश्च ।
ततः पुण्यं द्वैतवनं नृवीरा
निस्तीर्योग्रं वनवासं समग्रम् ॥ ४३

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥ समाप्तं कुण्डलाहरणपर्व ॥

---

**38** $^{a}$) $K_{1-3}$ $D_c$ $D_2$ तच्छित्वा वै; $D_5$ छित्वा चैकं; S (except $T_1$ $G_3$) ततश्चित्रं (for ततश्छित्वा). $D_1$ कांचनं (for कवचं). $K_{1.2}$ अस्त्रं (for अङ्गात्). — $^{b}$) $K_{3.4}$ $D_1$ हृष्टः (for [आ]र्द्रं). — $^{c}$) K $D_{1.5}$ अथ; $D_2$ $T_2$ $G_{1.2.4}$ ततो (for तथा). $G_{2.4}$ निकृत्य (for [उ]त्कृत्य). $K_1$ द्वे; $K_2$ तु; $D_c$ $D_2$ च (for ते). — $^{d}$) $K_{1-3}$ $B_4$ $D_{1.5}$ कर्णस्तस्मात् ($K_4$ कर्णौ तस्मात्); $B_{1-3}$ $D_n$ $D_{4.6}$ $G_3$ कर्णात्तस्मात्; $D_c$ $D_2$ कर्णात्तस्मै (for वैकर्तनः). — After 38, $T_1$ $G_{1.2.4}$ ins.:

1355* ततो देवो मुदितो वज्रपाणि-
दृष्ट्वा कर्णं शस्त्रनिकृत्तगात्रम् ।

**39** $^{a}$) $G_{2.4}$ कर्मणा; M प्राहसद् (for प्रहसन्). — $K_4$ om. (hapl.) $39^{b}$.

**40** $^{a}$) $G_2$ दृष्ट्वा (for श्रुत्वा). $K_4$ वंचितं; $G_4$ मुदितं (for मुषितं). — $K_4$ om. $40^{bc}$. — $^{c}$) $K_3$ तामावस्थां; $B_4$ तथा°; $D_6$ $M_2$ तं चा° (for तां चा°). $T_2$ $G_{2.4}$ गमिते सूतपुत्रे. — $^{d}$) $G_1$ काननस्था जहर्षुः (for जहृषुः का°).

**41** $K_4$ reads 41 after 3. 295. 1 (om. the ref.). — $^{b}$) B $D_n$ $D_{4.6}$ $G_3$ [ए]ते (for [ए]तत्), and तत् (for ते). — $^{c}$) $D_5$ किं चा°; $T_1$ $G_1$ किम° (for किं वा°). $B_{1.4}$ T द्वादशाब्दे (for °शेऽब्दे). — $^{d}$) $K_{1.2}$ सर्वं कर्म; S (except $G_3$) एतत्सर्वं (for तन्मे सर्वं).

**42** $K_4$ om. 42–43. — $^{a}$) $K_{1-3}$ $D_c$ $D_{1.2.5}$ त्रास° (for द्राव°). — $^{b}$) $B_2$ $T_2$ $G_{2.4}$ काम्यकमा ($B_2$ °काना°; $G_4$ °कं त्वा)श्रयंते (for काम्यका°).

**43** $K_4$ $G_4$ om. 43 (for $K_4$ cf. v.l. 42). — $^{a}$) $K_{1-3}$ $D_1$ प्रति° (for प्रत्या°). $K_{1-3}$ सानुजाः (for सरथाः). — $^{b}$) Many MSS. सूत° (for सूद°). — $^{c}$) $B_2$ पुनर्; $G_2$ पार्था (for पुण्यं). — $^{d}$) $K_{1-3}$ $G_2$ M [ए]वं; $D_c$ वै; $T_2$ [अ]ग्रे (for [उ]ग्रं). — *N. B.* Some printed ed. wrongly om. this stanza.

Colophon. $D_3$ missing. — *Major parvan:* $K_{1.2}$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_{1.3.4}$ B $D_c$ $D_{n1.n3}$ $D_{1.2.4-6}$ $G_3$ M कुंडला($D_{1.5}$ °लाभि)हरण, followed by समाप्त in all these MSS. (except in $K_4$ $B_2$ $M_2$). — *Adhy. name:* $T_2$ काम्यकपुनर्निवासे कुंडलकवचप्रदानं; $G_1$ कर्णकवचकुंडलहरणं; $G_2$ कवचकुंडलप्रदानं; $M_{1.2}$ कुंडलप्रदानं. — *Adhy. no.* (figures, words or both): $D_{n1}$ (*sup. lin.*). $n_2$ 308; $D_{n3}$ 309; $D_1$ 312; $T_1$ 294 (as in text!); $T_2$ $G_4$ $M_{1.2}$ (*inf. lin.*) 298 ($M_2$ orig. 300); $G_1$ 295; $G_2$ 297. — *Śloka no.:* $D_n$ 42.

# २९५

जनमेजय उवाच ।
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
प्रतिलभ्य ततः कृष्णां किमकुर्वत पाण्डवाः ॥ १
वैशंपायन उवाच ।
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ २
पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः ।
स्वादुमूलफलं रम्यं मार्कण्डेयाश्रमं प्रति ॥ ३
अनुगुप्तफलाहाराः सर्व एव मिताशनाः ।
न्यवसन्पाण्डवास्तत्र कृष्णया सह भारत ॥ ४
वसन्द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ५
ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रताः ।
क्लेशमार्छन्त विपुलं सुखोदर्कं परंतपाः ॥ ६
अजातशत्रुमासीनं भ्रातृभिः सहितं वने ।
आगम्य ब्राह्मणस्तूर्णं संतप्त इदमब्रवीत् ॥ ७ C 3.17231 B 3.311.11 K.3.312.11

## 295

☞ This adhy. is missing in $D_3$ (cf. v.l. 3. 287. 10); the MS. is mostly ignored here.

**1** $K_1$ $M_2$ om. 1. $Dc_2$ $D_2$ जन्मेजय उ°. — $1^{ab}=2^{ab}$. — $^{a}$) $B_2$ Dn $D_{4.6}$ $G_3$ भार्यायां (for कृष्णायां). — After $1^{ab}$, $K_2$ reads $2^{cdab}$. — $^{c}$) B $Dc_2$ Dn $D_{2.4.6}$ $G_3$ प्रतिपद्य. $K_{3.4}$ Dc $D_{1.2}$ $T_2$ $G_{2.4}$ $M_1$ पुनः (for ततः). S (except $G_3$; $M_2$ om.) तां च (for कृष्णां). — $^{d}$) $K_3$ $B_{2.3}$ $Dc_2$ $D_{1.2}$ $G_2$ $M_1$ किमकुर्वत. — After 1, $K_4$ reads stanza 41 of the previous adhy.

**2** $M_2$ om. the ref. $K_2$ (transp. $2^{ab}$ and $2^{cd}$) reads the stanza after $1^{ab}$. — $2^{ab}=1^{ab}$. — After the ref., $K_4$ $D_1$ ins.:

1356* सर्वे पुष्पफलाहाराः सर्व एव मिताशनाः ।
[Cf. $4^{ab}$. — $K_4$ सर्वे गुप्त°.]

— $^{a}$) $Dn_2$ भार्यायां (for कृष्णायां); cf. v.l. 1. — After $2^{ab}$, $M_1$ ins.:

1357* प्रतिलभ्य ततः कृष्णां यदकुर्वन्त तच्छृणु ।

— $^{c}$) $B_2$ निश्चयं (for विहाय). $M_2$ काम्यकां (*inf. lin.* °का). $T_2$ राजन् (for राजा). — $^{d}$) $K_{1.3}$ अच्युत.

**3** $^{a}$) $K_{1.2}$ पुण्ये; $K_{3.4}$ Dc $D_{1.2.5}$ पुण्यम् (for रम्यम्). — $^{c}$) K $D_{1.5}$ बहु° (for स्वादु°). $K_{1.2}$ $M_2$ (*sup. lin.* as in text) पुण्यं (for रम्यं). — $^{d}$) B D (except $D_1$; $D_3$ missing) $G_3$ विचित्रबहुपादपं.

**4** For $4^{ab}$, cf. 1356*. — $^{a}$) B $Dn_1$ $n_3$ $D_{4.6}$ T G अनुभुक्त; Dc $D_2$ अन्वभुंक्त; $D_5$ अनुगुप्ताः. — $^{c}$) $K_{1.2}$ व्यवसन्; $G_1$ निवसन्. — $^{d}$) B D (except $D_{1.5}$) $G_3$ भार्यया (for भारत).

**5** $^{c}$) Dc $D_1$ भीमसेनार्जुनश्चैव; $D_4$ T G °र्जुनौ चैव. — $^{d}$) T $G_{1.2.4}$ भ्रातरौ (for पाण्डवौ).

**6** $K_1$ om. 6. — $^{b}$) $T_2$ $G_{2.4}$ महात्मानो (for धर्मा°). $K_4$ जित° (for यत°). — $^{c}$) $B_{3.4}$ $D_{4.6}$ $G_3$ अर्छंति; Dn $D_5$ अर्छंत; T $G_{1.2.4}$ M इच्छंति. $T_2$ $G_{2.4}$ परमं (for विपुलं). — $^{d}$) M अरिंदमाः (for परं°). — After 6, B D (except $D_{1.5}$; $D_3$ missing) $G_3$ ins.:

1358* तस्मिन्प्रतिवसन्तस्ते यत्प्रापुः कुरुसत्तमाः ।
वने क्लेशं सुखोदर्कं तत्प्रवक्ष्यामि तच्छृणु ।
अरणीसहितं मन्थं ब्राह्मणस्य तपस्विनः ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ।
तदादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमान्तरितः शीघ्रं प्लवमानो महाजवः ।
ह्रियमाणं तु तं दृष्ट्वा स विप्रः कुरुसत्तम ।
त्वरितोऽभ्यागमत्तत्र अग्निहोत्रपरीप्सया ।

[(L. 1) Dc $D_2$ यत्प्रापुः. (L. 2) Dc $D_2$ तत्ते वक्ष्यामि तच्छृणु. — Lines 3–6 = stanzas 8–9 (with v.l.). — (L. 4) $B_3$ Dc $D_2$ कर्ष° (for घर्ष°). — (L. 6) Dc आश्रमात्त्वरितः.]

— On the other hand, $T_2$ $G_{2.4}$ M ins. after 6:

1359* तेषां च वसतां तत्र पाण्डवानां महारथम् ।
[M महात्मनां (for °रथम्).]

**7** $^{a}$) $D_5$ आयांतं (for आसीनं). — After $7^{ab}$, $D_1$ ins. a passage given in App. I (No. 30). — $^{c}$) $T_1$ $G_1$ अगच्छद् (for आगम्य). — $^{d}$) B Dn $D_{4.6}$ $G_3$ चेदम् (for इदम्).

**8** Before 8, $B_4$ ins. ब्राह्मणोवाच. — $^{a}$) $K_3$ B Dc Dn $D_{2.4.6}$ $G_3$ मंथं; T $G_{1.2.4}$ M भांडं (for मन्थं).

C. 3. 17232
B 3. 311. 12
K. 3 312. 12

अरणीसहितं मह्यं समासक्तं वनस्पतौ ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ ८
तदादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजवः ॥ ९
तस्य गत्वा पदं शीघ्रमासाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ १०
ब्राह्मणस्य वचः श्रुत्वा संतप्तोऽथ युधिष्ठिरः ।
धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह ॥ ११
सन्नद्धा धन्विनः सर्वे प्राद्रवन्नरपुंगवाः ।
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन्मृगम् ॥ १२
कर्णिनालीकनाराचानुत्सृजन्तो महारथाः ।
नाविध्यन्पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात् ॥ १३
तेषां प्रयतमानानां नादृश्यत महामृगः ।
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ १४
शीतलच्छायमासाद्य न्यग्रोधं गहने वने ।
क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन् ॥ १५
तेषां समुपविष्टानां नकुलो दुःखितस्तदा ।
अब्रवीद्भ्रातरं ज्येष्ठममर्षात्कुरुसत्तम ॥ १६

नास्मिन्कुले जातु ममज्ज धर्मो
न चालस्यादर्थलोपो बभूव ।
अनुत्तराः सर्वभूतेषु भूयः
संप्राप्ताः स्मः संशयं केन राजन् ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

---

— c) K1–3 मृगस्य कषमाणस्य; B3 Dc D1. 2 °स्य कर्षं°; D5 °स्य कृष्य°; M °स्याकर्षं°. — d) Dc2 D2 विषाणैः; T1 विमाने. T1 G1. 4 समसज्यत.

**9** Dn3 om. 9. — a) K1. 2 एतदाशा- (K2 °सा-); B1. 2. 4 Dc Dn1. n2 D2. 4. 6 G3 तमादाय; D5 समा°. T1 G1 महाराज (for गतो राजन्). — c) K1. 2 D5 त्वरितं; M2 परितः. D1 तूर्णं (for शीघ्रं). B4 D4 G3 आश्रमात्पुरुषव्याघ्र. — K1. 2 T2 om. (hapl.) 9d–10a. — d) K3 D1. 5 द्रवमाणो मनोजवः; B2 प्लवमानो महामृगः.

**10** K1. 2 T2 om. 10a (cf. v.l. 9). — a) B Dn D4. 6 T1 G1. 3 राजन् (for शीघ्रम्). — c) D5 अग्निहोत्रार्थमेतन्मे. — d) T1 G1 सत्यं (G1 स त्वं) मे देहि पांडव.

**11** Before 11, T G1. 2. 4 ins. वैशं°. — c) K3 Dc2 D2 कौंतेय.

**12** a) M2 सहसा (for सन्नद्धा). T G1. 2. 4 त्वरिताः (for धन्विनः). — b) D5 प्रयांति (for प्राद्रवन्). — c) K1. 2 D6 ब्राह्मणार्थं; G1 ब्राह्मणास्ते. Dc D2 ब्राह्मणार्थाय यत्ता वै.

**13** K2 om. (hapl.) 13a–14b. — c) K4 अविध्यन्; Dc2 न विध्यन्. — d) K3. 4 D1 दृश्यंतं; D5 दृश्यंते (for पश्यन्तो).

**14** K2 om. 14ab (cf. v.l. 13). — a) D5 तु (for प्र-). — b) G1 अदृ° (for नादृ°). D1 तदा; S (except G3) वने (for महा-). — c) B Dc Dn D5 T G1 M शांता (for श्रान्ता).

**15** a) B1. 2 Dn D4. 6 G3 आगम्य (for आसाद्य). — c) T2 ते क्षुत्पिपासापरिताः.

**16** b) T G1. 2. 4 transp. नकुलः and दुःखितः. T1 G1 [अ]ब्रवीत्; M ततः (for तदा). — c) B Dn D4. 6 T1 G3 श्रेष्ठम् (for ज्येष्ठम्). G1 भ्रातरं धर्मजं ज्येष्ठं. — d) K1–3 D5 T1 G1. 2 M कुरुसत्तमं (G2 °मः); K4 B Dc Dn D1. 2. 4. 6 G3 कुरुनंदनं (Dc1 °न; Dc2 D2 °नः).

**17** Before 17, Dc S (except G3) ins. नकुल उ° (S om. उ°). — a) D4. 6 नास्मत्कुले. — b) D5 T1 G1 M1 अर्थलोभो (for °लोपो). K2 न चालस्यं नार्थलोपो बभूव; M2 न चालस्यादर्थलुप्ता बभूवुः. — c) K1 अनुत्तरः; K2 अनुरक्तः; D5 अनुरक्ताः; T1 G1 न चांतकाः; T2 G1 (*sup. lin.*). 2. 4 M अनंतराः. K Dc D1. 2. 5 सर्ववर्णेषु; G2 °धर्मेषु. K1 T2 G1. 4 भूपते (T2 °तेः); K2 T1 G2 M भूप; K3 [अ]भूवन्; K4 [अ]भूमः; D1 [अ]भूम; D5 [अ]भूवं (for भूयः). — d) K3 T1 G2 ते स्म प्राप्ताः; K4 ते संप्राप्ताः; Dc D2 ससं(Dc2 समं)प्राप्ताः; D1 T2 M तस्मात्प्राप्ताः; D5 अनुप्राप्ताः; G1 समाप्राप्ताः; G4 समत्प्राप्ताः (sic) (for संप्राप्ताः स्मः). B Dc Dn D2. 4. 6 G3 किं नु (for केन).

Colophon om. in K1–3 D1. 5. D3 missing. — *Major parvan :* Dn2 T G2 आरण्य; G4 अरण्य. — *Sub-parvan:* K4 आरणीय; B Dc Dn D2. 4. 6 G3 अ(Dn1 आ)रणीहरण; M2 अरणी. — *Adhy. no.* (figures, words or both): Dn 309 (Dn3 310); T1 295 (as in text !); T2 M1. 2 (*inf. lin.*) 299 (M2 orig. 131); G1 296; G2 298; G4 (erroneously) 129. — *Śloka no.:* Dn 22 (Dn3 21); D1 23.

# २९६

युधिष्ठिर उवाच ।
नापदामस्ति मर्यादा न निमित्तं न कारणम् ।
धर्मस्तु विभजत्यत्र उभयोः पुण्यपापयोः ॥ १
भीम उवाच ।
प्रातिकाम्यनयत्कृष्णां सभायां प्रेष्यवत्तदा ।
न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ २
अर्जुन उवाच ।
वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः ।
अतितीक्ष्णा मया क्षान्तास्तेन प्राप्ताः स्म संशयम् ॥ ३
सहदेव उवाच ।
शकुनिस्त्वां यदाजैषीदक्षद्यूतेन भारत ।
स मया न हतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ ४
वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत् ।
आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ॥ ५
पानीयमन्तिके पश्य वृक्षान्वाप्युदकाश्रयान् ।
इमे हि भ्रातरः श्रान्तास्तव तात पिपासिताः ॥ ६
नकुलस्तु तथेत्युक्त्वा शीघ्रमारुह्य पादपम् ।
अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ॥ ७
पश्यामि बहुलान्राजन्वृक्षानुदकसंश्रयान् ।
सारसानां च निर्ह्रादमत्रोदकमसंशयम् ॥ ८
ततोऽब्रवीत्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय ॥ ९
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् । C. 3. 17251 B. 3. 312. 10 K. 3. 313. 10

## 296

☞ This adhy. is missing in D3 (cf. v.l. 3. 283. 10); the MS. is mostly ignored here.

**1** $^{b}$) K3 अनिमित्तं; M2 निमित्तं न (by transp.). T2 G2. 4 च कारणं; G1 अकारणं. — $^{c}$) B Dc Dn D2. 4. 6 G3 विभजत्यर्थम्; T1 °जन्यस्मिन्; T2 M °जेद्यत्र; G2. 4 °जेदत्र. G1 धर्मस्त्वयि भजेदस्मिन्. — $^{d}$) To avoid hiatus, T2 G2. 4 M ह्युभयोः (for उभयोः). T1 उभयोः पापपुण्ययोः.

**2** K2 D1. 5 M2 भीमसेन उ° (M2 om. उ°). — $^{a}$) K4 Dn2 T2 प्रातिकाम्येन यत्कृ(T2 यं कृ)ष्णां; M1 °म्यानयत्कृष्णां. — $^{b}$) D1 प्रेक्ष्यतां (for प्रेष्यवत्). — 2$^{d}$=3$^{d}$, 4$^{d}$.

**3** $^{b}$) Dc1 D1. 4 भाषितः. — $^{c}$) B Dn D4. 6 G3 अतितीव्रा; T1 अतीक्ष्णाया; G1 अतीक्ष्णया. — 3$^{d}$=2$^{d}$, 4$^{d}$. — After 3, K4 D1 ins.:

1360* नकुल उवाच ।
धार्तराष्ट्राः कुत्सयन्तो यन्मे न निहतास्तदा ।
द्यूतकाले महाराज तेनेमामापदं गताः ।

**4** K1–3 D5 M om. (? hapl.) 4; Dc2 om. 4$^{ab}$. — $^{a}$) K4 तु; D1 च; D4 त्वा (for त्वां). K4 यदा पापो; D1 महापापो (for यदाजैषीद्). — $^{b}$) K4 D1 द्यूताह्वानं तदाकरोत्; G2. 4 द्यूतेन भरतर्षभ. — $^{c}$) K4 D1 T1 G1 सोऽस्माभिर्न (D1 °र्नि-) हतस्तत्र; Dc T2 G2. 4 न मया निह°. — $^{d}$) =2$^{d}$, 3$^{d}$. K4 D1 विपदं तेन वै गताः.

**6** $^{a}$) K4 तस्य (for पश्य). — $^{b}$) B1–3 Dn D4. 6 G1. 3 चापि; D5 यान् (for वापि). K3 B Dc Dn D2. 4. 6 G3 °श्रितान् (for °श्रयान्). K4 D1 वृक्षं वाप्युदकाश्रयं. — T2 om. 6$^{cd}$. — K1 reads 6$^{c}$–7$^{d}$ after 12$^{c}$. — $^{c}$) K1. 2 त इमे; B2 Dn D4. 6 G3 एते हि (for इमे हि). — $^{d}$) K1. 2. 4 Dc D1. 2 सर्वे; K3 D5 पार्थ; T1 G1 चापि (for तात). G2. 4 पिपासया.

**7** For sequence of K1, cf. v.l. 6. Before 7, T G4 ins. वैशं°. — $^{a}$) =10$^{a}$. B4 Dc1 Dn D4. 6 G3 तं; D1 च (for तु). — After 7$^{a}$, T2 G2. 4 ins.:

1361* भ्रातुर्ज्येष्ठस्य शासनात् ।
तत उत्थाय मतिमान्.

— $^{b}$) D5 पांडवः (for पादपम्).

**8** K1 om. 8. Before 8, T G1. 2. 4 ins. नकुलः. — $^{a}$) K2 बहुलान्वृक्षान्; K4 D1 बहुलच्छायान्. — $^{b}$) K2 राजन् (for वृक्षान्). M उदकसंश्रितान्. — $^{c}$) K (K1 om.) Dc D1. 2. 5 निनदं; T G1. 2. 4 निर्ह्रादस्. — $^{d}$) K2 पत्रोदक°; T G1. 2. 4 तत्रोदक°.

**9** Before 9, T G1. 2. 4 M2 ins. वैशं°. — $^{c}$) M गच्छ सौम्यावतीर्यातः. — $^{d}$) N (except K4 Dn2 D5; D3 missing) G3 तूर्णैः; T1 G1 शीतं (for तूर्णं). M पानीयं शीघ्रमानय.

**10** Before 10, T2 G2. 4 ins. वैशं°. — $^{a}$) =7$^{a}$. K D5

C. 3 17251 B. 3 312. 10 K 3 313 10 प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत ॥ १०
स दृष्ट्वा विमलं तोयं सारसैः परिवारितम् ।
पातुकामस्ततो वाचमन्तरिक्षात्स शुश्रुवे ॥ ११
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ १२
अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १३
चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीद्भ्रातरं वीरं सहदेवमरिंदमम् ॥ १४
भ्राता चिरायते तात सहदेव तवाग्रजः ।
तं चैवानय सोदर्यं पानीयं च त्वमानय ॥ १५
सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ॥ १६
भ्रातृशोकाभिसंतप्तस्तृषया च प्रपीडितः ।
अभिदुद्राव पानीयं ततो वागभ्यभाषत ॥ १७
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं ततः पिब हरस्व च ॥ १८
अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १९
अथाब्रवीत्स विजयं कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्शन ।
तौ चैवानय भद्रं ते पानीयं च त्वमानय ॥ २०
एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः ।
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ॥ २१

---

च; Dn$_3$ D$_4$ तं (for तु). — $^c$) K Dc D$_{2.5}$ येन (for यत्र). — $^d$) K$_{1.2.4}$ चैवाभ्यपद्यत.

**11** $^a$) D$_5$ तद् (for स). T G$_{1.2.4}$ तद् दृष्ट्वा विपुलं वारि. — $^b$) K D$_5$ M खगमैः; Dc D$_{1.2}$ शकुनैः (for सारसैः). — $^c$) M हर्तुं° (for पातु°). — $^d$) =25$^b$. B D$_4$ अंतरीक्षात्. K$_3$ D$_1$ सु- (for स).

**12** Before 12, B$_3$ Dn D$_{4.6}$ G$_3$ M$_2$ ins. यक्ष उ° (M$_2$ om. उ°). — 12 =(var.) 18. — 12$^b$ =(var.) 3. 40. 22$^b$. — $^c$) D$_1$ कौंतेय (for माद्रेय). After 12$^c$, K$_1$ reads 6$^c$–7$^d$. — $^d$) D$_1$ पिबस्व च (for ततः पिब).

**13** 13$^a$ =(var.) 3. 40. 12$^c$. — $^b$) K$_1$ तु; Dc D$_2$ क्षुत्-; T G$_{1.2.4}$ स (for सु-). — $^d$) =19$^d$. M स (for च). D$_5$ स (for नि-). T$_1$ G$_1$ च (for ह). K$_4$ पीत्वा भूम्यां पपात च; G$_4$ पीत्वा वारि पपात ह.

**14** $^a$) D$_1$ चिरमाणे तु नकुले. — 14$^b$ =20$^b$, 32$^b$. — $^c$) G$_2$ शूरं (for वीरं). — $^d$) S (except G$_3$) अनंतरं (for अरिंदमम्).

**15** Before 15, T$_1$ ins. युधिष्ठिरः. — $^a$) K Dc D$_{1.2.5}$ चिरयातस् (K$_3$ °रायतस्; K$_4$ D$_1$ °रायते; D$_5$ °रजातस्) तव भ्राता; B Dn D$_{4.6}$ G$_3$ भ्राता हि चिरया(B$_2$ °जा)तो नः. — $^b$) K D$_{1.5}$ महाभुज; M$_2$ तवाग्रतः. — $^c$) B$_{1.2}$ Dn D$_{4.6}$ G$_3$ तथा (for तं च). M विद्धि (for [आ]नय). T G$_{1.2.4}$ भद्रं ते (for सोदर्यं). — $^d$) =20$^f$, 33$^b$. Dc D$_2$ तथानघ (for त्वमानय).

**16** Before 16, T G$_{1.4}$ ins. वैशं°. — 16$^{ab}$=(var.) 34$^{ab}$. — $^b$) Dn$_3$ तं देशं (for तां दिशं). K$_3$ T$_1$ प्रतिपद्यत. — $^c$) T$_1$ ददृशे च; M स ददर्श. K$_{1.2}$ स हतं; K$_4$ B$_4$ Dc D$_2$ पतितं; T$_1$ G$_1$ च स तं; T$_2$ G$_4$ [अ]चेतनं; G$_2$ निहतं (for च हतं). K$_{1.2}$ वीरं (for भूमौ). — $^d$) T G$_{1.4}$ भ्रातरं निहतं; M (by transp.) नकुलं भ्रातरं. D$_5$ G$_2$ तथा.

**17** $^b$) K Dc$_2$ D$_{1.2.5}$ T$_1$ G$_{2.4}$ तृष्णया. K D$_{1.5}$ परिप्लुतः (for प्रपी°). — $^c$) D$_5$ पुनर्दुद्राव (for अभि°).

**18** D$_2$ om. 18. — 18 =(var.) 12 (*q. v.*). — $^c$) T$_2$ यथाकालं. — $^d$) = 37$^d$. B Dn D$_{4.6}$ G$_3$ पिबस्व च (for ततः पिब).

**19** 19=(var.) 13. — $^d$) K$_4$ सोपि; M$_1$ स नि- (for च नि-).

**20** Before 20, T G$_{1.4}$ ins. युधिष्ठिरः. — $^a$) K$_{1.2}$ तथा (for अथ). K$_{1.2}$ Dc D$_{2.5}$ हि विजयं; K$_{3.4}$ D$_1$ विजयिनं. T G$_{1.2.4}$ M सव्यसाचिं (G$_{1.2}$ °ची). — 20$^b$=14$^b$, 32$^b$. — $^c$) B$_{2.3}$ Dn D$_4$ (*sup. lin.* as in text) परि° (for चिर°). — $^d$) K$_{1-3}$ B$_{1.2.4}$ D$_{1.5}$ °कर्षण. — 20$^{ef}$=(var.) 15$^{cd}$. — $^f$)=15$^d$, 33$^d$. B$_1$ त्वं (for च). K$_{1.2}$ त्वमाहर; B$_1$ समानय; D$_1$ समाहर. — After 20, N (D$_3$ missing) G$_3$ M$_1$ ins.:

1362* त्वं हि नस्तात सर्वेषां दुःखितानामपाश्रयः ।
[ K$_4$ व्यपाश्रयः; D$_{1.4.6}$ उपाश्रयः. ]

**21** $^a$) S (except G$_3$) तथेत्युक्त्वा (for एवमुक्तो). — $^c$) D$_1$ °खड्गमेधावी; M °कवचः श्रीमान्. — $^d$) D$_1$ तत्सरः संप्रपद्यत.

**22** $^a$) K$_1$ B Dc Dn D$_{2.4.6}$ T$_2$ G$_3$ ततः (for यतः). Dc$_2$ Dn °शार्दूलः. — $^b$) K B$_4$ D$_{1.4}$ G$_{2.4}$ पानीयाहरणे.

यतः पुरुषशार्दूलौ पानीयहरणे गतौ ।
तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः ॥ २२
प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः ।
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ २३
नापश्यत्तत्र किंचित्स भूतं तस्मिन्महावने ।
सव्यसाची ततः श्रान्तः पानीयं सोऽभ्यधावत ॥ २४
अभिधावंस्ततो वाचमन्तरिक्षात्स शुश्रुवे ।
किमासीदसि पानीयं नैतच्छक्यं बलात्त्वया ॥ २५
कौन्तेय यदि वै प्रश्नान्मयोक्तान्प्रतिपत्स्यसे ।
ततः पास्यसि पानीयं हरिष्यसि च भारत ॥ २६
वारितस्त्वब्रवीत्पार्थो दृश्यमानो निवारय ।
यावद्बाणैर्विनिर्भिन्नः पुनर्नैवं वदिष्यसि ॥ २७
एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः ।
ववर्ष तां दिशं कृत्स्नां शब्दवेधं च दर्शयन् ॥ २८
कर्णिनालीकनाराचानुत्सृजन्भरतर्षभ ।
अनेकैरिषुसंघातैरन्तरिक्षं ववर्ष ह ॥ २९

यक्ष उवाच ।

किं विघातेन ते पार्थ प्रश्नानुक्त्वा ततः पिब ।
अनुक्त्वा तु ततः प्रश्नान्पीत्वैव न भविष्यसि ॥ ३०

वैशंपायन उवाच ।

स त्वमोघानिषून्मुक्त्वा तृष्णयाभिप्रपीडितः ।
अविज्ञायैव तान्प्रश्नान्पीत्वैव निपपात ह ॥ ३१ C. 3. 17273 B. 3. 312. 33 K. 3. 313. 32

— $^{c}$) $B_3$ स ददर्श; S (except $G_3$) ददर्श च (for तौ ददर्श). — After 22, S (except $G_3$) ins.:

1363* विगतासू नरव्याघ्रौ शयानौ वसुधातले।

**23** $^{a}$) $B_2$ सु° (for प्र°). — $^{b}$) K $D_{1.5}$ नरसिंहौ. — $^{d}$) $T_1$ $G_4$ व्यालो° (for व्यलो°). $K_3$ $D_5$ तत्वतः; $Dc_2$ तद्वने. $K_{1.2}$ व्यलोकत दिशो दश.

**24** $^{a}$) $K_{1.2}$ च; $M_1$ स्म (for स). T $G_{1.2.4}$ स तत्र किंचिन्नापश्यद्. — $^{b}$) $K_3$ $D_5$ तत्र; B Dn $D_{4.6}$ $G_3$ अस्मिन्. — $^{c}$) $D_4$ ततः शांतः; $T_2$ $G_{2.4}$ पिपासार्तः.

**25** $T_1$ om. 25–26. — $^{a}$) $K_3$ B D (except $D_5$; $D_3$ missing) $G_3$ वाक्यम् (for वाचम्). — $^{b}$) $=11^{d}$. $K_3$ $D_1$ सु-; $G_1$ प्र- (for स). — $^{c}$) $T_2$ $G_{2.4}$ यस्त्वमिच्छसि; $G_1$ किमाधावसि; M किमादित्ससि. — $^{d}$) M त्वया बलात् (by transp.).

**26** $T_1$ om. 26 (cf. v.l. 25). — $^{a}$) $K_{1.2}$ $D_{1.5}$ तु; $K_4$ ते (for वै). B Dc Dn $D_{2.4.6}$ $G_3$ प्रश्नांस्तान् (for वै प्रश्नान्). — $^{b}$) $Dc_1$ °पत्स्यसि; $Dc_2$ $D_2$ °पश्यसि; S (except $G_3$; $T_1$ om.) °वक्ष्यसि. — $^{d}$) $B_1$ आहरिष्यसि; $B_2$ भविष्यसि च.

**27** Before 27, T $G_{1.2.4}$ ins. वैशं°. — $^{a}$) $M_2$ चरित° (for वारित°). — $^{b}$) $K_3$ $D_5$ निरामयः; $Dc_1$ $D_2$ निवारयन्; $Dc_2$ निसूदयन्. — $^{c}$) $K_1$ च; $T_2$ $G_{2.4}$ तु (for वि-).

**28** $^{a}$) $K_1$ $D_2$ उक्तस्. — $^{b}$) M अस्त्राभि° (for अस्त्रानु°). — $^{c}$) B $Dc_1$ Dn $D_{2.4.6}$ $G_3$ प्रववर्ष दिशः कृत्स्नाः; $Dc_2$ (corrupt) न ववर्ष दिशैः कृत्स्नैः. — $^{d}$) $K_{1.2}$ $B_{1.3.4}$ Dc $Dn_1$ $D_{2.4.6}$ $G_3$ शब्दविद्धं ($Dc_2$ °वेधे); $K_4$ °वेध्यं. $K_1$ विमर्षयत्; $K_2$ $D_1$ निदर्शयन्; $Dc_1$ $D_4$ च दर्शयत्. T $G_{1.2.4}$ M शब्दवेध्यं वि(M नि)दर्शयन्.

**29** $29^{a}$ = (var.) 5. 34. $76^{a}$. — $^{b}$) Dc $D_2$ असृजन्. Dc $D_{1.2.4-6}$ भरतर्षभः; T $G_{1.2.4}$ M पुरुषर्षभः ($T_2$ $M_2$ °भ). — After $29^{ab}$, $B_3$ (marg.) Dn $D_{4.6}$ $G_3$ read $31^{ab}$. — $^{c}$) $K_{1-3}$ $D_{1.2.5}$ इषुसंपातैर्. — $^{d}$) $K_3$ B D (except $D_1$; $D_3$ missing) $G_3$ अंतरिक्षे. $K_{1-3}$ $D_5$ च; T $G_{1.2.4}$ सः (for ह). — After 29, $M_1$ ins.:

1364* सोऽप्यदृश्याय भूताय नभस्यामिततेजसे ।
उत्ससर्ज महाबाहुर्बाणजालं धनंजयः ।
ततस्तानिषुसंघातान्गाण्डीवधनुषश्च्युतान् ।
मेघान्कृत्वा जहासोच्चैस्तदद्भुतमिवाभवत् ।

**30** $^{a}$) $K_1$ वाघातेन; $K_2$ वाधानेन; $B_{1.2.4}$ Dn $D_{2.4.6}$ $G_3$ विधानेन. $T_1$ $G_1$ व्यायामेन च किं पार्थ. — $^{b}$) $D_5$ तथा; T $G_{1.2.4}$ पयः (for ततः). — $^{c}$) B $Dc_1$ Dn $D_{2.4.6}$ $G_3$ M च ($B_4$ तु; $Dc_1$ वा; M [ए]व) पिबन्; $Dc_2$ वापि तान्; $D_5$ वै पुनः; $T_1$ च ततः (for तु ततः). $K_{1.2}$ पश्चात् (for प्रश्नान्). — $^{d}$) T $G_{1.2.4}$ M पीत्वैव ($T_2$ $G_{2.4}$ °त्वा तु) निपतिष्यसि. — After 30, B Dc Dn $D_{2.4.6}$ $G_3$ ins.:

1365* एवमुक्तस्ततः पार्थः सव्यसाची धनंजयः ।

[ Before the line, $B_{2-4}$ Dc $D_2$ ins. वैशं°. ]

**31** $B_{1.2.4}$ Dc $D_2$ om. $31^{ab}$. $B_3$ (marg.) Dn $D_{4.6}$ $G_3$ read $31^{ab}$ after $29^{ab}$. $K_3$ $B_3$ Dn $D_{4.6}$ S (except $M_1$) om. the ref. — $^{a}$) S (except $G_3$) स तु मोघानिषून्दृष्ट्वा. — $^{b}$) $M_2$ तृषया. $K_4$ T $G_{2.4}$ च (for [अ]भि-). — $^{c}$) $D_5$ अविज्ञाय च; T $G_{1.2.4}$ अविज्ञात्वैव; M अवज्ञायैव. B Dc Dn $D_{2.4.6}$ $G_3$ अवज्ञायैव तां वाचं.

C. 3 17274
B. 3. 312. 33
K. 3. 313. 33

अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च बीभत्सुश्चापराजितः ॥ ३२
चिरं गतास्तोयहेतोर्न चागच्छन्ति भारत ।
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ ३३
भीमसेनस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
यत्र ते पुरुषव्याघ्रा भ्रातरोऽस्य निपातिताः ॥ ३४
तान्दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः ।
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ।
स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य मे ॥ ३५
पास्यामि तावत्पानीयमिति पार्थो वृकोदरः ।
ततोऽभ्यधावत्पानीयं पिपासुः पुरुषर्षभः ॥ ३६

यक्ष उवाच ।

मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ३७

वैशंपायन उवाच ।

एवमुक्तस्ततो भीमो यक्षेणामिततेजसा ।
अविज्ञायैव तान्प्रश्नान्पीत्वैव निपपात ह ॥ ३८
ततः कुन्तीसुतो राजा विचिन्त्य पुरुषर्षभः ।

---

— $^{d}$) $T_{2}$ $G_{2.4}$ पीत्वा च; M पीत्वा स.

**32** Before 32, $T_{1}$ ins. युधिष्ठिरः. — $^{a}$) $T_{2}$ $G_{2.4}$ ततो° (for अथा°). — $32^{b}=14^{b}$, $20^{b}$. — $^{d}$) $K_{3}$ $D_{5}$ om. च. B Dn $D_{4.6}$ $G_{3}$ परंतप ; Dc $D_{2}$ परंतपः ; $G_{1}$ पराजितः (for [अ]पराजितः).

**33** $^{a}$) $K_{1.2}$ चिरं गते. $K_{4}$ वै तोयार्थं (for तोयहेतोर्). — $^{b}$) $T_{1}$ चादर्शत (for चागच्छन्ति). — $^{d}$) $=15^{d}$, $20^{f}$. $G_{3}$ तथानघ (for त्वमा°).

**34** Before 34, T $G_{1.2.4}$ ins. वैशं°. — $34^{ab}$ = (var.) $16^{ab}$. — $^{b}$) B Dc Dn $D_{2.4.6}$ $G_{3}$ तं देशं (for तां दिशं). $K_{3}$ $D_{5}$ तस्मिन्देशे प्रपद्यत. — $^{c}$) $Dc_{1}$ $D_{2}$ पुरुषव्याघ्र. — $^{d}$) T $G_{1.2.4}$ च; M वि- (for नि-).

**35** $^{b}$) K $D_{1.2.5}$ T G तृष्णया. — $^{c}$) $B_{3}$ अवमन्य (for अमन्यत). — $^{d}$) $D_{5}$ किमेतद्; S (except $G_{3}$) कर्मैतद्. — $^{e}$) $Dn_{1}$. $n_{3}$ सं- (for स). K $B_{1}$ Dc $D_{1.5}$ चिंतयामास स ($K_{1-3}$ $B_{1}$ च) तदा. — $^{f}$) $D_{5}$ कथम् (for ध्रुवम्). $K_{1.2}$ अस्ति (for अद्य). $K_{4}$ B Dn $D_{4.6}$ $G_{3}$ वै (for मे).

**36** $^{b}$) M इत्युक्त्वा जलमाययौ. — M om. $36^{cd}$. — $^{c}$) $K_{2}$ ततोभि°. — $^{d}$) $K_{1.3}$ $Dc_{1}$ पुरुषर्षभ; $D_{5}$ पांडवर्षभः. — After 36, Dc $D_{2}$ ins.:

1366* वागुवाचाथ सुस्पष्टमदृश्या पाण्डुनन्दनम् ।

**37** $Dc_{2}$ $G_{2}$ om. the ref. — 37=(var.) 12, 18. — $^{a}$) $T_{2}$ $G_{2.4}$ तात मा (by transp.). $Dc_{1}$ $D_{2}$ कार्षीन्; $Dc_{2}$ कार्ये. — $^{c}$) T $G_{1.2.4}$ [अ]थ (for तु). — $^{d}$) $B_{2}$ पिबस्व च (for ततः पिब).

**38** M om. $38^{ab}$. All MSS. except K $D_{1.2.5}$ $M_{1}$ om. the ref. — $^{a}$) $K_{1.2}$ उक्त्वा (for उक्तस्). B Dn $D_{4.6}$ $G_{3}$ तदा ($B_{4}$ तथा) (for ततो). — $^{b}$) Dc $D_{2}$ यक्षेणाद्भुत°. — $38^{cd}=31^{cd}$. — $^{c}$) $=31^{c}$. $B_{1-3}$ Dc Dn $D_{2.4.6}$ $G_{3}$ अनुक्त्वैव तु ($B_{1.2}$ च); $B_{4}$ $D_{5}$ M अवज्ञायैव ($D_{5}$ °य च). $B_{4}$ तद्वाक्यं (for तान्प्रश्नान्). — $^{d}$) $M_{1}$ पीत्वा स. — After 38, $B_{3}$ ins.:

1367* ततः कुन्तीसुतो राजा धर्मपुत्रो युधिष्ठिरः ।;

while $B_{4}$ ins.:

1368* ततश्चिरगतान्भ्रातॄनथ ज्ञातुं युधिष्ठिरः ।

$B_{3.4}$ cont. (cf. 1370* below):

1369* चिरायमानान्बहुशः पुनः पुनरुवाच ह ।
माद्रेयौ किं चिरायेते गाण्डीवी किं चिरायते ।
महाबलधरस्तत्र किं नु भीमश्चिरायते ।
गच्छाम्येषां पदं द्रष्टुमिति कृत्वा युधिष्ठिरः ।,

followed by $39^{cd}$.

**39** $B_{3.4}$ transp. $39^{ab}$ and $39^{cd}$. — $^{a}$) S (except $G_{3}$) धर्म° (for कुन्ती°). — $^{b}$) $K_{3.4}$ B D (except $D_{1}$; $D_{3}$ missing) $G_{3}$ प्र- (for वि-). $K_{2.3}$ $Dc_{2}$ $Dn_{3}$ °र्षभ. — After $39^{ab}$, $K_{4}$ $B_{2-4}$ (see below) Dc $D_{2}$ ins.:

1370* आत्मनात्मानमेतच्च चिन्तयन्निदमब्रवीत् ।

Colophon.

वैशंपायन उवाच ।

ततश्चिरगतान्भ्रातॄनथ राजा युधिष्ठिरः ।
चिरायमाणान्बहुशः पुनः पुनरुवाच ह ।
किं स्विद्वनमिदं द्रष्टुं किं स्विद् दृष्टो मृगो भवेत् ।
प्राहसन्वा महाभूतं शप्तास्तेनाथ तेऽपतन् ।
न पश्यन्त्यथ वा वीराः पानीयं यत्र ते गताः ।
अन्विषन्तिर्वने तोयं कालोऽयमिति पातितः ।
किं नु तत्कारणं येन नायान्ति पुरुषर्षभाः ।
गच्छाम्येषां पदं द्रष्टुमिति कृत्वा युधिष्ठिरः ।

[$B_{2}$ om. lines 3–8; $B_{3}$ om. lines 2–3; $B_{4}$ om. lines 2–3. 9.]

— $B_{4}$ cont.:

समुत्थाय महाबाहुर्दह्यमानेन चेतसा ॥ ३९
अपेतजननिर्घोषं प्रविवेश महावनम् ।
रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ॥ ४०
नीलभास्वरवर्णैश्च पादपैरुपशोभितम् ।
भ्रमरैरुपगीतं च पक्षिभिश्च महायशाः ॥ ४१
स गच्छन्कानने तस्मिन्हेमजालपरिष्कृतम् ।
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा ॥ ४२
उपेतं नलिनीजालैः सिन्धुवारैश्च वेतसैः ।
केतकैः करवीरैश्च पिप्पलैश्चैव संवृतम् ।
श्रमार्तस्तदुपागम्य सरो दृष्ट्वाथ विस्मितः ॥ ४३

इति श्रीमहाभारते आरण्यकपर्वणि षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

# २९७

वैशंपायन उवाच ।
स ददर्श हतान्भ्रातॄँल्लोकपालानिव च्युतान् ।
युगान्ते समनुप्राप्ते शक्रप्रतिमगौरवान् ॥ १
विप्रकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम् ।
भीमसेनं यमौ चोभौ निर्विचेष्टान्गतायुषः ॥ २
स दीर्घमुष्णं निःश्वस्य शोकबाष्पपरिप्लुतः । C. 3. 17290 B. 3. 313. 3 K. 3. 314. 3

---

1371* वैशंपायन उवाच ।
एवमादीनि वाक्यानि विसृषन्नृपसत्तमः ।

— c) B3. 4 समुत्तस्थौ; D6 स तत्रायान् (for समुत्थाय). S (except G3) महाबुद्धिर् (for °बाहुर्).

**40** a) B Dc Dn D3. 4. 6 G3 व्यपेत° (for अपेत°). — b) M तद् (for प्र-). S (except T2 G3) महद्वनं. — c) K3 D5 रुरुऋक्ष- (for °भिश्च). — d) K D1. 5 महिषै° (for पक्षिभि°).

**41** b) D5 श्वापदैर् (for पादपैर्). — d) S (except G3) समंततः (for महायशाः). — After 41, S (except G3) ins.:

1372* मृदुशाद्वलसंकीर्णं भूमिभागं मनोहरम् ।
[M °संपन्नं (for °संकीर्णं).]

**42** a) S (except G3) गत्वा (for गच्छन्). — b) K3 D5 लताजालपरिष्कृते; S (except T1 G3) सेतुजालपरिष्कृतं. — c) D5 च ततः (for तत्सरः). — d) B1 Dc D2 मनसः प्रीतिवर्धनं.

**43** b) K4 Dc D1. 2. 4. 5 G1. 2 M सिंदुवारैः. K4 B D (except D5; D3 missing) G3 स- (for च). B Dn2. n3 D6 G3 -चेतसैः; T G1. 2. 4 M शोभितं. — c) K1. 2 केसरैः; K4 केतकी-. — d) K1. 2. 4 Dc D1. 2 G1 M2 प्रियालैश्च; T2 वंजलैश्च; G2. 4 वंचुलैश्च (for पिप्पलैश्च). T2 G1. 2. 4 चापि; M2 च सु- (for चैव). M1 प्रियवालैश्च संवृतं. — After 43cd, S (except G3) ins.:

1373* ततो धर्मसुतः श्रीमान्भ्रातृदर्शनलालसः ।

— Dn3 om. 43ef. — e) S (except G3) उपाक्रामत् (for उपागम्य). K3 स प्रशांतमुपागम्य; D5 प्रशांतः समुपा°. — f) K1. 3. 4 D5 दृष्ट्वाति-; K2 D1 दृष्ट्वा तु; S (except G3) दृष्ट्वा सु- (for दृष्ट्वाथ).

Colophon. B1 D3 missing. — *Major parvan:* K1. 2 T2 G2. 4 आरण्य. — *Sub-parvan:* K4 B3 Dc D2 आरणीय; B2 Dn3 D4–6 अरणीहरण; B4 D1 आरणेय; Dn1. n2 G3 आरणीहरण; M1 अरणि; M2 अरणी. — *Adhy. name:* M2 पानीयनिवारणं. — *Adhy. no.* (figures, words or both): Dn1 (marg.). n2 310; Dn3 311; D1 313; T1 296 (as in text!); T2 G4 M1. 2 (*inf. lin.*) 300 (M2 orig. 132); G1 297; G2 299. — *Śloka no.:* Dn1 45; Dn2. n3 46.

## 297

☞ This adhy. is missing in D3 (cf. v.l. 3. 283. 10); the MS. is mostly ignored here.

**1** a) D1 स वै ददर्श तान्भ्रातॄन्. — b) D5 नभश्च- (for इव). — d) S (except G3) शक्रवैश्रवणोपमान्.

**2** a) K4 विप्रकीर्णधनुर्बाणान्; B Dc1 Dn D2. 4. 6 G3 विनिकीर्णधनुर्बाणं; T2 G1. 2. 4 विप्र(T2 °नि)कीर्णधनुष्पाणिं. — c) B Dc Dn D2. 4. 6 G3 चैव (for चोभौ). — d) K2. T1 G1 निर्विचेष्टौ; D5 निर्विशेषौ. K2 कृतायुषः; K3 D5 गतायुषौ; D1 गतायुषान्; T G1. 2. 4 M व्यसूं(T1 G1 °सू)स्तदा.

**3** a) D1 M सु- (for स). Some MSS. निश्वस्य. K1. 2 दीर्घमुष्णं च निःश्वस्य; G4 दीर्घमुष्णं विनिश्वस्य. — b) K1. 2 शोचन्बाष्प°. — After 3ab, B Dc Dn D2. 4. 6 G3 ins.

C. 3. 17307 B. 3. 313. 20 K. 3. 314. 18

बुद्ध्या विचिन्तयामास वीराः केन निपातिताः ॥ ३
नैषां शस्त्रप्रहारोऽस्ति पदं नेहास्ति कस्यचित् ।
भूतं महदिदं मन्ये भ्रातरो येन मे हताः ।
एकाग्रं चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलम् ॥ ४
स्यात्तु दुर्योधनेनेदमुपांशुविहितं कृतम् ।
गान्धारराजरचितं सततं जिह्मबुद्धिना ॥ ५
यस्य कार्यमकार्यं वा सममेव भवत्युत ।
कस्तस्य विश्वसेद्वीरो दुर्मतेरकृतात्मनः ॥ ६
अथ वा पुरुषैर्गूढैः प्रयोगोऽयं दुरात्मनः ।
भवेदिति महाबाहुर्बहुधा समचिन्तयत् ॥ ७
तस्यासीन्न विषेणेदमुदकं दूषितं यथा ।
मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् ॥ ८
एकैकशश्चौघबलानिमान्पुरुषसत्तमान् ।
कोऽन्यः प्रतिसमासेत कालान्तकयमादृते ॥ ९
एतेनाध्यवसायेन तत्तोयमवगाढवान् ।
गाहमानश्च तत्तोयमन्तरिक्षात्स शुश्रुवे ॥ १०

यक्ष उवाच ।

अहं बकः शैवलमत्स्यभक्षो
मया नीताः प्रेतवशं तवानुजाः ।
त्वं पञ्चमो भविता राजपुत्र
न चेत्प्रश्नान्पृच्छतो व्याकरोषि ॥ ११
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।

---

a passage given in App. I (No. 31). — $^{c}$) $D_5$ बुद्ध्या विचार° ; T $G_{1.2.4}$ M स्व( $M_2$ स )बुद्ध्या चिंत°.

**4** $^{a}$) $K_{1.2.4}$ $D_1$ शरैः; $K_3$ $B_3$ $D_5$ शर- (for शस्त्र-). — $^{b}$) T $G_{1.2.4}$ नैवास्ति (for नेहास्ति). — $^{c}$) $K_{1.2}$ इदं भूतं महन्मन्ये; Dc $D_2$ विदितं तन्महद्भूतं. — $^{d}$) $M_1$ पातिताः (for मे हताः). $M_2$ भ्रातरो ये निपातिताः. — $^{e}$) $K_{1.2.4}$ एकाग्रश्च; T $G_{1.2.4}$ एकांते. Dc $D_2$ एकाग्रश्चिंतयामास; M एकाग्रचित्तः पानीयं — $^{f}$) $G_4$ योत्स्यामि (for वेत्स्यामि). T $G_{1.2.4}$ चाप्यपः; M कारणं (for वा जलं). Dc $D_2$ महद् दुःखमिदं मम. — After 4, S (except $G_3$) ins.:

1374* भ्रातॄणां व्यसनं घोरं सममेव महात्मनाम् ।

**5** $^{a}$) $K_3$ $D_5$ अत्र; $K_4$ $D_1$ जातु (for स्यात्तु). — $^{b}$) $T_2$ $G_{2.4}$ उपांशु परिकल्पितं. — $^{c}$) $K_{1.2}$ $T_2$ $G_{2.4}$ °राजेन कृतं; $K_{3.4}$ $B_{3.4}$ $D_5$ °राजहचितं; $Dn_2$ $D_{1.2}$ °राजचरितं; $T_1$ $G_1$ M °राजविहितं. — $^{d}$) $T_2$ $G_{2.4}$ असताधर्मबुद्धिना.

**6** $^{c}$) $K_3$ $D_5$ धीमान्; $D_1$ T $G_{2.4}$ धीरो (for वीरो). — $^{d}$) $K_2$ $B_{1-3}$ Dn $D_{4.6}$ $G_3$ दुष्कृतेर् (for दुर्मतेर्).

**7** $B_3$ $D_5$ om. (hapl.) $7^{ab}$. — $^{b}$) T $G_{2.4}$ दुरात्मभिः. — $^{c}$) B Dn $D_{4.6}$ $G_3$ M महाबुद्धिर्. — $^{d}$) B D (except $D_1$; $D_3$ missing) $G_3$ तद° (for सम°). — After 7, T $G_{1.2}$ M ins.:

1375* आचार्यं किं नु वक्ष्यामि कृपं भीष्ममहं नु किम् ।

$T_2$ $G_2$ cont.:

1376* विदुरं किं नु वक्ष्यामि बृहस्पतिसमं नये ।

$T_2$ $G_2$ cont.: $T_1$ $G_1$ M ins. after 1375*: $G_4$ ins. after 7:

1377* अम्बां च किं नु वक्ष्यामि सदा दुःखस्य भागिनीम् ।
दृष्ट्वा मां भ्रातृभिर्हीनं पृच्छन्तीं पुत्रगृद्धिनीम् ।
यदा त्वं भ्रातृभिः सर्वैः शक्रतुल्यपराक्रमैः ।
सार्धं वनं गतो वीरैः कथमेकस्त्वमागतः ।

[(L. 1) $G_4$ आर्या (for अम्बां). $T_2$ $G_{2.4}$ सर्वथा दुःखभागिनीं (for the posterior half). — (L. 2) $G_4$ गच्छंतं (for पृच्छन्तीं). $T_2$ $G_{1.2.4}$ पुत्रगर्धिनीं. — (L. 3) M यथा (for यदा). $T_1$ गाहमानश्च तत्तोयं (for the prior half). — (L. 4) $T_2$ विनिर्गतो (for वनं गतो).]

**8** $^{a}$) $T_2$ $G_{1.2.4}$ कस्य किं नु; $M_2$ किं चासीन्न (for तस्यासीन्न). $D_1$ विशेषेण (for विषेणेदम्). — After $8^{ab}$, B Dc Dn $D_{2.4.6}$ $G_3$ ins.:

1378* मृतानामपि चैतेषां विकृतं नैव जायते ।
[Dc $D_2$ विकृतिर्.]

**9** $^{a}$) $K_3$ चातिबलान्; $D_5$ चाप्यचलान् (for चौघबलान्). $T_2$ $G_{2.4}$ एकैकशो बलवत ($T_2$ $G_4$ °ता). — $D_4$ om. $9^{b}$–$10^{c}$. — $^{c}$) $G_2$ नान्यः (for कोऽन्यः). $K_{1.2.4}$ $B_{1.3.4}$ प्रतिसमासीत; $D_2$ °सेन. — $^{d}$) S (except $G_3$) °यमान्विना.

**10** $D_4$ om. $10^{abc}$ (cf. v.l. 9). — $^{a}$) N ($D_4$ om; $D_3$ missing) $G_3$ एतेन व्यवसायेन. — $^{b}$) $K_{3.4}$ $D_5$ M अवगाहत; $B_{1.2}$ Dn $D_{1.6}$ $T_2$ $G_3$ व्यवगाढवान्. — $^{c}$) $B_2$ गच्छमानश्च; $T_2$ $G_{2.4}$ पातुकाम°.

**11** $^{a}$) $K_{2.3}$ $D_5$ केवलमत्स्यभक्षो; $D_1$ शैवलमत्स्यभोजी; $T_1$ °भोजो; $G_{2.4}$ °भोजनो. $T_2$ अहं बलज्ञो बलमत्स्यभोजनो. — $^{b}$) $B_{2-4}$ Dn $D_{4.6}$ $G_3$ (by transp.) नीता मया; $T_1$ मयार्दिताः. $K_{3.4}$ $D_{1.5}$ प्रेतगतिं. — $^{c}$) $T_2$ $G_{2.4}$ चाप्येवं (for पञ्चमो). — $^{d}$) $D_5$ भवान्; $T_1$ $G_1$ न मे (for न चेत्). T $G_4$ पृच्छते.

**12** 12=(var.) 3. 296. 12, 18, 37. — $^{a}$) K $D_{1.5}$ $M_2$ पार्थ मा; $B_{1.3.4}$ $M_1$ मा पार्थ (for मा तात). — $^{c}$) $D_5$ च (for तु). T $G_{1.2.4}$ यथाकामं (for तु कौन्तेय).

प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ १२

युधिष्ठिर उवाच ।

रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक् ।
पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम् ॥ १३
हिमवान्पारियात्रश्च विन्ध्यो मलय एव च ।
चत्वारः पर्वताः केन पातिता भुवि तेजसा ॥ १४
अतीव ते महत्कर्म कृतं बलवतां वर ।
यन्न देवा न गन्धर्वा नासुरा न च राक्षसाः ।
विषहेरन्महायुद्धे कृतं ते तन्महाद्भुतम् ॥ १५
न ते जानामि यत्कार्यं नाभिजानामि काङ्क्षितम् ।
कौतूहलं महज्जातं साध्वसं चागतं मम ॥ १६
येनास्म्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः ।
पृच्छामि भगवंस्तस्मात्को भवानिह तिष्ठति ॥ १७

यक्ष उवाच ।

यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः ।
मयैते निहताः सर्वे भ्रातरस्ते महौजसः ॥ १८

वैशंपायन उवाच ।

ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षराम् ।
यक्षस्य ब्रुवतो राजन्नुपक्रम्य तदा स्थितः ॥ १९
विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम् ।
ज्वलनार्कप्रतीकाशमधृष्यं पर्वतोपमम् ॥ २०
सेतुमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः ।
मेघगम्भीरया वाचा तर्जयन्तं महाबलम् ॥ २१

यक्ष उवाच ।

इमे ते भ्रातरो राजन्वार्यमाणा मयासकृत् ।
बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया ॥ २२ C. 3. 17326 B. 3. 313. 41 K. 3. 314. 43

— $^d$) $K_3$ $D_5$ T $G_{1.2.4}$ पिबस्व च (for ततः पिब).

**13** $^b$) Dc $D_2$ $G_3$ च (for वा). $K_4$ प्रधानधृक्. — $^c$) $K_{1-3}$ $D_5$ देव (for देवो). — $^d$) $K_{1.2.4}$ $D_{1.5}$ शकुनिवत्.

**14** $^a$) $K_{3.4}$ पारिजातश्च; B °पात्रश्च. — $^d$) $K_{1.2.4}$ $D_1$ धरणीतले; $K_3$ $D_5$ पृथिवीतले; B Dc Dn $D_{2.4.6}$ $G_3$ भूरितेजसः.

**15** $^a$) $T_2$ $G_{2.4}$ त्वयातीव (for अतीव ते). — $^b$) $M_2$ बलं (for कृतं). B Dn $D_{4.6}$ $G_3$ च बलिनां (for बलवतां). — After $15^{ab}$, S (except $G_3$) ins.:

1379* विनिघ्नता महेष्वासांश्चतुरोऽपि ममानुजान् ।

— $^c$) $K_4$ Dc यं न; $B_{1-3}$ Dn $D_{4.6}$ $G_3$ यान्न. — $^d$) $K_1$ $B_2$ Dn $D_{4.6}$ $G_3$ च न (by transp.); $B_3$ यक्ष-. — $^e$) $T_1$ $G_{1.2.4}$ न समर्था; $T_2$ समर्थास्तु (for विषहेरन्). K $D_5$ महाबुद्धे; $T_1$ $G_1$ महद्युद्धे. — $^f$) $K_{3.4}$ Dc $D_{1.2}$ एतन् (for ते तन्). T $G_{1.2.4}$ M कृतं त्व(M त)त्तेजसाद्भुतं.

**16** $^a$) $D_1$ तत्कार्यं; M यत्कर्म. $T_1$ $G_1$ नैते जानंति यत्कामं. — $^b$) $G_{1.4}$ नाभिजानाति; M न हि जानामि. — In $D_1$, $16^c$–$62^d$ is lost on a missing fol. (223).

**17** $D_1$ missing (cf. v.l. 16). — $^a$) $T_2$ $G_{2.4}$ त्वयेत्युद्विग्न°. — $^b$) $K_4$ समुद्भूतशिरोरुहः; $B_3$ $M_1$ समुत्पन्नशिरोरुजः. — $^c$) S (except $G_3$) transp. भगवन् and तस्मात्. $K_4$ पृच्छामि हि भवंतं स्म. — $^d$) =(var.) 1. 13. $18^b$. K इह ($K_2$ अन्व-) धिष्ठितः; $B_2$ इत्यभाषत; $D_5$ अवतिष्ठते; $M_1$ इति तिष्ठति.

**18** $D_1$ missing (cf. v.l. 16). $K_3$ om. the ref. — $^b$) K $G_4$ जलेश्वरः. $D_5$ नास्मि पक्षिकलेवरः. — $^c$) $T_1$ $G_1$ [ऽ]तिबलाः (for निहताः). — $^d$) $K_{3.4}$ Dc $D_2$ [ऽ]मितौजसः; $T_1$ $G_1$ M निपातिताः; $T_2$ $G_{2.4}$ निवारिताः.

**19** $D_1$ missing (cf. v.l. 16). $K_4$ $T_1$ $G_1$ om. the ref. — $^b$) $K_1$ तु पुरुषा°; $K_2$ सुपरुषा°; $K_3$ $T_1$ $G_1$ $M_1$ सुपरुषाक्षरं; B $Dn_2$ (by corr.) $M_2$ स परुषाक्षरं. — $^d$) $K_{1.2}$ $B_{1.4}$ $Dc_1$ अपक्रम्य; $K_4$ पराक्रम्य; $D_5$ M अपाक्रम्य; $T_2$ $G_{2.4}$ नाकंपत (for उपक्रम्य). $T_1$ $G_1$ नाकंपत युधिष्ठिरः. — After 19, $T_1$ $G_1$ ins.:

1380* ततो राजन्नपाक्रम्य तस्माद्देशादवस्थितः ।

**20** $D_1$ missing (cf. v.l. 16). — $^a$) K Dc $D_2$ महात्मानं (for °कायं). — $^b$) $K_{1.2}$ °च्छ्रयं; $K_3$ $G_4$ °च्छ्रितं.

**21** $D_1$ missing (cf. v.l. 16). — $^a$) B Dn $D_{4.6}$ $G_3$ वृक्षम्; Dc $D_2$ सर (for सेतुम्). K $D_5$ आवृत्य; Dc $T_2$ चावृत्य (for आश्रित्य). — $^b$) $K_3$ $T_2$ भरतर्षभ; $M_2$ पुरुषर्षभः. — $^c$) $B_{1.2}$ Dn $D_{4.6}$ $G_3$ मेघगंभीरनादेन; $T_1$ घोरगंभीरया वाचा; $T_2$ $G_{2.4}$ घोराकृतिर्महावाचा. — $^d$) $T_1$ $G_1$ तर्जयंस्तं. B D (except $D_5$; $D_{1.3}$ missing) $T_1$ $G_3$ °स्वनं (for °बलम्). — After 21, T $G_{1.2.4}$ ins.:

1381* उवाच यक्षः कौन्तेयं भ्रातृशोकाभिपीडितम् ।
[ $T_2$ $G_4$ °शोकप्रपीडितं. ]

**22** $D_1$ missing (cf. v.l. 16). — $^a$) $M_1$ त इमे; $M_2$ य इमे (for इमे ते). K $D_5$ तवेमे ह्यनुजा राजन्. — $B_3$

C. 3. 17327
B. 3. 313. 41
K. 3. 314. 43

न पेयमुदकं राजन्प्राणानिह परीप्सता ।
पार्थ मा साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ २३

युधिष्ठिर उवाच ।

नैवाहं कामये यक्ष तव पूर्वपरिग्रहम् ।
कामं नैतत्प्रशंसन्ति सन्तो हि पुरुषाः सदा ॥ २४
यदात्मना स्वमात्मानं प्रशंसेत्पुरुषः प्रभो ।
यथाप्रज्ञं तु ते प्रश्नान्प्रतिवक्ष्यामि पृच्छ माम् ॥ २५

यक्ष उवाच ।

किं स्विदादित्यमुन्नयति के च तस्याभितश्चराः ।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति ॥ २६

युधिष्ठिर उवाच ।

ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति ॥ २७

यक्ष उवाच ।

केन स्विच्छ्रोत्रियो भवति केन स्विद्विन्दते महत् ।
केन द्वितीयवान्भवति राजन्केन च बुद्धिमान् ॥ २८

युधिष्ठिर उवाच ।

श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया ॥ २९

यक्ष उवाच ।

किं ब्राह्मणानां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ३०

युधिष्ठिर उवाच ।

स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परिवादोऽसतामिव ॥ ३१

यक्ष उवाच ।

किं क्षत्रियाणां देवत्वं कश्च धर्मः सतामिव ।

---

om. 22$^{cd}$. — $^{c}$) K Dc $D_2$ जिहीर्षति. — $^{d}$) $T_1$ $G_1$ तदा; $T_2$ $G_{2.4}$ मया (for ततो). $K_{1.2}$ [ऽ]वसूदिता; B Dn $D_4$ $G_3$ वै मूदिता. $T_2$ $G_{2.4}$ तदा (for मया).

**23** $D_1$ missing (cf. v.l. 16). — $^{b}$) $B_2$ परीक्षते; $D_5$ परीप्सथ. — 23$^{cdef}$ =(var.) 12 (*q. v.*). — $^{c}$) $K_3$ $D_5$ मा तात; $T_2$ $G_{2.4}$ मा पार्थं (by transp.). — $T_1$ $G_1$ M om. 23$^{ef}$. — $^{e}$) $T_2$ $G_{2.4}$ राजेंद्र (for कौन्तेय). — $^{f}$) $B_4$ $D_5$ पिबस्व च (for ततः पिब).

**24** $D_1$ missing (cf. v.l. 16). — $^{a}$) $B_2$ $Dc_1$ Dn $D_{4.6}$ $G_3$ न चाहं. $B_1$ तोयं (for यक्ष). — $^{b}$) $Dc_2$ $D_2$ °परिग्रहः. — With 24$^{cd}$–25$^{ab}$, cf. 1. 30. 2: 5. 166. 5. — $^{c}$) $T_2$ $G_{2.4}$ अन्ये (for कामं). $D_5$ आत्मानं न प्रशं°.

**25** $D_1$ missing (cf. v.l. 16). — $^{a}$) Dc $T_1$ तथात्मना. $D_5$ आत्मानं न प्रशंसंति (cf. v.l. 24). — $^{b}$) B Dn $D_{2.4.6}$ $G_3$ पुरुषर्षभ. $D_5$ ह्यसंतः पुरुषाः सदा (cf. 24$^{d}$). — $^{d}$) $T_1$ पृच्छतां; M पृच्छतः (for पृच्छ माम्). $T_1$ प्रवक्ष्यामीह पृच्छतः. — After 25, $T_1$ $G_1$ ins. (an addl.) colophon (*adhy no.*: $T_1$ 297; $G_1$ 298).

**26** $D_1$ missing (cf. v.l. 16). $K_4$ om. 26. — $^{a}$) Hypermetric! $K_3$ किंश्चिद् (for किं स्विद्) almost throughout in this adhy. — $^{d}$) $G_2$ $M_2$ कस्मिंश्चित् (for कस्मिंश्च).

**27** $D_1$ missing (cf. v.l. 16). — $^{b}$) $T_2$ $G_2$ वेदा° (for देवा°). — $^{c}$) K Dc $D_2$ तं; $B_3$ [ए]नं (for the second च). M om. (the second) च. $T_1$ $G_1$ धर्म एवानयति; $T_2$ $G_{2.4}$ अधर्मस्तमस्तं नयति (hypermetric). — $^{d}$) $K_3$ $T_2$ $G_{2.4}$ M स सत्ये (for सत्ये च).

**28** $D_1$ missing (cf. v.l. 16). — $^{a}$) Hypermetric! $K_4$ केनचित्. — $^{c}$) Hypermetric! $K_{1.2}$ $B_{1.2.4}$ $Dc_1$ Dn $D_{2.4.6}$ $G_{3.4}$ केन स्विद् (for केन). $T_2$ $G_2$ द्वितीयो (for द्वितीयवान्). $D_5$ राजन् (for भवति). — $^{d}$) $K_{1.2}$ केन स्विद्बुद्धिमांस्तथा; $D_5$ कथा हि वद बुद्धिमान्.

**29** $D_1$ missing (cf. v.l. 16). — $^{a}$) Hypermetric! — $^{c}$) Hypermetric! $G_{2.4}$ सहाय° (for द्वितीय°). $D_5$ यक्ष (for भवति). — $^{d}$) $Dc_2$ $D_2$ (m as in text) धर्म° (for वृद्ध°).

**30** $D_1$ missing (cf. v.l. 16). — $^{a}$) Dc $T_1$ $G_1$ दैवत्वं. — $^{b}$) =32$^{b}$. $K_1$ किं च धर्मः; $K_4$ (m as in text) किं च कर्म. — $B_1$ om. (hapl.) 30$^{cd}$. — $^{c}$) $K_{1.2}$ किमेषां; $T_1$ $G_4$ क एव; $T_2$ $G_{1.2}$ M क एषां. — $^{d}$) $K_{1.2}$ $D_5$ कश्चैषाम्; $K_3$ परिवादो-; $G_4$ परित्यागो- (for किमेषाम्).

**31** $D_1$ missing (cf. v.l. 16). $G_1$ om. (hapl.) 31–32. — $^{a}$) $K_{1.2}$ एव (for एषां). — $^{b}$) $B_2$ यज्ञ; $D_5$ धर्म; $T_1$ संत (for तप). $K_3$ तपः पथ्यं (for तप एषां). — $^{c}$) $T_1$ भयं वै (for मरणं). — $^{d}$) $B_4$ $Dn_{1.2}$ $G_3$ परीवादो; $M_1$ परित्यागो.

कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ३२

युधिष्ठिर उवाच ।

इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव ।
भयं वै मानुषो भावः परित्यागोऽसतामिव ॥ ३३

यक्ष उवाच ।

किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः ।
का चैका वृश्चते यज्ञं कां यज्ञो नातिवर्तते ॥ ३४

युधिष्ठिर उवाच ।

प्राणो वै यज्ञियं साम मनो वै यज्ञियं यजुः ।
वागेका वृश्चते यज्ञं तां यज्ञो नातिवर्तते ॥ ३५

यक्ष उवाच ।

किं स्विदापततां श्रेष्ठं किं स्विन्निपततां वरम् ।
किं स्वित्प्रतिष्ठमानानां किं स्वित्प्रवदतां वरम् ॥ ३६

युधिष्ठिर उवाच ।

वर्षमापततां श्रेष्ठं बीजं निपततां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रवदतां वरः ॥ ३७

यक्ष उवाच ।

इन्द्रियार्थाननुभवन्बुद्धिमाँल्लोकपूजितः ।
संमतः सर्वभूतानामुच्छ्वसन्को न जीवति ॥ ३८

युधिष्ठिर उवाच ।

देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ३९

यक्ष उवाच ।

किं स्विद्गुरुतरं भूमेः किं स्विदुच्चतरं च खात् ।
किं स्विच्छीघ्रतरं वायोः किं स्विद्बहुतरं नृणाम् ॥ ४०

युधिष्ठिर उवाच ।

माता गुरुतरा भूमेः पिता उच्चतरश्च खात् ।
मनः शीघ्रतरं वायोश्चिन्ता बहुतरी नृणाम् ॥ ४१

यक्ष उवाच ।

किं स्वित्सुप्तं न निमिषति किं स्विज्जातं न चोपति । C. 3. 17346 B. 3. 313. 61 K. 3. 314. 63

---

**32** $D_1$ missing (cf. v.l. 16). $G_1$ om. 32 (cf. v.l. 31). $K_1$ reads $32^{ab}$, 33 after 35; $K_2$ reads 32–33 after 35. — $32^{b}=30^{b}$. — $K_1$ om. (hapl.) $32^{cd}$. — $^{c}$) S (except $G_3$; $G_1$ om.) एषां (for चैषां).

**33** $D_1$ missing (cf. v.l. 16). For sequence in $K_{1.2}$ cf. v.l. 32. — $^{b}$) $K_3$ $D_5$ यज्ञा; S (except $G_3$) दानम् (for यज्ञ). — $^{c}$) $T_1$ $G_1$ मरणं (for भयं वै); cf. $31^{c}$. — $^{d}$) $K_{1.2}$ परिवादोसता°.

**34** $D_1$ missing (cf. v.l. 16). For $K_{1.2}$ cf. v.l. 32. — $^{a}$) $D_5$ S (except $G_3$) याज्ञियं. — $^{b}$) S (except $T_1$ $G_3$) याज्ञियं. — $^{c}$) $B_{1.2.4}$ Dn $D_{2.4.6}$ $G_3$ चैषां; $T_2$ चैता (for चैका). B Dc Dn $D_{2.4.6}$ $G_3$ वृणुते; $T_1$ $G_1$ पृच्छते; $T_2$ विशते (for वृश्चते).

**35** $D_1$ missing (cf. v.l. 16). For $K_{1.2}$ cf. v.l. 32. — $^{ab}$) S (except $G_3$) याज्ञियं (in both places). — $^{c}$) $T_2$ विशते (for वृश्चते). B Dc Dn $D_{2.4.6}$ $T_1$ $G_{1.3}$ ऋगेका वृणु($T_1$ $G_1$ पृच्छ)ते यज्ञं. — After 35, $K_1$ reads $32^{ab}$ and 33.

**36** $D_1$ missing (cf. v.l. 16). — $^{a}$) $K_{1-3}$ $B_{3.4}$ Dn $D_{4.6}$ $G_3$ आवपतां; $M_2$ आतपतां (for आपततां). — $^{b}$) $K_{1.2}$ B $Dc_1$ $Dn_1$. $n_2$ $D_{4.6}$ $G_3$ निवपतां; $K_3$ $D_2$ $G_4$ निपतितां; $G_1$ आपततां. — $^{c}$) M किं स्वित्प्रतिष्ठतां श्रेष्ठं. — $^{d}$) B Dc Dn $D_{2.4.6}$ $G_3$ प्रसवतां (for प्रवदतां).

**37** $D_1$ missing (cf. v.l. 16). — $^{a}$) Dn $D_{4.6}$ $G_3$ आवपतां (for आपततां). — $^{b}$) N (except $D_2$; $K_4$ orig. as in text; $D_{1.3}$ missing) $T_1$ $G_{1.3}$ निवपतां (for निपततां). — $^{c}$) M गावः प्रतिष्ठतां श्रेष्ठाः. — $^{d}$) $B_{1-3}$ D (except $D_5$; $D_{1.3}$ missing) $G_3$ प्रसवतां; $B_4$ प्रवसतां (for प्रवदतां).

**38** $D_1$ missing (cf. v.l. 16). $M_2$ om. the ref. — $^{b}$) Dc $D_2$ (marg. *sec. m.* as in text) लोकविश्रुतः. — $^{c}$) $B_3$ संपन्नः; $B_4$ सर्वतः; $T_2$ $G_{2.4}$ निंदकः (for संमतः).

**39** $D_1$ missing (cf. v.l. 16). $B_3$ om. the ref. — $^{d}$) $K_4$ $T_1$ $G_1$ M स न; $D_5$ स च (for न स).

**40** $D_1$ missing (cf. v.l. 16). — $^{a}$) $T_2$ $G_{1.2.4}$ गुरुतरा; M °तरी. — $^{b}$) $T_1$ $G_1$ उच्चतरश्च; $G_4$ उच्चरितां. $D_5$ बलं; $M_1$ नभात्. — $^{c}$) K $D_5$ वातात् (for वायोः). — $^{d}$) $T_1$ शीघ्रतरा; $T_2$ $G_{2.4}$ बहुतरी. $K_4$ $B_{1.3}$ Dn $D_{2.4.6}$ $G_3$ तृणात् (for नृणाम्).

**41** $D_1$ missing (cf. v.l. 16). — $^{a}$) $B_3$ Dc $D_2$ (before corr.). $_4$ M गुरुतरी. — $^{b}$) $T_1$ $G_1$ M शुच्चतरश्च; $G_2$ उच्चतरं; $G_4$ उच्चरितश्च (for उच्चतरश्च). $D_5$ ततः (for च खात्). K B Dc Dn $D_{2.4.6}$ $G_3$ खात्पितोच्चतरस्तथा ($K_{1.2.4}$ °रः स्मृतः; $K_3$ °रस्ततः). — $^{c}$) $K_3$ जलं (for मनः).

C. 3. 17346
B. 3. 313. 61
K. 3. 314. 63

कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते ॥ ४२

युधिष्ठिर उवाच ।

मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ४३

यक्ष उवाच ।

किं स्वित्प्रवसतो मित्रं किं स्विन्मित्रं गृहे सतः ।
आतुरस्य च किं मित्रं किं स्विन्मित्रं मरिष्यतः ॥ ४४

युधिष्ठिर उवाच ।

सार्थः प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ४५

यक्ष उवाच ।

किं स्विदेको विचरति जातः को जायते पुनः ।
किं स्विद्धिमस्य भैषज्यं किं स्विदावपनं महत् ॥ ४६

युधिष्ठिर उवाच ।

सूर्य एको विचरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ॥ ४७

यक्ष उवाच ।

किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः ।
किं स्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखम् ॥ ४८

युधिष्ठिर उवाच ।

दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ४९

यक्ष उवाच ।

किं स्विदात्मा मनुष्यस्य किं स्विद्दैवकृतः सखा ।

---

N ($D_{1.3}$ missing) $G_3$ वातात् (for वायोः). — $^{d}$) $D_5$ घृणा (for चिन्ता). K (except $K_3$) बहुतरा; $Dn_3$ $G_1$ बहुतरं. $K_4$ $B_{1.3}$ Dn $D_{2.4.6}$ $G_3$ तृणात् (for नृणाम्).

**42** $D_1$ missing (cf. v.l. 16). — $^{a}$) Hypermetric! $K_3$ Dc $D_2$ S (except $G_3$) सुप्तो. $K_3$ $D_5$ मिषति; $K_4$ S (except $T_2$ $G_3$) निमिषेत् (for निमिषति). — $^{b}$) $T_1$ $G_{1.2}$ न चेंगति ($G_2$ °ते); $T_2$ $G_4$ च नेंगते. — $^{c}$) $K_{3.4}$ $Dn_3$ $M_1$ कस्यचिद्; $T_2$ $G_{2.4}$ कस्य वा. — $^{d}$) $T_2$ $G_{2.4}$ का च (for किं स्विद्).

**43** $D_1$ missing (cf. v.l. 16). — $^{ab}$) $D_5$ सुप्तो न मत्स्यो (for मत्स्यः सुप्तो न). $K_{1.2}$ निमिषति अंडं ($K_2$ °ड-) जातं; $K_3$ निमिषत्यंबुं जातं; $K_4$ $T_1$ $G_{1.2.4}$ M निमिषेदंडं ($T_1$ $G_{2.4}$ °ड-) जातं; $D_5$ मिषति अंडजातं. $T_1$ $G_1$ न चेंगति; $T_2$ च नेंगते; $G_{2.4}$ न चेंगते.

**44** $D_1$ missing (cf. v.l. 16). — $^{a}$) $T_1$ $G_1$ किं स्विन्मित्रं प्रवसतः. — $^{c}$) $M_1$ मित्रं किं (by transp.).

**45** $D_1$ missing (cf. v.l. 16). — $^{a}$) S (except $G_3$) विद्या (for सार्थः). — $^{b}$) $D_5$ मित्रं भार्या (by transp.). — $^{d}$) $D_5$ पुण्यं (for दानं). — After 45, B Dc Dn $D_{2.4.6}$ $G_3$ ins.:

1382*
यक्ष उवाच ।
कोऽतिथिः सर्वभूतानां किं स्विद्धर्मं सनातनम् ।
अमृतं किं स्विद्राजेन्द्र किं स्वित्सर्वमिदं जगत् ।
युधिष्ठिर उवाच ।
अतिथिः सर्वभूतानामग्निः सोमो गवामृतम् ।
सनातनोऽमृतो धर्मो वायुः सर्वमिदं जगत् ।

[(L. 2) $B_4$ Dc अमृतं किं गवां चैव. — (L. 3) Dc सर्वभूतातिथिर्वह्निर्धर्मः सत्यं सनातनः. — (L. 4) Dc सोमेमृतं गवां चैव (for prior half).]

**46** $D_1$ missing (cf. v.l. 16). — $^{a}$) $K_4$ Dc कश्चिद्; $D_4$ कः स्विद्. $K_{1.2}$ B Dn $D_{2.4.6}$ $G_3$ विचरते. — $^{c}$) T $G_{1.2.4}$ हिमस्य भेषजं किं स्वित्. — $^{d}$) $M_{1.2}$ (*inf. lin.* as in text) °वचनं (for °वपनं). Dc किं स्विदायतनं जगत्.

**47** $D_1$ missing (cf. v.l. 16). — $^{a}$) B Dn $D_{2.4.6}$ $G_3$ $M_1$ विचरते. $G_{1.4}$ सूर्यं एकाकी चरति. — $^{c}$) $T_1$ भिषजं; $T_2$ $G_{1.2.4}$ भेषजं. — $^{d}$) Cf. 1. 83. 13$^{d}$. $M_1$ °वचनं (for °वपनं).

**48** $D_1$ missing (cf. v.l. 16). — $^{a}$) $K_{1.2}$ °पदे. $Dc_2$ $Dn_3$ $D_{2.5}$ $G_3$ धर्मं; $T_1$ $G_1$ मित्रं; $M_2$ धन्यं. — $^{b}$) $K_{1.2}$ °पदे. — $^{c}$) $K_{1.2}$ °पदे. $K_2$ धर्म्यं; $D_5$ $T_2$ $G_{2.4}$ स्वर्गं. — $^{d}$) $K_{1.2}$ °पदे.

**49** $D_1$ missing (cf. v.l. 16). — $^{a}$) $K_3$ दांतम्; $T_1$ धाष्ट्यंम् (for दाक्ष्यम्). $K_{1.2}$ एकपदे. $D_2$ धर्मं; $T_1$ $G_1$ मित्रं; $M_2$ धन्यं. — $^{b}$) $K_{1.2}$ एकपदे. — $^{c}$) $K_2$ एकपदे; $K_4$ चैकपदं. $D_5$ T $G_{1.2.4}$ स्वर्गं. — $^{d}$) $K_{1.2}$ एकपदे.

**50** $D_1$ missing (cf. v.l. 16). — $^{a}$) $K_4$ कश्चिद्. $T_1$ $G_1$ मनुष्याणां. — $^{b}$) $K_4$ कश्चिद्. $K_2$ $D_5$ S (except $G_3$) देवकृतः. — $D_4$ om. (hapl.) 50$^{c}$–51$^{b}$. — $^{c}$) Hypermetric! $K_{1.2}$ च वै किं स्वित्; $K_3$ किंश्चित्स्यात्; $D_5$ च किं च स्वित् (for किं स्विदस्य). S (except $G_3$) अस्योपजीवनं किं स्वित्. — $^{d}$) M स्विद्दास्ये (cf. v.l. 51).

**51** $D_1$ missing (cf. v.l. 16). $T_2$ om. 51–52; $D_4$

उपजीवनं किं स्विदस्य किं स्विदस्य परायणम् ॥ ५०
युधिष्ठिर उवाच ।
पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥ ५१
यक्ष उवाच ।
धन्यानामुत्तमं किं स्विद्धनानां किं स्विदुत्तमम् ।
लाभानामुत्तमं किं स्वित्किं सुखानां तथोत्तमम् ॥ ५२
युधिष्ठिर उवाच ।
धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेष्ठमारोग्यं सुखानां तुष्टिरुत्तमा ॥ ५३
यक्ष उवाच ।
कश्च धर्मः परो लोके कश्च धर्मः सदाफलः ।
किं नियम्य न शोचन्ति कैश्च संधिर्न जीर्यते ॥ ५४
युधिष्ठिर उवाच ।
आनृशंस्यं परो धर्मस्त्रयीधर्मः सदाफलः ।
मनो यम्य न शोचन्ति सद्भिः संधिर्न जीर्यते ॥ ५५
यक्ष उवाच ।
किं नु हित्वा प्रियो भवति किं नु हित्वा न शोचति ।
किं नु हित्वार्थवान्भवति किं नु हित्वा सुखी भवेत् ॥
युधिष्ठिर उवाच ।
मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति ।
कामं हित्वार्थवान्भवति लोभं हित्वा सुखी भवेत् ॥ ५७
यक्ष उवाच ।
मृतः कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवेत् । C. 3. 17368 B. 3. 313. 83 K. 3. 314. 85

om. 51[ab] (cf. v.l. 50). $M_2$ om. the ref. — [a]) $T_1$ मनुष्याणां. — [b]) $K_{1.2.4}$ S (except $G_3$; $T_2$ om.) देवकृतः. — [c]) $T_1$ $G_1$ उपजीव्यस् (for उपजीवनं). S (except $G_3$; $T_2$ om.) तु (for च). — [d]) M दास्ये (for अस्य); cf. v.l. 50.

**52** $D_1$ missing (cf. v.l. 16). $T_2$ om. 52 (cf. v.l. 51). — [a]) $K_{1.2}$ $G_1$ M धान्यानाम् (for धन्यानाम्). $K_{3.4}$ $Dc_2$ किं स्याद्; $B_2$ किंचिद् (for किं स्विद्). — [b]) B Dn $D_{2.4.6}$ $G_3$ स्यात्किम् (for किं स्विद्). — [c]) $K_{3.4}$ B D ($D_{1.3}$ missing) $G_2$ किं स्यात् (for किं स्वित्). — [d]) $T_1$ $G_1$ तथोत्तरम्. $K_{1-3}$ $D_5$ $G_2$ सुखानां किं स्वि($K_3$ °श्चि)दुत्तमं; $K_4$ B Dc Dn $D_{2.4.6}$ $G_3$ सुखानां स्यात्किमुत्तमं.

**53** $D_1$ missing (cf. v.l. 16). — [a]) $K_{1.2}$ $G_1$ M धान्यानाम् (for धन्या°). — [c]) B Dc Dn $D_{2.4.6}$ $G_3$ श्रेय ($Dc_2$ $Dn_1$ °ष्ठ) आरोग्यं. — [d]) $M_1$ शुभानां तुष्टिरुत्तमं.

**54** $D_1$ missing (cf. v.l. 16). — [a]) S (except $G_3$) किं स्विद्धर्मात् (for कश्च धर्मः). $T_2$ $G_1$ $M_1$ परं (for परो). — [b]) $K_4$ कश्चिद् (for कश्च). — [c]) $K_1$ किं नु भित्वा; $K_2$ किं नु यंत्वा; Dc निनियम्य (for किं नियम्य). — [d]) $K_{1.2}$ केन; $K_4$ (marg. *sec. m.*) $T_1$ $G_1$ $M_2$ कस्य; Dc क्व च; $D_5$ कश्च.

**55** $D_1$ missing (cf. v.l. 16). — [a]) $T_2$ $G_{2.4}$ M परं धर्मात् (for परो धर्मस्); cf. v.l. 54. — [b]) $K_{1.2}$ $D_5$ $T_2$ $G_{1.2.4}$ M त्रेताधर्मः; $T_1$ त्राता धर्मः. — [c]) $K_{1.2}$ यंत्वा; $K_3$ नियम्य (hypermetric); $B_{2.3}$ Dc $M_1$ यस्य (for यम्य). — [d]) $B_{1.2.4}$ Dn $D_{4.6}$ $G_{1.3}$ transp. सद्भिः and संधिः. $B_1$ हीयते (for जीर्यते).

**56** $D_1$ missing (cf. v.l. 16). — [a]) Hypermetric! $B_3$ हत्वा. $K_4$ प्रियो भवति किं हित्वा. — [b]) $B_3$ $Dc_2$ हत्वा. — [c]) Hypermetric! $B_3$ $Dc_2$ हत्वा. $B_4$ Dc [आ]त्म° (for [अ]र्थं°). — [d]) $B_3$ $Dc_2$ हत्वा.

**57** $D_1$ missing (cf. v.l. 16). — [a]) Hypermetric! $B_3$ हत्वा. — [b]) K Dc $D_5$ लोभं (for क्रोधं). $B_3$ हत्वां. — [c]) Hypermetric! $B_{1.3}$ हत्वा. $B_4$ Dc [आ]त्म° (for [अ]र्थं°). — [d]) $K_{1.3.4}$ Dc क्रोधं; $D_5$ कोपं (for लोभं). $B_3$ हत्वा. — After 57, B Dc Dn $D_{2.4.6}$ $T_2$ $G_{2-4}$ ins.:

1383* यक्ष उवाच ।
किसर्थं ब्राह्मणे दानं किमर्थं नटनर्तके ।
किमर्थं चैव भृत्येषु किमर्थं चैव राजसु ।
युधिष्ठिर उवाच ।
धर्मार्थं ब्र ह्मणे दानं यशोर्थं नटनर्तके ।
भृत्येषु भरणार्थं वै भयार्थं चैव राजसु ।
यक्ष उवाच ।
केन स्विदावृतो लोकः केन स्विन्न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ।
युधिष्ठिर उवाच ।
अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ।

[(L. 4) $B_1$ कर्मार्थं चैव भृत्येषु; $T_2$ $G_{2.4}$ संग्रामार्थं च भृत्येषु (for the prior half). $B_1$ प्रियार्थं for भयार्थं).]

**58** $D_1$ missing (cf. v.l. 16). — [a]) S (except $G_3$) कथं मृतः (by transp.). — [c]) $K_{1.2}$ कथं मृतं (by

C. 3. 17368 B. 3. 313. 83 K. 3. 314. 85 श्राद्धं मृतं कथं च स्यात्कथं यज्ञो मृतो भवेत् ॥ ५८

युधिष्ठिर उवाच ।

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ५९

यक्ष उवाच ।

का दिक्किमुदकं प्रोक्तं किमन्नं पार्थ किं विषम् ।
श्राद्धस्य कालमाख्याहि ततः पिब हरस्व च ॥ ६०

युधिष्ठिर उवाच ।

सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषम् ।
श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ॥ ६१

यक्ष उवाच ।

व्याख्याता मे त्वया प्रश्ना याथातथ्यं परंतप ।
पुरुषं त्विदानीमाख्याहि यश्च सर्वधनी नरः ॥ ६२

युधिष्ठिर उवाच ।

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ।
यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ६३
तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च ।
अतीतानागते चोभे स वै सर्वधनी नरः ॥ ६४

यक्ष उवाच ।

व्याख्यातः पुरुषो राजन्यश्च सर्वधनी नरः ।
तस्मात्तवैको भ्रातॄणां यमिच्छसि स जीवतु ॥ ६५

युधिष्ठिर उवाच ।

श्यामो य एष रक्ताक्षो बृहच्छाल इवोद्गतः ।
व्यूढोरस्को महाबाहुर्नकुलो यक्ष जीवतु ॥ ६६

यक्ष उवाच ।

प्रियस्ते भीमसेनोऽयमर्जुनो वः परायणम् ।

---

transp.). B Dn $D_{2. 4. 6}$ $G_3$ वा; $D_5$ हि (for च).

**59** $D_1$ missing (cf. v.l. 16). — $^{c}$) S (except $G_3$) अश्रोत्रिये (for °यं).

**60** $D_1$ missing (cf. v.l. 16). — $^{a}$) S (except $G_3$) पार्थ (for प्रोक्तं). $D_5$ किमुदकं नृप प्रोक्तं. — $^{b}$) $B_{1. 2. 4}$ अर्थं; $D_5$ मतं; $T_1$ M रत्नं (for अन्नं). B Dn $D_{2. 4. 6}$ $G_3$ किं च वै (for पार्थ किं). — In $T_1$, the portion from $60^{cd}$ up to the *end* of this parvan is not written; fol. 144 is blank. — $^{d}$) =3. 296. $12^{d}$, $18^{d}$, $37^{d}$, etc. $D_5$ $G_4$ पिबस्व च (for ततः पिब).

**61** $D_1$ $T_1$ missing (cf. v.l. 16; 60). — $^{a}$) $D_5$ संतो ह्युदकमाख्यातं; cf. v.l. 60. — $^{b}$) $D_5$ गौरवं; $G_3$ M गौ रत्नं (for गौरन्नं). $K_2$ पार्थिवा; $T_2$ $G_{1. 2. 4}$ M ब्राह्मणो (for प्रार्थना). — $^{d}$) $T_2$ $G_{1. 2. 4}$ M किं वा त्वं (for कथं वा). — After 61, Dn $D_6$ $G_3$ ins. a long passage given in App. I (No. 32), which from the documentary view-point, is a palpable interpolation, as is also evident from intrinsic considerations.

**62** $D_1$ $T_1$ missing (cf. v.l. 16, 60). — $^{a}$) $Dc_2$ $D_2$ आख्याता (for व्या°). — $^{b}$) $K_{1. 3. 4}$ $D_4$ $M_2$ यथातथ्यं; $T_2$ $G_{1. 2. 4}$ यथातत्त्वं (for याथातथ्यं). — $^{c}$) Hypermetric! B Dn $D_4$ $G_3$ व्याख्याहि (for आ°). — $^{d}$) $D_5$ $G_4$ [ई]श्वरः (for नरः). K यश्च सर्वं ($K_3$ धर्म)धने($K_2$ °नी)श्वरः.

**63** =3. 191. 21. — $T_1$ missing (cf. v.l. 60). $D_1$ resumes. — $^{a}$) $K_4$ दिवि; $Dc_2$ एवं; $G_1$ दिशं (for दिवं). — $^{b}$) $B_{1-3}$ Dc Dn $D_{2. 4. 6}$ पुण्येन कर्मणा. — $^{c}$) $B_{3. 4}$ Dc $D_{2. 4}$ यावान् (for यावत्). Dc $D_2$ हि (for स). — $^{d}$) $B_{3. 4}$ $D_4$ तावान् (for तावत्).

**64** $T_1$ missing (cf. v.l. 60). — $^{a}$) M तुल्यौ प्रियाप्रियौ. — $^{b}$) $D_1$ सुखं दुःखं (for सुखदुःखे). — After $64^{ab}$, $T_2$ $G_{2. 4}$ ins.:

1384* समत्वं यस्य सर्वेषु स वै पुरुष उच्यते ।
भूतभव्यभविष्येषु निःस्पृहः शान्तमानसः ।

— $^{c}$) $B_2$ अतीतेनागते. $G_1$ चैव (for चोभे). $T_2$ $G_{2. 4}$ सुप्रसन्नः सदा योगी. — $^{d}$) Cf. v.l. $62^{d}$. $K_{2. 4}$ °धनेश्वरः (for °धनी नरः). $K_1$ सर्वैः सर्वै धनेश्वरः; $K_3$ स वै धर्मधनीश्वरः; $D_1$ सर्वै सर्वधनेश्वरः.

**65** $T_1$ missing (cf. v.l. 60). — $^{a}$) $K_4$ Dc $D_2$ आख्यातः (for व्या°). — $^{b}$) $K_{1. 2. 4}$ $D_1$ °धनेश्वरः; $K_3$ $D_5$ $G_4$ °धनीश्वरः (for °धनी नरः). — $^{c}$) B Dn $D_{4. 6}$ त्वमेकं; $G_2$ तवैके; $G_3$ तवैकं (for तवैको).

**66** $T_1$ missing (cf. v.l. 60). — $^{b}$) $K_{1-3}$ बृहत्साल; Dc $D_2$ °त्साल ($D_2$m *sec. m.* as in text); $T_2$ $G_{1. 2. 4}$ M सालस्कंध. $K_4$ $B_{1. 2}$ Dn $D_{2. 4. 6}$ $G_3$ [उ]त्थितः ($Dn_1$ °च्छ्रितः); $B_3$ [उ]द्धृतः (for [उ]द्गतः).

**67** $T_1$ missing (cf. v.l. 60). — $^{b}$) K Dc $D_{1. 2. 5}$ ते; $T_2$ $G_{1. 2. 4}$ M च (for वः). $B_1$ Dc $D_5$ $G_4$ परायणः. — $^{c}$) $T_2$ $G_{2. 4}$ त्वं (for स). B (except $B_3$) $Dn_3$

स कस्मान्नकुलं राजन्सापत्नं जीवमिच्छसि ॥ ६७
यस्य नागसहस्रेण दशसंख्येन वै बलम् ।
तुल्यं तं भीममुत्सृज्य नकुलं जीवमिच्छसि ॥ ६८
तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव ।
अथ केनानुभावेन सापत्नं जीवमिच्छसि ॥ ६९
यस्य बाहुबलं सर्वे पाण्डवाः समुपाश्रिताः ।
अर्जुनं तमपाहाय नकुलं जीवमिच्छसि ॥ ७०

युधिष्ठिर उवाच ।

आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम् ।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥ ७१
धर्मशीलः सदा राजा इति मां मानवा विदुः ।
स्वधर्मान्न चलिष्यामि नकुलो यक्ष जीवतु ॥ ७२
यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।
मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ॥ ७३

यक्ष उवाच ।

यस्य तेऽर्थाच्च कामाच्च आनृशंस्यं परं मतम् ।
तस्मात्ते भ्रातरः सर्वे जीवन्तु भरतर्षभ ॥ ७४　　C. 3. 17418 B. 3. 313. 133 K. 3. 314. 136

इति श्रीमहाभारते आरण्यकपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

---

$D_{1.2.4.6}$ $G_3$ नकुलो (for °लं). — $^d$) =69$^d$. $D_5$ सांप्रतं; $G_2$ सापत्न्यं; $G_4$ सापत्यं. $G_1$ जीवयिष्यसि (for °मिच्छसि).

**68** $T_1$ missing (cf. v.l. 60). $K_2$ om. (hapl.) 68–70; $G_1$ om. (hapl.) 68–69. $K_4$ reads 68–70 in marg. *sec. m.* — $^a$) M नागसहस्रस्य. — $^b$) K ($K_2$ om.) $B_{2-4}$ Dc $D_{1.2}$ (before corr.) शतसंख्येन; M दशसंख्यस्य. — $^c$) $D_5$ तमुत्सृज्य कथं भीमं. — $^d$) M कस्मान्नकुलमिच्छसि.

**69** $T_1$ missing (cf. v.l. 60). $K_2$ $G_1$ om. 69 (cf. v.l. 68); $K_1$ om. (hapl.) 69–70. — $^a$) $K_4$ $D_1$ $T_2$ $G_{2.4}$ M तथैव; Dc $D_5$ तथेमं. $K_4$ सर्वदा (for मनुजाः). — $^b$) $B_1$ परंतप (for प्रियं तव). — $^c$) $B_2$ [अ]नुमानेन; $D_1$ तु भावेन (for [अ]नुभावेन). — $^d$) =67$^d$. $T_2$ $G_2$ सापक्ष्यं; $G_4$ सापत्यं.

**70** $T_1$ missing (cf. v.l. 60). $K_{1.2}$ om. 70 (cf. v.l. 68, 69). — $^b$) $B_{1-3}$ Dn $D_{4.6}$ $G_3$ °पासते (for °पाश्रिताः). — $^c$) $D_5$ $T_2$ $G_{1.2.4}$ M तमर्जुनं कथं त्यक्त्वा ($D_5$ हित्वा). — After 70, $T_2$ $G_{1.2.4}$ M ins. 1386*.

**71** $T_1$ missing (cf. v.l. 60). — After the ref., $B_{2.4}$ Dc Dn $D_{2.4.6}$ $G_3$ ins.:

1385* धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मं न त्यजामि मा नो धर्मो हतो वधीत् ।
[ =(var.) Manu. 8. 15. ]

— $^a$) =55$^a$. $T_2$ $G_{1.2.4}$ M परं धर्मात् (for परो धर्मः). — $^b$) $K_{1-3}$ $B_4$ $D_{1.5}$ परमार्थश्च ($D_5$ °र्थः स); $T_2$ $G_{2.4}$ °र्थं च. $K_3$ $D_5$ मतः; $T_2$ $G_{1.2.4}$ M प्रियम् (for मतम्). — 71$^d$ =72$^d$, 73$^d$.

**72** $T_1$ missing (cf. v.l. 60). $K_4$ $D_1$ om. (hapl.) 72. — $^a$) $T_2$ $G_{2.4}$ सदाचार (for सदा राजा). — $B_{2.4}$ Dc Dn $D_{2.4.6}$ ins. after 72: $T_2$ $G_{1.2.4}$ M, after 70:

1386* कुन्ती चैव तु माद्री च द्वे भार्ये तु पितुर्मम ।
उभे सपुत्रे स्यातां वै इति मे धीयते मतिः ।

[Before line 1, $G_{1.2.4}$ $M_1$ ins. युधिष्ठिरः. — (L. 1) $B_4$ $T_2$ $G_{1.2.4}$ M च यक्ष (for चैव तु). $T_2$ $G_{1.2.4}$ M पांडोर्भार्ये उभे अपि (for the posterior half). — (L. 2) $T_2$ $G_{1.2.4}$ M माद्र्यास्तु नकुलो जीवेत्कुन्त्या जीवामि चाप्यहं.]

**73** $T_1$ missing (cf. v.l. 60). $K_2$ om. (hapl.) 73. — $^b$) $D_1$ न विशेषोस्ति (by transp.); M विशेषं नास्ति. $G_{2.4}$ [ऽ]नयोः (for तयोः). — $T_2$ $G_4$ om. 73$^{cd}$.

**74** $T_1$ missing (cf. v.l. 60). — $^a$) $T_2$ $G_{1.2.4}$ M यस्मात् (for यस्य). $T_2$ $G_{2.4}$ पार्थं (for ऽर्थाच्च). $T_2$ $G_{1.2.4}$ M धर्माच्च (for कामा°).

Colophon. $D_3$ $T_1$ missing. — *Major parvan:* $K_{1.2}$ $Dn_2$ $G_{2.4}$ आरण्य. — *Sub-parvan:* $K_3$ $D_{1.5}$ आरणेय; $B_{1.3.4}$ अरणीय; $B_2$ Dn $D_6$ $G_3$ अ($Dn_1$ आ)रणीहरण; Dc $D_4$ आरणीय; $D_2$ corrupt; $M_1$ अरणि. — *Adhy. name:* $T_2$ $G_2$ यक्षप्रश्ने यक्षप्रसादः; $G_1$ यक्षप्रश्नः. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ 311; $Dn_3$ 312; $D_1$ 314; $T_2$ 31 (for 301); $G_1$ 129 (wrongly for 298); $G_2$ 300; $G_4$ $M_{1.2}$ (*inf. lin.*) 301 ($M_2$ orig. 303). — *Śloka no.:* $Dn_1$ 26(? for 126); $Dn_2$. $n_3$ $D_2$ (*sec. m.*) 131; $D_1$ 74.

## 298

☞ In $D_3$, this adhy. is lost on missing fol. (cf. v.l. 3. 287. 10); $T_1$ leaves a lacuna in its place; the MSS. are mostly ignored here.

**1** $^b$) $K_{2.3}$ उदतिष्ठंति. — $^c$) $T_2$ $G_{2.4}$ क्षुत्पिपासा

# २९८

वैशंपायन उवाच ।

C. 3. 17419 B. 3. 314. 1 K. 3. 315. 1 ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवाः ।
क्षुत्पिपासे च सर्वेषां क्षणे तस्मिन्व्यगच्छताम् ॥ १

युधिष्ठिर उवाच ।

सरस्येकेन पादेन तिष्ठन्तमपराजितम् ।
पृच्छामि को भवान्देवो न मे यक्षो मतो भवान् ॥ २
वसूनां वा भवानेको रुद्राणामथ वा भवान् ।
अथ वा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ॥ ३
मम हि भ्रातर इमे सहस्रशतयोधिनः ।
न तं योगं प्रपश्यामि येन स्युर्विनिपातिताः ॥ ४
सुखं प्रतिविबुद्धानामिन्द्रियाण्युपलक्षये ।
स भवान्सुहृदस्माकमथ वा नः पिता भवान् ॥ ५

यक्ष उवाच ।

अहं ते जनकस्तात धर्मो मृदुपराक्रम ।
त्वां दिदृक्षुरनुप्राप्तो विद्धि मां भरतर्षभ ॥ ६
यशः सत्यं दमः शौचमार्जवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ७
अहिंसा समता शान्तिस्तपः शौचममत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियो ह्यसि सदा मम ॥ ८
दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्पदी जिता ।
द्वे पूर्वे मध्यमे द्वे च द्वे चान्ते सांपरायिके ॥ ९
धर्मोऽहमस्मि भद्रं ते जिज्ञासुस्त्वामिहागतः ।
आनृशंस्येन तुष्टोऽस्मि वरं दास्यामि तेऽनघ ॥ १०
वरं वृणीष्व राजेन्द्र दाता ह्यस्मि तवानघ ।

---

(see below). — $^{d}$) $K_{2}$ विगच्छतां; $K_{4}$ $D_{5}$ अगच्छतां; $G_{1}$ अनश्यतां (for व्यगच्छताम्). $B_{2}$ Dn $D_{1.4.6}$ $G_{3}$ क्षणेन व्यपगच्छतां; $T_{2}$ $G_{2.4}$ तत्क्षणादेव हन्यते (see above).

**2** $^{b}$) $T_{2}$ $G_{2}$ तिष्ठंस्त्वाम् (for तिष्ठन्तम्). — $^{d}$) $K_{1.2}$ भवान्मतः (by transp.).

**3** $T_{2}$ $G_{2.4}$ $M_{1}$ om. (hapl.) $3^{ab}$; $M_{2}$ damaged. — $^{c}$) $G_{1}$ एको (for श्रेष्ठो). Dc $D_{2}$ मरुतां चाथ वा श्रेष्ठो. — $^{d}$) $K_{4}$ $D_{1}$ यदि (for वज्री). $K_{4}$ त्रिदिवे° (for त्रिदशे°).

**4** $^{ab}$) $M_{2}$ damaged. $K_{4}$ वा (for हि). $K_{4}$ $D_{1}$ केन (for इमे). — $^{c}$) $B_{1.4}$ न तं योधं; $B_{2.3}$ Dn $D_{4.6}$ $G_{3}$ तं योधं न; $T_{2}$ $G_{2.4}$ न ते योधान् (for न तं योगं). — $^{d}$) B Dn $D_{2.4.6}$ $G_{3}$ येन सर्वे निपातिताः.

**5** $^{a}$) $K_{1-3}$ $G_{2.4}$ M सुख- (for सुखं). $K_{1.2}$ $B_{1.3.4}$ Dn $D_{4.6}$ $G_{3}$ प्रतिप्र°; $T_{2}$ विप्रति° (for प्रतिवि°). $D_{1}$ सुसुखं प्रतिबुद्धानाम्. — $B_{2}$ om. $5^{cd}$. — $^{c}$) $K_{2}$ $D_{5}$ भवान्वै; $K_{3}$ भगवान् (for स भवान्). $B_{1.3}$ Dn $D_{2.4.6}$ $G_{3}$ सुहृदोस्माकम्.

**6** K $D_{1.5}$ धर्मः ($K_{2}$ श्रीधर्मः) (for यक्षः). — $^{b}$) K Dc $D_{1.2.5}$ धर्मो वीर ($K_{1.2}$ $D_{1}$ °रः) सनातनः ($D_{2}$ °तन); M धर्मोमितपराक्रम ($M_{1}$ °मः). — $^{c}$) $G_{1}$ इह (for अनु-). K $D_{5}$ °क्षुमनुप्राप्तं. — $^{d}$) $T_{2}$ $G_{1.2.4}$ M तद्विद्धि (for विद्धि मां). $K_{2}$ Dc भरतर्षभः; $G_{2}$ पुरुषर्षभ.

**7** $^{a}$) $B_{3}$ transp. सत्यं and शौचं. $K_{3}$ $D_{5}$ M तपः (for दमः). — $^{b}$) K Cnp (!) मार्दवं (for आर्जवं). $B_{2}$ श्रीर् (m ह्रीर् as in text). — $^{c}$) $K_{3}$ $T_{2}$ $G_{2.4}$ M दमो (for तपो). — $^{d}$) Dc $D_{2}$ $G_{1}$ [ए]ते (for [ए]तास्). $B_{2}$ $G_{1}$ तनया (for तनवो).

**8** $^{a}$) $B_{3}$ $T_{2}$ $G_{1.2.4}$ M अहिंसा संयमः क्षांतिस् ($B_{3}$ शांतिस्). — $^{b}$) $M_{1}$ आनृशंस्यम् (for तपः शौचम्). $K_{1.2}$ अमत्सरं. — $^{c}$) $T_{2}$ $G_{2.4}$ दारान् (for द्वाराणि). — $^{d}$) $B_{4}$ [ऽ]सि त्वं (for ह्यसि). $T_{2}$ $G_{2.4}$ सुतो (for सदा).

**9** $^{a}$) $K_{1.2}$ [अ]रक्तो° (for रक्तो°). — $^{b}$) $D_{5}$ [ई]क्षिता (m जिता as in text). $D_{1}$ दिष्ट्या तेष्वद्य जीविता; $G_{1}$ दिष्ट्या तेषां प्रतिष्ठिताः. — $D_{1}$ om. $9^{cd}$. — $^{c}$) $T_{2}$ $G_{1.2.4}$ M चोभे (for द्वे च). — $^{d}$) $K_{1}$ $T_{2}$ $G_{1.2.4}$ द्वे चान्ये; $K_{2}$ $M_{1}$ द्वे चांत्ये (for द्वे चान्ते).

**10** $^{a}$) B Dn $D_{4.6}$ $G_{3}$ इति; $D_{5}$ वत्स (for अस्मि). $T_{2}$ $G_{1.2.4}$ अहं प्रीतोस्मि भद्रं ते. — $^{b}$) $K_{4}$ अहं गतः; $G_{1}$ उपागतः (for इहा°). — $^{c}$) $M_{1}$ [ऽ]हं (for ऽस्मि). — $^{d}$) $KD_{1}$ वरान् (for वरं). — After 10, $K_{4}$ ins. (a gloss on the word षट्पदी of stanza 9):

1387* कामक्रोधौ तु प्रथमौ लोभमोहौ तु मध्यमौ ।
अन्ते भयविषादौ च एषा सा षट्पदी स्मृता ।

**11** $K_{1.2}$ $B_{2}$ om. (hapl.) $11^{ab}$. — $^{a}$) $K_{3.4}$ Dc $D_{2.5}$ M वरान् (for वरं). — $^{b}$) $K_{4}$ दातास्मि तव चानघ; $D_{1}$ ददामि च तवा°; $G_{1}$ दातास्मि हि तवा°. — $^{c}$) M मां

ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ॥ ११

युधिष्ठिर उवाच ।

अरणीसहितं यस्य मृग आदाय गच्छति ।
तस्याग्नयो न लुप्येरन्प्रथमोऽस्तु वरो मम ॥ १२

धर्म उवाच ।

अरणीसहितं तस्य ब्राह्मणस्य हृतं मया ।
मृगवेषेण कौन्तेय जिज्ञासार्थं तव प्रभो ॥ १३

वैशंपायन उवाच ।

ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
अन्यं वरय भद्रं ते वरं त्वममरोपम ॥ १४

युधिष्ठिर उवाच ।

वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम् ।
तत्र नो नाभिजानीयुर्वसतो मनुजाः क्वचित् ॥ १५

वैशंपायन उवाच ।

ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
भूयश्चाश्वासयामास कौन्तेयं सत्यविक्रमम् ॥ १६
यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् ।
न वो विज्ञास्यते कश्चित् त्रिषु लोकेषु भारत ॥ १७
वर्षं त्रयोदशं चेदं मत्प्रसादात्कुरूद्वहाः ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ ॥ १८
यद्वः संकल्पितं रूपं मनसा यस्य यादृशम् ।
तादृशं तादृशं सर्वे छन्दतो धारयिष्यथ ॥ १९
अरणीसहितं चेदं ब्राह्मणाय प्रयच्छत ।
जिज्ञासार्थं मया ह्येतदाहृतं मृगरूपिणा ॥ २०
तृतीयं गृह्यतां पुत्र वरमप्रतिमं महत् ।
त्वं हि मत्प्रभवो राजन्विदुरश्च ममांशभाक् ॥ २१ C. 3. 17440 B. 3. 314. 22 K. 3. 315. 22

(for मे). $G_1$ सक्ता (for भक्ता). — $^{d}$) $D_5$ अपि (for अस्ति).

**12** $^{a}$) =(var.) $13^{a}$. $T_2$ $G_{1.2.4}$ M तु हृता (for °सहितं). — $K_{1.2}$ om. (hapl.) $12^{b}$–$13^{a}$. — $^{b}$) $K_3$ B Dn $D_{4.6}$ $G_3$ मृगो ह्यादाय गच्छति; $T_2$ $G_{2.4}$ तां वृणे वदतां वर; $G_1$ M मृगेण तप($G_1$ दद)तां वर.

**13** $K_{1.2}$ om. $13^{a}$ with the ref. (cf. v.l. 12). — $D_5$ om. 13–14. $B_{1.2}$ Dn $D_{2.4.6}$ $G_3$ यक्षः (for धर्मः). — $^{a}$) =(var.) $12^{a}$. $K_4$ $B_3$ Dn $D_{1.4.6}$ $G_3$ ह्यस्य (for तस्य). $T_2$ $G_{1.2.4}$ M आरणेयमिदं तस्य. — $^{c}$) $K_{1.2}$ $B_{3.4}$ मृगवेशेन; $B_3$ $T_2$ $G_{1.2.4}$ M °रूपेण. — $^{d}$) $T_2$ $G_{1.2.4}$ [अ]नघ (for प्रभो).

**14** $D_5$ om. 14 (cf. v.l. 13). — $14^{ab}$=$16^{ab}$. — $^{a}$) $K_4$ $D_1$ $T_2$ $G_4$ ददामी° (for ददानी°). — $^{b}$) $K_3$ Dc $D_2$ प्रत्यभाषत. — $K_3$ om. (hapl.) $14^{c}$–$16^{b}$. — $^{d}$) $T_2$ $G_{2.4}$ देयं (for वरं). M °त्तम (for °पम).

**15** $K_3$ om. 15 (cf. v.l. 14). — $^{c}$) $D_1$ $T_2$ $G_{1.2.4}$ M तच्च (for तत्र). $D_5$ $T_2$ $G_{2.4}$ ते ($G_2$ नो) न वि° (for नो नाभि°). — $^{d}$) $G_{1.2.4}$ सर्वतो (for वसतो).

**16** $K_3$ om. $16^{ab}$ (cf. v.l. 14). — $16^{ab}$=$14^{ab}$. — $^{a}$) $K_4$ $D_1$ $T_2$ ददामी°. — $^{b}$) $K_4$ $Dc_2$ $D_{1.2}$ प्रत्यभाषत. — $Dc_1$ om. $16^{cd}$. — $^{cd}$) $T_2$ $G_{2.4}$ भूयश्चापि हि कौंतेयमवदत्सत्य°.

**17** Before 17, $K_4$ Dc $D_{1.2}$ $M_1$ ins. धर्म उ° (resp. धर्मः). — $^{b}$) $T_2$ $G_{2.4}$ $M_2$ चरिष्यसि (for °थ). — $^{c}$) $T_2$ $G_{2.4}$ च (for वो). — $^{d}$) $G_1$ मानवः (for भारत).

**18** $^{a}$) K चेमं; B Dn $D_{4.6}$ $G_3$ इदं ($B_3$ °मं); $T_2$ $G_{1.2.4}$ चैव; M चैतन् (for चेदं). — $^{b}$) $D_5$ $T_2$ $G_{2.4}$ °त्कुरूद्वह. — $^{c}$) $K_4$ $G_{2.4}$ रूढा (for गूढा). — $^{d}$) $G_{2.4}$ M अज्ञाता विचरि°.

**19** $^{a}$) $T_2$ $G_{1.2.4}$ $M_2$ यद्वा (for यद्वः). — $^{b}$) $T_2$ $G_{2.4}$ यस्य वै; $G_1$ M यस्य यत् (for यादृशम्). — $^{c}$) Dc $D_2$ भ्रातॄणां ($D_2$ marg. *sec. m.* as in text) (for the *first* तादृशं). Dc $D_2$ (marg. *sec. m.* as in text) $T_2$ $G_{1.2.4}$ रूपं (for सर्वे). — $^{d}$) $K_{1.2}$ छद्मतो; $T_2$ छन्नं वै; $G_1$ तत्तथा; $G_{2.4}$ छन्नं वो.

**20** $^{a}$) $T_2$ $G_{1.2.4}$ M भांडं (for चेदं). — $^{b}$) $K_{2.3}$ $D_5$ ब्राह्मणस्य. $K_3$ प्रयच्छति; $Dc_2$ °तु; $D_5$ $G_1$ $M_1$ °थ (for °त). — $^{cd}$) $B_2$ तात गृहीतं (for ह्येतदाहृतं). — After 20, $B_{1.3.4}$ Dc Dn $D_{2.4.6}$ $G_3$ ins.:

1388* प्रवृणीष्वापरं सौम्य वरमिष्टं ददानि ते ।
न तृप्यामि नरश्रेष्ठ प्रयच्छन्वै वरांस्तव ।

**21** $^{a}$) $D_1$ उच्यतां (for गृह्यतां). $T_2$ $G_{1.2.4}$ M तृती($G_{2.4}$ त्वदी)यं च गृहाण त्वं. — $^{b}$) $T_2$ $G_{2.4}$ वरं मत्प्रभवं; $G_1$ परमं प्रीतिदं. K Dc $D_{1.2.5}$ भुवि (for महत्). — $^{c}$) $B_4$ मत्संभवो (for मत्प्र°). — $^{d}$) B Dn $D_{4.6}$ $G_3$ ममांशजः; $D_1$ °कः (for °भाक्).

**22** $^{a}$) $K_4$ देवरूपो; $T_2$ $G_{2.4}$ देवदेव. — $^{b}$) $K_4$

C 3. 17441
B. 3 314. 23
K. 3. 315. 23

युधिष्ठिर उवाच ।

देवदेवो मया दृष्टो भवान्साक्षात्सनातनः ।
यं ददासि वरं तुष्टस्तं ग्रहीष्याम्यहं पितः ॥ २२

जयेयं लोभमोहौ च क्रोधं चाहं सदा विभो ।
दाने तपसि सत्ये च मनो मे सततं भवेत् ॥ २३

धर्म उवाच ।

उपपन्नो गुणैः सर्वैः स्वभावेनासि पाण्डव ।
भवान्धर्मः पुनश्चैव यथोक्तं ते भविष्यति ॥ २४

वैशंपायन उवाच ।

इत्युक्त्वान्तर्दधे धर्मो भगवाँल्लोकभावनः ।
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः ॥ २५

अभ्येत्य चाश्रमं वीराः सर्व एव गतक्लमाः ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने ॥ २६

इदं समुत्थानसमागमं मह-
त्पितुश्च पुत्रस्य च कीर्तिवर्धनम् ।
पठन्नरः स्याद्विजितेन्द्रियो वशी
सपुत्रपौत्रः शतवर्षभाग्भवेत् ॥ २७

न चाप्यधर्मे न सुहृद्विभेदने
परस्वहारे परदारमर्शने ।
कदर्यभावे न रमेन्मनः सदा
नृणां सदाख्यानमिदं विजानताम् ॥ २८

इति श्रीमहाभारते आरण्यकपर्वणि अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

---

साक्षी (for साक्षात्). — $^c$) $K_3$ $Dc_2$ $D_{1.5}$ $G_1$ यद् (for यं). K Dc $D_{1.2}$ (before corr.). $_5$ मह्यं; $B_{3.4}$ $G_1$ M हृष्टस् (for तुष्टस्). $T_2$ $G_{2.4}$ यं यं वरं ददौ हृष्टस्. — $^d$) $K_{3.4}$ Dc $D_{1.5}$ $G_1$ तद् (for तं). A few MSS. गृहीष्यामि. $K_1$ ततः; $K_3$ $D_5$ $T_2$ $G_4$ पितुः (for पितः).

**23** $^a$) $K_3$ Dc $D_2$ त्यजे° (for जये°). — $^b$) K Dc $D_{1.2.5}$ कामं क्रोधं; $T_2$ $G_{2.4}$ क्रोधं चैव; $G_1$ क्रोधं पापं (for क्रोधं चाहं). — $^c$) $K_4$ $D_1$ धर्मे (for दाने).

**24** $^a$) =(var.) 3. 50. 1$^c$. B Dn $D_{4.6}$ $G_3$ एतैः (for सर्वैः). — $^b$) $T_2$ $G_{1.2.4}$ M [ए]व (for [अ]सि). — $^c$) $K_1$ धर्मे; $K_{2.3}$ $D_1$ धर्मी; Dc धर्म (for धर्मः). $T_2$ $G_{1.2.4}$ M धर्मपरश् (for धर्मः पुनश्). $K_{1.2}$ $B_3$ Dc $D_5$ M चैतद्; $T_2$ $G_{2.4}$ चैको (for चैव). — $^d$) $G_1$ तद् (for ते).

**25** In $B_1$, the portion of the text from 25$^a$ up to 3. 299. 26$^b$ is lost on a missing fol. — $^a$) $K_4$ $D_1$ [अं]तर्हितो (for °र्दधे). — $^d$) K $D_1$ सुखमाप्ता ($K_1$ marg. *sec. m.* °युक्ताः; $K_4$ सुखं प्राप्ता); Dc $D_2$ मुदमाप्ता; $D_5$ सुखसुप्त्वा (for °सुप्ता).

**26** $B_1$ missing (cf. v.l. 25). — $^a$) $B_{2-4}$ Dn $D_{4.6}$ $G_3$ उपेत्य (for अभ्येत्य). — $^b$) $K_3$ $D_1$ गतज्वराः. $K_4$ सर्वे ह्यमिततेजसः. — $^c$) $K_4$ अरणिं प्रददौ तस्मै. — $^d$) $K_4$ $D_1$ मनस्विने; $G_1$ महात्मने (for तप°).

**27** $B_1$ missing (cf. v.l. 25). — $^a$) $K_2$ इत्थं; M इमं (for इदं). $B_{2-4}$ Dn $D_{4.6}$ $T_2$ $G_{2.3}$ °गतं (for °गमं). — $^b$) $T_2$ $G_1$ (by corr.). $_{2.4}$ $M_1$ पुण्य($M_1$ धर्म)कीर्तनं (for कीर्ति°). — $^c$) $K_3$ M पठेन् (for पठन्). — $^d$) $K_3$ °भुक् (for °भाग्). K $B_{3.4}$ Dc $D_{1.2.5}$ तथा (for भवेत्).

**28** $B_1$ missing (cf. v.l. 25). $M_2$ om. 28. — $^a$) $D_5$ [अ]धर्मश्च (for [अ]धर्मे न). $K_{1.2}$ °रोधने; $G_1$ °योजने (for °भेदने). — $^b$) K $B_4$ $D_{1.5}$ °धर्षणे; $B_3$ Dc Dn $D_{2.4.6}$ °मर्षणे; $T_2$ $G_2$ °दर्शने (for °मर्शने). — $^c$) $K_2$ $Dc_2$ कंदर्प°; $T_2$ $G_{1.2.4}$ $M_1$ अकार्य° (for कदर्य°). $K_{1.2}$ $B_3$ $Dn_2$ $n_3$ $D_4$ $G_{1.3}$ $M_1$ च (for न). $K_{1.2}$ $G_{2.4}$ भवेन् (for रमेन्). — $^d$) $B_{3.4}$ इहा° (for सदा°). $K_{1-3}$ Dc $D_{2.5}$ नृणां महाख्यानमिहोपजीव्रतां ($K_2$ °जीवितां; $K_3$ °जीवितं; $D_2$ °जीवतं; $D_5$ °जीवनं); $K_4$ नृणां महाख्यानपदोपजीवनात्; $D_1$ $M_1$ नृणां महाख्यानमिदं हि शृण्वतां; $T_2$ $G_{2.4}$ नृणां वराख्यानवरं च शृण्वतां; $G_1$ नृणां सदाख्यानरवं च शृण्वतां.

Colophon. $B_1$ $D_3$ $T_1$ missing. — *Major parvan:* $K_{1.2}$ $Dn_1$. $n_2$ $T_2$ $G_{1.2.4}$ M आरण्य ($G_{1.2}$ M °ण्यक *also*). — *Sub-parvan:* $K_{1.3}$ $B_4$ $D_{1.5}$ आरणेय; $B_2$ Dn $D_{4.6}$ $G_3$ अरणीहरण; $B_3$ Dc $D_2$ आरणीय; $M_1$ अरणि. $K_{1.3}$ $B_4$ $D_{1.5}$ read समाप्त after sub-parvan name; $G_2$ M read it after major parvan. — *Adhy. name:* $T_2$ $G_{2.4}$ युधिष्ठिरवरलाभः; M वरप्रदानः. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.). $n_2$ (in figure) 312 ($Dn_2$ in words 300); $Dn_3$ 313; $D_1$ 315; $T_2$ $G_4$ $M_1$ 302; $G_1$ 130 (wrongly for 299); $G_2$ 301; $M_2$ (wrongly) 334. — *Śloka no.:* Dn 29; $D_1$ 28.

# २९९

वैशंपायन उवाच ।
धर्मेण तेऽभ्यनुज्ञाताः पाण्डवाः सत्यविक्रमाः ।
अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम् ।
उपोपविश्य विद्वांसः सहिताः संशितव्रताः ॥ १
ये तद्भक्ता वसन्ति स्म वनवासे तपस्विनः ।
तानब्रुवन्महात्मानः शिष्टाः प्राञ्जलयस्तदा ।
अभ्यनुज्ञापयिष्यन्तस्तं निवासं धृतव्रताः ॥ २
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्च निःस्वाश्च बहुशः कृताः ॥ ३
उषिताश्च वने कृच्छ्रं यत्र द्वादश वत्सरान् ।
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ।
तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ ॥ ४
सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिणः ।
युक्ताचाराश्च युक्ताश्च पौरस्य स्वजनस्य च ॥ ५
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि ॥ ६
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्छितोऽभवद्राजा साश्रुकण्ठो युधिष्ठिरः ॥ ७
तमथाश्वासयन्सर्वे ब्राह्मणा भ्रातृभिः सह ।
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा ॥ ८
राजन्विद्वान्भवान्दान्तः सत्यसंधो जितेन्द्रियः ।
नैवंविधाः प्रमुह्यन्ति नराः कस्यांचिदापदि ॥ ९
देवैरप्यापदः प्राप्ताश्छन्नैश्च बहुशस्तथा । C. 3. 17459 B. 3. 315. 12 K. 4. 1. 24

---

☞ In S (except $G_3$), the parvan (major) ends here, our final adhy. (299) being transp. in S (except $G_3$) to the beginning of the next parvan (Virāṭa).

## 299

This adhy. is omitted in $D_5$; in $B_1$ stanzas 1–26$^{ab}$ and in $D_3$ stanzas 1–26 are respectively lost on missing fol. (cf. v.l. 3. 287. 10). The defective MSS. are ignored here up to their resumption. S (except $G_3$) reads this adhy. at the beginning of the Virāṭaparvan (*q. v.*).

**1** $^{a}$) $K_4$ त्वनु° (for ऽभ्यनु°). — $^{b}$) K Dc $D_{1.2}$ सत्यवादिनः. — $^{c}$) $K_{1.2}$ वत्स्यंत° ; $B_4$ उत्स्यंत° (for वत्स्यन्त°). — $^{e}$) $B_{2-4}$ Dn $D_{4.6}$ °विष्टा (for °विश्य). $K_{1.2}$ विश्वस्ताः (for विद्वांसः). — $^{f}$) $K_1$ (by corr.). $_3$ $D_{1.2}$ शंसित° (for संशित°).

**2** $^{b}$) $K_{1.2}$ °वासास ; $D_1$ °वासं (for °वासे). $B_3$ द्विजातयः ; Dc $D_2$ मनस्विनः (for तप°). — $^{d}$) K $D_1$ शिष्याः ; $B_{2-4}$ Dc Dn $D_{2.4.6}$ $T_2$ $G_3$ स्थिताः (for शिष्टाः). K $D_1$ यथा (for तदा). — $^{f}$) $K_4$ $D_1$ स्व- (for तं).

**3** $^{d}$) $B_2$ Dn $D_{4.6}$ [अ]नया° (for निःस्वा°). $K_1$ (*sup. lin. sec. m.*) स ; $K_3$ सु- (for च).

**4** $^{a}$) $B_4$ $D_{4.6}$ स्मो (for च). $B_2$ Dn $D_{4.6}$ कृच्छ्रे ; Dc $D_2$ कृत्स्नं (for कृच्छ्रं). — $^{b}$) $B_2$ Dn $D_{1.4.6}$ वयं (for यत्र). — $^{d}$) $K_{1.2}$ वर्षं- ; $D_1$ वर्षे (for वर्षं). — $^{e}$) $K_1$ क (for तद्). $B_{2.3}$ Dn $D_{4.6}$ वसामो (for वत्स्यामो).

**5** $^{c}$) $K_1$ जानंते (for °नन्तो). — $^{d}$) $B_{3.4}$ Dc $D_2$ अस्मान् (for °सु). $K_1$ (marg. *sec. m.* as in text) [अ]त्यक्त° ; $K_2$ [अ]त्यर्थं° (for [अ]त्यन्त°). — $^{e}$) $B_{2.4}$ त्यक्ता° ; a few MSS. युक्त° (for युक्ता°). — $^{f}$) S क्षये स्वस्य जनस्य च. — After 5, S ins.:

1389* दुरात्मनां हि कस्तेषां विश्वासं गन्तुमर्हति ।

**6** $^{c}$) $K_1$ समनाः (*sup. lin. sec. m.* °माः) ; $K_2$ समंतात् ; $B_3$ समर्थाः (for समस्ताः). — $^{d}$) K $D_1$ वसेमहि ; $B_3$ भवामहे (for भवेमहि).

**7** Before 7, Dn $D_{2.4.6}$ ins. वैशं° उ°. — $^{b}$) $K_2$ $B_{2.3}$ $Dn_1$ $D_4$ Cn [अ]शुचिर् Cnp शुचिर् (as in text). ❀ Cn : अशुचिरार्तिग्रस्तत्वात् । शुचिरित्येव पाठः स्वच्छः । ❀

**8** $^{a}$) $K_{1.2}$ समा° (for अथा°).

**9** $^{a}$) $B_3$ विक्रांतवान् (for विद्वान्भवान्). — $^{b}$) $K_4$ $D_1$ शुचिर्धर्मसुतस्तथा (cf. 7$^{b}$). — $^{c}$) $B_2$ Dn $D_{4.6}$ प्रमुह्यंते.

**10** $^{b}$) $K_{1.2}$ बहुभिस् (for °शस्). — $^{d}$) $K_3$ विग्रहार्थं. $B_4$ दुरात्मनां (for महा°).

**11** $^{a}$) $K_{3.4}$ $D_1$ विषमं (for निषधान्). — $^{b}$) K $B_{3.4}$ Dc $D_{1.2}$ तथा (for तदा). — $^{c}$) Dc $D_2$ °नास्य (for

C. 3. 17459 B. 3. 315. 12 K. 4. 1. 24 तत्र तत्र सपत्नानां निग्रहार्थं महात्मभिः ॥ १०
इन्द्रेण निषधान्प्राप्य गिरिप्रस्थाश्रमे तदा ।
छन्नेनोष्य कृतं कर्म द्विषतां बलनिग्रहे ॥ ११
विष्णुनाश्वशिरः प्राप्य तथादित्यां निवत्स्यता ।
गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरम् ॥ १२
प्राप्य वामनरूपेण प्रच्छन्नं ब्रह्मरूपिणा ।
बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतम् ॥ १३
और्वेण वसता छन्नमूरौ ब्रह्मर्षिणा तदा ।
यत्कृतं तात लोकेषु तच्च सर्वं श्रुतं त्वया ॥ १४
प्रच्छन्नं चापि धर्मज्ञ हरिणा वृत्रनिग्रहे ।
वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ॥ १५
हुताशनेन यच्चापः प्रविश्य छन्नमासता ।
विबुधानां कृतं कर्म तच्च सर्वं श्रुतं त्वया ॥ १६
एवं विवस्वता तात छन्नेनोत्तमतेजसा ।
निर्दग्धाः शत्रवः सर्वे वसता भुवि सर्वशः ॥ १७
विष्णुना वसता चापि गृहे दशरथस्य वै ।
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा ॥ १८
एवमेते महात्मानः प्रच्छन्नास्तत्र तत्र ह ।
अजयञ्शात्रवान्युद्धे तथा त्वमपि जेष्यसि ॥ १९
तथा धौम्येन धर्मज्ञो वाक्यैः संपरितोषितः ।
शास्त्रबुद्ध्या स्वबुद्ध्या च न चचाल युधिष्ठिरः ॥ २०
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः ।
राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन् ॥ २१
अवेक्षया महाराज तव गाण्डीवधन्वना ।
धर्मानुगतया बुद्ध्या न किंचित्साहसं कृतम् ॥ २२
सहदेवो मया नित्यं नकुलश्च निवारितौ ।
शक्तौ विध्वंसने तेषां शत्रुघ्नौ भीमविक्रमौ ॥ २३
न वयं तत्प्रहास्यामो यस्मिन्योक्ष्यति नो भवान् ।

---

°नोष्य). — $^d$) $K_2$ $B_{3.4}$ बलत्रिग्रहे; $B_2$ Dn $D_{4.6}$ $T_2$ $G_3$ च विनिग्रहे.

**12** $B_2$ om. 12–13. — $^b$) K $D_1$ ततो (for तथा). $B_4$ $Dn_2$ $D_4$ [अ]दित्या; $D_1$ दिव्या (for [अ]दित्यां). $K_3$ निवत्स्य ताः; Dc $D_2$ निवत्स्य ते. — $^c$) $K_3$ गर्भो वधार्थं देवानाम्.

**13** $B_2$ om. 13 (cf. v.l. 12). — $^a$) $K_4$ वानर° (for वामन°). — $^b$) A few MSS. प्रच्छन्न- (for °न्नं). — $^c$) K Dc $D_{1.2}$ अप- (for यथा).

**14** $B_2$ transp. 14 and 15; $B_{3.4}$ Dn $D_{4.6}$ transp. 14 and 16. — $^a$) $K_{1-3}$ पूर्वम् (for छन्नम्). — $^b$) K $B_{3.4}$ Dc $D_{1.2}$ पुरा (for तदा). — $^c$) $B_{2-4}$ Dn $D_{4.6}$ देवेषु (for लोके°). — $^d$) $=16^d$. $B_2$ कर्मतस्तेन विश्रुतं; $B_{3.4}$ Dn $D_{4.6}$ कर्म तत्तेनघ श्रुतं.

**15** $B_2$ transp. 14 and 15. — $^a$) K Dc $D_{1.2}$ एव (for चापि). — $^b$) $K_4$ बल्छिनि° (m as in text); $B_2$ Dn $D_{4.6}$ [अ]रिविनिग्रहे (for वृत्रनि°). — $^c$) $K_4$ मुनिरूपेण वज्रेण.

**16** $B_2$ om. 16; $B_{3.4}$ Dn $D_{4.6}$ transp. 14 and 16. — $^a$) $K_3$ यच्चापि (for यच्चापः). — $^b$) K Dc $D_{1.2}$ छद्मना सता ($K_1$ सतां; Dc $D_2$ तथा). — $^d$) $=14^d$. K Dc $D_{1.2}$ सर्वमेव च ($K_{1.2}$ °मेतच्च) ते श्रुतं.

**17** $^a$) $K_{3.4}$ $D_1$ विपश्चिता (for विव°). K Dc $D_{1.2}$ तेन (for तात). — $^b$) $D_1$ प्रच्छन्नोत्तम°. — $^c$) K शतशः; $B_{2-4}$ Dn $D_{4.6}$ शात्रवाः (for शत्रवः). — $^d$) $K_{1.2}$ वसता गिरिकंधरे; $K_4$ मंदेहा नाम राक्षसाः.

**18** $^a$) $D_6$ [अ]त्रापि (for चापि). $K_4$ विष्णुना छद्म- रूपेण. — $^b$) $K_{1.2}$ ह; $K_{3.4}$ Dc $D_{1.2}$ च (for वै). — $^c$) $K_4$ संख्ये; Dc $D_{1.2}$ छन्नः (for छन्नं). — $^d$) $K_4$ सपुत्रः सह बांधवैः.

**19** $^a$) $K_4$ एवं तात; $B_{2.3}$ Dn $D_{4.6}$ एवमेव; $B_4$ एक एव. — $^b$) $B_3$ च (for ह). $K_4$ छन्नास्तत्र च तत्र च. — $^c$) $B_4$ व्यजयञ्. $K_{1.2.4}$ $D_1$ युक्तान्; $B_3$ सर्वे; Dc $D_2$ युक्त्या (for युद्धे).

**20** $^a$) $K_3$ एवं (for तथा). — $^b$) $K_{1.2}$ स; $K_3$ सु-; Dc $D_2$ च (for सं-). — $^c$) $K_4$ °दृष्ट्या (for °बुद्ध्या). $K_1$ ततो बुद्ध्या; $K_{3.4}$ $B_{3.4}$ $D_1$ पुनर्बुद्ध्वा ($B_{3.4}$ °द्ध्या); Dc $D_2$ प्रबुद्ध्वा तत् (for स्वबुद्ध्या च). — $^d$) $K_{1.2.4}$ $D_1$ प्रतिपेदे; $K_3$ संस्तभ्यत; Dc $D_2$ सुस्थितोथ (for न चचाल).

**21** $^a$) $K_2$ यथा°; $B_4$ तथा° (for अथा°). — $^c$) $K_3$ श्रेष्ठं (for श्रेष्ठो). — $^d$) $K_{1.2}$ निवासं परिहर्ष°; $K_4$ गिरा संपरितोष°; $D_1$ गिरा तं संप्रहर्ष°.

**22** $^a$) $K_{1.2}$ अजेक्षया (sic) (for अवे°). — $^b$) $K_3$ तथा (for तव). $K_2$ °धन्विना.

**23** $^b$) $K_3$ Dc $D_{1.2}$ निवारितः (for °तौ). — $^c$) $D_1$ शक्तो. $K_{1.2}$ निवारणे (for विध्वंसने). — $^d$) $B_{2-4}$ Dn

भवान्विधत्तां तत्सर्वं क्षिप्रं जेष्यामहे परान् ॥ २४
इत्युक्ते भीमसेनेन ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छ्य भरतान्यथास्वान्स्वान्ययुर्गृहान् ॥ २५
सर्वे वेदविदो मुख्या यतयो मुनयस्तथा ।
आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः ॥ २६
सह धौम्येन विद्वांसस्तथा ते पञ्च पाण्डवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय भारत ॥ २७
क्रोशमात्रमतिक्रम्य तस्माद्देशान्निमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ॥ २८
पृथक्शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः ।
संधिविग्रहकालज्ञा मन्त्राय समुपाविशन् ॥ २९ C. 3. 17478 B. 3. 315. 31 K. 4. 1. 50

इति श्रीमहाभारते आरण्यकपर्वणि एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥ समाप्तमारणेयपर्व ॥

॥ समाप्तमारण्यकपर्व ॥

---

$D_{4.6}$ शत्रूणां. $D_1$ भीमकर्मणौ.

**24** $^a$) $D_1$ वयं न (by transp.). $K_{1-3}$ वर्त्मं ; $B_2$ च प्र- ; $B_4$ तच्च ; $D_1$ धर्मं (for तत्प्र-). $K_4$ वयं धर्मं न हास्यामो. — $^b$) $K_4$ $B_{3.4}$ मोक्ष्यति ; $B_2$ मोक्ष्याम (for योक्ष्यति). $K_1$ भवेत् (for भवान्). — $^c$) $K_3$ विधाता (for विधत्तां). — $^d$) $D_1$ योत्स्यामहे. $K_4$ $B_{2-4}$ Dn $D_{4.6}$ रिपून् (for परान्).

**25** Before 25, $B_4$ ins. वैशं° उ°. — $^a$) $D_1$ °सेने तु (for °सेनेन). $K_4$ इत्येवमुक्ते भीमेन. — $^b$) $B_2$ $D_4$ °शिषा (for °शिषः). — $^c$) $B_2$ उक्त्वा च (for प्रयुज्य). $K_4$ [आ]मंत्र्य (for [आ]पृच्छ्य). — $^d$) K Dc $D_{1.2}$ यथास्वं जग्मुरालयान्; $B_{3.4}$ यथास्वं प्रययुर्गृहान्.

**26** $^a$) K Dc $D_{1.2}$ विप्रा (for मुख्या). — $B_1$ resumes. — $^c$) $K_{1-3}$ $B_3$ Dc $D_{1.2}$ आशीर्युक्ता; $B_{1.2.4}$ Dn $D_{4.6}$ आसेदुस्ते (for आशीरुक्त्वा). $K_{1-3}$ °न्याय्यं ; $D_1$ °कामं (for °न्यायं). — $^d$) $B_2$ Dn $D_{4.6}$ °कांक्षया.

**27** $D_3$ resumes. — $^b$) $K_{1.2}$ तत्र; $K_{3.4}$ Dc $D_{1-3}$ ततस् (for तथा). $B_{1.2}$ Dn $D_{4.6}$ पच च (for ते पञ्च). — $^c$) K Dc $D_{1-3}$ सर्वे (for वीराः). — $^d$) K Dc $D_{1-3}$ कृष्णया ($K_3$ द्रौपद्या) सह (for कृष्णामादाय). B Dn $D_{4.6}$ धन्विनः (for भारत).

**28** $^a$) $K_3$ परिक्रम्य; $B_{1.4}$ अपागम्य; $B_2$ Dn $D_{4.6}$ उपागम्य; $B_3$ अतिगम्य; Dc उपक्रम्य; $D_2$ अपक्रम्य (for अतिक्रम्य). — $^b$) $K_3$ च भारत (for निमित्ततः). — $^c$) $K_1$ शोभने (for श्वोभूते). $K_{1.2}$ $B_3$ $D_1$ मनुजव्याघ्र; $K_3$ पुरुषव्याघ्राश्. — $^d$) $B_4$ छन्न° (for छन्न°).

**29** $^a$) $K_{1.2}$ Dc $D_2$ पृथक्चार्थं°; $K_3$ पृथक्सार्थं°; $K_4$ ते तत्वार्थं°; $B_3$ पृथक्चास्त्र°; $D_1$ पृथगस्त्र°. — $^b$) $K_3$ शास्त्र° (for मन्त्र°). — $^c$) $D_1$ सर्वे (for संधि-).

Colophon om. in $D_5$. For S see the note at the beginning of this adhy. — *Major parvan:* $K_{1.2}$ $G_3$ आरण्य; $Dc_2$ वन (as well as आरण्यक); $Dn_2$ अरण्य. — *Sub-parvan:* $K_{1.3}$ $B_3$ आरणेय; $K_2$ $D_3$ आरण्येय; $B_2$ Dn $D_{4.6}$ अ($Dn_3$ $D_4$ आ)रणीहरणं; $G_3$ अरणिहरणं. All these MSS. read समाप्त after sub-parvan ($K_2$ $B_3$, also after major parvan; $Dc_2$ $D_2$, only after major parvan). — *Adhy. name:* $K_4$ युधिष्ठिरादीनां मंत्रविवरणं; $D_1$ पांडवप्रच्छन्नवासप्रयाणं. — *Adhy. no.* (figures, words or both): $Dn_1$ (marg.) 313; $Dn_3$ 314; $D_1$ 316. — *Śloka no.:* Dn $D_1$ 31.

---

After the colophon, $K_2$ ins.: अस्यानु विराटपर्व भविष्यति । यस्यायं प्रतिसंधिः । जनमेजय उवाच ।

कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥

अरण्यपर्वण्यमी वृत्तान्ताः । १ पौराभिगमनं । २ पाण्डवप्रव्राजनं । ३ विदुरविवासनं । ४ शौनकवाक्यं । ५ आदित्यनामाष्टशतं । ६ विदुरागमनं । ७ धृतराष्ट्रसंतापः । ८ व्यासागमनं । ९ सुरभीन्द्रसंवादः । १० मैत्रेयशासनं । ११ तच्छापः । १२ किर्मीरवधः । १३ वृष्णिपाण्डवसमागमः । १४ सौभवधः । १५ द्वैतवनप्रवेशः । १६ द्रौपदीवाक्यं । १७ विद्यालम्भः । १८ इन्द्रकीलाभिगमनं । १९ कैरातं । २० धृतराष्ट्रचिन्ता । २१ संजयवाक्यं । २२ बृहदश्वागमनं । २३ नलोपाख्यानं । २४ कार्तवीर्यवधोपाख्यानं । २५ भीमगर्जनं । २६ पौलस्त्यतीर्थयात्रा । २७ लोमशागमनं । २८ तीर्थयात्रार्थं पाण्डवप्रस्थानं । २९ लोमशवाक्यं । ३० आगस्त्यं । ३१ लोपामुद्रोत्पत्तिः । ३२ ऋष्यशृङ्गोपाख्यानं । ३३ वृष्णिसमागमः । ३४ सौकन्यं । ३५ मांधात्रुपाख्यानं । ३६ श्येनकपोतीयं । ३७ अष्टावक्रीयं । ३८ यावक्रीतं । ३९ गन्धमादनप्रवेशः । ४० हनुमद्भीम-

समागमः । ४१ पुष्पाभिहरणं । ४२ जटासुरवधः । ४३ मणिमद्रवधः । ४४ आर्ष्टिषेणाश्रमनिवासः । ४५ अर्जुनाभिगमनं । ४६ निवातकवचवधः । ४७ वार्षिकं आजगरं । ४८ मार्कण्डेयसमस्या । ४९ ब्राह्मणमाहाभाग्यं । ५० सरस्वतीतार्क्ष्यसंवादः । ५१ मत्स्योपाख्यानं । ५२ मार्कण्डेयपुराणं । ५३ मार्कण्डेयोक्तं भविष्यत् । ५४ मण्डूकोपाख्यानं । ५५ द्रौपदीप्रमाथः । ५६ रामोपाख्यानं । ५७ साविञ्युपाख्यानं । ५८ कुण्डलाहरणं । ५९ आरणेयं ॥

एतदारण्यकं पर्व तृतीयं परिकीर्तितम् ।
अत्राध्यायशते द्वे तु संख्याते परमर्षिणा ।
एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्तिताः ।
एकादश सहस्राणि श्लोकानां षट् शतानि च ।
चतुःषष्टिस्तथा श्लोकाः पर्वैतत्परिकीर्तितम् ।

संवत् १८२८ शाके १६९३ । लिपिकृतं उदैराम । लिषायतं । मिश्रजी श्रीसदानन्दजी । शुभं भूयात् ॥

मङ्गलं लेखकानां च पाठकानां च मङ्गलम् ।
मङ्गलं सर्वलोकानां भूमेर्भूपतिमङ्गलम् ।
यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ।

मिति आषाढप्रथमे १५ गुरौ संपूर्णम् । श्रीरामाय नमः । श्री ॥

Dc2 ins.: अस्यानन्तरं विराटपर्व भविष्यति । तस्यायमादिमः श्लोकः । जनमेजय उवाच । कथं विराटनगरे etc. ( =4. 1. 1) । श्रीराम ॥

महीं च भुज्यते राजा शत्रूनुन्मूल्य तिष्ठति ।
श्रुत्वा चारण्यकं पुण्यं दीर्घमायुश्च विन्दति ।
इदं तु चरितं श्रुत्वा पाण्डवानां महात्मनाम् ।
वेदविद्यो भवेद्विप्रः क्षत्रियो राज्यमाप्नुयात् ।
धनं धान्यं तथा वैश्यः शूद्रश्च सुखमाप्नुयात् ।
श्लोकं पादं पठेद्यस्तु शृणोति च समाहितः ।
इह लोके सुखं भुक्त्वा विष्णुलोकं स गच्छति ।
पुण्यं पवित्रं सुखदं यशस्करं
सौभ्रातृकं बुद्धिविवर्धनं च ।
श्रोतव्यमेतन्नियतैश्च सद्भि-
रायुष्यमूर्जस्करं वृद्धिकामैः ।
कुटुम्बवृद्धिं धनधान्यसंचयं
स्त्रियश्च मुख्याः सुखमुत्तमं सदा ।
लभेच्च लक्ष्मीं विपुलां नरोत्तमो
यथाभिलाषं भुवि मानवानाम् ।
महाभारण्यकं श्रुत्वा भारते पर्व चोत्तमम् ।
दक्षिणा का प्रदातव्या वाचकाय तदुच्यताम् ।
निशम्यारण्यकं पर्व वाचकं प्रतिपूजयेत् ।
गन्धालंकारवासोभिः प्रणिपत्य पुनः पुनः ।
आरण्यके मूलफलैस्तर्पयेत द्विजोत्तमान् ।
प्रदद्याज्जलकुम्भांश्च पूर्णकामसमन्वितान् ।
तर्पणानि च मुख्यानि वन्यमूलफलादिभिः ।
सर्वकामगुणोपेतं दद्यादन्नं द्विजोत्तमम् ।
यद्यदिष्टतमं वस्तु तत्तदस्मै प्रदीयते ।
सुवर्णं रजतं गावो धान्यं भूमिं तथैव च ।
पात्राणि ताम्रकांस्यानि वासांसि विविधानि च ।
वाचके परितुष्टे तु हृष्टाः स्युः सर्वदेवताः ।
वाचकस्तोषमायाति तथा कार्यं विपश्चिता ।

Then follow वृत्तान्ताः as in K2 above, with v.l. as follows: — Transp. 1 and 2; om. 3; ins. after 7: विदुरागमनं; ins. after 16 : मार्कण्डेयदर्शनं and व्यासमन्त्रः; om. 17, 19 and 24; ins. after 26 : धौम्यतीर्थयात्रा; om. 28; subst. for 43 : धनदसमागमः; ins. after 45 : उत्तरकैरातं; ins. after 47 तीर्थयात्रा समाप्ता । कृष्णपांडवसंवादः; ins. after 50 : घोषयात्रा; om. 52–53 and ins. धुन्धुमारोपाख्यानं; ins. after 54 : पतिव्रतोपाख्यानं । आङ्गिरसं । स्कन्दजन्म । द्रौपदीसत्यभामासंवादः । घोषयात्रा । दुर्योधनप्रायोपवेशः । कर्णविजयः । धार्तराष्ट्रयज्ञः । मृगस्वप्नं । व्रीहिद्रौणिकं, and concludes : इत्यारण्यकं पर्व । इति वनपर्व समाप्तः । श्रीकल्याणमस्तु । शुभं भवतु । कृष्णाय नमः । सदाशिवाय नमः । वनपर्व समाप्तः ॥

Dn1 ins.: अस्याग्रे विराटपर्व भविष्यति तस्यायमाद्यः श्लोकः । जनमेजय उवाच । कथं विराटनगरे etc. ( =4. 1. 1) ।

अस्मिन्पर्वणि संख्यानं व्यासेनोक्तं महात्मना ।
अध्यायानां शते द्वे तु प्रसंख्याते तपोधन ।
एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्तिताः ।
एकादश सहस्राणि तथा नव शतानि च ।
चतुःषष्टिस्तथा श्लोकाः पर्वैतत्परिकीर्तितम् ।
वृत्तान्ताश्च तथा ख्याता नवतिर्द्वे च कीर्तिते ।

[१] पाण्डवप्रव्राजनं । [२] पौरानुगमनं । [३] पौरवाक्यं । [४] पौरविसर्जनं । [५] ब्राह्मणानुगमनं । [६] युधिष्ठिरचिन्ता । [७] शौनकवाक्यं । [८] धौम्यस्तवः । [९] आदित्यनामाष्टशतं । [१०] विदुरनिर्वासनं । [११] विदुरागमनं । [१२] धृतराष्ट्रस्य संतापः । [१३] व्यासागमनं । [१४] सुरभीन्द्रसंवादः । [१५] अर्जुनवाक्यं । [१६] भीमसेनवाक्यं । [१७] व्यासदर्शनं । [१८] कौन्तेयगमनं । [१९] लोकपालगमनं । [२०] विद्यालाभः । [२१] शक्रप्राप्तिः । [२२] किरातयुद्धं । [२३] इन्द्रलोकगमनं । [२४] नलोपाख्यानं । [२५] अक्षज्ञानप्राप्तिः । [२६] नारदागमनं । [२७] पौलस्त्यतीर्थयात्रा । [२८] लोमशागमनं । [२९] तत्तीर्थयात्राप्रस्थानं । [३०] अगस्त्यप्रभावः । [३१] विन्ध्यशैलचरितं । [३२] वातापिनाशनं । [३३] समुद्रशोषणं । [३४] कालयवनवधः । [३५] सगरपुत्रविनाशः । [३६] गङ्गावतारः । [३७] ऋष्यशृङ्गोपाख्यानं । [३८] वृष्णिपाञ्चालागमनं । [३९] हलधरवाक्यं । [४०] वासुदेववाक्यं । [४१] जामदग्न्यचरितं । [४२] सौकन्यं । [४३] मान्धातुरुपाख्यानं । [४४] श्येनकपोतीयं ।

[४५] अष्टावक्रीयं । [४६] गन्धमादनप्रवेशः । [४७] औत्पातिकं । [४८] घटोत्कचगमनं । [४९] जटासुरवधः । [५०] आर्ष्टिषेणाश्रमनिवासः । [५१] हनुमद्भीमसमागमः । [५२] पुष्पाभिहरणं । [५३] यक्षयुद्धं । [५४] वैश्रवणसमागमनं । [५५] निवातकवचवधः । [५६] अर्जुनागमनं । [५७] नारदगमनं । [५८] मार्कण्डेयागमनं । [५९] मार्कण्डेयसमास्या । [६०] भविष्यं । [६१] ब्राह्मणमाहात्म्यं । [६२] धुन्धुमारोपाख्यानं । [६३] सरस्वतीतार्क्ष्यसंवादः । [६४] मनुचरितं । [६५] मण्डूकोपाख्यानं । [६६] पतिव्रतोपाख्यानं । [६७] धर्मव्याधोपाख्यानं । [६८] मधुकैटभोपाख्यानं । [६९] कुमारोत्पत्तिः । [७०] द्रौपदीसत्यभामासंवादः । [७१] घोषयात्रा । [७२] दुर्योधनप्रायोपवेशः । [७३] दुर्योधनयज्ञः । [७४] प्रावृड्वर्णनं । [७५] इन्द्रद्युम्नोपाख्यानं । [७६] आङ्गिरसं । [७७] स्कन्दजननं । [७८] धार्तराष्ट्रयज्ञः । [७९] व्यासदर्शनं । [८०] मृगस्वप्नदर्शनं । [८१] व्रीहिद्रौणिकं । [८२] द्रौपदीप्रमाथः । [८३] दुर्वासोपाख्यानं । [८४] रामोपाख्यानं । [८५] साविञ्युपाख्यानं । [८६] कुण्डलाहरणं । [८७] आरणेयं । [८८] यक्षप्रश्नाः ॥ समाप्ता वृत्तान्ताः ॥

इदमारण्यकं श्रुत्वा महापापैः प्रमुच्यते ।
अधनो धनमाप्नोति पुत्रपौत्रसमन्वितः ।
यं यं प्रार्थयते कामं तं तं प्राप्नोत्यसंशयम् ।
नारी वा पुरुषो वापि शुचिः प्रयतमानसः ।
आरण्यके श्रुतेऽधीते ब्राह्मणान्पायसादिभिः ।
भोजयेद्वस्त्रगोस्वर्णरत्नदानैः प्रपूजितान् ।
ब्राह्मणेषु च तुष्टेषु तुष्टाः स्युः पाण्डुनन्दनाः ।
ब्रह्मा विष्णुस्तथा रुद्रः शक्रो देवगणास्तथा ।
भूतानि मुनयो देव्यस्तथा पितृगणाश्च ये ।
वाचकं पूजयेच्छक्त्या वस्त्रान्नैः स्वर्णभूषणैः ।
विशेषतस्तु कपिला देया तु जयपाठके ।
कांस्यदोहा रौप्यखुरा स्वर्णशृङ्गी सभूषणा ।
पाण्डूनां परितोषार्थं दद्यादन्नं द्विजातये ।

आरण्यकाख्यमाख्यानं शृणुयाद्यो नरोत्तमः ।
स सर्वकामानाप्नोति पुनः स्वर्गतिमाप्नुयात् ।

इति श्रीमहाभारते आरण्यपर्वणि आरण्यकश्रवणमहिमा दानविधिश्च । समाप्तमारण्यकं पर्व ॥ छ ॥ छ ॥ वैयासिकी संख्या ११९६४ । विद्यमानसंख्या ११७५८ ॥

S MSS., which read sections of adhy. 299 after 4. 1. 1, 3, 4, and 9[a], conclude this parvan at the end of adhy. 298 and ins. after the final colophon :

G1 : हरिः ॐ । शुभमस्तु । श्रीमदारण्यपर्व समाप्तं । वेदव्यासाय नमः । वसुदेवदेवकीबलभद्रसहितश्रीकृष्णमूर्तये नमः । शुभमस्तु । हरिः ॐ ॥

G2 : हरिः ॐ । आरण्यपर्व समाप्तं । श्रीकृष्णाय परब्रह्मणे नमः ॥

G4 : हरि ॐ । शुभमस्तु । गुरुभ्यो नमः ॥
यादृशं पुस्तकं दृष्ट्वा [read ष्टं] तादृशं लिखितं मया ।
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ।
श्रीकृष्णाय परमगुरवे नमः । श्रीवेदव्यासाय नमः । श्रीरामचन्द्राय नमः । वेंकटाचलपतिसहायं । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । श्रीमते रामानुजाय नमः । आरण्यपर्व समाप्तम् ॥

M1 : आरण्यपर्व समाप्तं । श्रीवेदव्यासाय श्रीमहाविष्णवे नमः । श्रीकृष्णाय नमः । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । शुभं भवतु ॥

M2 : आरण्यपर्व समाप्तं । श्रीकृष्णाय * * * * ।
अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः कस्य नास्ति व्यतिक्रमः ।
बिन्दुसल्लिपिविचित्रवीचिकाः
शृङ्गभङ्गपदहीनदूषणम् ।
हस्तवेगममबुद्धिपूर्वकं
क्षन्तुमर्हति समीक्ष्य सज्जनः ॥ छ छ छ ॥

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS. which have been cited in the foregoing footnotes to the constituted text, but which, for various reasons, were not quoted there in extenso. They are mainly passages which were too long to be included in the footnotes; but along with them there will be found a certain number of short unimportant passages also, which could have been very easily accommodated in the footnotes, but which being found in single MSS. or in a very small group of cognate MSS. have been relegated to this Appendix as being of no special value for critical purposes.

The variants cited here are of the same order as those of the additional lines noted in the footnotes to the constituted text; in other words, the variants of monosyllabic verse-filling particles (such as च, वै, तु, हि) and adverbs (such as तथा, तदा, ततः; एव, एवं), discrepant readings of single MSS., corrupt readings, and common doublets (वेदि-वेदी, रोम-लोम) have been generally ignored, scribes' errors have been silently corrected. Furthermore, the variants of the short prose formulaic references to the speaker (such as वैशंपायन उवाच) have been uniformly ignored here.

## 1

After 3. 3. 14, $K_2$ B D (except $D_1$; $D_3$ missing) ins.:

शुचिः प्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः ।
युधिष्ठिर उवाच ।
त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् ।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ।
त्वं गतिः सर्वसांख्यानां योगिनां त्वं परायणम् ।
अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षताम् ।
त्वया संधार्यते लोकस्त्वया लोकः प्रकाश्यते ।
त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ।
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः ।
स्वशाखाविहितैर्मन्त्रैरर्चन्त्यृषिगणार्चितम् ।
तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः ।
सिद्धचारणगन्धर्वा यक्षगुह्यकपन्नगाः ।
त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः ।
सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः ।
उपयान्त्यर्चयित्वा तु त्वां वै प्राप्तमनोरथाः ।
दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः ।
गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः ।
ते पूजयित्वा त्वामेव गच्छन्त्याशु प्रधानताम् ।
वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः ।
वालखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः ।
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च ।
न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ।
सन्ति चान्यानि सत्त्वानि वीर्यवन्ति महान्ति च ।
न तु तेषां तथा दीप्तिः प्रभावो वा यथा तव ।
ज्योतींषि त्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः ।
त्वयि सत्यं च सत्त्वं च सर्वे भावाश्च सात्त्विकाः ।
त्वत्तेजसा कृतं चक्रं सुनाभं विश्वकर्मणा ।
देवारीणां मदो येन नाशितः शार्ङ्गधन्वना ।
त्वमादायांशुभिस्तेजो निदाघे सर्वदेहिनाम् ।
सर्वौषधिरसानां च पुनर्वर्षासु मुञ्चसि ।
तपन्त्यन्ये दहन्त्यन्ये गर्जन्त्यन्ये तथा घनाः ।
विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः ।
न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः ।
शीतवातार्दितं लोके यथा तव मरीचयः ।
त्रयोदशद्वीपवतीं गोभिर्भासयसे महीम् ।
त्रयाणामपि लोकानां हितायैकः प्रवर्तसे ।
तव यद्युदयो न स्यादन्धं जगदिदं भवेत् ।
न च धर्मार्थकामेषु प्रवर्तेरन्मनीषिणः ।
आधानपशुबन्धेष्टिमन्त्रयज्ञतपःक्रियाः ।
त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्रविशां गणैः ।
यदहर्ब्रह्मणः प्रोक्तं सहस्रयुगसंमितम् ।
तस्य त्वमादिरन्तश्च कालज्ञैः परिकीर्तितः ।
मनूनां मनुपुत्राणां जगतोऽमानवस्य च ।
मन्वन्तराणां सर्वेषामीश्वराणां त्वमीश्वरः ।
संहारकाले संप्राप्ते तव क्रोधविनिःसृतः ।
संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ।
त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः ।
सैरावताः साशनयः कुर्वन्त्याभूतसंप्लवम् ।
कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः ।
संहृत्यैकार्णवं सर्वं त्वं शोषयसि रश्मिभिः ।
त्वामिन्द्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः ।
त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्वं ब्रह्म शाश्वतम् ।
त्वं हंसः सविता भानुरंशुमाली वृषाकपिः ।
विवस्वान्मिहिरः पूषा मित्रो धर्मस्तथैव च ।
सहस्ररश्मिरादित्यस्तपनस्त्वं गवां पतिः ।
मार्तण्डोऽर्को रविः सूर्यः शरण्यो दिनकृत्तथा ।
दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः ।
आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ।
सप्तम्यामथ वा षष्ठ्यां भक्त्या पूजां करोति यः ।

## 1

(L. 3) $K_2$ $B_{1.4}$ Dc $D_{2.5}$ त्वमाधारः (for °चारः). — (L. 5) $B_{2-4}$ $Dn_2$. $n_3$ $D_{4.6}$ अनावृतार्गलद्वारस्; Dc $D_2$ अनावृतकुलद्वारस्. $B_{2.3}$ Dc $D_2$ गतिस्तु (for °स्त्वं). — (L. 7) $B_1$ प्रवृत्तिक्रियते; $Dn_3$. $n_3$ पवित्रीकरणैर्. Dc निर्व्याप्तं. Dc $D_{2.3}$ जगत् (for त्वया). — (L. 9) $D_{2.4.5}$ अर्चन्नृषि- (for अर्चन्त्यृषि-). Dc $D_2$ -गणार्चितः. — (L. 16) Dc $D_2$ पूज्याः (for गुह्याः). — (L. 17) $D_2$ गता ह्याशु (for गच्छन्त्याशु). — (L. 18) $B_4$ मनीषिणः (for मरीचिपाः). — (L. 19) $B_{2-4}$ Dc $D_{2.4}$ वालिखिल्या°. $B_2$ साध्याः (for सिद्धाः). $B_{1.3}$ प्राणतागताः. — (L. 21) Dc मन्ये यदभिरिच्यते; $D_2$ तपसा यदरिच्यते. — (L. 24) $B_1$ सर्वभूतानां (for त्वयि सर्वाणि). — (L. 27) $D_{2.5}$ शार्ङ्गधन्विना. — (L. 30) Dc $D_2$ यथा (for तथा). — (L. 34) $B_1$ Dc $Dn_2$ $D_{2.4}$ भासयते (for °से). — (L. 37) $B_1$ Dc प्रवर्तेते; $D_2$ °र्तेत (for °र्तेरन्). — (L. 38) $D_2$ °तंत्र° (for °मन्त्र°). — $D_3$ om. from the posterior half of line 40 up to the prior half of line 43. — (L. 40). Cf. Gītā 8. 17[ab]. Dc $D_2$ °संमितः (for °संमितम्). — (L. 41) $B_4$ संप्रकी° (for परिकी°). — (L. 42) $B_4$ यदूनां (for मनूनां). — (L. 45) Dc $D_{2.5}$ °कृत्वाव° (for °कृत्याव°). — (L. 50–51) $B_4$ त्वामिंद्रमाहुस्त्वां रुद्रं त्वां विष्णुं त्वां प्रजापतिम् । त्वामग्निं त्वां यमः सूक्ष्मं प्रभुं त्वां ब्रह्म शाश्वतं. — (L. 52) $B_1$ यमः (for हंसः). — (L. 54) Dc $D_2$ परां (for गवां). Dc गतिः (for पतिः).

अनिर्विण्णोऽनहंकारी तं लक्ष्मीर्भजते नरम् ।
न तेषामापदः सन्ति नाधयो व्याधयस्तथा ।
ये तवानन्यमनसः कुर्वन्त्यर्चनवन्दनम् ।
सर्वरोगैर्विरहिताः सर्वपापविवर्जिताः ।
त्वद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ।
त्वं ममाप्यन्नकामस्य सर्वातिथ्यं चिकीर्षतः ।
अन्नमन्नपते दातुमभितः श्रद्धयार्हसि ।
ये च तेऽनुचराः सर्वे पादोपान्तं समाश्रिताः ।
माठरारुणदण्डाद्यास्तांस्तान्वन्देऽशनिक्षुभान् ।
क्षुभया सहिता मैत्री याश्चान्या भूतमातरः ।
ताश्च सर्वा नमस्यामि पान्तु मां शरणागतम् ।
वैशंपायन उवाच ।
एवं स्तुतो महाराज भास्करो लोकभावनः ।

## 2

After 3. 4. 3, N (except K3 D1; K1. 4 missing) ins.:

इमं स्तवं प्रयतमनाः समाधिना
पठेदिहान्योऽपि वरं समर्थयन् ।
ततस्य दद्याच्च रविर्मनीषितं
तदाप्नुयाद्यद्यपि तत्सुदुर्लभम् ।
यश्चेदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां पुरुषोऽप्यथ वा स्त्रियः ।
उभे संध्ये पठेन्नित्यं नारी वा पुरुषो यदि ।
आपदं प्राप्य मुच्येत बद्धो मुच्येत बन्धनात् ।
एतद्ब्रह्मा ददौ पूर्वं शक्राय सुमहात्मने ।
शक्राच्च नारदः प्राप्तो धौम्यस्तु तदनन्तरम् ।
धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कामानवाप्तवान् ।
संग्रामे च जयेन्नित्यं विपुलं चाप्नुयाद्वसु ।
मुच्यते सर्वपापेभ्यः सूर्यलोकं स गच्छति ।

## 3

After 3. 38. 13[ab], K4 D2. 5 ins. the foll. passage (which is in part corrupt and in part identical with passage No. 4):

योगयुक्तस्य ते पार्थ तत्र नास्ति विचारणा ।
प्रवरामतुलां सत्यां निर्दोषां सर्वदा सताम् ।
तामेकः पाण्डवेष्वद्य अर्घ्यं प्राप्तो धनंजयः ।
न चाधर्ममिमं देवा नासिद्धं नातपस्विनम् ।
द्रष्टुमिच्छन्ति कौन्तेय चलचित्तं कथंचन ।
रोरूयमाणं कटुक ईर्षुकः कटुकाक्षरम् ।
दुष्टः श्लाघनकः क्षेप्ता हन्ताथ विचिकित्सितः ।
विश्वस्तहन्ता मायावी क्रोधनोऽनृतभाषिता ।
अत्याशी नास्तिकोऽदान्तो मित्रध्रुक्सर्वशङ्कितः ।
आक्रोष्टा चातिमानी च रौद्रो लुब्धोऽथ लोलुपः ।
स्तेनश्च मद्यपश्चैव भ्रूणहा गुरुतल्पगः ।
संभावितात्मा चात्यर्थं नृशंसः परुषश्च ह ।
नैते लोकानाप्नुवन्ति निर्लोकास्ते धनंजय ।
आनृशंस्यमनुक्रोशं सत्यं करुणवेदिता ।
दमः स्थितिर्धृतिर्धर्मः क्षमा रूपमनुत्तमम् ।
दया दमश्च धर्मश्च गुरुपूजा कृतज्ञता ।
मित्रता द्विजभक्तिश्च वसन्ति त्वयि फाल्गुन ।
व्यपेक्षा सर्वभूतेषु क्षमा दानं मतिः स्मृतिः ।
तस्मात्कौरव्य शक्रेण समेष्यसि धनंजय ।

---

— (L. 56) B2. 4 Dc D2 व्योम° (for धाम°). — (L. 57) D6 आशावहस् (for आशुगामी). B4 वीर्यवान् (for कीर्त्यसे). — (L. 58) B1 Dn1 [अ]ष्टम्यां (for षष्ठ्यां). — (L. 59) D2 तथा नित्यं नमस्कारी (for the prior half). — (L. 61) B1 °मनसा (for °मनसः). — (L. 64) B1 ममापन्न°; B2. 4 °प्यनु° (for °प्यन्न°). B3 तत्त्वं ममान्नकामस्य. — (L. 67) Dc तान्वंदे समभि(Dc1 ससनि)क्षुभान् (for the posterior half). — (L. 68) B3 निक्षुभा-; Dc2 क्षुधया (for क्षुभया). — (L. 69) Dn3 तांश्च सर्वान्नमस्यामि. B3. 4 त्वामहं शरणं गतः; Dc D2 पां(D2 पा)तु मां शरणार्थिनं. — (L. 70) B1. 3 Dc D2 °पावनः (for °भावनः).

### 2

Before line 1, Dc D2 ins. वैशं° उ°. — (L. 1) Dc D2. 5 समाहितः (for °धिना). — (L. 6) D2 पुत्रान् (for पुत्रं). — (L. 7) Dc1 D5 वाथ वा (for ऽप्यथ वा); B2 श्रियः (for स्त्रियः). D2 पुरुषो वा स्त्रियः शुभां (for the posterior half). — (L. 8) D4 पठन् (for पठेन्). B3 सदा पर्वसु पर्वसु (for the posterior half). — Lines 11–12 = (var.) 3. 3. 30. B2. 4 read lines 11–12 after line 14. — (L. 11) D2 प्राप्य (for प्राप्तो). — (L. 12) D4 प्राप (for प्राप्य). Dc D2 °नवाप्नुयात् (for °नवाप्तवान्). — (L. 13) Dc वा जपेन् (for च जयेन्). B2 प्राप्नु° (for चाप्नु°). B4 यशः (for वसु).

### 3

(L. 2) D5 अवराम् (for प्रवराम्), and समां (for सताम्). — (L. 3) To avoid hiatus, D5 ह्यर्घ्यं (for अर्घ्यं). — (L. 5) K4 D2 शठं न च (for कथंचन). — (L. 6) D2 रोरूयमाणः. — (L. 7) K4 D2 हंता च विचिकित्सकः. — D2 om. lines 8–9. — (L. 12) K4 D2 पुरुषश्च (for परु°). — (L. 18) D5 क्रिया (for क्षमा). — (L. 28) K4 D2

त्वादृशेन हि देवानां श्लाघनीयः समागमः ।
सुहृदां सोदराणां च सर्वेषां भरतर्षभ ।
त्वं गतिः परमा तात वृत्रहा मरुतामिव ।
तस्मिंस्त्रयोदशे वर्षे भ्रातरः सुहृदश्च ते ।
सर्वेऽभिसंश्रयिष्यन्ति बाहुवीर्यं महाबल ।
स पार्थ पितरं गच्छ सहस्राक्षमरिंदम ।
मुष्टिग्रहणमादत्स्व सर्वास्त्राणि च वासवात् ।
शतशृङ्गे महाबाहो मघवानिदमब्रवीत् ।
शृण्वतां सर्वभूतानां त्वामुपाघ्राय मूर्धनि ।
विदितः सर्वभूतानां दिवं तात गमिष्यसि ।
प्राप्य पुण्यकृतां लोकांस्त्वं जयतां वरः ।
मानितस्त्रिदशैः पार्थ विहृत्य सुसुखं दिवि ।
अवाप्य परमास्त्राणि पृथिवीं पुनरेष्यसि ।
गुणांस्ते वासवस्तात खाण्डवं दह्यतस्तव ।
शृण्वतां किल भूतानां पुनः पुनरभाषत ।
तां प्रतिज्ञां नरश्रेष्ठ कर्तुमर्हसि वासवे ।
किंचिद्दिशमितः प्राप्य तपोयोगमना भव ।
कर्तुमर्हसि कौन्तेय मघवद्वचनं हितम् ।

## 4

After 3. 38. 18$^{cd}$, $K_4$ $D_{2.5}$ S ins. :

सिद्धचारणसंघाश्च गन्धर्वाश्च तमब्रुवन् ।
स्वस्ति व्रतं समाधत्स्व संकल्पस्तव सिध्यताम् ।
मनोरथाश्च ते सर्वे समृध्यन्तां महारथ ।
एवमुक्तोऽभिवाद्यैतान्बद्धाञ्जलिपुटस्तथा ।
तपोयोगमनाः पार्थः पुरोहितमवन्दत ।
ततः प्रीतमना जिष्णुस्तावुभावभ्यवन्दत ।
सहोदरावतिरथौ युधिष्ठिरवृकोदरौ ।
संक्रान्तमनसौ तूर्णमभिगम्य महारथौ ।
यमौ गाण्डीवधन्वानमभ्यवादयतामुभौ ।
अभिवाद्य तु तौ वीरावूचतुः पाकशासनिम् ।
अवाप्स्यानि सर्वाणि दिव्यान्यस्त्राणि वासवात् ।
अस्त्राण्यामुहि कौन्तेय मनसा यद्यदिच्छसि ।
गिरो ह्यशिथिलाः सर्वा निर्दोषाः संमताः सताम् ।
त्वमेकः पाण्डवेष्वद्य संप्राप्तोऽसि धनंजय ।
न चाधर्मविदं देवा नासिद्धं नातपस्विनम् ।
द्रष्टुमिच्छन्ति कौन्तेय चलचित्तं शठं न च ।
रोरूयमाणः कटुकमीर्ष्यकः कटुकाक्षरः ।
शठकः श्लाघकः क्षेप्ता हन्ता च विचिकित्सिता ।
विश्वस्तहन्ता मायावी क्रोधनोऽनृतभाषिता ।
अत्याशी नास्तिकोऽदाता मित्रध्रुक्सर्वशङ्कितः ।
आक्रोष्टा चातिमानी च रौद्रो लुब्धोऽथ लोलुपः ।
स्तेनश्च मद्यपश्चैव भ्रूणहा गुरुतल्पगः ।
संभावितात्मा चात्यर्थं नृशंसः पुरुषश्च यः ।
नैते लोकानामुवन्ति निर्लोकास्ते धनंजय ।
आनृशंस्यमनुक्रोशः सत्यं करुणवेदिता ।
दमः स्थितिर्धृतिर्धर्मः क्षमा रूपमनुत्तमम् ।
दया शमश्च धर्मश्च गुरुपूजा कृतज्ञता ।
मैत्रता द्विजभक्तिश्च वसन्ति त्वयि फल्गुन ।
व्यपेक्षा सर्वभूतेषु कृपा दानं मतिः स्मृतिः ।
तस्मात्कौरव्य शक्रेण समेष्यसि धनंजय ।
त्वादृशेन हि देवानां श्लाघनीयः समागमः ।
सुहृदां सोदराणां च सर्वेषां भरतर्षभ ।
त्वं गतिः परमा तात वृत्रहा मरुतामिव ।
तस्मिंस्त्रयोदशे वर्षे भ्रातरः सुहृदश्च ते ।
सर्वे हि संश्रयिष्यन्ति बाहुवीर्यं महाबल ।
स पार्थ पितरं गच्छ सहस्राक्षमरिंदमम् ।
मुष्टिग्रहणमादत्स्व सर्वाण्यस्त्राणि वासवात् ।
शतशृङ्गे महाबाहो मघवानिदमब्रवीत् ।
शृण्वतां सर्वभूतानां त्वामुपाघ्राय मूर्धनि ।

---

पश्यतां (for शृण्वतां). — (L. 30) Prior half = Gītā 6. 41$^{a}$. $D_5$ °जितो (for °कृतां). — (L. 31) $D_5$ पावि° (for मानि°). — (L. 36) $D_5$ देशम् (for दिशम्). — (L. 37) $K_4$ $D_2$ वेत्तुम् (for कर्तुम्).

## 4

(L. 2) $T_2$ $G_3$ भूर्तिं (for व्रतं). $K_4$ $D_{2.5}$ $T_2$ $G_{1.3}$ उपादत्स्व (for समाधत्स्व). — (L. 3) $T_2$ $G_3$ सिध्यंतां च (for समृध्यन्तां). — (L. 4) $D_5$ ततः (for तथा). — (L. 5) $K_4$ $D_{2.5}$ तात (for पार्थः). — $K_4$ $D_{2.5}$ om. line 6. — (L. 6) $G_1$ °नंदत (for °वन्दत). — (L. 8) $K_4$ $D_{2.5}$ संक्राद° ; $T_2$ तं क्रांत° ; $G_3$ तं शांत° (for संक्रान्त°). $T_1$ पूर्णम् (for तूर्णम्). $K_4$ $D_{2.5}$ उपक्रम्य ; $G_1$ उपागम्य ; $M_2$ उप° (for अभि°). — (L. 9) $G_1$ यतो (for यमौ), °धन्वा तु (for °धन्वानम्), and ह्यभ्य° (for अभ्य°). $K_4$ $D_{2.5}$ °ताबुभौ (for °तामुभौ). — $K_4$ $D_{2.5}$ om. lines 10–49. — (L. 10) $T_2$ $G_3$ ततो (for तु तौ). — (L. 13) $M_2$ सत्या (for सर्वा). $T_2$ $G_3$ गिरो ह्यसिधराः सर्वे (for the prior half). — (L. 17) $G_1$ करकम् ; $M_2$ कृपण (for कटुकम्). — (L. 18) $M_2$ शठः श्लाघनिको द्वेष्टा (for the prior half). — (L. 19) $G_1$ मेधावी (for मायावी). — (L. 20) $G_1$ °शंककः (for °शङ्कितः) — (L. 21) $G_4$ क्षुद्रो (for रौद्रो). $T_2$ $G_{2.3}$ [ऽ]ति- (for ऽथ). — (L. 26) $T_2$ $G_3$ -कृत्य° (for रूप°). — (L. 29) $T_2$ $G_3$ कृपा दानमनुस्मृतिः (for the posterior half). — (L. 30) $G_4$ शेषेण (for शक्रेण). — (L. 35) $G_1$ ब्राह्म° (for बाहु°). — $G_1$ om. lines 41–43. — (L. 42) $G_4$

विदितः सर्वभूतानां दिवं तात गमिष्यसि ।
प्राप्य पुण्यकृतां लोकांस्त्रसे जयतां वर ।
मानितस्त्रिदशैः पार्थ विहृत्य सुसुखं दिवि ।
अवाप्य परमास्त्राणि पृथिवीं पुनरेष्यसि ।
गुणांस्ते वासवस्तात खाण्डवं दहति त्वयि ।
शृण्वतां सर्वभूतानां पुनः पुनरभाषत ।
तां प्रतिज्ञां नरश्रेष्ठ कर्तुमर्हसि वासवीम् ।
कंचिद्देशमितः प्राप्य तपोयोगमना भव ।
कर्तुमर्हसि कौरव्य मघवद्वचनं हितम् ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टासि त्वं पुरंदरम् ।
तौ परिष्वज्य बीभत्सुः कृष्णामामन्त्र्य चाभिभो ।
अभ्यवादयत प्रीतः तपस्विप्रवरानपि ।

☞ In $K_4$ $D_{2.5}$ some of these lines have already ccurred in a passage which is ins. in those MSS. .fter $13^{ab}$ (cf. passage No. 3 above).

## 5

No. 5 is cancelled, being taken up in the footnotes o the constituted text.

## 6

$K_2$ B Dc Dn $D_{1.4-6}$ ins. after $192^*$: $K_4$ $D_{2.3}$, after 3. 45. 8: S, after adhy. 44:

वैशंपायन उवाच ।
आदावेवाथ तं शक्रश्चित्रसेनं रहोऽब्रवीत् ।
पार्थस्य चक्षुरुर्वश्यां सक्तं विज्ञाय वासव ।
गन्धर्वराज गच्छाद्य प्रहितोऽप्सरसां वराम् ।
उर्वशीं पुरुषव्याघ्र सोपातिष्ठतु फाल्गुनम् ।
यथार्चितो गृहीतास्त्रो विद्यया मन्नियोगतः ।
तथा त्वया विधातव्यं स्त्रीषु सङ्गविशारदः ।
एवमुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात् ।
गन्धर्वराजोऽप्सरसमभ्यगादुर्वशीं वराम् ।
तां दृष्ट्वा विदितो हृष्टः स्वागतेनार्चितस्तया ।
सुखासीनः सुखासीनां स्मितपूर्वं वचोऽब्रवीत् ।
विदितं तेऽस्तु सुश्रोणि प्रहितोऽहमिहागतः ।
त्रिदिवस्यैकराजेन त्वत्प्रसादाभिनन्दिना ।
यस्तु देवमनुष्येषु प्रख्यातः सहजैर्गुणैः ।
श्रिया शीलेन रूपेण व्रतेन च दमेन च ।
प्रख्यातो बलवीर्येण संमतः प्रतिभानवान् ।

---

ेवृत्य (for विहृत्य). — (L. 44) $T_1$ $G_{1.2}$ $M_2$ खांडवे for °वं). $T_2$ $G_3$ दह्यते ; $G_{1.4}$ दह्यति (for दहति). $G_{1.4}$ वया (for त्वयि). — (L. 45) $M_2$ किल (for सर्व-). — (L. 47) $G_4$ किंचि° (for कंचि°). $G_4$ इदं (for इतः). — (L. 49) $T_2$ $G_3$ $M_1$ दीक्षित्वा (for °तो). T $G_{1-3}$ ाच्छस्व (for गच्छ त्वं). — (L. 50) $T_2$ $G_3$ $M_1$ चाप्युभौ; $G_1$ चाभिमु (for चाभिभो). — (L. 51) $G_1$ अभिवादयतस्तस्य ्रचुर्मुनिगणास्तदा.

## 6

(L. 1) $K_2$ $D_3$ कदाचित्त्वथ देवेशश्; $K_4$ $D_2$ आदाय चित्त-स्याथ; $B_{2.3}$ Dc $D_1$ आदावेव च तं ($B_2$ °व तु तं; $B_3$ °वागतं) ाक्रश्; S कदाचित्स हि देवेंद्रश् (for the prior half). $K_2$ ाचो; $D_3$ अथ; $T_1$ अथो (for रहो). — (L. 2) $K_{2.4}$ $D_{2.3}$ 3 त($K_4$ य)स्यां विज्ञाय ($G_1$ उर्वश्यां) (for चक्षुरुर्वश्यां). $K_2$ $D_{2.3}$ S ($G_1$ damaged) सक्तं चक्षुः प्रसंगतः ($D_2$ पुरंदरः); $K_4$ चक्षुः सक्तं पुरंदरः. — (L. 3) $D_3$ S ($G_1$ damaged) ांधर्वराजा($D_3$ °जो)द्य मया. S ($G_1$ damaged) प्रहिता (for तो). $K_4$ $D_{1.4.6}$ S ($G_1$ damaged) वरा (for वराम्). — After line 3, $D_{2.3}$ ins.:

कटाक्षेक्षणमाधुर्यैं रूपभावैः सविभ्रमैः ।
एकदृष्ट्या फाल्गुनेन नृत्यन्ती प्रेक्षिता किल ।

— (L. 4) $K_4$ $D_{1-4.6}$ S ($G_1$ damaged) उर्वशी. $B_3$ Dc $D_{1.6}$ पुरुषव्याघ्रं; $D_{2.3}$ रूपसंपन्ना. $K_2$ सोपि तिष्ठतु; $K_4$ B $Dc_2$ $Dn_2$ $D_{1.5.6}$ S उपतिष्ठतु ($D_5$ °तिष्ठेत); $D_{2.3}$ प्रेम्णा तिष्ठतु ($D_3$ तिष्ठेत). S फल्गुनं. — (L. 5) $Dc_2$ $D_1$ तथा° (for यथा°). $K_4$ यथार्थितामतिसृतां; $D_{2.3}$ यथाचित्तमभिस्मृ-($D_3$ °श्रि)त्य; S यथार्चि($G_2$ न-; $G_4$ च)तामभिसृतां ($G_1$ °ता) (for the prior half). $K_4$ $D_2$ विंद्यादस($D_2$ °सि)न्नियो-गतः; B Dc $D_{1.5.6}$ विद्यावान् मन्नि(Dc $D_1$ मुनि)योगतः; $D_{3.4}$ $T_2$ $G_{1-3}$ $M_1$ विद्यादस($D_3$ °सा-; $G_1$ °सि)न्नियोगतः; $T_1$ $G_4$ $M_2$ विद्यादसि($M_2$ °स)न्नियोगगां (for the posterior half). — (L. 6) $B_2$ (m as above).3 Dc $Dn_3$ $D_{4.6}$ $T_1$ $G_1$ विधातव्यः; $M_1$ °व्या (for °व्यं). $K_4$ $D_{1-3}$ $T_1$ $G_{1.2}$ M स्त्रीसंसर्गविशारद ($K_4$ $D_2$ M °दः); $B_2$ m. 4 स्त्रीसंगमविशा-रदः; $D_5$ स्त्रीप्रसंगविशारद. — (L. 8) Dc $D_1$ [ऽ]प्सरसाम्. $D_6$ सोभ्यगाद्; $M_2$ अभ्या°. — (L. 9) $K_4$ तं (for तां). $K_4$ विदितं; $D_{2.3}$ मुदितो (for विदितो). $D_5$ तमागतं ततो दृष्ट्वा. $K_2$ $Dc_1$ त्वया; $Dn_2$ $D_2$ $G_1$ तथा (for तया). — (L. 10) $D_{2.3}$ स चैवैकां ($D_3$ °नां). S (by transp.) सुखासीनां सुखासीनः. — (L. 11) $B_2$ $T_2$ $G_{2.3}$ हि (for ऽस्तु). $D_{2.3}$ कल्याणमस्तु सुश्रोणि; $T_1$ विदितस्तव सु°; $G_1$ $M_2$ विदितस्तेस्तु सु°; $G_4$ damaged. S प्रेषितो (for प्रहितो). $T_1$ M उपा° (for इहा°). — (L. 12) $K_4$ [इ]ह (for [ए]क-). $D_{2.3}$ नो($D_3$ चो)दितो देवराजेन; $G_1$ damaged. $D_{2.3}$ त्वत्प्र-सादमनिंदिते. — (L. 13) S ($G_1$ damaged) स (for तु).

वर्चस्वी तेजसा युक्तः क्षमावान्वीतमत्सरः ।
साङ्गोपनिषदान्वेदांश्चतुराख्यानपञ्चमान् ।
योऽधीते गुरुशुश्रूषां मेधां चाष्टगुणाश्रयाम् ।
ब्रह्मचर्येण दाक्ष्येण प्रसवैर्वयसापि च ।
एको वै रक्षिता चैव त्रिदिवं मघवानिव ।
अकत्थनो मानयिता स्थूललक्ष्यः प्रियंवदः ।
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ।
सत्यवाक्पूजितो वक्ता रूपवाननहंकृतः ।
भक्तानुकम्पी कान्तश्च प्रियश्च स्थिरसंगरः ।
प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमः ।
विदितस्तेऽर्जुनो वीरः स स्वर्गफलमाप्नुयात् ।
तव शक्राभ्यनुज्ञातः पादावद्य प्रपद्यताम् ।
तदेवं कुरु कल्याणि प्रपन्नस्त्वां धनंजयः ।
एवमुक्ता स्मितं कृत्वा संमानं बहुमन्य च ।
प्रत्युवाचोर्वशी प्रीता चित्रसेनमनिन्दिता ।
यस्त्वस्य कथितः सत्यो गुणोद्देशस्त्वया मम ।
तं श्रुत्वाव्यथयं पुंसो वृणुयां किमतोऽर्जुनम् ।
महेन्द्रस्य नियोगेन त्वत्तः संप्रणयेन च ।
तस्य चाहं गुणौघेन फाल्गुने जातमन्मथा ।
गच्छ त्वं हि यथाकाममागमिष्याम्यहं सुखम् ।

Colophon.

वैशंपायन उवाच ।

ततो विसृज्य गन्धर्वं कृतकृत्यं शुचिस्मिता ।
उर्वशी चाकरोत्स्नानं पार्थप्रार्थनलालसा ।

— (L. 14) D5 कुलेन (for शी°). T1 M2 रूपेण शीलेन (by transp.); G4 श्रितेन रूपेण. D1–3. 5 S श्रुतेन (G4 शीलेन) च बलेन च. — (L. 15) D2. 3 श्रुत- (D3 marg. *sec. m.* वन-); D5 श्रुति-; S (G4 damaged) शौर्य- (for बल-). K4 D2. 3. 5 S (G4 damaged) -वीर्याभ्यां (for -वीर्येण). D3 संभूतः; T G2. 3 प्रपन्नः; G1 M संपन्नः; G4 damaged (for संमतः). B3 प्रतिभाववान्; D1 प्रतिभाति तत्. — (L. 16) S तेजस्वी सौम्यशीलश्च (for the prior half). D3 क्षेम° (for क्षमा°). S (except M1; G4 damaged) जित° (for वीत°). — (L. 17) D3 (corrupt) स चापि नि° (for साङ्गोपनि°). S (G1 damaged) गुरुशुश्रूषुरात्मवान् (for the posterior half). — (L. 18) D3 om. line 18; G1 is damaged. B2 योधीत्य. D3 G4 चतुरो वेदान्; D5 चतुरो धीमान्; T G2. 3 M चतुरः सर्वान् (for गुरुशुश्रूषां). K3 तेषां (for मेधां). B4 मेधां वाष्टगुणास्तु यः (*sup. lin.* °श्रयः); D1 मेधाविष्टगुणाश्रयां; D3 नैगमोपन्निषेन्नरः; D5 मेधामष्टगुणां तथा; T G2. 3 M मेधावी गुणवानिह (T2 G3 °नपि; M2 °निव) (for the posterior half). — (L. 19) B1 प्रवीरैर् (for प्रसवैर्). K4 D5 स्वधयापि च; T G1–3 M1 स्वधया च सः (for वयसापि च). D2 पार्थिवैश्च महागुणैः; D3 पार्थिवैश्वर्यजैर्गुणैः; G4 damaged; M2 प्रश्रयैः स्वधिया च सः (for the posterior half). — (L. 20) D2. 3 एकोपि; S (G4 damaged) एकश्च (for एको वै). K4 D3 त्रिदिवे; D5 देवेषु. — (L. 21) T1 अर्थमानो; M2 अकत्थमानो (hypermetric!) (for अकत्थनो). D3 सूक्ष्म° (for स्थूल°). — (L. 23) K4 D2. 3. 5 T2 G2. 3 M सत्यवागूर्जितो (D2. 3 °तं); G4 °वाग्दुर्जयो. — (L. 24) D2. 3. 5 क्षांतश्च; T1 भक्त° (for कान्त°). D2. 3 T2 G3 प्रियो यः; T1 प्रियोन्यः; G1. 2. 4 M प्रियो (G1 °या) च (for प्रियश्च). K4 B1. 3. 4 Dc D1. 2 °संगतः (for °संगरः). — (L. 25) K4 B Dc D1. 6 S (G4 damaged) प्रार्थनीयो; D2. 3 श्लाघनीयो; D5 अर्चनीयो (for प्रार्थनीयैर्). — (L. 26) S आप्तवान् (for आप्नुयात्). K4 सदेहः स्वर्गमाप्नुतां; D1–3 मर्त्यलोकादिहागतः (for the posterior half). — (L. 27) B1 तं च (for तव). D1–3 त्वं तु शक्राभ्यनुज्ञाता. D5 प्रसाद्यतां (for प्रप°). D1–3 तस्य पादांतिकं व्रज (for the posterior half). — D2 om. lines 28–29. — (L. 28) K4 D3 प्रसन्नस् (for प्रपन्नस्). D1 च पार्थिवः (for धनंजयः). — (L. 29) D3 om. line 29. K4 T2 G2–4 M1 स्वात्मानं; B2 D5 M2 सात्मानं (for संमानं). D1 M1 बहुमान्य च; G4 अनुमान्य च. — (L 30) Before line 30, D1. 3. 5 ins. वैशं° उ°. Dn2 प्रीत्या (for प्रीता). D5 स्मितपूर्वम् (for चित्रसेनम्). — (L. 31) K4 D2. 3. 5 G2. 4 M1 यस्तस्य; T1 यस्त्वद्य; G1 यः सत्यं; M2 यंत्तस्य. B1. 3 सर्वो; Dc साधो; D2. 3 शंके; T1 सद्यो; M2 सम्यग् (for सत्यो). B2 (m as above) S [अ]नघ (for मम). — (L. 32) B2 तच्छ्रुत्वा. K4 [अ]प्यप्रियं पुंसां; B2 प्रथिता पुंसो; B4 प्रार्थयेदन्यं; D1. 2 तु वरा नारी; D3 [अ]थ नृपं नारी; S [अ]द्य (G2. 4 °न्यं) प्रियं नारी (for [अ]व्यथयं पुंसो). K4 D1–3 वृणुयात्; B4 वरेण्यं; S प्रणयेत् (for वृणुयां). K4 B3 D1–3. 5 S किमुतार्जुनं. — (L. 33) B1. 4 Dc D4. 6 तु (for च). D1–3 युष्माकं प्रणयेन च (for the posterior half). — (L. 34) K4 अहं तस्य (for तस्य चाहं). Dc2 T1 G2. 4 M फल्गुने. — (L. 35) K4 D1–3 T1 G2. 4 M तद्गच्छ त्वं (for गच्छ त्वं हि). K4 D1–3. 5 S सखे (for सुखम्). — Colophon. *Adhy. no.* (figures, words or both): Dn1. n3 45; D1 46. — (L. 36) D4 T2 G1–3 M2 कृतकृत्या. D1–3 उर्वशी कृतकृत्यवत् (for the posterior half). — (L. 37) S साकरोत्. G1 M मानं (for स्नानं). B3m D5 °दर्शन° (for °प्रार्थन°). D1–3 अलंकारादिभिर्दिव्यैरात्मानं तदिदृक्षया. — (L. 38) D1–3 ततो (D3 तैर)लंकरणीयैश्च; S स्नाना (T1 °ता)लंकारनेपथ्यैर् (G2 °नैपुण्यैर्). D1–3

स्नानालंकरणैर्हृद्यैर्गन्धमाल्यैश्च सुप्रभैः ।
धनंजयस्य रूपेण शरैर्मन्मथचोदितैः ।
अतिविद्धेन मनसा मन्मथेन प्रदीपिता ।
दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ।
चित्तसंकल्पभावेन सुचित्तानन्यमानसा ।
मनोरथेन संप्राप्तं रमन्त्येनं हि फाल्गुनम् ।
निर्गम्य चन्द्रोदयने विगाढे रजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ।
मृदुकुञ्चितदीर्घेण कुमुदोत्करधारिणा ।
केशहस्तेन ललना जगामाथ विराजती ।
भ्रूक्षेपालापमाधुर्यैः कान्त्या सौम्यतयापि च ।
शशिनं वक्त्रचन्द्रेण साह्वयन्तीव गच्छती ।
दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ ।
गच्छन्त्या हारविकचौ स्तनौ तस्या ववल्गतुः ।
स्तनोद्वहनसंक्षोभान्नाम्यमाना पदे पदे ।
त्रिवलीदामचित्रेण मध्येनातीव शोभिना ।
अधो भूधरविस्तीर्णं नितम्बोन्नतपीवरम् ।
मन्मथायतनं शुभ्रं रसनादामभूषितम् ।
ऋषीणामपि दिव्यानां मनोव्याघातकारणम् ।
सूक्ष्मवस्त्रधरं रेजे जघनं निरवद्यवत् ।
गूढगुल्फधरौ पादौ ताम्रायततलाङ्गुली ।
कूर्मपृष्ठोन्नतौ चापि शोभेते किङ्किणीकिणौ ।
सीधुपानेन चाल्पेन तुष्ट्याथ मदनेन च ।
विलासनैश्च विविधैः प्रेक्षणीयतराभवत् ।
सिद्धचारणगन्धर्वैः सा प्रयाता विलासिनी ।
बह्वाश्चर्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ।

संस्कृता; S शोभनैः (for सुप्रभैः). — (L. 39) K4 D1–3 S शक्रस्याभ्यर्थनेन च; B3 सर्वलोकातिगेन वै (for the posterior half). — (L. 40) Ś1 B3 D1–3 S (G1 damaged) वाक्यैश्च (D1. 2 सुवाक्यैश्) चित्रसेनस्य (for the prior half). K4 च दीपिता; D1–3. 5 S च (D1 [अ]पि; D2 [अ]भि-; D3 सु-; D5 प्र-) पीडिता. — (L. 41) B3 D5 दिव्यास्तरणसंकीर्णे; D1–3 °भरणसंपन्ना; T2 G1. 3 °स्तरणसुस्तीर्णे. B4 विचित्रे (for विस्तीर्णे). — (L. 42) D1–3 S om. line 42. K4 B3 भावितानन्य°; B4 सुचित्तागत°; Dc D5 स्वचितानन्य°; Dn1 सचितानन्य° (for the posterior half). — (L. 43) D3 T1. 2 (before corr.) G3. 4 M संप्राप्ता; G1 °प्तो (for °प्तं). D1. 2 मनोरथे (D2 °थैः) समासाद्य (for the prior half). K4 रमंत्येवं हि; B2 Dc Dn1. n3 D5 रमत्येनं हि; B3 S रमयंतीव; D1–3 कामयत्येव (for रमन्त्येनं हि). S फल्गुनं. — (L. 44) S निशाम्य (for निर्गम्य). K4 निशम्य चंद्रोदयनं; D1–3 चंद्रोदयं समासाद्य (for the prior half). — (L. 45) S (except G1 M2) पृथुसु° (for सा पृथु°). K4 D1. 2 M भ(K4 सु)वनं महत्; D3 शयनं प्रति; T G2–4 सदनं (T1 शयनं) महत्. — (L. 46) D3 °दीर्घास्तु (for °दीर्घेण). B3 D1–3. 5. 6 कुसुमोत्करधारिणा (D5 °णी); Dc कुमुदोत्कच°; S (G1 damaged) कुसुमोत्तम° (for the posterior half). — (L. 47) D1 S °पाशेन (for °हस्तेन). D3 केशान्हस्तेन संयम्य (for the prior half). D5 [आ]शु (for [अ]थ). S गच्छमाना व्यराजत. — (L. 48) D3 रूपलावण्यमाधुर्यैः (for the prior half). D3 श्रिया (for [अ]पि च). — (L. 49) D3 मुख- (for वक्त्र-). K4 -वर्येण; D1. 2 -वीर्येण (for -चन्द्रेण). K4 आह्वयंतीव; D1. 2 S आह्व°; D3 शात° (for साह्व°). Dc D5 T2 G3 M2 गच्छति; D3 तर्जितं. — (L. 50) T G2–4 M1 °रागरुचिरौ; M2 °रागरचितौ (for °रागौ सुमुखौ). D3 °गंधेन (for °चन्दन-). K4 Dc D1–3. 5. 6 -भूषितौ (for -रूषितौ). — (L. 51) B1. 3. 4 Dn2. n3 D3–5 °रुचिरौ (for °विकचौ). K4 Dc D1–3. 5 चास्या (for तस्या). — (L. 52) B1. 4 Dn नम्य° (for नाम्य°). — (L. 53) K4 मध्ये चातीव. K4 D1. 2 शोभती; B1 G2 M1 शोभना; D5 M2 शोभिता. — (L. 54) K4 D1. 2 अथ (for अधो). Dc D5 S रथकूबरविस्तीर्णं; D3 तस्यास्तद्तिवि° (for the prior half). — (L. 55) Dn1 D2 S रशना- (for रसना-). K4 B2. 3 D1. 2. 4. 6 S -शोभितं (for -भूषितम्). — (L. 56) D3 मुनीनामपि साध्यानां (for the prior half). K4 Dc D1–3. 5 T1 M °कारकं; B3. 4 °कारिणं (for °कारणम्). — (L. 57) D3 °वस्त्रावृतं; D5 °वस्त्रपरं. D4 S (G1 damaged) भाति (for रेजे). K4 B Dc D1. 2. 5 S चानवद्यया (D5m चाप्यनिंदितं); D4. 6 निरवद्यया (for °वत्). — (L. 58) K4 B Dc D1. 2. 5 S गूढगुल्फशि(S °सि)रौ पादौ (G4 बाहू); D3 व्यूढगुल्फोन्नतौ पादौ (for the prior half). K4 D1. 2 ताम्रपत्रलतां(D2 °तलां)गुली; Dc D3. 5 ताम्रपत्र(Dc1 ताम्रायत)चलां° (D3 °तलां°; D5 °नखां°); S ताम्रपादतलां°. — (L. 59) S चास्याः (M1 तस्याः) (for चापि). D1 T1 G1 M1 शो(D1 शु)भाते; D3 शुशुभौ (for शोभेते). Dc2 D3. 5 °शुतौ; D1 °तलौ; D4. 6 S °किनौ (for °किणौ). K4 D2 शु(D2 सु)शुभाते किणीकृतौ (for the posterior half). — (L. 60) S (except G4) शीधु° (for सीधु°). D1. 2 तुष्टया च; T1 तुष्टोथ; T2 G2–4 तुष्टा च; G1 damaged; M1 तुष्टाथ (for तुष्ट्याथ). B4 Dc वदनेन (for मद°). — (L. 61) K4 B3 Dc D1. 2. 5 S (G1 damaged) विलासितैश्च (for °सनैश्च). — (L. 62) T G M1 साध्यै(T1 °ध्ये)र्याति; M2 प्रार्थिता या (for सा प्रयाता). — (L. 63) S om. line 63. B1. 3 लोभ°; Dc D5 शोभ° (for दर्श°). K4 D1. 2 आश्चर्यमिव लक्ष्यते; D3 आश्चर्यपदमागता (for the posterior half). — D3 om. lines 65–68. — (L. 65) K4 D2. 4–6 तन्वभ्राधोवृता; B3 तनुत्राधोवृते; B4 तन्वभ्रागावृता;

सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तनुरभ्रावृता व्योम्नि चन्द्रलेखेव गच्छती ।
ततः प्राप्ता क्षणेनैव मनःपवनगामिनी ।
भवनं पाण्डुपुत्रस्य फाल्गुनस्य शुचिस्मिता ।
तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता ।
अर्जुनस्य नरश्रेष्ठ उर्वशी शुभलोचना ।
उपातिष्ठत तद्वेश्म निर्मलं सुमनोहरम् ।
स शङ्कितमना राजन्प्रत्युद्गच्छत तां निशि ।
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः ।
तदाभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ।

अर्जुन उवाच ।

अभिवादये त्वां शिरसा प्रवराप्सरसां वरे ।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ।

वैशंपायन उवाच ।

फाल्गुनस्य वचः श्रुत्वा गतसंज्ञा तदोर्वशी ।
गन्धर्ववचनं सर्वं श्रावयामास तं तदा ।

उर्वश्युवाच ।

यथा मे चित्रसेनेन कथितं मनुजोत्तम ।
तत्तेऽहं संप्रवक्ष्यामि यथा चाहमिहागता ।
उपस्थाने महेन्द्रस्य वर्तमाने मनोरमे ।
तवागमनतो वृत्ते स्वर्गस्य परमोत्सवे ।
रुद्राणां चैव सांनिध्यमादित्यानां च सर्वशः ।
समागमेऽश्विनोश्चैव वसूनां च नरोत्तम ।
महर्षीणां च संघेषु राजर्षिप्रवरेषु च ।
सिद्धचारणयक्षेषु महोरगगणेषु च ।
उपविष्टेषु सर्वेषु स्थानमानप्रभावतः ।
ऋद्ध्या प्रज्वलमानेषु अग्निसोमार्कवर्ष्मसु ।
वीणासु वाद्यमानासु गन्धर्वैः शक्रनन्दन ।
दिव्ये मनोरमे गेये प्रवृत्ते पृथुलोचन ।
सर्वाप्सरःसु मुख्यासु प्रनृत्तासु कुरूद्वह ।
त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ।
तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसाम् ।

Dc$_1$ (corrupt) तत्रर्धा व्याकुले; Dc$_2$ D$_1$ नवाभ्रव्यावृते; T G$_{2-4}$ M तन्वभ्रप्रावृता (M$_2$ °व्याहृता); G$_1$ त च भूप्रावृता (for तनुरभ्रावृता). Dn$_2$ D$_5$ T$_2$ G$_{2.3}$ M$_2$ गच्छति (for °ती). — (L. 66) S [अ]तिदुष्प्रापा (G$_1$ damaged; T$_1$ M$_1$ °पं) (for क्षणेनैव). S (G$_1$ damaged) मनसापि विकर्म(M$_1$ °र्मि)भिः (for the posterior half). — (L. 67) S (except G$_4$; G$_1$ damaged) फल्गुनस्य. K$_4$ D$_2$ S (G$_1$ damaged) गुणाधिका (for शुचि°). — (L. 68) T$_2$ G$_3$ °मपि (for °मनु-). K$_4$ D$_2$ द्वारस्थैस्तस्य; T$_1$ द्वास्थेनापि; T$_2$ G$_{2-4}$ M$_1$ द्वास्थैरपि (T$_2$ G$_3$ °भि-); G$_1$ M$_2$ द्वास्थैश्च वि- (for द्वारस्थैश्च). — (L. 69) B$_3$ नरव्याघ्र; S नृपश्रेष्ठ (for नर°). K$_4$ D$_{2.3}$ S परमाप्सराः; B$_3$ स्वर्गभूषणा (for शुभ°). — D$_5$ om. lines 70–72; T$_1$ om. line 70. — (L. 70) Dc D$_1$ उपातिष्ठत्तदा वेश्म (for the prior half). B$_1$ Dc मनोरमं (for °हरम्). K$_4$ D$_{2.3}$ S (T$_1$ om.) तत्र चो(K$_4$ D$_{1.2}$ तत उ)त्थाय शयनाद्वासविर्वासवोपमः. — (L. 71) S अशंकितमना. B$_4$ प्रत्युद्गच्छच्च; Dc D$_1$ M प्रत्यागच्छत; T G$_{3.4}$ प्रत्यगच्छत; G$_2$ प्रत्यवेक्षत (for प्रत्युद्°). Dn$_2$ प्रत्युद्गच्छत्ततो निशि; D$_3$ अभ्युत्थानं चकार ह (for the posterior half). — (L. 72) G$_{2.4}$ प्राप्तां (for पार्थो). Dc ननामावृतलोचनः; T$_2$ G$_{2.3}$ लज्जावृतविलोचनः. — (L. 73) B$_3$ Dc S (G$_1$ damaged) पादाभिवं(Dc D$_5$ T$_1$ °वा)दनं कृत्वा. — (L. 74) Hypermetric! T G$_{1.3}$ M$_1$ त्वा (for त्वां). S प्रमदे° (for प्रवरा°). — (L. 75) K$_4$ D$_{2.3}$ S किं चा(D$_2$ वा-; T$_1$ न्वा)गमनकृत्यं ते ब्रूहि सर्वं यथातथं. — (L. 76) K$_4$ D$_{2.3}$ S (G$_1$ damaged) अकामं फा(S फ)ल्गुनं ज्ञात्वा(K$_4$ दृष्ट्वा) (for the prior half). K$_4$ D$_{2.3}$ S (G$_1$ damaged) इंगितज्ञा (for गतसंज्ञा). G$_{2.4}$ ततो° (for तदो°). — (L. 77) Dc D$_{1.4}$ तत्तदा; D$_3$ पांडवं; S (G$_1$ damaged) फल्गुनं (for तं तदा). — (L. 79) K$_4$ B$_{1.3.4}$ Dc D$_{1-3.5}$ S सर्वं (for ऽहं सं-). D$_3$ om. lines 81–88. — (L. 81) K$_4$ B$_3$ Dc D$_{1.2.5}$ S (T$_2$ before corr.) तवागमनतुष्ट्या च (Dc D$_1$ ते) (for the prior half). — (L. 82) K$_4$ D$_2$ मरुतां (for रुद्राणां). K$_4$ Dc D$_{1.2.5}$ S (G$_1$ damaged) सांनिध्ये (for °ध्यम्). — (L. 83) S (G$_1$ damaged) चापि (for चैव). D$_2$ समागमे (for नरो°). — (L. 84) M$_2$ सर्वेषां (for संघेषु). M$_2$ राजर्षीणां वरेषु च (for the posterior half). — (L. 85) D$_2$ om. line 85. — (L. 86) Dc D$_1$ om. line 86. K$_4$ D$_2$ S (except G$_4$) दृष्टेषु (for सर्वेषु). K$_4$ स्थानमात्र°; G$_4$ मानस्थान° (by transp.). — (L. 87) G$_3$ रुच्या (for ऋद्ध्या). T$_2$ G$_{2-4}$ प्रज्वाल्य° (for प्रज्वल°). K$_4$ D$_2$ T$_1$ G$_3$ M अग्नीषोमार्क-. K$_4$ D$_{2.5}$ -वर्चसु; T$_1$ M$_1$ -वर्त्मसु (for -वर्ष्मसु). — (L. 88) B$_{2-4}$ Dc D$_{2.4.6}$ घट्टमानासु; D$_1$ पद्य°; D$_5$ कण° (for वाद्य°). K$_4$ वीणासुवम्यमानासु. A few MSS. शक्रनंदनः; B$_3$ शत्रुमर्दन. — (L. 89) S गीते (for गेये). K$_4$ Dc D$_{1.2}$ °लोचने (for °लोचन). D$_3$ गेये प्रवृत्ते नृत्येथ गंधर्वे पृथुलोचना. — (L. 90) K$_4$ D$_2$ G$_2$ सर्वाप्सरससुमुख्यासु; Dc D$_1$ °रःसु मुख्येषु; D$_4$ °रःसु पुण्यासु; T$_1$ °रसमाजेषु; G$_1$ M °र(M$_2$ °रः)समास्थासु; G$_4$ °रःसमाख्यासु. K$_4$ B$_{1.2.4}$ Dc Dn$_1$ D$_{1.2}$ G$_{1.2.4}$ प्रवृत्तासु; D$_5$ प्रपन्नासु; T$_1$ समास्थासु (for प्रनृत्तासु). S °त्तम (for °द्वह). — (L. 91) K$_4$ किलाभिलषन्; D$_{1.2}$ कुलाभिलखं (for किलानिमिषः). B$_3$ मामेकां दृष्टवानसि; Dc D$_5$ मामेकाग्रं (D$_5$ °ग्रः) प्रदृष्टवान्. — (L. 92) B$_3$m Dc D$_1$ ततः (B$_3$m तत्र) चैवं-

तव पित्राभ्यनुज्ञाता गताः स्वं स्वं गृहं सुराः ।
तथैवाप्सरसः सर्वा विसृष्टाः स्वगृहं गताः ।
अपि चान्याश्च शत्रुघ्न तव पित्रा विसर्जिताः ।
ततः शक्रेण संदिष्टश्चित्रसेनो ममान्तिकम् ।
प्राप्तः कमलपत्राक्ष स च मामब्रवीदथ ।
त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्णिनि ।
प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ।
शक्रतुल्यं रणे शूरं रूपौदार्यगुणान्वितम् ।
पार्थं प्रार्थय सुश्रोणि त्वमित्येवं तदाब्रवीत् ।
ततोऽहं समनुज्ञाता तेन पित्रा च तेऽनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिंदम ।
त्वद्गुणाकृष्टचित्ताहमनङ्गवशमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ।
वैशंपायन उवाच ।
तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतोऽर्जुनः ।
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये ।
दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भाविनि ।
गुरुदारैः समाना मे निश्चयेन वरानने ।
यथा कुन्ती महाभागा यथेन्द्राणी शची मम ।
तथा त्वमपि कल्याणी नात्र कार्या विचारणा ।
यच्चेक्षितासि विस्पष्टं विशेषेण मया शुभे ।
तच्च कारणपूर्वं हि शृणु सत्यं शुचिस्मिते ।
इयं पौरववंशस्य जननी मुदितेति ह ।
त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ।
न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः ।
गुरोर्गुरुतरी मे त्वं मम वंशविवर्धिनी ।
उर्वश्युवाच ।
अनावृताश्च सर्वाः स्म देवराजाभिनन्दन ।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ।
पूरोर्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः ।

गते; D2 तत्र चोपगते (for तत्र चावभृथे). — (L. 93) K4 D2 स्वान् स्वान् निलयान् (D2 लीलया) सुराः; S (G1 damaged) गताः स्वनिलयान् (T1 °यं) सुराः. — (L. 94) K2 B1 Dn D4 विशिष्टाः (for विसृष्टाः). K4 Dc D1–3. 5 स्वान्गृहान्; S निलयं (for स्वगृहं). Dc D1. 5 तथा; T1 सुराः (for गताः). — (L. 95) Dc D1. 5 एताश्; S अहं (for अपि). B1 D5 विवर्जिताः (for विस°). — (L. 96) D3 निर्दि° (for संदि°). — (L. 97) K4 D2. 3 S (G1 damaged) स्वयं; B2 इदं (for अथ). Dc D1. 5 मामेवं स्वयमब्रवीत् (for the posterior half). — (L. 98) Dc त्वत्कृतेन (for °तेऽहं). D3 सुरेंद्रेण. D1. 2 G4 M2 प्रेषिता (for °तो). D1. 2 G3. 4 वरवर्णिनी. — (L. 99) D2 सुरेशस्य (for महेन्द्रस्य). D3 °त्मनस्तथा; D5 °त्मना सह (for °त्मनश्च ह). — (L. 100) Dc D1. 3 वीरं (for शूरं). K2 B Dn D4. 6 G1 सदौ° (for रूपौ°). — (L. 101) Dc D1. 4. 5 त्वमित्येव. Dc च सो; D2 S स मा; D5 वचो (for तदा). D3 (corrupt) त्वमेनं समुनोदितं. — (L. 102) Dc D1 तथा (for ततो). T1 G1. 2 M प्रीता (for पित्रा). M2 तवांतिकं (for च तेऽनघ). D3 तव पित्रा च तेन च (for the posterior half). — (L. 103) M2 अनुप्राप्ता महाबाहो (for the prior half). — (L. 104) K4 D2 S न केवलं हि शक्रेण प्रेषिता चाह(K4 D2 संदिष्टेत्यह)मागता; D3 त्वत्संनिधानं शक्रस्य संदेशादहमागता. — (L. 106) D3 वदतीं (for ब्रुवतीं). K4 D2 S °न्वितो (for °वृतो). — (L. 107) K4 D2 transp. उवाच and पिधाय. K4 B4 D2. 3 S त्रिदशोपमः (for °शालये). — (L. 108) S अश्रुतं (for दुःश्रुतं). Dc1 D2. 3. 5 ते (for मे). Dc2 D1 तेषु (for मेऽस्तु). K4 यथा; G2 M यन्मा (for यन्मां). K4 Dc2 D1–3. 5. 6 T1 G1. 2 M भामिनि (for भाविनि). — (L. 109) Dc Dn2 D1. 5 त्वं; S हि (T1 °सि; M1 °सि also) (for मे). K4 D2 नित्यमेव; Dc D1. 5 नित्यमेषा; D3 विमेम्येषा; S नित्यं मेसि (T1 मे हि) (for निश्चयेन). Dc D1. 5 मतिर्मम; D3 वरांगने (for वरा°). — K4 B1–3 D2 S om. lines 110–111. — (L. 110) D5 reads line 110 in marg. D3. 5 यथा कुंती च माद्री च तथा त्वमपि भामिनि. — (L. 111) Dc Dn D1. 4. 6 कल्याणि (for °णी). — (L. 112) Dc D1. 5 यद्वीक्षि°; T2 G2–4 यत्प्रेक्षि° (for यच्चेक्षि°). D3 सुभगे (for विस्पष्टं). K4 तवाशुभे (m मया शुभे as above). — (L. 113) K4 त्वं तच्च कारणं सर्वं; Dc D1. 2. 5 T G तच्च मे कारणं पूर्वं (D2 T G सर्वं); D3 M तत्र (M1 तस्य) मे कारणं सर्वं (for the prior half). K4 D2. 3 S शृणु सत्येन सुस्मिते (D3 सुव्रते). — (L. 114) D3 इह (for इयं). K2 D3 जननीमुचितेति ह (D3 °न हि); K4 °नी मुदितेन ह; B2. 3 Dc D5 °नी विदितेति ह; D1. 2 °नी मुदितोभवं; S °नी मुदतीति ह (T1 °नीति सुनीति हि) (for the posterior half). — (L. 115) K4 D2. 3 S विस्मयो°; D5 विज्ञातो° (for विज्ञायो°). — (L. 116) T2 G2. 3 सुश्रोणि (for कल्याणि). K2 D5. 6 मंतुम्; K4 B3 Dc Dn2 D1–3 S गंतुम्; D4 मातुम् (for ध्यातुम्). K4 D1. 2 अप्सरे; D3 उत्सहे; S अंगने (for अप्सरः). — (L. 117) K2 Dc2 Dn गुरुतरा. D2. 3 T G1. 3. 4 M त्वं मे (by transp.). Dn1 सा मे (for मम). K2 Dn2. n3 मम त्वं वंशवर्धिनी; B1. 2. 4 D2. 3. 6 T G2–4 M2 मम वंशविवर्धनी. — (L. 118) K4 च ताः सर्वाः; S वयं सर्वाः (for च सर्वाः स्म). K4 D2. 5 देवराज्ञा वरानन; Dc D1 °राजं (D1 °राज-) वरानने; D3 °राजानुगानघ; T G °वार(T1 °वारा)-वरांगनाः; M °वारा वरानन (for the posterior half). — (L. 119) T2 G1. 3 मा (for मां). — (L. 120) B

तपसा रमयन्त्यस्माश्च च तेषां व्यतिक्रमः ।
तत्प्रसीद न मामार्तां विसर्जयितुमर्हसि ।
हृच्छयेन च संतप्तां भक्तां च भज मानद ।
अर्जुन उवाच ।
शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते ।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ।
यथा कुन्ती च माद्री च शची चैव ममानघे ।
तथा स्ववंशजननी त्वं हि मेऽद्य गरीयसी ।
गच्छ मूर्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि ।
त्वं हि मे मातृवत्पूज्या रक्ष्योऽहं पुत्रवत्त्वया ।
वैशंपायन उवाच ।
एवमुक्ता तु पार्थेन उर्वशी क्रोधमूर्छिता ।
वेपन्ती भ्रुकुटीवक्रा शशापाथ धनंजयम् ।
उर्वश्युवाच ।
तव पित्राभ्यनुज्ञातां स्वयं च गृहमागताम् ।
यस्मान्मां नाभिनन्देथाः कामबाणवशं गताम् ।
तस्मात्त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुमानिति विख्यातः षण्ढवद्विचरिष्यसि ।
वैशंपायन उवाच ।
एवं दत्त्वार्जुने शापं स्फुरदोष्ठी श्वसन्त्यथ ।
पुनः प्रत्यागता क्षिप्रमुर्वशी गृहमात्मनः ।
ततोऽर्जुनस्त्वरमाणश्चित्रसेनमरिंदमः ।
संप्राप्य रजनीवृत्तं तदुर्वश्या यथा तथा ।
निवेदयामास तदा चित्रसेनाय पाण्डवः ।
तत्र चैवं यथावृत्तं शापं चैव पुनः पुनः ।
न्यवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ।
तत आनाय्य तनयं विविक्ते हरिवाहनः ।
सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानोऽभ्यभाषत ।
सुपुत्राद्य पृथा तात त्वया पुत्रेण सत्तम ।
ऋषयोऽपि हि धैर्येण जिता वै ते महाभुज ।

---

Dc Dn3 D1 पुरोर् (for पू°). Dc D1 च (for हि). K4 D2 पितरः कस्य पुत्राश्च; D3 पितरो वापि तनया; S पितरः सोदराः पुत्रा (for the prior half). D3 [ऽ]पि (for वा). D1 M2 इहागताः; T G M1 [आ]गता इह (for त्विहा°). — (L. 121) T1 °यंति स (for °यन्त्यस्मान्). T1 G1 M न चास्त्ये(M2 °स्त्वे)षां; T2 G2. 3 नैव तेषां; G4 न वै तेषां (for न च तेषां). — (L. 123) K4 B1 S संप्राप्तां (for संतप्तां). S (except G4) मानघ (for °द). — (L. 124) T1 यथा; G1 यद्वा; G2 M यत्त्वा (for यत्त्वां). — (L. 125) B2 सदैवता. (for सदे°). — (L. 126) K2 D5 वेह; K4 B1–3 Dc Dn D1. 2 चेह (for चैव). S समा इह (for ममानघे). D3 समानेति समासि मे (for the posterior half). — (L. 127) K2 B Dn D4. 6 च; T1 त्वं (for स्व-). D3 [ऽ]ति (for ऽद्य). — (L. 128) M2 त्वत्पादौ (for पादौ ते). — (L. 129) K4 पाल्या (for पूज्या). G1 ईक्ष्यो; a few MSS. रक्षो (for रक्ष्यो). — (L. 130) K4 Dc D2. 3. 5 S तथा(S °तो)वधूता पार्थेन (for the prior half). — T2 G3 om. lines 131–134. — (L. 131) K4 चुकोप चोर्वशी राजन्; B3 Dc D1–3. 5 T1 G1. 2. 4 M वेपंती भ्रुकुटीं कृत्वा. K4 शापो दत्तश्च दारुणः (for the posterior half). — (L. 132) K4 om. line 132. G2. 4 चित्रसेना° (for तव पित्रा°). — (L. 133) T1 G2. 4 M त्वं (for मां). D3 °प्रपीडितां (for °वशं गताम्). K4 भजंतीं मामनादृत्य न कृतं वचनं मम. — (L. 134) B3. 4 Dc D5 T1 G1. 2. 4 नर्तकः (for °नः). — (L. 135) S अपुंस्त्वेन च (for अपुमानिति). A few MSS. षंड° or खंढ° (for षण्ढ°). — (L. 136) K2 B D (except D1–3. 5) S (except M1) om. the ref. (M1 om. उवाच). K4 D2 S स्फुरितोष्ठी; B3. 4 D5 स्फुरदोष्ठ. K2 श्वसत्यथ; K4 D2. 5 °सन्निव; B4 °सत्तथा; Dc T G3 M1 °संत्यपि; D3 °सित्यलं; G1. 2. 4 M2 श्वसत्यपि. — (L. 137) S शीघ्रम् (for क्षिप्रम्). K4 D1–3 S स्वं निवेशनं (for गृहमा°). — K4 B3 D1–3 S subst. for lines 138–139: D5 ins. (the first line only) after 137:

पार्थोऽपि लब्ध्वा तं शापं तां निशां दुःखितोऽवसत् ।
चिन्तयंश्चित्रसेनाय प्राप्तं सर्वमदृष्टवान् ।
ततः प्रभाते विमले गन्धर्वस्य यथातथम् ।

[(L. 1) T2 G2–4 शापं तं (by transp.). G1 [ऽ]भवत् (for ऽवसत्). B3 तां निशां दुःखितो राजन्तदा पार्थस्तदावसत्. — (L. 2) B3 M2 om. line 2. T G विवक्षु° (for चिन्तयं°). M2 विचित्रं चित्रसेनाय; G1 स चित्रवर्यसेनाय (for the prior half). T G2–4 M1 °महृष्टवत्; G1 °मदृष्टवत् (for °मदृष्टवान्).] — M1 om. lines 138–141. — (L. 138) Dc त्वरायुक्तश (for त्वरमाणश्). B Dc D5. 6 चित्रसेनस्य मंदिरं (Dc °रे) (for the posterior half). — (L. 139) Dc D5 उर्वश्याश्च (for तदुर्वश्या). B Dc D5 यथातथं. — (L. 140) D6 T1 G M2 चित्रसेनस्य. S (M1 om.) फल्गुनः (for पाण्डवः). — (L. 141) K4 B Dc D1–3. 5 S (M1 om.) तत्र (T1 यच्च; T2 G1. 3. 4 M2 तच्च) सर्वं; D4. 6 चित्रसेनं (for तत्र चैवं). S (M1 om.) यथातथं (for पुनः पुनः). D3 शापस्येव तथा पुनः (for the posterior half). — (L. 142) K2 Dn D4 अवेदयच्च (K2 °द्ध); K4 निवे°; Dc D5 आवे°; D6 न्यवेदयत्स. — (L. 143) S तदा त्वानाय्य तनयं. — (L. 144) K4 B2–4 शांत° (for सान्त्व°). — (L. 145) B4 Dc Dn2 D5 सत्पुत्रा° (for सु°). Dc T2 G2–4 transp. पृथा and त्वया. D5 त्वया (for पृथा), and माता (for त्वया). K4 B1. 3. 4 D1–3. 5 S पुरुषसत्तम (G1 [अ]द्य पुरुषर्षभ); Dc [अ]हं पुरुषोत्तमः (for पुत्रेण सत्तम). — (L. 146) D3 damaged. S जिताश्चैते.

यस्तु दत्तवती शापमुर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ।
अज्ञातवासो वस्तव्यो युष्माभिर्भूतलेऽनघ ।
वर्षे त्रयोदशे वीर तत्र त्वं क्षपयिष्यसि ।
तेन नर्तनवेषेण अपुंस्त्वेन तथैव च ।
वर्षमेकं विहृत्यैव ततः पुंस्त्वमवाप्स्यसि ।
एवमुक्तस्तु शक्रेण फाल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापं व्यचिन्तयत् ।
चित्रसेनेन सहितो गन्धर्वेण यशस्विना ।
रेमे स स्वर्गभवने पाण्डुपुत्रो धनंजयः ।
य इदं शृणुयान्नित्यं वृत्तं पाण्डुसुतस्य वै ।
न तस्य कामः कामेषु पापकेषु प्रवर्तते ।
इदममरवरात्मजस्य घोरं
शुचि चरितं विनिशम्य फाल्गुनस्य ।
व्यपगतमददम्भरागदोषा-
स्त्रिदिवगताभिरमन्ति मानवेन्द्राः ।

Colophon.

## 7

$K_2$ B (except $B_1$) D (except $D_{1-3}$) ins. after 3. 49. 24; $K_1$ (which om. 21–24) ins. after 3. 49. 20:

द्यूतप्रियेण राजेन्द्र कृतं तद्भवता तथा ।
प्रायेणाज्ञातचर्यायां वयं सर्वे निपातिताः ।
न तं देशं प्रपश्यामि यत्र सोऽस्मान्सुदुर्जनः ।
न विज्ञास्यति दुष्टात्मा चारैरिति सुयोधनः ।
अधिगम्य च सर्वान्नो वनवासमिमं ततः ।
प्रव्राजयिष्यति पुनर्निकृत्याधमपूरुषः ।
यद्यस्मानभिगच्छेत पापः स हि कथंचन ।
अज्ञातचर्यामुत्तीर्णान्दृष्ट्वा च पुनराह्वयेत् ।
द्यूतेन ते महाराज पुनर्द्यूतमवर्तत ।
भवांश्च पुनराहूतो द्यूतेनैवापनेष्यति ।
स तथाक्षेषु कुशलो निश्चितो गतचेतनः ।
चरिष्यसि महाराज वनेषु वसतीः पुनः ।
यद्यस्मान्सुमहाराज कृपणान्कर्तुमर्हसि ।
यावज्जीवमवेक्षस्व वेदधर्मांश्च कृत्स्नशः ।
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः ।
अनुज्ञातस्त्वया गत्वा यावच्छक्ति सुयोधनम् ।
यथैव कक्षमुत्सृष्टो दहेदनिलसारथिः ।
हनिष्यामि तथा मन्दमनुजानातु नो भवान् ।

---

$T_1$ °रथ (for °भुज). — (L. 147) $K_4$ $D_{1-3}$ यच्च; S यं च (for यस्तु). — (L. 148) $D_3$ स चापि हि तथा काले (for the prior half). — (L. 149) $K_3$ $B_2$ Dn $D_{4.6}$ भवद्भिर् (for युष्माभिर्). $D_3$ किल (for ऽनघ). — (L. 150) $K_2$ $B_1$ Dn $D_{4.6}$ तं तत्र; $B_3$ $D_{1.3.5}$ तत्र तं ($D_3$ तद्) (for तत्र त्वं). $D_{2.3}$ क्षपयिष्यति; S गमयिष्यसि. — (L. 151) $D_3$ तत्र (for तेन). $T_2$ G नर्तक° (for नर्तन°). S अपुंस्कत्वेन ($T_1$ अप्यपुंस्त्वेन) चैव हि. — (L. 152) $K_3$ Dn $G_4$ °मेवं (for °मेकं). $B_3$ $Dc_2$ $D_3$ °त्यैवं (for °त्यैव). — (L. 153) Before line 153, $K_4$ Dc $D_{1-3.5}$ S ins. वैशं° उ° (S om. उ°). S अर्जुनः (for फाल्गुनः). — (L. 154) $D_{1.2}$ विंचित°; S अचिंत° (for व्यचिन्त°). — (L. 156) S रतवान् (for रेमे स). $K_4$ $B_{1.3.4}$ Dc $D_{1-3.5}$ स्वर्गसदने; S शक्र($G_1$ चित्र)सदने (for स्वर्गभवने). — (L. 157) $K_3$ Dn इद यः (by transp.); $B_{1.4}$ $D_{1.2}$ $T_2$ $G_1$ य इमं; $T_1$ M य इमां. $K_3$ Dn वृत्तं नित्यं (by transp.); S नित्यं धृतिं. — (L. 158) $K_4$ $D_2$ पातकेषु; $T_1$ कामु° (for पाप°). $D_3$ पापेषु परिवर्तते. — Metre of final stanza: Puṣpitāgrā. — (L. 159) $T_1$ इयम् (for इदम्). S घोरां (for घोरं). — (L. 160) $B_3$ पांडवस्य (for फाल्गु°). $K_3$ Dc $D_2$ शुचि चरितं धनंजयस्य श्रुत्वा; S धृतिमचलां च धनजंयस्य श्रुत्वा ($T_2$ $G_{2-4}$ दृष्ट्वा). — (L. 161) $T_2$ $G_{2-4}$ अपगत- (for व्यपगत-). $B_3$ °रागदंभ° (by transp.); S -भयदं($T_2$ ($G_3$ °दं)भरागदोषाम्. — (L. 162) S रमयंति (for [अ]भिरमन्ति). $D_3$ त्रिदिवगतान्नमयेद्धि पार्थिवेंद्रान्.

## 7

(L. 1) $K_1$ Dn transp. कृतं and तथा. Dc द्यूतं तद्भवता यथा. — (L. 3) $K_3$ सुदुर्जयः (for °र्जनः). — (L. 4) $K_3$ चारैर्वेत्ति (for °रिति). — (L. 5) $B_3$ reads line 5 in marg. $K_1$ अभि° (for अधि°). — (L. 6) $D_5$ पराजयिष्यसि (for प्रव्राज°). $B_4$ $Dc_1$ $D_5$ [अ]धर्म°; $D_4$ यम° (for [अ]धम°). — (L. 7) $B_4$ तथास्मानधिगच्छेत. — (L. 8) $B_{2-4}$ Dc अज्ञातवासा($B_3$ °चर्या)दुत्तीर्णान्. — (L. 9) $B_3$ $D_1$ युद्धम् (for द्यूतम्). $K_1$ पुनः पूर्ववदेव हि (for the posterior half). — (L. 10) $K_3$ $B_{3.4}$ Dc तु (for च). $B_3$ °यास्यति (for °नेष्यति). — (L. 11) $B_4$ स यथा; Dc $Dn_2$ $D_5$ सर्वथा (for स तथा). $B_3$ $Dn_2$ [अ]कुशलो (for कुशलो). $K_1$ [ऽ]कृत° (for गत°). — (L. 12) $K_1$ चरिष्यति भवान्राजन् (for the prior half). Dc वसतिं (for °तीः). — (L. 13) $K_1$ तु; $Dn_1$ न (for सु-). — (L. 14) $B_{3.4}$ Dc $D_5$ वेदान्; $B_3$ देवान् (for वेद-). $K_1$ $B_{2-4}$ Dc $D_{4-6}$ शाश्वतान् (for कृत्स्नशः). — Line 15 = 3. 49. 20$^{ab}$. — (L. 16) Dc Dn $D_2$ यावद्धन्मि (for °च्छक्ति). — (L. 18) $K_1$ मे; $B_4$ मां (for नो).

## 8

(L. 1) $B_3$ वस्त्राणि (for वासांसि). — (L. 2) B Dc $D_{5.6}$

## 8

After 3. 53. 7, $K_{1.2}$ B D ( except $D_{1-3}$ ) ins. :

विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा ।
भूषणानि तु मुख्यानि देवान्प्राप्य तु भुङ्क्ष्व वै ।
य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः ।
हुताशमीशं देवानां का तं न वरयेत्पतिम् ।
यस्य दण्डभयात्सर्वे भूतग्रामाः समागताः ।
धर्ममेवानुरुध्यन्ति का तं न वरयेत्पतिम् ।
धर्मात्मानं महात्मानं दैत्यदानवमर्दनम् ।
महेन्द्रं सर्वदेवानां का तं न वरयेत्पतिम् ।
क्रियतामविशङ्केन मनसा यदि मन्यसे ।
वरुणं लोकपालानां सुहृद्वाक्यमिदं शृणु ।
नैषधेनैवमुक्ता सा दमयन्ती वचोऽब्रवीत् ।
समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ।
देवेभ्योऽहं नमस्कृत्य सर्वेभ्यः पृथिवीपते ।
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ।
तामुवाच ततो राजा वेपमानां कृताञ्जलिम् ।
दौत्येनागत्य कल्याणि तथा भद्रे विधीयताम् ।
कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः ।
परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ।
एष धर्मो यदि स्वार्थो ममापि भविता ततः ।
एवं स्वार्थं करिष्यामि तथा भद्रे विधीयताम् ।

## 9

After 3. 55. 1, $M_{2}$ ins. :

मद्यपूर्णं समादाय घटं कटिसमन्वितम् ।
अपरेण तु मांसं च दग्धकाष्ठाचितं बहु ।
श्वभिः परिवृतो रौद्रः कपटी भ्रुकुटीमुखः ।
रक्ताम्बरधरः काळो रक्तस्रगनुलेपनः ।
कथयन्विविधास्तत्र कथाः परमदारुणाः ।
परदारापहरणं परद्रव्यप्रलम्भनम् ।
पाने चातिप्रसङ्गं च विश्वासस्य च घातनम् ।
द्यूते च मृगयायां च चौर्ये चाशुचिकर्मणि ।

## 10

For 3. 62. 1–17, $K_{4}$ $D_{1-3}$ subst. :

बृहदश्व उवाच ।
सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा ।
अगच्छद्राजशार्दूल विद्युल्लेखेव शारदी ।
सार्थे महति दुःखार्ता भर्तृदर्शनलालसा ।
रजसा समवच्छन्ना सार्थजेन शुचिस्मिता ।
अनभिज्ञायमानैव गच्छन्ती सुमहद्वनम् ।
आससाद सरो रम्यं भास्करस्यास्तसंगमे ।
शीततोयं सुविपुलं निर्मलं नैकयोजनम् ।
कह्लारैः समवच्छन्नं पद्मोत्पलविराजितम् ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
तीरजैस्तरुभिर्हृद्यैः फलपुष्पोपशोभितैः ।
व्यराजत यथा राजा सुभृत्यैः परिवारितः ।
तदाश्रित्य स सार्थस्तु निवासायोपजग्मिवान् ।
भारार्ताः सौरभेयास्तु क्षुत्तृषापरिवारिताः ।
अवरोपितभारास्तु लेभिरे परमं सुखम् ।
तथाश्वा वारणाश्चैव रासभाः करभैः सह ।
दृष्ट्वैव तत्सरो रम्यमाश्वासं परमं ययुः ।
अथानन्तरमेवेह वणिजः पथिकास्तथा ।
यथायोगं यथास्थानं स्वावासं प्रतिपेदिरे ।
यथास्थितिसमाचारमाहारस्थानमेव च ।
अवतीर्यावसन्नानां चक्रुश्चैव प्रवेक्षणम् ।

च ( for the first तु ). — ( L. 4 ) $K_{2}$ $Dc_{1}$ $D_{4}$ कांतं ; $B_{1}$ या तं ( for का तं ). — ( L. 5 ) $K_{1}$ भूतास्त्रासससमन्विताः ( for the posterior half ). — ( L. 6 ) Dc °मेवाव° ( for °मेवानु° ). $K_{2}$ $Dc_{1}$ $Dn_{2}$ कांतं ( for का तं ). — ( L. 7 ) $B_{1.3}$ °सूदनं ( for °मर्दनम् ). — ( L. 8 ) $K_{2}$ $Dc_{1}$ कांतं ( for का तं ). —( L. 11 ) $B_{1.3.4}$ Dc $D_{5}$ तु ( for सा ). — ( L. 13 ) $K_{2}$ $B_{1.3}$ Dc नमस्कृत्वा. — ( L. 16 ) $D_{5}$ दूत्येन ( for दौ° ). $B_{2}$ Dc $D_{5}$ नाहं ( Dc कथं ) स्वार्थमिहोत्सहे ( for the posterior half ); cf. line 18. — ( L. 18 ) $B_{3}$ कर्तुं ( for कथं ). — ( L. 19 ) $K_{1}$ तथा ; $K_{2}$ पुनः ( for ततः ). — ( L. 20 ) Dc तत्र ( for भद्रे ).

## 10

( L. 1 ) = 3. 62. 1[ab]. $D_{3}$ सार्थवाहस्य तद्वचः. — ( L. 2 ) $D_{1}$ नर° ( for राज° ). — ( L. 3 ) Cf. 3. 62. 1[cd]. $D_{3}$ भर्तुर् ( for भर्तृ- ). — ( L. 4 ) $D_{1}$ सार्थेन सह दुःखिता ( for the posterior half ). — ( L. 5 ) $D_{1}$ °माने च ; $D_{3}$ °माना तु ( for °मानैव ). — ( L. 7 ) $K_{4}$ चैक° ; $D_{1}$ नव° ( for नैक° ). — ( L. 10 ) $K_{4}$ °शोभितं ( for °शोभितैः ). — ( L. 11 ) $K_{4}$ विराजति ; $D_{1}$ विराजत. $K_{4}$ स्व° ( for सु° ). — ( L. 12 ) $D_{1}$ यदाश्रित्य. $K_{4}$ $D_{1}$ तु ( for च ), and °चक्रमे ( for °जग्मिवान् ). — ( L. 13 ) $K_{4}$ $D_{1}$ च ( for तु ). $K_{4}$ लेभिरे परमं सुखं ; $D_{2}$ क्षुत्तृषापरिकार्शिताः. — $K_{4}$ om. line 14. — ( L. 17 ) $D_{1}$ °मेवाह ; $D_{2}$ °मेते च ( for °मेवेह ). — ( L. 18 ) $K_{4}$ यथाजोषं ( for °योगं ). $K_{4}$ आवासं ; $D_{3}$ स्ववासं. — ( L. 20 ) $D_{1}$ विषण्णानां ( for [अ]वसन्नानां ). $K_{4}$ [अ]न्ववेषणं ; $D_{1}$ [अ]प्यवेक्षणं ( for प्रवेक्षणम् ). — ( L. 22 ) $D_{2}$ परे ( for [अ]परे ). — ( L. 23 ) $K_{4}$ समागमान्. — ( L. 25 ) $D_{1}$ च ( for ते ).

चक्रुः कथाश्च विविधाः क्रयविक्रयसंश्रिताः।
प्रशंसन्त्यपरे कष्टामटवीं श्वापदावृतम्।
स्मरन्तो गृहभोगांश्च ज्ञातीनां च समागमम्।
पुत्रमित्रकलत्राणि सर्वे निद्रावशं ययुः।
संवाहनेन भाराणां बहुवासरजेन ते।
खिन्नाः पतितगात्रास्तु निद्रयापहृता भृशम्।
प्रसारिताङ्गाः खिन्नाश्च मृतकल्पा इवासते।
अथार्धरात्रसमये गजयूथं महत्तदा।
आजगाम सरो यत्र पिपासुस्तत्सरोजलम्।
अथापश्यत तं सार्थं सार्थजान्सुबहून्गजान्।
ते तान्ग्राम्यगजान्दृष्ट्वा सर्वे वनगजास्तदा।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः।
तेषामापततां वेगः करीणां दुःसहोऽभवत्।
नगाग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ।
स्पन्दतामपि नागानां नालं संस्था वनोद्भवैः।
करिभिः करिणः सर्वे नीता मृत्युवशं क्षणात्।
स च सार्थो विमथितः सस्त्रीबालगजान्वितः।
आरावः सुमहानासीत्त्रैलोक्यभयकारकः।
वाजिभिः प्रद्रुतैश्चैव महोष्ट्रै रासभैस्तथा।
अन्योन्यं नाभिरक्षन्त मथ्यमाना वनद्विपैः।
हतो भ्राता हतः पुत्रो हतः स्वामी हतो मम।
एषोऽग्निरुत्थितः कष्टं त्रायध्वं धावताधुना।
रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं किं प्रधावत।
सामान्यमेतद् द्रविणं न मिथ्या वचनं मम।
एवमेवाभिभाषन्तो विद्रवन्ति भयात्तत।
पुनरेवाभिधावन्ति वित्तप्रध्वंसकास्तथा।
तस्मिंस्तथा वर्तमाने दारुणे जनसंक्षये।
दमयन्ती च बुबुधे भयसंत्रस्तमानसा।
अपश्यद्वैशसं तच्च सर्वलोकभयंकरम्।
अदृष्टपूर्वं तद् दृष्ट्वा बाला पद्मनिभेक्षणा।
संत्रस्तमनसा तस्मिंस्तस्थौ शशिनिभानना।
सर्वैर्विध्वंसितैर्भग्नैस्तरुभिश्चन्दनादिभिः।
विक्षिप्तैर्भाति भूः सर्वा द्यौर्नक्षत्रैरिव शारदी।
पतद्भिः पात्यमानैश्च पतितैश्च ततस्ततः।
भीषणीयं वनं तद्धि बभौ तत्र समन्ततः।
विमुक्तनादसंत्रस्तं हाहाकारविनादितम्।
बभौ तत्सत्त्वसंबाधं महारणमिवापरम्।
ये तु तत्र विनिर्मुक्ताः सार्थाः केचिदविक्षताः।
तेऽब्रुवन्सहिताः सर्वे कस्येदं कर्मणः फलम्।
नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः।
तथा यक्षाधिपः श्रीमान्न च वैश्रवणः प्रभुः।
न पूजा विघ्नकर्तॄणामथ वा सार्थिकैः कृता।
शकुनानां फलं चाथ विपरीतमिदं ध्रुवम्।
ग्रहा वा विपरीतास्तु किमन्यदिदमागतम्।
अपरे त्वब्रुवन्दीना ज्ञातिद्रव्यविनाकृताः।
यासावद्य महासार्थे नारी ह्युन्मत्तदर्शना।
प्रविष्टा विकृताकारा कृत्वा रूपममानुषम्।
तयेयं विहिता पूर्वं माया परमदारुणा।
राक्षसी वा ध्रुवं यक्षी पिशाची वा भयंकरी।
तस्याः सर्वमिदं पापं नात्र कार्या विचारणा।
यदि पश्याम तां पापां सार्थघ्नीं नैकदुष्कृताम्।
लोष्टभिः पांसुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः।
अवश्यमेव हंस्यामः सा तु सार्थस्य कृत्यका।
दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम्।
भीता त्रस्ता च संविग्ना प्राद्रवद्येन काननम्।
आशङ्कमाना तत्पापमात्मानं पर्यदेवयत्।

— (L. 26) D1 च (for तु). D2 °पहृतां (for °पहृता). — (L. 27) D1 प्रसारिताश्च (for °ताङ्गाः). K4 corrupt. — (L. 29) K4 D2 राजन् (for यत्र). — (L. 30) D1 अथापश्यच्च. K4 सार्थं तु; D1 तत्सार्थं; D2 सार्थं तत्. — (L. 32) D1 °द्रवंतो; D2 °द्रवंति (for °द्रवन्त). — (L. 34) D1 मृगाणां; D2 शृंगिणां (for शृङ्गाणां). — (L. 35) K4 स्पंदनादपि. K4 marg. स्पंदनानपि मातंगानालामस्थान्वनोद्भवैः. — (L. 38) D1 सुमहांश्चासीत्. — (L. 40) K4 °लक्षंत (for °रक्षन्त). — (L. 41) D1 हताः पुत्राः. K4 D1 सहायो (D1 °या) निहतो (D1 °ता) मम (for the posterior half). — (L. 42) K4 कष्टस् (for कष्टं). — (L. 44) D1 एव (for एतद्). — (L. 45) D1 [S]मिद्र° (for विद्र°). — (L. 49) D3 °द्विषमं (for °द्वैशसं). D1 तत्र (for तच्च). — (L. 50) D2 तच्छ्रुत्वा (for तद् दृष्ट्वा). — (L. 52) K4 D1 सार्थे (for सर्वैर्). D1 विध्वंसिते. K4 मणिरातिस्तचंदनैः (sic) (for the posterior half). K4 (marg.) सार्थे विध्वंसिते भग्नेगुरुभिः सह चंदनैः. — D3 om. from the posterior half of line 52 up to पतितैश्च in line 54. — (L. 53) D3 शारदैः (for °दी). — (L. 54) D1 पतद्भिः पातितैस्ततः (for the posterior half). — (L. 58) K4 सार्थाद् (for सार्थाः). — (L. 61) K4 नूनं (for न च). D1 नार्चितो धनदः प्रभुः (for the posterior half). — (L. 64) D3 °दिह वागतं (for °दिदमा°). — (L. 66) D1 ह्युत्तम° (for ह्युन्मत्त°). — (L. 68) D1 तथैवं (for तयेयं), and नूनं (for पूर्वं). — D1 om. lines 69–70. — (L. 70) K4 (by corr.) काचिद् (for कार्या). D2 कृत्वा वै राक्षसीमिव (for the posterior half). — D3 om. lines 71–88. — (L. 71) D1 व्रतं माचिरं; D3 सर्वदुःखदां (for नैकदु°). — (L. 72) D1 लोष्टैश्च (for लोष्टभिः). — (L. 74) K4 तेषां वाक्यं (by transp.). — (L. 75) K4 त्रस्ता भीता; D1 भीता भीता.

अहो ममोपरि विधेः संरम्भो दारुणो महान् ।
नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् ।
न स्मराम्यशुभं किंचित्कृतं कस्यचिदण्वपि ।
कर्मणा मनसा वाचा कस्येदं कर्मणः फलम् ।
नूनं जन्मान्तरकृतं पापमापतितं महत् ।
अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ।
भर्तृराज्यापहरणं स्वजनाच्च पराभवः ।
भर्त्रा सह वियोगं च तनयाभ्यां च विच्युतिः ।
निर्वेश्मता वने वासो बहुव्यालनिषेविते ।
योऽप्यकस्मान्मया प्राप्तो निर्जने गहने वने ।
सोऽपि सार्थः पराभूतो दैवेन विधिना ध्रुवम् ।
आशङ्कते च मां पापां मदीयं व्यसनं तथा ।
साहमेवंविधा नूनं ध्रुवं नास्त्यत्र संशयः ।
मन्दाया हि ममाभाग्यैः सार्थो नूनं निपातितः ।
कुत्रात्मानं पातयेयं यामि कं शरणं वने ।
मरणेन भवेच्छान्तिर्ध्रियन्त्या दुःखजीवितम् ।
हा नाथ हा महाराज हा स्वामिञ्जीवितेश्वर ।
किं मां विलपतीमेवं नाभिजल्पसि मानद ।
एवमादि बहूनन्यान्प्रलापान्बाष्पविक्लवा ।
कुर्वती पर्यधावच्च विजनं गहनं वनम् ।

Colophon.

☞ This passage has many lines in common with passages No. 11–12 given below, with which it should be compared.

## 11

For 3. 62. $6^{ab}$–$10^{cd}$, $D_5$ subst.:

भारार्ताः सौरभेयाश्च क्षुत्तृषाभिपरिप्लुताः ।
अवरोपितभारास्तु लेभिरे परमां मुदम् ।
तथाश्वा वारणाश्चैव रासभाः करभैः सह ।
दृष्ट्वैव तत्सरो रम्यमाह्लादं परमं ययुः ।
तथानन्तरमेवेह वणिजः पथिकास्तथा ।
यथायोग्यं यथास्थानमावासं प्रतिपेदिरे ।
यथास्थितैः समाचारमाहारं स्थानमेव च ।
अवतीर्यावसन्नानां चक्रुश्चैवान्ववेक्षणम् ।
चक्रुः कथाश्च विविधाः क्रयविक्रयसंश्रिताः ।
प्रशंसन्त्यपरे कष्टं पदवीं श्वापदावृताम् ।
स्मरन्तो गृहभोगांश्च ज्ञातीनां च समागमम् ।
पुत्रमित्रकलत्राणि सर्वे निद्रावशं ययुः ।
संवाहनेन भाराणां बहुवासरजेन च ।
खिन्नाः शयितुकामास्ते निद्रयापगता भृशम् ।
प्रसारिताङ्गाः खिन्नाश्च मृतकल्पा इवासते ।
अथार्धरात्रसमये निःशब्दस्तिमितं तदा ।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ।
अथ सार्थं गिरिनिभा मदप्रस्रवणाविलाः ।
मार्गं संरुध्य संसुप्तं पद्मिन्यास्तीरमुत्तरम् ।
अथापश्यत तं सार्थं सार्थजान्सुबहून्गजान् ।
तांश्च पान्थगजान्दृष्ट्वा सर्वे वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ।
तेषामापततां वेगः करिणां दुःसहोऽभवत् ।
नगाग्रादिव शीर्णानां मृगाणां पततां क्षितौ ।
स्पन्दतामपि नागानां बालसंस्थावनोद्भवैः ।
करिभिः करिणः सर्वे मृत्युतां प्रापिताः क्षणात् ।
सार्थश्च सोऽपि मथितः सस्त्रीबालगजान्वितः ।
आरावः सुमहानासीत्त्रैलोक्यभयकारकः ।
वाजिभिः प्राहतैश्चैव गजोष्ट्रै रासभैस्तथा ।
अन्योन्यं नाभ्यरक्षन्त मथ्यमाना वनद्विपैः ।
सुप्तं ममर्दुः सहसा चेष्टमानं महीतले ।
हाहाकारं प्रमुञ्चन्तः सार्थकाः शरणार्थिनः ।
न च गुल्मांश्च धावन्तो निद्रान्धा बहवोऽभवन् ।
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता गजैः ।
निहतोष्ट्राश्च बहुलाः पदातिजनसंकुलाः ।
भयादाधावमानाश्च परस्परहतास्तदा ।
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वासज्य संहृष्टाः पतिता विषमेषु च ।
तथा तं निहतं सर्वं समृद्धं सार्थमण्डलम् ।
हतो भ्राता हतः पुत्रः सहायो निहतो मम ।
एषोऽग्निरुत्थितः कष्टस्त्रायध्वं धावताधुना ।
रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं किं प्रधावतः ।

---

$D_3$ °घत्र (for °घेन). — (L. 76) $D_3$ °निंदयत् (for °देवयत्). — (L. 78) $K_4$ नाशु बध्नामि कुशलं. — (L. 81) $D_1$ य[च्च]-ज्जन्मांतरकृतं तत्पापं पतितं महत्. — (L. 82) $D_1$ कष्टां विपदं; $D_3$ कष्टामापदां. — (L. 83) $D_1$ स्वजनस्य (for °नाच्च). $K_4$ पराभवं. — (L. 84) $D_1$ वियोगश्च; $D_3$ °गो हि. — (L. 86) $D_3$ यो ह्यकस्मादनुप्राप्तो. — (L. 88) $D_1$ सार्थो (for पापां). $D_1$ जनविध्वंसकारिणी; $D_3$ कृत्यां वै राक्षसीमिव (for the posterior half). — (L. 89) $D_2$ resumes. $D_2$ °स्म्यत्र (for °स्त्यत्र). $D_1$ लोकैर्यत्परिशंकिता (for the posterior half). — (L. 90) $K_4$ मम हाभाग्यैः (for हि ममा°). $D_3$ [ऽ]यं विनि° (for नूनं नि°). — (L. 91) $D_1$ पातयेहं (for °येयं). $D_{2.3}$ त्यक्त्वात्मानं तु पापिष्ठा कस्याहं शरणं वने. — (L. 94) $K_4$ °जानासि (for °जल्पसि). — (L. 95) $D_3$ विलापान् (for प्र°). — (L. 96) $D_1$ °धावत्सा (for °धावच्च). $D_2$ विपिनं गहने वने (for the posterior half). — Colophon. *Adhy. no.:* $D_1$ (in figures and words) 67.

संत्रस्तवदना भैमी तस्थौ शशिनिभानना ।
सार्थे विध्वंसितैर्भग्नैरगरुभिः सचन्दनैः ।
विक्षिप्तैर्भाति भूः सर्वा द्यौरिवाभ्रैश्च शारदैः ।
पतितैः पात्यमानैश्च धावद्भिश्च ततस्ततः ।
विमुक्तनादसंत्रस्तं हाहाकारविनादितम् ।
भीषणीयं वनं तद्वै तत्राभूद्वै समन्ततः ।
अभूत्प्रलयसंकाशं महारण्यमिवापरम् ।
ये तु तत्र विनिर्मुक्ताः सार्थाः केचिदभिद्रुताः ।
तेऽब्रुवन्सहिताः सर्वे कस्येदं कर्मणः फलम् ।
नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः ।
तथा यक्षाधिपः श्रीमान्न वै वैश्रवणो विभुः ।
न पूजा विघ्नकर्तॄणामथ वा सार्थिकैः कृता ।
शकुनानां फलं वाथ विपरीतमिदं ध्रुवम् ।
ग्रहास्तु विपरीता वा किमन्यदिदमागतम् ।
अपरे त्वब्रुवन्दीना ज्ञातिद्रव्यविनाकृताः ।
यासावद्य महासार्थे नारीवोन्मत्तदर्शना ।
प्रविष्टा विकृताकारा कृत्वा रूपममानुषम् ।
तयेयं विहिता पूर्वं माया परमदारुणा ।
राक्षसी वा पिशाची वा यक्षी वातिभयंकरी ।
तस्याः सर्वमिदं पापं नात्र कार्या विचारणा ।
यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदाम् ।
लोष्टैः पांसुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः ।
अवश्यमेव हन्तव्या सा सार्थस्य तु कृच्छ्रदा ।
दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम् ।
ह्रीता भीता च संविग्ना प्राद्रवद्येन काननम् ।
आशङ्कमाना तत्पापानात्मानं पर्यदेवयत् ।
अहो ममोपरि विधेः संरम्भो दारुणो महान् ।
नानुबध्नामि कुशलं कस्येदं कर्मणः फलम् ।
नूनं जन्मान्तरकृतं पापं मापतितं महत् ।
अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ।
राज्यापहरणं भर्तुः स्वजनाच्च पराभवः ।
भर्त्रा सह वियोगश्च तनयाभ्यां च विच्युतिः ।
विवस्त्रता वने वासो बहुव्यालनिषेविते ।
यो ह्यकस्मान्मया प्राप्तो निर्जने गहने वने ।
सोऽपि सार्थः पराभूतो विधिना केनचिद्भृशम् ।
आशङ्कमाना सा पापं महीयो व्यसनं तथा ।
साहमेवंविधा नूनं ध्रुवं नास्त्यत्र संशयः ।
मन्दायास्तु ममाभाग्यैः सार्थो नूनं निपातितः ।
कुत्रात्मानं पातयेयं यामि कं शरणं वने ।
मरणात्तु भवेच्छान्तिर्म्रियत्या दुःखजीवितम् ।
हा नाथ हा महाराज हा स्वामिञ्जीवितेश्वर ।
किं मां विलपतीमेवं नाभिजानासि मानद ।
एवमादीन्बहूनन्यान्प्रलापान्बाष्पविक्लवा ।
कुर्वती पर्यधावत्सा गहनं विपिनान्तरम् ।

Colophon.

☞ This passage is a variant version of lines 13–96 of passage No. 10 given above (q.v.).

## 12

K2 Dn ins. after 3. 62. 10: D6, after 284*:

आरावः सुमहांश्चासीत्त्रैलोक्यभयकारकः ।
एषोऽग्निरुत्थितः कष्टस्त्रायध्वं धावताधुना ।
रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं किं प्रधावत ।
सामान्यमेतद् द्रविणं न मिथ्या वचनं मम ।
एवमेवाभिभाषन्तो विद्रवन्ति भयात्तदा ।
पुनरेवाभिधास्यामि चिन्तयध्वं सकातराः ।
तस्मिंस्तथा वर्तमाने दारुणे जनसंक्षये ।
दमयन्ती च बुबुधे भयसंत्रस्तमानसा ।
अपश्यद्वैशसं तत्र सर्वलोकभयंकरम् ।
अदृष्टपूर्वं तद् दृष्ट्वा बाला पद्मनिभेक्षणा ।
संसक्तवदनाश्वासा उत्तस्थौ भयविह्वला ।
ये तु तत्र विनिर्मुक्ताः सार्थात्केचिदविक्षताः ।
तेऽब्रुवन्सहिताः सर्वे कस्येदं कर्मणः फलम् ।
नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः ।
तथा यक्षाधिपः श्रीमान्न वै वैश्रवणः प्रभुः ।
न पूजा विघ्नकर्तॄणामथ वा प्रथमं कृता ।
शकुनानां फलं वाथ विपरीतमिदं ध्रुवम् ।
ग्रहा न विपरीतास्तु किमन्यदिदमागतम् ।
अपरे त्वब्रुवन्दीना ज्ञातिद्रव्यविनाकृताः ।
यासावद्य महासार्थे नारी ह्युन्मत्तदर्शना ।
प्रविष्टा विकृताकारा कृत्वा रूपममानुषम् ।
तयेयं विहिता पूर्वं माया परमदारुणा ।
राक्षसी वा ध्रुवं यक्षी पिशाची वा भयंकरी ।
तस्याः सर्वमिदं पापं नात्र कार्या विचारणा ।
यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदाम् ।
लोष्टभिः पांसुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः ।
अवश्यमेव हन्यामः सार्थस्य किल कृत्यकाम् ।

---

**12**

(L. 9) Dn3 सर्वं (for तत्र). — (L. 11) Dn3 °वदनोच्छ्वासा. — (L. 21) K2 अमानुषा; Dn3 च मानुषं. — (L. 23) D6 सा ध्रुवा (for वा ध्रुवं). — (L. 25) D6 नैकदुष्कृतां. — (L. 26) D6 लोष्टैश्च (for लोष्टभिः). — (L. 27) D6 हंस्यामः (for हन्यामः), and सा वै सार्थस्य कृत्यका (for the posterior half). — (L. 29) K2 D6 °येन (for °द्यत्र).

दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम् ।
ह्रीता भीता च संविग्ना प्राद्रवद्यत्र काननम् ।
आशङ्कमाना तत्पापमात्मानं पर्यदेवयत् ।
अहो ममोपरि विधेः संरम्भो दारुणो महान् ।
नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् ।
न स्मराम्यशुभं किंचित्कृतं कस्यचिदण्वपि ।
कर्मणा मनसा वाचा कस्येदं कर्मणः फलम् ।
नूनं जन्मान्तरकृतं पापं मापतितं महत् ।
अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ।
भर्तृराज्यापहरणं स्वजनाच्च पराजयः ।
भर्त्रा सह वियोगश्च तनयाभ्यां च विच्युतिः ।
निर्नाथता वने वासो बहुव्यालनिषेविते ।

☞ Cf. passages No. 10 and 11 given above, which are similar in content. This amplified version of the story, though adopted in all old printed editions, is restricted to a small group of Devanāgarī MSS., $K_{2.4}$ Dn $D_{1-3.5.6}$ and is undoubtedly spurious. It was rightly athetized by Böhtlingk in his edition of the Nalopākhyāna in the first edition of his *Chresthomathie*. Cf. Holtzmann, *Das Mahābhārata*, 3. 70.

## 13

After 3. 83. 82, $K_{1.2}$ B Dc Dn $D_{4.6}$ ins.:

कुरुक्षेत्रसमा गङ्गा यत्रतत्रावगाहिता ।
विशेषो वै कनखले प्रयागे परमं महत् ।
यज्ञकार्यशतं कृत्वा कृतं गङ्गावसेचनम् ।
सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम् ।
सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ।
द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ।
पुष्करे तु तपस्तप्येद्दानं दद्यान्महालये ।
मलये त्वग्निमारोहेद् भृगुतुङ्गे त्वनाशनम् ।
पुष्करे तु कुरुक्षेत्रे गङ्गायां मगधेषु च ।
स्नात्वा तारयते जन्तुः सप्त सप्तावरांस्तथा ।
पुनाति कीर्तिता पापं दृष्टा भद्रं प्रयच्छति ।
अवगाढा च पीता च पुनात्यासप्तमं कुलम् ।
यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम् ।
तावत्स पुरुषो राजन्स्वर्गलोके महीयते ।
यथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च ।
उपास्य पुण्यं लब्ध्वा च भवत्यमरलोकभाक् ।
न गङ्गासदृशं तीर्थं न देवः केशवात्परः ।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ।

## 14

After 3. 97. 27, $K_{1.2}$ B D (except $D_{1-3.5}$) ins.:

वातेरिता पताकेव विराजति नभस्तले ।
प्रतार्यमाणा कूटेषु यथा निम्नेषु नित्यशः ।
शिलातलेषु संत्रस्ता पन्नगेन्द्रवधूरिव ।
दक्षिणां वै दिशं सर्वां प्लावयन्ती च मातृवत् ।
पूर्वं शम्भोर्जटाभ्रष्टा समुद्रमहिषी प्रिया ।
अस्यां नद्यां सुपुण्यायां यथेष्टमवगाह्यताम् ।
लोमश उवाच ।
युधिष्ठिर निबोधेदं त्रिषु लोकेषु विश्रुतम् ।

---

— (L. 30) $K_2$ तत्पापाम्. — (L. 31) $K_2$ संरंभे दारुणे महत् (for the posterior half). — (L. 35) $Dn_2$ $D_6$ मां पतितं (for मापतितं). — (L. 36) $K_2$ कष्टम् (for कष्टाम्). — (L. 38) $K_2$ वियोगं च (for °गश्च).

### 13

(L. 1) Dc transp. lines 1–2 and 3–4. $K_1$ $Dc_2$ °कुत्रा° (for °तत्रा°). — (L. 2) $K_1$ नखलं; $Dc_1$ परमे (for परमं). — $B_4$ om. lines 3–4. — (L. 3) $B_1m$ अश्वमेध° (for यज्ञकार्य°). $K_2$ गत्वा (for कृत्वा). $K_2$ °वसेवनं; $B_2$ °भिषेचनं (for °वसेचनम्). — (L. 4) $K_2$ गांगेयो; $B_2$ गंगांभो; $B_3$ Dc गंगायां (for गङ्गापो). $K_{1.2}$ दहत्यग्नि°. — (L. 6) $B_1$ Dc च; $B_{2-4}$ तु (for ऽपि). $B_2$ कलौ गंगैव केवला (for the posterior half). — (L. 7) Dc पुष्करेषु (for °रे तु). — (L. 8) $B_1$ Dc त्वनाशकं. — (L. 9) $B_{1.3.4}$ $D_6$ पुष्करेषु; $B_2$ °रे च; Dc °रे हे. B Dc $D_4$ मध्यमेषु च. — (L. 10) $K_2$ सप्तावरं; $B_{2-4}$ सप्तापरान्; Dc पूर्वावरान्. — (L. 11) B $Dn_1$ दृष्ट्वा (for दृष्टा). — (L. 12) Dc अवगाह्य च पीत्वा च. — (L. 13) $B_3$ गंगातोये निमज्जति. — (L. 16) $K_1$ तापस्य- (for उपास्य). Dc तु (for च). $B_3$ Dn °लोकता ($B_3$ °तां) (for °लोकभाक्). — (L. 18) $B_1$ प्रजापतिः (for पितामहः).

### 14

$D_1$ om. from line 1 up to the prior half of line 6. — (L. 2) Dc तथा (for यथा). — (L. 3) $B_3$ $Dc_1$ संभ्रांता; $Dc_2$ संजाता (for संत्रस्ता). $B_4$ पातालेषु च संभूता (for the prior half). — (L. 4) B [इ]व (for च). — (L. 5) $B_1$ पूर्वं समुद्रं तु गता (for the prior half). — (L. 6) Dc तस्यां (for अस्यां). $K_2$ तु (for सु-). — After line 6, $K_2$ $B_{3.4}$ Dc $Dn_2$ ins. an addl. colophon (*adhy. no.:* $Dn_2$ 99). — $K_{1.2}$ om. lines 7–82;

भृगोस्तीर्थं महाराज महर्षिगणसेवितम् ।
यत्रोपस्पृष्टवान्रामो हृतं तेजस्तदाप्तवान् ।
अत्र त्वं भ्रातृभिः सार्धं कृष्णया चैव पाण्डव ।
दुर्योधनहृतं तजः पुनरादातुमर्हसि ।
कृतवैरेण रामेण यथा चोपहृतं पुनः ।
वैशंपायन उवाच ।
स तत्र भ्रातृभिश्चैव कृष्णया चैव पाण्डवः ।
स्नात्वा देवान्पितॄंश्चैव तर्पयामास भारत ।
तस्य तीर्थस्य रूपं वै दीप्ताद्दीप्ततरं बभौ ।
अप्रधृष्यतरश्चासीच्छात्रवाणां नरर्षभ ।
अपृच्छच्चैव राजेन्द्र लोमशं पाण्डुनन्दनः ।
भगवन्किमर्थं रामस्य हृतमासीद्वपुः प्रभो ।
कथं प्रत्याहृतं चैव एतदाचक्ष्व पृच्छतः ।
लोमश उवाच ।
शृणु रामस्य राजेन्द्र भार्गवस्य च धीमतः ।
जातो दशरथस्यासीत्पुत्रो रामो महात्मनः ।
विष्णुः स्वेन शरीरेण रावणस्य वधाय वै ।
पश्यामस्तमयोध्यायां जातं दाशरथिं ततः ।
ऋचीकनन्दनो रामो भार्गवो रेणुकासुतः ।
तस्य दाशरथेः श्रुत्वा रामस्याक्लिष्टकर्मणः ।
कौतूहलान्वितो रामस्त्वयोध्यामगमत्पुनः ।
धनुरादाय तद्दिव्यं क्षत्रियाणां निबर्हणम् ।
जिज्ञासमानो रामस्य वीर्यं दाशरथेस्तदा ।
तं वै दशरथः श्रुत्वा विषयान्तमुपागतम् ।
प्रेषयामास रामस्य रामं पुत्रं पुरस्कृतम् ।
स तमभ्यागतं दृष्ट्वा उद्यतास्त्रमवस्थितम् ।
प्रहसन्निव कौन्तेय रामो वचनमब्रवीत् ।
कृतकालं हि राजेन्द्र धनुरेतन्मया विभो ।
समारोपय यत्नेन यदि शक्नोषि पार्थिव ।
इत्युक्तस्त्वाह भगवंस्त्वं नाधिक्षेप्तुमर्हसि ।
नाहमप्यधमो धर्मे क्षत्रियाणां द्विजातिषु ।
इक्ष्वाकूणां विशेषेण बाहुवीर्ये न कत्थनम् ।
तमेवंवादिनं तत्र रामो वचनमब्रवीत् ।
अलं वै व्यपदेशेन धनुरायच्छ राघव ।
ततो जग्राह रोषेण क्षत्रियर्षभसूदनम् ।
रामो दाशरथिर्दिव्यं हस्ताद्रामस्य कार्मुकम् ।
धनुरारोपयामास सलील इव भारत ।
ज्याशब्दमकरोच्चैव स्मयमानः स वीर्यवान् ।
तस्य शब्दस्य भूतानि वित्रसन्त्यशनेरिव ।
अथाब्रवीत्तदा रामो रामं दाशरथिस्तदा ।
इदमारोपितं ब्रह्मन्किमन्यत्करवाणि ते ।
तस्य रामो ददौ दिव्यं जामदग्न्यो महात्मनः ।
शरमाकर्णदेशान्तमयमाकृष्यतामिति ।
एतच्छ्रुत्वाब्रवीद्रामः प्रदीप्त इव मन्युना ।
श्रूयते क्षम्यते चैव दर्पपूर्णोऽसि भार्गव ।
त्वया ह्यधिगतं तेजः क्षत्रियेभ्यो विशेषतः ।
पितामहप्रसादेन तेन मां क्षिपसि ध्रुवम् ।
पश्य मां स्वेन रूपेण चक्षुस्ते वितराम्यहम् ।
ततो रामशरीरे वै रामः पश्यति भार्गवः ।
आदित्यान्सवसून्रुद्रान्साध्यांश्च समरुद्गणान् ।
पितरो हुताशनश्चैव नक्षत्राणि ग्रहास्तथा ।
गन्धर्वा राक्षसा यक्षा नद्यस्तीर्थानि यानि च ।
ऋषयो वालखिल्याश्च ब्रह्मभूताः सनातनाः ।
देवर्षयश्च कार्त्स्न्येन समुद्राः पर्वतास्तथा ।

---

the MSS. are ignored totally hereafter. — (L. 9) $B_{1.3}$ हृततेजास् ( $B_{3}$ °जस् ). — (L. 10) $B_{1}$ तत्र ( for अत्र ). $B_{4}$ भारत ( for पाण्डव ). — (L. 12) $B_{4}$ Dc om. line 12. $B_{1}$ (corrupt) कृतवैरावने चैव न चैवोपहृताः पुनः. — (L. 13) $D_{1}$ भारत ( for पाण्डवः ). — (L. 14) Dc तत्र स्नात्वा ( for स्नात्वा देवान् ). — (L. 15) $B_{1}$ Dc दीप्त्या ; $Dn_{3}$ जातं ( for दीप्ताद् ). $Dc_{2}$ विभो ; $Dn_{3}$ च भो ( for बभौ ). — (L. 16) Dc °स्त्वासी° ( for °श्चासी° ). — (L. 17) नृप° ( for पाण्डु° ). — (L. 18) $B_{2}$ पुनः ( for वपुः ). — $Dn_{2}$ om. line 19. — (L. 24) B Dc $D_{4}$ आर्चीक° ; $D_{1}$ आर्चिका° ( for ऋचीक° ). — (L. 26) $B_{2.3}$ प्रभुः ( for पुनः ). — (L. 27) $D_{1}$ दिव्यं तु ( for तद्दिव्यं ). — (L. 28) $B_{2}$ ततः ; $D_{6}$ तथा ( for तदा ). — (L. 30) $D_{6}$ मंत्र- ( for पुत्रं ). — (L. 31) $D_{1}$ °मुप° ( for °मव° ). — (L. 33) $B_{3}$ क्षत्रियांतकरं राम धनुरेतन्महन्मम. — (L. 35) $B_{3}$ पूजनीयोसि ; $D_{1}$ इत्युक्तः प्राह. $B_{4}$ भगवन्समधिक्षेप्तुं न त्वमर्हसि मां विभो. — For line 36, $B_{4}$ subst. :

नाहमप्यथ मोहन त्वामधिक्षेप्तुमुत्सहे ।
अधर्मेण क्षयं चात्र क्षत्रियाणां द्विजातिषु ।

— (L. 44) B Dc शब्देन ( for शब्दस्य ). — (L. 47) $B_{1.3.4}$ Dc महाबलः ; $D_{1}$ °मनः ( for °त्मनः ). — (L. 48) Dc शर ( for शरम् ). — (L. 52) $B_{1}$ Dc क्षिपसे ( for °सि ). — (L. 54) $D_{1}$ पश्यति स्म च ( for रामः पश्यति ). — (L. 55) $D_{1}$ आदित्यांश्च वसून्. Dc transp. रुद्रान् and साध्यान्. $B_{1}$ आदित्या वसवो रुद्रा साध्याश्च समरुद्गणाः. — (L. 56) Hypermetric ! $B_{1}$ पितरोथानलश्चैव ; $B_{3}$ $D_{1.6}$ पितरो हुताशनश्च ; Dc $Dn_{2}$ पितॄन्हुताशनां( $Dn_{2}$ °न )श्चैव. $B_{3}$ Dc ग्रहांस्तथा. — (L. 57) $B_{3.4}$ व ( for च ). Dc गंधर्वान्राक्षसान्यक्षान्नदीस्तीर्थानि यानि च. — (L. 58) Dc ऋषीन्वै. $B_{2.3}$ Dc वालिखिल्या( Dc °ल्यां )श्च. Dc ब्रह्मभूतान्सनातनान्. — (L. 59) Dc देवर्षींश्चैव कार्त्स्न्येन समुद्रान्पर्वतांस्तथा. — (L. 60) $B_{1.3}$ °निषदा ( for °निषदो ). Dc वेदांश्च सोप-

वेदाश्च सोपनिषदो वषट्कारैः सहाध्वरैः ।
चेतोमन्ति च सामानि धनुर्वेदश्च भारत ।
मेघवृन्दानि वर्षाणि विद्युतश्च युधिष्ठिर ।
ततः स भगवान्विष्णुस्तं वै बाणं मुमोच ह ।
शुष्काशनिसमाकीर्णं महोल्काभिश्च भारत ।
पांसुवर्षेण महता मेघवर्षैश्च भूतलम् ।
भूमिकम्पैश्च निर्घातैर्नादैश्च विपुलैरपि ।
स रामं विह्वलं कृत्वा तेजश्चाक्षिप्य केवलम् ।
आगच्छज्ज्वलितो बाणो रामबाहुप्रचोदितः ।
स तु विह्वलतां गत्वा प्रतिलभ्य च चेतनाम् ।
रामः प्रत्यागतप्राणः प्राणमद्विष्णुतेजसम् ।
विष्णुना सोऽभ्यनुज्ञातो महेन्द्रमगमत्पुनः ।
भीतस्तु तत्र न्यवसद्व्रीडितस्तु महातपाः ।
ततः संवत्सरेऽतीते हृतौजसमवस्थितम् ।
निर्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन् ।
न वै सम्यगिदं पुत्र विष्णुमासाद्य वै कृतम् ।
स हि पूज्यश्च मान्यश्च त्रिषु लोकेषु सर्वदा ।
गच्छ पुत्र नदीं पुण्यां वधूसरकृताह्वयाम् ।
तत्रोपस्पृश्य तीर्थेषु पुनर्वपुरवाप्स्यसि ।
दीप्तोदं नाम तत्तीर्थं यत्र ते प्रपितामहः ।
भृगुर्देवयुगे राम तप्तवानुत्तमं तपः ।
तत्तथा कृतवान्रामः कौन्तेय वचनात्पितुः ।
प्राप्तवांश्च पुनस्तेजस्तीर्थेऽस्मिन्पाण्डुनन्दन ।
एतदीदृशकं तात रामेणाक्लिष्टकर्मणा ।
प्राप्तमासीन्महाराज विष्णुमासाद्य वै पुरा ।

☞ For a criticism of this passage, cf. Sukthankar, "Epic Studies (VI)", *ABORI*. 1936. 20 f.

## 15

After 3. 115. 8, K1.2 B Dc Dn D3.4.6 G3 ins.:

अकृतव्रण उवाच ।
अहं ते कथयिष्यामि महदाख्यानमुत्तमम् ।
भृगूणां राजशार्दूल वंशे जातस्य भारत ।
रामस्य जामदग्न्यस्य चरितं देवसंमितम् ।
हैहयाधिपतेश्चैव कार्तवीर्यस्य भारत ।
रामेण चार्जुनो नाम हैहयाधिपतिर्हतः ।
तस्य बाहुशतान्यासंस्त्रीणि सप्त च पाण्डव ।
दत्तात्रेयप्रसादेन विमानं काञ्चनं तथा ।
ऐश्वर्यं सर्वभूतेषु पृथिव्यां पृथिवीपते ।
अव्याहतगतिश्चैव रथस्तस्य महात्मनः ।
रथेन तेन तु सदा वरदानेन वीर्यवान् ।
ममर्द देवान्यक्षांश्च ऋषींश्चैव समन्ततः ।
भूतांश्चैव स सर्वांस्तु पीडयामास सर्वतः ।
ततो देवाः समेत्याहुर्ऋषयश्च महाव्रताः ।
देवदेवं सुरारिघ्नं विष्णुं सत्यपराक्रमम् ।
भगवन्भूतरक्षार्थमर्जुनं जहि वै प्रभो ।
विमानेन च दिव्येन हैहयाधिपतिः पुनः ।
शचीसहायं क्रीडन्तं धर्षयामास वासवम् ।

निषदान्. B1–3 वषट्कारः; Dc °कारान्. B1.2 °गमैः (for °ध्वरैः). — (L. 61) B2 चेतोवंति. Dc धनुर्वेदांश्च. — (L. 62) B1.3.4 Dc2 विद्युतो मेघवृंदानि (B1 °दाश्च) (for the prior half). B1.3.4 Dc वर्षाणि च युधिष्ठिर. — (L. 65) B Dc D6 केवलं (for भूतलम्). — (L. 66) B1.3.4 Dc स- (for the first च). — (L. 67) B1 दृष्ट्वा (for कृत्वा). — (L. 68) B Dc °प्रवेरितः (B2 °प्रबोधितः) (for °प्रचोदितः). — (L. 71) B3 प्रभुः (for पुनः). — (L. 72) Dc भीतश्च. B1.3.4 व्रीडितश्च. Dc लज्जितश्च महारथः (for the posterior half). — (L. 73) B1.4 Dc2 तत्र (for ततः). B4 कृतौ° (for हृतौ°). — (L. 74) B2 वाक्यम् (for रामम्). — (L. 78) Dc ततोप° (for तत्रोप°). — (L. 79) D1 तीर्थं तु (for तत्तीर्थं). B1 वै (for ते). — (L. 80) B1 Dc तात (for राम). B1.4 Dc कृतवान-भिषेचनं (for the posterior half). — (L. 83) D4 यत्तद् (for एतद्). B1.4 °कांतारं (for °कं तात). — (L. 84) D1 आप्तम् (for प्राप्तम्).

15

(L. 1) B2 Dn हंत (for अहं). — (L. 3) D3 om. line 3. Dc2 वेद° (for देव°). — (L. 5) B1 बभूवेहार्जुनो नाम; D3 राजासीदर्जुनो नाम (for the prior half). B1 D3 पुरा (for हतः). — (L. 6) B2 °न्याहु° (for °न्यासं°). — (L. 7) D3 कांचनप्रभं. — (L. 8) D3 च मही° (for पृथिवी°). — (L. 9) B2.4 °श्चैव (for °स्तस्य). — (L. 10) D3 om. line 10. B1.4 Dc स तदा (for तु सदा). B1 Dc वरदानाच्च. — (L. 12) B1 Dc भूतानि चैव सर्वाणि. B2 वीर्यवान् (for सर्वतः). — (L. 13) B1 °त्मनः (for °व्रताः). — (L. 14) B1 Dc अब्रुवंस्ते (for देवदेवं). — D3 reads line 15 after the addl. line स तु प्रसाद° (see below). — (L. 16) K2 Dc Dn1 प्रभुः (for पुनः). — After line 16, D3 ins.:

खेचरान्कामचारी च बलान्मर्दति मोहितः ।

— (L. 17) D3 शचीसुरसहायं तु (for the prior half). — After line 17, D3 ins.:

स तु प्रसादयामास विष्णुं सत्यपराक्रमम् ।,

which is followed by line 15. — (L. 19) B2 वीर्यवान् (for भारत). — (L. 20) K2 प्रवे° (for निवे°). D3 यत्तद्भूतमनाधृष्यं मृत्युरित्यभिधीयत. — After line 20, D3

ततस्तु भगवान्देवः शक्रेण सहितस्तदा ।
कार्तवीर्यविनाशार्थं मन्त्रयामास भारत ।
यत्तद्भूतहितं कार्यं सुरेन्द्रेण निवेदितम् ।
स प्रतिश्रुत्य तत्सर्वं भगवाँल्लोकपूजितः ।
जगाम बदरीं रम्यां स्वमेवाश्रममण्डलम् ।
एतस्मिन्नेव काले तु पृथिव्यां पृथिवीपतिः ।

[ Correction! This insertion is found in $D_8$ in addition to the MSS. mentioned on p. 385. The above list has been corrected accordingly. ]

## 16

After adhy. 142, B D (except $D_{1-3}$) ins. the foll. addl. adhy.:

लोमश उवाच ।
द्रष्टारः पर्वताः सर्वे नद्यः सपुरकाननाः ।
तीर्थानि चैव श्रीमन्ति स्पृष्टं च सलिलं करैः ।
पर्वतं मन्दरं दिव्यमेष पन्थाः प्रयास्यति ।
समाहिता निरुद्विग्नाः सर्वे भवत पाण्डवाः ।
अयं देवनिवासो वै गन्तव्यो वो भविष्यति ।
ऋषीणां चैव दिव्यानां निवासः पुण्यकर्मणाम् ।
एषा शिवजला पुण्या याति सौम्य महानदी ।
बदरीप्रभवा राजन्देवर्षिगणसेविता ।
एषा वैहायसैर्नित्यं वालखिल्यैर्महात्मभिः ।
अर्चिता चोपयाता च गन्धर्वैश्च महात्मभिः ।
अत्र साम स्म गायन्ति सामगाः पुण्यनिस्वनाः ।
मरीचिः पुलहश्चैव भृगुश्चैवाङ्गिरास्तथा ।
अत्राह्निकं सुरश्रेष्ठो जपते समरुद्गणः ।
साध्याश्चैवाश्विनौ चैव परिधावन्ति तं तदा ।
चन्द्रमाः सह सूर्येण ज्योतींषि च ग्रहैः सह ।
अहोरात्रविभागेन नदीमेनामनुव्रजन् ।
एतस्याः सलिलं मूर्ध्ना वृषाङ्कः पर्यधारयत् ।
गङ्गाद्वारे महाभाग येन लोकस्थितिर्भवेत् ।
एतां भगवतीं देवीं भवन्तः सर्व एव हि ।
प्रयतेनात्मना तात प्रतिगम्याभिवादत ।
तस्य तद्वचनं श्रुत्वा लोमशस्य महात्मनः ।
आकाशगङ्गां प्रयताः पाण्डवास्तेऽभ्यवादयन् ।
अभिवाद्य च ते सर्वे पाण्डवा धर्मचारिणः ।
पुनः प्रयाताः संहृष्टाः सर्वैरृषिगणैः सह ।
ततो दूरात्प्रकाशन्तं पाण्डुरं मेरुसंनिभम् ।
ददृशुस्ते नरश्रेष्ठा विकीर्णं सर्वतोदिशम् ।
तान्प्रष्टुकामान्विज्ञाय पाण्डवान्स तु लोमशः ।
उवाच वाक्यं वाक्यज्ञः शृणुध्वं पाण्डुनन्दनाः ।
एतद्विकीर्णं सुश्रीमत्कैलासशिखरोपमम् ।
यत्पश्यसि नरश्रेष्ठ पर्वतप्रतिमं स्थितम् ।
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः ।
पर्वतप्रतिमं भाति पर्वतप्रस्तराश्रितम् ।
पुरातनेन देवेन विष्णुना परमात्मना ।
दैत्यो विनिहतस्तात सुरराजहितैषिणा ।
दश वर्षसहस्राणि तपस्तप्यन्महामनाः ।
ऐन्द्रं प्रार्थयते स्थानं तपःस्वाध्यायविक्रमात् ।
तपोबलेन महता बाहुवेगबलेन च ।
नित्यमेव दुराधर्षो धर्षयन्स दितेः सुतः ।
स तु तस्य बलं ज्ञात्वा धर्मे च चरितव्रतम् ।
भयाभिभूतः संविग्नः शक्र आसीत्तदानघ ।
तेन संचिन्तितो देवो मनसा विष्णुरव्ययः ।
सर्वत्रगः प्रभुः श्रीमानागतश्च स्थितो बभौ ।

---

ins.:

शपितं स्थाणुना घोरं श्वेतराज्ञः कृते पुरा ।
भस्मीभूतं महद्भूतं भस्मकूटमदृश्यत ।
यमुनातीरमासाद्य समुद्रमवगाहत ।
तत्र मृत्योः समुद्रेण संगमोऽस्य भविष्यति ।
ततः स कार्तवीर्यस्य विनाशाय प्रतिष्ठितम् ।

— (L. 21) $B_1$ $D_8$ तथा विधाय; $B_2$ स प्रतिज्ञाय (for स प्रतिश्रुत्य). $D_8$ °विश्रुतः (for °पूजितः). — (L. 23) $K_2$ $Dn_1$. $n_2$ $D_8$ °पते (for °पतिः).

## 16

(L. 1) $B_1$ नागाश्च- (for नद्यः स-). — (L. 2) Dc रम्याणि (for श्रीमन्ति). — (L. 7) $B_{2-4}$ सौम्या (for सौम्य). — (L. 9) Dc एषा वैखानसैर्नित्यं. $B_{1-3}$ Dc $D_4$ वालिखिल्यैर्. — (L. 13) $B_4$ द्विज° (for सुर°). $B_3$ यजते (for जपते). $D_6$ स मरुद्गणैः. — (L. 14) $B_4$ सिद्धाश्चाप्सरसौ चापि (for the prior half). Dc तां; $D_4$ तत् (for तं). — (L. 16) $B_{1.2.4}$ Dc एताम् (for एनाम्). $B_3$ चलंति रथवर्त्मना (for the posterior half). — (L. 17) $Dn_1$ $D_6$ मूर्ध्नि (for °र्ध्ना). — (L. 18) $B_4$ लोके गतिर् (for लोकस्थितिर्). — (L. 20) $B_{1.3}$ Dc अभि° (for प्रति°). Dc °वंदत (for °वादत). — (L. 22) $B_2$ ते न्यवेद°; $B_4$ तेभ्यनाद°; Dc अभ्यवाद° (for तेऽभ्यवाद°). — (L. 24) $B_1$ $Dc_2$ $Dn_2$. $n_3$ $D_{4-6}$ सर्वे (for सर्वैर्). — (L. 25) B $Dn_2$ पांडरं. — (L. 34) $B_4$ $Dn_1$ $D_4$ °स्तेन (for °स्तात). — (L. 35) $B_1$ Dc तपस्तप्तं महात्मना (for the posterior half). — (L. 36) Dc प्रार्थयत. — (L. 37) Dc वात° (for बाहु°). — (L. 39) Dc चरितं शुभं (for °तव्रतम्). — (L. 40) $B_3$ नृप (for [अ]नघ). — (L. 42) $D_6$ स्थिरो (for स्थितो). — (L. 45) $B_1$ यस्य तेजोवभासितः; Dc यस्य

ऋषयश्चापि तं सर्वे तुष्टुवुश्च दिवौकसः ।
तं दृष्ट्वा ज्वलमानश्रीर्भगवान्हव्यवाहनः ।
नष्टतेजाः समभवत्तस्य तेजोभिभर्त्सितः ।
तं दृष्ट्वा वरदं देवं विष्णुं देवगणेश्वरम् ।
प्राञ्जलिः प्रणतो भूत्वा नमस्कृत्य च वज्रभृत् ।
प्राह वाक्यं ततस्तत्त्वं यतस्तस्य भयं भवेत् ।
विष्णुरुवाच ।
जानामि ते भयं शक्र दैत्येन्द्रान्नरकात्ततः ।
ऐन्द्रं प्रार्थयते स्थानं तपःसिद्धेन कर्मणा ।
सोऽहमेनं तव प्रीत्या तपःसिद्धमपि ध्रुवम् ।
वियुनज्मि देहाद्देवेन्द्र मुहूर्तं प्रतिपालय ।
तस्य विष्णुर्महातेजाः पाणिना चेतनां हरत् ।
स पपात ततो भूमौ गिरिराज इवाहतः ।
तस्यैतदस्थिसंघातं मायाविनिहतस्य वै ।
इदं द्वितीयमपरं विष्णोः कर्म प्रकाशते ।
नष्टा वसुमती कृत्स्ना पाताले चैव मज्जिता ।
पुनरुद्धरिता तेन वाराहेणैकशृङ्गिणा ।
युधिष्ठिर उवाच ।
भगवन्विस्तरेणेमां कथां कथय तत्त्वतः ।
कथं तेन सुरेशेन नष्टा वसुमती तदा ।
योजनानां शतं ब्रह्मन्पुनरुद्धरिता तदा ।
केन चैव प्रकारेण जगतो धरणी ध्रुवा ।
शिवा देवी महाभागा सर्वसस्यप्ररोहिणी ।
कस्य चैव प्रभावाद्धि योजनानां शतं गता ।
केनैतद्वीर्यसर्वस्वं दर्शितं परमात्मनः ।
एतत्सर्वं यथातत्त्वमिच्छामि द्विजसत्तम ।
श्रोतुं विस्तरशः सर्वं त्वं हि तस्य प्रतिश्रयः ।
लोमश उवाच ।
यत्तेऽहं परिपृष्टोऽस्मि कथामेतां युधिष्ठिर ।
तत्सर्वमखिलेनेह श्रूयतां मम भाषतः ।
पुरा कृतयुगे तात वर्तमानेऽभयंकरे ।
यमत्वं कारयामास आदिदेवः पुरातनः ।
यमत्वं कुर्वतस्तस्य देवदेवस्य धीमतः ।
न तत्र म्रियते कश्चिज्जायते वा तथाच्युत ।
वर्धन्ते पक्षिसंघाश्च तथा पशुगवेडकम् ।
गवाश्वं च मृगाश्चैव सर्वे ते पिशिताशनाः ।
तथा पुरुषशार्दूल मानुषाश्च परंतप ।
सहस्रशो ह्ययुतशो वर्धन्ते सलिलं यथा ।
एतस्मिन्संकुले तात वर्तमाने भयंकरे ।
अतिभाराद्वसुमती योजनानां शतं गता ।
सा वै व्यथितसर्वाङ्गी भारेणाक्रान्तचेतना ।
नारायणं वरं देवं प्रपन्ना शरणं गता ।
पृथिव्युवाच ।
भगवंस्त्वत्प्रसादाद्धि तिष्ठेयं सुचिरं त्विह ।
भारेणास्मि समाक्रान्ता न शक्नोमि स्म वर्तितुम् ।
ममेमं भगवन्भारं व्यपनेतुं त्वमर्हसि ।
शरणागतास्मि ते देव प्रसादं कुरु मे विभो ।
लोमश उवाच ।
तस्यास्तद्वचनं श्रुत्वा भगवानक्षरः प्रभुः ।
प्रोवाच वचनं हृष्टः श्रव्याक्षरसमीरितम् ।
न ते महि भयं कार्यं भारार्ते वसुधारिणि ।
अयमेवं तथा कुर्मि यथा लघ्वी भविष्यसि ।
स तां विसर्जयित्वा तु वसुधां शैलकुण्डलाम् ।
ततो वराहः संवृत्त एकशृङ्गो महाद्युतिः ।
रक्ताभ्यां नयनाभ्यां तु भयमुत्पादयन्निव ।
धूमं च ज्वलयँल्लक्ष्म्या तत्र देशे व्यवर्धत ।
स गृहीत्वा वसुमतीं शृङ्गेणैकेन भास्वता ।
योजनानां शतं वीर समुद्धरति सोऽक्षरः ।
तस्यां चोद्धार्यमाणायां संक्षोभः समजायत ।
देवाः संक्षुभिताः सर्वे ऋषयश्च तपोधनाः ।

तेजावभर्त्सितः. — (L. 46) $B_3$ om. line 46. $Dc_1$ सर्व° (for देव°). — (L. 48) Dc °स्तूर्णं (for °स्तत्त्वं). — (L. 49) $B_1$ Dc तात (for शक्र). — (L. 50) Dc प्रार्थयतः. — (L. 51) $B_{1.4}$ °मेवं (for °मेनं). — (L. 52) Hypermetric! $B_1$ वियुंक्ष्मि ; Dc वियुंज्मि (for वियुनज्मि). — (L. 54) Dc °पतत् (for °हतः). — (L. 56) $Dn_1$ °परमं (for °मपरं). $B_3$ तूर्णं (for कर्म). — (L. 58) $B_1$ °णोरु° (for °णैक°). — After line 58, $B_{1.4}$ ins. an addl. colophon. — (L. 59) $B_2$ सुव्रत (for तत्त्वतः). — (L. 61) $B_3$ तेन (for ब्रह्मन्). — (L. 64) $B_{1-3}$ Dc °वाद्दै (for °वाद्धि). — (L. 65) Dc $Dn_{2.}n_3$ केन तद् (for केनैतद्). $B_2$ वीर्यमात्मनः; Dc स्वं महात्मनः. — (L. 66) $B_1$ Dc °वृत्तम् (for °तत्त्वम्). — (L. 69) Dc भारत (for भाषतः). — (L. 71) $B_4$ $Dc_2$ सनातनः (for पुरा°). — (L. 77) $D_{4.6}$ वर्धते. — (L. 78) $Dc_2$ तावद् (for तात). $B_2$ भयावहे (for भयंकरे). — (L. 81) $B_{1.3.4}$ Dc तदा (for गता). — (L. 82) $Dc_2$ त्वत्प्रसादेन. $B_{3.4}$ तिष्ठेहं. — (L. 84) $B_1m$ $Dc_2$ ममेवं. — (L. 85) Hypermetric! $B_{1.2}$ प्रभो (for विभो). — Most MSS. om. लोमश उ° before line 86. — (L. 87) $B_{2.3}$ कृष्णः (for हृष्टः). $B_1$ सत्याक्षर-समन्वितं (m as above). — (L. 88) Before line 88, most MSS. ins. विष्णुरुवाच. $B_1$ Dc मयि (for महि). — (L. 89) $B_{1-3}$ अहमेव ($B_2$ °वं) (for अयमेवं). — Before line 90, most MSS ins. लोमश उ°. — (L. 91) Dc संभूत (for संवृत्त). — (L. 92) Dc इति (for इव). — (L. 95) $B_2$ साग्रं (for वीर). — (L. 98) Dc भूस्त्वथ

हाहाभूतमभूत्सर्वं त्रिदिवं व्योम भूस्तथा।
न पर्यवस्थितः कश्चिद्देवो वा मानुषोऽपि वा।
ततो ब्रह्माणमासीनं ज्वलमानमिव श्रिया।
देवाः सर्षिगणाश्चैव उपतस्थुरनेकशः।
उपसर्प्य च देवेशं ब्रह्माणं लोकसाक्षिकम्।
भूत्वा प्राञ्जलयः सर्वे वाक्यमुच्चारयंस्तदा।
लोकाः संक्षुभिताः सर्वे व्याकुलं च चराचरम्।
समुद्राणां च संक्षोभस्त्रिदशेश प्रकाशते।
सैषा वसुमती कृत्स्ना योजनानां शतं गता।
किमेतत्किंप्रभावेण येनेदं व्याकुलं जगत्।
आख्यातु नो भवाञ्शीघ्रं विसंज्ञाः स्मेह सर्वशः

ब्रह्मोवाच।

असुरेभ्यो भयं नास्ति युष्माकं कुत्रचित्क्वचित्।
श्रूयतां यत्कृतेऽत्वेष संक्षोभो जायतेऽमराः।
योऽसौ सर्वत्रगः श्रीमानक्षरात्मा व्यवस्थितः।
तस्य प्रभावात्संक्षोभस्त्रिदिवस्य प्रकाशते।
यैषा वसुमती कृत्स्ना योजनानां शतं गता।
समुद्धृता पुनस्तेन विष्णुना परमात्मना।
तस्यामुद्धार्यमाणायां संक्षोभः समजायत।
एवं भवन्तो जानन्तु छिद्यतां संशयश्च वः।

देवा ऊचुः।

क तद्भूतं वसुमतीं समुद्धरति हृष्टवत्।
तं देशं भगवन्ब्रूहि तत्र यास्यामहे वयम्।

ब्रह्मोवाच।

हन्त गच्छत भद्रं वो नन्दने पश्यत स्थितम्।
एषोऽत्र भगवाञ्श्रीमान्सुपर्णः संप्रकाशते।
वाराहेणैव रूपेण भगवाँल्लोकभावनः।
कालानल इवाभाति पृथिवीतलमुद्धरन्।
एतस्योरसि सुव्यक्तं श्रीवत्समभिराजते।
पश्यध्वं विबुधाः सर्वे भूतमेतदनामयम्।

लोमश उवाच।

ततो दृष्ट्वा महात्मानं श्रुत्वा चामन्त्र्य चामराः।
पितामहं पुरस्कृत्य जग्मुर्देवा यथागतम्।

वैशंपायन उवाच।

श्रुत्वा तु तां कथां सर्वे पाण्डवा जनमेजय।
लोमशादेशितेनाशु पथा जग्मुः प्रहृष्टवत्।

Colophon.

☞ It may be noted that this passage is om. also in the old Āraṇyakaparvan MS. belonging to the Bombay Branch of the Royal Asiatic Society (Bhau Daji Collection No. 245).

## 17

After adhy. 153, B (for $B_1$ see below) D (except $D_{1-3.5}$) S ins. the foll. addl. adhy.:

वैशंपायन उवाच।

तस्मिन्निवसमानोऽथ धर्मराजो युधिष्ठिरः।
कृष्णया सहितान्भ्रातॄनित्युवाच सहद्विजान्।
दृष्टानि तीर्थान्यस्माभिः पुण्यानि च शिवानि च।
मनसो ह्लादनीयानि वनानि च पृथक्पृथक्।
देवैः पूर्वं विचीर्णानि मुनिभिश्च महात्मभिः।
यथाक्रमविशेषेण द्विजैः संपूजितानि च।
ऋषीणां पूर्वचरितं तथा कर्म विचेष्टितम्।
राजर्षीणां च चरितं कथाश्च विविधाः शुभाः।

---

(for °स्तथा). — (L. 100) $B_1$ °मीशानं (for °मासीनं). — (L. 102) $B_1$ अप° (for उप°). $B_1$ Dc °सारथिं; $B_2$ °साक्षिणं; $B_4$ °शासनं (for °साक्षिकम्). — $B_{2.3}$ om. the posterior half of line 103 and the prior half of line 104. — (L. 106) $B_3$ यैषा (for सैषा). — (L. 107) Some MSS. °प्रभावेन. Dc हि (for [इ]दं). — (L. 108) B सर्वतः (for °शः). — (L. 109) Dc अस्माकं ह्यत्रकुत्रचित् (for the posterior half). — (L. 110) Dc यत्कृते ह्येष. — (L. 113) $B_{2.4}$ सैषा (for यैषा). — (L. 114) $B_4$ प्रभविष्णुना (for परमा°). — (L. 117) $B_1$ काश्चिद्भूतो (for क तद्भूतं). — (L. 118) Dc वत्स्या° (for यास्या°). — (L. 120) $B_1$ Dc धीमान् (for श्री°). Dc सुवर्णः (for सुपर्णः). — (L. 121) Dc वराहेण (for वा°). — (L. 122) Dc सनातन (for कालानल). — (L. 125) $D_{5.6}$ दिष्ट्या (for दृष्ट्वा). — Colophon. *Adhy. no.:* $Dn_{1}$. $n_3$ 142; $Dn_2$ 141.

## 17

$B_1$ reads this whole passage on a suppl. folio (*sec. m.*). — (L. 1) M तस्यां रजन्यां व्युष्टायां (for the prior half). — (L. 2) S आमंत्र्य (for कृष्णया). Dc सह तान् (for सहितान्). S सह द्विजैः (for °जान्). — (L. 3) $B_4$ तीर्थानि दृष्टानि (by transp.). $M_1$ [आ]यतनानि (for च शिवानि). $T_2$ (by corr.) वनानि (for शिवानि). — (L. 4) $B_1$ प्लावनानि; S पावनानि (for वनानि च). — (L 5) $B_1$ सर्वाविची(m °की)र्णानि; $B_4$ पूर्णविकी°; Dc सर्व (Dc₂ °र्वं-) विकी°; $Dn_3$ पूर्णानि ची°; S सर्वाणि तीर्थानि ($M_1$ सर्वानुचीर्णानि) (for पूर्वं वि°). — (L. 6) $B_1$ Dc $Dn_2$ M यथाक्रमं विशेषेण; $B_4$ °कामं विशे°; $T_1$ $G_{2.4}$ °क्रममशे°; $T_2$ $G_{1.3}$ °काममशे°. — (L. 7) $T_1$ $G_{1.2}$ धर्मं° (for पूर्वं°). S तपो धम (for तथा कर्म). — S ins. after line 7: $B_1$ Dc, after line 9:

यथाक्रमं विशेषेण लोमशेन प्रभाषितम्।

श्रृण्वानास्तत्र तत्र स्म आश्रमेषु शिवेषु च ।
अभिषेकं द्विजैः सार्धं कृतवन्तो विशेषतः ।
अर्चिताः सततं देवाः पुष्पैरद्भिः सदा च वः ।
यथालब्धैर्मूलफलैः पितरश्चापि तर्पिताः ।
पर्वतेषु च रम्येषु सर्वेषु च सरःसु च ।
उदधौ च महापुण्ये सूपस्पृष्टं महात्मभिः ।
इला सरस्वती सिन्धुर्यमुना नर्मदा तथा ।
नानातीर्थेषु रम्येषु सूपस्पृष्टं सह द्विजैः ।
गङ्गाद्वारमतिक्रम्य बहवः पर्वताः शुभाः ।
हिमवान्पर्वतश्चैव नानाद्विजगणायुतः ।
विशाला बदरी दृष्टा नरनारायणाश्रमः ।
दिव्या पुष्करिणी दृष्टा सिद्धदेवर्षिपूजिता ।
यथाक्रमविशेषेण सर्वाण्यायतनानि च ।
दर्शितानि द्विजश्रेष्ठा लोमशेन महात्मना ।
इमं वैश्रवणावासं पुण्यं सिद्धनिषेवितम् ।
कथं भीम गमिष्यामो गतिरन्तरधीयताम् ।
एवं ब्रुवति राजेन्द्रे वागुवाचाशरीरिणी ।
न शक्यो दुर्गमो गन्तुमितो वैश्रवणाश्रमात् ।
अनेनैव पथा राजन्प्रतिगच्छ यथागतम् ।
नरनारायणस्थानं बदरीत्यभिविश्रुतम् ।
तस्माद्यास्यसि कौन्तेय सिद्धचारणसेवितम् ।
बहुपुष्पफलं रम्यमाश्रमं वृषपर्वणः ।
अतिक्रम्य च तं पार्थ त्वार्ष्टिषेणाश्रमे वसेः ।
ततो द्रक्ष्यसि कौन्तेय निवेशं धनदस्य च ।
एतस्मिन्नन्तरे वायुर्दिव्यगन्धवहः शुचिः ।
सुखप्रह्लादनः शीतः पुष्पवर्षं ववर्ष च ।
श्रुत्वा तु दिव्यामाकाशाद्वाचं सर्वे विसिस्मियुः ।
ऋषीणां ब्राह्मणानां च पार्थिवानां विशेषतः ।
श्रुत्वा तन्महदाश्चर्यं द्विजो धौम्योऽब्रवीत्तदा ।
न शक्यमुत्तरं वक्तुमेवं भवतु भारत ।
ततो युधिष्ठिरो राजा प्रतिजग्राह तद्वचः ।
प्रत्यागम्य पुनस्तं तु नरनारायणाश्रमम् ।

तेषु तीर्थेषु रम्येषु पावनेषु शिवेषु च ।

[(L. 1) B1 Dc तथा चैव (for यथाक्रमं), and प्रकाशितं (for प्रभा°). — (L. 2) G4 om. line 2. T2 M1 सर्वेषु (for रम्येषु). B1 Dc तेषु तेष्वप्यरण्येषु; T2 G2. 3 तेषु तेषु च तीर्थेषु (for the prior half). T1 सरःसु च सरित्सु च; T2 G1–3 रम्यासु च सरित्सु (G1 सरःसु) च; M2 सरित्सु च सरःसु च (for the posterior half).]

— T G2–4 M2 om. lines 8–14; G1 om. lines 8–21; M1 om. lines 8–9. — (L. 10) M1 आभिषेको. Dc पूर्वं (for सार्धं). M1 कृतस्तैभिर् (for कृतवन्तो). — (L. 11) B4 °रेभिः (for °रद्भिः). B1 Dc सदा च नः; M1 तथार्चनैः — (L. 13) M1 सरित्सु (for सर्वेषु). B2 सरस्स्वथ (for °रःसु च). — (L. 14) B2 °पुण्यमुपस्पृष्टं; B4 °पुण्येषूपविष्टं. M1 तथा पुण्ये (for महा°), and महर्षिभिः (for महात्मभिः). — (L. 15) S (G1 om.) इरा (G4 *inf. lin.*) पुरा (for इला). — (L. 16) S (G1 om.) तासां ह्रदेषु पुण्येषु (for the prior half). B1 Dc T1 उपस्पृष्टं; T2 G3. 4 उपस्पृष्टा; G2 M2 उपस्पृष्ट-. Dc2 महाद्विजैः; T1 द्विजोत्तमैः; T2 G2–4 M2 द्विजैः शुभैः. — (L. 17) S om. line 17. B1. 4 Dc पर्वता बहवः शुभाः (Dc प्रजाः) (for the posterior half). — (L. 18) T G2–4 M2 हिमवत्पार्श्वतश्चैव. T1 M2 भूता-(M2 ह्रदा)न्द्विजगणायुतान्; T2 G2. 3 द्विजसंघरुतैर्युतं (G2 °युतान्ह्रदान्). — (L. 19) T G2. 3 M2 विशालां बदरीं दृष्ट्वा. Dc °श्रमं; S (G1 om.) °श्रमे (for °श्रमः). — (L. 20) T G M2 om. line 20. B2. 3 Dn1. n2 D6 दिव्य- (for दिव्या). M1 °सेविता (for °पूजिता). — (L. 21) Dc T1 G2 M यथाक्रमं विशेषेण; T2 G3 °क्रमशो°. — (L. 22) G4 om line 22. S (G4 om.) द्विजेंद्रेण (for द्विजश्रेष्ठा). — (L. 23) T1 G2. 4 M2 एवं; M1 एतं (for इमं). S दुर्गमं गंधमादनं (for the posterior half). — (L. 24) S मतिरत्र विधीयतां (for the posterior half). — T1 om. lines 25–28. — (L. 26) S (T1 om.) अशक्यो (for न श°). S (T1 om.) पर्वतो गंधमादनः (for the posterior half). — (L. 29) S transp. lines 29 and 30. Dc °त्प्राप्स्यसि; S °द्गच्छाथ (for °द्यास्यसि). T1 M2 कौरव्य (for कौन्तेय). — (L. 30) T2 G3 °मूल° (for °पुष्प°). — (L. 31) T1 °क्रम्येत (for °क्रम्य च). T2 G2–4 तत् (for तं). B1. 2. 4 आर्ष्णि-; Dc S आर्ष्टि- (for त्वार्ष्टि-). S (except G1 M1) -श्रमं (for -श्रमे). T1 व्रज; T2 G2–4 M वस (for वसेः). — (L 32) G1 कौरव्य (for कौन्तेय). B1 निर्वेशं; S निवासं (for निवेशं). B1. 2. 4 Dc S (except G1. 4) तं; D4 वै (for च). — (L. 33) S शुभः (for शुचिः). — (L. 34) S मनः° (for सुख°). Dc प्रीतः (for शीतः). B1. 2. 4 Dc पपात (for ववर्ष). S वै (for च). — (L. 35) B1 तं श्रुत्वा; B4 श्रुत्वा च; Dc M1 तां श्रुत्वा; T G M2 तच्छ्रुत्वा. B1 Dc S दिव्यम् (M1 वाचम्) (for दिव्याम्). S विस्मयः समपद्यत (for the posterior half). — (L. 36) T G2–4 पांडवानां (for ब्राह्म°). T G2–4 ब्राह्मणानां; G1 M पांडवानां (for पार्थि°). — (L. 37) S तु (for तन्). S द्विजो धौम्यस्त्वभाषत (M1 °म्योऽभ्यभाषत; M2 °म्यः स भाषते). — (L. 38) S (except M2) गंतुम् (for वक्तुम्). S (except G1) पांडव (for भारत). — (L. 39) S विस्मयोत्फुल्ललोचनः (for the posterior half). — (L. 40) S om. line 40. B4 पृष्टस्तस्य; Dc प्रत्यागत्य (for °गम्य). B1. 4

भीमसेनादिभिः सर्वैर्भ्रातृभिः परिवारितः ।
पाञ्चाल्या ब्राह्मणाश्चैव न्यवसन्त सुखं तदा ।

Colophon.

## 18

After 3. 175. 11, B Dc Dn D4. 6 ins. the foll. passage, K3 ins. only lines 1–4 thereof:

भीमसेनस्तु विख्यातो महान्तं दंष्ट्रिणं बलात् ।
निघ्नन्नागशतप्राणो वने तस्मिन्महाभुजः ।
मृगाणां सवराहाणां महिषाणां महाभुजः ।
विनिघ्नंस्तत्र तत्रैव भीमो भीमपराक्रमः ।
स मातङ्गशतप्राणो मनुष्यशतवारणः ।
सिंहशार्दूलविक्रान्तो वने तस्मिन्महाबलः ।
वृक्षानुत्पाटयामास तरसा वै बभञ्ज च ।
पृथिव्याश्च प्रदेशान्वै नादयंस्तु वनानि च ।
पर्वताग्राणि वै मृद्नन्नादयानश्च विज्वरः ।
प्रक्षिपन्पादपांश्चापि नादेनापूरयन्महीम् ।
वेगेन न्यपतद्भीमो निर्भयश्च पुनः पुनः ।
आस्फोटयन्क्ष्वेडयंश्च तलतालांश्च वादयन् ।
चिरसंबद्धदर्पस्तु भीमसेनो वने तदा ।
गजेन्द्राश्च महासत्त्वा मृगेन्द्राश्च महाबलाः ।
भीमसेनस्य नादेन व्यमुञ्चन्त गुहा भयात् ।
क्वचित्प्रधावंस्तिष्ठंश्च क्वचिच्चोपविशंस्तथा ।
मृगप्रेप्सुर्महारौद्रे वने चरति निर्भयः ।
स तत्र मनुजव्याघ्रो वने वनचरोपमः ।
पद्भ्यामभिसमापेदे भीमसेनो महाबलः ।
स प्रविष्टो महारण्ये नादान्नदति चाद्भुतान् ।
त्रासयन्सर्वभूतानि महासत्त्वपराक्रमः ।
ततो भीमस्य शब्देन भीताः सर्पा गुहाशयाः ।
अतिक्रान्तास्तु वेगेन जगामानुसृतः शनैः ।
ततोऽमरवरप्रख्यो भीमसेनो महाबलः ।

[ Correction ! This insertion is found in D6 in addition to the MSS. mentioned on p. 595. The above list has been corrected accordingly. ]

## 19

K4 D1. 2 ins. after 3. 177. 14: K3 (om. lines 1–20) ins. after 3. 177. 13 (cf. passage No. 32 below):

सर्प उवाच ।
धर्मं सर्वे प्रशंसन्ति देवा ब्रह्मर्षयस्तथा ।
तस्मात्समासतो धर्मं कथयस्व ममानघ ।
युधिष्ठिर उवाच ।
सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमार्जवम् ।
ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः ।
सर्प उवाच ।
किं सत्यं प्रोच्यते राजन्को दमः संप्रकीर्तितः ।
तपसो लक्षणं किं स्यात्किं तच्छौचमुदाहृतम् ।
युधिष्ठिर उवाच ।
सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् ।
सर्प उवाच ।
संतोषः कः परः प्रोक्तः का च ह्रीः परिकीर्तिता ।

---

Dc पुनस्तेन (B4 °स्ते तु). — (L. 41) S ऋषिभिः (for भ्रातृभिः). — (L. 42) B1 Dc S ब्राह्मणैश्चैव. S न्यवसत्सुखं तदा. — Colophon. *Adhy. no.*: Dn1. n2 D6 155; Dn3 156; T1 G1. 2. 4 M1 157; T2 G3 147; M2 159.

## 18

D6 om. lines 1–3. — (L. 1) B1 तत्रापि (for विख्यातो), and पर्यटन् (for महान्तं). — (L. 2) Dn1. n2 (hapl.) om. the posterior half of line 2, lines 3–4 and the prior half of line 5. B4 °बलः (for °भुजः). — (L. 8) B2. 4 भुवनानि (for तु वनानि). — (L. 9) B2 गह्वरं (for विज्वरः). — (L. 10) B1 Dc °श्चैव (for °श्चापि). — (L. 11) B1 निपतद्; B2 न्यपतन्. — (L. 15) B2 गुहास्तदा; Dc गुहां भयात्. B1 मुंचंत तेन भीमेन महाबलपराक्रमः. — (L. 16) B1. 2 °स्तदा (for °स्तथा). — (L. 18) B2 °श्रेष्ठो; Dc2 °व्याघ्र (for °व्याघ्रो). B1 °चरानुगः (for °चरोपमः). — (L. 19) Dc2 °मपि (for °मभि-). — (L. 20) Dn2 प्रविश्य (for °ष्टो). — (L. 22) B4 नादेन (for शब्देन), and सर्वा (for सर्पा). B1 भीताः सर्वोरगादयः (for the posterior half). — (L. 23) B1 अतिक्रांतस्य; B2. 3 Dc Dn1. n3 D6 °क्रांतस्तु; B4 °क्रांतेन. Dn1. n2 D4. 6 °सृतं (for °सृतः). B1. 2 स तैः (B1m शनैः as above). (L. 24) B2 नर° (for ऽमर°).

## 19

K3, which om. lines 1–20, is ignored up to that line. D1 reads नहुष (for सर्प) in this passage. — (L. 2) K4 नराधिप (for ममानघ). — D2 om. lines 4–12. — (L. 5) D1 कः शमः (for को दमः). — (L. 6) K4 तपश्च किं परं प्रोक्तं; D1 दया च का परा प्रोक्ता (for the prior half). D1 ध्यानम् (for शौचम्). K4 इहोच्यते (for उदाहृतम्). — D1 om. lines 9–10 with the preceding and

क्षमा च का परा प्रोक्ता किं चार्जवमुदाहृतम् ।
युधिष्ठिर उवाच ।
संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ।
क्षमा द्वंद्वसहिष्णुत्वमार्जवं समचित्तता ।
सर्प उवाच ।
किं ज्ञानं प्रोच्यते राजन्कः शमश्च प्रकीर्तितः ।
दया च का परा प्रोक्ता किं च ध्यानमुदाहृतम् ।
युधिष्ठिर उवाच ।
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।
दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ।
सर्प उवाच ।
कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ।
युधिष्ठिर उवाच ।
क्रोधस्तु दुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ।
सर्प उवाच ।
को मोहः प्रोच्यते राजन्कश्च मानः प्रकीर्तितः ।
किमालस्यं च विज्ञेयं कश्च शोक इहोच्यते ।
युधिष्ठिर उवाच ।
मोहो धर्मविमूढत्वं मानस्त्वात्माभिमानिता ।
धर्मनिष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते ।
सर्प उवाच ।
किं स्थैर्यं मुनिभिः प्रोक्तं किं तद्धैर्यमुदाहृतम् ।
स्नानं च किं परं प्रोक्तं किं तद्दानमिहोच्यते ।
युधिष्ठिर उवाच ।
स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागो दानं त्वभयदक्षिणा ।
सर्प उवाच ।
कः पण्डितः पुमाञ्ज्ञेयः कश्च मूर्खो जनेश्वर ।
संसारहेतुः कश्चास्य हृत्तापः कः परस्तथा ।
युधिष्ठिर उवाच ।
धर्मात्मा पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते ।
कामः संसारहेतुश्च हृत्तापो मत्सरः परः ।
सर्प उवाच ।
कोऽहंकार इति प्रोक्तः कश्चिद्दम्भो जनेश्वर ।
अभ्यसूया च का प्रोक्ता किं तत्पैशुन्यमुच्यते ।
युधिष्ठिर उवाच ।
मोहज्ञानमहंकारो दम्भो धर्मध्वजोच्छ्रयः ।
धर्मद्वेषो ह्यसूया च पैशुन्यं परदूषणम् ।
सर्प उवाच ।
धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ।
तेषां नित्यविरोधित्वात्क नु स्यात्संगतं नृप ।
युधिष्ठिर उवाच ।
संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ।
यदा भर्ता च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः ।
सर्प उवाच ।
जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च ।
ब्राह्मण्यं केन भवति प्रब्रूह्येतद्विनिश्चयम् ।
युधिष्ठिर उवाच ।
न जातिर्न कुलं तात न स्वाध्यायः श्रुतं न च ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ।
अनेके मुनयस्तात तिर्यग्योनिसमाश्रिताः ।
स्वधर्माचारनिरता ब्रह्मलोकमितो गताः ।
बहुना किमधीतेन नटस्येव दुरात्मनः ।
तेनाधीतं श्रुतं तेन यो वृत्तमनुतिष्ठति ।
कपालस्थं यथा तोयं श्वदृतौ च यथा पयः ।
दुष्टं स्यात्स्थानदोषेण वृत्तहीने तथा श्रुतम् ।
वृत्तं यत्नेन रक्ष्यं स्याद्वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ।

following ref. — (L. 10) $D_2$ यदा (for परा). — $D_1$ om. lines 13–14 with the preceding and following ref. — (L. 18) $D_1$ कः साधुः प्रोच्यते राजन्नसाधुः कः परस्तथा. — (L. 19) $D_1$ कामश्च ; $D_2$ क्रोधः स (for क्रोधस्तु). — (L. 21) $K_3$ begins from line 21! $K_3$ कथ्यते (for प्रोच्यते), and प्रकीर्त्यते (for °र्तितः). — (L. 23) $K_{3.4}$ हि मूढधर्मत्वं (for धर्मविमूढत्वं). $K_3$ त्वात्माभिमानता ; $K_4$ स्वात्मावमानिता. — (L. 24) $K_3$ शोकोज्ञत्वमिहोच्यते (for the posterior half). — (L. 25) $K_3$ ऋषिभिः (for मुनिभिः). — (L. 26) $K_3$ °मुदाहृतं (for °मिहोच्यते). — (L. 27) $D_2$ स्वधर्मास्थिरता. $K_3$ स्थैर्यम् (for धैर्यम्). — (L. 29) $D_1$ नरे° (for जने°). — (L. 30) $K_4$ कश्च स्याद् (for कश्चास्य). — (L. 32) $K_{3.4}$ स्मृतः (for परः). — (L. 33) $D_1$ कश्च (for कश्चिद्). — (L. 35) $K_3$ मोहा° (for मोह°). — (L. 36) $K_3$ [ऽ]भ्यसूया (for ह्यसूया). — (L. 38) $K_3$ $D_1$ नित्या° ; $D_2$ अल्प° (for नित्य°). $K_3$ कथं (for क नु). $D_1$ संगमो (for संगतं). — (L. 40) $K_3$ परस्परं च संयुक्तं त्रितगंस्तत्र (sic) वर्तते. $D_1$ त्रिवर्गस्तत्र उच्यते (for the posterior half). — (L. 42) $K_3$ तपो (for तदा). $K_{3.4}$ संगतं ($K_3$ °तः) (for संगमः). — (L. 44) $K_{3.4}$ सुनिश्चितं (for विनिश्चयम्). — (L. 45) $K_3$ स्वाध्यायो न (by transp.). — (L. 46) $D_1$ °मेतत्तु ; $D_2$ °मेतस्य (for °मेव तु). — (L. 49) $D_{1.2}$ बहुधा (for °ना). — (L. 50) $D_1$ स्वधर्मम् (for यो वृत्तम्). $D_2$ °जीवति (for °तिष्ठति). — $D_2$ om. lines 51–52.

किं कुलेनोपदिष्टेन विपुलेन दुरात्मनः ।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ।
तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् ।
चतुर्वेदोऽपि दुर्वृत्तः शूद्रात्पापतरः स्मृतः ।
योऽग्निहोत्रपरो दान्तः संतोषनियतः शुचिः ।
तपःस्वाध्यायशीलश्च तं देवा ब्राह्मणं विदुः ।
सर्वद्वंद्वसहो धीरः सर्वसङ्गविवर्जितः ।
सर्वभूतहितो मैत्रस्तं देवा ब्राह्मणं विदुः ।
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्वचनशायी च तं देवा ब्राह्मणं विदुः ।
योऽहेरिव गणाद्भीतो सन्मानान्मरणादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ।

## 20

After 3. 178. 28, $K_{2.4}$ ins. :

सर्प उवाच ।
उक्तास्ते सर्वशस्तात प्रश्नाः प्रश्नविदां वर ।
इदानीमेष मुञ्चामि भ्रातरं ते वृकोदरम् ।
वैशंपायन उवाच ।
नहुषेण ततो मुक्तं भीममाश्लिष्य सोदरम् ।
युधिष्ठिरोऽपि धर्मात्मा नहुषं प्रत्यपूजयत् ।
नहुषोऽपि मुनेः शापाद्विमुक्तः प्रीतमानसः ।
दिव्यरूपधरः श्रीमान्प्रत्युवाच युधिष्ठिरम् ।
संभाष्यं साधुभिः पुण्यमिति वै वैदिकी श्रुतिः ।
सर्पत्वात्पश्य मुक्तोऽहं त्वया संभाष्य साधुना ।
धर्मं किल नराः कृत्वा लभन्ते सत्सुतानिह ।
धर्मेण कः कृतो धर्मो येन लब्धो भवान्सुतः ।
न केवलं प्रजा धन्या यासां राजन्नृपो भवान् ।
धर्मोऽपि धन्यो धर्मज्ञ यस्य पुत्रस्त्वमीदृशः ।
दृष्टाः श्रुताश्च बहवो नृपा धर्मपरायणाः ।
न श्रुतो न च दृष्टो मे धर्मज्ञस्त्वादृशो नृपः ।
युधिष्ठिर उवाच ।
सभाग्योऽहं महाभाग यस्य तुष्टो भवान्गुणैः ।
नासभाग्यस्य तुष्यन्ति देवकल्पा भवादृशाः ।
किं तु कौतूहलं तात मम पार्थिवसत्तम ।
अतः पृच्छामि सौहार्दात्त्वामहं नाभ्यसूयया ।
सर्वशास्त्रार्थतत्त्वज्ञं त्रैलोक्येश्वरपूजितम् ।
कथं त्वामाविशन्मोहः प्राकृतं पुरुषं यथा ।
नहुष उवाच ।
श्रुतशीलादिभिर्युक्तं धार्मिकं तपसि स्थितम् ।
सुप्राज्ञमपि कौन्तेय ऋद्धिर्मोहयते नरम् ।
हीनाभिजनवृत्तोऽपि न स राजास्ति कश्चन ।
यस्य चेतसि राजेन्द्र करोति न मदः पदम् ।
यथाग्नौ ध्रुवमुष्णत्वमनिले चलनं यथा ।
यथा शशिनि शीतत्वं तथैश्वर्ये ध्रुवो मदः ।
ऐश्वर्यतिमिरं चक्षुर्न तत्पश्यति निर्मलम् ।
पश्चाद्विमलतां याति विनिपाताञ्जनाञ्चितम् ।
वर्तमानः सुखे स्वर्गे नावैतीति मतिर्मम ।
सोऽहमैश्वर्यमोहेन यदाविष्टो युधिष्ठिर ।
पतितः प्रतिसंबुद्धः सांप्रतं बोधयामि वः ।
लोकद्वयहितं वक्तुं ज्ञातुं को वा न पण्डितः ।
तत्क्रियानुविधानत्वे मुनयोऽपि न पण्डिताः ।
तस्माल्लोकद्वयस्येष्टं कर्तव्यं ते नराधिप ।
गुह्यमेतन्महाबाहो कथितं ते मयाखिलम् ।
द्विजाश्च नावमन्तव्यास्त्रैलोक्येश्वरपूजिताः ।
देववत्पूजनीयाश्च दानमानार्चनादिभिः ।
यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः ।
क्षयी चापादितश्चन्द्रः को न नश्येत्प्रकोप्य तान् ।
लोकानन्यान्सृजेयुर्ये लोकपालांश्च कोपिताः ।
देवान्कुर्युरदेवांश्च कः क्षुण्वंस्तान्समृध्नुयात् ।
यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा ।
ब्रह्म चैव धनं येषां को हिंस्यात्ताञ्जिजीविषुः ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ।
एवं विद्वानविद्वांश्च ब्राह्मणो दैवतं परम् ।

## 21

$K_2$ $B_{2-4}$ Dc Dn $D_3$ (the lost MS. having sections 1–36 only on suppl. fol. *sec. m.*). $_{4.6}$ $G_3$ ins. the foll.

— (L. 52) $K_2$ $D_2$ यथा (for तथा). — (L. 53) $K_4$ संरक्ष्यं (for रक्ष्यं स्याद्). $D_2$ °मायाति (for °मेति च). — (L. 54) $K_4$ transp. वित्ततः and वृत्ततः. — (L. 55) $K_3$ विशिष्टेन (for [उ]पदिष्टेन). — (L. 58) $D_{1.2}$ चातुर्वेदो. — (L. 59) $K_4$ °निरतः (for °नियतः). — $K_2$ $D_2$ om. lines 63–64. — (L. 65) $D_1$ सुहृदो (for सन्मानान्).

**20**

— (L. 1) $K_2$ सर्वतस् (for °शस्). — (L. 3) $K_2$ सादरं (for सो°). — (L. 7) $K_2$ सत्यवती (for वै वैदिकी). — (L. 11) $K_2$ धर्मा (for धन्या), and यस्यां धर्मा (for यासां राजन्). — (L. 13) $K_2$ बहुशो (for बहवो). — For 17–20, $K_2$ subst. सर्वज्ञत्वात्कथं मोह आविशत्स्वर्गवासिनां (cf. line 19–20) । एवमद्भुतकर्माणामिति मे संशयो महान्. — (L. 21) $K_2$ श्रुति° (for श्रुत°). — (L. 22) $K_2$ चेन्द्रस्य (for कौन्तेय). — $K_2$ om. lines 23–28. — (L. 30) $K_4$ °मदिरान् (for °मोहेन), and मद्यांधीकृतलोचनः (for the posterior half). — (L. 31) $K_2$ °बुद्धः सन् (for °संबुद्धः), and त्वां तु संबोधयाम्यहं (for the posterior half).

passage after adhy. 190: K4 D1. 2. 3 (orig.) ins. it after adhy. 206 (K4 D1. 2 reading sections 1-36 *after* section 158):

१

वैशंपायन उवाच ।

मार्कण्डेयमृषयो ब्राह्मणा युधिष्ठिरश्च पर्यपृच्छन् । ऋषिः केन दीर्घायुरासीद्बकः ॥१॥ मार्कण्डेयस्तु तान्सर्वानुवाच । महातपा दीर्घायुश्च बको राजर्षिः । नात्र कार्या विचारणा ॥२॥

एतच्छ्रुत्वा तु कौन्तेयो भ्रातृभिः सह भारत ।
मार्कण्डेयं पर्यपृच्छद्धर्मराजो युधिष्ठिरः ॥ ३
बकदाल्भ्यौ महात्मानौ श्रूयेते चिरजीविनौ ।
सखायौ देवराजस्य तावृषी लोकसंमतौ ॥ ४
एतदिच्छामि भगवन्बकशक्रसमागमम् ।
सुखदुःखसमायुक्तं तत्त्वेन कथयस्व मे ॥ ५

मार्कण्डेय उवाच ।

वृत्ते देवासुरे राजन्संग्रामे लोमहर्षणे ।
त्रयाणामपि लोकानामिन्द्रो लोकाधिपोऽभवत् ॥ ६
सम्यग्वर्षति पर्जन्यः सस्यसंपद उत्तमाः ।
निरामयाः सुधर्मिष्ठाः प्रजा धर्मपरायणाः ॥ ७
मुदितश्च जनः सर्वः स्वधर्मेषु व्यवस्थितः ।
ताः प्रजा मुदिताः सर्वा दृष्ट्वा बलनिषूदनः ॥ ८
ततस्तु मुदितो राजन्देवराजः शतक्रतुः ।
ऐरावतं समास्थाय ताः पश्यन्मुदिताः प्रजाः ॥ ९
आश्रमांश्च विचित्रांश्च नदीश्च विविधाः शुभाः ।
नगराणि समृद्धानि खेटाञ्जनपदांस्तथा ॥ १०
प्रजापालनदक्षांश्च नरेन्द्रान्धर्मचारिणः ।
उदपानं प्रपा वापी तडागानि सरांसि च ॥ ११
नानाब्रतसमाचारैः सेवितानि द्विजोत्तमैः ।
ततोऽवतीर्य रम्यायां पृथ्व्यां राजञ्शतक्रतुः ॥ १२
तत्र रम्ये शिवे देशे बहुवृक्षसमाकुले ।
पूर्वस्यां दिशि रम्यायां समुद्राभ्याशतो नृप ॥ १३
तत्राश्रमपदं रम्यं मृगद्विजनिषेवितम् ।
तत्राश्रमपदे रम्ये बकं पश्यति देवराट् ॥ १४
बकस्तु दृष्ट्वा देवेन्द्रं दृढं प्रीतमनाभवत् ।

---

## 21

1 B2 ऋषि (for ऋषयो). K4 D1. 2 om. ब्राह्मणा, and read पांडवाश्च (for युधिष्ठिरश्च). — K4 B2-4 Dc2 D1. 2 किल (for केन). D3 अस्ति कश्चिच्चिरजात इति (for ऋषिः—°द्बकः).

2 K4 om. सर्वान्. K4 Dc D2 प्रत्युवाच (for उवाच). D1 किं न श्रुतं भवता इदं कालांतरे क्वचित् (for मार्कंडेयस्तु तान्सर्वानुवाच). — K4 D3. 4 om. महातपा. B4 सुमहातपा (for महा°). K4 D2 राजन्; Dc राजनृषिः (for राजर्षिः). — Dc om. कार्या.

3 $^{bcd}$) K4 D1. 2 धर्मराजो युधिष्ठिरः । मार्कंडेयं महाभागं प्राप्तकालमभाषत.

4 $^{ab}$) B2m °शक्रौ (for °दाल्भ्यौ). Dc D4 श्रूयते. — For 4, K4 D1. 2 subst.:

श्रूयते हि महाभाग बको दाल्भ्यो महातपाः ।
प्रियः सखा च शक्रस्य चिरजीवी च सत्तमः ।
[(L. 2) D1 संमतः (for सत्तमः).]

5 $^{b}$) K4 D1. 2 °इंद्र° (for °शक्र°). — $^{d}$) K4 Dc D1. 2 कथितं त्वया (for कथयस्व मे).

6 B2-4 Dc Dn D4. 6 G3 om. $6^{a}$–$8^{b}$.

7 $^{a}$) K2 पर्जन्ये. — $^{b}$) K4 °संपदनुत्तमाः.

8 $^{ab}$) D2 मुदिताश्च जनाः सर्वे, and व्यवस्थिताः. — $^{cd}$) B2 तादृक्सर्वा; D1 दृष्ट्वा सर्वा (by transp.). K2 बलि°; K4 D1. 2 वृत्र° (for बल°).

9 For 9, K4 D1. 2 subst.:

अतीव मुदितो राजन्देवराजः शतक्रतुः ।
ऐरावतमथारुह्य श्वेतं गजवरोत्तमम् ।
लोकं समानमास्थाय ददर्श मुदिताः प्रजाः ॥

10 $^{a}$) K4 आश्रमांश्च महापुण्यान्; Dc आश्रमान्सुविचित्रांश्च; D1. 2 आश्रमाणि च पुण्यानि. — $^{b}$) K4 D1. 2 नदीशैल(D1 °लान्)सरांसि च. — $^{d}$) K4 D1. 2 नाना- (for खेटान्). D1. 2 °पदानि च (for °पदांस्तथा).

11 $^{c}$) K4 Dc D1. 2 उदपान- (for °पानं). K4 D1. 2 कूप- (for वापी). — $^{d}$) K4 D1. 2 -तडागारामसंकुलं. — After 11, K4 D1. 2 ins.:

नानाजनपदाकीर्णं ब्रह्मचारिनिषेवितम् ।
यज्ञोत्सववतीं देवीं सागराम्बरमेखलाम् ।

12 $^{a}$) K1 Dn °ब्रह्म° (for °ब्रत°). — $^{b}$) K4 Dc D1. 2 सेवितां द्विजसत्तमैः. — D2 ins. after $12^{ab}$: D1, after 14:

तत्रावतीर्य भगवाञ्शक्रो दितिजसूदनः ।
[See below notes on section 16.]

— K4 D1 om. $12^{cd}$; D2 reads it after 14.

13 $^{a}$) K4 D1. 2 अथ (for तत्र). D3 शुभे (for शिवे). — $^{c}$) K4 D1. 2 विंध्यस्य; Dc पुण्यायां (for रम्यायां). — $^{d}$) K4 D1. 2 समुद्रमभितोभवत्.

14 $^{b}$) K4 D1. 2 °पक्षि° (for °द्विज°). — $^{cd}$) K4 D1. 2 ददर्श शक्रः सुमहद्बकस्य च महात्मनः. — After 14, D2 reads $12^{cd}$. — D1 ins. after तत्रावतीर्य etc. (see above): D2, after $12^{cd}$ (transposed):

प्रविवेश महापुण्यं तपोवनमनुत्तमम् ।

15 K4 om. 15. — $^{ab}$) D1. 2 बकः सुरपतिं देवं पूजयामास सत्तमः. — $^{cd}$) D1. 2 om. $15^{cd}$. Dc पाद्येनार्घ्येण

पाद्यासनार्घदानेन फलमूलैरथार्चयत् ॥ १५
सुखोपविष्टो वरदस्ततस्तु बलसूदनः ।
ततः प्रश्नं बकं देव उवाच त्रिदशेश्वरः ॥ १६
शतं वर्षसहस्राणि मुने जातस्य तेऽनघ ।
समाख्याहि मम ब्रह्मन्किं दुःखं चिरजीविनाम् ॥ १७
बक उवाच ।
अप्रियैः सह संवासः प्रियैश्चापि विनाभवः ।
असद्भिः संप्रयोगश्च तद्दुःखं चिरजीविनाम् ॥ १८
पुत्रदारविनाशोऽत्र ज्ञातीनां सुहृदामपि ।
परेष्वायत्तता कृच्छ्रं किं नु दुःखतरं ततः ॥ १९
नान्यद्दुःखतरं किंचिल्लोकेषु प्रतिभाति मे ।
अर्थैर्विहीनः पुरुषः परैः संपरिभूयते ॥ २०
अकुलानां कुले भावं कुलीनानां कुलक्षयम् ।
संयोगं विप्रयोगं च पश्यन्ति चिरजीविनः ॥ २१
अपि प्रत्यक्षमेवैतत्तव देव शतक्रतो ।
अकुलानां समृद्धानां कथं कुलविपर्ययः ॥ २२
देवदानवगन्धर्वमनुष्योरगराक्षसाः ।
प्राप्नुवन्ति विपर्यासं किं नु दुःखतरं ततः ॥ २३
कुले जाताश्च क्लिश्यन्ते दौष्कुलेयवशानुगाः ।
आढ्यैर्दरिद्रावमताः किं नु दुःखतरं ततः ।
लोके वैधर्म्यमेतत्तु दृश्यते बहुविस्तरम् ॥ २४
हीनज्ञानाश्च दृश्यन्ते क्लिश्यन्ते प्राज्ञकोविदाः ।
बहुदुःखपरिक्लेशं मानुष्यमिह दृश्यते ॥ २५
इन्द्र उवाच ।
पुनरेव महाभाग देवर्षिगणसेवित ।
समाख्याहि मम ब्रह्मन्किं सुखं चिरजीविनाम् । २६
बक उवाच ।
अष्टमे द्वादशे वापि शाकं यः पचते गृहे ।
कुमित्राण्यनपाश्रित्य किं वै सुखतरं ततः ॥ २७
यत्राहानि न गण्यन्ते नैनमाहुर्महाशनम् ।
अपि शाकं पचानस्य सुखं वै मघवन्गृहे ॥ २८
अर्जितं स्वेन वीर्येण नान्यपाश्रित्य कंचन ।
फलशाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे ॥ २९
परस्य तु गृहे भोक्तुः परिभूतस्य नित्यशः ।
सुमृष्टमपि न श्रेयो विकल्पोऽयमतः सताम् ॥ ३०
श्ववत्कीलालपो यस्तु परान्नं भोक्तुमिच्छति ।
धिगस्तु तस्य तद्भुक्तं कृपणस्य दुरात्मनः ॥ ३१
यो दत्त्वातिथिभूतेभ्यः पितृभ्यश्च द्विजोत्तमः ।

(for $^{c}$).

16 $^{ab}$) $K_4$ तत्रावतीर्य भगवान्शक्रो दैत्यनिषूदनः (see insertion above under section 12). $D_{1.2}$ इंद्रो बलनिषूदनः (for $^{b}$). — $^{cd}$) $K_2$ $Dc_2$ त्रिदिवेश्वरः. $K_4$ $D_{1.2}$ कथाप्रश्नं बकं दाल्भ्यमुवाच कुरुनंदन.

17 $^{a}$) $B_{3.4}$ शत- (for शतं). $K_4$ $D_{1.2}$ °सहस्राणां (for °सहस्राणि). — $^{b}$) $K_4$ $D_{1.2}$ बक (for ऽनघ). — $^{c}$) $K_4$ $D_{1.2}$ आख्याहि त्वं (for समाख्याहि).

18 $K_2$ $B_{2-4}$ Dc $D_{3.4.6}$ $G_2$ om. 18.

19 $^{ab}$) $K_4$ $D_{1.2}$ पुत्रनाशा($D_2$ °शोको)र्थनाशश्च, and तथा (for अपि). — $^{cd}$) $K_4$ $D_{1.2}$ चैव (for कृच्छ्रं). $K_4$ Dc $D_{1.2}$ किं नु दुःखमतः (Dc दुखं ततः) परं.

20 $^{b}$) $K_4$ $D_{1.2}$ लोकेस्मिन् (for लोकेषु). — $^{d}$) $K_4$ $D_{1.2}$ यः परैः (for परैः सं-).

21 $^{a}$) $K_4$ $D_{1.2}$ कुलीभावं; $D_3$ कुलीनत्वं. — $^{b}$) $K_4$ $D_{1-3}$ कुलानां च कुलक्रियां. — $^{c}$) $K_4$ $D_{1-3}$ संयोगान्विप्रयोगांश्च.

22 $^{cd}$) $K_4$ $D_{1-3}$ असुराणां (for अकुलानां), and कथितः कालपर्ययः (for $^{d}$).

23 $^{ab}$) $K_4$ $D_{1-3}$ °गंधर्वाः किंनरोरगमानुषाः. — $^{d}$) $D_3$ किं स्विद् (for किं नु). $K_4$ दुःखमतः परं.

24 $^{a}$) $K_4$ $D_{1-3}$ कृष्यंते (for क्लिश्यन्ते). — $^{b}$) $K_4$ $B_{2-4}$ $D_{2.3}$ दौष्कुलेयैर् (for °लेय-). — $^{c}$) $K_4$ $D_{1-3}$ °भ्राक्रांताः (for °वमताः). — $^{d}$) Dc किं स्विद् (for किं नु). $K_4$ °मतः परं (for °तरं ततः). — $^{e}$) $K_2$ $B_{2.3}$ वै धर्मम् (for वैधर्म्यम्). $K_4$ $D_{1-3}$ बह्वनर्थमयं लोके. — $^{f}$) $K_4$ [S]सुरसूदन; $D_{1-3}$ शत्रुसूदन (for बहुविस्तरम्).

25 $^{a}$) Dc दृश्यंते (for दृश्यन्ते). $K_4$ (orig.) $D_{2.3}$ अपि प्रत्यक्षं बहवो; $K_4$ (marg. *sec. m.*) $D_1$ क्लिश्यमानाश्च बहवो. — $^{b}$) Dc कृष्यंते (for क्लिश्यन्ते). — $^{c}$) $K_4$ $D_3$ महा-; $D_{1.2}$ महद् (for बहु-).

26 $^{b}$) $K_4$ $D_{1-3}$ सप्तर्षि- (for देवर्षि-). $K_2$ Dc -सेवितः; $K_4$ -संनिभ; $B_2$ -सेविते; $B_3$ $D_6$ -संनिभौ; $D_1$ -संनिभः; $D_2$ -संनिभाः (for -सेवित). — $^{c}$) $K_4$ $D_{1-3}$ आख्याहि त्वं. $K_4$ $D_1$ महा-; $D_{2.3}$ (marg. *sec. m.*) महद् (for मम). — $^{d}$) $D_1$ दुःखं (for सुखं).

27 $^{a}$) $K_4$ $D_{1-3}$ अष्टम्यां वा नवम्यां वा ($D_3$ marg. *sec. m.* °मे नवमे वापि). — $^{b}$) $K_4$ यः शाकं (by transp.); $B_{3.4}$ Dc शाकं यत्; $D_{1-3}$ यः पाकं.

28 $^{a}$) $K_4$ नान्य(marg. *sec. m.* नास्य)दिनानि गण्यंते; $D_{1.6}$ दिनानि नास्य ग°; $D_2$ नास्य दैन्यानि ग°. — $^{b}$) $D_1$ नैवमाहुर्; $D_3$ नैव हानिर्. — $^{d}$) $K_4$ $D_{1-3}$ स्वे गृहे परमं सुखं.

29 $^{b}$) $K_4$ Dc $D_{1-3}$ अन($K_4$ अप्य-; Dc अप्यु-; $D_1$ अन्य)-पाश्रित्य बांधवान्. — $^{c}$) $K_2$ $B_{2-4}$ Dc $Dn_{1}$. $n_3$ $D_6$ फलं शाक-मपि; $K_4$ $D_{1.2}$ फलमूल°. — $^{d}$) $K_4$ $D_{1-3}$ सतां (for गृहे).

30 $^{a}$) $K_4$ $D_{1-3}$ हि (for तु). $K_2$ $B_{2.3}$ भोक्तुं; $K_4$ $D_{1-3}$ भुक्तं (for भोक्तुः). — $^{d}$) $K_4$ $D_{1.3}$ विषकल्पं मतं ($D_2$ स्मृतं) सतां; Dc विषकल्पो मतः सतां; $D_1$ विषेण सदृशं सतां.

31 $^{ab}$) $K_2$ corrupt. $K_4$ $D_{1-3}$ या काकस्यमान इव यो

शिष्टान्यन्नानि यो भुङ्क्ते किं वै सुखतरं ततः ॥ ३२
अतो मृष्टतरं नान्यत्पूतं किंचिच्छतक्रतो ।
दत्त्वा यस्त्वतिथिभ्यो वै भुङ्क्ते तेनैव नित्यशः ॥ ३३
यावतो ह्यन्धसः पिण्डानश्नाति सततं द्विजः ।
तावतां गोसहस्राणां फलं प्राप्नोति दायकः ॥ ३४
यदेनो यौवनकृतं तत्सर्वं नश्यते ध्रुवम् ।
सदक्षिणस्य भुक्तस्य द्विजस्य तु करे गतम् ।
यद्वारि वारिणा सिञ्चंस्तद्व्येनस्तरते क्षणात् ॥ ३५
मार्कण्डेय उवाच ।
एताश्चान्याश्च वै बह्वीः कथयित्वा कथाः शुभाः ।
बकेन सह देवेन्द्र आपृच्छ्य त्रिदिवं गतः ॥ ३६

Colophon.

२

वैशंपायन उवाच ।

ततः पाण्डवाः पुनर्मार्कण्डेयमूचुः । कथितं ब्राह्मणमहाभाग्यम् । राजन्यमहाभाग्यमिदानीं शुश्रूषामह इति ॥३७॥

तानुवाच मार्कण्डेयो महर्षिः । श्रूयतामिदानीं राजन्यानां महाभाग्यमिति ॥३८॥ कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य निवृत्य रथस्थमेव राजानमौशीनरं शिबिं ददर्शाभिमुखम् ॥३९॥ तौ समेत्य परस्परेण यथावयः पूजां प्रयुज्य गुणसाम्येन परस्परेण तुल्यात्मानौ विदित्वान्योन्यस्य पन्थानं न ददतुः ॥४०॥ तत्र नारदः प्रादुरासीत् । किमिदं भवन्तौ परस्परस्य पन्थानमावृत्य तिष्ठत इति ॥४१॥ तावूचतुर्नारदम् । नैतद्भगवन् । पूर्वकर्मकर्त्रादिभिर्विशिष्टस्य पन्था उपदिश्यते समर्थाय वा । आवां च सख्यं परस्परेणोपगतौ । तच्चावधानतोऽत्युत्कृष्टमधरोत्तरं परिभ्रष्टम् ॥४२॥ नारदस्त्वेवमुक्तः श्लोकत्रयमपठत् ॥४३॥

क्रूरः कौरव्य मृदवे मृदुः क्रूरे च कौरव ।
साधुश्चासाधवे साधुः साधवे नाप्नुयात्कथम् ॥४४
कृतं शतगुणं कुर्यान्नास्ति देवेषु निर्णयः ।
औशीनरः साधुशीलो भवतो वै महीपतिः ॥ ४५

---

भुंक्तेन्नं परस्य तु.

32 $^{ab}$) $K_4$ $D_{1-3}$ देवतातिथिभृत्यानां पितॄणां च विशेषतः. — $^{c}$) $K_4$ $D_{1-3}$ शिष्टान्नानि च ($D_1$ तु) यो भुंक्ते. — $^{d}$) $D_1$ किं विशिष्टतरं ततः.

33 $^{a}$) $D_3$ [S]मृत° (for मृष्ट°). $D_2$ ततः परं सुखं नान्यत्. — $^{b}$) $K_4$ Dc $D_{1-3}$ किंचिदस्ति शतक्रतो. — $^{cd}$) $K_2$ $B_{3-4}$ Dc Dn $D_4$ $G_3$ [S]न्नं (for वै). $K_4$ $D_{1-3}$ देवतातिथिभृत्येभ्यो ($K_4$ °भृत्यानां) दत्वा भुंक्ते हि यः सदा ($D_1$ पुमान्).

34 $^{ab}$) $D_{2.\,3}$ om. $34^{ab}$. $K_4$ $D_1$ अदत्वा यस्तु विप्रेभ्यो भुंक्ते स्तेनः स एव तु ($D_1$ च); cf. Gītā 3. $12^{cd}$. — $^{d}$) $B_3$ मानवः (for दायकः).

35 $K_4$ $D_{1.\,2}$ om. $35^{cdef}$.

36 $^{ab}$) $D_2$ om. $36^{ab}$. $K_4$ बह्वीः सं- (for वै बह्वीः) — $^{c}$) $K_4$ Dc $D_{1.\,2}$ देवेश (for देवेन्द्र). — $^{d}$) $K_4$ $D_2$ आपृष्ट्वा. $B_2$ ययौ (for गतः).

Colophon. *Adhy. no.:* $Dn_{1}$. $n_2$ 192; $Dn_3$ $T_2$ 193; $G_4$ 194. — After the colophon, Dc ins. समाप्तं च महाभाग्यं. — After this adhy., $D_{1.\,2}$ read our adhy. 207.

२

37 $K_3$ पुनः सर्वे; $D_2$ पुनरेव (for पुनर्). $B_2$ om. मार्कण्डेयमूचुः । कथितं, and ins. श्रुतं before राजन्य°. $B_4$ transp. राजन्यमहाभाग्यं and इदानीं. Dc ब्राह्मणभाग्यं; Dn $D_4$ $G_3$ महाब्राह्मणभाग्यं; $D_1$ ब्राह्मणमाहात्म्यं. $K_4$ $D_{1.\,2}$ राजमाहात्म्यं (for राजन्यमहाभाग्यं). — $K_4$ $D_2$ चेदानीं (for इदानीं). $K_4$ $D_{1.\,2}$ वद; $B_{2.\,4}$ शुश्रूषाम; $D_3$ शुश्रूषयाम. $K_4$ $D_{1.\,2}$ om. इति.

38 $K_4$ $D_{1.\,2}$ om. महर्षिः. $K_3$ $B_2$ Dc $D_4$ $G_3$ राजन्य-; $K_4$ $D_{1.\,2}$ राज- (for राजन्यानां). $B_2$ -माहात्म्यम् (for महाभाग्यम्). $K_4$ $D_{1.\,2}$ om. इति.

39 $K_4$ $D_1$ वै राजा (for राजा). $K_4$ $B_2$ $D_{1.\,2}$ महर्षिम्. $D_1$ उपगम्य (for अभि°). $K_4$ Dc $D_{1.\,2}$ निवृत्तो (for निवृत्य). After निवृत्य, $K_4$ $B_2$ Dc $D_2$ ins. रथस्थः पथि. $B_4$ $G_3$ औशीनरिं.

40 $B_2$ om. (the first) परस्परेण; $K_4$ $D_{1.\,2}$ read for it परस्परं. $B_2$ om. यथा-. $K_4$ $D_{1.\,2}$ पुण्यसाम्यं परस्परं (for गुण° परस्परेण). $B_2$ om. (the second) परस्परेण. $K_4$ $D_{1.\,2}$ तुल्यमात्मनोर् ($D_1$ om. तुल्यम्). $D_2$ नान्योन्यं पंथानं ददतुः (for [अ]न्यो° — ददतुः).

41 After तत्र, $K_4$ $D_{1.\,2}$ ins. तयोरभिप्रायं विदित्वा महर्षिर्; and after प्रादुरासीत् they ins. स उवाच. — $K_{2.\,4}$ $D_{1.\,2}$ परस्परं (for °स्परस्य).

42 $Dc_1$ $D_1$ नारद (for °दम्). — $K_2$ चैतद्; $D_2$ वै तद् (for नैतद्). $K_4$ भवते; $D_1$ भवता; $D_2$ भवति (for भगवन्). — $K_2$ क आवयोरपि यात्विति पूर्वकर्मकर्त्रादिभिर्; $K_4$ $D_2$ कथयितव्यं सर्वथा धर्मप्रवादिभिर्; Dc पूर्वधर्मप्रचोदिभिर्: $D_1$ न कथयितव्यं सर्वदा धर्मवादिभिर् (for पूर्वकर्मकर्त्रादिभिर्). Dc पंथान (for पन्था). $K_4$ $D_{1.\,2}$ om. समर्थाय वा. Before समर्थाय वा, $K_2$ ins.:

अक्रोधाज्जयति क्रोधमसाधुं साधुना जयेत् ।
[ =(var.) 5. 39. $58^{ab}$.]

— $K_4$ $D_{1.\,2}$ read तु (for च), and संगतौ (for सख्यं); and om. उपगतौ. $K_2$ $G_3$ ह्युत्कृष्टम् (for ऽत्युत्कृ°). $K_4$ $D_{1.\,2}$ भवांस्त्विदानीं ब्रवीतु क आवयोरपयात्विति (for तच्चा° — °भ्रष्टम्).

43 $K_4$ $D_{1.\,2}$ तु श्लोकान् (for श्लोकत्रयम्).

44 For 44, $K_4$ $D_{1.\,2}$ subst.:

जयेत्कदर्यं दानेन सत्येनानृतवादिनम् ।
क्षमया क्रूरकर्माणमसाधुं साधुना जयेत् ॥ ४६

तदुभावेव भवन्तावुदारौ । य इदानीं भवद्भ्यामन्यतमः सोऽप-
सर्पतु । एतद्वै निदर्शनम् । इत्युक्त्वा तूष्णीं नारदो बभूव ॥४७॥
एतच्छ्रुत्वा तु कौरव्यः शिबिं प्रदक्षिणं कृत्वा पन्थानं दत्त्वा बहु-
कर्मभिः प्रशस्य प्रययौ ॥४८॥ तदेतद्राज्ञो महाभाग्यमप्युक्त-
वान्नारदः ॥४९॥

Colophon.

३

मार्कण्डेय उवाच ।

इदमन्यच्छ्रूयताम् । ययातिर्नाहुषो राजा राज्यस्थः पौरजनावृत
आसांचक्रे ॥५०॥ गुर्वर्थी ब्राह्मण उपेत्याब्रवीत् । भो राजन्गुर्वर्थं
भिक्षेयं समयादिति ॥५१॥ राजोवाच । ब्रवीतु भगवान्समय-
मिति ॥५२॥

ब्राह्मण उवाच ।

विद्वेषणं परमं जीवलोके
कुर्यान्नरः पार्थिव याच्यमानः ।
तं त्वां पृच्छामि कथं तु राज-
न्दद्याद्भवान्दयितं च मेऽद्य ॥ ५३

राजोवाच ।

न चानुकीर्तये दत्त्वा
अयाच्यमर्थं न च संशृणोमि ।
प्राप्यमर्थं च संश्रुत्य
तं चापि दत्त्वा सुसुखी भवामि ॥ ५४
ददामि ते रोहिणीनां सहस्रं
प्रियो हि मे ब्राह्मणो याचमानः ।
न मे मनः कुप्यति याचमाने
दत्तं न शोचामि कदाचिदर्थम् ॥ ५५

इत्युक्त्वा ब्राह्मणाय राजा गोसहस्रं ददौ । प्राप्तवांश्च गवां सहस्रं
ब्राह्मण इति ॥५६॥

Colophon.

४

वैशंपायन उवाच ।

भूय एव महाभाग्यं कथ्यतामित्यब्रवीत्पाण्डवः ॥ ५७ ॥
अथाचष्ट मार्कण्डेयः । महाराज वृषदर्भसेदुकनामानौ राजानौ
नीतिमार्गरतावस्त्रोपास्त्रकृतिनौ ॥५८॥ सेदुको वृषदर्भस्य बालस्यैव
उपांशुव्रतमभ्यजानात् । कुप्यमदेयं ब्राह्मणस्य ॥५९॥ अथ तं सेदुकं
ब्राह्मणः कश्चिद्वेदाध्ययनसंपन्न आशिषं दत्त्वा गुर्वर्थी भिक्षितवान् ।
अश्वसहस्रं मे भगवान्ददात्विति ॥६०॥ तं सेदुको ब्राह्मणमब्रवीत् ।
नास्ति संभवो गुर्वर्थं दातुमिति । स त्वं गच्छ वृषदर्भसकाशम् ।
राजा परमधर्मज्ञः । ब्राह्मण तं भिक्षस्व । स ते दास्यति । तस्यैतदु-
पांशुव्रतमिति ॥६१॥ अथ ब्राह्मणो वृषदर्भसकाशं गत्वा अश्वसहस्र-
मयाचत । स राजा तं कशेनाताडयत् । तं ब्राह्मणोऽब्रवीत् । किं
हंस्यनागसं मामिति ॥६२॥ एवमुक्त्वा तं शपन्तं राजाह । विप्र किं

---

क्रूरः क्रूराय कौरव्यो मृदवे कौरवो मृदुः ।
असाधवे ह्यसाधुश्च साधवे तत्समो मतः ।

45 $K_4$ $D_{1.2}$ om. 45. — $^{b}$) Dc वेदेषु ( for देवेषु ).

46 $^{ab}$)=(var.) 5. 39. 58$^{cd}$. — $^{a}$) $K_4$ $D_{1.2}$ दाना-त्कदर्यं जयति. — $^{cd}$) $K_4$ $D_{1.2}$ अक्रोधाज्जयति क्रोधमसाधुं साधुना शिबिः ( see insertion above ).

47 $K_4$ $D_{1.2}$ [ई]दृशौ (for [उ]दारौ). — $B_2$ om. इदानीं. $K_4$ $D_{1.2}$ शिबिरुदारोयं शिबेरहं मन्ये कौरव्यो यात्विति ( for य इदानीं – °सर्पतु ). — $K_4$ तत्संमतमिति ; $D_{1.2}$ एतत्संगतम् ( for एतद्वै निदर्शनम् ). — $K_4$ $D_{1.2}$ om. उक्त्वा, and read [ऽ]भवत् ( for बभूव ).

48 $K_4$ $D_{1.2}$ तच्छ्रुत्वा कौरव्यः ( om. तु ). $B_2$ शिवाय ; Dc $D_4$ शिबेः ; $G_3$ शिबिः ( for शिबिं ). $K_2$ Dc $D_4$ $G_3$ om. कृत्वा. $K_4$ कृत्य ( for कृत्वा ). $K_4$ $D_{1.2}$ om. बहुकर्मभिः प्रशस्य. $B_2$ ययौ ( for प्रययौ ).

49 $K_4$ $D_{1.2}$ तदेष विनयो राज्ञां भाग्यं ( $D_1$ महाभाग्यं ) च कथितामिति ( $K_4$ °मस्ति ).

Colophon. $K_2$ $B_{2-4}$ Dc $D_{4.6}$ $G_3$ om. the colophon. — *Adhy. no.:* Dn 193 ( $Dn_3$ 194 ) ; $D_1$ 215.

50 $K_4$ °जनपरिवृत ( for °जनावृत ).

51 $D_{1.2}$ तं गुर्वर्थीं ( for गुर्वर्थी ). — $K_4$ $D_2$ ins. भवंतं before गुर्वर्थं.

53 $^{c}$) $K_4$ $Dn_2$ तत्त्वां ( for तं त्वां ). $D_2$ स कथं नु ( for कथं तु ). — $^{d}$) $K_4$ दयितश्च ; $D_2$ °तश्चापि.

54 $^{a}$) Dn $D_1$ दद्य दत्वा ( for दत्त्वा ). — $^{b}$) $K_4$ न प्राप्यम् ( for अयाच्यम् ). — $^{d}$) $Dn_3$ दद्यां ( for दत्त्वा ).

55 $^{b}$) Dn याच्य° ( for याच° ) ! — $^{c}$) Dn $D_2$ याच्यमाने ! — $^{d}$) $D_2$ ददन् ( for दत्तं ).

Colophon. $K_4$ $D_{1.2}$ om. the colophon. — *Adhy. no.:* Dn 194 ( $Dn_3$ 195 ).

57 $K_4$ राजमहाभाग्यं ; $D_2$ महाराजभाग्यं ( for महाभाग्यं ).

58 $K_4$ $D_2$ *transp.* मार्कण्डेयः and महाराज. $D_2$ राज- ( for राजानौ ).

59 Dn $D_{1.2}$ अभ्यजानत्. — After कुप्यम्, $D_2$ ins. अश्वसहस्रं मे भवान्. $K_4$ कुप्येद्ददेच्च ( for कुप्यमदेयं ).

60 $K_4$ गुर्वर्थं ( *for* °र्थी ).

61 $K_4$ $D_{1-3}$ नास्ति मे संभवो ( for नास्ति संभवो ). $K_4$ $D_{1.3}$ ब्राह्मण्यस्तं भिक्षयस्व ( for ब्राह्मण तं भिक्षस्व ).

62 $K_4$ कशया तम् ; $D_3$ तं कशया ( for तं कशेन ). A few MSS. हिंसि ( for हंसि ). $K_4$ reads मां before हंसि.

यो न ददाति तुभ्यम् । उताहो स्विद्ब्राह्मण्यमेतत् ॥६३॥ ब्राह्मण उवाच । राजाधिराज तव समीपं सेदुकेन प्रेषितो भिक्षितुमागतः । तेनानुशिष्टेन मया त्वं भिक्षितोऽसि ॥६४॥ राजोवाच । पूर्वाह्णे ते दास्यामि । यो मेऽद्य बलिरागमिष्यति । यो हन्यते कशया कथं मोघं क्षेपणं तस्य स्यात् ॥६५॥ इत्युक्त्वा ब्राह्मणाय दैवसिकामुत्पत्तिं प्रादात् । अधिकस्याश्वसहस्रस्य मूल्यमेवादादिति ॥६६॥

Colophon.

५

मार्कण्डेय उवाच ।

देवानां कथा संजाता । महीतलं गत्वा महीपतिं शिबिमौशीनरं साध्वेनं शिबिं जिज्ञास्याम इति ॥६७॥ एवं भो इत्युक्त्वा अग्नीन्द्रावुपतिष्ठेताम् । अग्निः कपोतरूपेण । तमभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण ॥६८॥ अथ कपोतो राज्ञो दिव्यासनासीनस्योत्सङ्गं न्यपतत् ॥६९॥

अथ पुरोहितो राजानमब्रवीत् । प्राणरक्षणार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्यते । वसु ददातु । अन्तवान्पार्थिवोऽस्य निष्कृतिं कुर्यात् । घोरं कपोतस्य निपातमाहुः ॥७०॥

अथ कपोतो राजानमब्रवीत् । प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणरक्षार्थी प्रपद्ये । अङ्गैरङ्गानि प्राप्यार्थी मुनिर्भूत्वा प्राणांस्त्वां प्रपद्ये । स्वाध्यायेन कर्शितं ब्रह्मचारिणं मां विद्धि । तपसा दमेन युक्तमाचार्यस्याप्रतिकूलभाषिणम् । एवंयुक्तमपापं मां विद्धि ॥७१॥

गदामि वेदान्विचिनोमि छन्दः
सर्वे वेदा अक्षरशो मे अधीताः ।
न साधु दानं श्रोत्रियस्य प्रदानं
मा प्रादाः श्येनाय न कपोतोऽस्मि ॥ ७२

अथ श्येनो राजानमब्रवीत् ॥७३॥

पर्यायेण वसतिर्वा भवेषु
सर्गे जातः पूर्वमस्मात्कपोतात् ।
त्वमाददानोऽथ कपोतमेनं
मा त्वं राजन्विघ्नकर्ता भवेथाः ॥ ७४

राजोवाच ।

केनेदृशी जातु परा हि दृष्टा
वागुच्यमाना शकुनेन संस्कृता ।
यां वै कपोतो वदते यां च श्येन
उभौ विदित्वा कथमस्तु साधु ॥ ७५
नास्य वर्षं वर्षति वर्षकाले
नास्य बीजं रोहति काल उप्तम् ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
न त्राणं लभेत्त्राणमिच्छन्स काले ॥ ७६
जाता ह्रस्वा प्रजा प्रमीयते
सदा न वासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं यो ददाति शत्रवे
नास्य देवाः प्रतिगृह्णन्ति हव्यम् ॥ ७७
मोघमन्नं विन्दति चाप्रचेताः
स्वर्गाल्लोकाद्भ्रश्यति शीघ्रमेव ।
भीतं प्रपन्नं यो हि ददाति शत्रवे

---

63 After ददाति, Dn2 ins. स्वीयं धनं. After तुभ्यं, D2. 3 ins. तस्मै ददासि शापम्.

65 K4 D1–3 पूर्वाह्णे; Dn3 पूर्वार्धे (for पूर्वाह्णे). — D3 यं हन्यात् (for यो हन्यते). K4 तेष न (for तस्य). D2 तस्य न देयं स्यान्मोघं क्षेपणं ते यथा न स्यात्; D3 मोघं क्षेपणं ते यथा न स्यात् (for कथं–स्यात्).

66 K4 D2. 3 एवम् (for the first इति). K4 Dn3 दैवसिकीम्. — K4 अथो (for एव). K4 om. [अ]दादिति; D2. 3 om. एवादादिति.

Colophon. K4 Dn2. n3 D1–3 om. the colophon. — *Adhy. no.:* Dn1 195.

67 Before देवानां, D2. 3 ins. अथ.

68 K4 इंद्राग्नी (for अग्नीन्द्रौ). D2. 3 [उ]पातिष्ठेतां. — K4 Dn1. n3 D1. 3 अभि°; D2 अन्वं° (for अभ्य°). K4 D3 आमिषार्थी (for °र्थम्).

69 K4 D2. 3 देव्या सहासीनस्य; D1 दिव्यसेनस्य (for दिव्यासनासीनस्य). K4 D2. 3 [उ]त्संगे.

70 After अब्रवीत्, K4 D1–3 ins.: निंदितं यस्याभिपतते कपोतकः स भवान् वेश्म वान्यद्वा. — K4 reads प्राणरक्षणार्थं — प्राणार्थी प्रपद्यते । after राजानमब्रवीत् (in 71). D3 अर्थं चाशु (for अन्तवान्).

71 K4 °रक्षणाथ (for °रक्षार्थं). D2. 3 भयभीतो (for भीतो), and प्राप्यायुरर्थी (for प्राप्यार्थी). — D2. 3 दमेन च (for दमेन). — K4 एवमुक्तम् (for एवंयुक्तम्).

72 *b*) K4 हि (for मे). — *c*) K4 D2. 3 श्रोत्रिय- (for श्रोत्रियस्य). — *d*) K4 D2. 3 मां मा (*or* मा मां) (for मा).

74 *b*) K4 D2. 3 स्वर्गे (for सर्गे). D2. 3 कपोतः (for °तात्). — *c*) K4 D2. 3 स्वम् (for त्वम्).

75 *a*) D2. 3 पुरो (for परा). — *b*) K4 D2. 3 कुशलेन (for शकुनेन). — *c*) K4 D3 om. वै. — *d*) K4 कथयानुशास्तां; D2. 3 कथयामि गाथां.

76 =(var.) 5. 12. 19. — K4 om. (hapl.) 76*d*–77*c*. — *d*) D3 न त्रातारं (for न त्राणं). Dn1 D2. 3 लभते (for लभेत्). D2 काले; D3 त्राणकाले (for स काले).

77 =(var.) 5. 12. 21. — *a*) D3 ह्रस्वरूपा (for ह्रस्वा), and प्रमीते (for प्रमीयते). — *b*) Dn1 न च वासं; D2 [अ]नुबाधां (for न वासं).

78 =(var.) 5. 12. 20. — *a*) Dn2 विंदते. Dn2 D2. 3 om. च.

सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ ७८
उक्षाणं पक्त्वा सह ओदनेन
अस्मात्कपोतात्प्रति ते नयन्तु ।
यस्मिन्देशे रमसेऽतीव श्येन
तत्र मांसं शिबयस्ते वहन्तु ॥ ७९
श्येन उवाच ।
नोक्षाणो राजन्प्रार्थयेयं न चान्य-
दस्मान्मांसमधिकं वा कपोतात् ।
देवैर्दत्तः सोऽद्य ममैष भक्ष-
स्तन्मे ददस्व शकुनानामभावात् ॥ ८०
राजोवाच ।
उक्षाणं वेह तमनूनं नयन्तु
ते पश्यन्तु पुरुषा ममैव ।
भयाहितस्य दायं ममान्तिकात्त्वां
प्रत्याम्नायं तु त्वं ह्येनं मा हिंसीः ॥ ८१
त्यजे प्राणान्नैव दद्यां कपोतं
सौम्यो ह्ययं किं न जानासि श्येन ।
यथा क्लेशं मा कुरुष्वेह सौम्य
नाहं कपोतमर्पयिष्ये कथंचित् ॥ ८२
यथा मां वै साधुवादैः प्रसन्नाः
प्रशंसेयुः शिबयः कर्मणा तु ।
यथा श्येन प्रियमेव कुर्यां
प्रशाधि मां यद्वदेस्तत्करोमि ॥ ८३
श्येन उवाच । ऊरोर्दक्षिणादुत्कृत्य स्वपिशितं तावद्राजन्याव-न्मांसं कपोतेन समम्। तथा तस्मात्साधु त्रातः कपोतः। प्रशंसेयुश्च शिबयः। कृतं च प्रियं स्यान्ममेति ॥८४॥
अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलयाधारयत्। गुरुतर एव कपोत आसीत् ॥८५॥ पुनरप्युच्चकर्त । गुरुतर एव कपोतः॥८६॥ एवं सर्वं समधिगत्य शरीरं तुलायामारोपयामास। तत्तथापि गुरुतर एव कपोत आसीत् ॥८७॥ अथ राजा स्वयमेव तुलामारुरोह। न च व्यलीकमासीद्राज्ञः ॥८८॥ एतद्वृत्तान्तं दृष्ट्वा त्रात इत्युक्त्वा प्रालीयत श्येनः ॥८९॥ अथ राजा अब्रवीत् ॥९०॥
कपोतं विद्युः शिबयस्त्वां कपोत
पृच्छामि ते शकुने को नु श्येनः ।
नानीश्वर ईदृशं जातु कुर्या-
देतं प्रश्नं भगवन्मे विचक्ष्व ॥ ९१
कपोत उवाच ।
वैश्वानरोऽहं ज्वलनो धूमकेतु-
रथैव श्येनो वज्रहस्तः शचीपतिः ।
साधु ज्ञातुं त्वामृषभं सौरथेय नौ
जिज्ञासया त्वत्सकाशं प्रपन्नौ ॥ ९२
यामेतां पेशीं मम निष्क्रयाय
प्रादाद्भवानसिनोत्कृत्य राजन् ।
एतद्वो लक्ष्म शिवं करोमि
हिरण्यवर्णं रुचिरं पुण्यगन्धम् ॥ ९३
एतासां प्रजानां पालयिता यशस्वी
सुरर्षीणामथ संमतो भृशम् ।
एतस्मात्पार्श्वात्पुरुषो जनिष्यति
कपोतरोमेति च तस्य नाम ॥ ९४
कपोतरोमाणं शिबिनौद्भिदं पुत्रं प्राप्स्यसि नृप । वृषसंहननं

---

79 [a]) $K_4$ पक्वं (for पक्त्वा). — [b]) $D_1$ अस्मत्- (for अस्मात्). — [c]) $D_1$ हि (for ऽतीव). — [d]) $K_4$ $D_{2.3}$ वयसस्ते (for शिबयस्ते).

80 [a]) $D_2$ द्वादश प्रार्थये (for प्रार्थयेयं). — [b]) $K_4$ $Dn_1$ $D_{1-3}$ om. वा. — [d]) $K_4$ कुशलं नाभावात्; $D_{2.3}$ नान्यशकुनानभावात् (for शकुनानाम°).

81 [a]) $K_4$ $D_{1-3}$ वै हतम् (for वेह तम्). — [b]) $K_4$ ते पचंतु पुरुषा ममैव वाचा; $D_2$ ते पुरुषा ममैव वचनात्; $D_3$ ते पुरुषा ममैव च. — [c]) $K_4$ याहि त्वमादाय; $D_1$ याहि त्वस्य दायं; $D_{2.3}$ याहि तदादाय (for भयाहितस्य दायं). — [d]) $Dn_2$ प्रापयंतु (for प्रत्याम्नायं तु). $K_4$ $D_{1-3}$ त्वं ह्येनं मा हिंसीः पुरुषं ($D_{2.3}$ सत्पुरुषं) कपोतं.

82 [b]) $K_4$ $Dn_{1.n2}$ जानामि; $D_2$ जहासि. — [c]) $K_4$ $D_{2.3}$ वृथा (for यथा).

83 [a]) $Dn_1$ हि (for मां). $D_{2.3}$ ते (for वै). $K_4$ $Dn_2$ $D_3$ प्रपन्नाः. — [b]) $D_3$ (by corr.) [अ]थ (for तु). — [c]) $K_4$ $D_{1.2}$ ins. ते after यथा. — [d]) $D_{2.3}$ यावदेतत्करोमि.

84 $Dn_2$ [अ]स्मात् (for तस्मात्). $Dn_1$ जातः; $Dn_2$ मात्रः (for त्रातः).

85 $Dn_2$ $D_3$ om. स.

87 $Dn_2$ एवं सर्वं मांसमधिकृत्य; $D_{2.3}$ एवं सर्वमांसमुत्कृत्य. $D_{2.3}$ शरीरात् (for शरीरं). — $K_4$ $D_{2.3}$ तथा (for तत्तथापि).

89 $D_{2.3}$ तात (for त्रात). $K_4$ प्रातीयत; $D_3$ प्रलीयत.

91 [a]) $D_{2.3}$ कथं विद्युः (for विद्युः). — [b]) $D_3$ क (for को). — [cd]) $D_{2.3}$ इतीदृशं (for ईदृशं), and एतत् (for एतं).

92 [c]) $K_4$ साधुं. $D_2$ ज्ञातं त्वम्. $K_4$ $D_2$ ऋषयः (for ऋषभं). $K_4$ सौरथानां; $K_{4m}$ $D_{2.3}$ सौरभेयानां (for सौरथेय नौ).

93 [a]) $K_4$ इमां (for एतां), and निःक्रयार्थं (for निष्क्रयाय). — [c]) $D_{2.3}$ पश्य (for लक्ष्म). — [d]) $K_4$ $D_3$ om. -वर्ण. $D_2$ °रूपं (for °वर्णं).

94 [a]) $K_4$ $D_{2.3}$ आसां (for एतासां). — [b]) $D_1$ सुरर्षभाणाम्. $K_4$ $D_{2.3}$ संभृतो (for °मतो). — [c]) $K_4$ $D_3$ जनिष्यते.

95 $K_4$ $D_{1.2}$ शिबिमौद्भिदं. $K_4$ $D_{2.3}$ वृषं महारथं (for

यशोदीप्यमानं द्रष्टासि शूरवृषभं सौरथानाम् ॥९५॥

Colophon.

६

वैशंपायन उवाच ।

भूय एव महाभाग्यं कथ्यताम् । इत्यब्रवीत्पाण्डवो मार्कण्डेयम् ॥९६॥

अथाचष्ट मार्कण्डेयः । अष्टकस्य वैश्वामित्रेरश्वमेधे सर्वे राजानः प्रागच्छन् । भ्रातरश्चास्य प्रतर्दनो वसुमनाः शिबिरौशीनर इति ॥९७॥ स च समाप्तयज्ञो भ्रातृभिः सह रथेन प्रायात् । ते च नारदमागच्छन्तमभिवाद्यारोहतु भवान्रथमित्यब्रुवन् ॥९८॥ तांस्तथेत्युक्त्वा रथमारुरोह ॥९९॥

अथ तेषामेकः सुरर्षिं नारदमब्रवीत् । प्रसाद्य भगवन्तं किंचिदिच्छेयं प्रष्टुमिति ॥१००॥ पृच्छ । इत्यब्रवीदृषिः ॥१०१॥

सोऽब्रवीत् । आयुष्मन्तः सर्वगुणप्रमुदिताः । अथायुष्मन्तं स्वर्गस्थानं चतुर्भिर्यातव्यं स्यात्कोऽवतरेत् ॥१०२॥ अयमष्टकोऽवतरेत् । इत्यब्रवीदृषिः ॥१०३॥ किं कारणम् । इत्यपृच्छत् ॥१०४॥ अथाचष्ट । अष्टकस्य गृहे मया उषितम् । स मां रथेनानुप्रावहत् ॥१०५॥ अथापश्यमनेकानि गोसहस्राणि वर्णशो विविक्तानि ॥१०६॥ तमहमपृच्छम् । कस्येमा गाव इति ॥१०७॥ सोऽब्रवीत् । मया निसृष्टा इत्येताः ॥१०८॥ तेनैव स्वयं श्लाघति कथितेन । एषोऽवतरेत् ॥१०९॥

अथ त्रिभिर्यातव्यम् । सांप्रतं कोऽवतरेत् ॥११०॥ प्रतर्दनः । इत्यब्रवीदृषिः ॥१११॥ तत्र किं कारणम् ॥११२॥ प्रतर्दनस्यापि गृहे मयोषितम् । स मां रथेनानुप्रावहत् ॥११३॥ अथैनं ब्राह्मणो भिक्षेत । अश्वं मे ददातु भवान् ॥११४॥ निवृत्तो दास्यामि । इत्यब्रवीद्ब्राह्मणम् ॥११५॥ त्वरितमेव दीयताम् । इत्यब्रवीद्ब्राह्मणः ॥११६॥ त्वरितमेव ॥११७॥ स ब्राह्मणस्यैवमुक्त्वा दक्षिणं पार्श्वमददत् ॥११८॥ अथान्योऽप्यश्वार्थी ब्राह्मण आगच्छत् ॥११९॥ तथैव चैनमुक्त्वा वामपार्ष्णिमभ्यदात् ॥१२०॥ अथ प्रायात् । पुनरपि चान्योऽप्यश्वार्थी ब्राह्मण आगच्छत् । त्वरितोऽथ तस्मै अपनह्य वामं धुर्यमददत् ॥१२१॥ अथ प्रयात् । पुनरन्य आगच्छदश्वार्थी ब्राह्मणः ॥ तमब्रवीत् । अतियातो दास्यामि ॥१२२॥ त्वरितमेव मे दीयताम् । इत्यब्रवीद्ब्राह्मणः ॥१२३॥ तस्मै दत्त्वाश्वं रथधुरं गृह्णता व्याहृतम् । ब्राह्मणानां सांप्रतं नास्ति किंचिदिति ॥१२४॥ य एष ददाति चासूयति च तेन व्याहृतेन तथावतरेत् ॥१२५॥

अथ द्वाभ्यां यातव्यमिति कोऽवतरेत् ॥१२६॥ वसुमना अवतरेत् । इत्यब्रवीदृषिः ॥१२७॥ किं कारणम् । इत्यपृच्छत् ॥१२८॥ अथाचष्ट नारदः । अहं परिभ्रमन्वसुमनसो गृहमुपस्थितः । स्वस्तिवचनमासीत् । पुष्परथस्य प्रयोजनेन तमहमन्वगच्छम् । स्वस्तिवाचितेषु ब्राह्मणेषु रथो ब्राह्मणानां दर्शितः । तमहं रथं प्राशंसम् ॥१२९॥ अथ राजाब्रवीत् । भगवता रथः प्रशस्तः । एष भगवतो रथ इति ॥१३०॥ अथ कदाचित्पुनरप्यहमुपस्थितः । पुनरेव च रथप्रयोजनमासीत् ॥१३१॥ सम्यगयमेष भगवतः । इत्येवं राजाब्रवीदिति ॥१३२॥ पुनरेव तृतीयं स्वस्तिवाचनं समभावयम् ॥१३३॥ अथ

---

नृप । वृषसंहननं ).

Colophon. *Adhy. no.*: Dn 196 ( $Dn_2$ 195 ) ; $D_1$ 216.

97 $D_{2.3}$ अथाचष्टे मा°. — $K_4$ $Dn_1$ $D_{2.3}$ आगच्छन् (for प्राग° ).

98 $K_4$ $D_{2.3}$ ते (for ते च ). $K_4$ $D_{2.3}$ ins. अपश्यन् after आगच्छन्तम्.

99 $K_4$ om. तांस्. $D_{2.3}$ तथैवेत्युक्त्वा.

100 $K_4$ $D_{2.3}$ एकतरो ऋर्षिं ( $K_4$ marg. औशीनरो [gloss ?] ) (for एकः सुरर्षिं ).

102 $K_4$ $D_{1-3}$ सर्वे एव (for सर्व- ). — $K_4$ अथायुष्मतां. $K_4$ $D_{1-3}$ गुणविशेषात्; $Dn_1$ गणाविशेषं (for स्वर्गस्थानं ). $K_4$m यातं स्यात्; $D_{2.3}$ यातव्ये (for यातव्यं स्यात् ).

105 $D_2$ om. from मया (in 105 ) up to कोऽवतरेत् (in 110 ).

108 After निसृष्टा, $K_4$ $D_{1.3}$ ins. गावः.

112 $K_4$ $D_{2.3}$ अत्र (for तत्र ).

113 Dn अनुप्रवहत्; $D_1$ अनुवाहत्.

114 $D_2$ भिक्षितः; $D_3$ [ऽ]पि भिक्षत (for भिक्षेत ).

118 $D_{2.3}$ पार्ष्णिम् (for पार्श्वम् ). $K_4$ $D_{2.3}$ अददात् (for अददत् ).

120 $K_4$ अस्य ददौ; $D_2$ अददात्; $D_3$ अभ्यददात् (for अभ्यदात् ).

121 $D_2$ om. (? hapl.) 121. $K_4$ $D_3$ धुर्यमददात् (for °ददत् ).

122 $K_4$ इति प्रतिप्रयामि (for अतियातो दास्यामि ).

123 $K_4$ $D_{2.3}$ om. मे.

124 $K_4$ $D_{2.3}$ तमस्मै (for तस्मै ). $K_4$ $D_3$ स्वयं ( $D_3$ स्वयं चं ) धुरं (for रथधुरं ).

125 $K_4$ यदेष; $D_3$ य एवं (for य एष ). $D_{2.3}$ [अ]नेन (for तेन ).

126 $K_4$ $D_{2.3}$ om. इति.

129 $K_4$ $Dn_{1.2}$ $D_{1-3}$ स्वस्तिवाचनम् (for °वचनम् ). $D_{2.3}$ (*sup. lin. sec. m.* as above) स ह मान्वगच्छत् (for तमहमन्व° ). — $K_4$ स्वस्तिवाचनेषु (for °वाचितेषु ). — $K_4$ समभावयं (for प्राशंसम् ).

130 $K_4$ $D_{2.3}$ अथ स (for अथ ). $K_4$ $D_{2.3}$ भगवन् (for भगवता ), and भवतो (for भगवतो ).

131 $K_4$ $D_{2.3}$ पुनश्चरंस्तमहम् (for पुनरप्यहम् ).

132 $K_4$ $D_{2.3}$ तथा चैनं प्र( $D_2$ प्रा )शंसम् (for सम्यगयम् ) $K_4$ $D_{2.3}$ om. (the *second*) इति.

134 $K_4$ $D_{2.3}$ अहो (for अथो ).

राजा ब्राह्मणानां दर्शयन्मामभिप्रेक्ष्याब्रवीत् । अथो भगवता पुष्परथस्य स्वस्तिवाचनानि सुष्टु संभावितानि ॥१३४॥ एतेन द्रोहवचनेनावतरेत् ॥१३५॥

अथैकेन यानव्यं स्यात्कोऽवतरेत् ॥१३६॥ पुनर्नारद आह । शिबिर्यायात् । अहमवतरेयम् ॥१३७॥ अत्र किं कारणम् । इत्यब्रवीत् ॥१३८॥ असावहं शिबिना समो नास्मि ॥१३९॥ यतो ब्राह्मणः कश्चिदेनमब्रवीत् । शिबे अन्नार्थ्यस्मीति ॥१४०॥ तमब्रवीच्छिबिः । किं क्रियताम् । आज्ञापयतु भवानिति ॥१४१॥ अथैनं ब्राह्मणोऽब्रवीत् । य एष ते पुत्रो बृहद्गर्भो नाम एष प्रमातव्य इति । तमेनं संस्कुरु । अन्नं चोपपादय । ततोऽहं प्रतीक्ष्य इति ॥१४२॥ ततः पुत्रं प्रमाथ्य संस्कृत्य विधिना साधयित्वा पात्र्यामर्पयित्वा शिरसा प्रतिगृह्य ब्राह्मणमसृगयत् ॥१४३॥ अथास्य मृगयमाणस्य कश्चिदाचष्ट । एष ते ब्राह्मणो नगरं प्रविश्य दहति ते गृहं कोशागारमायुधागारं स्त्र्यगारमश्वशालां हस्तिशालां च क्रुद्ध इति ॥१४४॥ अथ शिबिस्तथैवाविकृतमुखवर्णो नगरं प्रविश्य ब्राह्मणं तमब्रवीत् । सिद्धं भगवन्नन्नमिति ॥१४५॥ ब्राह्मणो न किंचिद्व्याजहार । विस्मयादधोमुख आसीत् ॥१४६॥ ततः प्रासादयद्ब्राह्मणम् । भगवन्भुज्यतामिति ॥१४७॥ मुहूर्तादुद्वीक्ष्य शिबिमब्रवीत् । त्वमेवैतदशानेति ॥१४८॥ तत्राह । तथा । इति ॥१४९॥ शिबिस्तथैवाविमना मद्दित्वा कपालमभ्युद्धार्यं भोक्तुमैच्छत् ॥१५०॥ अथास्य ब्राह्मणो हस्तमगृह्णात् । अब्रवीच्चैनम् । जितक्रोधोऽसि । न ते किंचिदपरित्याज्यं ब्राह्मणार्थे ॥१५१॥ ब्राह्मणोऽपि तं महाभागं सभाजयत् ॥१५२॥ स ह्युद्वीक्षमाणः पुत्रमपश्यदग्रे तिष्ठन्तं देवकुमारमिव पुण्यगन्धान्वितमलंकृतम् ॥१५३॥ सर्वं च तमर्थं विधाय ब्राह्मणोऽन्तरधीयत ॥१५४॥ तस्य राजर्षेर्विधाता तेनैव वेषेण परीक्षार्थमागत इति ॥१५५॥ तस्मिन्नन्तर्हिते अमात्या राजानमूचुः । किं प्रेप्सुना भवता इदमेवं जानता कृतमिति ॥१५६॥

शिबिरुवाच ।

नैवाहमेतद्यशसे ददानि
न चार्थहेतोर्न च भोगतृष्णया ।
पापैरनासेवित एष मार्ग
इत्येवमेतत्सकलं करोमि ॥ १५७
सद्भिः सदाध्यासितं तु प्रशस्तं
तस्मात्प्रशस्तं श्रयते मतिर्मे ।
एतन्महाभाग्यवरं शिबेस्तु
तस्मादहं वेद यथावदेतत् ॥ १५८

---

135 K4 D2. 3 [ए]षोवतरेत् (for [अ]व°).

139 D2 om. from असावहं (in 139) up to अब्रवीत् (in 140). K4 D3 असावाख्यात् (for असावहं), and तुल्यो (for समो).

140 K3 B2. 3 Dc D6 G3 तं शिबिं ब्राह्मणोभ्यागच्छत् । स चैनमब्रवीत् (for यतो — °ब्रवीत्). — K4 D1-3 शिबे अन्नार्थ्यहमिति.

141 Dc भगवन् (for भवान्).

142 K3 अथ वा (for अथैनं). Dc om. अथैनं — °ब्रवीत्. B3 D4 om. [ए]नं. — B3 Dc D1-3 एष (for य एष). K3 om. पुत्रो. K4 D1-3 वृषदर्भो (for बृहद्गर्भो), and एष संक्रियतां (for एष प्रमातव्य इति). — K3 तं भवने (for तमेनं). K4 D1-3 त्वं चैनं संज्ञापय (for त्वमेनं संस्कुरु), and पात्र्यां स्थापय (for अन्नं चोपपादय). — Dc तत्र (for ततो).

143 K4 D1-3 तथा पुत्रं संज्ञप्य (for ततः पुत्रं प्रमाथ्य). K4 D1-3 संस्कृत्य चाविमनाः; D4 संस्कृतिविधिना. K4 D1-3 om. साधयित्वा. K4 D1-3 वर्धयित्वा (for अर्प°). K4 गृह्य; D2. 3 प्रगृह्य (for प्रति°). K4 D1-3 बहिर्मृगयते (K4 °ति) (for ब्राह्मणमसृ°).

144 K4 D1-3 अथास्याचष्ट मंत्री मृगयमाणस्य (for अथास्य — °चष्ट). — D1. 2 एष स (for एष ते). K4 D1-3 कोष्ठागारम् (for कोशा°). B3 Dc D4. 6 कोषागारायुधागारांश्च क्रुद्ध (for कोशा° — च क्रुद्ध). D3 om. from आयुधा° up to नगरं (in 145). K4 D3 यंत्रागारम् (for स्त्र्यगारम्). D1 स्त्र्यगारं कोशमायुधागारं यंत्रागारम् (for आयुधागारं स्त्र्यगारम्).

145 K4 D2. 3 अन्नं भगवन्निति (by transp.).

146 For 146, K4 D1-3 subst.: एवमुक्तो ब्राह्मणो न किंचिद्व्याहरत् । किंचिदवाङ्मुख आसीत्.

147 K3 B3 Dn1. n3 D4 प्रसादयद्; K4 Dn3 D2. 3 प्रसाद्य; D1 प्रणतः (for प्रासादयद्).

148 Before मुहूर्ताद्, K4 D1-3 ins. स. D1-3 उदीक्ष्य (for उद्वीक्ष्य). — After अब्रवीत्, K4 D1-3 ins.: नाहमतिथेरदत्वा भुनज्मि । ततः शिबिरन्विषत् । नातिथिं प्राप्तवान् । आगत्य चाह । भगवन्नातिथिर्लभ्यते । ततस्तमुवाच ब्राह्मणः ।; and read त्वमेवातिथिर्भूत्वा भुंक्ष्वेति (for त्वमेवैतदशानेति).

150 For 150, K4 D1-3 subst.: अथ शिबिस्तथैवाविमना अर्चयित्वा तमै(D1° दै)च्छद्भोक्तुं.

151 K4 D1. 2 om. (hapl.) from हस्तम° up to ब्राह्मणो (in 152).

155 K4 D1-3 om. 155.

156 K4 D1-3 पश्यता (for प्रेप्सुना). K4 विजातीयकं; D1 जानीयं; D2. 3 जातीयकं (for जानता).

157 [a]) K4 Dc1 D1-3 ददामि (for °नि). — [bc]) K4 D1-3 न भूतिमिच्छन्शिबयो न लोभात् । शिष्टैः सदा सेवित एष मार्ग (D1 °तो मार्ग एष).

158 For 158, K4 D1-3 subst.:

तस्मात्प्रधानमाद्रियते मतिर्मे ।

एतच्छिबेर्महाभाग्यं । तस्मादहमवतरेयं । शिबिर्यायादिति ।

[ Before एतच्च, K4 ins. तस्मिन्नंतर्हिते पुत्रः प्रादुरासीत्, and om. अहम् before अवतरेयं. ]

Colophon.

[ Correction ! In the footnote on p. 677 ( marked by ☞ ) $K_1$ is wrongly included among the MSS. which have this insertion. This mistake has been rectified in the list given above ( p. 1067 f. ). ]

## 22

$K_2$ B Dc Dn $D_{3-6}$ ins. after adhy. 221 ( for $G_{2.4}$ see below ) :

युधिष्ठिर उवाच ।
भगवञ्श्रोतुमिच्छामि नामान्यस्य महात्मनः ।
त्रिषु लोकेषु यान्यस्य विख्यातानि द्विजोत्तम ।
वैशंपायन उवाच ।
इत्युक्तः पाण्डवेयेन महात्मा ऋषिसंनिधौ ।
उवाच भगवांस्तत्र मार्कण्डेयो महातपाः ।
मार्कण्डेय उवाच ।
आग्नेयश्चैव स्कन्दश्च दीप्तकीर्तिरनामयः ।
मयूरकेतुर्धर्मात्मा भूतेशो महिषार्दनः ।
कामजित्कामदः कान्तः सत्यवाग्भुवनेश्वरः ।
शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः ।
अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा ।
दीप्तशक्तिः प्रशान्तात्मा भद्रकृत्कूटमोहनः ।
षष्ठीप्रियश्च धर्मात्मा पवित्रो मातृवत्सलः ।
कन्याभर्ता विभक्तश्च स्वाहेयो रेवतीसुतः ।
प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ।
सुव्रतो ललितश्चैव बालक्रीडनकप्रियः ।
खचारी ब्रह्मचारी च शूरः शरवणोद्भवः ।
विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा ।
वासुदेवप्रियश्चैव प्रियः प्रियकृदेव तु ।
नामान्येतानि दिव्यानि कार्त्तिकेयस्य यः पठेत् ।
स्वर्गं कीर्तिं धनं चैव स लभेन्नात्र संशयः ।
मार्कण्डेय उवाच ।
स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं
शक्त्या गुहं नामभिरप्रमेयम् ।
षडाननं शक्तिधरं सुवीरं
निबोध चैतानि कुरुप्रवीर ।
ब्रह्मण्यो वै ब्रह्मजो ब्रह्मविच्च
ब्रह्मेशयो ब्रह्मवतां वरिष्ठः ।
ब्रह्मप्रियो ब्राह्मणसव्रती त्वं
ब्रह्मज्ञो वै ब्राह्मणानां च नेता ।
स्वाहा स्वधा त्वं परमं पवित्रं
मन्त्रस्तुतस्त्वं प्रथितः षडर्चिः ।
संवत्सरस्त्वमृतवश्च षड् वै
मासार्धमासावयनं दिशश्च ।
त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः
सहस्रवक्त्रोऽसि सहस्रबाहुः ।
त्वं लोकपालः परमं हविश्च
त्वं भावनः सर्वसुरासुराणाम् ।
त्वमेव सेनाधिपतिः प्रचण्डः
प्रभुर्विभुश्चाप्यथ शत्रुजेता ।
सहस्रभूस्त्वं धरणी त्वमेव
सहस्रतुष्टिश्च सहस्रभुक्च ।
सहस्रशीर्षस्त्वमनन्तरूपः
सहस्रपास्त्वं गुह शक्तिधारी ।
गङ्गासुतस्त्वं स्वमतेन देव
स्वाहामहीकृत्तिकानां तथैव ।

---

Colophon. — *Adhy. no.:* $B_2$ 198 ; Dn 197 ( $Dn_2$ 196 ) ; $D_1$ 217.

## 22

( L. 1 ) $B_{1.3}$ ( m as above ). $_4$ Dc च ( for [अ]स्य ). — ( L. 4 ) $D_3$ महामनाः ( *sup. lin.* °तपाः as above ). — ( L. 7 ) $B_4$ कामः ( for कान्तः ). Dc सत्यवान् ( for °वाग् ). — ( L. 8 ) Dc $D_4$ चंद्रो ( for चण्डो ). — ( L. 10 ) Dc $D_3$ तत्र कुक्कुटमोहनः ( for the posterior half ). — ( L. 11 ) $B_4$ सर्वात्मा ( for धर्मात्मा ). — ( L. 12 ) $B_1$ °कर्ता ; $B_4$ Dc °हर्ता ( for °भर्ता ). — ( L. 13 ) $D_5$ नयो ( for नेता ), and °दुस्तरः ( for °दुश्चरः ). — $D_5$ om. ( hapl. ) from the posterior half of line 14 up to the prior half of line 17. — ( L. 15 ) Dc शूरबैलो भुवः ( $Dc_2$ बभ्रुः ) ( for शरवणोद्भवः ). $D_3$ सुव्रतो ललितश्चैव बालचारी खशोद्भवः. — $B_1$ om. ( hapl. ) from the posterior half of line 16 up to the prior half of line 17. — ( L. 17 ) $K_2$ B Dc $D_{4-6}$ प्रियः प्रियक एव च ( $D_{4-6}$ तु ). — ( L. 19 ) $B_4$ $D_5$ लभते ( for स लभेन् ). — After line 19, $B_3$ ins. आंगिरसे ( colophon ? ). — ( L. 20 ) $B_{3.4}$ Dc $D_{3.5}$ भक्त्या ( for शक्त्या ). Dc सादरम् ( for नामभिर् ). — ( L. 24 ) $K_2$ $B_4$ $D_6$ वै ब्रह्मतेजो ; $B_1$ ब्रह्मयोनिर् ( for वै ब्रह्मजो ). $B_2$ $Dc_2$ ब्रह्मवित्तं ; $B_{3.4}$ °विश्वं ; $Dc_1$ $D_{3.5}$ °वित्त्वं. — ( L. 26 ) $B_1$ °सर्वमंत्री ; Dc °सर्वतीर्थं ( for °सव्रती त्वं ). — ( L. 29 ) Dc मंत्रस्तुतिस्त्वं. — ( L. 30 ) $B_2$ षडेव ( for च षड् वै ). — ( L. 31 ) $K_2$ $B_{2.4}$ $Dc_2$ $Dn_{2.n3}$ $D_{3-6}$ °मासावयने ; $B_3$ °मासा विदिशो. — ( L. 38 ) $B_1$ Dc °पास्त्वं ; $B_{3.4}$ $D_{3.4}$ °सूस्त्वं ( for °भूस्त्वं ). — ( L. 39 ) $B_4$ °वृष्टिश्च ( for °तुष्टिश्च ). $K_2$ °संभुक् ; Dc °भुक्त्वं ( for °भुक्च ). — ( L. 41 ) $K_2$ °पादं ( for °पास्त्वं ). $Dn_1$ गुरु° ( for गुह° ). — ( L. 43 )

त्वं क्रीडसे षण्मुख कुक्कुटेन
यथेष्टनानाविधकामरूपी ।
दीक्षासि सोमो मरुतः सदैव
धर्मोऽसि वायुरचलेन्द्र इन्द्रः ।
सनातनानामपि शाश्वतस्त्वं
प्रभुः प्रभूणामपि चोग्रधन्वा ।
ऋतस्य कर्ता दितिजान्तकस्त्वं
जेता रिपूणां प्रवरः सुराणाम् ।
सूक्ष्मं तपस्तत्परमं त्वमेव
परावरज्ञोऽसि परावरस्त्वम् ।
धर्मस्य कामस्य परस्य चैव
त्वत्तेजसा कृत्स्नमिदं महात्मन् ।
व्याप्तं जगत्सर्वसुरप्रवीर
शक्त्या मया संस्तुत लोकनाथ ।
नमोऽस्तु ते द्वादशनेत्रबाहो
अतः परं वेद्मि गतिं न तेऽहम् ।
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः ।
श्रावयेद्ब्राह्मणेभ्यो यः शृणुयाद्वा द्विजेरितम् ।
धनमायुर्यशो दीप्तं पुत्राञ्शत्रुजयं तथा ।
स पुष्टितुष्टी संप्राप्य स्कन्दसालोक्यमाप्नुयात् ।

Colophon.

☞ G2. 4 ins. (with v.l.) lines 61–62 only of the above passage after 80$^{ab}$ of the same adhy. (221), which is a very clear proof of the contamination of these two Grantha MSS. from the Northern Recension.

K2 स्वाहाग्रही; B1 Dc2 °त्मजः; Dc1 °मयी- ; D5 °मती- (for °मही-). — (L. 44) Dc यस्त्वथ (for षण्मुख). — (L. 45) B3 °रूपधारी (for °कामरूपी). — (L. 46) B1–3 D3 मरुतां; Dc यजतां (for मरुतः). — (L. 47) B1. 3 वचनेंद्र; D3 अखिलेंद्र (for अचलेन्द्र). D6 धर्मो वायूरसनेंद्रस्त्वमिंद्र वः. — (L. 50) K2 D3. 4. 6 [अ]मृतस्य; B2–4 मूढस्य; Dc मृडस्य (for ऋतस्य). D5 अमृत्युकर्ता दिवि जातस्ततस्त्वं. — (L. 51) D5 [अ]रीणां (for रिपूणां). — (L. 59) After line 59, B1 ins.: लोकाश्रय सुहृदामप्रमेय. — (L. 60) D5 transp. विप्रः and जन्म. — K2 om. line 61. — (L. 62) B1 Dc धर्मम्; B2 D3 बलम् (for धनम्). G2. 4 दीप्तिं (for दीप्तं). — (L. 63) K2 om. line 63. B1 Dc स पुष्टिमिह; B2. 3 D5 सुपुष्टि( B3 °ष्टिं )तुष्टिं; D3 स तुष्टिपुष्टी; D4 स पुष्टिं तुष्टिं. D5 रुद्र° (for स्कन्द°). — Colophon. — *Adhy. no.*: Dn 231 (Dn2 230).

## 23

(L. 1) G1 धर्मराजस्य तद्वाक्यं निशम्य स वृकोदरः. — (L. 3) G1 ह्यस्मान् (for ऽनेन), and दग्धुमारब्धवांस्तदा (for the posterior half). — (L. 4) G1 दैवयुक्ता वयं वीर; M2 वंचना हि कृतानेन (for the prior half). G1 दैवेन परिरक्षिताः. — After line 4, G1 ins.:

कालकूटं विषं तीक्ष्णं भोजने मम भारत ।
उप्त्वा गङ्गां लतापाशैर्बद्ध्वा च प्राक्षिपत्प्रभो ।
रसातलं तु संप्राप्य तथा वासुकिमञ्जसा ।
तस्य प्रसादाद्राजेन्द्र पुनः प्राप्तो महीतलम् ।

— After line 7, G1 ins.:

राज्यं च छिद्य राजेन्द्र उक्तवान्परुषाणि नः ।

— G2 om. lines 9–13. — (L. 9) T2 G3. 4 M1 °रेव कर्तव्यं पाण्डुपुत्रस्य निग्रहं. — (L. 10) T2 G1. 3 कृतं तच्च; M2 कृतः सोपि. T2 G3 अस्माभिर् (for अस्माकम्). — (L. 11) G1 कृतोपकारो (for उपकारी तु). — (L. 12) T2 G3 राजा (for राजन्). — T2 G1. 3 M2 om. lines 14–15. — (L. 17) G1. 3 °विदां (for °भृतां). — (L. 18) T2 G3. 3 M2 °यशा; (for °यशः). — (L. 21) G4 M1 अस्मान्

## 23

T2 G M ins. after 3. 232. 10 (G1, after 3. 232. 9):

एवमुक्तस्तु कौन्तेयः पुनर्वाक्यमभाषत ।
कोपसंरक्तनयनं पूर्ववैरमनुस्मरन् ।
पुरा जतुगृहेऽनेन दग्धुमस्मान्युधिष्ठिर ।
दुर्बुद्धिर्हि कृता वीर तदा दैवेन रक्षिताः ।
द्यूतकालेऽपि कौन्तेय वृजिनानि कृतानि वै ।
द्रौपद्याश्च परामर्शः केशग्रहणमेव च ।
वस्त्रापहरणं चैव सभामध्ये कृतानि वै ।
पुरा कृतानां पापानां फलं भुङ्क्ते सुयोधनः ।
अस्माभिरेव कर्तव्यो धार्तराष्ट्रस्य निग्रहः ।
अन्येन तु कृतं तद्वै मैत्रमस्माकमिच्छता ।
उपकारी तु गन्धर्वो मा राजन्विमना भव ।
एतस्मिन्नन्तरे राजंश्चित्रसेनेन वै हृतः ।
विललाप सुदुःखार्तो ह्रियमाणः सुयोधनः ।
युधिष्ठिर महाबाहो सर्वधर्मभृतां वर ।
सपुत्रान्सहदारांश्च गन्धर्वेण हृतान्बलात् ।
पाण्डुपुत्र महाबाहो कौरवाणां यशस्कर ।
सर्वधर्मभृतां श्रेष्ठ गन्धर्वेण हृतं बलात् ।
रक्षस्व पुरुषव्याघ्र युधिष्ठिर महायशः ।
भ्रातरं ते महाबाहो बद्ध्वा नयति मामयम् ।
दुःशासनं दुर्विषहं दुर्मुखं दुर्जयं तथा ।
बद्ध्वा हरन्ति गन्धर्वा अस्मद्दारांश्च सर्वशः ।
अनुधावत मां क्षिप्रं रक्षध्वं पुरुषोत्तमाः ।
यमौ मामनुधावेतां रक्षार्थं मम सायुधौ ।

कुरुवंशस्य सुमहद्यशः प्राप्तमीदृशम् ।
व्यपोहयध्वं गन्धर्वाञ्जित्वा वीर्येण पाण्डवाः ।
एवं विलपमानस्य कौरवस्यार्तया गिरा ।
श्रुत्वा विलापं संभ्रान्तो घृणयाभिपरिप्लुतः ।
युधिष्ठिरः पुनर्वाक्यं भीमसेनमथाब्रवीत् ।

☞ This passage is followed by a *repetition* of 3. 232. $9^{cd}$–$10^{cd}$ (evidently, for resuming the context disturbed by this interpolation).

## 24

After 3. 241. $15^{ab}$, $K_4$ D (except $D_4$) $G_3$ ins.:

भीष्मोऽस्मान्निन्दति सदा पाण्डवांश्च प्रशंसति ।
त्वद्द्वेषाच्च महाबाहो ममापि द्वेष्टुमर्हति ।
विगर्हते च मां नित्यं त्वत्समीपे नरेश्वर ।
सोऽहं भीष्मवचस्तद्वै न मृष्यामीह भारत ।
त्वत्समक्षं यदुक्तं च भीष्मेणामित्रकर्शन ।
पाण्डवानां यशो राजंस्तव निन्दां च भारत ।
अनुजानीहि मां राजन्सभृत्यबलवाहनम् ।
जेष्यामि पृथिवीं राजन्सशैलवनकाननाम् ।
जिता च पाण्डवैर्भूमिश्चतुर्भिर्बलशालिभिः ।
तामहं ते विजेष्यामि एक एव न संशयः ।
संपश्यतु सुदुर्बुद्धिर्भीष्मः कुरुकुलाधमः ।
अनिन्द्यं निन्दते यो हि अप्रशंस्यं प्रशंसति ।
स पश्यतु बलं मेऽद्य आत्मानं तु विगर्हतु ।
अनुजानीहि मां राजन्ध्रुवो हि विजयस्तव ।
प्रतिजानामि ते सत्यं राजन्नायुधमालभे ।
तच्छ्रुत्वा तु वचो राजन्कर्णस्य भरतर्षभ ।
प्रीत्या परमया युक्तः कर्णमाह नराधिपः ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महाबलः ।
हितेषु वर्तसे नित्यं सफलं जन्म चाद्य मे ।
यदा च मन्यसे वीर सर्वशत्रुनिबर्हणम् ।
तदा निर्गच्छ भद्रं ते ह्यनुशाधि च मामिति ।
एवमुक्तस्तदा कर्णो धार्तराष्ट्रेण धीमता ।
सर्वमाज्ञापयामास प्रायात्रिकमरिंदम ।
प्रययौ च महेष्वासो नक्षत्रे शुभदैवते ।
शुभे तिथौ मुहूर्ते च पूज्यमानो द्विजातिभिः ।
मङ्गलैश्च शुभैः स्नातो वाग्भिश्चापि प्रपूजितः ।
नादयन्रथघोषेण त्रैलोक्यं सचराचरम् ।

Colophon.

वैशंपायन उवाच ।

ततः कर्णो महेष्वासो बलेन महता वृतः ।
द्रुपदस्य पुरं रम्यं रुरोध भरतर्षभ ।
युद्धेन महता चैनं चक्रे वीरं वशानुगम् ।
सुवर्णं रजतं चापि रत्नानि विविधानि च ।
करं च दापयामास द्रुपदं नृपसत्तम ।
तं विनिर्जित्य राजेन्द्र राजानस्तस्य येऽनुगाः ।
तान्सर्वान्वशगांश्चक्रे करं चैनानदापयत् ।
अथोत्तरां दिशं गत्वा वशे चक्रे नराधिपान् ।
भगदत्तं च निर्जित्य राधेयो गिरिमारुहत् ।
हिमवन्तं महाशैलं युध्यमानश्च शत्रुभिः ।

---

(for असद्-). — (L. 26) $T_2$ $G_3$ कौरव्यस्य (for °वस्य). — (L. 27) M सघृणो (for संभ्रान्तो). $T_2$ $G_3$ घृणयाति°; $G_2$ प्रणयाभि° (for घृणयाभि°).

## 24

(L. 1) $D_1$ भीष्मस्त्वां द्विषते नित्यं (for the prior half). — (L. 2) $K_4$ $D_c$ मामपि (for ममापि). $D_{1.3}$ इच्छति (for अर्हति). — (L. 3) $K_4$ विगर्हे चैव (for विगर्हते च). $D_1$ त्वत्समेन (for त्वत्समीपे). — (L. 4) $D_3$ श्रुत्वा; $D_6$ तस्मै (for तद्वै). $D_2$ स्पृशामि; $D_6$ $G_3$ मृषामि (for मृष्यामि). — (L. 5) $D_c$ वै; $D_5$ मे (for च). — (L. 6) $K_4$ $D_c$ $D_{1.3}$ $G_3$ निंदा च. — (L. 7) $D_{2.3.6}$ °वाहनः; $D_5$ °वाहिनीं (for °वाहनम्). $D_1$ अनुजानीहि मां वीर त्वदर्थं वै नृपोत्तम. — (L. 8) $K_4$ $D_c$ $D_{1.2}$ सर्वां (for राजन्). — (L. 9) $K_4$ $D_c$ $D_{1.2}$ या जिता (for जिता च). — (L. 10) $D_6$ एक एव (for तामहं ते). — (L. 11) $D_c$ स (for सं-). — (L. 12) $D_5$ निंदत्यनिंद्यं यो नित्यं (for the prior half). $K_3$ $D_c$ $T_2$ $G_3$ अप्रशस्यं; $D_1$ °शस्यान्. $K_4$ प्रशंसते. — (L. 13) $K_4$ $D_c$ $D_{1.2}$ च (for तु). — (L. 14) $D_1$ ध्रुवं (for ध्रुवो). — (L. 16) $K_4$ $D_{1.2}$ एतच्छ्रुत्वा (for तच्छ्रुत्वा तु). $D_5$ धृतराष्ट्रजः (for भरत°). — (L. 20) $K_4$ $D_{n1}$ $D_{3.6}$ °निबर्हण; $D_c$ $D_5$ °निबर्हणे; $D_1$ °वधाय मे; $D_3$ °निबर्हणः. — (L. 21) $K_4$ $D_c$ $D_{1-3}$ $G_3$ अनुशाधि (om. हि). — (L. 23) $D_c$ सर्वं निर्वापयामास. — (L. 24) $K_4$ $D_c$ $D_{n1.n3}$ $D_{1.3.5.6}$ $G_3$ निर्ययौ (for प्र°). — Colophon. $D_5$ om. colophon. — *Adhy. no.:* Dn 252 ($D_{n2}$ 251); $D_1$ 254. — (L. 29) $K_4$ $D_c$ $D_1$ पुरुष° (for भरत°). — (L. 30) A few MSS. वीरो *or* वीर (for वीरं). — (L. 32) $K_4$ $D_c$ $D_{1.2}$ राजसत्तमं ($D_c$ °मः) (for नृपसत्तम). — (L. 33) $D_{c1}$ राजेंद्रं राजानं. $D_1$ चानुगाः. — (L. 34) $D_1$ तांश्च सर्वान्वशीकृत्वा (for the prior half). Dn करं चानीय दापयत्! — (L. 35) $D_3$ om. line 35. $D_1$ कृत्वा (for चक्रे). $D_{n2}$ $G_3$ नराधिप. — (L. 36) $K_4$ $D_{3.6}$ वि- (for च). — (L. 38) $D_{n3}$ $D_3$ $G_3$ सर्वाः (for सर्वान्). — (L. 40) Dn om. (? hapl.) line 40! $K_4$ $D_{2.5.6}$ $G_3$ विचिर्जयत्; $D_1$ च वर्जं°; $D_3$ व्यवर्जं° (for अवाज°). — (L. 41)

प्रययौ च दिशः सर्वान्नृपतीन्वशमानयत् ।
स हैमवतिकाञ्जित्वा करं सर्वानदापयत् ।
नेपालविषये ये च राजानस्तानवाजयत् ।
अवतीर्य ततः शैलात्पूर्वां दिशमभिद्रुतः ।
अङ्गान्वङ्गान्कलिङ्गांश्च शुण्डिकान्मिथिलानथ ।
मागधान्कर्कखण्डांश्च निवेश्य विषयेऽऽत्मनः ।
आवशीरांश्च योध्यांश्च अहिक्षत्रं च निर्जयत् ।
पूर्वां दिशं विनिर्जित्य वत्सभूमिं तथागमत् ।
वत्सभूमिं विनिर्जित्य केवलां मृत्तिकावतीम् ।
मोहनं पत्तनं चैव त्रिपुरीं कोसलां तथा ।
एतान्सर्वान्विनिर्जित्य करमादाय सर्वशः ।
दक्षिणां दिशमास्थाय कर्णो जित्वा महारथान् ।
रुक्मिणं दाक्षिणात्येषु योधयामास सूतजः ।
स युद्धं तुमुलं कृत्वा रुक्मी प्रोवाच सूतजम् ।
प्रीतोऽस्मि तव राजेन्द्र विक्रमेण बलेन च ।
न ते विघ्नं करिष्यामि प्रतिज्ञां समपालयम् ।
प्रीत्या चाहं प्रयच्छामि हिरण्यं यावदिच्छसि ।
समेत्य रुक्मिणा कर्णः पाण्ड्यं शैलं च सोऽगमत् ।
स केरलं रणे चैव नीलं चापि महीपतिम् ।
वेणुदारिसुतं चैव ये चान्ये नृपसत्तमाः ।
दक्षिणस्यां दिशि नृपान्करान्सर्वानदापयत् ।
शैशुपालिं ततो गत्वा विजिग्ये सूतनन्दनः ।
पार्श्वस्थांश्चापि नृपतीन्वशे चक्रे महाबलः ।
आवन्त्यांश्च वशे कृत्वा साम्ना च भरतर्षभ ।
वृष्णिभिः सह संगम्य पश्चिमामपि निर्जयत् ।
वारुणीं दिशमागम्य यावनान्बर्बरांस्तथा ।
नृपान्पश्चिमभूमिस्थान्दापयामास वै करान् ।
विजित्य पृथिवीं सर्वां स पूर्वापरदक्षिणाम् ।
सम्लेच्छाटविकान्वीरः सपर्वतनिवासिनः ।
भद्रान्रोहितकांश्चैव आग्रेयान्मालवानपि ।
गणान्सर्वान्विनिर्जित्य नीतिकृत्प्रहसन्निव ।
शशकान्यवनांश्चैव विजिग्ये सूतनन्दनः ।
नग्नजित्प्रमुखांश्चैव गणाञ्जित्वा महारथान् ।
एवं स पृथिवीं सर्वां वशे कृत्वा महारथः ।
विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत् ।
तमागतं महेष्वासं धार्तराष्ट्रो जनाधिपः ।
प्रत्युद्गम्य महाराज सभ्रातृपितृबान्धवः ।
अर्चयामास विधिना कर्णमाहवशोभिनम् ।
आश्रावयच्च तत्कर्म प्रीयमाणो जनेश्वरः ।
यन्न भीष्माञ्च च द्रोणाच्च कृपाच्च च बाह्लिकात् ।

D1 अभिद्रवत्; D5 °श्रितः (for °द्रुतः). — (L. 42) K4 D2. 3 वंगानंगान् (by transp.). D1 वंगान्कलिंगान्गौडांश्च. Dn1 मंडिकान्; Dn2. n3 D1 G3 मुंडिकान्; D2. 3 चंडिकान्; D5 पुंड्कान् (for शुण्डिकान्). K4 D1 अपि (for अथ). — (L. 43) K4 कर्षखंडांश्च; D1 अर्ककंडांश्च (for कर्कखं°). K4 D6 G3 विषयात्मनः; Dc विषयांस्ततः. — (L. 44) K4 D1–3 श्रावस्तीं चाप्यं(D2 चाम्य-; D3 वांश्च)योधांश्च; Dc D5 अवंती चाप्ययो° (for the prior half). K4 Dc D1–3. 5 अहिच्छत्रांश्च सोजयत्. — G3 om. the posterior half of line 44 and the prior half of line 45. — (L. 45) K4 Dc D2. 3 अथा°; D1 उपा° (for तथा°). — (L. 46) K4 मेखलां; Dc D1–3 मेकलां (for केवलां). — (L. 47) K4 सोदनं; Dc D1–3 मोदनं; D5 नोदनं (for मोहनं). Dc त्रिपुरं; D5 त्रिपुरां. K4 Dc कौशलं; Dn1 कोशलीं; Dn3 D1–3 कोशलान्; D5 कोसलं. — (L. 48) D1 करानादाय; D5 करादानाय. — (L. 49) K4 Dc D1–3. 5 आसाद्य (for आस्थाय). K4 Dc D2. 3 °नृपान् (for °रथान्). — (L. 51) A few MSS. तुमलं. — (L. 52) K4 Dc D1–3 राधेय (for राजेन्द्र). — (L. 53) K4 D2. 3. 5 °कल्पय; Dc °कल्पयन्; D1 °कंपयन्; G3 °पालय (for °पालयम्). — (L. 54) Dc सुवर्णं (for हिरण्यं). — (L. 55) K4 सोध्यगात्; Dc D1–3 सोभ्यगात्; D5 सोत्यगात् (for सोऽगमत्). — (L. 56) D5 चापि; D1 जित्वा (for चैव). Dc चैव (for चापि). — (L. 57) D3 °दार° (for °दारि°). G3 पंचान्ये (for ये चान्ये). — (L. 58) D5 नृपसुतान् (for दिशि नृपान्). — D2 om. lines 59–60. — (L. 59) K4 Dc Dn2. n3 D1 G3 °पालं (for °पालिं). — (L. 60) D1 पार्श्वस्थांश्चैव; D3 सुपार्श्वस्थांश्च. Dc नराधिपः (for महाबलः). — (L. 61) D1 पुरुष° (for भरत°). Dn1 om. from साम्ना up to संगम्य (in line 62). — (L. 62) D3. 6 निर्जयन्. — (L. 63) D1 आक्रम्य (for आगम्य). K4 D1–3. 5 यवनान्बर्बरां°; Dc बर्बरान्यवनां°. — (L. 64) D1 करं (for करान्). — (L. 66) K4 Dc सम्लेच्छाटविकां; D1. 2 सम्लेंच्छाटविकान् (D1 °कां). — D1 om. from सपर्वत (in line 66) up to पुरुषव्याघ्रो (in line 72). — (L. 66) K4 D2. 3. 5 G3 °निवासिनीं; Dc °निवासिनां. — (L. 67) Dc Dn3 D2. 6 G3 मद्रान्; D3 महान् (for भद्रान्). K4 सामुद्राल्लोहितांश्चैव. K4 D2 om. (hapl.) from आग्रेयान् up to °श्चैव (in line 69). — (L. 68) Dc तंगणा-परतंगणान्; D3 नातिकृच्छ्राद्धसन्निव. — (L. 69) Dc सशकान् (for शशकान्). — (L. 70) K4 Dc D2. 3 महारथः. — (L. 71) K4 Dc D5 ससमुद्रनगद्रुमां; D2. 3 समुद्रनगरद्रुमां (for the posterior half). — (L. 72) D1 समागच्छत्स्वकं पुरं (for the posterior half). — (L. 73) Dc धनाधिपं (for जनाधिपः). — (L. 75) Dc विधिवद् (for °ना). D5 °शालिनं (for °शोभिनम्). — (L. 76) K4 Dc D1–3. 5 आराधयच्च (D1 °त) (for आश्रावयच्च). — (L. 78) D5

प्राप्तवानस्मि भद्रं ते त्वत्तः प्राप्तं मया हि तत् ।
बहुना च किमुक्तेन शृणु कर्ण वचो मम ।
सनाथोऽस्मि महाबाहो त्वया नाथेन सत्तम ।
न हि ते पाण्डवाः सर्वे कलामर्हन्ति षोडशीम् ।
अन्ये वा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः ।
स भवान्धृतराष्ट्रं तं गान्धारीं च यशस्विनीम् ।
पश्य कर्ण महेष्वास अदितिं वज्रभृद्यथा ।
ततो हलहलाशब्दः प्रादुरासीद्विशां पते ।
हाहाकाराश्च बहवो नगरे नागसाह्वये ।
केचिदेनं प्रशंसन्ति निन्दन्ति स्म तथापरे ।
तूष्णीमासंस्तथा चान्ये नृपास्तत्र जनाधिप ।
एवं विजित्य राजेन्द्र कर्णः शस्त्रभृतां वरः ।
सपर्वतवनाकाशां ससमुद्रां सनिष्कुटाम् ।
देशैरुच्चावचैः पूर्णां पत्तनैर्नगरैरपि ।
द्वीपैश्चानूपसंपूर्णैः पृथिवीं पृथिवीपते ।
कालेन नातिदीर्घेण वशे कृत्वा तु पार्थिवान् ।
अक्षयं धनमादाय सूतजो नृपमभ्ययात् ।
प्रविश्य च गृहं राजन्नभ्यन्तरमरिंदम ।
गान्धारीसहितं वीरो धृतराष्ट्रं ददर्श सः ।
पुत्रवच्च नरव्याघ्र पादौ जग्राह धर्मवित् ।
धृतराष्ट्रेण चाश्लिष्य प्रेम्णा चापि विसर्जितः ।
तदा प्रभृति राजा च शकुनिश्चापि सौबलः ।
जानते निर्जितान्पार्थान्कर्णेन युधि भारत ।

Colophon.

वैशंपायन उवाच ।
जित्वा तु पृथिवीं राजन्सूतपुत्रो जनाधिप ।
अब्रवीत्परवीरघ्नो दुर्योधनमिदं वचः ।

☞ This is followed in the above MSS. by a *repetition* of 3. 241. $15^{ab}$ (v.l. त्वां for त्वा) with the ref. (कर्ण उवाच ।), which is a clear indication of the passage being an interpolation Cf. note at the end of passage No. 23.

## 25

After adhy. 247, Dc1 Dn D1. 3. 6 G3 ins. the foll. two adhy.:

जनमेजय उवाच ।
वसत्स्वेवं वने तेषु पाण्डवेषु महात्मसु ।
रममाणेषु चित्राभिः कथाभिर्मुनिभिः सह ।
सूर्यदत्ताक्षयान्नेन कृष्णाया भोजनावधि ।
ब्राह्मणांस्तर्पमाणेषु ये चान्नार्थमुपागताः ।
आरण्यानां मृगाणां च मांसैर्नानाविधैरपि ।
धार्तराष्ट्रा दुरात्मानः सर्वे दुर्योधनादयः ।
कथं तेष्वन्ववर्तन्त पापाचारा महामुने ।
दुःशासनस्य कर्णस्य शकुनेश्च मते स्थिताः ।
एतदाचक्ष्व भगवन्वैशंपायन पृच्छतः ।
वैशंपायन उवाच ।
श्रुत्वा तेषां तथा वृत्तिं नगरे वसतामिव ।

---

[अ]द्य (for हि). — (L. 79) K4 Dc D1. 3 [अ]त्र (for च). — (L. 80) D1 समर्थो (for सनाथो). — (L. 82) Dc च (for वा). K4 Dc D3 पुरुषव्याघ्रा. Dc2 [ऽ]भ्युदितो दिशः; D5 [ऽ]प्युदितोदिताः. — (L. 83) K4 Dc D1–3. 5 च (for तं). — Dc2 om. lines 84–86. — (L. 86) Dc1 Dn2 हाहाकारश्च. Dc1 बहुशो; D2. 3 बहुलो (for बहवो). — (L. 87) D1 [अ]परे जनाः (for तथापरे). — (L. 88) Dn2 भूतास् (for आसन्). D1 तथैवान्ये; D3 नृपाश्चास्य. D5 प्राप्ते कर्णे नरेश्वर (for the posterior half). For line 88, Dc subst.:

नन्दन्ति स्म तथा चान्ये तूष्णीमासंस्तथापरे ।
नृपाश्च तुष्टुवुश्चान्ये द्विजास्तत्र जनाधिप ।

— (L. 89) Dc निर्जित्य (for विजित्य). — (L. 90) Dc ससमुद्रवनोद्देशां; D3 सपर्वतवनोद्देशां; D5 सपर्वताकरवनां. — (L. 92) K4 D2 च रूप°; Dc D1. 3 च रत्न° (for चानूप°). — (L. 93) K4 Dc1 D1–3 च; Dc2 [अ]थ (for तु). — (L. 94) D3 गृहम् (for नृपम्). — (L. 95) D3 [अ]भ्यंतरं (for च गृहं). D1 सूतपुत्रः प्रतापवान्; D5 गृहस्य रिपुमर्दनः (for the posterior half). — (L. 96) Dc ह (for सः). — (L. 97) K4 Dc1 D2 G3 नरव्याघ्रः. — (L 98) K4 वाचा (for चापि). — (L. 100) D2 reads line 100 after line 102. K4 Dc D1. 3. 5 मेनाते; Dn2 (by corr.) जानंति (for जानते). D1 विजितान् (for निर्जि°). K4 ते सर्वे (for कर्णेन). — Colophon. *Adhy. no.:* Dn 253 (Dn2 252); D1 255. — (L. 101) D3 स (for तु). Dc सर्वां (for राजन्). K4 Dc D1–3. 5 महाबलः (for जनाधिप). — (L. 102) D1 उवाच श्लक्ष्णया वाचा धृतराष्ट्रसुतं नृपं.

## 25

(L. 2) Dc1 D1. 3. 6 G3 मुनिसत्तम (for °भिः सह). — (L. 4) D1. 3. 6 G3 तर्प्य° (for तर्प°). Dc1 वनेषूपवनेषु च (for the posterior half). — (L. 5) Dc1 भक्ष्यैर्भोज्यैरनेकैश्च (for the prior half). — D2 om. from पायन (line 9) up to तेषु (line 11). — (L. 10) Dc1 पत्तने (for नगरे). — (L. 11) Dc1 °मानी (for °राज). — (L. 12) Dc1 D2 निकृतप्रज्ञैः. — (L. 14) Dc1 ऋषिः परमकोपनः (for the posterior half). — (L. 15) Dc1 दुर्वासा शंकरांशो

दुर्योधनो महाराज तेषु पापमरोचयत् ।
तथा तैर्निकृतिप्रज्ञैः कर्णदुःशासनादिभिः ।
नानोपायैरथं तेषु चिन्तयत्सु दुरात्मसु ।
अभ्यागच्छत्स धर्मात्मा तपस्वी सुमहायशाः ।
शिष्यायुतसमोपेतो दुर्वासा नाम कामतः ।
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ।
दुर्योधनो विनीतात्मा प्रश्रयेण दमेन च ।
सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत् ।
विधिवत्पूजयामास स्वयं किंकरवत्स्थितः ।
अहानि कतिचित्तत्र तस्थौ स मुनिसत्तमः ।
तं च पर्यचरद्राजा दिवारात्रमतन्द्रितः ।
दुर्योधनो महाराज शापात्तस्य विशङ्कितः ।
क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप ।
इत्युक्त्वा गच्छति स्नातुं प्रत्यागच्छति वै चिरात् ।
न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वैत्यदर्शनम् ।
अकस्मादेत्य च ब्रूते भोजयास्मांस्त्वरान्वितः ।
कदाचिच्च निशीथे स उत्थाय निकृतौ स्थितः ।
पूर्ववत्कारयित्वान्नं न भुङ्क्ते गर्हयन्स्म सः ।
वर्तमाने तथा तस्मिन्यदा दुर्योधनो नृपः ।
विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः ।
आह चैनं दुराधर्षो वरदोऽस्मीति भारत ।
वरं वरय भद्रं ते यत्ते मनसि वर्तते ।
मयि प्रीते तु यद्धर्म्यं नालभ्यं विद्यते तव ।
एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः ।
अमन्यत पुनर्जातमात्मानं स सुयोधनः ।
प्रागेव मन्त्रितं चासीत्कर्णदुःशासनादिभिः ।
याचनीयं मुनेस्तुष्टादिति निश्चित्य दुर्मतिः ।
अतिहर्षान्वितो राजा वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन्यथा जातोऽतिथिर्भवान् ।
अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः ।
वने वसति धर्मात्मा भ्रातृभिः परिवारितः ।
गुणवाञ्शीलसंपन्नस्तस्य त्वमतिथिर्भव ।
यदा च राजपुत्री सा सुकुमारी यशस्विनी ।
भोजयित्वा द्विजान्सर्वान्पतींश्च वरवर्णिनी ।
विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा ।
तदा त्वं तत्र गच्छेथा यद्यनुग्राह्यता मयि ।
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम् ।
दुर्वासा अपि विप्रेन्द्रो यथागतमगात्ततः ।
कृतार्थमिव चात्मानं तदा मेने सुयोधनः ।
करेण च करं गृह्य कर्णस्य मुदितो भृशम् ।
कर्णोऽपि भ्रातृसहितमित्युवाच नृपं मुदा ।
दिष्ट्या कामः सुसंवृत्तो दिष्ट्या कौरव वर्धसे ।
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे ।
दुर्वासःक्रोधजे वह्नौ पतिताः पाण्डुनन्दनाः ।

शिष्यायुतसमन्वितः. — (L. 16) $D_{c1}$ ऋषिं परमतेजसं (for the posterior half). — (L. 17) $D_{c1}$ न नाम देव तत् मुदा (sic) (for the posterior half). — $D_{c1}$ (which om. lines 18–19) ins. after line 17:

पादौ प्रक्षाल्य विधिवदासने चोपवेश्य च ।
पूजयित्वा यथान्यायमातिथ्येन न्यमन्त्रयत् ।
तथेति स मुनिर्भुक्त्वा ययौ पादधिको (?) द्विजः ।
पुनः प्रत्यागमत्प्रातःकाले स नृपसत्तम ।
तथैव भोजयामास परमान्नेन तं मुदा ।
गतः स पुनरेवाथ भोक्तुकामः समभ्ययात् ।
तथैव भोजयामास राजा शापविशङ्कितः ।
मध्यंदिने कदाचित्स्युः (?) कदाचिन्निशिथेऽपि च ।
गोरजे प्रत्युषे चापि कदाचित्प्रहरार्धके ।
घापिना (?) याति तद्वेश्म शिष्यायुतसमन्वितः ।
कदाचिद्बहुभिः सार्धं कदाचिदयुतेन च ।
उषाकाले कदाचित्स स समपात्याण्मासिकः (?) ।
दुर्योधनं भ्रंशयितुं राज्याच्छापेन निष्ठराम् (?) ।
क्रियया पाण्डुपुत्राणां क्रोधेन कलुषीकृतः ।
यदि मत्सेवनाद्भ्रंशेत्सकुलं नाशमेति च ।
एवं स मुनिराज्ञाय षण्मासावधि प्रत्यहम् ।
दुर्योधनगृहं प्रायाद्यदिच्छति तथैव तत् ।

ततः परमसंतुष्टो राजानं धृतराष्ट्रजम् ।

— (L. 23) $D_{c1}$ जनपदेश्वर (for मम नराधिप). — (L. 28) $D_1$ तन् (for [अ]न्नं). $D_{n3}$ गर्हते (for °यन्). $D_{c1}$ सदा (for स्म सः). — (L. 30) $D_{c1}$ $D_2$ नैव (for नैति). — Before line 32, most MSS. ins. दुर्वासा उवाच. — After line 33, $D_{c1}$ ins.:

प्रसन्नोऽस्मि तथातिथ्यात्तेनाह वरदोऽस्म्यहम् ।

— Before line 34, most MSS. ins. वैशं° उ°. — (L 37) $D_{c1}$ मुनौ तुष्टे (for मुनेस्तुष्टाद्), and तैः समेत्य स दुर्मतिः (for the posterior half). — (L. 38) $D_{n1}$ राजन् (for राजा). — (L. 39) $D_{c1}$ भ्रातृभिः सहितः सर्वैः कर्णशकुनिसाधनैः. (L. 40) $D_1$ °राज (for °राजो). — (L. 41) $D_{c1}$ कांतया सह (for परिवारितः). — (L. 44) $D_{c1}$ भ्रातृंश्च द्रुपदात्मजा (for the posterior half). — (L. 47) $D_{c1}$ $D_{1.2}$ त्वत्प्रीत्यै एवमुक्त्वा (om. इति). — (L. 48) $D_{c1}$ तपतां श्रेष्ठो (for अपि विप्रेन्द्रो). — (L. 49) $D_{c1}$ $D_{n1}$ $G_3$ अपि (for इव). — (L. 51) $D_{n1}$ $D_1$ तदा (for मुदा). — Before line 52, most MSS. ins. कर्ण उ°. — (L. 54) $D_{c1}$ $D_2$ पातिताः (for प°). — (L. 55) $D_{n2}$ स्वैरं बत; $D_{n3}$ स्वैरमेते (for स्वैरेव ते). — Before line 56, most MSS. ins. वैशं° उ°. — Colophon. $D_{c1}$ om. the colophon.

ये ये श्राद्धे न युज्यन्ते मूकान्धबधिरादयः ।
तेऽपि सर्वे नियोक्तव्या मिश्रिता वेदपारगैः ।
प्रतिग्रहश्च वै देयः शृणु यस्य युधिष्ठिर ।
प्रदातारं तथात्मानं यस्तारयति शक्तिमान् ।
तस्मिन्देयं द्विजे दानं सर्वागमविजानता ।
प्रदातारं तथात्मानं तारयेद्यः स शक्तिमान् ।
न तथा हविषो होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिभोजने ।
तस्मात्त्वं सर्वयत्नेन यतस्वातिथिभोजने ।
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
प्रयच्छन्ति तु ये राजन्नोपसर्पन्ति ते यमम् ।
देवमाल्यापनयनं द्विजोच्छिष्टावमार्जनम् ।
आकल्पपरिचर्या च गात्रसंवाहनानि च ।
अत्रैकैकं नृपश्रेष्ठ गोदानाद्व्यतिरिच्यते ।
कपिलायाः प्रदानात्तु मुच्यते नात्र संशयः ।
तस्मादलंकृतां दद्यात्कपिलां तु द्विजातये ।
श्रोत्रियाय दरिद्राय गृहस्थायाग्निहोत्रिणे ।
पुत्रदाराभिभूताय तथा ह्यनुपकारिणे ।
एवंविधेषु दातव्या न समृद्धेषु भारत ।
को गुणो भरतश्रेष्ठ समृद्धेष्वभिवर्जितम् ।
एकस्यैका प्रदातव्या न बहूनां कदाचन ।
सा गौर्विक्रयमापन्ना हन्यात्त्रिपुरुषं कुलम् ।
न तारयति दातारं ब्राह्मणं नैव नैव तु ।
सुवर्णस्य विशुद्धस्य सुवर्णं यः प्रयच्छति ।
सुवर्णानां शतं तेन दत्तं भवति शाश्वतम् ।
अनड्वाहं तु यो दद्याद्बलवन्तं धुरंधरम् ।
स निस्तरति दुर्गाणि स्वर्गलोकं च गच्छति ।
वसुंधरां तु यो दद्याद्द्विजाय विदुषात्मने ।
दातारं ह्यनुगच्छन्ति सर्वे कामाभिवाञ्छिताः ।
पृच्छन्ति चात्र दातारं वदन्ति पुरुषा भुवि ।
अध्वनि क्षीणगात्राश्च पांसुपादावगुण्ठिताः ।
तेषामेव श्रमार्तानां यो ह्यन्नं कथयेद्बुधः ।
अन्नदातृसमः सोऽपि कीर्त्यते नात्र संशयः ।
तस्मात्त्वं सर्वदानानि हित्वान्नं संप्रयच्छ ह ।
न हीदृशं पुण्यफलं विचित्रमिह विद्यते ।
यथाशक्ति च यो दद्यादन्नं विप्रेषु संस्कृतम् ।
स तेन कर्मणाप्नोति प्रजापतिसलोकताम् ।
अन्नमेव विशिष्टं हि तस्मात्परतरं न च ।
अन्नं प्रजापतिश्चोक्तः स च संवत्सरो मतः ।
संवत्सरस्तु यज्ञोऽसौ सर्वं यज्ञे प्रतिष्ठितम् ।
तस्मात्सर्वाणि भूतानि स्थावराणि चराणि च ।
तस्मादन्नं विशिष्टं हि सर्वेभ्य इति विश्रुतम् ।
येषां तटाकानि महोदकानि
वाप्यश्च कूपाश्च प्रतिश्रयाश्च ।
अन्नस्य दानं मधुरा च वाणी
यमस्य ते निर्वचना भवन्ति ।
धान्यं श्रमेणार्जितवित्तसंचितं
विप्रे सुशीले च प्रयच्छते यः ।
वसुंधरा तस्य भवेत्सुतुष्टा
धारां वसूनां प्रतिमुञ्चतीव ।

38) Dc येपि (for ये ये). B$_4$ Dc Dn$_1$ नियुज्यंते (for न यु°). — (L. 39) Dn$_2$ न (for नि-). Dn$_2$ देव- (for वेद-). — Dn$_3$ reads line 40 in marg. and om. line 41. — (L. 41) B$_4$ तदा; Dc$_1$ यथा (for तथा). — (L. 43) Dc Dn$_2$ यस्तारयति (for तारयेद्यः स). — (L. 44) Dc Dn$_2$ हविषा (for हविषो). Dc$_2$ हैमैर् (for होमैर्). — (L. 45, 46) B$_3$ °पूजने (for °भोजने). B$_3$ om. (hapl.) line 46. — D$_4$ om. lines 47–49. — (L. 47) B$_2$ पादमृतं; Dc °युतं (for °घृतं). G$_3$ पीतम् (for दीपम्). — (L. 48) B$_3$ च ये; B$_4$ मया (for तु ये). — (L. 49) B$_{2-4}$ देवमाल्यो(B$_4$ °ल्यौ)पनयनं (for the prior half). Dc$_1$ °विमार्जनं (for °वमार्जनम्). — (L. 50) B$_2$ आकल्पं. Dc -प्रतिचर्या (for -परिचर्या). Dc पाद- (for गात्र-). — B$_3$ om. line 51. — (L. 51) B$_4$ एवैकं (for एकैकं). B$_{2.4}$ D$_4$ G$_3$ गोशतात्व-तिरिच्यते (for the post. half). — (L. 52) B$_2$ प्रदा-नैन (for °नात्तु). — (L. 53) D$_6$ स्वलंकृतां. — (L. 57) B$_{2.4}$ अभिवर्तितुं; Dc अतिवर्धितं. — (L. 58) B$_{3.4}$ Dc युधिष्ठिर (for कदाचन). — (L. 60) Dc ब्राह्म-णान्. — (L. 61) B$_{2-4}$ Dn$_2$ ब्राह्मणस्य (for सुवर्णस्य). — (L. 64) B$_2$ m. $_4$ निस्तारयति (for स निस्तरति). Dc ब्रह्मलोकं (for स्वर्ग°). B$_4$ तु (for च). — (L. 67) पृच्छंतश् (for पृच्छन्ति). B$_{2-4}$ Dc D$_4$ चान्न(B$_4$ °नु)-दातारं (for चात्र दा°). — (L. 68) Dc$_2$ अध्वगाः (for अध्वनि). — (L. 69) Dc येषाम् (for तेषाम्). B$_{2-4}$ Dc एवं (for एव). — (L. 70) Dc$_2$ कीर्तने (for कीर्त्यते). — (L. 71) D$_4$ G$_3$ संप्रदानानि (for सर्व°). Dc संश्रयाच्युत (for संप्रयच्छ ह). — (L. 73) D$_4$ संस्कृते. — (L. 76) B$_4$ Dc प्रोक्तः (for चोक्तः). — (L. 79) D$_4$ विशिष्टो. B$_2$ नः श्रुतं (for वि°). — (L. 80) B$_{2-4}$ Dc Dn$_{1.n2}$ D$_4$ तडागानि (for तटाकानि). — (L. 82) Dc अन्नप्रदानं (for °स्य दानं). — (L. 83) Dc नैव नरा (for निर्वचना). — (L. 85) Dc प्रतियच्छते (for च प्रय°). — (L. 87) Dc Dn$_2$

अन्नदाः प्रथमं यान्ति सत्यवाक्तदनन्तरम् ।
अयाचितप्रदाता च समं यान्ति त्रयो जनाः ।
वैशंपायन उवाच ।
कौतूहलसमुत्पन्नः पर्यपृच्छद्युधिष्ठिरः ।
मार्कण्डेयं महात्मानं पुनरेव सहानुजः ।
यमलोकस्य चाध्वानमन्तरं मानुषस्य च ।
कीदृशं किंप्रमाणं वा कथं वा तन्महामुने ।
तरन्ति पुरुषाश्चैव येनोपायेन शंस मे ।
मार्कण्डेय उवाच ।
सर्वगुह्यतमं प्रश्नं पवित्रमृषिसंस्तुतम् ।
कथयिष्यामि ते राजन्धर्मं धर्मभृतां वर ।
षडशीतिसहस्राणि योजनानां नराधिप ।
यमलोकस्य चाध्वानमन्तरं मानुषस्य च ।
आकाशं तदपानीयं घोरं कान्तारदर्शनम् ।
न तत्र वृक्षच्छाया वा पानीयं केतनानि च ।
विश्रमेद्यत्र वै श्रान्तः पुरुषोऽध्वनि कर्शितः ।
नीयते यमदूतैस्तु यमस्याज्ञाकरैर्बलात् ।
नराः स्त्रियस्तथैवान्ये पृथिव्यां जीवसंज्ञिताः ।
ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव ।
हयादीनां प्रकृष्टानि तेऽध्वानं यान्ति वै नराः ।
संनिवार्यातपं यान्ति छत्रेणैव हि छत्रदाः ।
तृप्ताश्चैवान्नदातारो ह्यतृप्ताश्चाप्यनन्नदाः ।
वस्त्रिणो वस्त्रदा यान्ति अवस्त्राः यान्त्यवस्त्रदाः ।
हिरण्यदाः सुखं यान्ति पुरुषास्त्वभ्यलंकृताः ।
भूमिदास्तु सुखं यान्ति सर्वैः कामैः सुतर्पिताः ।
यान्ति चैवापरिक्लिष्टा नराः सस्यप्रदायकाः ।
नराः सुखतरं यान्ति विमानेषु गृहप्रदाः ।
पानीयदा ह्यतृषिताः प्रहृष्टमनसो नराः ।
पन्थानं द्योतयन्तश्च यान्ति दीपप्रदाः सुखम् ।
गोप्रदास्तु सुखं यान्ति निर्मुक्ताः सर्वपातकैः ।
विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः ।
तथा बर्हिप्रयुक्तैश्च षष्ठरात्रोपवासिनः ।
त्रिरात्रं क्षपते यस्तु एकभक्तेन पाण्डव ।
अन्तरा चैव नाश्नाति तस्य लोका ह्यनामयाः ।
पानीयस्य गुणाः दिव्याः प्रेतलोकसुखावहाः ।
तत्र पुष्पोदका नाम नदी तेषां विधीयते ।
शीतलं सलिलं तत्र पिबन्ति ह्यमृतोपमम् ।
ये च दुष्कृतकर्माणः पूयं तेषां विधीयते ।
एवं नदी महाराज सर्वकामप्रदा हि सा ।
तस्मात्त्वमपि राजेन्द्र पूजयैनान्यथाविधि ।
अध्वनि क्षीणगात्रश्च पथि पांसुसमन्वितः ।
पृच्छते ह्यन्नदातारं गृहमायाति चाशया ।
तं पूजयाथ यत्नेन सोऽतिथिर्ब्राह्मणश्च सः ।
तं यान्तमनुगच्छन्ति देवाः सर्वे सवासवाः ।
तस्मिन्संपूजिते प्रीता निराशा यान्त्यपूजिते ।
तस्मात्त्वमपि राजेन्द्र पूजयैनं यथाविधि ।
एतत्ते शतशः प्रोक्तं किं भूयः श्रोतुमिच्छसि ।
युधिष्ठिर उवाच ।
पुनः पुनरहं श्रोतुं कथां धर्मसमाश्रयाम् ।
पुण्यामिच्छामि धर्मज्ञ कथ्यमानां त्वया विभो ।

---

धारा. B3.4 [इ]ति; Dc1 च (for [इ]त्र). — (L. 89) B2 अयाचितं (for अयाचित-). Dc2 सम-; Dn2 साम्यं (for समं). — B4 om. line 91. — Before line 92, B3 ins. युधिष्ठिर उवाच. — (L. 94) B4 भवंति (for तरन्ति). Dc केन (for येन). — (L. 95) B2 सर्व-. G3 ऋषिसंस्कृतं (for °संस्तुतम्). — (L. 96) B2.3 धर्म्यं (for धर्मं). — (L. 99) B2.3 उदपानीयं (for तद°). Dc कांतारदुर्गमं (for °दर्शनम्). — (L. 100) D4 वृक्षा छाया. B3 Dc वा (for च). — (L. 101) D4.6 विश्रांतः (for वै श्रान्तः). Dc Dn1.n2 D4 [ऽ]ध्वान- (for [ऽ]ध्वनि). — (L. 102) Dc2 Dn1.n2 D4 नीयंते. B4 यमभृत्यैस् (for °दूतैस्). Dc च (for तु). B2 किंकरैर् (for [आ]ज्ञा°). — (L. 103) B4 च ये च (for तथैव). Dc जीवसंस्थिताः (for °संज्ञिताः). — (L. 104) Dc पार्थिवः. — (L. 105) Dc हयादीनि प्रदत्तानि (for the prior half). — B2.3 om. (hapl.) lines 106–107. — (L. 108) Dc आवृता वस्त्रदातारो (for the prior half). Dc निर्वस्त्रा (for अवस्त्राः). — (L. 110) B2 Dc D4.6 G3 ता (for तु). D4 G3 याति. Dc Dn1.n2 G3 सर्व- (for सर्वैः). B2 G3 सुतर्पितः. — (L. 111) B4 शस्यप्रदायकाः; Dn2 रस° (for सस्य°). — (L. 112) B3 तथा (for नराः). — (L. 115) Dc ते (for तु). — (L. 117) Dc2 तु (for च). Dc2 षड- (for षष्ठ-). — Dc om. line 118. — (L. 120) Dc प्रेतलोके (for प्रेतलोक-). — (L. 125) B2 एनं; B3 एनां (for एनान्). — (L. 126) Dc D4 अध्वा(Dc2 °ध्व)नः (for अध्वनि). B2 -विभूषितः (for -समन्वितः). — (L. 127) B3 पृच्छति. Dc2 ह्यन्नदातारः. B4 पूज्यते ह्यनुदातारं (for the prior half). B3 चासकृत् (for चाशया). — (L. 128) Dn2 तं पूजयेत्प्रयत्नेन (for the prior half). — (L. 129) Dc2 यातम्. B2 m सबांधवाः (for सवासवाः). — (L. 130) B2 Dc2 अपूजिताः (Dc2 °तः). — (L. 133) B2 धर्मसमाश्रितां (for °समाश्रयाम्). — (L. 134) B3 प्रभो (for विभो). —(L. 135) Dc2 धर्मोत्तरां (for धर्मान्तरं). — (L. 136) D4

मार्कण्डेय उवाच ।

धर्मान्तरं प्रति कथां कथ्यमानां मया नृप ।
सर्वपापहरां नित्यं शृणुष्वावहितो मम ।
कपिलायां तु दत्तायां यत्फलं ज्येष्ठपुष्करे ।
तत्फलं भरतश्रेष्ठ विप्राणां पादधावने ।
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपर्णेन पिबन्ति पितरो जलम् ।
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः ।
यावद्वत्सस्य वै पादौ शिरश्चैव प्रदृश्यते ।
तस्मिन्काले प्रदातव्या प्रयतेनान्तरात्मना ।
अन्तरिक्षगतो वत्सो यावद्योन्यां प्रदृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ।
यावन्ति तस्या रोमाणि वत्सस्य च युधिष्ठिर ।
तावद्युगसहस्राणि स्वर्गलोके महीयते ।
सुवर्णनासां यः कृत्वा सखुरां कृष्णधेनुकाम् ।
तिलैः प्रच्छादितां दद्यात्सर्वरत्नैरलंकृताम् ।
प्रतिग्रहं गृहीत्वा यः पुनर्ददाति साधवे ।
फलानां फलमश्नाति तदा दत्त्वा च भारत ।
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ।
अन्तर्जानुशयो यस्तु भुञ्जते सक्तभाजनः ।
यो द्विजः शब्दरहितं स क्षमस्तारणाय वै ।
अपानपानगदितास्तथान्ये ये द्विजातयः ।
जपन्ति संहितां सम्यक्ते नित्यं तारणक्षमाः ।
हव्यं कव्यं च यत्किंचित्सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौ ज्वलितेऽग्नौ यथा हुतम् ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रयोधिनः ।
निहन्युर्मन्युना विप्रा वज्रपाणिरिवासुरान् ।
धर्माश्रितेयं तु कथा कथितेयं तवानघ ।
यां श्रुत्वा मुनयः प्रीता नैमिषारण्यवासिनः ।
वीतशोकभयक्रोधा विपाप्मानस्तथैव च ।
श्रुत्वेमां तु कथां राजन्नभवन्तीह मानवाः ।

युधिष्ठिर उवाच ।

किं तच्छौचं भवेद्येन विप्रः शुद्धः सदा भवेत् ।
तदिच्छामि महाप्राज्ञ श्रोतुं धर्मभृतां वर ।

मार्कण्डेय उवाच ।

वाक्शौचं कर्मशौचं च यच्च शौचं जलात्मकम् ।
त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः ।
सायं प्रातश्च संध्यां यो ब्राह्मणोऽभ्युपसेवते ।
प्रजपन्पावनीं देवीं गायत्रीं वेदमातरम् ।
स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः ।
न सीदेत्प्रतिगृह्णानो महीमपि ससागराम् ।
ये चास्य दारुणाः केचिद्ग्रहाः सूर्यादयो दिवि ।
ते चास्य सौम्या जायन्ते शिवाः शिवतराः सदा ।
सर्वे नानुगतं चैनं दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति द्विजोत्तमम् ।
नाध्यापनाद्याजनाद्वा अन्यस्माद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलिताग्निसमाः द्विजाः ।
दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।
यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति ।
एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत् ।
प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः ।

---

सर्वपापहरा. — (L. 137) Dc2 च (for तु). B4 कपिलानां प्रदत्तानां (for the prior half). B2 प्रेत्य (for ज्येष्ठ-). — (L. 139) B2 विप्र- (for द्विज-). — (L. 140) B2 Dc पुष्करपात्रेण (for °पर्णेन). B2 [उ]दकं (for जलम्). — (L. 143) B2 द्वौ (for वै). Dc यावद्वत्सश्च पादौ द्वौ (for the prior half). — (L. 144) Dc2 Dn3 प्रयत्नेन (for °तेन). — (L. 145) B2–4 अंतरीक्षगतो; G3 °रिक्षं गतो. Dc1 वत्स. — (L. 147) Dc2 Dn3 तस्य (for तस्या). — (L. 149) B2. 3 सुवर्णशृंगीं (for °नासां). Dc मधुना; Dn1 सुखुरां; D4 G3 मधुरां (for सखुरां). — (L. 151) D4 प्रतिगृहं. Dc च (for यः). Dc D4 G3 ददाति. — (L. 153) Dc ससमुद्रा गुहा. — (L. 155) B3 Dc Dn2. n3 D6 जानुभुजो; B4 °सगो (for °शयो). D6 G3 भुंक्ते संसक्तभाजनः (for the post. half). — (L. 157) D6 -रहितास् (for -गदितास्). B3. 4 अपानपानिगदितास्; Dc यः पावमानीं जपति (for the prior half). — (L. 158) B2 नित्यं (for सम्यक्). — (L. 163) Dc हि (for the first [इ]यं). — (L. 166) B2 तरंतीह तु; Dc संतरंतीह (for नभवन्तीह). — (L. 168) Dc2 वरः. — (L. 170) B2. 3 शुद्धो (for स्वर्गी). — (L. 171) B2 Dc2 संध्यायां (Dc2 °या) (for सन्ध्यां यो). Dc1 Dn2 ह्युपसेवते; Dc2 [ऽ]त्युप° (for [ऽ]भ्युप°). — (L. 174) Dc2 अभि (for अपि). — (L. 175) B2–4 Dc2 सूर्योदयो (for सूर्या°). — (L. 176) B4 नित्यं (for सौम्या). — (L. 177) B2 Dc न चान्यत्रगतं; B4 सर्वेन्यनु° (for सर्वे नानु°). B2 Dc Dn D4. 6 G3 पिशिताशि (Dc2 °श-; D4 °सि) नः (for °शनाः). — B2 om. line 178. — (L. 179) Dc अन्य (Dc2 °न्या) याद् (for °स्माद्). — (L. 180) B2 ज्वलिताग्निसमाह्निते (for the post. half). — (L. 181) Dc2 सुदेवे (for सुवेदा). — (L. 183) Dc2

नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः ।
वेदाढ्या वृत्तसंपन्ना ज्ञानवन्तस्तपस्विनः ।
यत्र तिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप ।
व्रजे वाप्यथवारण्ये यत्र सन्ति बहुश्रुताः ।
तत्तन्नगरमित्याहुः पार्थ तीर्थं च तद्भवेत् ।
रक्षितारं च राजानं ब्राह्मणं च तपस्विनम् ।
अभिगम्याभिपूज्याथ सद्यः पापात्प्रमुच्यते ।
पुण्यतीर्थाभिषेकं च पवित्राणां च कीर्तनम् ।
सद्भिः संभाषणं चैव प्रशस्तं कीर्त्यते बुधैः ।
साधुसंगमपूतेन वाक्सुभाषितवारिणा ।
पवित्रीकृतमात्मानं सन्तो मन्यन्ति नित्यशः ।
त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनम् ।
वल्कलाजिनसंवेष्टं व्रतचर्याभिषेचनम् ।
अग्निहोत्रं वने वासः शरीरपरिशोषणम् ।
सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मलः ।
न दुष्करमनाशित्वं सुकरं ह्यशनं विना ।
विशुद्धिं चक्षुरादीनां षण्णामिन्द्रियगामिनाम् ।
विकारि तेषां राजेन्द्र सुदुष्करतरं मनः ।
ये पापानि न कुर्वन्ति मनोवाक्कर्मबुद्धिभिः ।
ते तपन्ति महात्मानो न शरीरस्य शोषणम् ।
न ज्ञातिभ्यो दया यस्य शुक्लदेहोऽविकल्मषः ।
हिंसा सा तपसस्तस्य नानाशित्वं तपः स्मृतम् ।
तिष्ठन्गृहे चैव मुनिर्नित्यं शुचिरलंकृतः ।
यावज्जीवं दयावांश्च सर्वपापैः प्रमुच्यते ।
न हि पापानि कर्माणि शुध्यन्त्यनशनादिभिः ।
सीदत्यनशनादेव मांसशोणितलेपनः ।
अज्ञातं कर्म कृत्वा च क्लेशो नान्यत्प्रहीयते ।
नाग्निर्दहति कर्माणि भावशून्यस्य देहिनः ।
पुण्यादेव प्रव्रजन्ति शुध्यन्त्यनशनानि च ।
न मूलफलभक्षित्वान्न मौनान्नानिलाशनात् ।
शिरसो मुण्डनाद्वापि न स्थानकुटिकासनात् ।
न जटाधारणाद्वापि न तु स्थण्डिलशय्यया ।
नित्यं ह्यनशनाद्वापि नाग्निशुश्रूषणादपि ।
न चोदकप्रवेशेन न च क्ष्माशयनादपि ।
ज्ञानेन कर्मणा वापि जरामरणमेव च ।
व्याधयश्च प्रहीयन्ते प्राप्यते चोत्तमं पदम् ।
बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संयुज्यते पुनः ।
आत्मना विप्रहीणानि काष्ठकुड्योपमानि च ।
विनश्यन्ति न संदेहः फेनानीव महार्णवे ।
आत्मानं विन्दते येन सर्वभूतगुहाशयम् ।
श्लोकेन यदि वार्धेन क्षीणं तस्य प्रयोजनम् ।
त्र्यक्षरादभिसंधाय केचिच्छ्लोकपदाङ्कितैः ।
शतैरन्यैः सहस्रैश्च प्रत्ययो मोक्षलक्षणम् ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।
ऋजुर्ज्ञानविदो वृद्धाः प्रत्ययो मोक्षलक्षणम् ।
विदितार्थस्तु वेदानां परिवेद प्रयोजनम् ।
उद्विजेत्स तु वेदेभ्यो दावाग्नेरिव मानवः ।
शुष्कं तर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम् ।
एकाक्षराभिसंबद्धं तत्त्वं हेतुभिरिच्छसि ।

था ( for यथा ). — ( L. 187 ) $B_{2}$ वेदसंपन्ना- ( for वृत्त° ). — ( L. 189 ) Dc व्रजे( $Dc_{2}$ वृजे )था ( for व्रजे वा ). $B_{2}$ बहुप्रजाः ( for °श्रुताः ). — ( L. 190 ) Dc व यद् ( for च तद् ). — ( L. 192 ) $Dn_{2}$ °गम्याथ ( for °गम्याभि- ). — ( L. 193 ) Dc पुण्यतीर्थाभिषेकश्च ( for the prior half ). — ( L. 194 ) $Dn_{2}$ कीर्तिते ( for कीर्त्यते ). — ( L. 195 ) Dc वाक्सुवासित- ( for वाक्सुभाषित- ). — ( L. 198 ) $B_{2}$ ( m as in text ) -संघुष्टं; $B_{4}$ -संविष्टं ( for -संवेष्टं ). — ( L. 199 ) $B_{4}$ शरीरमपि शोषणं ( for the post. half ). — ( L. 200 ) $B_{2}$ स्याद् ( for स्युर् ). — ( L. 202 ) Dc विशुद्धं. — ( L. 205 ) $B_{2}$ तपंति च ( for ते तपन्ति ). — ( L. 206 ) $B_{2}$ तस्य ( for यस्य ). — ( L. 207 ) $B_{3}$ Dc $D_{4}$ $G_{3}$ सा न तपस्; $B_{4}$ सा न जयस्; $Dn_{2}$ सागस्तपस् ( for सा तपसम् ). $B_{2}$ हिंसा दानं तपस्तस्य ( for the prior half ). — ( L. 208 ) $B_{4}$ तिष्ठन्गृहे वै सुचिरं; Dc गृहे तिष्ठन्मुनिश्चैव ( for the prior half ). — ( L. 212 ) $B_{2.4}$ $Dc_{2}$ क्लेशान् ( for क्लेशो ). $B_{2-4}$ $Dc_{2}$ प्रतीयते ( for प्रही° ). $Dc_{2}$ वा ( for न ). — ( L. 214 ) Dc प्रयुज्यंत ( $Dc_{2}$ °ते ) ( for प्रव्रजन्ति ). $B_{2-4}$ अनशनादिभिः ( for °नानि च ). — ( L. 215 ) Dc -भक्षाद्वा ( for -भक्षित्वान् ). $B_{2}$ न च मौनानिलाशनात् ( for the post. half ). — ( L. 216 ) $B_{2}$ -कुटिलासनात्; Dc -कुटिकाशनात् ( for -कुटिकासनात् ). — ( L. 218 ) $B_{2}$ शुश्रूषणाद् ( for ह्यनशनाद् ). — ( L. 221 ) $D_{4}$ महीयंते ( for प्रही° ). — ( L. 224 ) Dc $D_{4}$ $G_{3}$ विप्रहीनानि. — ( L. 225 ) $D_{4}$ निनश्यंति ( for विन° ). — ( L. 228 ) $B_{2-4}$ Dc $D_{6}$ $G_{3}$ श्लोकपदांतिकैः; $D_{4}$ लोकपदांकितैः. — ( L. 229 ) Dc गतैरण्यैः ( $Dc_{2}$ °ण्यः ) ( for शतैरन्यैः ). — ( L. 231 ) $B_{2}$ ज्ञानवयो- ( for °विदो ). Dc लोकमोक्षणं ( for मोक्षलक्षणम् ). — ( L. 232 ) $B_{2}$ वेदितार्थस्तु; $Dc_{2}$ विंदिता°; $Dn_{1}$ विहिता° ( for विदिता° ). — ( L. 233 ) $Dn_{2}$ ( before corr. ) $D_{4.6}$ देवेभ्यो ( for वेदेभ्यो ). $Dc_{1}$ दावाग्निरिव; $Dc_{2}$ दवाग्नेरव. — ( L. 234 ) $Dc_{2}$ $D_{4}$ $G_{3}$ सुष्क; $Dn_{2}$ शुक्ल- ( for शुष्कं ). $B_{2}$ स्मृतिं श्रुतिं ( by transp. ). $Dc_{2}$

बुद्धिर्न तस्य सिध्येत साधनस्य विपर्ययात् ।
वेदपूर्वं वेदितव्यं प्रयत्ना-
त्तद्वै वेदस्तस्य वेदः शरीरम् ।
वेदस्तत्त्वं तत्समासोपलब्धौ
क्लीबस्त्वात्मा तस्य वेद्यस्य वेद्यम् ।
वेदोक्तमायुर्देवानामाशिषश्चैव कर्मणाम् ।
फलत्यनुयुगं लोके प्रभावश्च शरीरिणाम् ।
इन्द्रियाणां प्रसादेन तदेतत्परिवर्जयेत् ।
तस्मादनशनं दिव्यं निरुद्धेन्द्रियगोचरम् ।
तपसा स्वर्गगमनं भोगो दानेन जायते ।
ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादवक्षयः ।
वैशंपायन उवाच ।
एवमुक्तस्तु राजेन्द्र प्रत्युवाच महायशाः ।
भगवञ्छ्रोतुमिच्छामि प्रधानविधिमुत्तमम् ।
मार्कण्डेय उवाच ।
यत्त्वमिच्छसि राजेन्द्र दानधर्मं युधिष्ठिर ।
इष्टं चेदं सदा मह्यं राजन्गौरववतस्तथा ।
शृणु दानरहस्यानि श्रुतिस्मृत्युदितानि च ।
छायायां करिणः श्राद्धं तत्कर्णपरिवीजिते ।
दशकल्पयुतानीह न क्षीयेत युधिष्ठिर ।
जीवनाय समाक्लिन्नं वसु दत्त्वा महीयते ।
वैश्यं तु वासयेद्यस्तु सर्वयज्ञैः स इष्टवान् ।
प्रतिस्रोतश्चित्रवाहाः पर्जन्योऽस्यानुसंचरन् ।
महाधुरि यथा नावा महापापैः प्रमुच्यते ।
विप्लवे विप्रदत्तानि दधिमस्त्वक्षयाणि च ।
पर्वसु द्विगुणं दानमृतौ दशगुणं भवेत् ।
अयने विषुवे चैव षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तमक्षयमुच्यते ।
ऋतुषु दशगुणं वदन्ति दत्तं
शतगुणमृत्वयनादिषु ध्रुवम् ।
भवति सहस्रगुणं दिनस्य राहो-
र्विषुवति चाक्षयमश्नुते फलम् ।
ना भूमिदो भूमिमश्नाति राज-
न्ना यानदो यानमारुह्य याति ।
यान्यान्कामान्ब्राह्मणेभ्यो ददाति
तांस्तान्कामाञ्जायमानः स भुङ्क्ते ।
अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्ते न भवन्ति दत्ता
यः काञ्चनं गाश्च महीं च दद्यात् ।
परं हि दानान्न बभूव शाश्वतं
भव्यं त्रिलोके भवते कुतः पुनः ।
तस्मात्प्रधानं परमं हि दानं
वदन्ति लोकेषु विशिष्टबुद्धयः ।

---

Dn2 तत्त्र- ( for तत्त्वं ). — ( L. 236 ) B2 भूतस्य ( न तस्य ). — ( L. 239 ) B2 शुद्धं ( for तत्त्वं ). Dc वेदस्तद्वत्तत्समासोपलब्धिः. — ( L. 240 ) B2 Dc D6 G3 च ( for तु ). — ( L. 241 ) Dc Dn2 वेदानाम् ( for देवानाम् ). — ( L. 242 ) Dc2 लोक-. — ( L. 244 ) Dc नित्यं ( for दिव्यं ). — ( L. 248 ) Dc Dn D6 G3 प्रदानविधिम् ( for प्रधान° ). — ( L. 249 ) B2 यत्तु ; B3 यत्तुम् ; Dc यत्तत् ( for यत्त्वम् ). B2 Dc पृच्छसि ( for इच्छसि ). — ( L. 250 ) Dn2 दृष्टं ( for इष्टं ). Dc1 समा- ( for सदा ). Dc शौन्चवतस् ( for गौर° ). — Dn3 om. lines 251–253. — ( L. 251 ) Dc2 प्रति- ( for श्रुति- ). — ( L. 252 ) B2 छायायाः. B2–4 Dc Dn1 D4. 6 -परिवीजितं ; Dn2 G3 -परिजीवितं ( for -परिवीजिते ); — Dn2 om. ( ? hapl. ) line 253. — ( L. 253 ) Dc2 दशकल्याणयुतानीह ( for the prior half ). — ( L. 254 ) Dc सदा ( for समा- ). Dc Dn2. n3 D4. 6 महीपते ( for °यते ). — ( L. 255 ) B3. 4 Dc2 विप्रं ( for वैश्यं ). B2 Dc स हेष्टवान् ( for स इ° ).

— ( L. 256 ) B2–4 Dc D4 प्रतिश्रोतश्. B2–4 Dc G3 चित्रवहाः. Dc यजंत्यात्यंतसंचरन् ( Dc2 °रं ); G3 पर्जन्येनानुसंचरन् ( for the post. half ). — ( L. 257 ) B4 महाध्वानि ( m ज्ञानदुर्गे ); Dn3 ( m as in text ) °युधि ( for °धुरि ). Dc यथान्याय्यं ; G3 पथा नावा ( for यथा नावा ). B2 m ( महा )बुद्धियथान्यायं ( for the post. half ). — ( L. 258 ) Dc2 D4 विष्णवे ( for विप्लवे ). Dc Dn2 दधिमध्व( Dn2 °स्त्व )क्षयानि च ( for the post. half ). — ( L. 259 ) B2 G3 पर्वणि ; D4 सर्वस्वं ( for पर्वसु ). — After line 259, B2–4 Dc ins. :

अब्दे शत( Dc2 दान )गुणं प्रोक्तमनन्तं विषुवे भवेत् ।

— ( L. 264 ) B2 भवति हि ; Dc2 भवंति. — ( L. 266 ) Dc न भूमिदो. — ( L. 273 ) Dc गां च ( for गाश्च ). — ( L. 275 ) B2 भुवं ( for भव्यं ). B2 Dc भविता ( for भवते ). — ( L. 277 ) B3 वदंति लोके भुवि शुद्धबुद्धयः. — Colophon. — *Adhy. name :* B3 दानमाहात्म्यं. — *Adhy. no. :* Dn1. n3 199 ; Dn2 198 ; GK 200.

# ERRATA

☞ *Only mistakes in the constituted text have been listed here. For other corrections see Critical Notes.*

| Adhy. & Śl. No. | For | Read |
|---|---|---|
| 15. 16 ; 21. 14 | मार्तिका° | मार्त्तिका° |
| 34. 38 | थार्थपरमो | चार्थपरमो |
| 43. 4 | °प्रभावा | °प्रभावाः |
| 81. 56 | प्रयगच्छति | प्रयच्छति |
| 98. 13 | जीवं जीवक° | जीवंजीवक° |
| 110. 1 | रम्यो | रम्य |
| 116. 6 | मार्तिका° | मार्त्तिका° |
| 142. 26 | भीमाजुन° | भीमार्जुन° |
| 179. 16 | कार्ति° | कार्त्ति° |
| 198. 22 | पुराकर्म | पुरा कर्म |
| 222. 32 | श्वश्रा | श्वश्वा |
| 225. 3 | तपोधनांश्च | तपोधनाश्च |
| 230. 1 ( ref. ) | उवच । | उवाच । |
| 248. 6, 11 | वार्धक्षत्रि° | वार्द्धक्षत्रि° |
| 253. 19 | श्रगालो | सृगालो |
| 267. 9 | रामकरणात् | रामकारणात् |
| 268. 20 | °हृदया | °हृदयाः |
| 272. 25 | मायया वृतः | माययावृतः |
| 282. 5 | °कण्टकबिद्धा° | °कण्टकविद्धा° |

# ERRATA

☞ *Only mistakes in the constituted text have been listed here. For other corrections see Critical Notes.*

| Adhy. & Śl. No. | For | Read |
|---|---|---|
| 15. 16 ; 21. 14 | मार्तिका° | मार्त्तिका° |
| 34. 38 | थार्थपरमो | चार्थपरमो |
| 43. 4 | °प्रभाया | °प्रभावाः |
| 81. 56 | प्रयगच्छति | प्रयच्छति |
| 98. 13 | जीवं जीवक° | जीवंजीवक° |
| 110. 1 | रम्यो | रम्य |
| 116. 6 | मार्तिका° | मार्त्तिका° |
| 142. 26 | भीमाजुन° | भीमार्जुन° |
| 198. 22 | पुराकर्म | पुरा कर्म |
| 222. 32 | श्वश्रा | श्वश्रवा |
| 225. 3 | तपोधनांश्च | तपोधनाश्च |
| 230. 1 (ref.) | उवच । | उवाच । |
| 248. 6, 11 | वार्धक्षत्रि° | वार्द्धक्षत्रि° |
| 267. 9 | रामकरणात् | रामकारणात् |
| 268. 20 | °हृदया | °हृदयाः |
| 272. 25 | मायया वृतः | माययावृतः |
| 282. 5 | °कण्टकविद्धा° | °कण्टकविद्धा° |